नमः श्रीपरेशाय ।

# श्रीमद्विद्यारण्यमुनिविरचिता पञ्चदशी.

Srimad Vidyaranyamuni.

Panchadasi

श्रीरामकृष्णविरचितया पददीपिकाख्यया व्याख्यया तथा मोडकोपाह-
श्रीमदच्युतरायपण्डितकृतपूर्णानन्देन्दुकौमुदीसंज्ञ-
कव्याख्यया च समेता ।

ग्रन्थोऽयं गोंधळेकरोपाख्येन श्रीधरात्मजेन रावजी-
शर्मणाऽनेकविद्वज्जनसाहाय्येन संशोध्य

पुण्याख्यपत्तने स्वकीये जगद्धितेच्छुनाम्नि मुद्रायन्त्रा-
लये मुद्रापयित्वा

प्राकाश्यं नीतः ।

श्रीशालिवाहनशके १८१७

नृपतिशासनानुसारेण ग्रन्थस्यास्य सर्वेऽधिकारा मुद्राप-
यित्रा स्वायत्तीकृताः ।

# अथ पञ्चदशीप्रस्ताविका ।

निखिलेऽस्मिन्नवनिमंडलेऽतीतजन्मसंपादितपुण्यपुञ्जौघतया समुपलब्धनृशरीराणां **जगतां** जन्मनः सार्थक्यं '**ज्ञानादेव तु कैवल्यम्**' इत्यस्माद्वाक्यात्तुरीयपुरुषार्थावाप्तिसाधनीभूतात्मानात्मविवेकविकाशकारकतत्त्वमस्यादि**महावाक्या**भ्यासमसमुद्भूतपरमार्थज्ञानसंपादनादेव भवति । तत्परमार्थज्ञानं तु, आदिमपुरुषार्थत्रितयपरिशीलननिर्मलीकृतहृन्नलिनकोशैर्दृढतरतीव्रवैराग्यसंजातस्वान्तात्यन्तान्तर्वासनोपशान्तिसंपादितशमदमादिसाधनसंपत्तीकैः श्रवणमनननिदिध्यासनद्वाराऽद्वैतवेदान्तदर्शनपरिशीलनकारिभि**रधिकारिभि**रेव वेदान्तदर्शनपरिशीलनाल्लभ्यते।

वेदान्तदर्शनेऽस्मिन्परतत्त्वज्ञानपरिबोधका बह्वयो ग्रंथसंततयः सन्ति परंच तेषां मध्ये **पञ्चदशी**सदृशोऽन्यो ग्रंथः सुखबोधकरः संक्षिप्तोऽपि बह्वर्थप्रचुरः सर्वसंमतश्चान्यो ग्रंथो न दृश्यते । अस्यां **पञ्चदश्या**मुपनिषदुक्ताध्यात्मशास्त्रीयज्ञानपरिपाटीप्रचलिता विविधाः सिद्धान्ताः प्रकटीकृताः ।

विविधवेदान्तविषयविनिर्णयपटुतरो विद्वदानंदकरोऽयमत्युत्तमो ग्रंथो निखिलभगनलगनपण्डितमण्डलीमुकुटशिखरमणिना विश्वविद्याधीश्वरीभारतीपरिभासितहृदयमंदिरेण **श्रीमच्छांकराद्वै**तमतागाधमहोदध्यवगाहनपटुना परमपूज्येन **विद्यारण्यमुनिना**ऽकारि । विद्यारण्यमुनेरस्य पूर्वं **माधवाचार्ये**ति नामाऽऽसीत् । प्रसंगतोऽत्र किंचिन्माधवाचार्यस्याऽऽ**ख्यायिको**पवर्ण्यते—

दिश्यवाच्यां **तुंगभद्राख्य**तरंगिणीतीरे कर्णाटकविषये **पम्पाकासार**क्षेत्रोपकंठवर्ति **विजयानगर**मित्याख्यया प्रथितं पत्तनं पूर्वमासीत् । एतस्यैव **किष्किंधेति** पूर्वं नामाऽऽसीदिति श्रूयते । अधुना तु तस्मिन्देशे एतन्नगरं '**गोवल्कोंडा**' इत्याख्यया प्रथितं वर्तते । विराजते च यत्र **श्रीमद्विरूपाक्षाख्य**भगवच्छंकरमन्दिरम् । तस्मिन्**विजयानगरे** स्वविक्रमविवस्वदुदयविनष्टीकृतारातितिमिरपरम्परो निगममार्गप्रवर्तकः सम्राट् **वीरबुक्केति** नामधेयप्रथितोऽ**वनीपतिः** प्रतिवसति स्म । तस्यामात्योऽयं नृपकार्यरथधुराधारणधुरीणो **माधवाचार्य** आसीत् । एतद्वृत्तपरिबोधकः कश्चन ताम्रपट्टो वर्तते तत्रत्यपद्यान्यप्यत्र लिख्यन्ते तानि **यथा**—

" तस्मिन्भारतवर्षदक्षिणदले देशोऽस्ति कर्णाटक-
स्तन्मध्ये सरिदुत्तमा विजयते सा तुङ्गभद्राभिधा ।
यत्तीरे दुरिताटवीहुतवहे देवो विरूपाक्ष इ-
त्यास्ते सन्ततमत्तरेण सुमनःस्रोतस्विनीचिन्तनम् ।
यस्योपकण्ठे विजयाभिधाना सा दुर्जया राजति राजधानी ।
यस्यां विरूपाक्षकटाक्षदग्धमुज्जीवयन्ति स्मरमुत्पलाक्ष्यः ॥
वंशे यदोरभिनवांश इवाच्युतस्य श्रीसङ्गमादजनि सङ्गररङ्गभीमः ।
श्रीबुक्कराज इति धिक्कृतशत्रुरेष तामध्यतिष्ठदथ मध्यमलोकपालः ॥

तस्याऽऽज्ञया माधवमन्त्रिवर्यः प्राशाज्जयन्तीपुरराज्यमृद्धम् ।
यन्मन्त्रशक्त्या वपुरुत्सृजन्तोऽप्यरातयः स्वास्थ्यमहो भजन्ते " इत्यादि ।

तथैव तत्कृत**सर्वदर्शनसंग्रहाख्य**ग्रंथोपक्रमग्रथितश्लोकात्तेषां **सायणाभिधे कुले जनन**मासीदित्यप्यनुमीयते सोऽयं श्लोको यथा—

" श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियते माधवार्येण सर्वदर्शनसंग्रहः " ॥

परंत्वन्ये केचन **सायणाचार्येति** तेषामेव नामेति, अपरे **तत्सहोदरनामे**ति बहवो यथामत्यात्ममतप्रतिपादनं कुर्वन्ति । परं त्वस्मन्मतेन तु सर्वदर्शनसंग्रहोक्त्या सायणेति कुलनामधेयमेव स्यादित्युचितम् । एषां जननी **श्रीमती**तिनामधेयवती, जनको **मायणाख्यः, भारद्वाजं** गोत्रं, कृष्णयजुर्वेदान्तर्गता **तैत्तिरीया** शाखा, बोधायनं **सूत्रं** चाऽऽसीदिति तत्कृत**पराशरस्मृति**व्याख्योपक्रमग्रथितपद्यादवगम्यते, तत्पद्यमधो लिख्यते—

" श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता ।
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं यस्य गोत्रं सर्वज्ञः स हि माधवः " इति ।

माधवाचार्येण पूर्वे वयसि वीरबुक्कनृपतेरमात्यत्वं कृत्वोत्तरस्मिन्वयस्यैहिकसुखविरक्तिमताऽन्तिमाश्रमस्वीकृतिः कृता । तदा तेषां **विद्यारण्येति** संज्ञाऽऽसीत् । तदाश्रमेऽपि श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभगवत्पूज्यपाद**श्रीमच्छंकराचार्य**पट्टाधिकारः स्वीकृतः । तदानीं तेषां **श्रीशंकरानंदा**भिधेयाः स्वामिनो गुरव आसन् । अत एवतद्ग्रन्थादिमंगलश्लोके—' नमः श्रीशंकरानंदगुरुपादाम्बुजन्मने ' इत्युक्तमस्ति । चतुर्थाश्रमग्रहणानन्तरमेवेयं **पंचदशी** विरचितेत्येतदप्यनेन श्लोकेन ज्ञायते ।

**श्रीमद्विद्यारण्यमुनि**विरचिता बहवो ग्रंथाः सन्तीति श्रूयते परं च तानि निखिलानि नैवोपलभ्यन्ते । अधुनोपलभ्यमानानां कतिचन ग्रंथानां नामान्यधो लिख्यन्ते—" सूतसंहिताव्याख्या, वेदार्थप्रकाशाख्यं ऋग्वेदादिवेदचतुष्टयभाष्यम्, ऐतरेयादिचतुर्वेदब्राह्मणभाष्याणि, पराशरस्मृतिव्याख्या, जैमिनीयन्यायमालाविस्तरः, सर्वदर्शनसंग्रहः, अनुभूतिप्रकाशः, दशोपनिषद्दीपिका, पञ्चदशी, जीवन्मुक्तिविवेकः, अपरोक्षानुभूतिटीका, धातुवृत्तिः, श्रीमच्छंकरदिग्विजयाख्यं काव्यं च* " इत्येते ग्रन्था उपलभ्यन्ते । अन्यस्यापि श्रीमन्माधवाचार्यवृत्तस्यान्यत्र माधवकृतग्रंथशोधनकर्तृभिः पण्डितैस्तत्तद्ग्रन्थसंस्करणसमये प्रस्ताविकायामुल्लेखः कृतोऽस्ति । विस्तरभयाच्चरितैकदेशोऽपि संक्षिप्त एवात्र निर्दिष्टः । विस्तृतचरितावलोकनाकाङ्क्षिभिर्विद्वद्भिस्तत्र तत्रावलोकनीयम् ।

तत्र तावत्पंचदश्यामस्यां विवेकपञ्चकं दीपपञ्चकमानन्दपञ्चकं चेति **पञ्चदश प्रकरणानि** सन्ति । तत्र विवेकपञ्चकं चित्रदीपश्चेत्येतत्षट्कं विद्यारण्यमुनिविरचितं, तथा **शिष्टं प्रकरणनवकं** विद्यारण्यमुनिगुरुणा श्रीभारतीतीर्थयतिवर्येणाकारीत्येतद्ग्रन्थव्याख्यात्रा **मोडकोपाह्वयेन श्रीमदच्युतरायपण्डितेन** व्याख्यादावुपोद्धाते लिखितमस्ति ।

---

* विद्यारण्यपद्धतीत्याख्योऽपि कश्चन ग्रन्थो विद्यारण्यमुनिविरचितो वर्तत इति विपश्चिन्मुखाच्छ्रुतं परंत्वाधुना स नैवोपलभ्यते ।

तद्यथा—

" श्रीविद्यारण्यकृताः पञ्च विवेकाः सचित्रदीपाः स्युः ।
शिष्टं तु समुपदिष्टं श्रीमद्भिर्भारतीतीर्थैः " इति ॥

अपरेणापि टीकाकृता श्रीमद्रामकृष्णाख्येन विदुषा प्रतिप्रकरणव्याख्यानारम्भमंगलाचरणश्लोके—" नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ " इति । तथा प्रतिप्रकरणसमाप्तौ—" इति श्रीमद्भारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण " इति च द्वयोरप्युल्लेखः कृतोऽस्त्यतोऽस्मादपि ' द्वाभ्यां विरचितोऽयं ग्रन्थः ' इत्यवगम्यते । अन्ये तु पञ्चदशापि प्रकरणानि विद्यारण्यमुनिभिरेव विरचितानि सन्तीति वदन्ति । श्रीमद्भारतीतीर्थयतयस्तु विद्यारण्यमुनेर्गुरव आसन्निति तत्कृतजैमिनीयन्यायमालाग्रन्थस्य विस्तरारम्भे विद्यमानात् ।

यथा—" स भव्याद्भारतीतीर्थयतीन्द्रचतुराननात् ।
कृपामव्याहतां लब्ध्वा पराध्यप्रतिमोऽभवत् " इति ॥

पञ्चदश्यामस्यामुपरि टीकाद्वयमेवोपलभ्यते । एका तावद्विद्यारण्यमुनेरेव शिष्येण रामकृष्णाख्येन विदुषा **तात्पर्यदीपिकाख्या** विरचिता. अपरा तु जनस्थाननिवासिभिर्मोडकोपाह्वयैः **श्रीमदच्युतरायशर्मभिः** पण्डितवर्यैः पूर्णानंदेन्दुकौमुदीत्याख्यावती विरचिता ।

अच्युतरायाणां समाधिकालो रसारसर्षिरसामित(१७६१)शालिवाहनशाके मासे शुचावस्तीति तद्वंशीयेभ्यो वे. शा. रा. मोडकोपाह्वयेभ्यो गणेशशास्त्रिभ्यः श्रुतम् । तथा स्फुटमेकं पद्यमप्युपलब्धमस्माभिस्तद्यथा -

" शाके चन्द्ररसर्षिभू(१७६१)परिमिते ह्याषाढशुक्ले शुभे
तारानायकवासरे शिवतिथौ सूर्ये खमध्यस्थिते ।
श्रीमत्सच्चिदनंतनित्यविमलानन्दप्रकाशात्मकः
प्रत्यग्ब्रह्मसरस्वती स्वमगमद्रूपं ग.........." इति ।

समाधिकालात्प्राक् दशमे वर्षे पञ्चदशीव्याख्येयं तैः समापितेति टीकान्तिमश्लोकादवगम्यते, स श्लोको यथा—

" श्रीशालिवाहनशकीयशशीपुवाजिक्ष्मा(१७५१)संख्यवर्षललिताग्रनभागवाह्नि ।
गोदावरीतटविराजितपञ्चवट्यां श्रीपञ्चदश्यनुगता खलु कौमुदीयम् " इति ॥

अच्युतरायपण्डितानां चतुःशास्त्राध्यापकाः, दीक्षागुरवः, ब्रह्मविद्यामननसहायीभूताश्च, इत्येवं गुरुत्रिकमासीत् । तच्च क्रमेण साठे इत्युपनामकाः* **नारायणशास्त्रि**नामालंकृतवन्तः, स्वरूपानन्दाश्रमपद्रा **महादेवबुवासंज्ञकाः**, जनस्थानक्षेत्रनिवासिनः **श्रीमद्रघुनाथभट्टाख्याः** साधवश्च । नारायणशास्त्रिण एते महान्तो विपश्चित आसन्नित्यच्युतरायपण्डितानामेव प्रतिप्रकरणसमाप्त्युल्लेखतो ज्ञायते सोऽयमुल्लेखो यथा —" श्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणषष्ट्युपनामकश्रीमन्नारायणशास्त्रिचरणसरोजराजहंसायमानमानसेन" इत्यादि । दीक्षागुरुभ्यो महादेवसंज्ञकेभ्यस्ते पण्डितवर्याः शैवदीक्षाग्रहणपुरःसरं शिवपंचाक्षरमंत्रोपदेशमगृह्णन् । अच्युतरायपंडितैः सर्वेऽपि स्वकृतग्रन्था विद्यागुरुचरणसरोजयुगे समर्पिताः । अत एवाधुना तत्पौत्राणां **नारायणशास्त्रिणां** निकटे ते सर्वेऽपि ग्रन्थाः

---

* अधुना ये पुण्यपत्तनस्थट्रेनिंगकालेजसंस्कृतपाठशालासंस्कृताध्यापकाः साठे इत्युपाह्वाः पांडुरंगशास्त्रितनूजाः वे० शा० रा० रा० नारायणशास्त्रिणो वर्तन्ते तेषामेते पितामहाः ।

वर्तन्ते । ग्रन्थनामोल्लेखपत्रकमेकमस्माभिस्तेभ्यः समुपलब्धं तदधो दीयते—" **अमरप्रथम**-काण्डटीका, अमरुशतकटीकाऽर्थद्वयपरिबोधिनी, गोवर्धनसप्तशतीटीका, भामिनीविलासटीका, सोपानपंचकव्याख्या, स्वकृतसदाचारग्रन्थटीका, सदाशिवोक्तार्याव्याख्या, सौंदर्यलहरीव्याख्या, जीवन्मुक्तिविवेकटीका, शंकरदिग्विजयकाव्यटीका, स्वाप्नमन्त्रत्रयीव्याख्या, शृंगारकलिकाटीका, रामगीताटीका, स्वकृतबोधैक्यसिद्धिटीका, सप्तशतीटीका." इत्येता **अन्यकृतग्रन्थोपरिव्याख्याः** ।

**स्वकृतग्रन्थास्तु**—"अद्वैतजलजातम्, अवैदिकधिक्कृतिः, कृष्णलीलामृतम्—सर्ग ६, सटीकसाहित्यसारः, स्मरहरविहारभाणः, कृष्णशतकम्, नीतिशतकम्, रतिनीतिमुकुलम्, विशुद्धमाधवनाटकम्, मृत्युंजयचंपूः, भागीरथीचंपूः, भागवतचंपूः, दुःखक्षयेन्दूदयः, अद्वैतविद्याविनोदः, द्वैतव्यक्तिक्षयः, सदाचारः, मणिमयादर्शः, मुक्तिरमालंक्रिया, ईशकेशादिपादान्तस्तुतिः, दृश्यविषयताखण्डनम्, चिच्चिन्तामणिचिन्तनम्, कारुण्यलहरी, अवयवोक्तिप्रत्युक्तिमंजरी, संयमसत्कृती, जगद्विजयः, हिरण्यकेशीयाह्निकम्, प्रारब्धध्वान्तविध्वंसनम्, गोदालहरी, महावाक्यार्थमंजरी, भूभृदुद्वाहः, शिवस्तवनमंजरी, प्रियव्रतचरितचन्द्रिका, शिवस्तुतिमुक्ताभरणम्, सिद्धान्तरत्नसिद्धान्तः, रेवापीयूषलहरी, हरिभक्तिरसामृतसिंधुसारः, बोधैक्यसिद्धिः, गीतसीतापतिः" इत्यादयोऽन्ये च बहवः स्फुटश्लोकाः, शताधिकसंख्याकार्यावृत्तप्रतिबद्धानि प्रकरणानि च सन्ति तेषां नामानि विस्तरभयान्नैव लिखितानि ।

पञ्चदश्या आदिमप्रकरणषट्कं विद्यारण्यविरचितं तथाऽन्तिमप्रकरणनवकं **तद्गुरुभारतीतीर्थ**विरचितं वर्तत इत्युपरि यल्लिखितं तद्विषये श्रीमदच्युतरायैः पुनः स्पष्टतयैव तृप्तिदीपाख्यसप्तमप्रकरणादिमश्लोकटीकावतरणिकायामुल्लेखः कृतोऽस्ति स यथा—" अथ भगवान्भारतीतीर्थमुनिवरः सर्वदा वक्ष्यमाणवैचारिकयौगिकान्यतराद्वैतात्मतत्त्वनिष्ठैकपरायणः परमकरुणया श्रीमद्विद्यारण्याचार्याख्यपूर्वाश्रमप्रख्यातसर्वज्ञमाधवाचार्याभिधस्वशिष्यसमारब्धाद्वैतशास्त्रीयतीव्रतरमुमुक्षुवरैकोपकारकपरमसरलपञ्चदशप्रकरणीगतचित्रदीपान्तषट्प्रकरणीं संपूर्णां समवलोक्य संतुष्टस्तदन्त्यश्लोकविशिष्टचरमचरणार्थमनुसंधाय लीलयैवावशिष्टनवप्रकरणीं स्वयमेव समारभमाणः—" इत्यादि ।

ग्रन्थोऽयं टीकाद्वयोपेतः सम्यगायसाक्षरैर्दृढतरपत्रविलसितो मुद्रितो विद्वज्जनमनोमोदावहः स्यादितीशं संप्रार्थ्यते ।

ग्रन्थस्यास्य संस्करणसमयेऽस्मदीयानवधानतो वा मुद्रणयन्त्रालयस्थशोधनकरणानियुक्तानामनवधानतया वा शोधनेऽस्मिन्केचन प्रमादाः संवृत्ता एव, परं च ते विद्वद्भिः क्षन्तव्याः खलु । उक्तं च केनचिद्विद्वद्वरेण—

" गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः " इति ॥

महात्मभिः **साठे** इत्युपाह्वैः वे. शा. रा. रा. **नारायणशास्त्रिभि**रच्युतरायटीकापुस्तकदानेनास्मदुपरि महत्युपकृतिः कृतेति धन्यवादमनुगायता मया विरम्यते प्रस्ताविकालेखनतः ।

चैत्र शुद्ध १ रविवार, शके १८१८.

**भावत्कोऽयमुपासनीत्युपनामा**
**गोविन्दतनूजन्मा बालकृष्णशर्मा.**

☞ इतः पुरतः प्रतिप्रकरणस्थितविषयानुक्रमणिकादर्शः संस्कृतभाषानभिज्ञजनानामपि विषयपरिबोधसौलभ्यप्रतिपत्त्यर्थं महाराष्ट्रभाषायामेव विलिख्यते ।

# अथ पञ्चदशीगतविषयानुक्रमणिकादर्शः ।

## १ तत्त्वविवेक–१



## २ पंचमहाभूतविवेक–५५

---

## ३ पंचकोशविवेक–९१



---

## ४ द्वैतविवेक–१०७

## ५ महावाक्यविवेक-१२८



## ६ चित्रदीप-१३२

## ७ तृप्तिदीप–२०७



## ८ कूटस्थदीप–३०९

## ९ ध्यानदीप-३३६



## १० नाटकदीप–३७५



## ११ योगानन्द–३८६



## १२ आत्मानन्द–४२९

## १३ अद्वैतानन्द–४५४



## १४ विद्यानन्द–४८१



## १५ विषयानन्द–४९२

समाप्ता चेयं पञ्चदशीविषयानुक्रमणिका ।

## पञ्चदश्यन्तर्गतप्रकरणनाम्नां सपृष्ठाङ्कनिर्देशः समुल्लेखः ।

# अथ पञ्चदशीप्रकरणश्लोकाद्यचरणप्रतीकानां अकारादिवर्णानुक्रमणिका.

॥ श्रीः ॥

# श्रीमद्विद्यारण्यमुनिविरचिता पञ्चदशी.

## रामकृष्णविरचितया व्याख्यया तथा मोडकोपाह्वश्रीमदच्युतरायकृतव्याख्यया च समेता।

## तत्र प्रथमं तत्त्वविवेकाख्यं प्रकरणम्।

श्रीगणेशाय नमः ॥ नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥ प्रत्यक्तत्त्वविवेकस्य क्रियते पददीपिका ॥ १ ॥ प्रारिप्सितस्य ग्रंथस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिप्राप्तमिष्टदेवतागुरुनमस्कारलक्षणं मंगलाचरणं स्वेनानुष्ठितं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति। अर्थाद्विषयप्रयोजने च सूचयति

**नमः श्रीशंकरानन्दगुरुपादांबुजन्मने ॥**
**सविलासमहामोहग्राहग्रासैककर्मणे ॥ १ ॥**

**नम इति।** शं सुखं करोतीति शंकरः सकलजगदानंदकरः परमात्मा "एष ह्येवाऽऽनंदयाति" [ तैत्ति० २-७-१ ] इति श्रुतेः। आनंदो निरतिशयप्रेमास्पदत्वेन परमानंदरूपः प्रत्यगात्मा। शंकरश्चासावानंदश्चेति शंकरानंदः प्रत्यगभिन्नः परमात्मा स एव गुरुः "परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन। योजयति परे तत्त्वे स दीक्षयाऽऽचार्यमूर्तिस्थः" इत्यागमात्। श्रीमांश्चासौ शंकरानंदगुरुश्चेति गंधद्विप इत्यादिवत्समासः। अनेन श्रीगुरोर्गणिमाद्यैश्वर्यसंपन्नत्वं सूचितम्। यद्वा श्रिया भृत्या शं करोतीति शंकरः "रातिर्दातुः परायणम्" [ बृह० ३-९-२८ ] इति श्रुतेः। अनेन श्रीगुरोर्भक्तेष्टसंपादने सामर्थ्यं सूचितं भवति। तस्य गुरोः पादावेवांबुजन्म कमलं तस्मै नमः प्रह्वीभावोऽस्तु। किं विधाय सविलासमहामोहग्राहग्रासैककर्मणे विलासः कार्यवर्गस्तेन सह वर्तत इति सविलास एवंविधो यो महामोहो मूलाज्ञानं स एव ग्राहो मकरादिवत्स्ववशंप्राप्तस्यातीव दुःखहेतुत्वात्तस्य ग्रासो ग्रसनं स एवैकं मुख्यं कर्म व्यापारो यस्य तत्तथा तस्मै इत्यर्थः। अत्र च शंकरानंदपदद्वयसामानाधिकरण्येन जीवब्रह्मणोरैकत्वलक्षणो विषयो जीवस्य भूमब्रह्मरूपतयाऽपरिच्छिन्नसुखाविर्भावलक्षणं प्रयोजनं च सूचितं सविलासेत्यादिना। निःशेषानर्थनिवृत्तिलक्षणं प्रयोजनं मुखत एवाभिहितम् ॥ १ ॥

### अथाच्युतरायटीकारम्भः।

अद्वैतानंदसच्चिद्विभुविमलपरब्रह्म कूटस्थरूपं मोहाद्द्वैतेंद्रजालालयमपि निलयं स्वप्रकाशं

श्रुतीनाम् ॥ सर्वांश्चाचार्यवर्यान् रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं श्रीमन्नारायणाख्यं स्वगुरुमपि-महादेवसंज्ञं प्रणौमि ॥ १ ॥

परिच्छेदत्रयशून्यमत एव "यो वै भूमा तत्सुखं" "नाल्पे सुखमस्ति" इत्यादिश्रुते**रानंदेति** ॥ एतेना-पुरुषार्थत्वव्युदासः । अत एवोक्तश्रुतिशेषः " यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम् " इति ॥ अत एव **सदिति** । कालत्रयाबाध्यम् ॥ तत्रापि मानापेक्षायां **चिदिति** । एवमपि सौषुप्तस्वरूपेतिप्रसंगभंगाय **विभ्विति** । तस्य तात्कालिकतथात्वेऽपीदानीमनुपलब्ध्या विभुत्वात् । ननु तादृशेऽपि वस्तुनि गगनम-लिनिमेवारोपसंभवे तन्मूलाज्ञानसत्त्वे प्रयासवैयर्थ्यमिति तन्निरासाय **विमलेति** । तत्रापि ब्रह्मपदस्य वे-दादिवाचकत्वात्तद्व्यावृत्तये **परेति** । एतादृशोऽपि ब्रह्मणो जीवाद्भिन्नत्वे भेदवादापत्तिरतः **कूटस्थेति** । प्रत्यगभिन्नमित्यर्थः । नन्वेवं यदि वस्तुतत्त्वं तर्ह्युपलभ्यमानप्रपंचः कथमित्यत्राऽऽह **मोहादित्यादिना** । एतेन स्वदृष्टयोक्तरूपत्वमेवेति सूचितम् ॥ अपिना लोकदृष्टेर्भ्रांतत्वेन वास्तविकदृष्ट्या दृश्याधिष्ठानत्वमपि तत्र नैवेति व्यज्यते । अत एव **तिलकमित्यादि** ॥ "तमालपत्रतिलकचित्रकाणि विशेषकम्" **इत्यमरा**-च्छ्रुतिपदस्य स्त्रीलिंगत्वेन यथा सौभाग्यवतीनां तत्सूचकं काश्मीरमयं भाले तिलकं प्रसिद्धमेव तद्वदुक्तवस्तु यावच्छ्रुतीनां सौमांगल्यद्योतकं भवतीति भावः । एतेनाद्वैतमते कांडद्वयस्यापि स्वार्थसिद्धिर्ध्वन्यते । ननू-क्तरूपकादिनाऽत्र कृतकत्वमत आह—**स्वेति** । एवं यस्य देवे परेत्यादिश्रुतेरीश्वरं प्रणम्य गुरूनपि प्रणम-ति—**सर्वांश्चेत्यादिना** ॥ १ ॥

श्रीविद्यारण्यमाप्तः सरसगुरुभया भारतीतीर्थमेवं ध्वांतं विद्ध्वंसयानः कुमुदवनहितो नि-ष्कलो निष्कलंकः ॥ कुर्वेऽहं पंचदश्याममृतवपुरिमां कौमुदीं स्वप्रकाशो नक्षत्रेशोऽप्रदोषः क्षयचयरहितोऽप्यच्युताख्यो द्विजेशः ॥ २ ॥

श्रियो वसंतशरदन्यतरर्तुशोभाया विद्या प्रमितिर्यत्र तादृशं यदरण्यं वनं तदेवं भारती सरस्वती तत्स-दृशं झर्झरप्रवाहवशात्प्रकाशमानस्वाभाविकरूपत्वेन शुभ्रवर्णं यत्तीर्थं गंगादि तदपि सरसगुरुभया सरसाऽमृतर-सविशिष्टा तथा गुर्वी महती च या भा कांतिस्तया । उभयेति वा छेदः । उकारवाच्यशिवसदृशसितकांत्ये-त्यर्थः । अत एव सरसगुः सरसाः सुंदरा गावः किरणा यस्य स तथा एतादृशः सन्नाप्तः प्राप्त इति द्विजेश-पदवाच्यचंद्रपक्षेऽर्थः । उपमेयस्वपक्षे तु सरसा आत्मनिष्ठा ये गुरवस्तेषां या भा कृपाकटाक्षकांतिस्तयेत्यर्थः । प्रागवच्छेदे तु, उमया शिवशब्दित ब्रह्मविषयकप्रमयेति यावत् । सरसगुः सरसा ब्रह्मप्रतिपादिका गौर्वाग्य-स्य स ईदृक्सन् श्रीविद्यारण्यमेवं भारतीतीर्थमप्याप्तस्तन्निबंधनतात्पर्यनिर्णायकत्वेन प्राप्त इत्यर्थः । एवमिग्रं तृतीयाऽग्रेऽपि सर्वत्रान्वेति । श्लेषसूचितोपमानीभूतचंद्रपक्षे तु व्यतिरेकालंकारव्यञ्जकवैधर्म्यान्यविशेषणेष्वेव । ध्वांतं मूलाज्ञानम् । पक्षे गाढतिमिरम् । विध्वंसयतीति विध्वंसयानः । कुत्सितेषु शब्दादिविषयेषु मुत्प्रीतिर्ये-षां तेषां यदवनं प्रकृतग्रंथरचनसूचितविवेकेन संरक्षणं तदेव हितं यस्य स तथा । पक्षे कैरवकुलेष्ट इत्यर्थः । पंचदश्यां पंचदश्याख्यग्रन्थे । पक्षे पूर्णमास्याम् । नक्षत्रं क्षात्रवृत्त्युपजीविविप्रवृंदमीशं हिंसकत्वात्पूज्यं यस्य स तथा । अत एव । प्रदोषः प्रकृष्टदोषशून्यः । एतादृशोऽच्युताख्योऽच्युतेनानंतनियत्रा परमात्मनैवाऽऽख्या ग्रंथकर्तृत्वप्रथा यस्य । अत एव द्विजानां ब्राह्मणादित्रयमात्रवृत्तिजीविनामीशोऽनुग्राहकः स्पष्टमपरम् ॥२॥

दृष्ट्वैव रामकृष्णव्याख्यानं संचरंतु कौमुद्याम् ॥ एतस्यां शांत्यर्थं तृप्त्यर्थं च द्विजा रसज्ञा ये ॥ ३ ॥

कौमुदीपदवाच्यचंद्रिकायां ये रसज्ञास्तन्माधुर्यास्वादकाश्चकोरपक्षिणः । **रामेति** । रामशब्देनात्र कृ-ष्णपदसमभिव्याहाराद्बलरामगः शुक्लवर्णो लक्ष्यते । तथाच निंद्यकोटौ बककाकावेव वंद्यकोटौ मरालकोकि-लावेव रामकृष्णपदार्थावेतादृशौ यौ वौ पक्षिणौ तयोर्यदाख्यानं सायंकालसूचकं शब्दजातं तद्दृष्ट्वैवानुभूयैव य-था शांत्यर्थं च संचरति तथेति ॥ ३ ॥

पंचदशी पंचदशीपूर्णानंदेंदुकौमुदी नो चेत् ॥ सत्त्वेऽपि दीपिकानां पुष्करतिमिरानिरासेन ॥ ४ ॥

पक्षांतौ पंचदश्यौ द्वे इत्यमरादमावास्यासदृशतमोविशिष्टेत्यर्थः। पुष्करं हृत्पुंडरीकस्थं लक्षणया मनस्तस्य यत्तिमिरमज्ञानं पक्षे व्योम पुष्करमंबरमित्यमरादाकाशं तन्निष्ठं यत्तिमिरं तस्यानिरासेनेत्यर्थः ॥ ४ ॥

तत्र तु पंचविवेकैः प्रथमं किल तत्पदार्थसंशुद्धिः ॥ अथ तावद्भिर्दीपैः सा ज्ञेया त्वंपदार्थस्य ॥ ५ ॥ आनंदपंचकात्मब्रह्मानंदाभिधप्रबंधेन ॥ अद्वैतैक्यतनुरसौ तात्पर्यादसिपदार्थस्य ॥ ६ ॥ पंचविधप्रतिबंधध्वंसायैककपंचकं रचितम् ॥ विज्ञेयं विद्वद्भिस्तत्त्वमसिस्वाभिमतपदार्थेषु ॥ ७ ॥ ते विषयवासनाऽथो मानं मेयेऽप्यसंभवस्तद्वत् ॥ साधनफलविपरीतभ्रमाविति क्रमत एव विज्ञेयाः ॥ ८ ॥ शास्त्रेऽधिकारसंपत्समन्वयाद्यैः क्रमेण ते ध्वंस्याः ॥ तद्वदिहाप्यधिकारश्रुतिमितिनिध्यासफलबोधैः ॥ ९ ॥

आसनमेवासः नितरां धियाऽऽसोऽवस्थानं यत्र तदित्यर्थः । एवं फलं मुक्तिस्तद्विषयको यो बोध इत्यर्थः ॥ ९ ॥

प्राधान्यादेवेदं सर्वं स्यात्तत्र तत्र सूक्ष्मतया ॥ तत्तद्धर्मस्यातो नैकैकप्रकरणादसिद्धिर्मे ॥ १० ॥ पंचदश प्रतिबंधाः पंचदशप्रकरणैरमीभिश्चेत् ॥ विध्वस्तास्तर्हि भवेन्निर्विघ्नः प्रोक्तवाक्यजो बोधः ॥ ११ ॥ सायोज्यार्थीभवांछामह सगुणेनाथ तत्र सत्यधिया ॥ भक्तिः पुमर्थबुद्ध्या प्रतिबंधः प्रथम एष ईशमितौ ॥ १२ ॥ सगुणे ब्रह्मण्यखिलं पर्यवसानं प्रयाति शास्त्रमिदम् ॥ इति दृढतमबुद्धिर्या प्रतिबंधोऽयं द्वितीय ईशमितौ ॥ १३ ॥ निर्गुण आत्मा जगतः कर्ता भर्ता कथं नु संहर्ता ॥ संभवति वा नियंता प्रतिबंधोऽयं तृतीय ईशमितौ॥१४॥ ईशोपदिष्टबोधादेव विमुक्तिर्न तु क्वचिद्गुरुजात् ॥ इति या निर्णीतमतिः प्रतिबंधोऽयं चतुर्थ ईशमितौ ॥ १५ ॥ मुक्तस्य सर्वभानं सर्वात्मत्वेन भवति सर्वत्र ॥ सर्वनियंतृत्वाद्यपि प्रतिबंधः पंचमोऽयमीशमितौ ॥ १६ ॥ सूत्रात्मानंदानानानंदानेव भोक्तुमिति वांछा ॥ रूपादिधन्यता च प्रतिबंधः प्रथम एष इह जीवे ॥ १७ ॥ प्रत्यक्षाद्यभिगम्ये जीवे रागादितः कथं शास्त्रम् ॥ तद्बोधिमाननाभावप्रतिबंधोऽयं द्वितीय इह जीवे ॥ १८ ॥ चिन्मात्रो यद्यात्मा प्रत्यक्षाद्यखिलमानमुच्छिद्येत ॥ युक्तिरपि नास्ति तादृक्प्रतिबंधोऽयं तृतीय इह जीवे ॥ १९ ॥ सद्ध्यानकर्मबोधैर्मोक्षो ध्यानेन बोधजातेन ॥ शुद्धेन वेति बुद्धिः प्रतिबंधोऽयं चतुर्थ इह जीवे ॥२०॥ मुक्तावद्वैतत्वाद्ब्रह्मानंदानुभूतिरपि न स्यात् ॥ शिव शिव कथमथ भूयात्प्रतिबंधः पंचमोऽयमिह जीवे ॥ २१ ॥ कैवल्ये क्व नु विषया गुरुशास्त्रारामगांगनीगद्याः ॥ इति विह्वलता चित्ते प्रतिबंधः प्रथम एष ऐक्येऽपि ॥ २२ ॥ अद्वैतिभिरैक्यार्थो यथा मतं क्रियत एवमन्यैश्च ॥ इत्यश्रद्धायेद्धाप्रतिबंधोऽयं द्वितीय ऐक्येऽपि ॥ २३ ॥ संभवति जीव ईशः सोऽयं वा कथमपीह कल्पांते ॥ न च दृश्यतेऽत्र तर्कः प्रतिबंधोऽयं तृतीय ऐक्येऽपि ॥ २४ ॥ ज्ञानेऽपि देहपातानंतरमेवास्ति मुक्तिरद्वैतात् ॥ सप्तमभूम्या वेति प्रतिबंधोऽयं चतुर्थ ऐक्येऽपि ॥ २५ ॥ एकरसेऽपि मिथुनसुखममृतेऽस्त्येव स्वरूपसाक्षितया ॥ स्वप्रभरवितत्करवत्प्रतिबंधः पंचमोऽयमैक्येऽपि ॥ २६ ॥ एते तत्त्वविवेकादिभिः प्रकरणैर्यथा प्रबाध्यंते ॥ वक्ष्ये तथाऽतिसूक्ष्मं गुरुकृपया तद्रहस्यमवगम्य ॥ २७ ॥ प्रथमेऽधिकारसंपत्तदर्थमुख्यत्वमस्त्युपक्रमतः ॥ तत्पादेति च शब्देत्यादिग्रंथस्य तत्परत्वेन ॥ २८ ॥ एवं समन्वयोक्तेर्भूतविचारेण तत्पदस्यार्थे ॥ तत्परता निर्णया तस्य सदित्यादिना द्वितीयेऽपि ॥ २९ ॥ प्रत्यक्षाद्यविरोधं वक्तुं

कोशान्विवेचयद्‌ब्रह्म ॥ संभावयति तृतीये तदर्थभूतं गुहेत्यादि ॥ ३० ॥ ईश्वरमुख्यकृतद्वैत-विचारेण गुरुमृते प्रलये ॥ बोधाभावोक्त्या तन्मुख्यत्वं स्याच्चतुर्थेऽपि ॥ ३१ ॥ ब्रह्मैक्यमेवमुक्तिर्यत्र द्वैतं न विद्यते किमपि ॥ इति तत्प्रधानताऽपि स्पष्टतरा पंचमे ज्ञेया ॥ ३२ ॥ चित्रपटादिनिदर्शनवशेन वैराग्यमात्मशब्देन ॥ जीवस्वरूपमिति तत्प्राधान्यं भवति षष्ठेऽपि ॥ ३३ ॥ सप्तम आत्मानं चेदिति श्रुतेर्विवरणात्स्फुटं भवति ॥ जीवोद्देशेन समन्वयमुख्यत्वं रसज्ञानाम् ॥ ३४ ॥ शोधितजीवविवेकान्नानायुक्त्याऽविरोध एवोक्तः ॥ मानांतरैरतस्तत्परता स्यादष्टमेऽपि न किम् ॥ ३५ ॥ ध्यानविचारान्यतरध्वस्तप्रतिबंध एव बुद्धः स्यात् ॥ इ-त्युक्तेस्तत्परता नवमे निर्णीयते स्पष्टा ॥ ३६ ॥ दशमे दीपवदात्मा सर्वस्याभासकोऽपि चैक-रसः ॥ स्वप्रभसुखैकवारिधिरितिफलकथनेन तत्परता ॥ ३७ ॥ एकादशे तु यौगिकसुखस्य बोधेन निरतिशयतोक्त्या ॥ निर्विषयेऽपि पुमर्थात्तत्परता तस्य निर्णेया ॥ ३८ ॥ अद्वैतरूप ऐक्ये मैत्रेयीब्राह्मणादिवाक्यानाम् ॥ सम्यक्समन्वयोक्तेस्तत्परता द्वादशेऽपि विज्ञेया ॥ ३९ ॥ उक्तं त्रयोदशेऽपि च नानाविधयुक्तितोऽद्वयैक्यस्य ॥ संभावनमिति तस्य तु तत्प्राधान्यं सम-वसेयम् ॥४०॥ एवं चतुर्दशेऽपि ज्ञानादेवाद्वयात्मतनुमुक्ते ॥ उक्तत्वात्स्पष्टतरं तत्परता तस्य किं न स्यात् ॥ ४१ ॥ पंचदशेऽप्युक्तिः खल्वद्वैतस्वप्रकाशसुखभूम्नः ॥ सर्वांशभास्यभासक-राहित्यस्येति तस्य तत्परता ॥ ४२ ॥ इति तत्त्वभूतकोशद्वैतमहावाक्यमुखविवेकानाम् ॥ अथ चित्रतृप्तिकूटस्थध्यानसुनाटकाख्यदीपानाम् ॥ ४३ ॥

तत्त्वादिमहावाक्यांतपदानिक्रमान्मुखेषु नामारंभेषु येषां ते च ते विवेकास्तेषामित्यर्थः । इदं हि विष-यिणामपि सत्यां तीव्रतममुमुक्षायां शीघ्रबोधानुकूलसरसस्वल्पग्रंथात्मकनाटकरचनचातुर्यसूचनार्थमेवेति॥४३॥

अपि योगात्माद्वैतविद्याविषयोपपदसुरम्याणाम् ॥ आनंदानां च भवति संग्रहपुटिकैव पं-चदशी ॥ ४४ ॥

पादांतस्थं विकल्पेनेति गुरुता तकारस्य ॥ ४४ ॥

पंचदश प्रतिबंधास्तावद्भिः प्रकरणैर्निरस्यंते ॥ अनया जिज्ञासूनां पूर्णानंदेंदुभा द्विजेंद्रा-णाम् ॥ ४५ ॥

तृप्तिदीपादिविषयानंदांतप्रकरणनवकमित्यर्थः । द्विजेंद्राणां ब्रह्म विदां पक्षे चकोराणाम् । **पूर्णेति** । अद्वैतस्वानंदप्रकाशरूपामृतदीधितिस्मृतिरित्यर्थः । संपाद्यत इत्यार्थिकम् । पक्षे चंद्रभाः ॥ ४५ ॥

इह तु विवेका दीपा आनंदा अपि न कौमुदीविरहे ॥ भ्राजंते जाता अप्यनंततमसोऽ-निरस्तत्वात् ॥ ४६ ॥

तृप्तिदीपादिविषयानंदांतप्रकरणनवकमित्यर्थः ॥ ४६ ॥

श्रीविद्यारण्यकृताः पंच विवेकाः सचित्रदीपाः स्युः ॥ शिष्टं तु समुपदिष्टं श्रीमद्भिर्भा-रतीतीर्थैः ॥ ४७ ॥

अनंतं ब्रह्म तन्मात्राश्रयविषयकं यत्तमोऽज्ञानं तस्येत्यर्थः । यद्वाऽनंता असंख्याता ये जीवास्तेषां यत्तमस्तस्येति यावत् । एवं च जीवानामानंत्यात्तन्मध्ये प्रकृतकौमुद्येकनिरस्यसंशया ये जीवास्तदुपकारि-केयं स्यादिति । पक्षेऽनंतं सुरवर्त्मखमित्यमरादाकाशगतांधकारस्येत्यर्थः ॥ ४७ ॥

आराध्यातुलयत्नैः पंचदशीं वाऽपि षोडशीं नाऽऽसीत् ॥ इष्टमनिष्टनिवृत्तिर्वाऽनुपमेति द्विजा

**भजध्वमिमाम् ॥ ४८ ॥ मत्वा जीवंजीवान्विद्यारण्यं च भारततीर्थिम् ॥ तत्त्वविवेकं भूमिप्रकाशतो द्योतयामि कौमुद्याः ॥ ४९ ॥**

विद्यारण्यं भारतीतीर्थं च प्रकृतग्रंथकारं मत्वा तत्तद्ग्रंथतात्पर्यविषयकमननं कृत्वेत्यर्थः । तथा अजीवमिति च्छेदः । न विद्यते जीवस्तदुपलक्षितं द्वैतं यत्र तद्ब्रह्म मत्वाऽऽत्मत्वेनानुसंधायेत्यर्थः । तथा जीवान्संसारिणः । मत्वा दुःखित्वेनानुसंधाय । कौमुद्या भर्मातिप्रथमप्रकाशेन ॥ ४९ ॥

अथ भगवान्विद्यारण्यमुनिः श्रीमद्ब्रह्मसूत्रभाष्याद्यखिलगुरुलघुनिबंधवृंदतात्पर्यसारसमुद्धरणेन सकलमुमुक्षूननुजिघृक्षुः कलावद्यप्रायः शास्त्राकलनकुशलमहाशेमुषीलसन्मुमुक्षुसंक्षेपतस्तत्त्वविवेकादिस्वल्पग्रंथात्मकपंचदशप्रकरणीमनेकप्रक्रियाभिस्तत्तन्मत्युपकारिणीमारभमाणः सन्मंगलादीनीत्यादिमहाभाष्यस्मृत्यनुमितश्रुतिविहितं श्रीवाल्मीक्यादिशिष्टाचरितं प्रारिप्सितप्रत्यूहप्रशमकफलकमस्या अद्वैतशास्त्रीयप्रकरणत्वेन "यस्य देवे" इत्यादिश्रुत्या परमेश्वराभिन्नगुरुनमस्कारात्मकं मंगलं कलयन्नेवास्यनुशिशासिषया ग्रंथादावपि संग्रथन्प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजने अप्युपनिबध्नाति—**नम इति** । नन "यमेवैष वृणुते तेन लभ्यः" "ददामि बुद्धियोगं तं येन मामुपयांति ते" इत्यादिश्रुतिस्मृतिभिः श्रिया नित्यैश्वर्यशक्त्या शं कोविदानां कैवल्यलक्षणं कल्याणं करोतीति व्युत्पत्त्या तत्पदवाच्येश्वरत्वोपलक्षितसत्यज्ञानादिरूपशुद्धब्रह्मणा सह "तदेतत्प्रेयः पुत्रात्" इत्यादिश्रुत्या निरुपचरितप्रीतिविषयीभूतानंदरूपत्वंपदलक्ष्यशुद्धजीवस्य कर्मधारयेणाभेदरूपविषयस्य तद्विज्ञानार्थं "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इतिश्रुतेर्ब्रह्मनिष्ठसूरिवरिष्ठस्यैव गुरुत्वेन तद्विशेषणत्वादेव तन्नामनिरुक्तितः सिद्धावपि सविलासेति विशेषणेन सकार्यकाज्ञानमेव ग्राहः तस्य यो ग्रासस्तदेकं केवलं कर्म व्यापारो यस्येति यावद्द्वैतध्वंसमननः सद्योमुक्तिपक्षप्रतीतिः पूर्वार्धध्वनितजीवन्मुक्तिपक्षः प्रतिक्षिप्तः किंवाऽनेन वाऽसाविति संदिग्धत्वात्परस्परविरुद्धार्थकत्वाच्चानुचितमेवेदं पद्यमिति चेन्न । गुरुपादयोरंबुजन्मरूपकादिना संसारस्य तन्महिम्ना सरस्त्वसूचनेन महामोहस्य तद्वैचित्र्यादनेकधेति वक्ष्यमाणरीत्या नानाज्ञानवादाभ्युपगमेन तदंतर्गतनक्राख्यग्राहरूपकादिना तद्विलासशब्दितस्य विशेषण लसत्यनेनेति व्युत्पत्तेः "अज्ञानं यदतोऽन्यथा" इतिस्मृतेर्मानित्वाद्युपलक्षितस्य हृदयग्रंथिसंदेहसंशयज्ञानाव्यवहितपूर्वक्षणांतसंचितकर्माख्यस्य "भिद्यते हृदयग्रंथिः" इत्यादिश्रुतेः "अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति" इत्यादिस्मृतेश्च तन्मुख्यकार्यस्यैव युक्तत्वात् । एवं च नैवात्र विरोधगंधोऽपीति बोध्यम् ॥ न चैवं विलासपदे स्वारस्याद्यावदविद्याविद्यमानानां दृश्यानामेव प्रतीतौ सत्यां तत्संकोचनेनोक्तविरोधपरिहारापेक्षया समः समविभक्तांग इति श्रीरामवत्प्रकृतश्रीगुरोरप्युत्तमपुरुषत्वसूचनस्य पादांबुजन्मन इत्येकवचनेन विवक्षितत्वादस्य गुरोः पादयोः शक्तिद्वयं वर्तते ये जीवन्मुक्त्यधिकारिणस्तेभ्योऽसौ देया ये तु सद्योमुक्त्यधिकारिणस्तेभ्यस्त्वसावपीति व्यवस्थयैव निरुक्तविरोधपरिहारः स्वार्थाधिक्यात्समुचित इति वाच्यम् । तथात्वे एककर्मण इत्येकपदस्वारस्यसिद्धस्य यावद्द्वैतध्वंसनैकव्यापारविग्रहस्य तत्र बाधापत्तेः । तस्मादुक्तमेव युक्तमिति दिक् । अंबुजन्मग्राहतत्कार्ययोः सरोवच्छेदेनसामानाधिकरण्यसत्त्वेऽपि लोके ग्रास्यग्रासकभावादर्शनात्प्रत्युत वैपरीत्यस्यैव तत्र कादाचित्कत्वेन संभावितत्वादुक्तरूपकादिना विरोधस्य भासमानत्वेऽपि निरुक्तार्थापत्त्यैव परिणामालंकारस्य "परिणामः क्रियार्थश्चेद्विषयी विषयात्मनोः" इत्याद्युक्तलक्षणस्यावश्यवाच्यतयाऽऽभासत्वेनेह विरोधाभासालंकारोक्त्या "आ-

श्चर्यवत्पश्यति कश्चिदेनम् " इत्यादिश्रुत्याद्युक्तरीत्याऽद्भुतरसानुप्राणितः सकलदुःखदद्वैतलक्षण-विरोधस्याभासमात्रत्वसूचनेन शांत एव रसः प्राधान्येन ध्वनित इति ध्येयम् ॥ १ ॥

**रा० टीका**—इदानीमवांतरप्रयोजनकथनपुरःसरं ग्रंथारंभं प्रतिजानीते—

**तत्पादांबुरुहद्वंद्वसेवानिर्मलचेतसाम् ॥**
**सुखबोधाय तत्त्वस्य विवेकोऽयं विधीयते ॥ २ ॥**

**तत्पादेति** । तस्य गुरोः पादावेवांबुरुहे कमले तयोर्द्वंद्वं तस्य सेवया परिचर्यया स्तुति-नमस्कारादिलक्षणया निर्मलं रागादिरहितं चेतोऽतःकरणं येषां ते तथोक्तास्तेषां सुखबोधायानाया-सेन तत्त्वज्ञानोत्पादनायायं वक्ष्यमाणप्रकारस्तत्त्वस्यानारोपितस्वरूपस्य " **अखण्डं सच्चिदानंदं महावाक्येन लक्ष्यते** " [ श्लो० ४६ ] इति वक्ष्यमाणस्य विवेक आरोपितात्पंचकोशलक्ष-णाज्जगतो विवेचनं विधीयते क्रियत इत्यर्थः ॥ २ ॥

**अ० टी०**—ननु भवत्वेवं विषयादिसिद्धिर्ध्वन्यादिनाऽथापि किमुक्तविषयाप्तितो भ्रमरकी-टन्यायेनोक्तप्रयोजनसिद्धिर्ध्यानादिकर्मभिर्विरोधेन वा तद्विपमादिरूपेण समुच्चयेन वा । आद्यंत्ययोर-धीतसांगवेदस्य परोक्षस्य कर्मोपयोगिनस्तद्बोधस्य तत एव संभवेन तत्प्रतिपादकस्य चतुर्लक्षणी-शास्त्रस्यैवानारंभणीयत्वे तन्मूलके प्रकृतप्रकरणे तथात्वस्य कैमुत्यसिद्धत्वान्मध्यमे तु कर्मकांड-वैयर्थ्यापत्त्या " मम देहो मम प्राणो मम चित्तं च धीर्मम । सुखं ममेति यो वेत्ति स कस्त्वमिह नोत्तरम् " इति रीत्या पंचकोशतत्कारणेभ्यः पार्थक्येन सत्यज्ञानानंतानंदरूपात्मबोधसत्त्वेऽपि म-नुष्याद्यवच्छेदेन फलादर्शनादर्धीतशास्त्राणामपि जीवन्मुक्त्यनुपलब्धेः प्रत्युत केषांचित्तेषां यथे-पिताचरणनिरीक्षणाच्चेत्याशंक्य "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन" इत्यादिश्रु-तेः " ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः " इत्यादिस्मृतेः " प्रत्यग्विविदिषां बुद्धेः क-र्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायांति प्रावृडंते घना इव " इति **वार्तिकाच्च** विविदिषं-तीत्यत्राश्चेन जिगमिषतीत्यादिवज्ज्ञानलक्षणधात्वर्थस्य प्राधान्यांगीकारे श्रवणादिविध्यनुपपत्ते-रुक्तस्मृतेः प्रधानीभूतसन्प्रत्ययवाच्ये छायामेव लक्षणौचित्यस्य निरुक्तवार्तिकसूचितत्वादुक्तेश्वरा-र्पितकर्मभिः पाराशरपुराणोक्तज्ञानानुत्पत्तिकारणीभूतदुरितप्रध्वंसद्वारा मुकुरादिवद्विमलमानसजि-ज्ञासुजनानामनायासेनाबाधिताप्रतिबद्धाद्वैतात्मवस्तुबोधोपयोगित्वेनास्य सार्थक्यमिति समादधंस्त-न्नाम निबध्नंश्च तत्कृतिं प्रतिजानीते —**तत्पादेति** । रूपकादिकं तु प्राग्वदेव ॥ २ ॥

**रा० टीका**—जीवब्रह्मणोरेकत्वलक्षणविषयसंभावनाय जीवस्य सत्यज्ञानादिरूपतां दिदर्शयिषुरादौ ज्ञानस्याभेदप्रतिपादनेन नित्यत्वं साधयति—

**शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक् ॥**
**ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते ॥ ३ ॥**

**शब्दस्पर्शादय इत्यादिना** । तत्र तावद्विस्पष्टव्यवहारवति जागरे ज्ञानस्याभेदं साध-यति—**शब्देति** । जागर इंद्रियैरर्थोपलब्धिः । जागरितमित्युक्तलक्षणेऽवस्थाविशेषे वेद्याः संवि-द्विषयभूताः शब्दस्पर्शादय आकाशादिगुणत्वेन प्रसिद्धाः । तदाधारत्वेन प्रसिद्धाकाशादयश्च वैचित्र्यात्परस्परं गवाश्वादिवद्वैलक्षण्योपेतत्वात्पृथक् परस्परं भिद्यंते । ततस्तेभ्यो विभक्ता बुद्ध्या विवेचिता तत्संवित्तेषां शब्दादीनां संविज्ज्ञानमैकरूप्यात्संवित्संविदित्येकाकारेणावभासमानत्वा-

द्गगनमिव न भिद्यते । अत्रायं प्रयोगः । विवादाध्यासिता संवित्स्वाभाविकभेदशून्या उपाधिपरामर्शमंतरेणाविभाव्यमानभेदत्वाद्गगनवच्छब्दसंवित्स्पर्शसंविदो न भिद्यते संवित्त्वात्स्पर्शसंविद्वदिति । एकस्या एव संविदो गगनस्येवौपाधिकभेदेनापि भिन्नव्यवहारोपपत्तौ वास्तवभेदकल्पनायां गौरवं बाधकमुन्नेयम् ॥ ३ ॥

**अ टी०**—ननु तत्त्वस्य **विवेकोऽयं विधियते** इति प्रतिज्ञया तत्त्वशब्दशक्यस्याबाधितवस्तुत्वेन स्वसिद्धांतेऽद्वैतब्रह्मण एव तथात्वेन विवेकशब्देन सत्यानृतमिथुनीभावलक्षणाध्यासावबाधितद्वैतपृथग्भावबोधस्य तदेकविषयकस्यैव प्रतिपादयितुमुचितत्वेन " बुद्धिर्मनीषा धिषणा " इत्यादि **कोशे** बुद्धिनामोपक्रमेण तत्रैव पठितस्य " प्रेक्षोपलब्धिश्चित्संवित् " इति संविच्छब्दस्य रूढ्या सम्यग्वेत्ति यथार्थं जानातीति योगेन च तन्मात्रवाचित्वेन तस्याः क्षणिकत्वादिना विनश्वरत्वनानात्वादिभिरर्थानामपि दृष्टिसृष्टिवादे ज्ञानानतिरिक्तत्वेन तेषां वेद्यत्वेन तस्यास्तद्भिन्नत्वैकत्वयोः प्रतिपादनमनुचितमेवेत्याशंक्य प्रथमपद्यध्वनितब्रह्मात्मैक्यरूपविषयस्यैव चिन्मात्रैकरसप्रत्यग्वस्त्वनतिरिक्तत्वेन त्रैकालिकबाधविधुरसन्मात्ररूपत्वात्तस्या एव निरुक्तयोगवृत्त्या प्रकृते " परागर्थप्रमेयेषु या फलत्वेन संमता । संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणतः " इति **श्रीमत्सुरेश्वराचार्य**चरणारुणनलिनवचनात्संविच्छब्देन विवक्षितत्वात्क्षणभंगवादस्य त्वप्रामाणिकत्वा**च्चित्रदीपे** खंडमिषितत्वाच्च **दृष्टिसृष्टिवादे**ऽप्यर्थानां वृत्त्यात्मकज्ञानानतिरिक्तत्वेऽपि कूटस्थज्ञानानतिरिक्तत्वात्तेषां शब्दाद्युपलक्षितयावद्दृश्यरूपाणां सर्वेषां मिथ्यात्वहेतुभूतमुक्तरूपत्वमेव विविधाकारत्वलक्षणवैचित्र्यहेतुना पृथक्पदशक्यभिन्नत्वहेतुना च साधयंस्ततस्तन्मिथ्यात्वमपि ध्वनयंस्ततो विभिन्नाया संविदोऽपि भिन्नत्वहेतुकं प्राप्तं मिथ्यात्वघटकं वेद्यत्वं वारयितुं तस्याः सदैकरूप्येण हेतुना जागरे तावदभिन्नत्वं साधयति **शब्देति** ॥ ३ ॥

**रा० टीका**—उक्तन्यायं स्वप्नेऽप्यतिदिशति

**तथा स्वप्नेऽत्र वेद्यं तु न स्थिरं जागरे स्थिरम् ॥**
**तद्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते ॥ ४ ॥**

**तथेति** । यथा जागरे वैचित्र्याद्विषयाणां भेद एकरूप्यात्संविदो भेदश्च तथा तेनैव प्रकारेण स्वप्ने करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः स विषयः स्वप्न इत्युक्तलक्षणायां स्वप्नावस्थायामपि विषया एव भिन्ना न संविदिति । ननु यदि स्वप्नजागरयोरेकाकारता विषयतत्संविदोर्भेदाभेदाभ्यां तर्हि स्वप्नो जागर इति भेदव्यवहारः किंनिमित्तक इत्याशंक्याऽऽह—**अत्र वेद्यं त्विति** । अत्र स्वप्ने वेद्यं परिदृश्यमानं वस्तुजातं न स्थिरं न स्थायि प्रतीतिमात्रशरीरत्वात् । जागरे तु परिदृश्यमानं वस्तुजातं स्थिरं स्थायि कालांतरेऽपि द्रष्टुं योग्यत्वादतः स्थिरास्थिरविषयत्वलक्षणवैलक्षण्यात्तद्भेदस्तयोः स्वप्नजागरयोर्भेद इत्यर्थः । ननु स्वप्नजागरयोर्भेदश्चेत्तत्संविदोरपि भेदः स्यादित्याशंक्याऽऽह **तयोरिति** । एकरूपेति हेतुगर्भं विशेषणम् ॥४॥

**अ० टीका**—न च शब्दाद्युपलक्षणेन यावद्द्वैतस्य दृश्यत्वे साधिते तत्र जागर इत्यवस्थाविशेषावच्छेदवैयर्थ्यमिति वाच्यम् । उक्तविधया तथात्वेऽपि सति प्रमातर्यबाधादिरूपस्पष्टप्रमाणादिव्यवहृतेस्तदेकसत्त्वेन तत्रैव प्रथमसंविदः सत्यत्वादौ संवेद्यानां कल्पितत्वादौ च सिद्धे तन्न्यायेनान्यत्राप्यनंतरं तदतिदेशौचित्यादित्याशयेन जाग्रत्स्वप्नगतविषययोः स्थिरत्वादित्वेन तद्भेदं तत्संविदः प्राग्वदभेदं चाऽऽह—**तथेति** ॥ ४ ॥

**रा० टीका**—एवमवस्थाद्वये ज्ञानस्यैकत्वं प्रसाध्य सुषुप्तिकालीनस्यापि तस्य तेनैक्यप्रसाधनाय तत्र तावज्ज्ञानं साधयति—

**सुप्तोत्थितस्य सौषुप्तमोबोधो भवेत्स्मृतिः ॥**
**सा चावबुद्धविषयाऽवबुद्धं तत्तदा तमः ॥ ५ ॥**

**सुप्तेति** । पूर्वं सुप्तः पश्चादुत्थितः सुप्तोत्थितः सुप्तं सुषुप्तिस्तस्मादुत्थित इति वा तस्य । सौषुप्ततमोबोधः सुषुप्तिकालीनस्य तमसोऽज्ञानस्य यो बोधो ज्ञानमस्ति न किंचिदवेदिषमिति सा स्मृतिरेव भवेन्नानुभवस्तत्कारणस्येंद्रियसन्निकर्षव्याप्तिलिंगादेरभावादिति भावः। ततः किं तत्राऽऽह—**सा चेति** । सा च स्मृतिरवबुद्धविषयाऽवबुद्धोऽनुभूतो विषयो यस्याः सा तथोक्ता या स्मृतिः साऽनुभवपूर्विकेति व्याप्तिर्लोके दृष्टेति भावः । ततोऽपि किं तत्राऽऽह—**अवबुद्धमिति** । तत्तस्मात्कारणात्तत्सौषुप्तं तमस्तदा सुषुप्तावबुद्धमनुभूतमित्यवगंतव्यम् । अत्रायं प्रयोगः । विमतं न किंचिदवेदिषमिति ज्ञानमनुभवपूर्वकं भवितुमर्हति स्मृतित्वात्सा मे मातेति स्मृतिवदिति ॥५॥

**अ० टी०**—एवं विक्षेपरूपजाग्रदादौ दृङ्मात्रस्यैक्येन वक्ष्यमाणनित्यताशासंभवेदपि यदि सर्वानुभूतायां सुप्त्याख्यावरणावस्थायां तत्सत्त्वादि स्यात् । न च सुखमहमस्वाप्सं न किंचिदवेदिषमितिव्युत्थितस्य स्मृत्यनुपपत्त्यैव तत्र तत्सिद्धिरावश्यकीति शंक्यम् । भवन्मतेऽपि तस्य स्मृतित्वानंगीकारात् । उक्तं हि **वार्तिके** " न सुषुप्तगविज्ञानं नाज्ञासिषमिति स्मृतिः ॥ कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् " इति ॥ अस्यार्थः न **सुषुप्तेति** । सुषुप्तं गच्छतीति तथा तस्य यद्विज्ञानं सुखमित्याद्युक्तरूपं जाग्रदाद्यननुभूतविषयकत्वेन विशिष्टं ज्ञानमित्यर्थः । तत्स्मृतिर्न मम शैशवे मातृकर्तृकलालनादिसुखमासीदित्यादिवद्भूतार्थविषयकप्रत्ययत्वेन तस्य स्मृतित्वशंका नैव कार्येति तात्पर्यम् । तत्र हेतुमाह **कालेति** । आदिना देशः । पंचवट्यां काशीं स्मरामीति प्रतीतेः । यद्यपि दैशिकव्यवधानस्मृतिरपि कालिकव्यवधानव्याप्त्यैव तथाऽपि देशादेः प्राधान्यस्यैव स्मृतिवैजात्यघटकस्य विवक्षितत्वं बोध्यम् । तथाच स्मृतिकालावच्छेदेनाप्यात्मनः सत्त्वात्तस्यैवानुभवितृत्वान्न किंचिदवेदिषमिति सर्वाभावविषयकस्मरणस्य सर्वाभावानुभवपूर्वकत्वे वाच्ये तदंतःपातिज्ञानस्याप्यात्मनोऽपि चाभावानुभवेऽनेनैव सिद्धे नैरात्म्यवादाद्यापत्तेरात्ममात्रस्य सर्वावस्थानुगतत्वात्तद्गतत्वेन तत्स्थस्याऽऽत्मत्वस्यापि नित्यतयाऽतीतोपलक्षितभूतादिकालभाक्त्वाभावाच्चाहं नाज्ञासिषं तदानीमित्याद्याकारा वृत्तिः स्मृतिर्नैव भवति किंतु भ्रांतिरेवेति भाव इति । तस्मात्सुषुप्तौ मनसः पुरीतत्याख्यनाडीविशेषप्रवेशात्तादितरावच्छेदेनैवाऽऽत्मनः संयोगस्य ज्ञानकारणस्य तदानीमभावान्नैव तत्र ज्ञानशंकाऽपीत्याशंक्य सुप्ताख्यसुषुप्त्यवस्थासकाशादुत्थितस्य सुषुप्तौ विद्यमानत्वेन तत्र भवस्य तमसस्तमोगुणाकारेण परिणतस्य विपश्चिता संबंधावच्छिन्नं ज्ञानापरपर्यायं न किंचिदवेदिषमित्याद्यात्मकं बोधं पक्षीकृत्य सौषुप्तेति तद्धितसिद्धभूतकालिकार्थविषयकत्वलक्षणार्थिकहेतुना तस्य स्मृतित्वं संसाध्य या या स्मृतिः साऽनुभवपूर्विकेति व्याप्त्या तदानींतनतमोविषयकज्ञानपूर्वकत्वे तस्यां सिद्धे तेन तदवस्थाकालिकीमपि प्रकृतसंवित्सत्तां साधयन्निरुक्त**वार्तिके** त्वात्मस्थपदेन जीवचैतन्यनिष्ठसाक्षिचैतन्यस्यैव द्वितीयपादेन मूलाज्ञानविषयकस्मृतिनिषेधस्यैव च विवक्षितत्वस्य **न्यायरत्नावल्यां ब्रह्मानंदाचार्यै**र्विवृतत्वेन तद्विरोधस्य तत्तात्पर्यानवबोधनिबंधनतां ध्वनयन्साक्षिलक्षणबोधस्य तत्कालावच्छेदेन सत्त्वसंभवेऽपि स्मृतित्वहेतुभूतस्य वृत्त्यात्मकज्ञानस्य कथं नाम सामग्र्यभावा-

त्संभव इति शिष्याशयमपि साक्ष्युक्ततमोगुणाकारपरिणताज्ञानात्मसुखाकारनिर्विकल्पकमूला ज्ञानैककार्यतापन्नवृत्तित्रयस्य **श्रीमत्प्रकाशात्मगुरुवराख्यविवरणकार**चरणैरंगीकृतत्वं मनसि निधायैव शमयञ्जाग्रदादित्रस्मात्रावपि तत्तद्वृत्त्युपलक्षितस्य निर्विकल्पाखंडस्वप्रकाशचिदेकरसवस्तुनः सिद्धिर्निर्बाधैवेति समाधत्ते—**सुप्तोत्थितस्येति** ॥ ५ ॥

**रा० टीका**—तस्यानुभवस्य स्वविषयादज्ञानाद्भेदं बोधांतराद्भेदं चाऽऽह—

**स बोधो विषयाद्भिन्नो न बोधात्स्वप्नबोधवत् ॥**
**एवं स्थानत्रयेऽप्येका संवित्तद्वद्दिनांतरे ॥ ६ ॥**

**स बोध इति** । स बोधः सौषुप्ताज्ञानानुभवो विषयादज्ञानाद्भिन्नः पृथग्भवितुमर्हति बोधत्वाद्घटबोधवत् । बोधांतरान्न भिद्यते बोधत्वात्स्वप्नबोधवत् । फलितं कथयन्नुक्तन्यायमन्यत्राप्यतिदिशति **एवमित्यादिना** । स्थानत्रयेऽप्येकादिनवर्तिनि जाग्रदाद्यवस्थात्रयेऽपि संविदेकैव, सर्वं वाक्यं सावधारणमिति न्यायात्तद्वद्दिनांतर इति ॥ ६ ॥

**अ० टी०**—ननु सर्वमिदं सुखमहमस्वाप्सं न किंचिदवेदिषमिति स्मृत्या भवतु सुप्त्यवस्थमथापि "सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति । पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः" इति **श्रुते**र्जीवस्य तदानीं निरुक्ततमोगुणाकारपरिणतेऽवस्थाज्ञाने विलीनत्वेनानुभवितुरभावे पुनरप्युक्तवृत्तेः स्मृतित्वाभावनादवस्थ्यमेव । न च **विवरणमतेन** साक्ष्यज्ञानसुखाकारमूलाज्ञानीयोक्तवृत्तित्रयस्य तत्रांगीकाराज्जीवस्य विलयेऽपि साक्ष्यनुभूतसुखादेर्जागरे प्रादुर्भूतेन तेन रसालबीजे निषिक्तस्य घनसारादेः फलपरिपाकवेलायां सौरभ्याविर्भाववत्तत्तादात्म्यादेवोपपत्तिरिति वाच्यम् । तदानीं लीनस्य जाग्रत्याविर्भूतस्य जीवस्योभयत्रापि सता साक्षिणा सहेदानीं तादात्म्येन स्मरणोपपत्तिकल्पनापेक्षया वरं लाघवादुभयत्रापि सता मूलाज्ञानेनैव तादृक्साक्षिणं विनाऽपि "सत्त्वात्संजायते ज्ञानम्" इति**स्मृतेः** "अजामेकां लोहितशुक्लकृष्णाम्" इतिश्रुतेश्च ज्ञानप्रयोजकसत्त्वादिगुणसंपन्नेन तादात्म्यापन्नस्य जीवस्य स्मरणोपपत्तेरिति चेन्न । यो यो बोधः स स्वविषयाद्भिन्न इति व्याप्तेः सर्वतांत्रिकसंमतत्वात्सौषुप्ताज्ञानानुभवस्योक्तस्मृत्यन्यथानुपपत्त्या पूर्वपक्ष एव साधितत्वात्स्मृत्यादेस्तु संजायत इत्यादिपदस्वारस्येन कूटस्थाभिन्नजन्यज्ञानविषयत्वात्सौषुप्ततमोविषयकः प्रकृतो बोधः स्वविषयात्तमसो भिन्नत्वे सति वृत्त्यात्मकबोधाभासेतरबोधादभिन्नः । कूटस्थबोधत्वात्स्वप्नादिविषयकबोधवदित्यनुमानाच्चेति द्योतयति **स बोध इत्याद्यर्धेन** । ननूक्तानुमाने साध्योत्तरदले सुप्त्यविशेष्यताक्रांतसाध्याभेदप्रतियोगिवाचकबोधपदं किं बोधत्वावच्छिन्नयावद्बोधपरमुत पक्षीकृतबोधमात्रपरम् । नाऽऽद्यः । दृष्टांतासिद्धेः । नांत्यः सिद्धसाधनापत्तेरिति चेन्न । भावानवबोधात् । तथा हि यथा स्वप्नविषयको बोधः कूटस्थबोधत्वादेव प्राक्प्रतिपादितजाग्रत्कालिककूटस्थबोधादभिन्नस्तथा सुषुप्तिकालिकतमोविषयकोऽप्ययमसौ तत्त्वादेव तदभिन्न इति विवक्षायां न कोऽपि दोषः । न हि केयूरहाटकं यथा कटकहाटकादभिन्नं तथा कुंडलहाटकमपि तदभिन्नमिति प्रयोक्ता प्रत्येति प्रतिपत्ता चाप्रतिपद्यते । यथा वा स्थूलसूक्ष्मसूक्ष्मतरगतरंगेषु प्रतिबिंबितत्वेन विभिन्नाः प्रतीयमाना अपि चंद्राः कूटस्थादिविम्बचंद्राच्चंद्रत्वेनैव हेतुना ह्यभिन्नाः प्रत्येकमनुमानत्रयेण माणवकं प्रति प्रबोद्धुमाचार्येण साध्यंते तद्वत्प्रकृतेऽपीत्याकूतम् । एतेन यदपि केनचिदाक्षिप्यते ज्ञानविषययोरभेदस्तावद्दृष्टिसृष्टिवादं सिद्धांते विहाय विज्ञानवादं च प्रतिपक्षे विहाय

नैवान्यत्र कुत्रापीति स बोधो विषयाद्भिन्न इति तद्भेदसाधनं सिद्धसाधितरोधितमेवेति तदपि प्रत्युक्तम् । उभयत्रापि वृत्त्यात्मकबोधाभासं गृहीत्वैव पर्युदस्तमतद्वये विषयबोधयोरभेदवादेऽपि कूटस्थबोधे तद्भिन्नत्वस्यैवाऽऽद्यमतेऽभीष्टत्वादंत्यमते तदभावेऽपि वृत्त्यात्मकबोधाभासेतरेति साध्यविशेषणेनैव तत्पर्युदासाच्चेति दिक् । एवं जाग्रदाद्यवस्थात्रयोपलक्षितयावद्व्यवहारे साधितमेकस्मिन्दिने संविदैक्यं दिनांतरेऽप्यतिदिशति—**एवमित्याद्युत्तरार्धेन** । सर्वं वाक्यं सावधारणमिति **न्यायेन** संविदेकैव यथैकस्मिन्दिने जाग्रदादिरूपेऽवस्थात्रयेऽप्यस्ति तद्वद्दिनांतरेऽपि भवतीति संबंधः । स्थानशब्दोऽत्रावस्थापरः । तथाचाऽऽम्नायते " तस्य त्रय आवसथाः " इत्यादि ॥ ६ ॥

**मासाब्दयुगकल्पेषु *गतागम्येष्वनेकधा ॥**
**नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा ॥ ७ ॥**

**रा० टी०—**यथैकस्मिन्दिवसेऽवस्थात्रयेऽपि ज्ञानस्याभेद एवमन्यस्मिन्नपि दिवसेऽनेकधाऽनेकप्रकारेण गतागम्येष्वतीतागामिषु मासेषु चैत्रादिष्वब्देषु प्रभवादिषु युगेषु कृतादिषु कल्पेषु ब्राह्मादिषु च ज्ञानस्याभेद एवेत्यर्थः । संविद एकत्वसमर्थने फलमाह—**नोदेतीति** । यतः संविदेकाऽतो नोदेति नोत्पद्यते नास्तमेति न विनश्यति च । असाक्षिकयोरुत्पत्तिविनाशयोरसिद्धेः । स्वोत्पत्तिविनाशयोस्तयैव संविदा गृहीतुमशक्यत्वात्संविदंतराभावाच्चेति भावः । ननु संविदंतराभावे ग्राहकाभावादस्या अप्यभाने जगदांध्यं प्रसज्जेतेत्यत आह—**एषेति** । अत्रायं प्रयोगः । संवित्स्वयंप्रकाशाऽवेद्यत्वे सत्यपरोक्षत्वाद्व्यतिरेके घटवन्न चायं विशेषणासिद्धो हेतुः संविदः स्वसंवेद्यत्वे कर्मकर्तृत्वविरोधात्परवेद्यत्वेऽनवस्थानादतः स्वप्रकाशत्वेन भासमानायाः संविदः सर्वावभासकत्वसंभवान्न जगदांध्यप्रसंग इति भावः ॥ ७ ॥

**अ० टी०—**अथ फलितं कथयन्नुक्तसंविदः स्वप्रकाशत्वं कालिकपरिच्छेदविधुरत्वं च ध्वनयति—**मासेति** । मासादयस्तु प्रसिद्धा एव **कालमाधवादौ** । ननु भवत्वेवं मासादिकल्पांतेष्वपि भूतेषु भाविषु च कालावयवेष्वपि नित्यापरोक्षत्वेन प्रकृतायाः संविदः प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपं सत्यत्वापरनामकं नित्यत्वं किं ततः प्रकृत इत्याशंक्य तद्भास्यस्य द्वैतस्यास्वप्रकाशत्वलक्षणमिथ्यात्वसिद्धिरेवेति ससादधंस्तां विशिनष्टि—**एकेत्यादिद्वाभ्यां विशेषणाभ्याम्** । यत एषा संविदनेकधा गतागामिष्वपि मासाब्दयुगकल्पेषु नोदेति नैवोत्पद्यते नास्तमेति नैव विनश्यति चात एकाऽद्वितीया भवत्युत्पत्तिविनाशयोर्द्वितीयसाध्यत्वात्तथा स्वयंप्रभा स्वप्रकाशाऽप्यस्तीत्यन्वयः । एतेन जाग्रदादिस्थानत्रयेऽपि तत्तद्भास्यभासकत्वेन साधिता या कूटस्थसंविदियमपि संविदंतरभास्या भवतु ज्ञानत्वाद्वृत्तिरूपज्ञानवदित्यनुमानेन संभाविताऽनवस्था प्रयुक्ता । एवं चास्यां स्वप्रकाशायां संविदि प्रतिपादितयुक्त्या द्वितीयत्वावच्छेदकावच्छिन्नद्वितीयस्यास्वप्रकाशत्वलक्षणमिथ्यात्वेन त्रैकालिकाभावाद्देशवस्तुपरिच्छेदवैधुर्येणानंत्यमपि चतुर्विधाभावाप्रतियोगित्वलक्षणं लक्ष्यते । ननु किमिदं स्वयंप्रभत्वमिति चेद्यत्प्राचीन**टीकाकारैः** केवलव्यतिरेकिहेतुना लक्षितम् । तद्यथा—एषेति सांप्रतिकसंविदं प्रकृत्य । ' अत्रायं प्रयोगः । संवित्स्वयंप्रकाशा । अवेद्यत्वे सत्यपरोक्षत्वात् । व्यतिरेके घटवत् । न चायं विशेषणासिद्धो हेतुः । संविदः स्ववेद्यत्वे कर्मकर्तृत्वविरोधात्परवेद्यत्वेऽनवस्थानात् । अतः स्वप्रकाशत्वेन भासमा-

* गतागामिष्वित्यच्युतरायटीकानुरोधेन पाठः ।

नायाः संविदः सर्वावभासकत्वसंभवान्न जगदांध्यप्रसंग इति भाव इति ' । अत्र वदंति । हेतोर्विशेषणस्य प्रतिपादनेऽपि विशेष्यीभूतमपरोक्षत्वमेव संदिग्धम् । तथाहि । न तावदत्रापरोक्षत्वं **तार्किका**दिवत्प्रत्यक्षापरपर्यायमिंद्रियार्थसंनिकर्षजन्यज्ञानत्वम् । कूटस्थत्वात् । अत एव **प्राभाकर**वदावरणवधुर्यलक्षणं स्फुरणत्वम् । तन्मते हि संविदां स्वप्रकाशत्वेऽपि जन्यत्वाद्यंगीकारात् । नापि " यत्साक्षादपरोक्षाद्ब्रह्म " इतिश्रुतब्रह्मत्वम् । तदर्थीभूतस्य तस्यैव विचार्यत्वादिति चेन्न । साक्षादपरोक्षं प्रत्यक्षं चिच्चितिः संविज्ज्ञानं भानं भाः प्रकाशः प्रबोधो मितिः प्रमितिः स्फुरणं स्फूर्तिर्ज्ञप्तिर्बोध इत्यादि शब्दानामनर्थांतरत्वमेव । तथाच तादृग्बोधस्य वृत्तिव्यावृत्तं स्वयंत्वमवश्यं लक्षणीयमेव । तच्च लक्षितं यथामति मदीय**बोधैक्यसिद्धौ** " ज्ञानस्य तु स्वप्रभता विनैव ज्ञानप्रयुक्तं विषयत्वमेवम् । संदेहमुख्याऽविषयत्वयोग्यस्वरूपसत्त्वेव मता विपश्चिताम् " इति ॥ एवं च ज्ञानाविषयत्वे सति संशयावरणाभयशून्यत्वयोग्यस्वरूपसत्त्वमेव स्वयंप्रभत्वमिति लक्षणं पर्यवसितम् । अत्रायं घट इत्यादिवृत्तिज्ञाने साक्षिभास्येऽतिव्याप्तिव्यावृत्तये सत्यंतम । तावन्मात्रोक्तौ ब्रह्म स्वप्रकाशमेवास्तीत्याप्तवाक्यजन्यपरोक्षज्ञानविषयीभूते स्वप्रकाशे ब्रह्मण्येवाव्याप्तिव्युदस्तये संशयेत्यादि । तस्य संशयादिविषयत्वात् । अत्र योग्यत्यादिना निरुक्तपरोक्षज्ञानविषयीभूतेऽपि स्वप्रकाशे ब्रह्मणि स्वप्रकाशत्वावच्छेदेन ज्ञानाविषयत्वात्संशयादिविषयत्वेऽपि तच्छून्यत्वयोग्यस्वरूपसत्त्वान्नाव्याप्तिरितिबोध्यम् । इदं गुरुतरमित्यपरितोषे त्वनधीनभानत्वमेव तदस्तु । विस्तरस्तु **मामकतट्टीकायामेव** ज्ञेय इति दिक् ॥ ७ ॥

**रा० टी०**—भवत्वेवं संविदो नित्यत्वं स्वप्रकाशत्वं च ततः किमित्यत आह—

**इयमात्मा परानंदः परप्रेमास्पदं यतः ॥**
**+मा न भूवं हि भूयासमिति प्रेमाऽऽत्मनीक्ष्यते ॥ ८ ॥**

**इयमिति** । अत्रायं प्रयोगः । इयं संविदात्मा भवितुमर्हति नित्यत्वे सति स्वप्रकाशत्वाद्यन्नैवं न तदेवं यथा घट इति । आत्मनो नित्यसंविद्रूपत्वप्रसाधनेन सत्यत्वमपि साधितं भवति नित्यत्वातिरिक्तसत्यत्वाभावात् । नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यमिति **वाचस्पतिमिश्रै**रुक्तत्वादिति भावः । आत्मन आनंदरूपत्वं साधयति **परानंद इति** । आत्मेत्यनुषज्यते । परश्चासावानंदश्चेति परानंदः । निरतिशयसुखस्वरूप इत्यर्थः । तत्र हेतुमाह **परेति** । यतो यस्मात्कारणात्परस्य निरुपाधिकत्वेन निरतिशयस्य प्रेम्णः स्नेहस्याऽऽस्पदं विषयस्तस्मादत्रेदमनुमानमात्मा परमानंदस्वरूपः परप्रेमास्पदत्वात् । यः परमानंदरूपो न भवति नासौ परप्रेमास्पदमपि यथा घटः । तथा चायं परप्रेमास्पदं न भवतीति न तस्मात्परमानंदरूपो न भवतीति न । नन्वात्मनि धिङ्मामिति द्वेषस्योपलभ्यमानत्वात्प्रेमास्पदत्वमेवासिद्धं कुतः परप्रेमास्पदत्वमित्याशंक्य तस्य दुःखसंबंधनिमित्तकत्वेनान्यथासिद्धत्वात्प्रेम्णश्चाऽऽत्मन्यनुभवसिद्धत्वान्मैवमिति परिहरति—**मा न भूवमिति** । हि यस्मात्कारणादात्मनि विषये मा न भूवमहं मा भूवमिति न ममासत्त्वं कदाऽपि मा भूत्किंतु भूयासमेव सदा सत्त्वमेव मम भूयादित्येवंविधं प्रेमेक्ष्यते सर्वैरनुभूयतेऽतो नासिद्धिरित्यर्थः ॥ ८ ॥

+ मा अनुभवं इति पदच्छेदोऽस्त्यच्युतरायटीकानुरोधेन ।

**अ० टी०**—ननु "य आत्मनि तिष्ठन्नात्मनोऽतरः" इत्यादिश्रुतेर्वार्तिककारमते जीवात्मन्यपि विद्यमानस्येश्वरस्यैव साक्षित्वाज्जाग्रदाद्यखिलावस्थावभासकस्योक्तसंविद्रूपस्य साक्षिण ईश्वरत्वमेवास्तु तथाच द्वितीयस्य तद्भिन्नस्य जीवस्य सत्त्वेन वस्तुपरिच्छेदविदलनाभावादेकपदध्वनितमद्वैतत्वं नैव सिध्यतीत्याशंक्यसाक्षित्वविशिष्टायाः प्रोक्तलक्षणायाः संविदः पंचकोशात्मकावस्थात्रयविशिष्टचिद्रूपाज्जीवाद्भिन्नत्वेऽपि "सत्यं ज्ञानमनंतं ब्रह्म" इति स्वरूपलक्षणप्रतिपादिकतैत्तिरीयश्रुतिलक्षितसत्यज्ञानादिलक्षणस्योक्तरीत्या युक्त्याऽपि सिद्धस्य ब्रह्मणः साक्ष्यप्रयुक्ताविद्यकसाक्षित्वलक्षणोपाधिविधुरस्य शोधितत्पदार्थीभूतस्य तादृग्रूपेणाविद्यकं पंचकोशाद्युपाधिविधुरेण शोधितत्वंपदार्थीभूतेनाऽऽत्मना सह वास्तविकैक्यमेव महावाक्यार्थीभूतमस्तीति समाधत्ते—**इयमात्मेति**। इयं निरुक्तलक्षणा संवित्। आत्मा "यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य संततो भावस्तस्मादात्मेति भण्यते( कीर्त्यते )" इत्यभियुक्तवचनात्सत्यज्ञानादिलक्षणः प्रत्यगेवास्तीत्यर्थः॥ ननु सत्यादिस्वलक्षणैक्येऽपि सुवर्णकार्यत्वरूपस्वलक्षणैक्येऽपि मुकुटकटकयोरिव वास्तविकविभेदे बाधकाभाव एव। न च प्राचां प्रयोग एव। इयं संवित्। आत्मा भवितुमर्हति। नित्यत्वे सति स्वप्रकाशत्वात्। यन्नैवं न तदेवं यथा घट इति पराऽर्थानुमानात्मा बाधक इति वाच्यम्॥ विपक्षे बाधकाभावेन हेतोरप्रयोजकत्वात्। न हि गौरः पीवरस्तरुणः सुब्राह्मणश्चैत्र इति तादृशान्मैत्रादभिन्नः प्रेक्ष्यते परीक्षकैरिति चेन्न "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" इति "यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्" इति चान्वयव्यतिरेकव्याप्तिघटितश्रुत्या कंठत एव भूमशब्दिततत्त्रिविधपरिच्छेदशून्यचतुर्विधाभावाप्रतियोगिवस्तुन एव परमानंदरूपत्वस्य कैवल्यस्वरूपत्वस्य चोक्तत्वात्तदभावे जीवेश्वरयोरुभयोरपि विभिन्नत्वलक्षणवस्तुपरिच्छेदेन तुच्छत्वाज्जीवस्य सिद्धांते बुद्धिप्रतिबिंबितचिदाभासत्वेनेश्वरस्य चाविद्यातादात्म्यापन्नस्वचिदाभासाविविक्तचैतन्यरूपसाक्षित्वेन च स्वतः सत्ताशून्यत्वलक्षणमिथ्यात्वाच्च विविक्तकूटस्थचिन्मात्रनानात्वे प्रमाणाभावात् "द्वितीयाद्वै भयं भवति" इत्यादिश्रुतिशतेन प्रत्युत भेदस्य निंदितत्वाज्जाग्रदादौ भेदसत्त्वे भयसत्त्वस्य सुप्त्यादौ तदभावे तदभावस्य चानुभूतिघटितसर्वसुप्रसिद्धान्वयादिलक्षणतदनुग्राहकयुक्तेश्च। नन्वियमात्मेत्युक्तैक्यलक्षणमहावाक्यार्थे को हेतुः। न च त्रिविधपरिच्छेदविधुरत्वरूपोऽसौ पूर्वमुपपादित एवेति सांप्रतम्। एवं स्थानत्रयेऽप्येकेत्यनेन देशपरिच्छेदस्य तथा मासाब्देत्यादिना नोदेति नास्तमेत्येकेत्यनेन च कालपरिच्छेदस्यैव राहित्योक्त्या वस्तुपरिच्छेदराहित्ये प्रकृतसंविदः प्रकृतश्रुतीतरप्रमाणाभावात्तस्यास्तु तत्त्वमस्यादिमहावाक्यरूपायाः संदिग्धार्थकत्वेन तत्प्रतिबंधबाधनार्थमेव "अथातो ब्रह्मजिज्ञासा" इत्यादिशास्त्रस्य तथैतत्प्रकरणस्य तीव्राद्यधिकारिभेदेनानुग्राहकतया तत्तदाचार्यैरारब्धत्वाच्च। नापि संविद्रूपात्साक्षिण ईश्वरात्सकाशाज्जीवस्य भिन्नत्वे शब्दादिविषयवद्दृश्यत्वेन जडत्वमिति वाच्यम्। तार्किकमतानुयायिनो ममेष्टापत्तेः सांख्यादिवच्चिन्नानात्वेऽपि बाधकानापत्तेश्चेति चेदत्रोच्यते। यदुक्तसंविद्रूपसाक्षिण ईश्वराज्जीवो भिन्नः स्यात्तर्हि सुखरूपो न स्यादित्यादितर्कस्यैवोक्तवस्तुपरिच्छेदाधायकभेदबाधकत्वादित्यभिसंधायोक्तसाक्षिसंविल्लक्षणस्येश्वरस्य प्रतिज्ञातात्माभिन्नत्वसाधकं निरतिशयानंदरूपत्वमभिधत्ते—**परेति**। एतेन जाग्रदाद्यवच्छेदेन शब्दादिविषयजन्यक्षुद्रानंदव्युदासः। तेषामागमापायित्वेन मायिकत्वात्। नन्वसिद्धेनैवाऽऽनंदरूपत्वेन सामान्यतः किमुत परत्वविशिष्टेनापि तेनोक्तसंविद्यात्मत्वं साधयतस्तवेदमभिनवमे-

वाभाति विबुधत्वमिति स्वाशयमनाकलयंतं प्रतिवादिनं प्रति तत्र हेतुं स्फुटयति—**परेत्यादि-पूर्वार्धशेषेण** । यत इयं जाग्रदाद्यवस्थात्रयप्रकाशकत्वेन प्रकृता संविच्छब्दवाच्या स्वप्रकाशचितिः । परप्रेमास्पदं सुखादिसाधनानां जाग्रदादिनिविष्टविषयविषयकज्ञानानां तदेकायत्तत्वेन तदर्थं निरतिशयप्रेमाधिकरणं भवति । अतः परानंदोऽस्मि । यतः परानंदोऽस्त्यत आत्मा भवतीत्यध्याहृत्य संबंधः । अयं भावः । यदि रमण्यादेरिष्टविषयस्य ज्ञानं न स्याच्चेत्तर्हि तत्र सुखसाधनत्वेनोपादेयत्वं ततः सुखोपभोगश्च नैव स्यात्तथा व्याघ्रादेरनिष्टस्यापि तस्य तन्न स्याच्चेत्तर्हि तत्र दुःखसाधनत्वेन हेयत्वं ततो दुःखोपभोगाभावश्चापि नैव सिद्धेदतः सर्वजीवानां तदुभयकामनया निरुक्तज्ञानावश्यकतया तज्ज्ञानमूलीभूतोक्तसंविदि तेषां निरतिशयं प्रेम समुचितमेवेति । एवं चात्रानुमानद्वयमेव क्रमाद्बोध्यम ॥ इयं संवित्परानंदः स्यात् । परप्रेमास्पदत्वात । व्यतिरेके घटवत् । तथा । इयं संवित् । आत्माऽस्मि । परानंदत्वात् । प्राग्वदेव । एतेन " तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरं यदयमात्मा " इतिश्रुतिरप्यनुगृहीता भवति । उक्तं हि **सर्वज्ञात्ममुनीश्वरचरणैः संक्षेपशारीरके** " सर्वं यदर्थमिह वस्तु यदस्ति किंचित्पाराथ्र्यमुज्झति च यन्निजमस्तथैव । तद्वर्णयंति हि सुखं सुखलक्षणज्ञास्तत्प्रत्यगात्मनि समं सुखताऽस्य तस्मात । प्रेमानुपाधिरपरात्मनि नोपलब्धः स प्रत्यगात्मनि कुमेररपि नित्यसिद्धः । प्रेयः श्रुतेरपि ततः सुखतानुमानं नैयायिकोऽपि न दृगात्मनि निह्नुवीत " इति ॥

तस्मादुक्तरीत्या वस्तुपरिच्छेदस्य त्वच्छब्दार्थस्य सुतरामसंभावितत्वान्निरुक्तरूपस्तत्त्वमस्यादिवाक्यार्थः सच्चिदानंदाद्वैतरूपप्रत्यग्ब्रह्मैक्यलक्षणः सकलद्वैतबाधापूर्वकः कैवल्यात्मा निष्प्रत्यूह एव षड्विधतात्पर्यग्राहकलिंगानुगृहीतः सर्वशास्त्ररहस्यतया सिद्धः । नन्विममद्वैतसिद्धांतं माध्वाः प्रध्वंसयंति । तदुक्तं **श्रीमाधवाचार्येण सर्वदर्शनसंग्रहे** तन्मतं प्रकृत्य— " अनुमानेनापि भेदोऽवगम्यते । परमेश्वरो जीवाद्भिन्नः । तं प्रति सेव्यत्वात । यो यं प्रति सेव्यः स तस्माद्भिन्नः । यथा भृत्याद्राजा । न हि सुखं मे स्याद्दुःखं मे न मनागपीतिपुरुषार्थमर्थयमानाः पुरुषाः स्थपतिपदं कामयमानाः सत्कारभाजो भवेयुः । प्रत्युत सर्वानर्थभाजनं भवंति । यः स्वस्याऽऽत्मनो हीनत्वं परस्य गुणोत्कर्षं च कथयति स स्तुत्या प्रीतः स्तावकस्य तस्याभीष्टं प्रयच्छति । **तदाह**— ' पातयंति हि राजानो राजाहमिति वादिनम् । ददात्यखिलमिष्टं च स्वगुणोत्कर्षवादिने ' इति ॥ एवं च परमेश्वराभेदतृष्णया । विष्णोर्गुणोत्कर्षस्य मृगतृष्णिकासमत्वाभिधानं विपुलकदलीफललिप्सया जिह्वाच्छेदनमनुहरति " इत्यादि । अत्रोच्यते । योऽयं भवता भेदो जीवेश्वरयोरनुमानेन साध्यते किमसौ पारमार्थिकः किंवा बालिकाशिल्पशिशुकन्यायेन भक्त्यतिशयाद्व्यावहारिक एव मुमुक्षुजनं प्रति तत्र प्रीतिदार्ढ्यार्थमुत प्रातिभासिकः । नान्त्यौ । मुमुक्षुजनर्जीवन्मुक्तयोरिष्टापत्तेः । आद्यः परं परीक्ष्यते । पारमार्थिकत्वं हि त्रिकालाबाध्यत्वमिति निर्विवादमेव । तत्त्, भेदं भवता प्रमितमेव परत्वभेदवादिनं प्रति विजिगीषया परार्थानुमानेन साध्यत इत्यवश्यं वक्तव्यम । तत्तु नैव घटते । किंचिज्ज्ञस्य तव त्रिकालज्ञपरमेश्वरेण महाभेदापत्तेः । किंचाहं भृत्य एव राजा तु सततं मत्सेव्य एवेति स्वप्नं पश्यति राज्येव हेतोर्व्यभिचारात । न च जाग्रदवस्थायामेव कथायाः प्रवृत्तत्वेन स्वप्नव्यभिचारनिदर्शनमनुचितमेवेति वाच्यम ॥ तत्रापि दीर्घव्यावहारिकस्वप्नत्वस्येष्टत्वात । तथा चैतरेयकेसमाम्नायते " तस्य त्रय आवसथास्त्रयः स्वप्नाः " इत्यादि । **बृहद्वासिष्ठे**ऽपि " दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम । दीर्घं वाऽ-

ईशनादिशक्तियुक्तस्य जगदधिष्ठातुराज्ञया ईक्षापूर्वकसर्जनेच्छारूपया निमित्तकारणभूतया वि-यदादिपृथिव्यंतानि पंचभूतानि जज्ञिरे प्रादुर्भूतान्युत्पन्नानीत्यर्थः ॥ १८ ॥

**अ० टीका**—ननु भवत्वेवं चेतनद्वैतव्यवस्था तथाऽप्यंततो गत्वा मूलकृतां मतेऽत्र पर्यवसन्नसृष्टदृष्टव्याख्यानेकजीववादात्तद्धोगोपयुक्तजडद्वैतव्यवस्था कथं वर्तत इत्याशंक्य प्राक् " सत्त्वशुद्धयविशुद्धिभ्यां मायाविद्ये च ते मते " इति ग्रंथे चकारसूचिततमःप्राधान्यशालि-तृतीयप्रकृतिभागादंतर्यामित्वेनेश्वरप्रेरितात्सकाशात् " तस्माद्वा एतस्मादात्मन आकाशः संभू-तः " इत्यादिश्रुतिप्रसिद्धानि सूक्ष्मतमानि पंचमहाभूतानि शब्दाद्यात्मकान्येव प्रलयप्रयोजक-जीवादृष्टसमाप्त्युत्तरं सृष्टिस्थितिप्रयोजकतदृदृष्टाविर्भावसमये समभूवन्निति समाधत्ते—**तमःप्र-धानेति** । अत्र प्रकृतेरित्युपादानविवक्षयैव तंतुभ्यः पट इत्यादिवत्पंचमी । निमित्तत्वं तु " सोऽकामयत बहु स्यां प्रजायेयेति " इत्यादिश्रुतेर्मायावृत्त्यात्मकेच्छाविशिष्टेश्वर एवेति भावः ॥ १८ ॥

**रा० टी०**—भूतसृष्टिमभिधाय भौतिकसृष्टिमभिदधान आदौ ज्ञानेंद्रियसृष्टिमाह—

**सत्त्वांशैः पंचभिस्तेषां क्रमाद्धींद्रियपंचकम् ॥**
**श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते ॥ १९ ॥**

**सत्त्वांशैरिति** । तेषां वियदादीनां पंचभिः सत्त्वांशैः सत्त्वगुणभागैरुपादानभूतैः श्रो-त्वगक्षिरसनघ्राणाख्यं धींद्रियपंचकं धींद्रियाणि ज्ञानेंद्रियाणि तेषां पंचकं क्रमादुपजायते । ए-कैकभूतसत्त्वांशादेकैकमिंद्रियं जायत इत्यर्थः ॥ १९ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**सत्त्वेत्यादिचतुर्भिः** । ईश्वराज्ञयेति भूतसृष्टिव-द्भौतिकसृष्ट्यादावप्यनुकृष्य योज्यम् । अत्र भूतोपादानमायागतसत्त्वादीनामेव गुणानां तत्प-रिणामतापन्नाकाशादिभूतेष्वप्यनुवृत्तिः क्षीरशौक्ल्यस्य दध्यादाविव न तु **तार्किकवद्गुणांतरम्** । तत्र मानाभावात् । **धीति** । ज्ञानेंद्रियेत्यर्थः ॥ १९ ॥

**रा० टी०**—सत्त्वांशानां प्रत्येकमसाधारणकार्याण्यभिधाय सर्वेषां साधारणं कार्यमाह—

**तैरंतःकरणं सर्ववृत्तिभेदेन तद्द्विधा ॥**
**मनो विमर्शरूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका ॥ २० ॥**

**तैरिति** । तैः सह सत्त्वांशैः सर्वैः संभूय वर्तमानैरंतःकरणं मनोबुद्ध्युपादानभूतं द्रव्यमु-पजायत इत्यनुषंगः । तस्यावांतरभेदं सनिमित्तमाह—**वृत्तीति** । तदंतःकरणं वृत्तिभेदेन परि-णामभेदेन द्विधा द्विप्रकारं भवति । वृत्तिभेदमेव दर्शयति—**मन इति** । विमर्शरूपं विमर्शः संशयात्मिका वृत्तिः सा स्वरूपं यस्य तत्तथा तन्मनः स्यात् । निश्चयात्मिका निश्चयोऽध्यव-सायः स आत्मा स्वरूपं यस्याः सा निश्चयात्मिका सा वृत्तिर्बुद्धिः स्यात् ॥ २० ॥

**अ० टीका**—तैराकाशादिसत्त्वांशैः । चित्ताहंकारयोस्तु मनोबुद्ध्योरेवांतर्भावः॥२०॥

**रा० टीका**—क्रमप्राप्तानां रजोंशानां प्रत्येकमसाधारणकार्याण्याह—

**रजोंशैः पंचभिस्तेषां क्रमात्कर्मेंद्रियाणि तु ॥**
**वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे ॥ २१ ॥**

**रजोंशैरिति** । तेषां वियदादीनामेव पंचभी रजोंशै रजोभागैस्तूपादानभूतैर्वाक्पाणिपा-दपायूपस्थाभिधानान्येतन्नामकानि कर्मेंद्रियाणि क्रियाजनकानींद्रियाणि जज्ञिरे ॥ २१ ॥

**अ० टीका**—अत्रापि तच्छब्देन भूतान्येव ॥ २१ ॥

**रा० टीका**—रजोंशानामेवं साधारणं कार्यमाह—

**तैः सर्वैः सहितैः प्राणो वृत्तिभेदात्स पंचधा ॥**
**प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः ॥ २२ ॥**

**तैः सर्वैरिति** । सहितैः संभूय कारणतां गतैः प्राणो जायत इति शेषः । तस्यावांतरभेदमाह—**वृत्तिभेदादिति** । प्राणो वृत्तिभेदात्प्राणनादिव्यापारभेदात्पंचधा पंचप्रकारो भवति वृत्तिभेदानेव दर्शयति—प्राण इति । ते पुनस्ते त भेदाः प्राणादिशब्दवाच्या इत्यर्थः ॥ २२ ॥

**अ० टीका**—तैराकाशादिरजोंशैः । वृत्तिर्वर्तनम् ॥ २२ ॥

**रा० टीका**—यदर्थमाकाशादिप्राणांतानां सृष्टिरुक्ता तदिदानीं दर्शयति—

**बुद्धिकर्मेंद्रियप्राणपंचकैर्मनसा धिया ॥**
**शरीरं सप्तदशभिः सूक्ष्मं तल्लिंगमुच्यते ॥ २३ ॥**

**बुद्धीति** । बुद्धयो ज्ञानानि कर्माणि व्यापारास्तज्जनकानींद्रियाणि बुद्धींद्रियाणि कर्मेंद्रियाणि चेत्यर्थः । बुद्धिकर्मेंद्रियाणि च प्राणाश्च बुद्धिकर्मेंद्रियप्राणाः तेषां पंचकानि तैर्मनसा विमर्शात्मकेन धिया निश्चयरूपया बुद्ध्या च सह सप्तदशभिः सप्तदशसंख्याकैः सूक्ष्मशरीरं भवति । तस्यैव संज्ञांतरमाह—**तल्लिंगमिति** । उच्यते वेदांतेष्वित्यर्थः ॥ २३ ॥

**अ० टीका**—एवं सूक्ष्मापरनामकलिंगशरीरसामग्र्युत्पत्तिमभिधायेदानीं तत्संघीभूतमेव तदित्याह—**बुद्धीति** । बुद्धिशब्देनात्रेंद्रियजन्यशब्दादिविषयकप्रमा एव । तद्वत्कर्मपदेनापि वचनादिक्रिया एव । ननु ज्ञानेंद्रियादिसप्तदशसंघात्मकमिदं लिंगशरीरमपंचीकृतभूतकार्यत्वात्प्रत्यक्षप्रमाणागम्यमपि तदंतःपातिप्राण एव तादृशोऽपि कथं मुखनासिकाद्यवच्छेदेन स्पार्शन प्रत्यक्ष इति चेत्सत्यम् । एवमेवाशंक्य समाहितं सदीयायाम**द्वैताधिकरणचिंतामणिमालाप्रभाया**मविरोधाख्यद्वितीयकांडीयचतुर्थगुच्छप्रकाशे " अणुश्च " इति षष्ठाधिकरणविवरणे—" ननु इंद्रियाणां सतत्त्वेन भासमानानां मनोबुद्धिचित्ताभिमानश्रोत्रत्वक्चक्षूरसनघ्राणवाक्पाणिपादपायूपस्थानां भवत्वतींद्रियत्वेन केवलसाक्षिभास्यत्वमथापि प्राणस्य तु कथमुच्छ्वासनिःश्वासरूपस्य मुखनासिकाबिलावच्छेदेन करांगुल्यादिस्पार्शनप्रत्यक्षेणैवानुभूयमानत्वाद्बाह्यवायुवत्साक्षिमात्रभास्यत्वं स्यात् । न चास्य पूर्वाधिकरण एवैतेनापंचीकृतत्वेनेत्यादिना दत्तोत्तरत्वमेवेति वाच्यम् । तत्रापि प्रश्नसत्त्वात् । तथाहि किं बाह्यवायुः प्राणस्यानुग्राहकः किंवा हिरण्यगर्भाख्यसूत्रात्मापरनाम्नः समष्टिजीवस्य समष्टिप्राणः । नाऽऽद्यः । व्यष्टिप्राणस्य पंचीकृतशब्दादिसूक्ष्मपंचमहाभूतरजोंशसंघकार्यत्वेन तदेकानुग्राह्यत्वाद्बाह्यवायोस्तु निरुक्तसूक्ष्मपंचमहाभूतावशिष्टतमोंशपंचकपंचीकरणजन्यत्वेन सूक्ष्मवायवीयतमोंशार्धभागतदितरतादृग्भूतचतुष्टयाष्टमाष्टमभागविशिष्टात्मकत्वेन तत्कारणत्वासंभवेन तदनुग्राहकत्वाभावाच्च । न द्वितीयः व्यष्टिसमष्टिप्राणयोः समुदायिसमुदायभावेनावयवावयविभावे वक्तव्ये प्रत्युतावयवानामेवावयविनं प्रति कारणत्ववदाध्यात्मिकप्राणस्यैवाधिदैविकप्राणं प्रति कारणत्वापातात् । समष्टिप्राणस्याप्यपंचीकृतसूक्ष्मशब्दाद्यात्मकपंचभूतरजोंशसंघविशेषजन्यत्वेन निरुक्तस्पार्शनप्रत्यक्षविषयत्वायोगाच्च " तस्माच्छरीरांतःसंचारी वायुः प्राण इत्यादितार्किकप्रक्रियैव ज्यायसीति चेदु-

च्यये । निरुक्तरीत्या प्राणस्य *बहिरंतःकरणवदपंचीकृतपंचमहाभूतकार्यत्वेनातिसूक्ष्मत्वमध्यमपरिमाणत्वाभ्यां साक्षिभास्यत्वेऽपि मुखनासिकारंध्रावच्छेदेन स्पार्शनप्रत्यक्षविषयत्वं सर्वजनैः प्रायोऽनुभूयमानं स्थूलदेहस्य पंचीकृतपंचमहाभूतकार्यस्यापि पार्थिवभागाधिक्यात्पार्थिवस्यापि तदितराकाशादिभूतचतुष्टयभागविशेषमेलनावश्यकत्वेन तदीयवायुभागस्य पंचीकृतत्वेन स्थूलतया स्पार्शनप्रत्यक्षयोग्यस्य प्राणेन सह यावत्प्रकृतदेहयोगं प्रागुदितक्रियाशक्तिवैशिष्ट्यसाधर्म्येणेश्वरेच्छादृष्टादिवशात्तादात्म्येन तद्विषयमेव । स्थूलदेहकारणीभूतवातस्य पंचीकृतत्वेन बाह्यत्वमुचितमेव । यथा **परमते** भौमं तेजः स्वोत्पत्तिक्षण एव काष्ठादितादात्म्यादृते चाक्षुषं नैव भवति तथाऽ**द्वैतिमते** प्राणः शरीरकारणीभूतवायुतादात्म्यापन्न एवोक्तप्रत्यक्षतायोग्योऽपि भवतीति कोऽत्र विरोधगंधोऽपीति । यथा **परमते** धूमादिकं लिंग्यते ज्ञाप्यते वह्न्याद्यनेनेतिव्युत्पत्याऽनुमापकं लिंगं भवति तद्वदिदमपि साक्षिणः साक्षात्तद्भास्यत्वेन तज्ज्ञापकत्वाल्लिंगमित्युच्यत इत्यर्थः ॥ २३ ॥

**रा० टीका**—एवं सूक्ष्मशरीरमभिधाय तदभिमानित्वप्रयुक्तं प्राज्ञेश्वरयोरवस्थांतरं दर्शयति—

**प्राज्ञस्तत्राभिमानेन तैजसत्वं प्रपद्यते ॥**
**हिरण्यगर्भतामीशस्तयोर्व्यष्टिसमष्टिता ॥ २४ ॥**

प्राज्ञ इति । प्राज्ञो मलिनसत्त्वप्रधानाविद्योपाधिको जीवस्तत्र तेजःशब्दवाच्यांतःकरणोपलक्षितलिंगशरीरेऽभिमानेन तादात्म्याभिमानेन तैजसत्वं तैजसनामकत्वं प्रपद्यते प्राप्नोति । ईशो विशुद्धसत्त्वप्रधानमायोपाधिकः परमेश्वरस्तत्र शरीरेऽहमित्यभिमानेन हिरण्यगर्भतां हिरण्यगर्भसंज्ञकत्वं प्रपद्यत इत्यनुषंगः । तैजसहिरण्यगर्भयोर्लिंगशरीराभिमाने समाने सति तयोः परस्परं भेदः किंनिबंधन इत्यत आह— **तयोरिति** । तयोस्तैजसहिरण्यगर्भयोर्व्यष्टित्वं समष्टित्वं भवत्यत एव भेद इत्यर्थः ॥ २४ ॥

**अ० टीका**—ननु भवत्वेवं जीवभोगकरणीभूततत्सूक्ष्मशरीरोत्पत्यादिकमथापि तमोगुणाकारपरिणतमूलाविद्यावाच्छिन्नस्य मलिनसत्त्वप्रधानाविद्याप्रतिबिंबरूपजीवत्वसत्त्वेऽपि पूर्वापेक्षया निरुक्तावस्थाज्ञानाख्यकिंचिदधिकोपाधिवशात्प्राज्ञाभिधयोगरूढसंज्ञांतरवत्प्रकृतेऽपि कारणशरीरापेक्षया लिंगशरीरस्य किंचिदधिकोपाधित्वादभिधांतरमस्ति न वेति विषयं शमयति—**प्राज्ञ इत्यादिपूर्वार्धेन** । अभिमानोऽत्र भेदसहिष्णवभेदलक्षणं रक्तः स्फटिक इत्यादिवदाध्यासिकं तादात्म्यमेव । **तैजसत्वमिति** । तेजःशब्दवाच्यप्रकाशरूपसत्त्वाधिकांशोपाधौ निरुक्ततादात्म्याभिमानेन जायमानत्वात्तैजसो द्वितीयः पाद इति **श्रुतेश्च** तैजससंज्ञावत्त्वमित्यर्थः । नन्वस्त्वेवं तस्य संज्ञांतरं तथाऽपि भ्रमजनकपित्ताख्यतेजःप्राधान्येनैव तस्य तैजसत्वं न तूक्तसत्त्वप्राधान्येन । भ्रमस्य तु स्वप्नाख्यस्य तैजस एव दृष्टेरिति चेन्न । **सिद्धांतबिंदौ** "न जाग्रन्न मे स्वप्नको वा सुषुप्तिः" इत्याद्यष्टमश्लोकव्याख्याने तैजसस्य स्वप्नाभिमानिनः सत्त्वगुणोपाधिताया एवोक्तत्वात् । तद्यथा —एवमध्यात्मं तैजसः । अधिभूतं हिरण्यगर्भः । अधिदैवं विष्णुः । अध्यात्मं स्वप्नः । अधिदैवं पालनम् । अधिभूतं सत्त्वगुण इति । विस्तरस्त्वेतट्टी**कायां न्यायरत्नावल्यामेव** द्रष्टव्य इति दिक् । नन्वेवं जीवस्याधिकोपाधिनाभिधांतराधिसत्त्वेऽ-

* बहिः कारणानि श्रोत्रादीन्यंतःकरणानि मनो बुध्यादीनीत्यर्थः ।

पीश्वरस्य त्वैकरूप्यमेवेष्टव्यं तस्य विशुद्धोपाधित्वादित्यत्राऽऽह—**हिरण्येत्युत्तरार्धेन** । प्रपद्यत इत्यत्राप्यनुकृष्य योज्यम् । साकल्येन लिंगशरीरतादात्म्याध्यासादीशोऽपि हिरण्यगर्भतां प्रतिपद्यत इत्यन्वयः । तत्र हेत्वाकांक्षायां द्योतयति—**तयोरिति चरमचरणेन** । व्यस्तोपाधिविशिष्टो व्यष्टिः समस्तोपाधिविशिष्टः समष्टिस्तयोर्भावस्तथेत्यर्थः । यतोऽस्त्यत इति पूर्वत्र संबंधः । एवं चैतन्मते हिरण्यगर्भविराजोरीश्वरोपाधित्वमेवेति भावः ॥ २४ ॥

**रा० टीका** ईश्वरस्य समष्टिरूपत्वे जीवानां व्यष्टिरूपत्वे च कारणमाह—

**समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् ॥**
**तदभावात्ततोऽन्ये तु कथ्यंते व्यष्टिसंज्ञया ॥ २५ ॥**

**समष्टिरिति** । ईश ईश्वरो हिरण्यगर्भः सर्वेषां लिंगशरीरोपाधिकानां तैजसानां स्वात्मतादात्म्यवेदनात्स्वात्मना तादात्म्यस्यैकत्वस्य वेदनाज्ज्ञानात्समष्टिर्भवति । तत ईश्वरादन्ये जीवास्तु तदभावात्तस्य तादात्म्यवेदनस्याभावाद्व्यष्टिसंज्ञया व्यष्टिशब्देन कथ्यंते ॥२५॥

**अ० टीका**—ननु निरुक्तव्यष्टयादिसंज्ञायां सूचिततद्व्युत्पत्तौ च किं बीजमित्यतस्तदाह—**समष्टिरिति** । ईशः सकलसूक्ष्मशरीरसंघाभिमानित्वलक्षणहिरण्यगर्भत्वावच्छिन्नोक्तमायाप्रतिफलितचिदात्मेत्यर्थः । सर्वेषां निखिलव्यस्तलिंगशरीरावच्छिन्नोक्ताविद्याप्रतिबिंबिततत्तन्नात्वविभिन्नानंतचिदात्मनामिति यावत् । **स्वेति** । अत्र स्वपदं शुद्धव्यावृत्त्यर्थम् । तावन्मात्रग्रहेऽपि स्वोज्ज्ञानात्वात्मनि स्वे ऽभिव्यक्त्यमगज्जात्यादावतिप्रसंगभंगार्थं समुचितमेवोपात्तमिति तत्त्वम् । एवं चोक्तविशिष्टस्वेन सह भेदसहिष्णवभेदाभिमानादित्यर्थः । **शिष्टं** तु स्पष्टमेव ॥ २५ ॥

**रा० टीका**—एवं लिंगशरीरं तदुपाधिकौ तैजसहिरण्यगर्भौ च दर्शयित्वा स्थूलशरीराद्युत्पत्तिसिद्धये पंचीकरणं निरूपयितुमाह

**तद्भोगाय पुनर्भोग्यभोगायतनजन्मने ॥**
**पंचीकरोति भगवान् प्रत्येकं वियदादिकम् ॥ २६ ॥**

**तद्भोगायेति** । भगवानैश्वर्यादिगुणषट्कसंपन्नः परमेश्वरः पुनः पुनरपि तद्भोगाय तेषां जीवानां भोगायैव भोग्यभोगायतनजन्मने भोगस्याऽन्नपानादेर्भोगायतनस्य जरायुजादिचतुर्विधशरीरजातस्य च जन्मन उत्पत्तये वियदादिकमाकाशादिभूतपंचकं प्रत्येकमेकैकस्य पंचीकरोति पंचात्मकं पंचात्मकं संपद्यमानं करोति ॥ २६ ॥

**अ० टीका**—नन्वेवमपि भोग्यभोगायतनाभावात्कथं भोक्तॄणां तत्सिद्धिरित्यत्राऽऽह—**तद्भोगायेति** । भगवानुक्तलक्षण ऐश्वर्यादिगुणषट्कविशिष्टः परमेश्वर इत्यर्थः । वियदादिकं तत्संबंध्यवशिष्टसांशपंचकमित्यार्थिकं पंचीकरोति । तत्तदात्मकत्वेनापंचात्मकमेव सद्वक्ष्यमाणरीत्या पंचात्मकत्वेन भासमानं तनोतीति यावत् । अपरमतनिराहितार्थम् ॥ २६ ॥

**रा० टीका**— कथमेकैकस्य पंचपंचात्मकत्वमित्यत आह—

**द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ॥**
**स्वस्वेतरद्वितीयांशैर्योजनात्पंच पंच ते ॥ २७ ॥**

**द्विधेति** । वियदादिकमेकैकं द्विधा द्विधा तंत्रेणोच्चारितो द्विधाशब्दो विधाय कृत्वा भागद्वयोपेतं कृत्वेत्यर्थः । पुनश्च पुनरपि प्रथमं प्रथमं भागं चतुर्धा भागचतुष्टयोपेतं विधायेत्यनु-

पज्यते । स्वस्वेतरद्वितीयांशैः स्वस्मात्स्वस्मादितरेषां चतुर्णां चतुर्णां भूतानां यो यो द्वितीयः स्थूलो भागस्तेन तेन सह प्रथमप्रथमभागांशानां चतुर्णां चतुर्णां मध्ये एकैकस्य योजनात्ते वियदादयः प्रत्येकं पंचपंचात्मका भवंति ॥ २७ ॥

**अ० टीका**—ननु व्योमादिपंचानां प्रत्येकं पंचात्मकत्वं स्वरूपाविनाशेऽपि कथं स्यादित्याशंक्य तत्प्रकारं प्रकटयति—**द्विधेति**। अत्रापि सूक्ष्मशरीरसामग्र्याद्युत्पत्ताविव माया वृत्त्यात्मकेश्वरसंकल्प एव निमित्तमनुवर्तते । एवं च सत्यसंकल्पः परमेश्वरः प्रोक्तसंकल्पमात्रेणैव । एकैकमाकाशादिकं भूतं द्विधा द्विप्रकारकम् । विधाय कृत्वा पुनः प्रथमं द्विधाकृताद्यभागं चतुर्धा विधाय । **स्वस्वेति** । स्वस्वशब्दिततत्तद्भिन्नभिन्नभूतसंबंधिद्वैधीकृतत्वप्रयुक्तावशिष्टद्वितीयभागैः सहेत्यर्थः । योजनात्संमेलनात्पंचापि ते महाभूतपदार्थाः । पंचऽऽकाशाद्यर्धभागात्तदितराष्टमभागेभ्यश्च हेतोराकाशाद्यभिधा भवंतीति संबंधः ॥ २७ ॥

**रा० टीका**—एवं पंचीकरणमभिधाय तैर्भूतैरुत्पाद्यं कार्यवर्गं दर्शयति—

**तैरंडस्तत्र भुवनं भोग्यभोगाश्रयोद्भवः ॥**
**हिरण्यगर्भः स्थूलेऽस्मिन्देहे वैश्वानरो भवेत्* ॥**
**तैजसा विश्वतां याता देवतिर्यङ्नरादयः ॥ २८ ॥**

**तैरंड इति** । तैः पंचीकृतैर्भूतैरुपादानकारणभूतैरंडो ब्रह्माण्ड उत्पद्यते । तत्र ब्रह्माण्डान्तर्भुवनान्युपरिभागे वर्तमाना भूम्यादयः सप्त लोका भूमेरधः स्थितान्यतलादीनि सप्त पातालान्तानि तेषु च भुवनेषु तैस्तैः प्राणिभिर्भोक्तुं योग्यान्यन्नादीनि तत्तल्लोकोचितशरीराणि च तैरेव पंचीकृतैर्भूतैरीश्वराज्ञया जायन्ते । एवं स्थूलशरीरोत्पत्तिमभिधाय तेषु स्थूलशरीरेष्वभिमानवतो हिरण्यगर्भस्य समष्टिरूपस्य वैश्वानरसंज्ञकत्वमेकैकस्थूलशरीराभिमानवतां व्यष्टिरूपाणां तैजसानां विश्वसंज्ञकत्वं च भवतीत्याह—**हिरण्यगर्भ इति** । अस्मिन्स्थूलदेहे वर्तमानो हिरण्यगर्भो वैश्वानरो भवेत् । तत्रैव वर्तमानास्तैजसा विश्वा भवंति । तेषामवांतरभेदमाह—**देवतिर्यगिति** ॥ २८ ॥

**अ० टीका**—तत्फलमाह—**तैरित्याद्यर्धेनैव** । अंडो ब्रह्मांडगोलकः । **भुवनेति** । चतुर्दशभुवनशब्दादिविषयांडजजरायुजस्वेदजोद्भिज्जाख्यदेहोत्पत्तिश्च भवतीत्यर्थः । ननु तमःप्रधानप्रकृतेरवशिष्टोत्पन्नपंचमहाभूतनिष्ठोक्ततमोंशमात्रभूतपंचकस्य । पंचीकरणविकारमात्रेण । कथमिंद्रियगम्यत्वमिति चेन्न । ऐंद्रजालिकपठितमंत्रवदीशकृतपंचीकरण एव तत्सामर्थ्यात् । एवं चातथाभूतलिंगशरीरादावनिंद्रियग्राह्यत्वेऽपि न क्षतिरिति सर्वमवदातम् । एवमर्धेन ब्रह्मांडोत्पत्तिमभिधाय समष्टिसूक्ष्मशरीरतादात्म्याभिमानेन हिरण्यगर्भतां प्राप्तस्येश्वरस्य निरुक्तसमष्टिस्थूलशरीरात्मकब्रह्मांडेऽपि प्राग्वदेव तादात्म्याभिमानेन विराडपरनामकवैश्वानरसंज्ञा भवतीत्याह—**हिरण्येत्यादिपूर्वार्धेन** । अत्राभवदित्येव साधुतरम् । यातेति तथैवानुपदमेव वक्ष्यमाणत्वाद्भवेदितिपाठस्य तु लेखकप्रमादजन्यत्वाच्च । नन्वेवं चेद्व्यष्टिलिंगाख्यसूक्ष्मशरीराभिमानिनां प्रागुक्ततैजसानामपि व्यष्टिस्थूलतत्तद्देहाभिमानप्रयुक्तं किंचित्संज्ञांतरं संज्ञाप्यमेवेत्यतस्तदाह—**तैजसा इति तृतीयपादेन** । तेषामवांतरभेदमाह—**देवेत्यादिचतुर्थचरणेन** । कर्मा-

* वैश्वानरोऽभवदित्यच्युतरायटीकानुरोधात्पाठः ।

नधिकारित्वसाम्येनैव देवग्रहणोत्तरं तिर्यग्ग्रहणं न तु सात्त्विकादितारतम्येन । तथात्वे देवमर्त्यगवादय इत्येव पाठापत्तेः । आदिपदेन विदेहप्रकृतिलयाः । तानसूत्रयद्भगवान्पतंजलिः—"भवप्रत्ययो विदेहप्रकृतिलयानाम्" इति । विवृतमिदं **नारायणतीर्थैः** अयमपि संप्रज्ञातो द्विविध उपायप्रत्ययो भवप्रत्ययश्च । तत्र मुमुक्षुभिर्हेयं भवप्रत्ययमाह भवेति । भूतेंद्रियाणामन्यतरदात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासितांतःकरणाः पिंडपातानंतरं भूतेंद्रियेषु लीना मांसशोणितत्वङ्मेदोस्थिमज्जारूपषाट्कौशिकदेहशून्या विदेहाः । एवमव्यक्तं महदहंकारपंचतन्मात्राणामन्यतमदात्मत्वेन प्रतिपन्नास्तदुपासनया प्रकृत्यादिकारणेषु लीनाः प्रकृतिलया इत्याद्युक्त्वा । अत एवोक्तं **वायुपुराणे**—"दश मन्वंतराणीह तिष्ठंत्यव्यक्तचिंतकाः । पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते" इति ॥ २८ ॥

**रा० टीका**—इदानीं तेषां विश्वसंज्ञां प्राप्तानां जीवानां तत्त्वज्ञानरहितत्वेन संसारापत्तिप्रकारं सदृष्टांतं श्लोकद्वयेनाऽऽह

**ते पराग्दर्शिनः प्रत्यक्तत्त्वबोधविवर्जिताः ॥**
**कुर्वते कर्म भोगाय कर्म कर्तुं च भुंजते ॥ २९ ॥**

**ते परागिति** । ते देवादयः पराग्दर्शिनो बाह्यानेव शब्दादीन्पश्यंति न तु प्रत्यगात्मानं "पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नांतरात्मन्" [ कठो० ४ १ ] इति श्रुतेः । ननु तार्किकादयो देहव्यतिरिक्तमात्मानं जानंतीत्याशंक्य यद्यप्यात्मानं ते जानंति तथापि श्रुतिसिद्धं तत्त्वं न जानंतीत्याशयेनोक्तमित्याह **प्रत्यगिति** । **कुर्वत इति** । अत एव भोगाय सुखाद्यनुभवाय मनुष्यादिशरीराण्यभिप्राय कर्म तत्तच्छरीरोचितानि कर्माणि कुर्वते । ( कर्मेति ) जातावेकवचनम् । पुनश्च कर्म कर्तुं देवादिशरीरैस्तत्तत्फलं भुंजते च । फलानुभवाभावे तत्तत्सजातीयेच्छानुपपत्त्या तत्तत्साधनानुष्ठानानुपपत्तेः ॥ २९ ॥

**अ० टी०** ननु किं ततस्तदाह **ते परागिति** । ते देवादयः । **परागिति** । "पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नांतरात्मन्" इति श्रुतेः । स्वयंभूः स्वयमात्मैव भूः सत्ता यस्य स परमात्मेत्यर्थः । खानींद्रियाणि । पराञ्चि पराग्बहिरञ्चंति प्रकाशयंतीति तथा । व्यतृणदकरोत् । पराग्बहिर्मुखमेव द्रष्टुं शीलं येषां ते तथेत्यर्थः । तत्र हेतुः **प्रत्यगिति** । अत एवं तेषां बहिर्मुखत्वेऽपि संसारः कथं संपद्यत इत्यत आह **कुर्वत इत्युत्तरार्धेन** । शब्दस्पर्शादिविषयोपभोगलालस्यादेव ते भोगाय कर्माग्निहोत्रादि कुर्वते तथा तत्कर्म सद्यस्तत्संस्कारा जन्मांतरे च कर्तुमेव । तान्विषयान्पत्न्यादिद्वारा भुंजत इत्यन्वयः ॥ २९ ॥

**नद्यां कीटा इवावर्तादावर्तांतरमाशु ते ॥**
**व्रजंतो जन्मनो जन्म लभंते नैव निर्वृतिम् ॥ ३० ॥**

**रा० टीका**—एवं वर्तमानास्ते जीवा नदीप्रवाहपतिताः कीटाश्चावर्तादावर्तांतरमाशु व्रजंतो यथा निर्वृतिं सुखं न लभंत एवमाशु जन्मनो जन्म व्रजंतः सुखं नैव लभंत इति ॥ ३० ॥

**अ० टी०**—ततस्तत्फलीभूतं संसारं सदृष्टांतं स्पष्टयति—**नद्यामिति** । निर्वृतिं पारमार्थिकं सुखम् ॥ ३० ॥

**रा० टीका**—एवं संसारापत्तिमभिधाय तन्निवृत्त्युपायं दर्शयितुं दृष्टांतं तावदाह—

**सत्कर्मपरिपाकात्ते करुणानिधिनोद्धृताः ॥**
**प्राप्य तीरतरुच्छायां विश्राम्यंति यथासुखम् ॥ ३१ ॥**

**सत्कर्मेति** । ते कीटाः सत्कर्मपरिपाकात्पूर्वोपार्जितपुण्यकर्मपरिपाकात्कृपालुना केनचित्पुरुषविशेषेणोद्धृता नदीप्रवाहाद्बहिर्निःसारिता संतस्तीरतरुच्छायां प्राप्य सुखं यथा भवति तथा यद्वद्विश्राम्यंति ॥ ३१ ॥

**अ० टीका**—नन्वेवं देवादीनामपि दुर्निगम्यात्कीटदृष्टांतेनेष्टानिष्टावियोगसंयोगजन्यदुःखैकफलकाज्जन्ममरणानंत्यलक्षणद्वैतभ्रांतिरूपात्संसारात्कदा निर्मुक्तिर्भवेदित्यत्र दृष्टांते तामादौ स्पष्टयति— **सत्कर्मेति** । इदं दार्ष्टांतिकेऽप्यग्रे योज्यम् । एवमत्र करुणानिधिनेति विशेषणे केनचित्पुंसेति शेषो बोध्यः ॥ ३१ ॥

**रा० टीका**—इदानीं दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति—

**उपदेशमवाप्यैवमाचार्यात्तत्त्वदर्शिनः ॥**
**पंचकोशविवेकेन लभंते निर्वृतिं पराम् ॥ ३२ ॥**

**उपदेशमिति** । एवमुक्तेन प्रकारेण पूर्वोपार्जितपुण्यकर्मपरिपाकवशादेव तत्त्वदर्शिनः प्रत्यगभिन्नब्रह्मसाक्षात्कारवत आचार्याद्गुरोः सकाशादुपदेशं तत्त्वमस्यादिवाक्यार्थज्ञानसाधनं श्रवणं वक्ष्यमाणमवाप्य संपाद्य पंचकोशविवेकेनान्नादीनां पंचानां कोशानां विवेकेन वक्ष्यमाणविवेचनेन परां निर्वृतिं मोक्षसुखं लभंते प्राप्नुवंति ॥ ३२ ॥

**अ०टी०**—अथ दार्ष्टांतिके तां प्रकटयति -**उपदेशमिति**। एवं निरुक्तकीटवदेव। प्राक्तनपद्यप्रथमपादस्त्वत्राप्यनुवर्तते। ते प्रकृता देवादिजीवाः। **सदिति** । अनंतजन्मसंचितसकलकाम्यनिषिद्धवैधुर्यपूर्वकांतर्याम्येकप्रीतिमत्यनुष्ठिततंत्रलेशमात्रामिश्रितश्रौतस्मार्तनित्यनैमित्तिकप्रायश्चित्ताख्यतत्तद्वर्णाश्रमाद्युचितस्वधर्मफलोन्मुखतारूपेश्वरप्रसादादित्यर्थः । **तत्त्वेति** । ब्रह्मनिष्ठवरिष्ठादिति यावत् । एतादृशात् । आचिनोति च शास्त्रार्थमित्यादिना **प्रागुक्तलक्षणात्सद्गुरोः** सकाशादित्यर्थः । उपदेशं विचारिततत्त्वमस्यादिमहावाक्यश्रवणम् । अवाप्य प्राप्य । **पंचेति** । व्यष्ट्याद्यन्नमयादिपदवाच्यस्थूलदेहादिलक्षणानां खड्गतंडुलादेरिवाद्वैतब्रह्मरूपप्रतीचः प्रच्छादकत्वाच्चर्मतुषविशेषादीनामिव त्रयाणां देहानां सत्तादिप्रदनिरुक्तरूपात्मनः सकाशात्पृथक्कारेणेति यावत् । परां कैवल्यरूपत्वेनोत्कटाम् । निर्वृतिमद्वैतात्मसुखस्थितिम् । लभंते प्राप्नुवंतीवेति संबंधः । तदाहुः **श्रीमद्वार्तिककारचरणाः**—" मत्यादिलक्ष्याज्ज्ञानोत्थासत्याद्यर्थनिषेधधी— । वर्त्मनैवाप्तमाप्नोति केवलाज्ञानहानतः । एवं ज्ञातं विजानाति विमुक्तश्च विमुच्यते । निवर्तते निवृत्तं च त्रिर्वः शपथयाम्यहम् " इति ॥ ३२ ॥

**रा० टीका**—के तेऽन्नादयः पंच कोशा इत्याकांक्षायां तानुपदिशति—

**अन्नं प्राणो मनो बुद्धिरानंदश्चेति पंच ते ॥**
**कोशास्तैरावृतः स्वात्मा विस्मृत्या संसृतिं व्रजेत् ॥ ३३ ॥**

**अन्नं प्राण इति** । अन्नं प्राणो मनो बुद्धिरानंदश्चेति पंच कोशाः । बुद्धिर्विज्ञानम् । तेषामन्नादीनां कोशशब्दाभिधेयत्वे कारणमाह—**तैरिति** । तैः कोशैरावृत आच्छादितः स्वात्मा स्वरूपभूत आत्मा विस्मृत्या स्वस्वरूपविस्मरणेन संसृतिं जननादिप्राप्तिरूपं संसारं व्रजेत् ।

स्पष्टम्। कोशो यथा कोशकारकृमेरावरकत्वेन क्लेशहेतुरेवमन्नादयोऽप्यद्वयानंदत्वाद्यावरकत्वेनाऽऽत्मनः क्लेशहेतुत्वात्कोशा इत्युच्यंत इत्यर्थः ॥ ३३ ॥

**अ० टी०** ननु के ते पंचकोशा इत्यतस्तानुद्दिशति **अन्नमित्यादिना**। नन्वन्नादिपदवाच्यस्थूलदेहादीनां कोशपदशक्यत्वे किं कारणमित्यत आह **तैरित्यादिना**। लोके खड्गादेरावरके चर्म विशेषादौ यथा कोशपदप्रवृत्तिस्तथा प्रकृतेऽपीत्याकूतम्। यथा वा कोशकारकृमिजन्योऽपि कोशस्तत्क्लेशकारणं तद्वर्त्मनिरोधाकाशादिकर्मणात्मजन्या अप्यन्नादयस्तद्दुःखहेतव इति कोशपदव्यपदेश्या इत्याशयः। ततः किमत आह **विस्मृत्येत्यादिना**। अत्र " स्वस्वरूपविस्मरणेन " इति **प्राचीनटीकाकृतो** व्याचख्युः। तत्र स्मृतेरनुभूतविषयाऽसंप्रमोषः स्मृतिः " इति **पतंजल्युक्तेः** " संस्कारजन्यं ज्ञानं स्मृतिः " इति **तार्किकोक्तेश्च** सर्वथाऽप्यनुभूतार्थविषयकसंस्कारजन्यपरोक्षांतःकरणवृत्तावेव स्मृतित्वपर्यवसाने तदभावरूपाया स्मृतिपदार्थस्य **शकुंतलायाः** कण्वाश्रमे गांधर्वविधिकृतपाणिग्रहणपूर्वकं विहितगर्भाधानादिविषयकविस्मरणस्य **दुष्यंते दुर्वासःशापान्महाभारतादि**प्रसिद्धस्य प्रकृते न वक्तुं युक्तत्वमेव। तस्यानुभवपूर्वकत्वनियमात्प्रत्यगभिन्नब्रह्मानुभवे तु द्वैतस्याखिलस्यापि बाधितत्वेन विस्मृतिसामग्र्या एवाभावाद्द**योगवासिष्ठ**प्रथमसर्गटीकाप्रसिद्ध**सनत्कुमारदत्तस्य विष्णु**प्रत्यग्ज्ञानोपगमशापस्य तथा तेन पुनः **स्कंद**रूपेण जन्मादिशापस्य चेश्वरलीला मात्रत्वेनानुदाहरणत्वाच्च। [illegible] संपादितस्याप्यद्वैतब्रह्मात्मसाक्षात्कारस्यापि जीवन्मुक्तिपक्षे विस्मृतिसंभवेन [illegible] फल्यापत्तेः। तथाच सकलाद्वैत**शास्त्र**वैयर्थ्यापत्तेश्च। न **चार्जुनस्य श्रीकृष्णं** प्रति " नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत " इति वचन एव स्मृतित्वं ब्रह्मविद्यायां वदत्तद्विरोधिन्यामविद्यायां विस्मृतित्वं व्यनक्तीति वाच्यम्। तत्रागत्या स्मृतिलंभे सर्वग्रंथीनां विप्रमोक्ष इति **छांदोग्यश्रुति**वदद्वैतसाक्षात्कार एव लाक्षणिकत्वात्प्रकृते तु पौरुषत्वेन तथा वक्तुमशक्यत्वात्तुष्यतु दुर्जन इति **न्यायेन** तदंगीकारेऽपि " कोशास्तैरावृतः स्वात्मा " इतिपूर्व**वाक्येन** संसृति अर्थादित्युत्तर**वाक्य**विहितजन्ममरणादिलक्षणविशेषात्मकसंसारस्य मूलकारणतायां आनंदमयाख्यपंचमकोशांतर्निविष्टमूलाविद्यायामेवाखंडापरिच्छिन्नानंदावरणकारिण्यामावृतपदेन कृतत्वेन स्फुटितत्वेन पौनरुक्त्यापत्तेश्च। नाप्य**श्वमेधपर्वो**क्तानुगीताकथनान्यथानुपपत्तितोऽर्जुनस्य **भीष्मपर्वोक्त**ब्रह्मविस्मृतिवत्प्रकृतेऽस्मदादेरपि तत्संभव इति सांप्रतम्। तस्याद्वैतब्रह्मविद्याया दौर्लभ्यमात्राभिप्रायकत्वेन निरुक्तशास्त्रवैयर्थ्यादिन्यायसिद्धार्थबाधकत्वासामर्थ्यात। तस्मात्किमत्र विस्मृतिपदस्यारस्यमिति चेदुच्यते। नवमे मासि सर्वांगसंपूर्णो भवति " मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नानायोनिसहस्राणि मयोषितानि यानि वै। आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा। अवाङ्मुखः पीड्यमानो जंतुश्चैव समन्वितः। सांख्यं योगं समभ्यस्येत्पुरुषं वा पंचविंशकम् " इति। ततश्च दशमे मासि प्रजायते " जातश्च वायुना स्पृष्टस्तत्र स्मरति " इति निरुक्तम्। जंतुरिति जंतुर्भिरित्यर्थः। यतः समन्वितोऽतः पीड्यमानश्चावाङ्मुख एव सन्नहमितो विमुक्तः स्यां चेत्सांख्यं ब्रह्मविचारपूर्वकं योगं चित्तवृत्तिनिरोधं समभ्यस्य वेति निश्चयेन। पंचविंशकम्। ज्ञानेंद्रियकर्मेंद्रियप्राणशब्दादिपंचकचतुष्टयांतःकरणाविद्याकामकर्माख्यकल्पितचतुर्विंशतितत्त्वापेक्षया तत्साक्षिभूतं पंचविंशकं पुरुषमित ए-

प्यामीति प्रतिजानीत इत्यर्थः । एवं कदाचिद्गर्भवासविशेषे संजातामपि विवेकादिसामग्री-कृतप्रतिज्ञा बाह्यवायुस्पर्शाज्जीवो यद्वि... न तया विस्मृत्या संसृतिं संसारं व्रजेत्प्राप्नुयादित्येव **श्रीमद्विद्यारण्य**गुरुचरणानामभिमतमिति ... भाति ॥ ३३ ॥

**रा० टीका**—तेषां कोशानां स्वरूपाणि क्रमेण व्युत्पादयति—

**स्यात्पंचीकृतभूतोत्थो देहः स्थूलोऽन्नसंज्ञकः ॥**
**लिंगे तु राजसैः प्राणैः प्राणः कर्मेंद्रियैः सह ॥ ३४ ॥**

**स्यात्पंचीकृतेत्यादिना मोदाद्वृत्तिभिरित्यंतेन** सार्धश्लोकद्वयेन । पंचीकृतेभ्यो भूतेभ्य उत्पन्नः स्थूलो देहोऽन्नसंज्ञकोऽन्नमयशब्दितः कोशः स्यात् । प्राणस्तु प्राणमयकोशस्तु लिंग-शरीरे वर्तमानैः राजसैः रजोगुणकार्यभूतैः प्राणैः प्राणापानादिभिर्वायुभिः पंचभिर्वागादिभिः कर्मे-न्द्रियैः सह दशभिः स्यात् ॥ ३४ ॥

**अ० टी०**—ननु भवत्वेवं गर्भवासविशेषे संजाताया अपि दैवाद्विवेकादिसामग्र्यास्त-था तत्र कृतसांख्ययोगाभ्यामिन ब्रह्मप्राप्तिसंपादनप्रतिज्ञाया अपि विषयिजनसंसृष्टबाह्यवायुसं-स्पर्शमात्रेण विस्मृत्याऽशनायादिजन्यशोकादिलक्षणसंसृतिः परंतु सर्वमिदमन्नमयाद्युक्तकोशपंच-कावरणप्रयुक्तमेवेति तु निर्विवादमेव तेऽपि किं प्रागुक्तजाग्रदादिप्रयोजकस्थूलादिदेहत्रयादन्ये किं वा तद्रूपा एव । नाऽऽद्योऽनुपलब्धेः । नाप्यंत्यः । त्रित्वपंचत्वयोर्यथासंख्यत्वाभावादित्या-शंक्य समाधत्ते—**स्यादित्यादिसार्धद्वयेन** । **अन्नेति** । " स वा एष पुरुषोऽन्नरसमयः " इति श्रुतेः " पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्धते । देहः सोऽन्नमयः " इति **वक्ष्यमाणको-शविवेकोक्त**तद्विवृत्तेश्च पूर्वपद्योक्तान्नाभिधः प्रथमः कोश इत्यर्थः । अथ सूक्ष्माख्यलिंगशरीरे प्राणमयादिकोशत्रयांतर्भावं स्पष्टयति—**लिंगे त्वित्यादिसार्धेन** । पूर्ववैलक्षण्यार्थस्तुशब्दः । राजसैः प्रागुक्ताकाशादिरजोगुणसंबकार्यैरित्यर्थः । तथा तद्व्यस्तरजःकार्यैः कर्मेंद्रियैः सह प्राणः प्राणमयकोशो लिंग एतन्नामके सूक्ष्मशरीरेऽस्तीति संबंधः ॥ ३४ ॥

**सात्त्विकैर्धींद्रियैः साकं विमर्शात्मा मनोमयः ॥**
**तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका ॥ ३५ ॥**

**रा० टीका**—विमर्शात्मा संशयात्मकं पंचभूतसत्त्वकार्यं यन्मन उक्तं तत्सात्त्विकैः प्रत्येकं भूतसत्त्वकार्यभूतैर्धींद्रियैः श्रोत्रादिभिः पंचभिर्ज्ञानेंद्रियैः साकं सहितं मनोमयः कोशः स्यादिति पूर्वेण संबंधः । निश्चयात्मिका धीस्तेषामेव सत्त्वकार्यरूपा बुद्धिस्तैरेव पूर्वोक्तैर्ज्ञानेंद्रि-यैरेव साकं सहिता सती विज्ञानमयो विज्ञानमयाख्यः कोशः स्यात् ॥ ३५ ॥

**अ० टी०**—सात्त्विकैः प्रागुक्ताकाशादिव्यस्तसत्त्वगुणकार्यैः । एतादृशैर्धींद्रियैर्ज्ञानेंद्रि-यैः । विमर्शात्मा संकल्पविकल्पात्मकविचारस्वरूपः । मनोमयः कोशः । तथा तैरेव निरुक्त-ज्ञानेंद्रियैरेव साकं निश्चयात्मिका धीश्च विज्ञानमयः कोशोऽपि लिंगेऽस्तीति पूर्वेणान्वयः । इह ज्ञानेंद्रियाणां मनोमयविज्ञानमयकोशद्वयेऽपि संनिवेशस्तु तेषामपि संशयनिश्चयोभयविधवृत्ति-दृष्टेरेवेति भावः ॥ ३५ ॥

**कारणे सत्त्वमानंदमयो मोदादिवृत्तिभिः ॥**
**तत्तत्कोशैस्तु तादात्म्यादात्मा तत्तन्मयो भवेत् ॥ ३६ ॥**

**रा० टीका**—कारणे कारणशरीरभूतायामविद्यायां यन्मलिनसत्त्वमस्ति तन्मोदादि-

वृत्तिभिः प्रियमोदप्रमोदाख्यैरिष्टदर्शनलाभभोगजन्यैः सुखविशेषैः सहितमानंदमय आनंदमयाख्यः कोशः स्यादिति । ननु स्थूलशरीरादीनामन्नमयादिशब्दवाच्यत्वे "स वा एष पुरुषोऽन्नरसमयः" [ तैत्ति० २-१-१ ] इत्युपक्रम्य "तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः" [ तैत्ति० २-२-१ ] "अन्योऽन्तर आत्मा मनोमयः" [ तैत्ति० २-३-१ ] इत्यादिश्रुतत्वादात्मनोऽन्नमयादिशब्दवाच्यत्वं कथमुच्यत इत्याशंक्य देहादीनामन्नादिविकारत्वेनान्नमयादिशब्दवाच्यत्वमात्मनस्तु तेन तेन कोशेन तादात्म्याभिमानादित्याह— **तत्त-दिति** । आत्मा प्रत्यगात्मा तत्तत्कोशस्थेन तेन कोशेन सह तादात्म्यात्तादात्म्याभिमानात्तत्तन्मयस्तत्तत्कोशमयः स्याद्व्यवहारकालेऽन्नमयादिकोशप्राधान्यादन्नमयादिशब्दवाच्य इत्यर्थः । तुशब्दश्चाऽऽत्मनः कोशेभ्यो वैलक्षण्यद्योतनार्थः ॥ ३६ ॥

**अ० टी०** कारणशरीरं त्वानंदमयकोश एवेत्याह **कारण इत्यर्धेन । मोदादीति** । इष्टवस्तुदृष्टिलाभसंभोगजन्यप्रियमोदप्रमोदादिजाग्रदादिकालिकवृत्तिभिः सह सत्त्वमपि सत्त्वगुणप्राधान्यमपि तथा कारणे सुषुप्तिकालिकतत्तद्गुणाकारपरिणतमूलाविद्यात्मकजाग्रदादिकारणशरीरावच्छेदे नाज्ञानात्मसुखविषयकाविद्यावृत्तिभिश्चाऽऽनंदमयोऽस्मीति योऽयम् । नन्वस्त्वेवं देहत्रये स्थूलादिलक्षणेऽन्नमयादिपंचकोशांतर्भावस्तथाऽप्यात्मनः "स वा एष पुरुषोऽन्नरसमयः । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । मनोमयः । विज्ञानमयः । आनंदमयः " इति च श्रुत्युक्तं तत्तत्कोशमयत्वं तेषां ब्रावरकत्वं च कथमित्याशंक्योभयमपि निदर्शितश्रौतमयट्सूचिततादात्म्याध्यासादेवोपपद्यत इति समाधत्ते **तत्तादित्यार्धेन** ॥ ३६ ॥

**रा० टीका**—कथं तर्ह्येवंविधस्याऽऽत्मनो ब्रह्मत्वं भवतीत्याशंक्य कोशेभ्यो विवेचनाद्भवतीत्याह—

**अन्वयव्यतिरेकाभ्यां पंचकोशविवेकतः ॥**
**स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रपद्यते ॥ ३७ ॥**

**अन्वयेति** । अन्वयव्यतिरेकाभ्यां वक्ष्यमाणाभ्याम् । पंचकोशविवेकतः पंचानां कोशानामन्नमयादीनां विवेकतः प्रत्यगात्मनो विवेचनेन पृथक्करणेन । यद्वा पंचकोशेभ्योऽन्नमयादिभ्य आत्मनः पृथक्करणेन । स्वात्मनं प्रत्यगात्मानं ततस्तेभ्यः कोशेभ्य उद्धृत्य बुद्ध्या निष्कृष्य चिदानंदस्वरूपं निश्चित्य परं ब्रह्म पूर्वोक्तलक्षणं प्रपद्यते प्राप्नोति । ब्रह्मैव भवतीत्यर्थः ॥३७॥

**अ० टी०** ननु निरुक्तकोशैः सहाऽऽत्मनस्तादात्म्याध्यासेनानाद्यविद्याकृतेन जन्ममरणप्रवाहरूपानंतद्वैतावभासलक्षणसंसारसंभवेऽपि सकलदृश्यबाधकतदधिष्ठानत्वोपलक्षितदृङ्मात्रब्रह्मात्मैक्यविषयकस्वस्वशाखागतविचारितवेदांतमहावाक्यैककरणकाप्रतिबद्धापरोक्षप्रमोदयसमकालतन्मात्राश्रयविषयकाविद्यातत्कार्याध्यासादिद्वैतबाध एव तन्निवृत्तिरूपमुक्त्युपाय इत्यद्वैतशास्त्रसिद्धांतः स च बोधस्तावत "इयमात्मा परानंदः" इत्यादावधस्तात्सूचित एव तथाच किमनेनाऽऽम्रेडितत्वाधायकेन पुनस्तद्व्युत्पादनग्रंथेनेति चेत्सत्यम । उत्तमाधिकारिणस्तावन्मात्रेण कार्यसिद्धावपि मध्यमादेरनुग्राहकत्वेनोत्तरग्रंथसार्थक्यात्संक्षेपविस्तराभ्यां हि शास्त्रस्य प्रवृत्तिरिति **न्याया-च्चे**त्याशयेन प्राक्सूचितबोधस्यैव विस्तरलक्षणविवरणं चिकीर्षुरत्र प्राण इत्यादिनाऽन्नमयादिकोशपंचकविरचितावरण एव संसृतिहेतुत्वोक्तेस्ततः सकाशादन्वयव्यतिरेकाभ्यामात्मनः पार्थक्यज्ञाने सति तन्निवृत्तिरिति मध्यमाद्यधिकारिणां तद्रीत्या तद्विवेके झटिति प्रवृत्तिसिद्ध्यर्थं "ब्र-

ह्मविदाप्नोति परम् " इति निरुपमहितैषिण्या **भगवत्या तैत्तिरीयकश्रुत्यैव** स्फुटितं निखिलद्वैतध्वस्तिपूर्वकाद्वैतसच्चिदानंदलक्षणब्रह्मस्थितिरूपमुक्तिमेवोक्तविवेकफलत्वेन कथयंस्तादृशाधिकारिणः प्रति प्रतिजानीते—**अन्वयेति** ॥ ३७ ॥

**रा० टीका**—इदानीं विवक्षितान्वयव्यतिरेकौ दर्शयति—

**अभाने स्थूलदेहस्य स्वप्ने यद्भानमात्मनः ॥**
**सोऽन्वयो व्यतिरेकस्तद्भानेऽन्यानवभासनम् ॥ ३८ ॥**

**अभान इति** । स्वप्ने स्वप्नावस्थायां स्थूलदेहस्यान्नमयकोशस्याभानेऽप्रतीतौ सत्यामात्मनः प्रतीचो यद्भानं स्वप्नसाक्षित्वेन यत्स्फुरणमस्ति स आत्मनोऽन्वयः । तस्यामेव स्वप्नावस्थायां तद्भाने तस्याऽऽत्मनः स्फुरणे सत्यन्यानवभासनमन्यस्य स्थूलदेहस्यानवभासनमप्रतीतिर्व्यतिरेकः स्थूलदेहस्येति शेषः । अस्मिन्प्रकरणेऽन्वयव्यतिरेकशब्दाभ्यामनुवृत्तिव्यावृत्ती उच्येते ॥ ३८ ॥

**अ० टी०**—ननु कौ पुनरत्रान्वयव्यतिरेकौ याभ्यामनाद्यविद्याकृतपंचमहाभूतकार्यीभूतान्नमयादिपदवाच्यस्थूलशरीराद्यात्मकपंचकोशतादात्म्याध्यासादात्मनः समुद्धरणाव्यवहितोत्तरक्षण एव जीवस्य ब्रह्मप्रापणं वर्ण्यत इत्याशंक्याऽऽदौ स्थूलदेहाध्यासबाधार्थं जाग्रदवस्थां विहाय स्वप्ने तावदात्मनोऽन्वयपदविवक्षितमनुवर्तनं तथा स्थूलदेहस्य व्यतिरेकशब्दविवक्षितं व्यावर्तनं चाऽऽह—**अभान इति** । एवंचात्र सर्वत्रान्वयव्यतिरेकसामान्यलक्षणमनुवृत्तिव्यावृत्तिरूपमेव विवक्षितमिति पर्यवस्यति । तत्त्वनुचितम् । पूर्वश्लोकेऽन्वयेत्यादिना जीवकर्तृकान्वयादिप्रयोजकं पंचकोशविवेककरणकानाद्यविद्यापादिततत्तादात्म्याध्यासापादानकस्वात्मपृथक्करणक्षणाव्यवहितोत्तरक्षणिकब्रह्मप्रापणवर्णनाद्ब्रह्मलक्षणाऽन्यूनानतिरिक्तस्वरूपलक्षणकत्वमात्मन्यवश्यं वाच्यम् । तत्तु नैव घटेत । उक्तवक्ष्यमाणरीतिभ्यामात्मनः स्वप्नादावनुवृत्तत्वकथनाद्ब्रह्मणः शुद्धस्य तावत् "अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते । ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि " इति **श्रीमद्वार्तिककारचरणै**र्व्यावृत्त्याद्यखिलधर्मविधुराद्वैतचिन्मात्रतयैव लक्षितत्वात् । यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतमेति **श्रुतः** शोधितजीवब्रह्मार्थयोरन्यूनानतिरिक्तस्वरूपत्व एवैक्याहत्वाच्च । नन्वेकसत्त्वेऽपि द्वयं नास्तीतिन्यायेनाऽऽहवनीये जुहोतीति श्रुतिविहितहोमस्य लौकिकाग्नावृद्धीप्ताग्नित्वसत्त्वेऽप्याहवनीयपदाभिहिताधानादिसंस्कारविशेषवत्वाभावेन व्युदासवदात्मन्यनुवृत्तत्वसत्त्वेपि व्यावृत्तिविशिष्टानुवृत्त्यभावेन ब्रह्मभवनयोग्यतायाः समुचितत्वमेवेति चेन्न । निरुक्त**वार्तिके** व्यावृत्त्यनुगत्त्युभयाभावसमुच्चयस्याविवक्षितत्वात्तथात्वे त्वव्यावृत्तेत्याद्यनन्वैव व्यावृत्तं चानुगतं चानयोः समाहारो व्यावृत्तानुगतमेतादृशं यन्न भवतीत्यव्यावृत्तानुगतमिति प्रयोगतश्चारिताथ्येऽव्यावृत्ताननुगतमिति नैवप्रयुक्तं स्यात्तस्माद्व्यावृत्त्यनुवृत्त्याद्यखिलधर्माभावोपलक्षितचिन्मात्राद्वैतवस्तुन एव तत्र ब्रह्मपदार्थस्तथा ममापि जाग्रदादिसमाध्यंतनिखिलावस्थानुवृत्त्युपलक्षितप्रत्यक्चिन्मात्र एवाऽऽत्मपदार्थोऽस्तु ब्रह्मैक्ययोग्य इति वाच्यम् । तथात्वेऽभाने स्थूलदेहस्येत्यादिना स्वप्नाद्यवस्थात्रये स्थूलादिदेहत्रयाभानलक्षणस्तद्व्यतिरेकस्तथा तत्राऽऽत्मनो भानलक्षणोऽन्वयश्च देहत्रयात्मकपंचकोशतादात्म्याध्यासबाधफलकः किमिति कथनीयः स्यादहं ब्राह्मणो जाग्रदादिमान्प्राणादिमानात्माऽस्मीत्येतावतैव ब्राह्मणत्वाद्यखिलधर्मोपलक्षितचिन्मात्रप्रत्यगात्मवस्तुनः सकलावस्थादिवि-

लक्षणस्य सिद्धिसंभवात् । तस्मात्किमत्र श्रीमद्विद्यारण्याचार्यचरणतात्पर्यमिति चेच्छृण्वत्राऽऽकूतम् । शब्दस्पर्शादयो वेद्या इत्यादिना प्राग्यथा सर्वसाक्षित्वोपलक्षितचिन्मात्रस्य शोधिततत्पदार्थस्येयमात्मा परानंद इत्यादिना शोधितत्वंपदार्थेन महाभेदकथनार्थमुपायविशेषः कृतः संक्षेपतस्तथेह व्यतिहारेणाऽऽत्यंतिकाद्वैतप्रत्यगात्मप्रबोधदार्ढ्यार्थं शोधितत्वंपदार्थस्यैवानुवृत्त्या तद्ध्यस्ततादात्म्यापन्नदेहादेस्ततो व्यावृत्त्या च केवलं विवेचनमात्रोपायीभूतयाऽनंतानंदसत्ताभिन्नप्रत्यक्चिन्मात्रवस्तुनस्तादृक्शोधिततत्पदार्थीभूतब्रह्मभवनार्थं कथ्यत इति सर्वं सुरसमेवेति दिक् ॥ ३८ ॥

**रा० टीका**—एवं स्थूलदेहस्यानात्मत्वावबोधकान्वयव्यतिरेकौ दर्शयित्वा लिंगदेहस्य तथात्वावगमकौ तौ दर्शयति—

**लिंगाभाने सुषुप्तौ स्यादात्मनो भानमन्वयः ॥**
**व्यतिरेकस्तु तद्भाने लिंगस्याभानमुच्यते ॥ ३९ ॥**

**लिंगेति** । सुषुप्तौ सुषुप्त्यवस्थायां लिंगाभाने लिंगस्य सूक्ष्मदेहस्याभानेऽप्रतीतावात्मनो भानं तदवस्थासाक्षित्वेन स्फुरणमात्मनोऽन्वयः स्यात् । तद्भान आत्मभाने लिंगस्याभानं लिंगदेहस्यास्फुरणं व्यतिरेक उच्यते ॥ ३९ ॥

**अ० टीका**—एवं स्वप्ने तावदात्मनोऽन्वयं तत्साक्षित्वेन भानलक्षणं स्थूलदेहस्यान्नमयकोशात्मनो जाग्रदवस्थाच्छिन्नस्य व्यतिरेकं चोक्त्वा क्रमप्राप्तत्वात्सुषुप्तावप्यात्मनो भानरूपमन्वयं प्राणमनोविज्ञानमयाख्यत्रिकोशात्मकलिंगशरीरस्याभानलक्षणं व्यतिरेकं च संक्षिपति—**लिंगेति** ॥ ३९ ॥

**रा० टी०**—ननु पंचकोशविवेचनमुपक्रम्य लिंगदेहविवेचनं प्रकृतासंगतमित्याशंक्य प्राणमयादिकोशत्रितयस्य तत्रैवांतर्भावान्न प्रकृतासंगतिरित्याह—

**तद्विवेकाद्विविक्ताः स्युः कोशाः प्राणमनोधियः ॥**
**ते हि तत्र गुणावस्थाभेदमात्रात्पृथक्कृताः ॥ ४० ॥**

**तद्विवेकादिति** । तस्य लिंगशरीरस्य विवेकाद्विवेचनात्प्राणमनोधिय एतन्नामकाः **कोशा** विविक्ता आत्मनः पृथक्कृताः स्युः । कुत इत्यत आह **ते हीति** । हि यस्मात्कारणात्ते प्राणमयादयस्तत्र तस्मिँल्लिंगशरीरे गुणावस्थाभेदमात्राद्गुणयोः सत्त्वरजसोरवस्थाभेदमात्राद्गुणप्रधानभावेनावस्थाविशेषादेव पृथक्कृता भेदेन निर्दिष्टा इत्यर्थः ॥ ४० ॥

**अ० टी०**—तत्फलमाह—**तदिति** । तस्य लिंगशरीरस्य विवेकान्निरुक्तान्वयादिनाऽऽत्मनः पृथक्त्वारक्षणावच्छेदेनैव स्वतःसत्ताराहित्यलक्षणमिथ्यात्वप्रथनादित्यर्थः । **प्राणेति** । एतन्मयनामकाः । कोशा विविक्ताः प्रोक्तमिथ्यात्वमानीताः स्युरिति यावत् । नन्वेकस्य लिंगशरीरस्य विवेचनमात्रेण त्रयाणां तेषां कथं तथात्वमित्यत आह—**ते हीति** । हिर्हेतौ यतः कारणात्ते प्राणमयादयस्त्रयः कोशाः । तत्र लिंगशरीरे । **गुणेति** । गुणयो रजःसत्त्वयोर्योऽवस्थाभेदः प्रागुक्त आकाशादिसूक्ष्मपंचमहाभूतसमस्तरजोंशैः प्राणस्तद्व्यस्तैः कर्मेंद्रियाणि चेति प्राणमयः । तथा तेषां समस्तैः सात्त्विकांशैः संशयात्मकमनस्तादृशव्यस्तैस्तैः पंचज्ञानेंद्रियाणि चेति मनोमयः । एवं निश्चयात्मकः समस्तैस्तैर्बुद्धिर्व्यस्तैश्च तैस्तादृशान्येव ज्ञानेंद्रियाणि चेति विज्ञानमय इति पृथग्भावस्तस्माद्धेतोरेवेत्यर्थः । पृथक्कृताः संतीति संबंधः ॥ ४० ॥

**रा० टीका**—इदानीमानंदमयकोशत्वेन विवक्षितस्य कारणशरीरस्य विवेचनोपायमाह—

**सुषुप्त्यभाने भानं तु समाधावात्मनोऽन्वयः ॥**
**व्यतिरेकस्त्वात्मभाने सुषुप्त्यनवभासनम् ॥ ४१ ॥**

**सुषुप्तीति ।** समाधौ वक्ष्यमाणलक्षणायां समाध्यवस्थायां सुषुप्त्यभाने सुषुप्तिशब्दोपलक्षितस्य कारणदेहरूपस्याज्ञानस्याप्रतीतौ । आत्मनस्तु तुशब्दोऽवधारणे आत्मन एव भानं स्फुरणं यदस्ति स आत्मनोऽन्वयः । आत्मभाने आत्मनः स्फूर्तौ सत्यां सुषुप्त्यनवभासनं सुषुप्त्युपलक्षितस्याज्ञानस्याप्रतीतिरेव व्यतिरेकस्तस्येति । अत्रायं प्रयोगः । प्रत्यगात्माऽन्नमयादिभ्यो भिद्यते तेषु परस्परं व्यावर्त्यमानेष्वपि स्वयमव्यावृत्तत्वात् । यद्येषु व्यावर्त्यमानेष्वपि न व्यावर्तते तत्तेभ्यो भिद्यते । यथा कुसुमेभ्यः सूत्रं यथा वा खंडादिव्यक्तिभ्यो गोत्वमिति ॥ ४१ ॥

**अ० टीका** एवं समाधौ सुषुप्त्यभानेऽप्यात्मनो भानरूपमन्वयं सुषुप्तेरभानरूपं व्यतिरेकं चाऽऽह—**सुषुप्तीति** । समाधिस्तु " लीने पूर्वविकल्पे तु यावदन्यस्य नोदयः । निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते " इत्यादि**शास्त्रादि**सुप्रसिद्ध एवेति भावः ॥ ४१ ॥

**रा० टीका** — अन्वयव्यतिरेकाभ्यां कोशपंचकाद्विविक्तस्याऽऽत्मनो ब्रह्मप्राप्तिर्भवतीत्युक्तं तत्प्रतिपादिकाम् " अंगुष्ठमात्रः पुरुषोंऽतरात्मा " [ कठ० ६।१७ ] इत्यादिकां " तं विद्याच्छुक्रममृतम् " [ कठ० ६-१७ ] इत्यंतां कठश्रुतिमर्थतः पठति—

**यथा मुंजादिषीकैवमात्मा युक्त्या समुद्धृतः ॥**
**शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ ४२ ॥**

**यथेति ।** यथा येन प्रकारेण मुंजात्तन्नामकात्तृणविशेषादिषीका गर्भस्थं कोमलं तृणं युक्त्या बहिरावरकत्वेन स्थितानां स्थूलपत्राणां विभजनलक्षणोपायेन समुद्ध्रियत एवमात्माऽपि युक्त्याऽन्वयव्यतिरेकलक्षणोपायेन शरीरत्रितयात्पूर्वोक्ताच्छरीरत्रितयाद्धीर्ब्रह्मचर्यादिसाधनसंपन्नैरधिकारिभिः समुद्धृतः पृथक्कृतश्चेत्स परं ब्रह्मैव जायते चिदानंदरूपत्वस्य लक्षणस्योभयोरविशिष्टत्वादित्यभिप्रायः ॥ ४२ ॥

**अ० टी०**—एवं देहत्रयात्मकपंचकोशविवेकेन ब्रह्मप्राप्तौ किं मानमित्यपेक्षायां " अंगुष्ठमात्रः पुरुषोंऽतरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम् " इति**श्रुति**मेवार्थतः संग्रथयति **यथेति** । मुंजात्तृणविशेषात् । इषीका तत्स्थूलपत्रपृथक्कारेणेषीकाख्या तत्कोमलशलाका यथा मौंजीकारकैर्निष्काश्यत एवमित्यन्वयः । अंगुष्ठमात्रो हृदयस्थमनोवच्छेदादित्यर्थः । प्रवृहेद्विवेचयेदिति यावत् ॥ ४२ ॥

**रा० टीका**—एतावता ग्रंथसंदर्भेण सफलस्य तत्त्वज्ञानस्य निरूपितत्वादुत्तरग्रंथभागस्यानारंभप्रसंग इत्याशंक्य तदारंभसिद्धये वृत्तानुकथनपूर्वकमुत्तरग्रंथस्य तात्पर्यमाह—

**परापरात्मनोरेवं युक्त्या संभाविनैकता ॥**
**तत्त्वमस्यादिवाक्यैः सा भागत्यागेन लक्ष्यते ॥ ४३ ॥**

**परापरेति ।** एवमुक्तप्रकारेण परापरात्मनोस्तत्त्वंपदार्थयोः परमात्मजीवात्मनोरेकताऽभिन्नता युक्त्या लक्षणसाम्यप्रदर्शनाद्युपायेन संभाविताऽर्गोकारिता सैकता तत्त्वमस्यादिवाक्यैः स्पष्टं भागत्यागेन विरुद्धांशपरित्यागेन लक्ष्यते लक्षणया वृत्त्या बोध्यते ॥ ४३ ॥

**अ० टी०**—ननु ततः किं प्रकृत इत्यत आह—**परापरेति**। एवमत्रं प्राण इत्यादिदशश्लोक्येत्यर्थः। परापरात्मनोम्नस्त्वंपदलक्ष्यत्वोपलक्षितचिन्मात्रयोरित्यर्थः। युक्त्याऽनुवृत्तव्यावृत्ताख्यपंचमान्वयव्यतिरेकलक्षतर्कविशेषणरूपयुक्त्येति यावत्। तदुक्तं **सिद्धांतबिंदौ**—"दृग्दृश्यान्वयव्यतिरेकः साक्षिसाक्ष्यान्वयव्यतिरेक आगमापायितदवध्यन्वयव्यतिरेको दुःखिपरप्रेमास्पदान्वयव्यतिरेकः" इति "अनुवृत्तव्यावृत्तान्वयव्यतिरेकोऽपि पंचमः" इति। एकता ऐक्यमभेद इत्यर्थः। संभाविता निरस्ता संभावनीकृतेति यावत्। ततः किं तत्राऽऽह—**तत्त्वेति**। सा एकता॥ ४३॥

**रा० टीका**—तत्त्वमसीति वाक्यार्थज्ञानस्य तदादिपदार्थज्ञानपूर्वकत्वात्तत्पदस्य वाच्यार्थं तावदाह

**जगतो यदुपादानं मायामादाय तामसीम्॥**
**निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा॥ ४४॥**

**जगत इति**। यत्सच्चिदानंदलक्षणं ब्रह्म तामसीं तमोगुणप्रधानां मायामादायोपाधित्वेन स्वीकृत्य जगतश्चराचरात्मकस्य कार्यवर्गस्योपादानमध्यासाधिष्ठानशुद्धसत्त्वां विशुद्धसत्त्वप्रधानां तामुपाधित्वेन स्वीकृत्य निमित्तमुपादानादभिन्नं कर्तृ भवति तद्ब्रह्म निमित्तोपादानोभयरूपं ब्रह्म तद्गिरा **तत्त्वमसीति**वाक्यस्थेन तत्पदेनोच्यते॥ ४४॥

**अ० टी०**—तत्प्रकारमेव कथयन्नादौ तच्छब्दशक्यार्थं कथयति **जगत इति**। तामसीं तमःप्रधानप्रकृतेरित्यादिना प्रागुक्तामित्यर्थः। आदायेत्युत्तरत्रापि योज्यम्। एवं च सत्त्वतमःप्रधानमायाशक्त्युपहितमद्वैतसच्चिदानंदं यद्ब्रह्म जगदभिन्ननिमित्तोपादानं तदेव तत्पदवाच्यमस्तीत्यर्थः॥ ४४॥

**रा० टीका**—त्वंपदवाच्यार्थमाह—

**यदा मलिनसत्त्वां तां कामकर्मादिदूषिताम्॥**
**आदत्ते तत्परं ब्रह्म त्वंपदेन तदोच्यते॥ ४५॥**

**यदेति**। तदेव ब्रह्म यदा यस्यामवस्थायां मलिनसत्त्वामीषद्रजस्तमोमिश्रणेन मलिनसत्त्वप्रधानाऽत एव कामकर्मादिदूषितां तामविद्याशब्दवाच्यां मायामादत्त उपाधित्वेन स्वीकरोति तदा त्वंपदेनोच्यते॥ ४५॥

**अ० टीका**—एवं त्वंपदवाच्यमपीश्वरवज्जीवं कथयति **यदेति**। तां प्रागुक्तां प्रकृत्यपराभिधां मायाम्। सत्त्वमालिन्ये हेतुः **कामेति**। आदिना संस्कारः "एवमयमनादिरनंतो नैसर्गिकोऽध्यासः" इति **श्रीमद्भगवत्पूज्यपाद**पादारविंदवचनादुक्तरूपमलिनसत्त्वप्रधानप्रकृतिभागविशेषलक्षणाविद्यासत्त्वे कामकर्मादिदोषसत्त्वं तत्सत्त्वे च तत्सत्त्वमित्यन्योन्याश्रयः पराकरणीयः। दृश्यपंचकाख्यजीवादिवद्बीजात्मनाऽप्यस्याखिलप्रपंचस्याप्यनादित्वादिति ध्येयम्। एवमनंतत्वमपि ब्रह्मज्ञानेतरानिरस्यत्वादेव॥ ४५॥

**रा० टीका—**एवं तत्त्वंपदार्थावभिधाय वाक्यार्थमाह

**त्रितयीमपि तां मुक्त्वा परस्परविरोधिनीम्॥**
**अखंडं सच्चिदानंदं महावाक्येन लक्ष्यते॥ ४६॥**

---

* तत्परमित्यत्र परमसत्यच्युत्पत्पाठः।

**त्रितयीमिति** । त्रितयीमपि त्रिप्रकारामपि तमःप्रधानविशुद्धसत्त्वप्रधानमलिनसत्त्वप्रधानत्वभेदेनोक्तामत एव परस्परविरोधिनीं तां मायां मुक्त्वा परित्यज्याखंडं भेदरहितं सच्चिदानंदं ब्रह्म महावाक्येन लक्ष्यत इत्युक्तम् ॥ ४६ ॥

**अ० टी०**—अथानयोरभेदस्य विरुद्धधर्मत्वेनासंभवाद्भागत्यागलक्षणया लक्ष्यार्थं कथयति—**त्रितयीमपीति** । तां मायाम् ॥ ४६ ॥

**रा० टीका**—नन्वेवं लक्षणावृत्त्या वाक्यार्थबोधनं क्व दृष्टमित्याशंक्याऽऽह—

**सोऽयमित्यादिवाक्येषु विरोधात्तदिदंतयोः ॥**
**त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा ॥ ४७ ॥**

**सोऽयमिति** । सोऽयं देवदत्त इत्यादिवाक्येषु तदिदंतयोस्तदेतद्देशकालवैशिष्ट्यलक्षणयोर्धर्मयोर्विरोधादैक्यानुपपत्तेर्भागयोर्विरुद्धांशयोस्त्यागेनैक आश्रयो देवदत्तस्वरूपमेकमेव यथा लक्ष्यते ॥ ४७ ॥

**अ० टी०**—ननु शोधिततत्त्वंपदार्थयोरुभयोरपि सच्चिदानंदवस्तुनः सर्वात्मनैकरसत्वलक्षणाखंडत्वाद्भवतु तस्याविरोधेन लक्ष्यत्वमथापि भवदभिमतभागत्यागलक्षणा लोके क्व दृष्टेत्याशंक्य सोऽयं देवदत्त इत्यादिवाक्येषु तद्दर्शनमुदाहरंस्तद्वाक्यमेव दृष्टांतीकरोति—**सोऽयमित्यादीति** । आश्रयस्तत्तेदंतालंबीभूतश्चेतनो देवदत्ताख्यः पिंड एवेत्यर्थः ॥ ४७ ॥

**रा० टीका**—एवं दृष्टांतमभिधाय दार्ष्टांतिकमाह—

**मायाविद्ये विहायैवमुपाधी परजीवयोः ॥**
**अखंडं सच्चिदानंदं परं ब्रह्मैव लक्ष्यते ॥ ४८ ॥**

**मायाविद्ये इति** । एवं सोऽयं देवदत्त इत्यादिवाक्ये यथा तद्वत्परजीवयोरुपाधी उपाधिभूते मायाविद्ये पूर्वोक्ते विहायाखंडं भेदरहितं सच्चिदानंदं परं ब्रह्मैव महावाक्येन लक्ष्यते ॥ ४८ ॥

**अ० टी०**—दार्ष्टांतिकं स्पष्टयति—**मायेति** ॥ ४८ ॥

**रा० टीका**—ननु किं महावाक्येन लक्ष्यं सविकल्पमुत निर्विकल्पमिति विकल्प्य प्रथमे पक्षे दोषमाह पूर्ववादी—

**सविकल्पस्य लक्ष्यत्वे लक्ष्यस्य स्यादवस्तुता ॥**
**निर्विकल्पस्य लक्ष्यत्वं न दृष्टं न च संभवि ॥ ४९ ॥**

**सविकल्पस्येति** । सविकल्पस्य विकल्पेन विपरीतत्वेन कल्पितेन नामजात्यादिना रूपेण सह वर्तत इति सविकल्पं तस्य लक्ष्यत्वे वाक्येन बोध्यत्वे लक्ष्यस्य वाक्यार्थतया लक्ष्यस्यावस्तुता स्यान्मिथ्यात्वं स्यात् । द्वितीये दोषमाह—**निर्विकल्पस्येति** । निर्विकल्पस्य नामजात्यादिना रहितस्य लक्ष्यत्वं न दृष्टं लोके न क्वापि दृष्टं न च संभव्युपपद्यमानमपि न भवति लक्ष्यत्वधर्मवतो निर्विकल्पत्वव्याघातादिति यावत् ॥ ४९ ॥

**अ० टीका**—एवमखिलवेदांतसिद्धमद्वैतसिद्धांतमनंतजन्मसंचितदुरितादेवासहमानस्तत्कालमेव तार्किकादिर्भेदवादी शंकते । यद्वा कश्चिन्मुमुक्षुः शिष्य एवेतःपरं महावाक्यार्थरहस्योपदेशोत्तरं ममेष्टशब्दादिलाभादिजन्यानंदसजातीय एव कश्चिल्लोकोत्तरस्त्रिपुट्या स्वादार्हः

कैवाल्याख्यः परमानंदः स्यादित्याशया स्थितः सन्नखंडं सच्चिदानंदं परं ब्रह्मैव लक्ष्यत इति- **श्रवणेन** तद्भंगादुक्तवस्तुनस्त्ववाङ्मनसगम्यत्वाच्चातुलव्याकुलमनाः शंकते **सविकल्पस्येति ।** " नन्वखंडं सच्चिदानंदं परं ब्रह्मैव लक्ष्यते " इत्युक्तमसंगतमिव प्रतिभाति । तथा हि । अ-खंडपदप्रतिपाद्यं तावद्देशकालवस्तुपरिच्छेदविधुरं तु वस्तु सर्वथा नैव संभवति । " शुको मुक्तो वामदेवो मुक्तः " इत्यादिश्रुतेः शुकादीनामद्वैतात्मज्ञानेन मुक्तावप्यस्मदादीनां प्रत्यक्षोपलब्ध-प्रपंचसत्त्वेन वस्तुपरिच्छेदानिरासात्कि तु स्वगतभेदरहितमेव । तथाचाऽऽकाशपरमाण्वादीनां यावन्निरवयववस्तूनां स्वगतभेदराहित्यादखंडत्वं जातिरेव । नित्यत्वे चैकत्वे च सत्यनेकानुगत-त्वात् । एवं सदादिनामपदमिति तु निर्विवादमेव । तथा च तेनैव शक्यत्वे कथं लक्ष्यत्वं कथं वाऽखंडत्वम् । किंचात्र महावाक्यलक्ष्यं किं लक्ष्यतावच्छेदकधर्माक्रांतत्वेन सविकल्पं ब्रह्म किंवा " निर्विकल्पमनंतं च हेतुदृष्टांतवर्जितम् । अप्रमेयमनादिं च यज्ज्ञात्वा मुच्यते बुधः " इत्यादिश्रुतेर्निर्विकल्पम् । नाऽऽद्यः । लक्ष्यस्य सविकल्पत्वेनावस्तुत्वरूपमिथ्यात्वात् । नाप्यं त्यः । अदृष्टचरत्वादित्याशयः ॥ ४९ ॥

**रा० टीका**—सिद्धांती जात्युत्तरत्वान्नेदं चोद्यमिति विकल्पपूर्वकं दोषमाह

**विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत् ॥**
**आद्ये व्याहतिरन्यत्रानवस्थात्माश्रयादयः ॥ ५० ॥**

**विकल्प इति ।** सविकल्पस्य ॥ निर्विकल्पस्य लक्ष्यत्वमिति वा यो विकल्पस्त्वया कृतः स किं निर्विकल्पस्योत सविकल्पस्य भवेत् । आद्ये प्रथमे पक्षे व्याहतिस्त्वयोक्तो व्या-घात एव । अन्यत्र द्वितीये पक्षेऽनवस्थादयः । तथाहि सविकल्पस्य विकल्प इत्यत्र विकल्पेन सह वर्तत इत्यत्र तृतीयांतविकल्पपदेन प्रथमांतविकल्पपदेन चैक एव विकल्पोऽभिधीयते । द्वौ वा एक एव चेत्स्वयमेक एव विकल्पाश्रयविशेषणतयाऽऽश्रयस्तदाश्रितो विकल्पश्चेत्त-दाऽऽत्माश्रयता द्वौ चेत्तदा तृतीयांतशब्दनिर्दिष्टस्यापि विकल्पस्य विकल्परूपत्वात्तदाश्रय-स्यापि सविकल्पत्वात्तद्विशेषणभूतो विकल्पः किं प्रथमांतशब्दनिर्दिष्ट एव विकल्प उत ता-भ्यामन्य आद्येऽन्योन्याश्रयता द्वितीयेऽपि धर्मिविशेषणीभूतो विकल्पः किं प्रथमांतशब्द-निर्दिष्ट उत तेभ्योऽन्य आद्ये चक्रकापत्तिर्द्वितीये तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थापा त इति ॥ ५० ॥

**अ० टीका**—ननु भवत्वेवं भावत्को विकल्पपूर्वकमाक्षेपः परंत्वद्वैतसिद्धांते शुद्ध-स्य ब्रह्मणः कथायां सर्वथाऽप्यप्रवेशः प्रवेशश्चेति मतद्वयं तत्रोभयत्राप्युक्तप्रश्नो नैव संभवती-ति सिद्धांती निरुक्तलक्ष्यत्वखंडनं प्रति खंडयन्विकल्पयति **विकल्प इति** । योऽयं " स विकल्पस्य लक्ष्यत्वे लक्ष्यस्य स्यादवस्तुता । निर्विकल्पस्य न लक्ष्यत्वं न दृष्टं न च संभवि " इति भवता मदुक्ते " अखंडं सच्चिदानंदं परं ब्रह्मैव लक्ष्यते " इत्यद्वैतब्रह्मणि लक्ष्यत्वे विषये प्रश्नमूलीभूतो विकल्पः कृतः शुद्धाद्वैतब्रह्मणः कथायां प्रवेश एव नास्तीति सविकल्पमेव ब्रह्म महावाक्यलक्ष्यं विशुद्धहीरकपरीक्षान्यायेन शबलब्रह्मज्ञानादेव मोक्ष इति प्रथममतमवलंब्य पू-र्वोर्धे प्रथमकोटिकस्तथा शुद्धमपि ब्रह्माद्वैतं कथायां संचरतीति द्वितीयमतमवलंब्योत्तरार्धे द्वि-तीयकोटिकश्च क्रमादस्ति । तदुद्देश्यं ब्रह्म किं निर्विकल्पं किंवा सविकल्पमिति पूर्वार्धेनिविष्टको-टिद्वयार्थः । तत्र प्रथमं प्रतिक्षिपति—**आद्य इत्यादिना** । निर्विकल्पं ब्रह्मोद्दिश्य मयाऽयं स-

विकल्पस्य लक्ष्यत्व इत्यादिश्लोकेन विकल्पस्य प्रश्नमूलको विकल्पः कृत इति वदत एवोपजीव्यविरोधलक्षणो मन्माता वंध्येत्यादिवद्व्याघातः स्यात् । स्वभावतो निर्विकल्पत्वेन त्रैकालिकविकल्पशून्यस्य विकल्पविषयत्वासंभवादित्यर्थः । एवमाद्यं प्रमद्योत्यं प्रत्याचष्टे—**अन्यत्वेत्यादिशेषेण** । यदि सविकल्पं ब्रह्मोद्दिश्यैव मामकोऽयं प्रश्नमूलीभूतो विकल्प इति ब्रूषे तर्हि त्वदुद्दिष्टं यस्य विकल्पं ब्रह्म तत्किं त्वत्कृतविकल्पेनैव सविकल्पं विकल्पांतरेण वा । आद्ये ब्रह्मणः प्रकृते त्वदुद्दिष्टस्य सविकल्पत्वसिध्यर्थं त्वत्कृतविकल्पापेक्षेति स्वस्य स्वापेक्षालक्षण आत्माश्रयः स्यात् । यथा **न्यायशास्त्रीय**प्रथमसूत्रे प्रमाणप्रमेयेत्यादिना प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इत्युक्तम् । तत्र तत्पदं भ्रमादिव्युदासार्थमिति तु निर्विवादमेव । तथा च तत्त्वज्ञानं प्रकृते प्रमात्मकमेव पर्यवसन्नम् । तच्च प्रमाणैककरणमिति सर्वसंमतम् । तच्च प्रमाणं स्वयमज्ञातं नैव प्रमां जनयितुमलं चक्षुषाऽहं सूर्यं जानामीत्यनुभवाद्व्याप्तिविशिष्टपक्षधर्मत्वेन ज्ञात एव पार्वतधूमादौ तन्निष्ठवह्न्यनुमितिकरणत्वाच्च । एवं च प्रमाणज्ञाने प्रमाणज्ञानापेक्षेति स्वस्य स्वापेक्षालक्षण आत्माश्रयः स्फुट एव तद्वत्प्रकृतेऽपि । यदि सविकल्पं ब्रह्मोद्दिश्यैवायं तल्लक्ष्यत्वविषयको मया विकल्पः कृतः परंतूद्दिष्टब्रह्मनिष्ठो विकल्पः प्रकृतमत्कृतविकल्पाद्भिन्न एवोद्देश्यतावच्छेदकधर्मलक्षणो ब्रह्मत्वादिरूपस्तथा च काऽऽत्माश्रय इति वदसि चेत्तर्हि निरुक्तोद्देश्यतावच्छेदकब्रह्मत्वरूपविकल्पसिद्धौ तेन विकल्पेन सविकल्पं ब्रह्मोद्दिश्य प्रकृतलक्ष्यत्वविकल्पसिद्धिः प्रकृतलक्ष्यत्वविकल्परूपविधेयविकल्पसिद्धौ च तन्निरूपितोद्देश्यतावच्छेदकीभूतब्रह्मत्वादिधर्मेण तत्र सविकल्पत्वसिद्धिरिति परम्परापेक्षालक्षणोऽन्योन्याश्रयः । यथा तत्रैव प्रमाणपदार्थसिद्धौ तत्करणकप्रमाविषयीभूतप्रमेयपदार्थसिद्धिः प्रमेयपदार्थसिद्धौ च तद्विषयकप्रमाकरणत्वेन प्रमाणपदार्थसिद्धिरिति स्पष्ट एवान्योन्याश्रयः । एवं प्रकृतेऽप्ययमां । यदि चैतद्भीत्याऽज्ञाते ब्रह्मणि विकल्पासंभवादज्ञातत्वलक्षणस्तृतीयो विकल्पो ब्रह्मणि स्वीक्रियते चेत्तर्हि ब्रह्मण्यज्ञातत्वसिद्धावुद्देश्यत्वसिद्धिरुद्देश्यत्वसिद्धौ च त्वत्कृतलक्ष्यत्वविकल्पसिद्धिस्त्वत्कृतलक्ष्यत्वविकल्पसिद्धौ च तदन्यथानुपपत्त्या तत्राज्ञातत्वसिद्धिरित्यादिचक्रकं परम्परात्रितयमापेक्षतालक्षणं स्यात् । यथा वा द्रव्यगुणकर्मसामान्यविशेषसमवायेत्यादौ किंनाम द्रव्यत्वमित्यपेक्षायां गुणादिमत्त्वं द्रव्यत्वमिति गुणादिमत्त्वेन द्रव्यत्वसिद्धिः केन संबंधेन गुणादिमत्त्वमित्याकांक्षायां समवायेनेति गुणादिमत्त्वसिद्धौ समवायसंबंधापेक्षा सोऽपि समवायः किमिति स्वीकार्य इति प्रश्ने समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयमिति **विश्वनाथपंचानन**वचनाद्द्रव्ये समवायिकारणत्वार्थमिति द्रव्यसिद्ध्यपेक्ष इति विशदमेव चक्रकम् । तद्वदिहापि भवेत् । एवं यद्येतन्निराकरणार्थं न केवलमज्ञातत्वमात्रेण ब्रह्मणि लक्ष्यत्वविकल्पविषयत्वं किंतु सविकल्पं ब्रह्म निर्विकल्पं ब्रह्मेति च शतशः शास्त्रश्रवणजन्यसंस्कारेणैवेति चतुर्थविकल्पाश्रयणेन व्यवस्था प्रथयसि चेत्तर्हि निरुक्तशास्त्रश्रवणादिजन्यसंस्काराख्यचतुर्थविकल्पविषयीभूतत्वमपि ब्रह्मणि निरुक्तशास्त्रश्रवणादिकारणीभूतजन्मांतरीयसंस्काराख्यविकल्पांतरेणैव वक्तव्यं तदपि तज्जन्मांतरीयसंस्काराख्यविकल्पांतरविषयत्वेनैवेति सर्वथा कारणशरीरपर्यवसानाभावरूपानवस्थैव दुर्निवारा प्रसज्जेत । यथा कार्यनियतपूर्ववृत्ति कारणमिति सामान्यतः कारणलक्षणे नियतपूर्ववृत्तित्वस्य घटं प्रति कपालादौ जन्य एव दृष्टत्वेन जन्यत्वलक्षणकार्यत्वावश्यकत्वेन तत्कारणीयनियत-

पूर्ववृत्तित्वापेक्षं तत्तदपि तत्कारणीयनियतपूर्ववृत्तित्वापेक्षमिति सुप्रथितैवानवस्था । तद्वदिहापि नासौ दंडखंडितेति सर्वं चतुरस्रमेव । न चैवमात्माश्रयादिदोषावमोषणमद्वैतिनामपि दुर्भणमेवेति वाच्यम् । तेषां व्यवहारे केवलं दोषाकरशेखरीभूता भगवती महामायैव दोषाकरमपि शेखरी कृत्य विभूषयिष्यत्येव तदा क्व कथाऽवांतरानंतदोषतृषाणाम् । तस्मात्प्रतिवादिना वा तत्त्वजिज्ञासुना वा भवता तावदद्वैतवादिनि जीवन्मुक्तचक्रवर्तिनि खंडनोक्तिसुदर्शनसंचारो नैव कार्यस्तस्यैतदाकरत्वात्किंतु भेदवादिष्वेव । न हि प्रचंडमार्तंडमंडले प्रद्योतते खद्योतोद्योतः स्वप्नेऽपीत्यतस्तच्चरणशरणतयैव स्वज्ञानावरणं निराकरणीयमित्याकूतम् ॥ ५० ॥

**रा० टीका**—न केवलमत्रैवेदं दूषणमपि तु सर्वत्रैवंविधविकल्पपूर्वकं दूषणं प्रसरतीत्याह—

**इदं गुणक्रियाजातिद्रव्यसंबंधवस्तुषु ॥**
**समं तेन स्वरूपस्य सर्वमेतदिर्तीष्यताम् ॥ ५१ ॥**

**इदमिति** । इदं विकल्पदूषणजातं गुणक्रियाजातिद्रव्यसंबंधवस्तुषु गुणादिसंबंधांतेषु पंचसु वस्तुषु समम् । तथाहि । गुणः किं निर्गुणे वर्ततेऽथवा गुणवति क्रियाऽपि क्रियारहिते वर्तते क्रियावति वा । आद्ये व्याघातोऽन्यत्राऽऽत्माश्रयादय इति सर्वत्र चैवमूह्यम् । नन्विदमसदुत्तरं चेत्किं सदुत्तरमित्याशंक्याऽऽह — **तेनेति** । तेनैवं विकल्पस्यासंगतत्वेनैतद्गुणादिकं सर्वं स्वरूपस्यैवेतीष्यतां गुणादयः सर्वे वस्तुस्वरूपे वर्तन्त इत्यभिप्रायः ॥ ५१ ॥

**अ० टीका**—एवं विकल्प्य दूषणं न केवलं त्वदुक्तविकल्प एव प्रसरति किंतु यावद्द्रव्यादिसंमतपदार्थेष्वपीत्याह **इदमिति** । किं गुणो निर्गुणे वर्तते गुणवति वेत्यादिविकल्पदूषणं प्राग्वदेव बोध्यम् । संबंधः समवायादिः किमसंबद्धे द्रव्ये तिष्ठति संबद्धे वेति च पूर्ववदेव । वस्तुपदं वैशेषिकसंमतविशेषाख्यपदार्थपरमेव । तथा च विशेषोऽपि किं निर्विशेषे नित्यद्रव्येऽस्ति सविशेषे वेत्यादि द्रष्टव्यम् । एवं च **तार्किकसंमत**पदभावपदार्थेष्वप्युक्तखंडनयुक्तिसंचारः सुलभ एवेति भावः । अभावखंडनं तु **मदीये द्वितयव्याख्यासंयेऽद्वैताभिव्यक्त्याख्ये** तद्व्याख्याने च प्रपंचितमेवेतीहोपरम्यते । फलितमाह **तेनेति** । एतत्सर्वं द्रव्यजालं स्वरूपस्य स्वात्मसत्ताप्रकाशसंबंध्येवेतीष्यता स्वीक्रियतामित्यर्थः । स्वात्माभिन्नसत्ताप्रकाशेनैव सत्तादिमदस्ति तत्पार्थक्ये तु मिथ्यैवेति भावः । एवं च सकलद्वैतेऽपि स्वतःसत्ताशून्यत्वं मिथ्यात्वमेव प्रथत इत्याशयः ॥ ५१ ॥

**रा० टीका**—भवत्वेवमन्यत्र प्रकृते किमायातमित्यत आह —

**विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि ॥**
**विकल्पितत्वलक्ष्यत्वसंबंधाद्यास्तु कल्पिताः ॥ ५२ ॥**

**विकल्पेति** । विकल्पतदभावाभ्यां विकल्पेन विकल्पाभावेन चासंस्पृष्टात्मवस्तुनि संस्पर्शरहिते परमात्मवस्तुनि विकल्पितत्वलक्ष्यत्वसंबंधाद्यास्तत्र विकल्पितत्वं नाम सविकल्पस्य वा निर्विकल्पस्य वेति पूर्वोक्तेन विपर्याकृतत्वं लक्ष्यत्वं लक्षणावृत्त्या ज्ञाप्यत्वं संबंधः संयोगादिः । आदिशब्देन द्रव्यादयो गृह्यंते । तुशब्दोऽवधारणे । तत्र द्रव्यं नाम गुणानामाश्रयो द्रव्यं समवायिकारणं द्रव्यमिति वा तार्किकैर्लक्षितं कर्मव्यतिरिक्तत्वे सति जातिमा-

त्राश्रयो गुणो नित्यमेकमनेकवृत्तिसामान्येन लक्षिता जातिः संयोगवियोगयोरसमवायिकारणजातीयं कर्मेति लक्षिता क्रिया । एवं स्वरूपे कल्पिता एवेत्यर्थः ॥ ९२ ॥

**अ० टीका**—ननु यद्येवं स्वात्मप्रकाशप्रकाश्यमेव तदेकायत्तसत्ताकमखिलमपि द्वैतजालं चेत्तर्हि दृग्दृश्ययोस्तयोः संबंधो भासकभावलक्षणः सत्यमिथ्योभयप्रतियोगिकत्वादुभयात्मक एवाधनारीश्वरसंबंधवद्वाच्यस्तथा चाऽऽशिकद्वैतापत्तिरित्याशंक्य समाधत्ते—**विकल्पेति** । विकल्पोऽऽत्राध्यासः । एवं चाध्यासद्ध्वंमाभ्यामित्यर्थः । **असंस्पृष्टेति** । उक्तं ह्यध्यासभाष्ये—" यत्र यदध्यस्तं तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते " इति । अत एव **विकल्पितत्वेति** । आद्यपदेनाधिष्ठानत्वम् । अत एवोक्तं **संक्षेपशारीरके**—" बहु निगद्य किमत्र वदामि वः शृणुत संग्रहमद्वयशासने । सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभाक् " इति ॥ ९२ ॥

**रा० टी**—एतावता ग्रंथसंदर्भेण किमुक्तं भवतीत्याकांक्षायां फलितमाह—

**इत्थं वाक्यैस्तदर्थानुसंधानं श्रवणं भवेत् ॥**
**युक्त्या संभावितत्वानुसंधानं मननं तु तत् ॥ ९३ ॥**

**इत्थमिति** । इत्थं **जगतो यदुपादान**मित्यादिग्रंथजातोक्तप्रकारेण वाक्यैस्तत्त्वमस्यादिवाक्यैस्तदर्थानुसंधानं तेषां वाक्यानामर्थस्य जीवब्रह्मणोरेकत्वलक्षणस्यानुसंधानं श्रवणं भवेत् । युक्त्या **शब्दस्पर्शादयो वेद्या** इत्यादिना **परापरात्मनोरेवं युक्त्या संभावितैकते**त्यंतेन ग्रंथसंदर्भेणोक्तप्रकारेण संभावितत्वानुसंधानं श्रुतस्यार्थस्योपपद्यमानत्वज्ञानं यदस्ति तत्तु मननमित्युच्यते ॥ ९३ ॥

**अ० टीका**—नन्वेवं सिद्धांतबोधः श्रवणाद्यंतरंगसाधनैर्विना नैव सिध्यतीत्यत "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इति**श्रुतिविहितानां** तेषां कानि स्वसंमतानि लक्षणानीत्याकांक्षायां तानि संक्षिपति—**इत्थमित्यादि**द्वाभ्यां क्रमेणैव । इत्थं निरुक्तरूपवस्तुप्रतिपादकैः । वाक्यैः सत्यज्ञानादिवेदांततद्व्याख्यातृ**श्रीमद्भगवदाद्याचार्य**वचनैरित्यर्थः । **तदित्यादि** । असंगाद्वैतचिन्मात्ररूपतत्प्रतिपाद्यानुसंधारणमित्येतत् । युक्तिरनुमानं सत्तर्काश्च ॥ ९३ ॥

**रा० टीका**—इदानीं निदिध्यासनमाह—

**ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत् ॥**
**एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ ९४ ॥**

**ताभ्यामिति** । ताभ्यां श्रवणमननाभ्यां निर्विचिकित्से निर्गता विचिकित्सा संशयो यस्मादसौ निर्विचिकित्सस्तस्मिन्नर्थे विषये स्थापितस्य धारणवतश्चेतसो देशसंबंधश्चित्तस्य धारणेति **पतंजलिनो**क्तत्वाद्यदेकतानत्वमेकाकारवृत्तिप्रवाहवत्त्वमेतन्निदिध्यासनमुच्यते । हि प्रसिद्धं **योगशास्त्रे** तत्र प्रत्ययैकतानता ध्यानमिति ॥ ९४ ॥

**अ० टीका**—**ताभ्यामिति** । ताभ्यामुक्तलक्षणश्रवणमननाभ्यामित्यर्थः । निर्विचिकित्से " विचिकित्सा तु संशयः " इत्य**मराद**संदिग्ध इति यावत् ॥ ९४ ॥

**रा० टीका**—तस्यैव निदिध्यासनस्य परिपाकदशारूपं समाधिमाह—

**ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् ॥**
**निवातदीपवच्चित्तं समाधिरभिधीयते ॥ ५५ ॥**

**ध्यातृध्याने इति** । निदिध्यासने तावद्ध्याता ध्यानं ध्येयं चेति त्रितयं भासते । तत्र यदा चित्तमभ्यासवशेन ध्यातृध्याने ध्यातारं ध्यानं च क्रमात्परित्यज्य ध्येयैकगोचरं ध्येयमेकमेव गोचरो विषयो यस्य तत्तथाविधं भवति तदा समाधिरित्युच्यते । तत्र दृष्टांतः— **निवातेति** । वायुरहिते प्रदेशे वर्तमानो दीपो यथा निश्चलो भवति तद्वदित्यर्थः ॥ ५५ ॥

**अ० टीका**—नन्वेवं सकलवेदांतवाक्यकारणकोपक्रमादिलिंगकतत्तात्पर्याविस्मरणलक्षणे श्रवणे तदनुकूललौकिकशास्त्रीयसत्तर्कानुगृहीतानुमित्यादिलक्षणयुक्तिकरणकतदसंभवनिराकरणाविस्मरणलक्षणे मनने च तेनैव संपन्ने ततस्ताभ्यामेवासंदिग्धे ब्रह्मात्मैक्यरूपे किंचित्पारोक्ष्यशालिन्यर्थे सुस्थिरीकृतचेतस्तदितराकारपरिणत्यभावपूर्वकतन्मात्राकारपरिणतिपरंपरालक्षणे निदिध्यासनेऽपि साधनादिविपरीतभावनापनोदिति सिद्धे किमग्रे संप्रज्ञातादिसमाधिसमभिधानप्रयोजनमिति चेत्सत्यम् । प्रकृते हि मंगलाचरणोत्तरं " तत्पादांबुरुहद्वंद्वसेवानिर्मलचेतसाम् । सुखबोधाय तत्त्वस्य विवेकोऽयं विधीयते " इत्यनेन केवलगुर्वभिन्नपरमेश्वरैकसमर्पितनिषिद्धादिरहितशुद्धवैदिकैकनित्यादिकर्मानुष्ठितिजनितविमलीकृतसावचेतस्कमुमुक्षुमात्रकरुणया तत्त्वविवेकारंभस्य कृतत्वात्कलिकालेऽस्मिन्नल्पायुषां मनुष्याणां हठादिसकलसामग्रीपूर्वकदीर्घकालफलकाष्टांगयोगकरणकदहरायुपासनानुष्ठानासंभवाच्च निर्मलेऽपि मुकुरतले जले वा सत्यतुल्यचंचले मुखादिप्रतिबिंबस्य यथावदकलनेन तन्न्यायेन ब्रह्मात्मैक्यानुभवार्थं स्वांतशुद्धिवत्तन्निरुद्धेरप्यावश्यकत्वान्नित्यानित्यवस्तुविवेकादिसमाध्यंतसाधनत्रयप्रयोज्यविशिष्टमुमुक्षाया अपि प्रागनुक्तत्वेन तत्संग्रहार्थमपि समाधिकथनस्यैवाऽऽवश्यकत्वाच्चेत्याशयेन " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः " इति चोदितश्रवणादिसिद्ध्यनंतरं समाधिमेव तत्फलत्वेन कथयति—**ध्यात्रिति** । समाधिरसंप्रज्ञात इत्यर्थः । एतेन पूर्वोक्तनिदिध्यासनकालिकैकतानत्वे ध्यानत्वं तथा क्रमादित्यत्र संप्रज्ञातसमाध्यभ्यासक्रमश्च ध्वन्यते ॥ ५५ ॥

**रा० टीका**—ननु समाधौ वृत्तीनामनुपलब्धौ ध्येयैकगोचरत्वमपि निश्चेतुं न शक्यत इत्याशंक्य वृत्तिसद्भावस्यानुमानगम्यत्वान्मैवमित्याह

**वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः ॥**
**स्मरणादनुमीयंते व्युत्थितस्य समुत्थितात् ॥ ५६ ॥**

**वृत्तयस्त्विति** । आत्मगोचरा आत्मा गोचरो विषयो यासां ता वृत्तयस्तु तदानीं समाधिकालेऽज्ञाता अपि व्युत्थितस्य समुत्थितादुत्पन्नात्स्मरणादेतावंतं कालं समाहितोऽभूवमित्येवं रूपादनुमीयंते । यद्यत्स्मर्यते तत्तदनुभूतमिति व्याप्तेर्लोकसिद्धत्वादित्यर्थः ॥ ५६ ॥

**अ० टीका**—ननु तदानीं वृत्तयः संति न वेत्याशंक्य समाधत्ते **वृत्तयस्त्विति** । समुत्थितादिति स्मरणविशेषणम् ॥ ५६ ॥

**रा० टीका**—ननु तदानीं वृत्त्युत्पादकप्रयत्नाभावात्कथं वृत्त्यनुवृत्तिरित्याशंक्य तात्कालिकप्रयत्नाभावेऽपि प्राथमिकादेव प्रयत्नाददृष्टादिसहकारिसहिताद्वर्तत इत्याह—

**वृत्तीनामनुवृत्तिस्तु प्रयत्नात्प्रथमादपि ॥**
**अदृष्टासकृदभ्याससंस्कारसचिवाद्भवेत् ॥ ५७ ॥**

**वृत्तीनामिति ।** ध्येयैकगोचराणां वृत्तीनामनुवृत्तिस्तु प्रवाहरूपेणानुगतिस्तु प्रथमादपि प्रयत्नात्समाधिपूर्वकालीनादप्यदृष्टमशुक्लकृष्णकर्माख्यो यः पुण्यविशेषः " कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषाम् " [ योगसू० कै० पा० सू० ७ ] इति **पतंजलिना** सूत्रितत्वात् । यश्चासकृदभ्याससंस्कारः पुनः पुनः समाध्यभ्यासेन जनितो भावनाख्यः संस्कारविशेषस्ताभ्यां सहकारिकारणाभ्यां सह वर्तमानाद्भवति ॥ ५७ ॥

**अ० टीका**—ननु भवंत्वेवं समाधिकाले तस्यासंप्रज्ञाताख्यनिर्विकल्पत्वेऽपि व्युत्थानकालिकस्मरणानुमिताः सूक्ष्मतमाः सत्त्वमात्रप्रधानाश्चित्तवृत्तयो ध्येयनिर्गुणब्रह्मात्मैक्याकाराः परंतु तासामनुवृत्तिसामग्रीकेत्यतस्तां स्पष्टयति **वृत्तीनामिति** । ननु प्राथमिकप्रयत्नेन प्रथमैव वृत्तिर्भवेन्न तु द्वितीयादिरित्यतस्तं विशिनष्टि **अदृष्टेत्यादि** । अदृष्टं " कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषाम् " इति **पातंजलसूत्रो**क्तं शुद्धसात्त्विकं कर्म तथाऽसकृद्भूयो भूयो योऽभ्यासो वारंवारं चित्तनिरोधनप्रयत्नस्तस्य यः संस्कारो भावनावासनापरनामा सूक्ष्मावस्थाविशेषस्तौ सचिवौ सहायौ यस्य तस्मादित्यर्थः । एतादृशात् । प्रथमादप्यसंप्रज्ञातसमाधिप्राक्कालिकादपि प्रयत्नाद्वृत्तीनामनुवृत्तिर्धारावाहिकेयमप्रवाहरूपेण स्थितिर्भवेदित्यन्वयः । ननु सति कुड्ये चित्रमिति न्यायेनाऽऽदावसंप्रज्ञातापराभिधे निर्विकल्पाख्ये निरोधसमाधौ बुद्धौ वृत्तय एव संभवंति चेत्पश्चात्तासामनुवृत्तिविचारोऽपि समुचितः स्यात्तदेव तु न पश्यामः । **न्यायरत्नावल्यां** तावत्तत्र वृत्तिसद्भावस्य खंडितत्वात् । तथाहि—असंप्रज्ञातसमाधिस्तु सकलवृत्तिशून्यं निरोधरूपेण परिणतमावृतं* मन एव । **वेदांतसारादौ** तु निरोधरूपेण परिणामोऽपि केवलात्माकारवृत्तिरूपो मनोवृत्तिभानाभावे समानेऽपि मनोवृत्तिसत्त्वासत्त्वाभ्यामसंप्रज्ञातसमाधिसुषुप्त्योर्भेदादित्युक्तम् । तन्न । " मोक्षो निर्विषयं स्मृतम् " " यदा पंचावतिष्ठंते ज्ञानानि मनसा सह " " तद्यच्छेच्छांत आत्मनि " इति **श्रुतीनामु**क्तसूत्राणां च विरोधादित्युक्तम् । तस्माद्विफल एवायं प्रयास इति चेन्न । तत्तात्पर्यस्य त्वयैवाज्ञातत्वात् । तद्यथा । तत्र तावदुक्तपक्षे निरोधसमाधेः सकाशाद्व्युत्थितस्यैतावत्कालपर्यंतमहं सुखं निर्विकल्पसमाहितोऽभूवमितिस्मृत्यन्यथानुपपत्त्या **विवरणमते** सुप्ताविव तत्रापि सत्त्वमात्रपरिणतसूक्ष्मतमचित्तवृत्तिकल्पनौचित्यात्तद्बाधरूपा स्वरसं मनसि निधायाथवेति पक्षांतरं विधाय तं प्रपंच्य । मोक्षो निर्विषयमित्यादि**श्रुति**स्त्वसंप्रज्ञातसमाधेरात्मान्याविषयकत्वबोधिका । एवं योगसूत्राण्यपि बोध्यानि । अत एवोक्तं **संक्षेपशारीरकाचार्यैः**—"आत्मानात्माकारं स्वभावतोऽवस्थितं चित्तम् । आत्मैकाकारतया तिरस्कृतानात्मदृष्टिविदधीत" इत्याद्युक्तम् । तेन प्रथमपक्षस्यैकदेश्यभिप्रायकत्वं स्पष्टमेव स्फुटति । विस्तरस्तु तत्रैव बोध्यः ॥ ५७ ॥

**रा० टीका**—नन्वयं समाधिः पूर्वाचार्यैर्न निरूपितो दृष्ट इत्याशंक्य सर्वगुरुणा **श्रीपुरुषोत्तमेन** निरूपितत्वान्मैवमित्याह—

**यथा दीपो निवातस्थ इत्यादिभिरनेकधा ॥**
**भगवानिममेवार्थमर्जुनाय न्यरूपयत् ॥ ५८ ॥**

---

* आवृतमाकुंचितमित्यर्थः । तात्पर्यं तु ज्ञानात्पूर्वमुत्तरं चाविद्यावच्छिन्नस्य शुद्धस्य च ब्रह्मणो भानमिति भाति ।

**यथेति** । " यथा दीपो निवातस्थो नेंगते सोपमा स्मृता " [ गीता० ६–१९ ] इत्यादिभिः श्लोकैरनेकधा नानाप्रकारेण भगवाञ्ज्ञानैश्वर्यादिसंपन्न इममेव निर्विकल्पसमाधिरूपमर्थमर्जुनाय शिष्याय न्यरूपयन्निरूपितवान् ॥ ५८ ॥

**अ० टीका**—उक्तेऽर्थे दृष्टांतमपि स्पष्टयन् "निवातदीपवच्चित्तं समाधिरभिधीयते" इति निर्विकल्पसमाधिलक्षणे प्राक्सूचितं तं सप्रमाणत्वेन कथयति—**यथा दीप इत्यादिना** । आदिना " युंजन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः । सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते " इत्यंतग्रंथो ग्राह्यः । एवं च निवातदेशे शिवालयादौ विहितदीपे यथा प्रथममेव सकलसामग्रीवैपुल्यार्थं प्रयत्नोपेक्षितस्तदूर्ध्वं त्वसौ यावत्सामग्रीपरिसमाप्त्यचंचलशिख एव प्रज्वलति सामग्रीह्रासान्यथानुपपत्त्या प्रतिक्षणं मध्ये ज्वालाप्रभेदेऽप्येकैवेयं ज्वालेति स्फुरति तद्वत्प्रकृतेऽपि संप्रज्ञातसमाधिकाले समनुष्ठितप्राथमिकप्रयत्नादृष्टाभ्यामादिसामग्रीपौष्कल्येन धारावाहिकादिवदपि मध्ये व्युत्थानकालिकस्मृत्याद्यन्यथाऽनुपपत्तिसिद्धवृत्तिशतसत्त्वेऽप्यतिसादृश्यादेकरूपतैव भवतीति भावः ॥ ५८ ॥

**रा० टीका**—अस्य समाधेरवांतरफलमाह—

**अनादाविह संसारे संचिताः कर्मकोटयः ॥**
**अनेन विलयं यांति शुद्धो धर्मो विवर्धते ॥ ५९ ॥**

**अनादाविति** । अनादौ स्पष्टम् । इहास्मिन्संसारे संचिताः संपादिताः कर्मकोटयः कर्मणां पुण्यापुण्यलक्षणानां कोटय इत्युपलक्षणमपरिमितानि कर्माणीत्यर्थः । अनेन समाधिना विलयं यांति विनश्यंति " क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे " [ मुंड० २ २–८ ] इति श्रुतेः " ज्ञानाग्निः सर्वकर्माणि " [ गीता० ४ ३७ ] इतिस्मृतेश्च **शुद्धो** धर्मः सविलासाविद्यानिवर्तकसाक्षात्कारसाधनभूतो धर्मो विवर्धते स्पष्टम् ॥ ५९ ॥

**अ० टीका**—भवत्वेवं ततः किं प्रकृत इत्यत आह—**अनादाविहेति** । अत्र नमः श्रीशंकरेत्यादिमंगलपूर्वोत्तरग्रंथयोर्ध्वनितजीवन्मुक्तिसद्योमुक्त्याख्यपक्षद्वयस्याप्यधिकारिभेदेनेष्टत्वाज्जीवन्मुक्तिपक्षेऽनिसंधायेन वक्ष्यमाण इह संचितपदेन ज्ञानोदयप्रतिबंधककर्माण्येव ग्राह्याणि । तद्भिन्नकर्मणां तु संचितानां तत्पक्षे " क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे " इतिश्रुतेर्ज्ञानोदयैकनाश्यत्वादित्याशयः । अनेन निरुक्तनिर्विकल्पसमाधिनेत्यर्थः ॥ ५९ ॥

**रा० टीका**—तत्र किं प्रमाणमित्यत आह

**धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः ॥**
**वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥ ६० ॥**

**धर्मेति** । योगवित्तमा अतिशयेन योगज्ञा ब्रह्मसाक्षात्कारवंत इति यावत् । इमं निर्विकल्पसमाधिं धर्ममेघं प्राहुः स्पष्टं तदुपपादयति वर्षतीति यतः कारणादेष समाधिर्धर्मामृतधारा धर्मलक्षणा अमृतधाराः सहस्रशो वर्षति " क्षणमेकमास्थाय क्रतुशतस्यापि " [ अथर्वशिखा० २ ] इति श्रुतेरतो धर्ममेघं प्राहुरिति पूर्वेणान्वयः ॥ ६० ॥

**अ० टीका**—तत्र मानमाह—**धर्मेति** । **योगेति** । पतंजल्यादयः । तदुक्तं **योगसूत्रे** कैवल्याख्यचतुर्थचरणे—'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः' इति । प्रसंख्यानं साधर्म्यवैधर्म्याभ्यां तत्त्वानां सम्यक्साक्षात्कारस्तत्राप्यकुसीदस्य फलमलि-

प्सोरिति **नारायणवृत्तिकाराः** । तत्र हेतुः—वर्षतीति । तदुक्तं **शिवाथर्वशिखोपनिषदि** " क्षणमेकं क्रतुशतस्यापि " इत्यादिना ॥ ६० ॥

**रा० टीका**—इदानीं समाधेः परमप्रयोजनमाह—

**अमुना वासनाजाले निःशेषं प्रविलापिते ॥**
**समूलोन्मूलिते पुण्यपापाख्ये कर्मसंचये ॥ ६१ ॥**

**अमुनेति** । अमुना समाधिना वासनाजालेऽहंकारममकारकर्तृत्वाद्यभिमानहेतुभूते ज्ञानविरुद्धे संस्कारसमूहे निःशेषं यथा भवति तथा प्रविलापिते विनाशिते पुण्यपापाख्ये कर्मसंचये समूलोन्मूलिते मूलसहितं यथा भवति तथोन्मूलिते उद्धृते विनाशित इति यावत् ॥ ६१ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**अमुनेति युग्मेन** । अमुना प्रकृतसमाधिजन्यशुक्लमात्रकर्मणेत्यर्थः । प्रविलापिते प्रध्वंसिते सति । अत एव । **सेत्यादि** ॥ ६१ ॥

**रा० टीका**—फलितमाह—

**वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते ॥**
**करामलकवद्बोधमपरोक्षं प्रसूयते ॥ ६२ ॥**

**वाक्यमिति** । वाक्यं तत्त्वमस्यादिवाक्यमप्रतिबद्धं सत्कर्मवासनाभ्यां प्रतिबंधरहितं सत्प्राक्परोक्षावभासिते पूर्वं परोक्षतया प्रकाशिते तत्त्वे करामलकवत्करस्थितामलकगोचरमिवापरोक्षमपरोक्षतया तत्त्वावभासनसमर्थं बोधं ज्ञानं प्रसूयते जनयति ॥ ६२ ॥

**अ० टीका**—फलितं कथयति—**वाक्यमिति** । तत्त्वमस्यादिमहावाक्यमित्यर्थः । अप्रतिबद्धं सत्प्रागुक्तविषयवासनाप्रमाणासंभावनाप्रमेयासंभावनासाधनविपरीतभावनाफलविपरीतभावनाख्यप्रतिबंधपंचकेन नित्यानित्यविवेकादिसकलसाधनसंपच्छ्रवणमनननिदिध्यासनजीवन्मुक्त्यादिफलसाधकसमाधिभिः क्रमान्निरस्तत्वाच्छून्यं भवेदित्यर्थः । ननूक्तप्रतिबंधपंचकं तु **संक्षेपशारीरके** महावाक्यजन्यप्रमितावेव —" पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा । न फलाय भर्तृ ( ? ) विषया भवति श्रुतिसंभवाऽपितुतथात्मनिधी ( ? ) इत्यादिना सदृष्टांतं स्पष्टमुक्तम् । इह तु वाक्य एव तदच्युत इति कथं न तद्विरोध इत्यत्राहं ब्रह्मास्मीति बोध एव तत्त्वमस्यादिवाक्यस्वाभाव्याज्जायत इति तु निर्विवादम् । अधीतसांगस्वाध्यायेऽधिकारिणि तथैव दर्शनात्परं त्वसौ निरुक्तप्रतिबंधध्वंसतः पूर्वम् । परोक्षमिव निरुक्तप्रतिबंधादवभासः संजातो यस्यैतादृगेव ब्रह्मात्मैक्यं विषयी करोति न तु नित्यापरोक्षं तेन निरुक्तबोधस्य त्रिक्षणावस्थायित्वात्प्रतिबद्धाग्निवद्दीर्घकालावस्थानासंभवाद्वाक्य एव तत्रापि तद्वाच्यमित्याह—**प्रागिति** । ब्रह्माद्वैतात्मैक्ये विषय इत्यार्थिकम् । प्रसूयते जनयतीति यावत् ॥ ६२ ॥

**रा० टीका**—इदानीं परोक्षज्ञानस्य फलमाह—

**परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् ॥**
**बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ ६३ ॥**

**परोक्षमिति** । देशिकपूर्वकं गुरुमुखाल्लब्धं शाब्दं तत्त्वमस्याद्यागमजन्यं परोक्षं ब्रह्मविज्ञानं बुद्धिपूर्वकृतं ज्ञानपूर्वकं यथा भवति तथा कृतं कृत्स्नं समस्तं पापं वह्निवद्दहति॥६३॥

**अ० टीका**—एवं तर्हि परोक्षापरोक्षज्ञानयोः फलभेदेनापि भाव्यमित्याशंक्य **स्कांदसूतसंहितास्थयज्ञवैभवखंडीयद्वितीयाध्यायांतर्गतवाक्याभ्यामेव** क्रमेण **शब्दार्थपठिताभ्या-**

मेव समाधत्ते—**परोक्षमित्यादिद्वाभ्याम्** । देशिकः श्रीगुरुः । तत्पूर्वकं तदुपदिष्टवेदांतवाक्यजन्यम् । " अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुः " इति " अहं विश्वं भुवनमभ्यवाम् " इति च क्रमात्तैत्तिरीयश्रुतिप्रसिद्धमित्यर्थः । पापमिति पुण्यस्याप्युपलक्षणम् । जन्मप्रदत्वसाम्यात् ॥ ६३ ॥

**रा० टीका**—अपरोक्षज्ञानफलमाह—

**अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ॥**
**संसारकारणाज्ञानतमसश्चंडभास्करः ॥ ६४ ॥**

**अपरोक्षेति** । शाब्दं देशिकपूर्वकं व्याख्यातम् । अपरोक्षात्मविज्ञानमपरोक्षस्याऽऽत्मनो विज्ञानं संशयविपर्ययरहितं यज्ज्ञानं तत्संसारकारणाज्ञानतमसः संसारकारणं यदज्ञानमस्ति तदेव तमस्तस्य चंडभास्करो मध्याह्नकालीनसूर्यो बाह्यतमसश्चंडभास्कर इवाज्ञानतमसो निवर्तक इत्यर्थः ॥ ६४ ॥

**अ० टीका**—अपरोक्षेति ॥ ६४ ॥

**रा० टीका** ग्रंथाभ्यासफलमाह—

**इत्थं तत्त्वविवेकं विधाय विधिवन्मनः समाधाय ॥**
**विगलितसंसृतिबंधः प्राप्नोति परं पदं नरो न चिरात् ॥६५॥**

**इति श्रीविद्यारण्यमुनिविरचितायां पञ्चदश्यां तत्त्वविवेकाख्यं प्रथमं प्रकरणम् ॥ १ ॥**

**इत्थमिति** । नर इत्थमुक्तेन प्रकारेण तत्त्वविवेकं तत्त्वस्य ब्रह्मात्मैकत्वलक्षणस्य विवेकं कोशपंचकादिविवेचनं विधाय कृत्वा तस्मिंस्तत्त्वे विधिवच्छास्त्रोक्तप्रकारेण मनः समाधाय स्थिरीकृत्य विगलितसंसृतिबंधोऽपरोक्षज्ञानेन निवृत्तसंसारबंधः सन्परं पदं निरतिशयानंदरूपं मोक्षं नचिरादविलंबेन प्राप्नोति सत्यज्ञानानंदलक्षणं ब्रह्मैव भवतीत्यर्थः ॥ ६५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा रचितायां पञ्चदशीव्याख्यायां तात्पर्यदीपिकाख्यायां तत्त्वविवेकाख्यं प्रथमं प्रकरणं समाप्तम् ॥ १ ॥

**अ० टी०**—एवं "ब्रह्मज्ञानविभावसुः सकलमेवाज्ञानतत्संभवं सद्यो वस्तुबलप्रवर्तनमरुद्व्यापारसंदीपितः । निर्लेपन हि देहहीति न मनागप्यस्य रूपांतरं संसारस्य शिनष्टि तेन विदुषः सद्योविमुक्तिर्ध्रुवा " इति **संक्षेपशारीरक**चतुर्थाध्यायोक्ता चरमप्रमासमसमयमेव द्वैतध्वस्तिरूपसद्योमुक्तिं तदधिकारिणं उक्त्वा जीवन्मुक्तिमपि तदधिकारिणः कथयन्प्रकरणमुपसंहरति **इत्थमिति गीत्या** । इह न चिरादित्यनेन "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्यादिश्रुतिप्रसिद्धा जीवन्मुक्तिरित्याकूतम् । ननु भवता प्रागुपोद्घातेऽस्य प्रकरणस्य " मायोज्याद्यभिवांछामहमगुणनाथ तव सत्यधिया । भक्तिः पुमर्थवुद्ध्या प्रतिबंधः प्रथम एष ईशमितौ " इतीश्वरस्वरूपज्ञानविषयकं प्राथमिकं विपरीतवासनाख्यं प्रतिबंधमुपन्यस्याग्रे " प्रथमेऽधिकारसंपत्तदर्थमुख्यत्वमस्त्युपक्रमतः । तत्पादीति च शब्दत्यादिग्रंथस्य तत्परत्वेन " इति चाऽऽर्यांतरेण प्रथमस्योक्तप्रतिबंधबाधकत्वं सूचितं तत्कथमुपपद्यत इति चेदुच्यते । अत्र **तत्त्वविवेकाख्ये**ऽस्मिन्प्रथमप्रकरणे तावत्सकलाद्वैतशास्त्रीयाकरप्रकरणात्मक-

निखिलग्रंथानां शोधिततत्त्वंपदार्थैक्यमेवाज्ञातं सद्विषयः प्रज्ञातं सत्प्रयोजनमिति साधारण्येन सुप्रसिद्धविषयादिमत्त्वेऽपि प्राधान्येनाधिकारसंपदेव प्रतिपादिता प्रतिभाति । तत्र हेतुः । यत उपक्रमतस्तदर्थमुख्यत्वमेव विवेकवैराग्यादिवस्तुप्रतिपादनप्राधान्यमेवास्ति । तत्रापि हेतुः । उपक्रमशब्दितग्रंथारंभे तावत्तत्पादेति "तत्पादांबुरुहद्वंद्वसेवानिर्मलचेतसाम्" इत्यादेर्ग्रंथस्य तथा शब्देत्यादिग्रंथस्य "शब्दस्पर्शाद्या वेद्या वैचित्र्याज्जागरे पृथक् । ततो विभक्ता तत्संविदैकरूप्यान्न भिद्यते" इत्यादेः "इत्थं तत्त्वविवेकं विधाय विधिवन्मनः समाधाय" इत्यंतपद्यवृंदस्य । तत्परत्वेनाधिकारसंपदेकप्रधानत्वाद्धेतोरस्तीति पूर्वेणान्वयः । एवं चात्राधिकारसंपद्येवोपक्रमोपसंहारयोः प्राधान्यलक्षणं तात्पर्यग्राहकमेकं प्रथमं लिंगं द्योतितम् । तथा "भाने न विषये स्पृहा इति" । "कुर्वते कर्म भोगाय कर्म कर्तुं च भुंजते । नद्यां कीटा इवाऽऽवर्तादावर्तांतरमाशु ते । व्रजंतो जन्मनो जन्म लभंते नैव निर्वृतिम्" इति चाभ्यासः "ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् । निवातदीपवच्चित्तं समाधिरभिधीयते । वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः । स्मरणादनुमीयंते व्युत्थितस्य समुत्थितात् । वृत्तीनामनुवृत्तिस्तु प्रयत्नात्प्रथमादपि । अदृष्टासकृदभ्याससंस्कारसचिवाद्भवेत्" इत्यपूर्वता । "अमुना वासनाजाले निःशेषं प्रविलापिते । समूलोन्मूलिते पुण्यपापाख्ये कर्मसंचये । वाक्यमप्रतिबद्धं सत्प्राक्परोक्षावभासिते । करामलकवद्बोधमपरोक्षं प्रसूयते" इति फलम् । "यथा दीपो निवातस्थ इत्यादिभिरनेकधा । भगवानिममेवार्थमर्जुनाय न्यरूपयत्" इत्यर्थवादः । "अनादाविह संसारे संचिताः कर्मकोटयः । अनेन विलयं यांति शुद्धो धर्मो विवर्धते । धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः । वर्षत्येष यतो धर्मामृतधाराः सहस्रशः" इत्युपपत्तिश्च । एवं षोढा लिंगैश्चित्तशुध्याद्यसंप्रज्ञातसमाध्यंताधिकारसंपद्येवासाधारणप्राधान्येऽस्य प्रकरणस्य तात्पर्यतो निर्णीते सति तया संपदाऽधिकारिणः सगुणेन ब्रह्मणा शिवविष्ण्वादिरूपेण सह सायोज्यसमानैश्वर्यलक्षणसार्ष्टिसारूप्यसामीप्यसालोक्याख्यपंचविधमुक्तीनां क्रममुक्तित्वेऽपि "नाल्पे सुखमस्ति" इतिश्रुतेर्जाग्रदादौ तथाऽन्वयव्यतिरेकसिद्धत्वलक्षणयुक्तिघटितानुभूतेर्विमतं मिथ्यादृश्यत्वाच्छुक्तिरजतवदित्याद्यनुमितेश्च तत्र सत्यत्वबुद्ध्येच्छातः पुरुषार्थबुद्ध्या प्रेमलक्षणा भक्तिश्च कथं स्थास्यतेति समुपपद्यत एवास्य प्रकरणस्याऽऽचार्यपूर्वकमधिकारिणा विचारितस्योक्तप्रतिबंधबाधकत्वमिति संक्षेपः ॥ ६९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमण**षष्ठ्युपनामकश्रीनारायणशास्त्रि**चरणसरोजराजहंसायमानमानस**मोडको**पनामकाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानंदेंदुकौमुद्यभिधायां पंचदशीटीकायां तत्त्वविवेकप्रकाशः प्रथमः संपूर्णः ॥ १ ॥

# अथ महाभूतविवेकाख्यं द्वितीयं प्रकरणम् ।

**सदद्वैतं श्रुतं यत्तत्पंचभूतविवेकतः ॥**
**बोद्धुं शक्यं ततो भूतपंचकं प्रविविच्यते ॥ १ ॥**

**रा० टी०**— नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
पंचभूतविवेकस्य व्याख्यानं क्रियते मया ॥ १ ॥

" सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " ( छान्दो० ६ २ १ ) इति श्रुत्या जगदुत्पत्तेः पुरा यज्जगत्कारणं सद्रूपमद्वितीयं ब्रह्म श्रुतं तस्यावाङ्मनसगोचरत्वेन स्वतोऽवगंतुमशक्यत्वात्तत्कार्यत्वेन तदुपाधिभूतस्य भूतपंचकस्य विवेकद्वारा तदवबोधनायोपोद्घातत्वेन भूतपंचकविवेकं प्रतिजानीते **सदद्वैतमिति** ॥ १ ॥

**अ० टीका**—अद्वैतानंदसाच्चिद्विभविमलपरब्रह्मकूटस्थरूपं
मोहाद्द्वैतेंद्रजालाल्यमपि तिलकं स्वप्रकाशं श्रुतीनाम् ॥
सर्वाश्चाऽऽचार्यवर्या यदुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्री**मन्नारायणा**ख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥

मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ॥
भूतविवेकं *नयनप्रकाशतो द्योतयामि कौमुद्याः ॥ २ ॥

अथ श्री**मद्विद्यारण्यगुरु**र्भूतविवेकाख्यं पंचदश्या द्वितीयं प्रकरणमारभमाणस्तावत्प्रथितप्रमाणप्रयोजनं तत्त्वानुसंधानलक्षणं मंगलं कुर्वाणश्च प्रकृतप्रकरणं विषयप्रयोजने अपि ध्वनयन्नुक्तप्रकरणीयप्रयोजनसिद्ध्यर्थं भूतपंचकप्रतियोगिकाद्वैतसन्मात्रापादानकं विवेचनं प्रतिजानीते **सदद्वैतमिति** । श्रुतं "†सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " " सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः " इति **छांदोग्यषष्ठे**ऽखिलभेदशून्यत्वेन जगदभिन्ननिमित्तोपादानत्वेनापि समाम्नातमित्यर्थः । एतेनात्र यदि पंचभूतविवेचनमात्रकरणकत्वं श्रुतिसीमंतसमाम्नातसदद्वैतचिंतामणिविषयकप्रमितेः स्याच्चेदुपटेनापि तदुभयतृकत्वतस्तद्विवेचनप्रतिज्ञा । तत्तु नैव संभवति । भूतानां तेनासंगेनाद्वैतेन च सह संसर्गाभावात् । परस्परमप्यसंकरेणाविवेच्यत्वात्कथंचित्तत्संकरेऽपि तद्विवेकस्योक्तबोधे त्वप्रयोजकत्वाच्च । नहि

* पक्षे नयने बुद्धेर्ब्रह्मप्रापणे यः प्रकाशः ।

† हे सोम्य प्रियदर्शन श्वेतकेतो पुत्र, इदं सद्यः प्रतीयमानं नामरूपात्मकं जन्यजगत् । अग्रे एतत्सृष्टेः पूर्वकाले । कालस्त्वविधैवेति **सिद्धांतविदो**ः समस्यर्थस्यावच्छेदकत्वस्यापि सुप्रसिद्धेश्चाविद्योपलक्षितस्वतादात्म्यापन्नानादिदृश्यं पंचकावच्छिन्नसत एव सत्त्वदेकमेवाद्वितीयं स्वगतादिभेदत्रयदेशिकादिपरिच्छेदत्रयशून्यं दृङ्मात्रं सदेवाऽऽसीदित्यर्थः । तत्र हेतुमाह षष्ठखंडश्रुतिः—**सन्मूलाः सोम्येत्यादिना** । यथेदं हरिणवारि पूर्वक्षणे तूपरमं वाऽऽवर्तयतस्तदभिन्ननिमित्तोपादानकं भवति तथैवेति भावः । एतेन **द्वैते मिथ्यात्वं सिद्धम्** ।

तिलतंडुलादिविवेचनेऽपि तपनीयकृतितत्वं प्रतीयत इति प्रत्युक्तम् । पंचभूतोपलक्षिताखिलद्वैतस्यानाद्यविद्यया तथैवाध्यस्तत्वाद्धारोरगादिवदध्यस्तस्याधिष्ठानाद्विवेचने तत्प्रमितेश्च ॥ १ ॥

**रा० टी०**—तत्र तावदाकाशादीनां पंचानां भूतानां गुणतो भेदज्ञापनाय तद्गुणानाह—

**शब्दस्पर्शौ रूपरसौ गंधो भूतगुणा इमे ॥**
**एकद्वित्रिचतुष्पंच गुणा व्योमादिषु क्रमात् ॥ २ ॥**

**शब्देति** । नन्वेते गुणाः किं सर्वेषामुतैकैकस्यैकैकगुण इति विमर्शयन्नोभयथाऽपि किंतु प्रकारांतरमस्तीत्यभिप्रायेणाऽऽह—**एकेति** ॥ २ ॥

**अ० टीका**—ननु विवेको हि संयोगेन संमिश्रितयोः क्षीरनीरयोर्हंसकर्तृको विभाग एव पंकपानीययोः कतकरजःप्रक्षेपकर्तृकश्च सः । हाटककटकयोः कार्यकारणभावेन समवायसंबंधात्संमिलितयोः शुक्तिरजतयोराध्यासिकैकतापन्नयोः पृथग्भावश्च ज्ञानात्मैकरूपः स इति प्रकृते कोऽभिमत इत्याशंकमानं प्रति चरममेव तं प्रबोधयितुमादौ विविच्य पंचभूतानां भेदकानसाधारणधर्मानुद्दिशति—**शब्देति** । आकाशाद्वायुरित्यादिश्रुतेः कारणीभूतपूर्वपूर्वभूतगुणसंक्रममुत्तरोत्तरभूते क्रमादाह—**एकेति** ॥ २ ॥

**रा० टीका**—तदेव प्रकारांतरं विशदयति—

**प्रतिध्वनिर्वियच्छब्दो वायौ बीसीतिशब्दनम् ॥**
**अनुष्णाशीतसंस्पर्शो वह्नौ भुगुभुगुध्वनिः ॥ ३ ॥**

**प्रतिध्वनिरिति** । आकाशे तावच्छब्द एव गुणः स च प्रतिध्वनिरूपः । वायौ शब्दस्पर्शौ । तत्र वायुशब्दमनुकारेण दर्शयति—**बीसीतिशब्दनमिति** । एवमुत्तरत्रानुकरण शब्दनं द्रष्टव्यम् । तस्य स्पर्शमाह—**अनुष्णाशीतसंस्पर्श इति** । वह्नौ शब्दस्पर्शरूपाणीति त्रयो गुणास्ते च क्रमेणाभिधीयंते वह्नौ भुगुभुगुध्वनिः ॥ ३ ॥

**अ० टीका**—ननु निरुक्तगुणव्यवस्था किमपंचीकृतपंचमहाभूतानामुत पंचीकृतपंचमहाभूतानाम् । तेषां शास्त्रैकगम्यत्वेन तद्धर्माणामपि तथात्वात् । आद्य इष्टापत्तेः । द्वितीये तु कथमसावित्याशंक्य सर्वानुभवसाधारण्येन समाधत्ते **प्रतिध्वनिरित्यादिना गुणाः सम्यग्विवेचिता इत्यंते न सार्धत्रयेण** । गुहाद्यवच्छिन्ने नभोदेशे क्रियमाणाच्छब्दात्प्रतीयमानं शब्दांतरं प्रतिध्वनिः प्रसिद्ध एव । न च तस्य **सिद्धांतविंद्वादौ** शब्दप्रतिबिंबत्वोक्तेः कथं वियच्छब्दत्वमिति वाच्यम् । तस्य बिंबीभूतशब्देतरानिमित्तकत्वेन तदेकहेतुकत्वाद्भेर्यादिशब्दस्यान्यनिमित्तकत्वेनातथात्वाच्च । बीसीत्यादि तत्तच्छब्दानामनुकरणं द्रष्टव्यम् । **अनुष्णेति** । वायावित्यनुषज्जते । एवं च वायौ स्पर्शः स्वाभाविको गुणः शब्दस्तु स्वोपादानीभूताकाशीय इत्याशयः । एवमन्यत्रापि बोध्यम् ॥ ३ ॥

**उष्णः स्पर्शः प्रभारूपं जले बुलुबुलुध्वनिः ॥**
**शीतः स्पर्शः शुक्लरूपं रसो माधुर्यमीरितम् ॥ ४ ॥**

**रा० टीका**—**उष्णः स्पर्शः प्रभारूपमिति** । जले शब्दादयो रसांताश्चत्वारो गुणास्तानाह—जले बुलुबुलुध्वनिः शीतः स्पर्शः शुक्लं रूपं रसो माधुर्यमिति ॥ ४ ॥

**अ० टीका**—**उष्ण इति**। **प्रभेति** । एवं च वह्नौ त्रैगुण्यम् । **जल इत्यादि**। तथा **चेह चातुर्गुण्यम्** ॥ ४ ॥

**भूमौ कडकडाशब्दः काठिन्यं स्पर्श इष्यते ॥**
**नीलादिकं चित्ररूपं मधुराम्लादिको रसः ॥ ५ ॥**

**रा० टीका** —भूमौ शब्दादिगंधांताः पंच गुणास्तानुदाहरति–**भूमौ कडकडाशब्द इत्यादिना** ॥ ५ ॥

**अ० टीका** —भूमाविति । काठिन्यमिति । तथैवानुभूतत्वात्तार्किकोक्तिस्तु परिभाषामात्रत्वाच्च ॥ ५ ॥

**सुरभीतरगंधौ द्वौ गुणाः सम्यग्विवेचिताः ॥**
**श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चेंद्रियपंचकम् ॥ ६ ॥**

**रा० टीका** सुरभीतरगंधौ द्वावित्यनेनोक्तमर्थमुपसंहरति–**गुणा इति** । एवं गुणतो भेदमभिधाय कार्यतो भेदज्ञापनाय तत्कार्याणि ज्ञानेंद्रियाणि तावदाह **श्रोत्रमिति** ॥ ६ ॥

**अ० टीका** **सुरभीति** । गुणविवरणमुपसंहरति–**गुणा इति** । एवमाकाशादीनां गुणानभिधाय तत्त्वविवेकोक्तरीत्या पंचीकृतानां तेषां सत्त्वांशकार्याणि पंचज्ञानेंद्रियाण्याह–श्रोत्रमित्याद्यर्धेन ॥ ६ ॥

**रा० टीका** तेषां स्थानानि व्यापारांश्च दर्शयति–

**कर्णादिगोलकस्थं तच्छब्दादिग्राहकं क्रमात् ॥**
**सौक्ष्म्यात्कार्यानुमेयं तत्प्रायो धावेद्बहिर्मुखम् ॥ ७ ॥**

**कर्णादीति** । इंद्रियसद्भावे किं प्रमाणमित्याकांक्षायां कार्यलिंगकानुमानमित्याह–**सौक्ष्म्यादिति** । तच्च रूपोपलब्धिः करणजन्या क्रियात्वाच्छिदिक्रियावदित्यादि द्रष्टव्यम् । सौक्ष्म्यादपंचीकृतपंचभूतकार्यत्वेन दुर्लक्ष्यत्वादित्यर्थः । एतेषां स्वभावमाह **प्राय इति** । "पराञ्चि खानि व्यतृणत्स्वयंभूः" ( कठ० ४ । १ ) इति श्रुतेरित्यर्थः ॥ ७ ॥

**अ० टीका** तत्स्थानकार्ये आह **कर्णादीति** । तस्य कार्यानुमेयत्वं स्वभावं चाऽऽह–**सौक्ष्म्यादिति** । प्रायो बहुधा ॥ ७ ॥

**रा० टीका** प्रायःशब्देन सूचितं क्वचित्करणानामांतरविषयग्राहकत्वं दर्शयति–

**कदाचित्पिहिते कर्णे श्रूयते शब्द आंतरः ॥**
**प्राणवायौ जाठराग्नौ जलपानेऽन्नभक्षणे ॥ ८ ॥**
**व्यज्यंते ह्यांतराः स्पर्शा मीलने चांऽऽतरं तमः ॥**
**उद्गारे रसगंधौ चेत्यक्षाणामांतरग्रहः ॥ ९ ॥**

**कदाचिदितिद्वाभ्याम्** । कदाचित्कर्णस्य पिधाने कृते सति प्राणवायौ जाठराग्नौ च विद्यमान आंतरः शब्दः श्रूयते । जलपानेऽन्नभक्षणे चांऽऽतरस्पर्शा अभिव्यज्यंतेऽभिव्यक्ता भवंति । नेत्रनिमीलने कृत आंतरं तम उपलभ्यते । उद्गारे जाते रसगंधौ द्वौ गृह्येते । इत्यनेन प्रकारेणाक्षाणामांतरग्रहः । अक्षाणामिति कर्तरि षष्ठी । आंतरस्य विषयस्य ग्रहो ग्रहणमिंद्रियकर्तृकमांतरविषयग्रहणं भवतीत्यर्थः ॥ ८ ॥ ९ ॥

**अ० टीका** ननु प्रायः प्रयोगसूचितं कदाचिदिंद्रियाणामांतरविषयग्राहकत्वमपि वाच्यम् । तत्त्वनुचितं "पराञ्चि खानि व्यतृणत्स्वयंभूः" इतिश्रुतिविरोधादित्याशंक्य श्रुतावेवकारविरहात्सर्वं वाक्यं सावधारणमिति न्यायस्यासति बाधके संचारादांतरत्वबाह्यत्वयोः

स्थूलदेहापेक्षयैव विवक्षितत्वात्तत्रैतद्व्य[illegible]कानामवरस्थानात्कर्णपिधाने शरीरांतर्गतप्राणवातसंजातानाहताख्यध्वनिश्रुत्यनुभूतश्च मेवां[illegible] समाधत्ते---कदाचिदितियुग्मेन । कदाचित्कर्णे पिहिते सति करांगुल्या निरुद्धे सति [illegible]गवायौ जाठराग्नौ च विद्यमान आंतरः शब्दः श्रूयत इत्यध्याहृत्यान्वयः । एवं जलपानेऽन्नभक्षणे च ॥ ८ ॥

**अ० टीका**---**व्यज्यंत इति** हिरवधारणे । आंतरा एव स्पर्शा व्यज्यंत इति संबंधः । तथा मीलने नेत्रयोरिति शेषः । अ[illegible]च्छादने कृते सत्यांतरमेव तमो व्यज्यत इत्यार्थिकी योजना । तथोद्गारे जलपानान्नभक्षणकरणकं [illegible]रपूरणतन्निष्ठवायोरुदानात्मन ऊर्ध्वागम इत्यर्थः । रसगंधौ मधुररसकाश्मीरादिगंधौ व्यज्येते इति प्राग्वदेव । उपसंहरति---**इतीत्यादिशेषेण** । ननु नेदं **प्राचीनाचार्य**संमतमिति चेन्न । " तमःप्रकाशवद्विरुद्धस्वभावयोः " इत्यध्यासभाष्यवाक्यटीकापंचपादिकातट्टीकाविवरणतट्टीकातत्त्वदीपनाद्याशयमाविष्कुर्वाणैर्मूलकारैरेव विवरणसार एवमेवोपपादितत्वात् । तद्यथा---ननु तमःप्रकाशदृष्टांते भावाभावरूपत्वमुपाधिः । आलोकाभावस्तम इति **तार्किकाः** । रूपदर्शनाभावस्तम इति **प्राभाकरा** इति चेन्नैवम् । उपचयाद्यवस्थाभेदवत्त्वेनोपलभ्यमानस्याभावत्वायोगात् । नीलरूपवत्त्वेन द्रव्यत्वात् । ननु भावत्वपक्षे बहलालोकवति देशे निमीलितनयनस्य कथं प्रतीतिः । बहलालोकेन निवृत्त्यंगीकारात् । सहावस्थानं तु मंदालोकेनैव पूर्वमुक्तमिति चेन्न । गोलकांतर्वर्तितमसः प्रतीत्युपपत्तेः । न च नेत्रस्यांतर्वर्तिवस्तुग्राहकत्वासंभवः । पिहितकर्णाभ्यांऽऽतरशब्दग्राहकत्वदर्शनात् । न चैवं गोलकांतरावस्थांजनादेरपि निमीलितनयनेन ग्रहणाप्रसंगः । तमोव्यतिरिक्तरूपिण आलोकसहकृतचक्षुर्ग्राह्यत्वनियमादिति । अस्यार्थः । उपाधिर्वैषम्यम् । न तु साध्यव्यापकत्वे सति साधनाव्यापकत्वम् । तस्य व्याप्यत्वासिद्धिलक्षणहेत्वाभासविशेषत्वसाधकस्य हेत्वैकदोषत्वेन तादृशहेतुमात्रनिष्ठत्वात् । आदिना संकोचलक्षणोपचयो ज्ञेयः । **अंजनादेरिति** । आदिना कर्पूरकणः । न चैवं तर्ह्यालोकसहकृतमुन्मीलितनयनेनापि स्वनिष्ठांजनादिरूपं कुतो न गृह्यत इति सांप्रतम् । अत्यंताव्यवधानात् । तस्माद्युक्तमेव चक्षुषो निमीलने गोलकांतस्तमोग्राहकत्वमिति । तमसो भावरूपत्वं तु **सिद्धांतबिंदा**वप्युक्तम् । एवमविवात एवांधकारोऽपि भावरूप एवावरणात्मा चाक्षुषज्ञानविरोध्यालोकनाश्यश्च । झटिति विद्युदादिवदाविर्भवति तिरोभवति चेति सिद्धांतः । संसारहेतुदेहोपादानत्वाभावाच्च न श्रुतिषु सृष्टिप्रक्रियाऽथाऽऽम्नायत इत्यविरोध इति । अत्र **टीका न्यायरत्नावली**--"नन्वेवं प्रमास्वनाश्यत्वादिविशिष्टवस्तुपूर्विका । प्रकाशत्वादालोकवदित्याद्यनुमानादालोकस्य स्वनाश्यतमःपूर्वकत्वं स्वीकृत्य विवरणादिग्रंथोक्तिः कथं संगतिः । तमस आलोकनाश्यभावरूपत्वे श्रुतिषु तत्सृष्ट्युक्त्यापत्तेरालोकाभावरूपत्वात्तत्राऽऽह---**एवमित्यादि** । आवरणात्मकत्वं स्फुटयति--**चाक्षुषज्ञानविरोधीति** । चाक्षुषधीप्रतिबंधक इत्यर्थः । नन्वन्वयव्यतिरेकाभ्यामालोकस्य चाक्षुषहेतुत्वात्तमसस्तत्प्रतिबंधकत्वे मानाभावस्तत्राऽऽह---**आलोकनाश्य इति** । आलोकस्य संयोगसंबंधेन चाक्षुषहेतुत्व आलोके तदभावेन चाक्षुषं नोत्पद्येत । तस्माद्विषयतासंबंधेन चाक्षुषं प्रत्यवच्छेदकतासंबंधेन तमःप्रतिबंधकम् । आलोकासंबद्धद्रव्याद्यवच्छिन्नचैतन्ये तम उत्पत्त्या तत्र न चाक्षुषोत्पत्तिः । आलोकावच्छिन्नचैतन्ये तमोनुत्पत्त्या तत्र चाक्षुषोत्पत्तिः । आलोकस्य तमोनाशकत्वेन चाक्षुषोपयोगितया तदन्वयव्यतिरेकावुपक्षीणाविति भावः । ननु तर्हि तमसोऽपि सृष्टिः श्रूयेत तत्राऽऽह । **संसारेति** ।

देहमध्ये तमःसत्त्वे मानाभावेन तमसो न देहोपादानत्वमाकाशं त्ववकाशदानाय देहांतरमस्त्येवेति भावः" इति । नन्वेवं तमसो भावत्वे सावयवत्वेऽपि च निरुक्तरीत्या साक्षादेवाऽऽकाशवदविद्याकार्यत्वादमूर्तत्वाच्च साक्षिभास्यत्वमेव वाच्यं तच्च मीलने चांऽऽतरं तम इति मूले नभोव्यतिरिक्तरूपिण आलोकसहकृतचक्षुर्ग्राह्यत्वनियमादिति च **विवरणसारे**ऽपि चाक्षुषत्वोक्त्या सह स्फुटमेव विरुद्धम् । नहि यः साक्षिविषयः स चक्षुर्विषयो भवति यश्च चक्षुर्विषयः स साक्षिविषयो भवतीति चेद्वादम् । युक्त्योभयाविरोधसंभवात । तथाहि---यथा साक्षिभास्यस्याप्याकाशस्य शब्दलक्षणो गुण एव श्रोत्रग्राह्य इति तु निर्विवादमेव । अनिंद्रियग्राह्यस्य साक्षिप्रत्यक्षस्याप्याकाशस्य जलादौ प्रतिबिंबोपलंभादिति **सिद्धान्तबिंदा**वुक्तत्वात् । तथा तमसोऽपि साक्षिप्रत्यक्षत्वनैयत्ये तदीयनीलरूपस्यैवोक्तरीतिकचाक्षुषत्वे किं बाधकम् । न च त्वन्मते समवायाभावेऽपि द्रव्यगुणयोस्तादात्म्यावश्यकत्वात्तमोरूपस्य चाक्षुषत्वे तच्चाक्षुषत्वापत्तिरिति सांप्रतम् । आकाशगुणस्य शब्दस्य श्रावणत्वेन तत्रापि श्रावणत्वापत्तेः । यदि शब्दावच्छेदेनाऽऽकाशस्य श्रावणत्वमिष्टमेवेति ब्रूषे तर्हि नीलरूपावच्छेदेन तमसोऽपि चाक्षुषत्वमिष्टमेव । एतदभिप्रायिकैव प्रकृतमूलाद्युक्तिरिति रहस्यम् । अथ प्रकृते शब्दरूपयोरव्याप्यवृत्तित्वव्याप्यवृत्तित्वाभ्यां वैषम्यमिति चेत्किं तेन । तादात्म्यस्य तूभयत्रापि तौल्यात् । नापि शब्दमंतराऽप्ययमाकाश इति प्रतीतेस्तस्य साक्षिभास्यता तमसस्तु नीलरूपं विना क्वचिदप्यप्रतीते तथात्वमिति वाच्यम् । अवतमससंदालोकयोस्तद्दृष्टेरिति दिक् ॥ ९ ॥

**रा० टीका**---एवं ज्ञानेंद्रियव्यापारानभिधाय कर्मेंद्रियासत्त्ववादिनं प्रति तत्सद्भावसमर्थनाय तल्लिंगभूतांस्तद्व्यापारानाह---

**पंचोक्त्यादानगमनविसर्गानंदकाः क्रियाः ॥**
**कृषिवाणिज्यसेवाद्याः पंचस्वंतर्भवंति हि ॥ १० ॥**

**पंचेति** । उक्तिश्चाऽऽदानं च गमनं च विसर्गश्चाऽऽनंदश्चेति द्वंद्वसमासः । उक्त्यादानगमनविसर्गानंदाख्याः पंच क्रियाः प्रसिद्धा इति शेषः । ननु कृष्यादीनां क्रियांतराणामपि सत्त्वात्कथं पंचेत्युक्तमित्याशंक्याऽऽह—**कृषीति** ॥ १० ॥

**अ० टीका**---अथ कर्मेंद्रियाणि वक्तुं तल्लिंगभूताः क्रियाः पंचाऽऽह---**पंचेति** । ननु कृष्यादिक्रियांतरशतसत्त्वात्कथं पंचसंख्यानियम इत्यत्राऽऽह---**कृषीति** ॥ १० ॥

**रा० टीका**—कानि तानि क्रियाजनकानींद्रियाणीत्यत आह—

**वाक्पाणिपादपायूपस्थैरक्षैस्तत्क्रियाजनिः ॥**
**मुखादिगोलकेष्वास्ते तत्कर्मेंद्रियपंचकम् ॥ ११ ॥**

**वाक्पाणीति** । वागादिभिरक्षैस्तत्क्रियाजनिस्तासां क्रियाणामुत्पत्तिर्भवतीति शेषः । अत्राप्युक्तिः करणपूर्विका क्रियात्वादित्यादिकार्यलिंगकमनुमानं द्रष्टव्यम् तस्य कर्मेंद्रियपंचकस्य स्थानान्याह—**मुखादीति** । आदिशब्देन करचरणौ गुदशिश्नच्छिद्रे च गृह्येते ॥ ११ ॥

**अ० टीका**—ततो वागादीनि कर्मेंद्रियाण्याह—**वागिति** । ननूक्तकर्मेंद्रियपंचकं क्वाऽऽस्त इत्यत आह—**मुखादीति** । ननु जिह्वायामेव रसनेंद्रियवद्वागिंद्रियस्य सत्त्वमन्वयव्यतिरेकाभ्यामास्थेयं तथाच तां विहाय तत्स्थानीभूतं सामान्यतो मुखमेव किमिति वागिंद्रियस्थानत्वेनोक्तमिति चेत्सत्यम् । जिह्वाया वैखर्याख्यायास्तद्व्यंजननिमित्तत्वेऽपि तदुपलक्षिता-

न्यस्थानानामपि विवक्षाभिप्रायेण मुखेत्युक्तिसांगत्यात् । तानि च स्थानान्युक्तानि **सिद्धांतकौमुद्याम्**–अकुहविसर्जनीयानां कंठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दंताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कंठतालु । ओदौतोः कंठोष्ठम् । वकारस्य दंतोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्येति ॥ ११ ॥

**रा० टीका**—इदानीमुक्तदशेंद्रियप्रेरकत्वेन प्रस्तुतस्य मनसः कृत्यं स्थानं च दर्शयति—

**मनो दशेंद्रियाध्यक्षं हृत्पद्मगोलके स्थितम् ॥**
**तच्चांतःकरणं बाह्येष्वस्वातंत्र्याद्विनेंद्रियैः ॥ १२ ॥**

**मन इति** । तस्यांतरिंद्रियत्वं सनिमित्तकमाह—**तच्चेति** ॥ १२ ॥

**अ० टीका**—इतः परं क्रमप्राप्तमंतरिंद्रियं मनस्तत्स्थानं चाऽऽह—**मन इति** तस्यांतरिंद्रियत्वे हेतुं प्रतिबोधयति—**बाह्येष्वित्यादिशेषेण** विषयेष्वित्यार्थिकम् ॥ १२ ॥

**रा० टीका**—दशेंद्रियाध्यक्षत्वमेव विशदयति—

**अक्षेष्वर्थार्पितेष्वेतद्गुणदोषविचारकम् ॥**
**सत्त्वं रजस्तमश्चास्य गुणा विक्रियते हि तैः ॥ १३ ॥**

**अक्षेष्विति** । अक्षेष्विंद्रियेष्वर्थार्पितेषु विषयेषु स्थापितेषु सत्स्वेतन्मनो गुणदोषविचारकमिदं समीचीनमिदमसमीचीनमित्यादिविचारकारीत्यर्थः । अयं भावः । आत्मनः प्रमातृत्वेन सर्वज्ञानसाधारण्याच्चक्षुरादीनां रूपादिज्ञानजननमात्रे चरितार्थत्वात्तद्गुणदोषविचारस्योपलभ्यमानस्यान्यथानुपपत्त्या तत्कारणत्वेन मनोऽभ्युपगंतव्यमिति । मनसो वैराग्यकामाद्यनेकविधवृत्तिमत्त्वप्रदर्शनाय सत्त्वादिगुणवत्त्वं दर्शयति–**सत्त्वमिति** । तेषां तद्गुणत्वे कारणमाह–**विक्रियत इति** । हि यतस्तैर्गुणैर्विक्रियते विकारं प्राप्नोतीत्यर्थः ॥ १३ ॥

**अ० टीका**—ननु भवत्येवमस्वतंत्रं बाह्यविषयेषु मनस्तथा हृत्पुंडरीकं तत्स्थानमप्यथापि तस्य को व्यापार इत्यत आह—**अक्षेष्विति** । श्रोत्रादींद्रियेष्वित्यर्थः । **अर्थेति** । शब्दादिलक्षणेषु तैरर्थ्यमानविषयेष्वर्पितेषु तत्तद्विषयग्रहणार्थं नियोजितेषु सत्स्वित्यर्थः । एतन्मनः । **गुणेति** । भवतीत्यार्थिकम् । तत्र हेतुः—**सत्त्वमित्यादिना** । यतोऽस्य मनसः प्रधानत्वादिनोपादानीभूता गुणाः संत्यतस्तैर्विक्रियते सुखदुःखमोहात्मना परिणमत इति यावत् ॥ १३ ॥

**रा० टीका**—गुणैस्तस्य विक्रियमाणत्वमेव प्रपंचयति—

**वैराग्यं क्षांतिरौदार्यमित्याद्याः सत्त्वसंभवाः ॥**
**कामक्रोधौ लोभयत्नावित्याद्या रजसोत्थिताः ॥**
**आलस्यभ्रांतितंद्राद्या विकारास्तमसोत्थिताः ॥ १४ ॥**

**वैराग्यमिति** । स्पष्टत्वान्न व्याख्यायंते ॥ १४ ॥

**अ० टीका**—ननु कथं तस्य सात्त्विकादिविकारा निर्णेया इत्याशंक्य क्रमात्तान्दिङ्मात्रेण व्युत्पादयति–**वैराग्यमित्यादित्रिभिरर्धैः** । वैराग्यं विवेकजन्यसकलदृश्यविषयकदुःखरूपत्वस्वतःसत्ताशून्यत्वप्रतिक्षणविलक्षणत्वाविनश्वरत्वादिप्रमाजन्यद्वैतात्मेतरानादरदार्ढ्यमेव ।

"अपराधिनि कोपश्चेत्कोपे कोपः कथं न ते ॥
सर्वेषां पुरुषार्थानां प्रसह्य परिपंथिनि" ॥

इति **नैष्कर्म्यसिद्धि**ध्वनितेन सामर्थ्यसत्त्वेऽपि परविरचितनिरतिशयापकारजन्यकोपशामकविवेकेन तत्सहनमातत्यं क्षांतिः। यावद्दृश्यविनश्वरत्वानुसंधानेन स्वशक्यवस्तुविषयकतात्कालिकयाचकाभिलाषपरिपूरणोत्साह एवौदार्यम्। **कामेत्यादि**। यावद्दृश्यमिथ्यात्वानुसंधानविनश्वरस्येष्टवस्त्वभिलाषः कामः। तत्प्रतिघातजन्यांतरभिज्वलनात्मकचित्तवृत्तिः क्रोधः। कामपरिपोष एव लोभः। यथासामर्थ्यं साध्यसाधनव्यापारोऽत्र यत्नः॥ १४॥

**रा० टीका**—वैराग्यादीनां कार्याणि विभज्य दर्शयति

**सात्त्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः॥**
**तामसैर्नोभयं किं तु वृथाऽऽयुःक्षपणं भवेत्॥ १५॥**

**सात्त्विकैरिति**॥ १५॥

**अ० टीका**—**आलस्येत्यादि**। सति सामर्थ्येऽपि प्रोक्तप्रयत्नवैमुख्यमालस्यम्। अतत्र तन्मतिर्भ्रांतिः। जागरेऽपि सुप्त्यादिसंस्काराद्रिंद्रियाणां यथावद्विषयाग्रहणमुद्रा तंद्रा। त्रितयेऽप्याद्यशब्देन क्रमाच्छमदमोपरमसमाधानादिदैवप्रकृतिवृंदं दंभदर्पदौष्ट्याद्यासुरप्रकृतिवृंदमप्रकाशाप्रवृत्त्यादिराक्षसप्रकृतिवृंदं च संग्राह्यम्। अथैतेषां फलान्यप्याह **सात्त्विकैरित्या**द्यद्वयेन। राजसैरशास्त्रीयैरुक्तरजःसंजातचित्तवृत्तिविशेषैरित्यर्थः। तेनतैकालिकस्वकामिनीगमनानूतकाध्यापननिवृत्तिमार्गोपयुक्तभगवन्मंदिरादिगीतनामादिश्रवणचैत्रादिचंद्रिकागतगंगावातादिस्पर्शनपरमेश्वरप्रतिमाद्यवलोकनतत्प्रसादादिरसास्वादनतन्निर्माल्यादिगंधावग्रहणस्य निवृत्तिवर्त्मप्रयत्नस्य च व्युदासः॥ १५॥

**रा० टीका**—एतेषां बुद्धिस्थत्वादंतःकरणादीनां सर्वेषां स्वामिनमाह—

**अत्राहंप्रत्ययी कर्तेत्येवं *लोकव्यवस्थितिः॥ १६॥**

**अत्रेति**। अहमितिप्रत्ययवान्कर्ता प्रभुरित्यर्थः। लोके हि कार्यकारी प्रभुरित्येवमुपदिश्यते॥ १६॥

**अ० टीका**—**तामसैरिति**। कस्येत्यत आह—**अहमिति**। अहंवृत्तिविशिष्ट आत्मा। लोके लोक्यत इति व्युत्पत्त्याऽखिलदृश्य इत्यर्थः॥ १६॥

**रा० टीका**—एवं जगतः स्थितिमभिधायेदानीं तस्य भौतिकत्वज्ञानोपायमाह—

**स्पष्टशब्दादियुक्तेषु भौतिकत्वमतिस्फुटम्॥**
**अक्षादावपि तच्छास्त्रयुक्तिभ्यामवधार्यताम्॥ १७॥**

**स्पष्टेति**। स्पष्टशब्दादियुक्तेषु स्पष्टैः शब्दस्पर्शादिगुणैः सहितेषु घटादिषु वस्तुषु भूतकार्यत्वं स्पष्टमेवावगम्यते। इंद्रियादिषु कथं भूतकार्यत्वनिश्चय इत्याशंक्यऽऽगमानुमानाभ्यामित्याह—**अक्षादावपीति**। "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" [छान्दो० ६-५-४] इत्यादि शास्त्रमनुमानं च विमतानि श्रोत्रादीनि भूतकार्याणि भवितुमर्हंति भूतान्वयव्यतिरेकानुविधायित्वात्। यद्यदन्वयव्यतिरेकानुविधायि तत्तत्कार्यं दृष्टं यथा मृदन्वयव्यतिरेकानुविधायी घटो मृत्कार्यो दृष्टस्तथा चेमानि तस्मात्तथेति। तदन्वयव्य-

---

*लोके व्यवस्थितिरित्यच्युतरायपाठः।

तिरेकानुविधायित्वं च " षोडशकलः सोम्य पुरुषः " [ छान्दो० ६-७-१ ] इत्यादिना **छांदोग्यश्रुतौ** मनसः श्रुतं तद्वदन्यत्रापि द्रष्टव्यम् ॥ १७ ॥

**अ० टीका**—नन्वेवमपि किमद्वैतसतः सकाशात्पंचभूतविवेचने प्रकृत इत्याशंक्य प्रत्यक्षाद्युपलब्धशब्दादिभूतगुणवत्सु घटादिषु भूतकार्यत्वेन स्वानुस्यूताधिष्ठानसद्वस्तुनः सकाशात्पृथक्कारलक्षणसाध्यसारल्येऽपि श्रोत्रादींद्रियादियावल्लिंगदेहघटकवस्तुष्वपि भौतिकत्वहेतोः सिद्धिरागमानुमानाभ्यामेव बोध्येति समाधत्ते—**स्पष्टेति**। तत्राऽऽगमस्तावत् " अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् " इति **छांदोग्यश्रुतिरेव**। प्रपंचितं चैतदधस्तादेव **तत्त्वविवेके** पंचीकरणप्रक्रियया। अनुमानं तु मनःप्राणयोरन्नोदकान्वयव्यतिरेकानुविधायित्वेन भौतिकत्वसाधकं " षोडशकलः सोम्य पुरुषः " इति प्रभृति **तच्छ्रुतावेव** प्रसिद्धं लोके चानुभूतं प्रसिद्धतरमेव। इंद्रियेषु तु यथा श्रोत्रादीनि वागादीनि च क्रमादाकाशादिकार्याणि शब्दादितत्तन्मात्रगुणग्राहकत्वात्तथा शब्दादितत्तन्मात्रगुणग्राहकगोलकसमाननाडीकगोलकत्वात्। व्यतिरेकेऽव्याकृतवदिति। अत्र मूके बाधिर्यस्य करे त्वग्गोलकत्वस्यापि चरणोपचारेण लोचनस्वास्थ्यस्य पायूपस्थयोरसगंधपरिणामयितृत्वस्य च प्रत्यक्षत्वान्न हेतोः स्वरूपासिद्धिः। विस्तरस्त्वत्र **सिद्धान्तबिन्द्वा**दावेवाऽऽवेद्यः ॥ १७ ॥

**रा० टीका**—एवं भूतानि भौतिकानि च विविच्य दर्शयित्वा प्रकृतां " सदेव सोम्येदमग्र आसीत् " [ छान्दो० ६-२-१ ] इत्याद्यद्वितीयब्रह्मप्रतिपादिकां श्रुतिं व्याचक्षाणस्तद्वाक्यस्थेदंपदस्यार्थमाह—

**एकादशेंद्रियैर्युक्त्या शास्त्रेणाप्यवगम्यते ॥**
**यावत्किंचिद्भवेदेतदिदंशब्दोदितं जगत् ॥ १८ ॥**

**एकादशेति**। प्रत्यक्षादिभिः सर्वैः प्रमाणैरपि शब्दादर्थापत्त्यादिप्रमाणज्ञानैश्च यावत्किंचिज्जगदवगम्यते तत्सर्वं सदेवेत्यादिवाक्यस्थेनेदंपदेनाभिहितमित्यर्थः ॥ १८ ॥

**अ० टीका**—एवं प्रतिज्ञातविवेकार्थं व्यष्टिसमष्टिस्थूलसूक्ष्मप्रपंचभूतभौतिकरूपं प्रतिपाद्येदानीं सदद्वैतवस्तुप्रतिपादिकां " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " इत्याद्यां श्रुतिं व्याचिकीर्षुस्तद्गतेदंपदार्थं कथयति—**एकादशेति**। नन्वंतरिंद्रियस्य श्रोत्रादिबहिरिंद्रियद्वारा शब्दादीनां प्रत्यक्षे करणत्वसंभवेऽपि वागादिकर्मेंद्रियाणां क्व करणत्वमवगतमिति चेत्सत्यम्। साक्षात्करणत्वासंभवेऽपि शब्दोच्चारादिक्रियाद्वारा तत्तद्विषयकज्ञानकारणत्वसंभवात्। युक्तिरनुमानम्। अपिनाऽव्याकृतेतरसाक्षिप्रत्यक्षविषयोऽर्थापत्त्यनुपलब्ध्योश्च विषयो विज्ञेयः ॥ १८ ॥

**रा० टीका**—एवमिदंशब्दस्यार्थमभिधायेदानीं तां श्रुतिं स्वयमेवार्थतः पठति—

**इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ॥**
**सदेवाऽऽसीन्नामरूपे नाऽऽस्तामित्यारुणेर्वचः ॥ १९ ॥**

---

* शब्दगुणग्राहकश्रोत्रेंद्रियस्य गोलकं कर्णस्तेन समाना तन्नाड्या सहचरिता नाडी यस्य तज्जिह्वाद्वयं गोलकं यस्य तस्य भावस्तस्मादित्यर्थः। एवं च मूकत्वे बाधिर्यं न तु बाधिर्ये मूकत्वमित्यनुभवोऽपि लोकानामुपपद्यत एव। यथा धूमसत्त्वे वह्निसत्त्वं नतु वह्निसत्त्वे धूमसत्त्वमितिवत्। एवं च समाननाडीकगोलकत्वमेव हेतुतावच्छेदकमपरं तु परिचायक......।

**इदमिति** । अरुणस्यापत्यमारुणिरुद्दालकस्तस्य वचनमित्यर्थः ॥ १९ ॥

**अ० टी०**—ननु भवत्वेवमिदंपदविवक्षितमुक्तश्रुतावव्याकृतेतरद्वैतमथापि किं ततः प्रकृत इत्यतस्तां श्रुतिमेवार्थतः पठन्नुपदेशकथामपि प्रथयति–**इदं सर्वमिति** । मूर्तामूर्तात्मकमखिलदृश्यजालमित्यर्थः । **एकमेवेत्यादि** । स्वगतसजातीयविजातीयभेदरहितमित्येतत् । आरुणेररुणवंशोद्भवस्योद्दालकस्य महर्षेः स्वपुत्रश्वेतकेतुं प्रतीति यावत् । वचो वाक्यं ब्रह्मोपदेशकालेऽस्तीत्यध्याहृत्यान्वयः ॥ १९ ॥

**वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ॥**
**वृक्षांतरात्सजातीयो विजातीयः शिलादितः ॥ २० ॥**

**रा० टीका**—एकमेवाद्वितीयमितिपदत्रयेण सद्वस्तुनि स्वगतादिभेदत्रयं प्रसक्तं निवारयितुं लोके स्वगतादिभेदत्रयं तावद्दर्शयति–**वृक्षस्येति** ॥ २० ॥

**अ० टीका** अथोक्तमेव सौम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतिस्थैकादिपदकृत्यं वक्तुं सामान्यतः सोदाहरणं स्वगतादिभेदत्रयं व्युत्पादयति–**वृक्षस्येति** ॥ २० ॥

**रा० टीका**–एवमनात्मनि भेदत्रयं प्रदर्श्य सद्वस्तुन्यपि प्रसक्तं तद्भेदत्रयं श्रुतिः पदत्रयेण निवारयतीत्याह

**तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ॥**
**ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ २१ ॥**

**तथेति** । वस्तुत्वसामान्यादनात्मनीव सद्रूपात्मवस्तुन्यपि प्रसक्तं स्वगतादिभेदत्रयमैक्यावधारणद्वैतप्रतिषेधाभिधायकैः "एकमेवाद्वितीयम्" [ छान्दो० ६–२–१ ] इति त्रिभिः पदैः क्रमेण निवार्यत इत्यर्थः ॥ २१ ॥

**अ० टीका**—एवं निदर्शितं भेदत्रयं सद्रूपे ब्रह्मण्यपि वस्तुत्वात्संभाव्य निराकरोति–**तथेति** । नन्वयं भेदत्रयनिषेधः संश्चेद्द्वैतापत्तिरसंश्चेत्पुनरां सदसद्रूपश्चेदुभयविरोधेन व्याघातः सदसद्विलक्षण्ये त्वनिर्वचनीयत्वेन पुनर्द्वैतापत्तिरिति चेन्न । भेदभेद्यात्मकद्वैतप्रतियोगिकनिषेधस्यारोपितप्रतियोगिकत्वेनाधिष्ठानैकरूपत्वात् । अध्यस्तप्रतियोगिकभावाभावयोः शुद्धाधिष्ठानैकसत्तानतिरिक्तसत्ताकत्वस्य शुक्तिरजतादौ दृष्टत्वान्निरुक्तद्वैतस्योक्तरूपे ब्रह्मणि निषेधान्यथानुपपत्त्यैवाऽऽरोपितत्वाच्च । नचैवमप्यग्र इति श्रुत्या पुरा सृष्टेरितिमूलोक्त्या च कालपरिच्छेद इति सांप्रतम् । कालस्त्वविद्यैवेति **सिद्धांतविदुक्तेः** "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति **श्रुत्या** वक्ष्यमाणसृष्टिबीजाव्याकृतरूपायास्तस्यास्तत्तादात्म्यापन्नाया एव तत्रेष्टत्वात् ॥ २१ ॥

**रा० टी०**—सद्वस्तुनस्तावन्न स्वगतभेदः शंकितुं शक्यतेऽस्य निरवयवत्वादित्याह–

**सतो नावयवाः शंक्यास्तदंशस्यानिरूपणात् ॥**
**नामरूपे न तस्यांशौ तयोरद्याप्यनुद्भवात् ॥ २२ ॥**

**सत इति** । नामरूपयोः सदवयवत्वं किं न स्यादित्याशंक्य सृष्टेः पुरा तयोरभावान्न सदंशत्वमित्याह–**नामेति** ॥ २२ ॥

**अ० टीका**—ननु ब्रह्मण ऐक्येन स्वगतभेदशून्यत्वमित्युक्तमनुपपन्नम् । एकस्यापि सूर्यस्य चंद्रस्य च किरणैः कलाभिश्च तद्दर्शनादित्याशंक्य सूर्यादेः सावयवत्वेन तथात्वेऽप्ये-

कत्वसंख्याद्यखिलधर्मविधुरैकरसे ब्रह्मणि निरवयवत्वान्नैव स्वगतभेदसंभव इति समादधंस्त-न्निरवयवत्वं साधयति—**सत इति** । तत्र हेतुः **तदित्यादिना** । ननु " अनेन जीवेनाऽऽत्म-नाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति श्रुतेः

" ममैवांशो जीवलोके जीवभूतः सनातनः "

इति **स्मृतेश्च** तदंशीभूतजीवव्याकृतनामरूपयोरेवास्तु तदंशापरपर्यायतदवयवत्वमित्या-शंक्य सृष्टिपूर्वकालावच्छेदेन तदसंभवान्मैवमिति समाधत्ते—**नामेत्यादि** ॥ २२ ॥

**रा० टीका**—कुतो नामरूपयोरभाव इत्याशंक्याऽऽह—

**नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितः पुरा ॥**
**न तयोरुद्भवस्तस्मान्निरंशं सद्यथा वियत् ॥ २३ ॥**

**नामरूपेति** । फलितमाह—**तस्मादिति** । अत्रायं प्रयोगः । सद्वस्तु स्वगतभेदशून्यं भवितुमर्हति निरवयवत्वाद्गगनवदिति ॥ २३ ॥

**अ० टी०**—ननु नामरूपोद्भवस्य सृष्टेः प्रागसंभवश्चेत्सदेवेत्यादिश्रुतिप्रसिद्धसदादिना-मत्रैकालिकबाधवैधुर्यादिरूपयोः कथं संभवस्तदानीमप्यद्वैते ब्रह्मणीति चेद्बाढम् । उक्तश्रुतेस्ता-त्कालिकतत्स्वरूपकथकत्वस्य सृष्टिसमनंतरमेव सत्त्वान्मैवमित्याह—**नामेति** । फलितमाह—**तस्मादित्यादिना** ॥ २३ ॥

**रा० टीका**—मा भूत्स्वगतभेदः सजातीयभेदः किं न स्यादित्याशंक्य तत्सजाती-यं सदंतरमिति वक्तव्यं न तन्निरूपयितुं शक्यते सतो वैलक्षण्याभावादित्याह—

**सदंतरं सजातीयं न वैलक्षण्यवर्जनात् ॥**
**नामरूपोपाधिभेदं विना नैव सतो भिदा ॥ २४ ॥**

**सदंतरमिति** । ननु घटसत्ता पटसत्तेति सतो भेदः प्रतिभासत इत्याशंक्य घटाकाश-मठाकाशवदौपाधिको भेदो न स्वतो भातीत्याह—**नामरूपोपाधिभेदमिति** । अत्रायं प्रयोगः । सद्वस्तु सजातीयभेदरहितं भवितुमर्हत्युपाधिपरामर्शमंतरेणाविभाव्यमानभेदत्वाद्गगनवदिति॥२४॥

**अ० टी०**—एवमेकरस्येन स्वगतभेदनिरासमुपपाद्यावधारणेन सजातीयभेदनिरासं पार्थ एव धनुर्धर इत्यादिवदन्ययोगव्यवच्छेदार्थकेनोपपादयति—**सदंतरमिति** । तत्र हेतुः—**वैलक्ष-ण्येति** । तदेवोपपादयति—**नामेति** ॥ २४ ॥

**रा० टीका**—भवतु तर्हि विजातीयाद्भेद इत्याशंक्य सतो विजातीयमसत्तस्यास-त्त्वेनैव प्रतियोगित्वासंभवेन तत्प्रतियोगिकोऽपि भेदो नास्तीत्याह—

**विजातीयमसत्तत्तु न खल्वस्तीति गम्यते ॥**
**नास्यातः प्रतियोगित्वं विजातीयाद्भिदा कुतः ॥ २५ ॥**

**विजातीयमिति**—॥ २५ ॥

**अ० टीका**—एवमद्वितीयपदप्रतिपादितद्वैतप्रतिषेधेन सत्कं विजातीयभेदराहित्य-मप्युपपादयति—**विजातीयमिति** । यतः सतो विजातीयमसत्तत्त्वस्तीति नैव गम्यते खल्व-स्तीत्यनेनैव तस्य सत्त्वापत्त्याऽसत्त्वाभावादतोऽस्यासतः सन्निष्ठा विजातीयभेदविषयकं प्रति-योगित्वं नैव भवति ततो विजातीयाद्भिदा सती कुतः स्यादिति संबंधः । एतेन " तद्धैक

आहुरसदेवेदमग्र आसीत् " इत्यादिकश्रुतिशंकितं शून्यवादिमतं प्रत्युक्तम् । विस्तरस्तु तद्भाष्यादावेव बोध्यः ॥ २५ ॥

**रा० टीका**—फलितमाह—

**एकमेवाद्वितीयं सत्सिद्धमत्र तु केचन ॥**
**विह्वला असदेवेदं पुराऽऽसीदित्यवर्णयन् ॥ २६ ॥**

**एकमेवेति** । इदानीं स्थूणानिखननन्यायेन सदद्वैतमेव दृढयितुं पूर्वपक्षमाह—**अत्र त्विति** ॥ २६ ॥

**अ० टीका**—एवं ध्वनिमर्यादया प्रध्वस्तमपि **माध्यमिकमतं** कंठतोऽपि निराकर्तुं वृत्तानुवादपूर्वकं शंकते-**एकमेवेत्यादिना** । अत्रैवं त्रिविधपरिच्छेदशून्ये सद्वस्तुनि **सिद्धे** सतीत्यर्थः । तुशब्दोऽप्यर्थकः । एतेनाक्षपादाद्यनौचित्यं श्रुतियुक्त्यादिसिद्धत्वादेव द्योत्यते । केचन केचिन्माध्यमिकाभिधशून्यवादिबौद्धविशेषास्तदेकोपजीविनश्चेति यावत् । नन्वेवं श्रुत्यादिसिद्धेऽपि सद्वस्तुनि सति कथं तद्विरुद्धवर्णनमंतर्वाणिप्रवीणभूषणनित्यतस्तान्विशिनष्टि—**विह्वला इति** । विकलधियः संत इत्यर्थः । अत एवेदं प्रत्यक्षादिप्रमाणासिद्धं द्वैतम् । पुरा सृष्टेः प्राक्काले । असदेव तुच्छमेवाऽऽसीदित्यवर्णयन्नित्यन्वयः । एतेन " तद्धैक आहुरसदेवेदमग्र आसीत् " इति **श्रुतिरेव** संग्रथितार्था भवति ॥ २६ ॥

**रा० टीका**— विह्वलत्वे दृष्टांतमाह—

**मग्नस्याब्धौ यथाऽक्षाणि विह्वलानि तथाऽस्य धीः ॥**
**अखंडैकरसं श्रुत्वा निष्प्रचारा बिभेत्यतः ॥ २७ ॥**

**मग्नस्येति** । दार्ष्टांतिके योजयति- **तथेति** अस्यासद्वादिनो जातावेकवचनं धीरंतःकरणमखंडैकरसं वस्तु श्रुत्वा निष्प्रचारा साकारवस्तुनीवाखंडैकरसे वस्तुनि प्रचाररहिता सत्यतोऽस्माद्वस्तुनो बिभेति ॥ २७ ॥

**अ० टीका**—ननु श्रुत्यादिसिद्धेऽप्यद्वैते ब्रह्मणि किं मूलमिदमुक्तवादिनो विह्वलत्वमित्याशंक्यानधिकारमूलकमेवेति ध्वनयंस्तत्र दृष्टांतं स्पष्टयति—**मग्नस्येति** । अक्षाणींद्रियाणि दार्ष्टांतिके योजयति **तथेति** । अस्य शून्यवादिनः । **अखंडेत्यादि** । सदेव सोम्येत्यादिश्रुत्युक्तमित्यर्थः । अद्वैतं ब्रह्मेत्यार्थिकम् ॥ २७ ॥

**रा० टीका**— उक्तार्थ आचार्यसंमतिं दर्शयति -

**गौडाचार्या *निर्विकल्पे समाधावन्ययोगिनाम् ॥**
**साकारब्रह्मनिष्ठानामत्यंतं भयमूचिरे ॥ २८ ॥**

**गौडाचार्या इति** ॥ २८ ॥

**अ० टी०**—न केवलमियं मत्कल्पनैव किंतु सांप्रदायिकस्येवेति वदन्नादौ **श्रीमद्गौडपादाचार्य**चरणसंमतिमवतारयति—**गौडेति** ॥ २८ ॥

**रा० टीका**—केन वाक्येनोक्तवंत इत्याकांक्षायां तदीयं **वार्तिकमेव** पठति—

**अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिभिः ॥**
**योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ २९ ॥**

* निर्विकल्पसमाधावित्यच्युतरायपाठः ।

**अस्पर्शेति** । योऽयमस्पर्शयोगाख्यो निर्विकल्पः समाधिरेष सर्वयोगिभिः साकारध्याननिष्ठैर्दुर्दर्शो दुःखेन द्रष्टुं योग्यो दुष्प्राप इत्यर्थः । तत्रोपपत्तिमाह—**योगिन इति** । हि यस्मात्कारणाद्योगिनः पूर्वोक्तद्वैतदर्शिनः । अभये भयशून्ये समाधौ निर्जने देशे बाला इव भयदर्शिनो भयहेतुत्वं कल्पयंतोऽस्मादस्पर्शयोगाद्भीतिं प्राप्नुवंति ॥ २९ ॥

**अ० टी०**—तद्वाक्यमेव **मांडूक्योपनिषत्**कारिकाप्रकरणगतं पठति—**अस्पर्शेति** । न विद्यते स्पर्शयोगो बुद्धिविषयतासंबंधो यस्मिन्स तथेत्यर्थः । एषोऽसंप्रज्ञातसमाध्युपलक्षितशोधितत्वंपदार्थः प्रत्यक्चिन्मात्र आत्मेति यावत् ॥ २९ ॥

**रा० टीका**—श्रीमदाचार्यैरप्येतदभिहितमित्याह—

**भगवत्पूज्यपादाश्च शुष्कतर्कपटूनमून् ॥**
**आहुर्माध्यमिकान् भ्रांतानचिंत्येऽस्मिन्सदात्मनि ॥ ३० ॥**

**भगवदिति** ॥ ३० ॥

**अ० टी०**—अथ **वार्तिककार**संमतिमप्यत्र साक्षादेवावतारयति—**भगवदिति** ॥३०॥

**रा० टीका**—तद्वार्तिकं पठति—

**अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तमस्विनः ॥**
**आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ ३१ ॥**

**अनादृत्येति** ॥ ३१ ॥

**अ० टीका**—तत्र तद्वार्तिकमेव पठति—**अनादृत्येति** ॥ ३१ ॥

**रा० टीका**—इदानीमसद्वादं विकल्प्य दूषयति—

**शून्यमासीदिति ब्रूषे सद्योगं वा सदात्मताम् ॥**
**शून्यस्य न तु तद्युक्तमुभयं व्याहतत्वतः ॥ ३२ ॥**

**शून्यमिति** । शून्यमासीदित्यनेन वाक्येन शून्यस्य सत्ताजातीययोगं वा सद्रूपतां वा ब्रूष इति विकल्पार्थस्तदुभयं सत्तासंबंधसद्रूपत्वलक्षणं शून्यस्य व्याहतत्वान्न युज्यत इत्यर्थः॥३२॥

**अ० टीका**—एवं स्थूणानिखननन्यायेन सदद्वैतविषयकबोधदार्ढ्यार्थमुपन्यस्तमसद्वादं दूषयितुमनूद्य विकल्पयति—**शून्यमासीदिति** । रे **माध्यमिक** त्वं शून्यमासीदितिवाक्येन तद्धैक आहुरसदेवेदमग्र आसीदितिश्रुतिमूलकेन किं शून्यस्याऽऽसीदित्याख्यातवशादस भुवि भू सत्तायामिति च स्मरणात्सद्योगं सता साकं भूतकालावच्छेदेन कंचित्संबंधं ब्रूषे वेत्यथवा सत्तारूपजातेः शून्यस्य चोभयोरपि निरवयवत्वान्निर्गुणत्वान्निष्क्रियत्वाच्च **प्रथम**पक्षासंभवेन । सदात्मतां सद्रूपत्वं ब्रूष इति संबंधः । पक्षद्वयमपि परस्परविरुद्धवस्तुद्वयसामानाधिकरण्यापातलक्षणव्याघाताख्यैकेनैव हेतुना प्रतिक्षिपति—**न त्वित्यादिना** । तुशब्दः प्रतिवाद्युक्तपक्षव्यावृत्त्यर्थः । अप्यर्थो वा । व्याहतत्वतो व्याघातादुक्तलक्षणाद्धेतोस्तदुभयमपि न युक्तमित्यन्वयः ॥ ३२ ॥

**रा० टीका**—व्याहतत्वमेव **दृष्टांतपूर्वकं** द्रढयति—

**न युक्तस्तमसा सूर्यो नापि चासौ तमोमयः ॥**
**सच्छून्ययोर्विरोधित्वाच्छून्यमासीत्कथं वद ॥ ३३ ॥**

**न युक्त इति** ॥ ३३ ॥

**अ० टीका**—तत्र दृष्टांतं स्पष्टयति—**न युक्त इति**। दार्ष्टांतिके योजयति—**सच्छून्ययोरिति** ॥ ३३ ॥

**रा० टीका**—ननु भवन्मते वियदादीनां निर्विकल्पे ब्रह्मणि सत्त्वं व्याहतमित्याशंक्याऽऽह—

**वियदादेर्नामरूपे मायया सुविकल्पिते ॥**
**शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरम् ॥ ३४ ॥**

**वियदादेरिति**। तर्हि शून्यस्यापि नामरूपे सद्वस्तुनि कल्पिते इति वदतो बौद्धस्यापसिद्धांत इत्यभिप्रायेणाऽऽह—**शून्यस्येति** ॥ ३४ ॥

**अ० टीका**—ननु यथा भवन्मते वियदादेर्नामरूपे कल्पिते एव तद्वच्छून्यस्यापि ते माययैव कल्पिते भवेतामित्याशंकाभीष्टापत्त्यांऽगीकरोति—**वियदादेरिति**। **तथेत्यादि**। शून्यस्य नामरूपे अपि मायया परिकल्पिते एव भवतश्चेत्तर्हि चिरं तच्छून्यं जीव्यतां तिष्ठत्विति योजना। कल्पितेनाधिष्ठानादुष्टेरित्याशयः ॥ ३४ ॥

**रा० टीका**—ननु तर्हि शून्यस्येव सद्वस्तुनोऽपि नामरूपे कल्पिते एवांगीकर्तव्ये भवन्मते वास्तवयोर्नामरूपयोरभावादिति शंकते—

**सतोऽपि नामरूपे द्वे कल्पिते चेत्तदा वद ॥**
**कुत्रेति निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते ॥ ३५ ॥**

**सतोऽपीति**। विकल्पासहत्वादयं पक्ष एवानुपपन्न इत्यभिप्रायेण परिहरति—**तदेति**। अयमभिप्रायः। सतो नामरूपे किं सति कल्पिते उतासत्यथवा जगति नाऽऽद्यः। अन्यस्य रजतादेर्नामरूपयोरन्यत्र शुक्तिकादावारोपदर्शनात्सतो नामरूपयोः सत्येव कल्पनायोगात्। न द्वितीयः। असतो निरात्मकस्य चाधिष्ठानतायोगात्। न तृतीयः। सत उत्पन्नस्य जगतः सन्नामरूपकल्पनाधिष्ठानत्वानुपपत्तेरिति। मा भूदधिष्ठानमनयोः कल्पना किं न स्यादित्याशंक्याऽऽह—**निरधिष्ठान इति** ॥ ३५ ॥

**अ० टीका**—ततः प्रतिवादी प्रतिवंदीं व्युद्भावयति—**सतोऽपीत्यादिना**। तां निराकर्तुं सिद्धांती पृच्छति—**तदेत्यादिना**। तत्र हेतुः—**निरधिष्ठान इत्यादिना** ॥ ३५ ॥

**रा० टीका**—ननु "असदेवेदमग्र आसीत्" [छान्दो० ३—१९—१।६—२—१] इत्यत्र यथा व्याघात उक्तस्तथा "सदेव सोम्येदमग्र आसीत्" [छान्दो० ६—२—१] इत्यत्रापि दोषोऽस्तीति शंकते—

**सदासीदितिशब्दार्थभेदे वैगुण्यमापतेत् ॥**
**अभेदे पुनरुक्तिः स्यान्मैवं लोके तथेक्षणात् ॥ ३६ ॥**

**सदासीदितीति**। तथाहि—सदासीदिति शब्दभेदयोरर्थभेदोऽस्ति न वाऽस्ति चेदद्वैतहानिर्नास्ति चेत्पुनरुक्तिः स्यात्। अतः सदासीदित्यनुपपन्नमिति द्वितीयं पक्षमादाय परिहरति—**मैवमिति**। पुनरुक्तिदोषस्य कः परिहार इत्याशंक्याऽऽह—**लोक इति** ॥ ३६ ॥

**अ० टीका**—नन्वथापि " सदेव सोम्येदमग्र आसीत् " इति श्रुतावाख्यातार्थस्तावदस भुवीति भू सत्तायामिति च स्मरणात्सत्त्वेवेति तु निर्विवादमेव। तथाच सदासीदित्यत्र पदार्थभेदे सत्ताया द्वैगुण्यापत्तिरभेदे तु पौनरुक्त्यमिति शंकमानं प्रति लोके तथा प्रयोगदर्शनान्मैवमिति समाधत्ते—**सदासीदितीति** ॥ ३६ ॥

**रा० टीका**—लोक एवं विधेषु प्रयोगेषु पुनरुक्त्यभावः कुत्र दृष्ट इत्याशंक्याऽऽह—

**कर्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणम् ॥**
**इत्यादिवासनाविष्टं प्रत्यासीत्सदितीरणम् ॥ ३७ ॥**

**कर्तव्यमिति**। भवत्वेवं लोके श्रुतौ किमायातमित्यत आह—**इत्यादीति** ॥ ३७ ॥

**अ० टीका**—तानेव लौकिकप्रयोगान्दर्शयति—**कर्तव्यमिति**। एवं चोक्तसंस्काराविष्टं श्वेतकेतूपलक्षितमुमुक्षुं प्रति सदासीदित्युक्तिर्युक्तैवेत्याह—**इत्यादीति** ॥ ३७ ॥

**रा० टीका**—नन्वद्वितीये वस्तुनि भूतकालाभावात् ' अग्र आसीत् ' इत्युक्तिरनुपपन्नेत्याशंक्याऽऽह—

**कालाभावे पुरेत्युक्तिः कालवासनया युतम् ॥**
**शिष्यं प्रत्येव तेनात्र द्वितीयं न हि शंक्यते ॥ ३८ ॥**

**कालेति**। ननु जगदुत्पत्तेः पुरा जगदभावेन सद्वितीयत्वं ब्रह्मण इत्याशंक्य श्रुतिप्रवृत्तेर्द्वैतवासनाविष्टश्रोतृप्रतिबोधनार्थत्वान्नातिशंकनीयमित्याह—**तेनेति** ॥ ३८ ॥

**अ० टीका**—नन्वेवमप्यासीदिति प्रत्ययार्थभूतस्य भूतकालस्य तथाऽग्र इति पदप्रतिपाद्यस्यापि तस्य तत्त्वात्कथमद्वितीयत्वं तदानीं सद्वस्तुन इत्याशंक्योक्तन्यायं तत्राप्यतिदिशति—**कालेति**। अत्र कालाभावेऽग्र इत्युक्तिरिति पाठ एव साधुः श्रुतौ पुरा पदाभावात्पुरेत्युपपाठ एवेति भावः ॥ ३८ ॥

**रा० टीका**—इदानीं सिद्धांतरहस्यमाह—

**चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ॥**
**अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम् ॥ ३९ ॥**

**चोद्यमिति**। व्यवहारदशायां चोद्यादि कर्तव्यं परमार्थतस्त्वद्वैतमेव तत्त्वमित्यर्थः॥३९॥

**अ० टीका**—ननु द्वितीयं न हि शंक्यत इति किं राज्ञामाज्ञामात्रमित्याशंक्याद्वैतस्य वस्तुनः कथायामप्रवेश एवेति सिद्धांतावलंबनेन समाधत्ते—**चोद्यं वेति**। आक्षेपजातमित्यर्थः ॥ ३९ ॥

**रा० टीका**—परमार्थतो द्वैताभावे स्मृतिं प्रमाणयति—

**तदा स्तिमितगंभीरं न तेजो न तमस्ततम् ॥**
**अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ ४० ॥**

**तदेति**। स्तिमितं निश्चलं गंभीरं दुरवगाहं मनसा विषयीकर्तुमशक्यम्। न तेजस्तेजस्त्वानधिकरणं न तमस्तमसो विलक्षणमनावरणस्वभावम्। ततं व्याप्तम्। अनाख्यं व्याख्यातुमशक्यम्। अनाभिव्यक्तं चक्षुरादिभिरप्यविषयीकृतम्। सच्छून्यविलक्षणमत एव किंचिदिदंतया निर्देष्टुमशक्यमवशिष्यते द्वैतनिषेधावधित्वेनावतिष्ठत इत्यर्थः ॥ ४० ॥

**अ० टीका**—ननु निरुक्तश्रुतेः परिच्छेदत्रयशून्यसन्मात्रवस्तुपरत्वे किं प्रमाणमि-

त्याशंक्य स्मृतिरेवेतिवदंस्ता पठति—तदेति। इदं हि श्रीवसिष्ठस्य श्रीरामं प्रति विदेहमुक्तविषयकप्रश्नसमाधानवचनं बृहद्योगवासिष्ठादौ प्रकटमेवेति बोध्यम् ॥ ४० ॥

**रा० टीका**—ननु जनिमत्त्वेनानित्यस्य भूम्यादेरसत्त्वमस्तु नित्याकाशस्यासत्त्वं कथमंगीक्रियत इति शंकते—

**ननु भूम्यादिकं मा भूत्परमाण्वंतनाशतः ॥**
**कथं ते वियतोऽसत्त्वं बुद्धिमारोहतीति चेत् ॥ ४१ ॥**

नन्विति ॥ ४१ ॥

**अ० टीका**—तत्र तार्किकः शंकते—नन्विति। तेऽद्वैतिनस्तव। बुद्धिं प्रति । वियतः प्रत्यक्षादिप्रमाणसहस्रैरप्यसंभावितविनाशस्याऽऽकाशस्येत्यर्थः । असत्त्वं तदेत्यादिनिरुक्तस्मृतौ सदेव सोम्येदमग्र इत्याद्युक्तश्रुतौ च यथाश्रुतार्थग्राहित्वलक्षणश्रद्धाजाड्यमात्रप्रयुक्तमविद्यमानत्वमिति यावत् । आरोहति प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वलक्षणनित्यत्वशालिनोऽपि नभसः प्रलयकालावच्छेदेनापि विद्यमानत्ववैधुर्यं कथं बुद्ध्यधिरूढं भवतीत्याक्षेपाशयः ॥ ४१ ॥

**रा० टीका**—दृष्टांतावष्टंभेन परिहरति—

**अत्यंतं निर्जगद्व्योम यथा ते बुद्धिमाश्रितम् ॥**
**तथैव सन्निराकारं कुतो नाऽऽश्रयते मतिम् ॥ ४२ ॥**

अत्यंतमिति । अत्यंतं निर्जगज्जगन्मात्ररहितमित्यर्थः ॥ ४२ ॥

**अ० टीका**—अथ सिद्धांती निरुक्ततार्किकेण नित्यतयांऽगीकृतमाकाशमेव दृष्टांतीकृत्य तदवष्टंभेन तं प्रत्येव प्रत्याक्षिपति—अत्यंतमिति ॥ ४२ ॥

**रा० टीका**—न हि दृष्टेऽनुपपन्नमिति न्यायमाश्रित्य चोदयति—

**निर्जगद्व्योम दृष्टं चेत्प्रकाशतमसौ विना ॥**
**क्व दृष्टं किं च ते पक्षे न प्रत्यक्षं वियत्खलु ॥ ४३ ॥**

निर्जगदिति । दर्शनमेवासिद्धमिति परिहरति—प्रकाशेति । अपसिद्धांतोऽपीत्याह—किंचेति ॥ ४३ ॥

**अ० टीका**—दृष्टांतवैषम्यान्नायं प्रत्याक्षेप इत्याशंक्य वियतः प्रकाशादिविधुरस्य प्रत्यक्षविषयत्वं तन्मतेनैव निराचष्टे—निर्जगदिति ॥ ४३ ॥

**रा० टीका**—ननु दर्शनाभावः सद्वस्तुन्यपि समान इत्याशंक्य सतः सर्वानुभवसिद्धत्वान्नैवमित्याह—

**सद्वस्तु शुद्धं त्वस्माभिर्निश्चितैरनुभूयते ॥**
**तूष्णीं स्थितौ न शून्यत्वं शून्यबुद्धेश्च वर्जनात् ॥ ४४ ॥**

सद्वस्त्विति। ननु तूष्णींभावे शून्यमेवेतरस्य कस्यापि प्रतीत्यभावादित्याशंक्य शून्यस्यापि शून्यप्रतीत्यभावाच्छून्यमपि न संभवतीत्याह—न शून्यत्वमिति ॥ ४४ ॥

**अ० टीका**—ननु वियतः प्रत्यक्षत्वाभावः सद्वस्तुन्यपि समान एव तद्यथा त्वया केवलश्रुत्यादिश्रद्धाशालिनैव स्वीक्रियते तथा तर्काद्यनुगृहीतानुमित्याख्ययुक्त्या मया वियदपि नित्यतयांऽगीक्रियत इत्याशंक्य वैषम्यान्नैवमिति समादधंस्तत्र स्वानुभूतिमेव निर्दुष्टां स्पष्टय-

ति—**सद्वस्त्विति** । तुशब्दो वैलक्षण्यार्थः । शुद्धं निर्द्वैतम् । अनुभूतौ भ्रमत्वं व्युदसितुमात्मनो विशिनष्टि—**निश्चितैरिति** । पूर्वाचार्यादिस्वगुर्वंतब्रह्मविद्विवृतवेदांतश्रद्धातदनुग्राहकतर्कप्रभृतिनिर्णयवद्भिरित्यर्थः ॥ ४४ ॥

**रा० टीका**—ननु तर्हि सद्बुद्ध्यभावात्सत्त्वमपि न घटत इति शंकते—

**सद्बुद्धिरपि चेन्नास्ति माऽस्त्वस्य स्वप्रभत्वतः ॥**
**निर्मनस्कत्वसाक्षित्वात्सन्मात्रं सुगमं नृणाम् ॥ ४५ ॥**

**सद्बुद्धिरिति** । तस्य स्वप्रकाशत्वान्न तद्बुद्ध्यभावोऽविष्ट इति परिहरति—**माऽस्त्वस्येति** । स्वगोचरबुद्ध्यभावे कथं सद्वस्त्ववगंतुं शक्यत इत्यत आह—**निर्मनस्कत्वेति** ॥४५॥

**अ० टीका**—ननु यदुक्तमस्माभिर्गुरुसंप्रदायविवृतवेदांततदनुग्राहकवैयासकतर्कनिर्णीतदृश्यमिथ्यात्वपूर्वकब्रह्माद्वैतात्मैक्यनिर्णयवशात्तूष्णींस्थितिकालावच्छेदेन शुद्धमद्वैतं सद्वस्त्वनुभूयत एव न तु शून्यबुद्धेर्वर्जनाच्छून्यत्वमनुभूयत इत्येतदयुक्तं यथा शून्यबुद्ध्यभावान्न शून्यानुभवस्तथा सद्बुद्धेरप्युक्तकालेऽनुपलब्धेस्तदनुभवेऽपि किं मानमित्याशंक्य स्वप्रकाशे दृश्यवस्तुनि तथात्वेऽपि स्वप्रकाशदृङ्मात्रात्मन्यद्वैते तु न प्रमाणापेक्षमानत्वगंधोऽपीति समाधत्ते—**सद्बुद्धिरपीति** । तदेवानुभवाधिरूढं विद्धान्निगमयति—**निर्मनस्कत्वेति** । मनो विमर्शरूपं स्यादिति पूर्वप्रकरणोक्तेः संकल्पाद्यात्मकांतःकरणवृत्त्यभावदशाव्युत्थानकालावच्छेदेनैतावत्कालमहं निर्विकल्प एवाभूवमिति परामर्शानुमितसर्वसंकल्पाभावविषयकसद्रूपभानादित्यर्थः ॥ ४५ ॥

**मनो जृंभणराहित्ये यथा साक्षी निराकुलः ॥**
**मायाजृंभणतः पूर्वं सत्तथैव निराकुलम् ॥ ४६ ॥**

**रा० टी०**—एवं निष्प्रपंचस्य साक्षिणस्तूष्णीं स्थितौ भानं प्रदर्श्यैतदृष्टांतबलेन सृष्टेः पुराऽपि सद्वस्तु तथाऽवगंतुं शक्यत इत्याह—**मन इति** ॥ ४६ ॥

**अ० टीका**—एवं तूष्णीं स्थितिकालावच्छेदेन—

" लीने पूर्वविकल्पे तु यावदन्यस्य नोदयः ॥
निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते " इति ॥
अर्थादर्थांतरं वृत्तिर्गंतुं चलति चांतरे ॥
अनाधारा निर्विकारा यादृशी सोन्मनी स्मृता "

इति च **प्राचीनाचार्यचरण**वचनान्निर्मनस्कत्वशब्दितनिर्विकल्पावस्थासाक्षित्वोपलक्षिताद्वैतसन्मात्रं मुमुक्षुबुद्धावधिरोहयित्वा तद्दृष्टांतेन सृष्टिप्राक्कालावच्छेदेनापि तत्तथात्वं साधयति—**मन इति** । सृष्टिपूर्वकाले सद्वस्तु त्रिविधपरिच्छेदविधुरम् । भास्यव्यक्त्यभावात् । असंप्रज्ञातावस्थासाक्षित्वोपलक्षितसन्मात्रवदिति प्रयोगोऽप्यूह्य इति दिक् ॥ ४६ ॥

**रा० टीका**—मायायाः किं लक्षणमित्यत आह—

**निस्तत्त्वा कार्यगम्याऽस्य शक्तिर्मायाऽग्निशक्तिवत् ॥**
**न हि शक्तिः क्वचित्कैश्चिद्बुध्यते कार्यतः पुरा ॥ ४७ ॥**

**निस्तत्त्वेति** । निस्तत्त्वा जगत्कारणभूताद्वस्तुनः पृथक्तत्त्वरहिता कार्यगम्या वियदादिकार्यलिंगगम्याऽस्य सद्वस्तुनः शक्तिर्वियदादिकार्यजननसामर्थ्यं मायेत्युच्यते । वस्तुस्वरूपा-

तिरिक्तशक्तिसद्भावे दृष्टांतमाह—**अग्नीति** । यथाऽग्न्यादिस्वरूपातिरिक्तं स्फोटादिकार्यलिंगगम्यं वह्न्यादिनिष्ठं सामर्थ्यमस्ति तद्वदित्यर्थः । शक्तेः कार्यलिंगगम्यत्वं व्यतिरेकमुखेन द्रढयति-**न हि शक्तिरिति** ॥ ४७ ॥

**अ० टीका**—ननु " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " इति **श्रुतौ** सृष्टेः प्राक्कालावच्छेदेन ब्रह्मातिरिक्तं तु किंचिदपि नोच्यते पूर्वपद्ये तु मायाजृंभणत इत्यादिना मनोविकासराहित्यप्रयुक्तसाक्ष्यशून्यत्वलक्षणसाक्षिनिराकुलत्वदृष्टांतेन मायाविकासराहित्यप्रयुक्तमेव सद्वस्तुनोऽप्यद्वैतत्वमुक्तं तत्र मायायां किं प्रमाणं किंच तस्याः स्वेतरव्यावर्तकं लक्षणमित्याक्षिपंतं प्रति तत्कथनेन समाधत्ते-**निस्तत्त्वेति** । एवं च कार्यलिंगकमनुमानमेव तत्र व्यावहारिकं प्रमाणं तथा तादृशमेव तल्लक्षणमपि संक्षिप्तं भवति । तथाहि —सदेव सोम्येत्यादि प्रकृत्य तत्तेजोऽसृजतेत्यादिश्रुत्यन्यथानुपपत्तिसिद्धं सदद्वैतब्रह्मकार्यं जगन्मायां तु प्रकृतिं विद्यादिति पराऽस्य शक्तिर्विविधैव श्रूयत इति च **श्रुति**सिद्धमायाख्यतदीयशक्तिमूलकम् । कार्यत्वात् । दाहवदिति । यथा लोके तप्तायःपिंडादिगतवह्नेः सकाशात्तृणादिदाहलक्षणं कार्यमुपलभ्यैव तदनुकूला तन्मात्रनिष्ठा काचिच्छक्तिस्तर्क्यते तद्वत्प्रकृतेऽपीति यावत् । एतेनास्या निस्तत्त्वशब्दितस्वतःसत्ताशून्यत्वलक्षणं मिथ्यात्वं ध्वन्यते । तेन कार्यमात्रगम्यत्वे सति सदनन्यसत्ताकशक्तित्वं मायात्वमिति तल्लक्षणमपि फलति । नन्वेवं यदि प्रमाणागम्या माया तर्हि कथमसावद्वैतब्रह्मात्मैक्यज्ञानबाध्या स्यात् । न हि प्रमितं क्वचिदपि बाध्यम् । तथाच प्रौढीवादमात्रमेवोक्तानुमानोपन्यसनमिति चेन्न । भावानवबोधात् । तथाहि—निस्तत्त्वेत्यादिलक्षणवाक्येन व्यावहारिकप्रामाण्यशाल्युक्तानुमानगम्यत्वमेव विवक्षितम् । एवं च यथा व्यावहारिकप्रामाण्यशालिप्रत्यक्षादिप्रमाणगम्यस्यापि घटादेश्चरमप्रमाबाध्यत्वं तद्वन्मायायामपि तत्स्यात् । न चैवं तर्हि **श्रीमद्वार्तिककार**चरणैरविद्याया अविद्यात्व इदमेव तु लक्षणम् । यत्प्रमाणासहिष्णुत्वमसाधारणमिष्यत इति यत्प्रमाणासहिष्णुत्वमेवाविद्यापराभिधमायाया असाधारणं लक्षणं प्रतिपादितमस्ति तेन सह प्रकृतलक्षणादिविरोध इति वाच्यम् । तत्र प्रमाणपदेन पारमार्थिकार्थविषयकविचारितवेदांतमहावाक्यस्यैव विवक्षितत्वात् । अन्यथा तैरेव—

" अस्याविद्येत्यविद्यायामेवासित्वा प्रकल्प्यते ।
ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन युज्यते "

इति **वार्तिके** प्रकल्प्यतइतिपदध्वनितकार्यलिंगकानुमानगम्यत्वं मायापराभिधाविद्यायाः सूचितं बाध्येत । तस्माद्युक्तमेव निरुक्ततल्लक्षणादीति दिक् । नन्वेवं कार्यैकतर्क्यतत्संबंध्यनन्यसत्ताकशक्तिर्मायेति फलिते कार्येति विशेषणं व्यर्थमित्याशंक्य निरुक्तनद्विषयकप्रमाणासूचकत्वेन तत्सार्थक्ये कथितेऽपि लक्षणकुक्षौ गौरवात्तन्मैवास्त्वित्याग्रहिणं प्रति व्यतिरेकमुखेन तदावश्यकतामन्यथानुपपत्त्या प्रतिपादयति-**न हीत्याद्युत्तरार्धेन** ॥ ४७ ॥

**रा० टीका**—एवं शक्तेः कार्यलिंगगम्यत्वमुपपाद्य निस्तत्त्वरूपतामुपपादयति—

**न सद्वस्तु सतः शक्तिर्न हि वह्नेः स्वशक्तिता ॥**
**सद्विलक्षणतायां तु शक्तेः किं तत्त्वमुच्यताम् ॥ ४८ ॥**

**न सद्वस्त्विति** । अयमभिप्रायः । सद्वस्तुनः शक्तिः किं सत्युतासती न तावत्सती तथात्वे

सतोऽभिन्नत्वेन तच्छक्तित्वायोगात् । उक्तार्थे दृष्टांतमाह–**न हि वह्नेरिति** । द्वितीयेऽपि किं नरविषाणतुल्योत सद्विलक्षणेति विकल्पाभिप्रायेण पृच्छति–**सद्विलक्षणतायामिति** ॥ ४८ ॥

**अ० टीका**—नन्वेवं शक्तेः कार्यैकतर्क्यत्वेऽप्ययस्कांतशक्तिवत्सिद्धे तत्पार्थक्यं त्ववश्यं वाच्यमेव सतोऽसंगत्वसिद्ध्यर्थं तथात्वे सदेव सोम्येत्याद्युपक्रांतश्रुतिबाधस्तथैव सतः सद्वितीयत्वादित्याशंक्य किमसौ सतः पृथक्शक्तिः सती किंवा सद्विलक्षणा । नाऽऽद्य इत्याह—**नेति** । तत्र हेतुं द्योतयन्व्यतिरेकमुखेन दृष्टांतं स्पष्टयति—**न हीति** । अयमाशयः । यदि वह्निरेव तच्छक्तिः स्याच्चेन्मण्यादिना किं प्रतिबध्येत । प्रतिबध्यते च तद्भिन्ना तदेकाश्रिता तच्छक्तिरिति सकललोकप्रत्यक्षम् । अन्यथा खदिरांगाराधिरूढवैश्वानरस्यापि समणिकरेण स्पर्शे स्फोटाद्यनुपलब्धिर्बाध्येत । तस्मात्सद्वस्तुनः शक्तिः सद्रूपैवेति बालजल्पनमेवेति । विस्तरस्तु **मुक्तिरमालंक्रियायामेव** मदीयायाम**द्वैतरत्नरक्षणव्याख्यायामभिद्रष्टव्यः** । न द्वितीयोऽनुपपत्तेरिति द्योतयति—**सदिति** । एवं च निस्तत्त्वेऽतिप्राक्प्रतिज्ञातं प्रतिपादयितुमेवायमुपन्यास इत्याशयः ॥ ४८ ॥

**रा० टीका**—तत्राऽऽद्यं पक्षमनूद्य दूषयति—

**शून्यत्वमिति चेच्छून्यं मायाकार्यमितीरितम् ॥**
**न शून्यं नापि सद्यादृक्तादृक्तत्त्वमिहेष्यनाम् ॥ ४९ ॥**

**शून्यत्वमिति** । शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरमित्यत्रेत्यर्थः । तस्माद्द्वितीयः पक्षः परिशिष्यत इत्याह–**न शून्यमिति** । मायास्वरूपं सत्त्वासत्त्वाभ्यां निर्वचनानर्हमित्यभिप्रायः ॥ ४९ ॥

**अ० टीका**—ननु किमित्येवमाक्षिपसि शून्यत्वमेव तत्तत्त्वमिति वक्तुं शक्यत्वादित्याशंक्य तस्य शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरमित्यादावधस्तादेव निरस्तत्वान्मैवमित्याह—**शून्यत्वमिति चेदिति** । फलितमाह—**न शून्यमिति** । एवं च तस्याः सदसद्विलक्षणत्वलक्षणमिथ्यात्वरूपमनिर्वचनीयत्वमेव त्वया रुदताऽप्यंगीकार्यमेवेति तात्पर्यम्॥४९॥

**रा० टीका**—अस्मिन्नर्थे श्रुतिं प्रमाणयति—

**नासदासीन्नो सदासीत्तदानीं किं त्वभूत्तमः ॥**
**सद्योगात्तमसः सत्त्वं न स्वतस्तन्निषेधनात् ॥ ५० ॥**

**नासदिति** । " तम आसीत्तमसा गूढमग्रे " [ ऋ० सं० अष्ट० ८ अध्या० ७ वर्ग १७ मं० १ ] इत्यादिश्रुतिः प्रमाणमित्यर्थः । तर्हि तम आसीदिति कथं सत्त्वमुच्यत इत्यत आह–**सद्योगादिति** । कुत इत्यत आह–**तन्निषेधनादिति** ॥ ५० ॥

**अ० टीका**—न केवलमस्मत्कल्पित एवायमर्थः किंतु श्रुत्याऽप्येवमेवाभिहित इति द्योतयंस्तामेवार्थतः पठति—**नासदासीदिति** । सर्वदेशकालावच्छेदेनात्यंताभावप्रतियोगित्वे सति सत्तादात्म्यशून्यत्वमसत्त्वम् । नन्वेवं विकल्पैकविषयस्य शून्यापरनामकस्यासतः सृष्टेः प्राक्कालावच्छेदेन भवतु निषेध इति चेद्बाढम् । यावद्भावाप्रतियोगिलक्षणस्य मतस्तावदुक्तरूपत्वादेव नैवायं निषेधः किंतु वक्ष्यमाणमूलाज्ञानकार्यस्यैव सद्वियदित्यादिप्रतीतियोग्यस्य सत्तादात्म्यापन्नवियदादेरेवेति तम आसीत्तमसा गूढमग्र इति **श्रुत्याशयेन** सूचयति—**नो सदासी-**

**दित्यादिना** । तर्हि किमासीत्तदानीमिति तदाह --**किं त्विति** । एवं च तमःशब्दितमूलाज्ञाने सदसत्त्वानधिकरणत्वलक्षणं मिथ्यात्वं पर्यवस्यति । नन्वेवमप्यभूत्पदेन भू सत्तायामिति स्मृतेस्तस्यैव सत्त्वं प्रतीयते तथाच कथं निरुक्तमिथ्यात्वं तत्राऽऽह—**सद्योगादिति** । एतेन स्वतः सत्ताशून्यत्वमपि मदभिमतं मिथ्यात्वं तत्र द्योत्यते ॥ ५० ॥

**रा० टीका**--फलितमाह--

**अत एव द्वितीयत्वं शून्यवन्न हि गण्यते ॥**
**न लोके चैत्रतच्छक्त्योर्जीवितं लिख्यते पृथक् ॥ ५१ ॥**

**अत एवेति** । यतः स्वतः सत्त्वं मायाया नास्त्यतः शून्यस्येव मायाया अपि द्वितीयत्वं न गण्यते हि नैवाऽऽद्रियत इत्यर्थः । अनृतस्य द्वितीयत्वानंगीकारे दृष्टांतमाह—**न लोक इति** ॥ ५१ ॥

**अ० टीका**---फलितमाह---**अत एवेति** । यथैकमेवाद्वितीयमिति श्रुतौ ब्रह्मणि द्वितीयप्रतियोगिकाभावरूपशून्येनैव शंककमते सद्वितीयत्वं गण्यते तथा नैवोक्तशक्त्या तदेकायत्तसत्ताकया गण्यत इत्यर्थः। तदेव व्यतिरेकनिदर्शनेनोपपादयति- **न लोक इति**॥५१॥

**रा० टीका** - ननु शक्त्याधिक्ये जीविताधिक्यं दृश्यतेऽतः शक्तेरपि पृथग्जीवितत्वमस्तीति शंकते—

**शक्त्याधिक्ये जीवितं चेद्वर्धते तत्र वृद्धिकृत् ॥**
**न शक्तिः किंतु तत्कार्यं युद्धकृष्यादिकं तथा ॥ ५२ ॥**

**शक्त्याधिक्य इति** । न शक्तिर्जीवितवर्धने कारणमपि तु तत्कार्यं युद्धकृष्यादीति परिहरति—**तत्रेति** । दार्ष्टांतिके योजयति—**तथेति** ॥ ५२ ॥

**अ० टीका**--ननु लोके चैत्रतच्छक्त्योर्जीवितपार्थक्यलेखाभावेऽपि शक्त्याधिक्ये जीवितवृद्धिर्गजादौ दृश्यत एवेति कार्यलिंगकानुमानग्राह्यमेवैतदित्याशंक्य चैत्रोऽधिकशक्तिमानधिकजीवितत्वाद्गजवदित्यनुमानेनैवाधिक्यधर्मधर्मीभूतशक्तिपार्थक्यसाधने हेतुसाध्ययोः कार्यकारणभावाभावाद्धेतोरप्रयोजकत्वमेवेति समाधत्ते **शक्त्याधिक्य इत्यादिना** । किंच जीवितशब्देन किमायुः किंवा बलम् । नाऽऽद्यः । दीर्घायुषोऽपि काकादेरधिकशक्तिमत्त्वाभावात् । नांत्यः । मया जीवितपदेन लिख्यत इत्याख्यानसूचितव्यक्तेरवानिर्णीतत्वादित्यभिसंधाय शक्तिशब्दितसामर्थ्याधिक्यानुमापकं जीवितपदवाच्यं व्यक्त्याधिक्यं न भवति किंतु शक्तिशब्दितसामर्थ्यस्य युद्धकृष्यादिकार्यमेव शक्तिवृद्ध्यनुमापकं शक्तिवृद्धिसत्त्व एव तत्कार्यं युद्धादि दृश्यते न तदभाव इति तयोरेव कार्यकारणभावेन हेतुसाध्यभावोऽतो जीवितपदाभिधेयव्यक्तिवृद्धिरन्यथासिद्धैव शक्तिमहत्त्वसाधन इति योजना ॥ ५२ ॥

**सर्वथा शक्तिमात्रस्य न पृथग्गणना क्वचित् ॥**
**शक्तिकार्यं तु नैवास्ति द्वितीयं शंक्यते कथम् ॥ ५३ ॥**

**रा० टीका**—**सर्वथेति**। मा भूच्छक्त्या सद्वितीयत्वं मतोऽपि तु तत्कार्येण तद्भवत्येवेत्याशंक्य तस्य तदानीमसत्त्वात्तेनापि न सद्वितीयत्वमित्याह —**शक्तिकार्यं त्विति** ॥ ५३॥

**अ० टीका** —उपसंहरति -**सर्वथेति** । नन्वथापि तत्कार्येणैव भवतु प्रलयोत्तरं सृष्टेः प्राग्ब्रह्मणः सद्वितीयत्वं तत्राऽऽह—**शक्तीति** ॥ ५३ ॥

**रा० टीका**—ननु सच्छक्तिः मा सर्वत्र वर्तत उतैकदेशे नाऽऽद्यो मुक्तैः प्राप्य ब्रह्माभावप्रसंगान्न द्वितीयो निरंशत्वेन ब्रह्मत्वादित्याशंक्याऽऽद्यानंगीकाराद्द्वितीये परिहारो वक्ष्यत इत्यभिप्रायेणाऽऽह—

**न कृत्स्नब्रह्मवृत्तिः मा शक्तिः किं त्वेकदेशभाक् ॥**
**घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्तते ॥ ५४ ॥**

**न कृत्स्नेति** । एकदेशवृत्तौ दृष्टांतमाह—**घटेति** ॥ ५४ ॥

**अ० टीका**—नन्वेवं वह्न्यादिक्रमसौ शक्तिराध्यासिकतादात्म्येन संपूर्णब्रह्मवृत्तिस्तदेकदेशवृत्तिर्वा । नोभयमपि । इयत्तया परिच्छिन्नत्वापत्तेरिति चेन्न । आलोकसहकृतोर्ध्वव्यापारितचक्षुःकिरणावच्छिन्न एव नभसि नीलिमभ्रमाधिष्ठानत्वात्—

" भेदं च भेद्यं च भिनत्ति भेदो यथैव भेदांतरमंतरेण ॥
मोहं च कार्यं च बिभर्ति मोहस्तथैव मोहांतरमंतरेण "

इति **संक्षेपशारीरको**क्तरीत्याऽध्यस्तोक्तशक्त्यवच्छिन्नैकदेश एव ब्रह्मणः सेति सदृष्टांतं स्पष्टयति—**न कृत्स्नेति** ॥ ५४ ॥

**पादोऽस्य सर्वा भूतानि *त्रिपादस्ति स्वयंप्रभः ॥**
**इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः ॥ ५५ ॥**

**रा० टीका**—शक्तेरेकदेशवृत्तित्वे प्रमाण[ छान्दो० ३-१२-६ ] माह—**पादोऽस्येति** ॥ ५५ ॥

**अ० टीका**—तत्र प्रमाणापेक्षायां श्रुतिमाह—**पादोऽस्येति** । पादकल्पना तु चतुष्पाद्धर्मचिंतनजातसंस्कारशिष्यबुद्ध्यभिप्रायेणैव श्रुतिसंमतेत्याकृतम् । श्रौतः पाठस्तु " पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि " इति प्रसिद्ध एव ॥ ५५ ॥

**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥**
**इति कृष्णोऽर्जुनायाऽऽह जगतस्त्वेकदेशताम् ॥ ५६ ॥**

**रा० टीका**—न केवलं श्रुतिरेव स्मृति[ भ० गी० १०-४२ ] रप्यस्तीत्याह—**विष्टभ्येति** ॥ ५६ ॥

**अ० टीका**—ननु पादोऽस्य विश्वा भूतानीत्याद्यार्थिकोदाहृतश्रुतेः स्वार्थ एव तात्पर्ये किं मानमित्याशंक्य तदुपबृंहकस्मृतिरेवेत्याह—**विष्टभ्येति** ॥ ५६ ॥

**रा० टीका**—इदानीं निर्मायस्वरूपसद्भावे प्रमाण [ऋ० सं० ८-४-१७] माह—

**स भूमिं विश्वतो वृत्वा ह्यत्यतिष्ठद्दशांगुलम् ॥**
**विकारावर्ति चात्रास्ति श्रुतिसूत्रकृतोर्वचः ॥ ५७ ॥**

**स भूमिमिति** । " विकारावर्ति च तथाहि स्थितिमाह " [ ब्र० सू० ४-४-१९ ] इति सूत्रकारवचनमित्यर्थः ॥ ५७ ॥

**अ० टीका**—ननूदाहृतस्मृतेरप्यहं लक्ष्मीपतिरिदं प्रत्यक्षादिप्रमाणगम्यं कृत्स्नं संपूर्णमपि जगत्स्थावरजंगमात्मकं वस्तुजालमेकांशे च मदाज्ञारूपसत्यसंकल्पेन विष्टभ्य नियम्य स्वस्वनियुक्तव्यवहारेतरव्यवहारतो विरुद्धस्थितोऽस्मीत्यर्थसंभवान्नैवोक्तार्थकत्वमित्याशंक्य श्रु-

* त्रिपादब्रह्मेति मैत्र्युपनिषद्यप्युक्तम् ।

त्यंतरब्रह्मसूत्राभ्यां सह विरोधान्नैवमित्याह--**स इत्यादिना** । स प्रकृतः परमात्मा । विश्वतः सर्वतः । भूमिं पृथिवीमुपलक्षणमिदं यावद्द्वैतजालस्य । वृत्त्वाऽऽकाशमिव स्वाध्यस्तनीलिमानमखिलदृश्यजालं सबाह्याभ्यंतरं समभिव्याप्येत्यर्थः । हिकारः पुरुषसूक्तप्रसिद्ध्यर्थः । **दशेत्यादि** । दशांगुलोपलक्षितोर्वरितानंतरूपं यथा स्यात्तथेति यावत् । अत्यतिष्ठदवर्ततेदित्यन्वयः । **विकारेति** । " विकारावर्ति च तथाहि स्थितिमाह " **इत्युत्तरमीमांसा**चरमलक्षणचतुर्थचरणीयैकोनविंशतितमं सूत्रमिदम् । अत्र श्रीमद्भगवत्पादीयं भाष्यम् । विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं न केवलं विकारमात्रगोचरं सवितृमंडलाद्यधिष्ठानम् । तथा ह्यस्य द्विरूपस्थितिमाहाऽऽम्नायः । तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीत्येवमादिरित्यादि ॥ ५७ ॥

**निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः ॥**
**तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी ॥ ५८ ॥**

**रा० टीका**--तर्हि निरंशत्वे विरोध इत्यस्य कः परिहार इत्याशंक्य वास्तवनिरंशत्वाभ्युपगमान्न विरोध इत्यभिप्रायेणोदाहृतश्रुत्यभिप्रायमाह **निरंशेऽपीति** ॥ ५८ ॥

**अ० टीका** नन्वेवं चेत्तर्हि सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिश्रुत्यैव सूचितेन तथा तत्तात्पर्यज्ञ**श्रीमच्चित्सुखाचार्याणां** संमतेनायं पटः एतत्तंतुनिष्ठात्यंताभावप्रतियोगी । अंशित्वादितरांशिवदित्यनुमितिध्वनितेन ब्रह्मणि निरंशत्वेन सह विरोध इत्याशंक्य द्वैतमिदं किं कृत्स्ने ब्रह्मण्यारोपितं किंवा तदीयेंऽश एवेति पृच्छत एकजीववादे प्रश्नं कुर्वतो मुमुक्षोर्नानाजीववादे मुमुक्षून्प्रतीति वा श्रोतृहितैषिणी स्वोपदेशश्रवणपरायणकल्याणकारिणी सती श्रुतिर्निरंशेऽपि ब्रह्मणि तद्भाषयैवांशमारोप्योत्तरं ब्रूतेऽतो नोक्तविरोधगंधोऽपीति समाधत्ते--**निरंशेऽपीति** ॥ ५८ ॥

**रा० टीका**--यदर्थं ब्रह्मणि माया समर्थिता तदिदानीमाह--

**सत्तत्त्वमाश्रिता शक्तिः कल्पयेत्सति विक्रियाः ॥**
**वर्णा भित्तिगता भित्तौ चित्रं नानाविधं यथा ॥ ५९ ॥**

**सत्तत्त्वमिति** । विक्रिया विविधत्वेन क्रियंत इति विक्रियाः कार्यविशेषा इत्यर्थः । तत्र दृष्टांतमाह **वर्णा इति** । वर्णा रक्तपीतादयो धातुविशेषाः ॥ ५९ ॥

**अ० टी०** फलितमाह-**सत्तत्त्वमिति** । विक्रियाः सृष्ट्यादिविकारान् । तत्र बालबुद्ध्यारोहार्थं तदिष्टं दृष्टांतं स्पष्टयति-**वर्णा इति** । वर्णशब्देनात्र रक्तपीतादिरूपविशेषप्रयोजका हिंगुलादिरंगा एव । तेऽपि वस्तुविचारे ऽधिष्ठानीभूतभित्तिसृन्मात्रत्ववत्सृन्मात्ररूपा एवाथापि चित्रजनकत्वेन जगज्जनकमायानिदर्शनीभूता इत्याकूतम । बहुवचनेन " परास्य शक्तिर्विविधैव श्रूयते " इति **श्रुति**मारम्य संग्रहः सूच्यते ॥ ५९ ॥

**रा० टीका** --तत्र प्रथमं कार्यविशेषं दर्शयति

**आद्यो विकार आकाशः सोऽवकाशस्वरूपवान् ॥**
**आकाशोऽस्तीति सत्तत्त्वमाकाशेऽप्यनुगच्छति ॥ ६० ॥**

**आद्य इति** । तत्स्वरूपमाह । **सोऽवकाश इति** । आकाशस्य ब्रह्मकार्यत्वे हेतुमाह--**आकाश इति** ॥ ६० ॥

**अ० टीका**—के तेषु सृष्ट्यादिविकारेष्वप्यवांतरविकारा इत्याशंक्य पंचभूतविवेकत इति प्रतिज्ञानुसारेण पंचैवेति विवक्षुस्तत्राप्याद्यः क इति प्रतिपित्सायां 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इति श्रुतेः सत्स्वरूपं तं कथयंस्तत्राधिष्ठानीभूतसत्तानुवृत्ति सानुभूतिं कथयति—**आद्य इति** ॥ ६० ॥

**रा० टीका**—ततः किमित्यत आह—

**एकस्वभावं सत्तत्त्वमाकाशो द्विस्वभावकः ॥**
**नावकाशः सति व्योम्नि स चैषोऽपि द्वयं स्थितम् ॥६१॥**

**एकेति** । उक्तमर्थं विशदयति—**नावकाश इति** । सति सद्वस्तुन्यवकाशो नास्ति किंतु सत्स्वभाव एक एवाऽऽकाशे तु स च सत्स्वभावश्चैषोऽप्यवकाशस्वभावोऽपीति द्वयं स्थितं विद्यत इत्यर्थः ॥ ६१ ॥

**अ० टीका** नन्ववकाशो ह्यवयवशून्यत्वमेव सावयवे हि भित्त्यादौ नैवावकाशो दृश्यते । तथाच पृथ्व्यादिभूतचतुष्टयपरमाण्वाख्यावरणाभाव एवाऽऽकाशपदार्थस्तथाऽस्तीत्याख्यातेन वर्तमानकालवाचिलडंतेन तादृक्काल एवोक्ताभावाधिकरणत्वेन बोध्यत इति नैव सद्वस्तु ब्रह्म नापि तच्छक्तिकल्पितस्तत्राऽऽकाशाख्यः कश्चित्प्रथमविकार इत्याशंक्य वर्तमानकालादावपि सदनुवेधेनैव स्वरूपलाभादवकाशावरणाभावशब्दयोरपर्यायत्वात्प्रवृत्तिनिमित्तीभूतशक्यतावच्छेदकभेदाद्व्यवहारभेदाच्च मैवमित्याशयेन सत्तत्त्वाकाशयोः स्वभावभेदं विशदयति—**एकेति** । स कालत्रयाबाध्यत्वरूपः सद्वस्तुस्वभावः । एषोऽवकाशः ॥ ६१ ॥

**रा० टीका**—सदाकाशयोरेकद्विस्वभावत्वं प्रकारांतरेण व्युत्पादयति—

**यद्वा प्रतिध्वनिर्व्योम्नो गुणो नासौ सतीक्ष्यते ॥**
**व्योम्नि द्वौ सद्ध्वनी तेन सदेकं द्विगुणं वियत् ॥ ६२ ॥**

**यद्वेति** । प्रतिध्वनिर्व्योम्नो गुण इत्युपपादितमधस्तात् । असौ प्रतिध्वनिः सद्वस्तुनि नेक्ष्यते नोपलभ्यते व्योम्नि तु सद्ध्वनी सच्छब्दावुभावप्युपलभ्येते तेन कारणेन सदेकस्वभावं वियद्द्विगुणं द्विस्वभावकमित्यर्थः ॥ ६२ ॥

**अ० टीका**—ननु प्राक्प्रतिध्वनिर्वियच्छब्द इत्याकाशस्यासाधारणो गुणः शब्द एवोक्तं इत्यत आह—**यद्वेति** । नन्वथापि किं प्रकृत आयातमित्यत्राऽऽह—**व्योम्नीति** । ततोऽपि किमित्यतः फलितं कथयति —**तेनेत्यादिशेषेण** । एकमद्वैतस्वरूपमेवेत्यर्थः । द्विगुणं द्वितीयो गुणः शब्दाख्यासाधारणो धर्मो यत्र तत्तथा । एवं च भ्रमोपादानाज्ञानविषयीभूताधिष्ठानसत्तैव सूक्ष्मशब्दाख्यगुणभ्रमवती वियद्भवतीति यावत् ॥ ६२ ॥

**रा० टीका**—नन्वाकाशस्य सद्ब्रह्मकार्यत्व आकाशस्य सत्तेति सत आकाशधर्मता कुतः प्रतिभातीत्याशंक्याऽऽह—

**या शक्तिः कल्पयेद्व्योम सा सद्व्योम्नोरभिन्नताम् ॥**
**आपाद्य धर्मधर्मित्वं व्यत्ययेनावकल्पयेत् ॥ ६३ ॥**

**या शक्तिरिति** । या माया सद्वस्तुन्याकाशं कल्पयति सा प्रथमतः सद्व्योम्नोरभेदं कल्पयित्वा पश्चात्तद्धर्मधर्मिभावं वैपरीत्येन कल्पयत्यत आकाशस्य सत्तेति भानमुपपद्यत इत्यर्थः ॥ ६३ ॥

**अ० टीका—नन्वेवं तर्हि सच्छब्द इत्येव प्रतीयान्न त्वाकाशस्य सत्ताशब्दस्य**

सत्तेति च । प्रतीयते तु प्रायस्तथेत्याशंक्य समाधत्ते—**येति**। व्यत्ययो वैपरीत्यम् । तथाचाविद्यकशब्दैकगुणकावकाशात्मकाकाशाख्याद्यविवर्ततादात्म्यापन्नाधिष्ठानीभूताद्वैतब्रह्मस्वरूपसत्तेवेदं रजतमिति रजतमिदमिति च वत्सन्नाकाशः सञ्शब्दश्चेति स्वयं धर्मिण्यप्याकाशादिधर्मेतापन्नाऽप्याकाशस्य सत्तेत्यादिप्रतीतियोग्याऽपि भवतीति भावः ॥ ६३ ॥

**रा० टीका**—मायया वैपरीत्यं कथं कृतमित्याशंक्याऽऽह—

**सतो व्योमत्वमापन्नं व्योम्नः सत्तां तु लौकिकाः ॥**
**तार्किकाश्चावगच्छंति मायाया उचितं हि तत् ॥६४॥**

**सत इति** । वस्तुतत्त्वविचारे क्रियमाणे मृदो घटरूपत्वमिव सतो व्योमत्वमापन्नं सद्वस्तुन आकाशरूपत्वं प्राप्तं लौकिकाः प्राणिनः शास्त्रेषु मध्ये तार्किकाश्च तद्वैपरीत्येन **व्योम्नो** गगनस्य धर्मिणः सत्तां सद्रूपधर्मजातिं चावगच्छंति जानंति । नन्वन्यस्यान्यथाप्रतीतिरनुपपन्नेत्याशंक्याऽऽह—**मायाया इति** । तद्विपरीतदर्शनहेतुत्वं मायाया युक्तमित्यर्थः ॥ ६४ ॥

**अ० टीका**—तदेवाधिष्ठानाध्यस्तयोः सद्व्योम्नोर्मायिकधर्मिधर्मभाववैपरीत्यकल्पनं विशदयति—**सत इति** । यन्मायया सतो व्योमत्वमाकाशत्वमापन्नं प्राप्तं भवति तदेव तु लौकिकाः सर्वेऽप्यसंस्कृताः प्राणिनस्तथा संस्कृतेष्वपि **तार्किकास्तर्कप्रधानगौतमकणादमतोप**लक्षितसकलभेदवादिनोऽपि व्योम्नो धर्मिणः सत्तां धर्मीभूतां परसामान्याख्यां द्रव्यादिभिन्नवृत्तिस्तु सत्तापरतयोच्यत इति **विश्वनाथपंचानन**वचनादुत्कटजातिमवगच्छंति कल्पयंतीत्यन्वयः । ननु कुत एवं **तैर्थिकाणाम**पि भ्रमस्तत्राऽऽह—**मायाया इत्यादिशेषेण** ॥ ६४ ॥

**रा० टीका**—मायाया विपरीतप्रतीतिहेतुत्वं लौकिकन्यायप्रदर्शनेन स्पष्टीकरोति—

**यद्यथा वर्तते तस्य तथात्वं भाति मानतः ॥**
**अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्वलौकिकः ॥ ६५ ॥**

**यद्यथेति** । यच्छुक्त्यादि यथा येन शुक्तिकादिरूपेण वर्तते तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरत्यन्यथात्वं रजतादिरूपत्वं तद्भ्रमेण भ्रांत्या प्रतिभातीत्ययं न्यायः सर्वलोकप्रसिद्ध इत्यर्थः ॥ ६५ ॥

**अ० टीका**—तदेव लौकिकन्यायतः स्फुटयति—**यदिति** ॥ ६५ ॥

**रा० टीका**—एवं भ्रांत्या विपरीतप्रतिभानं दर्शयित्वा तन्निवृत्त्युपायमाह—

**एवं श्रुतिविचारात्प्राग्यथा यद्वस्तु भासते ॥**
**विचारेण विपर्येति ततस्तच्चिंत्यतां वियत् ॥ ६६ ॥**

**एवमिति** । एवमुक्तेन प्रकारेण श्रुतिविचारात्प्राक्श्रुत्यर्थविचारात्पूर्वं यद्वस्तु यत्सद्रूपं ब्रह्म भ्रांत्या यथा येन गगनादिरूपेण वर्तते तच्छ्रुत्यर्थपर्यालोचनेन विपर्येति गगनादिभावं परित्यज्य सद्रूपं ब्रह्मैव भवति । ततः श्रुतिविचारेण वस्तुयाथात्म्यदर्शनसंभवात्तद्वियच्चिंत्यतां विचार्यतामित्यर्थः ॥ ६६ ॥

**अ० टीका**—उक्तन्यायमेव प्रकृते योजयन्नाकाशीयोत्कर्षातिकविचारावश्यकतां विधत्ते—**एवमिति । श्रुतीत्यादि** । यद्वस्तु द्वैतांतःपातिपदार्थजातम् । **श्रुतीति** । वेदांतविचारात्प्राक् पूर्वं यथा येन प्रकारेण । भासते परिस्फुरति । विचारेण तु निरुक्तविवेकेन तु

ततो निरुक्तप्रकारात् । यद्यस्माद्धेतोर्विपर्येति वैपरीत्येन प्रतीयते तत्तस्माद्धेतोः वियत्प्रकृतमाकाशं चिंत्यतां श्रुत्यंतानुसारेण विविच्यतामित्यध्याहृत्य संबंधः ॥ ६६ ॥

**रा० टीका**—विचारस्वरूपमेव दर्शयति—

**भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च भेदतः ॥**
**वाय्वादिष्वनुवृत्तं सन्न तु व्योमेति भेदधीः ॥ ६७ ॥**

**भिन्ने इति** । भिन्ने इति*प्रतिज्ञार्थे । हेतुमाह—**शब्देति** । वियत्सच्छब्दयोरपर्यायत्वादित्यर्थः । हेत्वंतरमाह—**बुद्धेश्चेति** । तमेव हेतुं विशदयति—**वाय्वादिष्विति** । यद्वाय्वादिषु भूतेषु सन्वायुः सत्तेज इत्येवं प्रकारेणानुवृत्तं भासते व्योम तु नैवं भासत इति यज्ज्ञानं सा भेदधीर्भेदबुद्धिरित्यर्थः ॥ ६७ ॥

**अ० टीका**— तत्रोक्तवियद्विचारस्वरूपं प्रदर्शयन्प्रतिजानीते—**भिन्ने इति** । वियत्सती आकाशब्रह्मणी भिन्ने व्यावहारिकभेदवती भवत इत्यर्थः । तत्र हेतुः—**शब्देत्यादिना** । घटः कलश इत्यादौ शब्दभेदेऽप्यर्थभेदाद्धेतोः साध्याभाववद्वृत्तित्वलक्षणो व्यभिचार इत्यस्वारस्यादाह—**बुद्धेश्चेत्यादि** । एवं चापर्यायशब्दजन्यबुद्धिविषयत्वभेदादित्येक एव हेतुरिति यावत् । घटपटादिवदित्यार्थिकम् । तत्र यदि वियत्सतोरभेदः स्याच्चेत्तर्हि वाय्वादिषु व्योमाननुवृत्तिवत्सतोऽप्यननुवृत्तिः स्यादिति प्रकृते तर्कमनुकूलयति—**वाय्वादिष्वित्यादिना** । न च व्योमापि वाय्वादिषु शब्दायाऽऽत्मनाऽनुगतं प्रतीयत इति सांप्रतम् । आकाशस्य वायुं प्रति परिणाम्युपादानत्वेऽपि तद्गुणस्यैव शब्दस्य शुक्लतंतोः पटे शुक्लरूपस्यैवानुवृत्तत्वं न तु तंतुपदव्यवहार्यतंतुत्वेनेति विशेषात् । ब्रह्म तु तत्र विवर्तोपादानमेवेति स्वसामान्यांशसद्रूपेणैवानुगतमिति तयोर्भेदः स्पष्ट एवेति भावः । निगमयति—**इतीत्यादिशेषेण** ॥ ६७ ॥

**रा० टीका**—एवं सदाकाशयोर्भेदं प्रसाध्य व्योम्नः सत्तेति भ्रांत्या प्रतीतस्य धर्मिधर्मभावस्य विचारेण व्यत्ययं दर्शयति—

**सद्वस्त्वधिकवृत्तित्वाद्धर्मिव्योम्नस्तु धर्मता ॥**
**धिया सतः पृथक्कारे ब्रूहि व्योम किमात्मकम् ॥ ६८ ॥**

**सद्वस्त्विति** । रूपरसादिष्वनुवृत्तस्य द्रव्यस्येवाऽऽकाशवाय्वादिष्वनुवृत्तस्य सतो धर्मित्वं रसादिभ्यो व्यावृत्तस्य रूपस्येव वाय्वादिभ्यो व्यावृत्तस्य नभसो धर्मत्वमित्यर्थः । ननु तर्हि घटाद्भिन्नरूपस्य यथा वास्तवत्वं तथा सतो भिन्नस्य नभसोऽपि स्यादित्याशंक्य सद्व्यतिरिक्तस्य नभसो दुर्निरूपत्वान्नैवमित्याह—**धियेति** ॥ ६८ ॥

**अ० टीका**—अत एव सतो धर्मित्वमित्याह—**सद्वस्त्विति** । फलितमाह—**धियेति** । तुच्छमित्याशयः ॥ ६८ ॥

**रा० टीका**—दुर्निरूपत्वमसिद्धमिति शंकते—

**अवकाशात्मकं तच्चेदसत्तदिति चिंत्यताम् ॥**
**भिन्नं सतोऽसच्च नेति वक्षि चेद्व्याहतिस्तव ॥ ६९ ॥**

**अवकाशात्मकमिति** । तर्हि सतो विलक्षणत्वादसदेव स्यादिति परिहरति—**असदिति** । सतो विलक्षणस्यासत्त्वं नास्तीति वदतो दोषमाह—**भिन्नमिति** ॥ ६९ ॥

---

* प्रतिज्ञातत्वे ।

**अ० टीका**—ननु त्वयैवाऽऽद्यो विकार आकाशः सोऽवकाशस्वरूपवानित्यादावुक्तम् । तथा भिन्ने वियत्सती इत्यादिनाऽनुपदमेव तयोर्भेदोऽपि साधितः । इदानीं तु धियेत्यादिना कथं तस्य तुच्छत्वं ध्वन्यत इत्याशयेन तच्छंकामनूद्य धिया तस्य सतः पृथक्कारादेव तुच्छत्वमिति त्वयैवानुसंधेयमिति समाधत्ते — **अवकाशेति** । ननु सद्भेदोऽस्त्वथाप्यसत्त्वलक्षणं वियतस्तुच्छत्वं माऽस्त्विति वदंतं प्रति व्याघातं प्रकटयति—**भिन्नमिति** । एवं च भिन्ने वियत्सती इत्यत्र **टीकायां** मयैतदाशयवतैव व्यावहारिकभेदवती इत्युक्तमित्यविरोधः ॥ ६९ ॥

**रा० टीका**—असत्त्वे भानं न स्यादित्याशंक्य तुच्छविलक्षणत्वाद्भानं न विरुध्यत इत्याह—

**भातीति चेद्भातु नाम भूषणं मायिकस्य तत् ॥**
**यदसद्भासमानं तन्मिथ्या स्वप्नगजादिवत् ॥ ७० ॥**

**भातीति चेदिति** । अविरोधं दर्शयितुं मिथ्यावस्तुनो लक्षणं सदृष्टांतमाह—**यदसदिति** । यद्वस्तु स्वरूपेणाविद्यमानमपि भासते तत्स्वप्नगजादिवन्मिथ्येत्यर्थः ॥ ७० ॥

**अ० टीका**—नन्वेवं तुच्छं चेत्कथं नभोऽवभातीत्याशंक्य सदसद्विलक्षणत्वलक्षणनिर्वचनीयत्वेनैव तद्भानमविरुद्धमिति समाधत्ते—**भातीत्यादिना** ॥ ७० ॥

**जातिव्यक्ती देहिदेहौ गुणद्रव्ये यथा पृथक् ॥**
**वियत्सतोस्तथैवास्तु पार्थक्यं कोऽत्र विस्मयः ॥ ७१ ॥**

**रा० टीका**—ननु नियमेन सहोपलभ्यमानयोर्भेदो न दृष्टचर इत्याशंक्याऽऽह—**जातीति** ॥ ७१ ॥

**अ० टीका**—नन्वस्तु जातिव्यक्त्यादिवद्वियत्सतोर्भेद इत्याह—**जातीति** ॥ ७१ ॥

**रा० टीका**—भेदो यद्यपि बुध्यते तथाऽपि निश्चितो न भवतीति शंकते—

**बुद्धोऽपि भेदो नो चित्ते निरूढिं याति चेत्तदा ॥**
**अनैकाग्र्यात्संशयाद्वा रूढ्यभावोऽस्य ते वद ॥ ७२ ॥**

**बुद्धोऽपीति** । तस्य परिहारं वक्तुं निश्चयाभावे कारणं पृच्छति **अनैकाग्र्यादिति** ॥ ७२ ॥

**अ० टीका**— एवमपि स्वप्नवत्तन्मिथ्यात्वमेव दुःसहमित्याशंक्य येयं सतः सकाशाद्भिन्नस्य वियतस्तत्प्रतियोगिकभेदस्य च स्वप्नगजादिवन्मिथ्यात्वदार्ढ्यलक्षणनिरूढिस्त्वच्चितेन याति तत्र किमनैकाग्र्यं संशयो वा हेतुरिति विकल्पं पृच्छति—**बुद्धोऽपीति** ॥ ७२ ॥

**रा० टीका**—आद्ये परिहारमाह—

**अप्रमत्तो भव ध्यानादाद्येऽन्यस्मिन्विवेचनम् ॥**
**कुरु प्रमाणयुक्तिभ्यां ततो रूढतमो भवेत् ॥ ७३ ॥**

**अप्रमत्त इति** । आद्ये प्रथमे विकल्पे ध्यानात्तत्र प्रत्ययैकताननता ध्यानमित्युक्तलक्षणादप्रमत्तो भव सावधानमना भवेति यावत् । द्वितीये परिहारमाह—**अन्यस्मिन्निति** । ततः किमित्यत आह—**तत इति** ॥ ७३ ॥

**अ० टीका**—एवं प्रश्ने कृतेऽपि तदुत्तरमनपेक्ष्यैव परमकरुणोत्कर्षात्स्वयमेवोभयत्रापि क्रमेणोपायावुपदिशति—**अप्रमत्त इति** । आद्येऽनैकाग्र्यात्मके सद्वस्तुतद्विवर्तरूपाकाशप्रतियोगिकतत्तादात्म्यविघटकभेदतन्मिथ्यात्वविषयकनिश्चयोदयप्रतिबंधके विषय इत्यर्थः । ध्याना-

न्मनः साक्षित्वोपलक्षितोऽहं ब्रह्मास्मीत्येकरूपप्रत्ययप्रचयरचनादित्येतत् । अन्यस्मिन्संशयाख्योक्तप्रतिबंधकविषय इति यावत् । एवं च व्युत्क्रमेण चतुर्लक्षण्यध्यायत्रयीस्वारस्यपरिशीलनं सूचितम् ॥ ७३ ॥

**रा० टीका** — ततोऽपि किमित्यत आह—

**ध्यानान्मानाद्युक्तितोऽपि रूढे भेदे वियत्सतोः ॥**
**न कदाचिद्वियत्सत्यं सद्वस्तु च्छिद्रवन्न च ॥ ७४ ॥**

**ध्यानादिति** । ध्यानं पूर्वोक्तलक्षणं मानं भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च भेदत इत्यत्रोक्तं युक्तिस्तु सद्वस्त्वधिकवृत्तित्वादित्यादावुक्ता । एतैर्ध्यानादिभिर्वियत्सतोर्भेदे चित्ते निरूढिं याते सति वियत्कदाचिन्न सत्यं किंतु सर्वदा मिथ्यैवावभासते सद्वस्त्वपि छिद्रवदवकाशवन्न च नैव भवतीति शेषः ॥ ७४ ॥

**अ० टीका**—नन्वेतावदायासस्य किं फलमित्यत आह—**ध्यानादिति** ॥ ७४ ॥

**ज्ञस्य भाति सदा व्योम निस्तत्त्वोल्लेखपूर्वकम् ॥**
**सद्वस्त्वपि विभात्यस्य निश्छिद्रत्वपुरःसरम् ॥ ७५ ॥**

**रा० टीका**—वियत्सत्त्वविवेचने फलमाह—**ज्ञस्येति** ॥ ७५ ॥

**अ० टीका**—ननु कस्येदं फलं कलावप्यद्यकलितमित्यत्राऽऽह—**ज्ञस्येत्यादि**द्वाभ्याम् ॥ ७५ ॥

**रा० टीका**—वियन्मिथ्यात्वं सतो वस्तुत्वं च सदा चिंतयतः किं भवतीत्यत आह—

**वासनायां प्रवृद्धायां वियत्सत्यत्ववादिनम् ॥**
**सन्मात्राबोधयुक्तं च दृष्ट्वा विस्मयते बुधः ॥ ७६ ॥**

**वासनायामिति** । बुधो वियत्सतोस्तत्त्ववेत्ता गगनस्य सत्यत्वं ब्रुवाणं निरवकाशसद्वस्त्ववबोधरहितं च दृष्ट्वा विस्मयं प्राप्नोतीत्यर्थः ॥ ७६ ॥

**अ० टीका**—वासनायां वियन्मिथ्यात्वाद्यनुसंधानसंस्कारपरंपरायामित्यर्थः । बुधो ब्रह्मनिष्ठः ॥ ७६ ॥

**एवमाकाशमिथ्यात्वे सत्सत्यत्वे च वासिते ॥**
**न्यायेनानेन वाय्वादेः सद्वस्तु प्रविविच्यताम् ॥ ७७ ॥**

**रा० टीका**—उक्तन्यायमन्यत्राप्यतिदिशति —**एवमिति** ॥ ७७ ॥

**अ० टीका**—उक्तन्यायमन्यत्राप्यतिदिशति **एवमिति** । वासिते जनितदृढसंस्कारावध्यनुसंधिते सतीत्यर्थः ॥ ७७ ॥

**सद्वस्तुन्येकदेशस्था माया तत्रैकदेशगम् ॥**
**वियत्तत्राप्येकदेशगतो वायुः प्रकल्पितः ॥ ७८ ॥**

**रा० टीका**—नन्वाकाशकार्यस्य वायोरकारणभूतेन सद्वस्तुना तादात्म्यप्रतीत्ययोगात्सतो विवेचनमप्रयोजकमित्याशंक्य साक्षात्संबंधाभावेऽपि परंपरया संबंधोऽस्तीत्याह—**सद्वस्तुनेति** ॥ ७८ ॥

**अ० टी०**—तत्राऽऽदौ वायुविवेचनप्रकारं स्फोरयति—**सद्वस्तुनीत्यादित्रिभिः** ॥७८॥

**रा० टीका**—एवं सद्वाय्वोः संबंधं प्रदर्श्य तयोर्धर्मतो भेदज्ञानाय वायौ प्रतीयमानान्धर्मानाह—

**शोषस्पर्शौ गतिर्वेगो वायुधर्मा इमे मताः ॥**
**त्रयः स्वभावाः सन्मायाव्योम्नां ये तेऽपि वायुगाः ॥७९॥**

**शोषस्पर्शाविति** । एवं प्रातिस्विकान्धर्मानभिधाय कारणतः प्राप्तांस्तानाह—**त्रय इति** । सन्मायाव्योम्नां ये त्रयः स्वभावाः शीलविशेषा धर्मास्तेऽपि वायुगा वायौ विद्यंत इत्यर्थः ॥ ७९ ॥

**अ० टीका—शोषेति** । यद्यपि स्पर्श एव वायोः प्रधानो धर्म इत्यधस्तात्सिद्धांतितमथापि ' न शोषयति मारुतः ' इति स्मृतेः प्रत्यक्षतोऽपि वायुमात्रकरणकक्लिन्नवसनशुष्कीभावस्य तन्निष्ठगत्यादेश्चोपलम्भाच्च शोषगतिवेगा अप्यवांतरास्तद्धर्माः संतीत्यविरोधः । न च धर्मिप्रत्यक्षमंतरा धर्माणां गत्यादीनां प्रत्यक्षविषयत्वासंभवात्सति कुड्ये चित्रमिति न्यायेन तस्यैवाऽऽदौ न्यायमतेऽनुमितिमात्रविषयत्वाच्चानुचितमेवेदं तद्गत्यादिप्रत्यक्षोपन्यसनवचनमिति वाच्यम् । यदि वायुः प्रत्यक्षो न स्याच्चेच्छीतलं वायुं स्पृशामीति सर्वजनीनोऽनुभव एव बाधितः स्यादतो बह्वनुग्रहस्य न्याय्यत्वेन स्पर्शानुमेयो वायुरिति तार्किकोक्तिरेव त्याज्यत्वात् । विस्तरस्त्वाकरत एव ज्ञेय इति दिक् ॥ ७९ ॥

**रा० टीका**—के ते धर्मा इत्यत आह—

**वायुरस्तीति सद्भावः सतो वायौ पृथक्कृते ॥**
**निस्तत्त्वरूपता मायास्वभावो व्योमगो ध्वनिः ॥ ८० ॥**

**वायुरिति** । वायुरस्तीतिव्यवहारहेतुसद्रूपत्वं सद्वस्तुनो धर्म एकः । वायौ सद्वस्तुनो विवेचिते सति यन्निस्तत्त्वरूपत्वं स मायाधर्मो द्वितीयः । शब्दो व्योम्नः सकाशादागतो धर्मस्तृतीय इत्यर्थः ॥ ८० ॥

**अ० टीका—वायुरिति** । सद्भावः सत्त्वम् ॥ ८० ॥

**रा० टीका**—ननु व्योमविवेचनप्रस्तावे वाय्वादिष्वनुवृत्तं सत्र तु व्योमेति भेदधीरित्यत्र वाय्वादावाकाशानुवृत्तिर्निवारिता, इदानीं व्योमानुवृत्तिरभिधीयतेऽतः पूर्वोत्तरविरोध इति शंकते—

**सतोनुवृत्तिः सर्वत्र व्योम्नो नेति पुरेरितम् ॥**
**व्योमानुवृत्तिरधुना कथं न व्याहतं वचः ॥ ८१ ॥**

**सत इति** । व्योमानुवृत्तिरधुनोच्यत इति शेषः ॥ ८१ ॥

**अ० टीका**—नत्र वाय्वादिष्वनुवृत्तं सन्नतु व्योमेति पूर्वोक्तव्याघातं **शंकते—सत इति** ॥ ८१ ॥

**छिद्रानुवृत्तिर्नेतीति पूर्वोक्तिरधुना त्वियम् ॥**
**शब्दानुवृत्तिरेवोक्ता वचसो व्याहतिः कुतः ॥ ८२ ॥**

**रा० टीका**—पूर्वमवकाशलक्षणस्वरूपानुवृत्तिर्निवारिता । इदानीं धर्मानुवृत्तिरेवाभिधीयते न स्वरूपानुवृत्तिरतो न व्याहतिरिति परिहरति—**छिद्रेति** ॥ ८२ ॥

**अ० टीका**—विषयभेदेन वचसोः साफल्यमिति समाधत्ते—**छिद्रेति**। एवमेव मया तव्द्याख्यान एवाशंक्य समाहितमिति द्रष्टव्यम् ॥ ८२ ॥

**ननु सद्वस्तुपार्थक्यादसत्त्वं चेत्तदा कथम् ॥**
**अव्यक्तमायावैषम्यादमायामयताऽपि नो ॥ ८३ ॥**

**रा० टीका**—ननु वायोः सद्ब्रह्मविलक्षणत्वादसत्त्वलक्षणं मायामयत्वं यद्युच्यते तर्ह्यव्यक्तस्वरूपमायाविलक्षण्यादमायामयत्वमपि किं न स्यादिति चोदयति—**नन्विति** ॥८३॥

**अ० टीका**—पुनः शिष्य एव शंकते—**नन्विति**। कथं शब्दोऽयमपि शब्दादूर्ध्वं योज्यः। तथाच यदि वायोः सद्वस्तुपार्थक्यादतत्त्वं स्याच्चेत्तर्ह्यव्यक्तमायावैषम्यादमायामयताऽपि कथं नो स्यादिति शंकाशयः ॥ ८३ ॥

**निस्तत्त्वरूपतैवात्र मायात्वस्य प्रयोजिका ॥**
**सा शक्तिकार्ययोस्तुल्या व्यक्ताव्यक्तत्वभेदिनोः ॥८४॥**

**रा० टीका**—नाव्यक्तत्वं मायामयत्वे प्रयोजकं किंतु निस्तत्त्वरूपत्वं तत्तु मायायामिव वाय्वादावप्यस्तीति न मायामयत्वहानिरिति परिहरति—**निस्तत्त्वेति** ॥ ८४ ॥

**अ० टीका**—असत्त्वं हि प्रकृतेन तुच्छत्वं किंतु निस्तत्त्वरूपत्वमेवेति समाधत्ते—**निस्तत्त्वेति** ॥ ८४ ॥

**रा० टीका**—ननु शक्तिकार्ययोरुभयोरपि निस्तत्त्वरूपतायामविशिष्टायां व्यक्ताव्यक्तत्वलक्षणो भेदः कुत इत्याशंक्य तद्विचारः प्रस्तुतानुपयुक्त इति परिहरति—

**सदसत्त्वविवेकस्य प्रस्तुतत्वात्स चिंत्यताम् ॥**
**असतोऽवांतरो भेद आस्तां तच्चिंतयाऽत्र किम् ॥ ८५ ॥**

**सदसत्त्वेति**। असतो मायातत्कार्यरूपस्यावांतरभेदो व्यक्ताव्यक्तत्वरूप इत्यर्थः॥८५॥

**अ० टीका**—एवं यदि शक्तिकार्ययोर्निस्तत्त्वरूपत्वं तुल्यमेव तर्हि कार्यस्य व्यक्तत्वं शक्तस्त्वव्यक्तत्वं किं निबंधमित्याशंक्य कार्यत्वादिनिबंधन एव सभेद इत्यभिसंधायैवमसद्वस्त्ववांतरभेदविचारे फलाभावे। प्रधानीभूतसफलसद्वस्त्वधारणविलंबसंभवेन च तत्रोपेक्षैव वरमिति समाधत्ते—**सदासत्त्वेति** ॥ ८५ ॥

**रा० टीका**—फलितमाह—

**सद्वस्तु ब्रह्म शिष्टोंऽशो वायुर्मिथ्या यथा वियत् ॥**
**वासयित्वा चिरं वायोर्मिथ्यात्वं मरुतं त्यजेत् ॥ ८६ ॥**

**सद्वस्त्विति**। वायौ यः सदंशस्तद्ब्रह्मरूपं शिष्टोंऽशो निस्तत्त्वान्निर्वायोः स्वरूपं स च वायुः निस्तत्त्वरूपत्वादेवाऽऽकाशवन्मिथ्या। इत्थं वायोर्मिथ्यात्वं चिरं वासयित्वा मरुतं त्यजेन्मरुत्सत्य इति बुद्धिं त्यजेदित्यर्थः ॥ ८६ ॥

**अ० टीका**—ततः प्रकृते किं सिद्धमिति तदाह—**सद्वस्त्विति** ॥ ८६ ॥

**रा० टीका**—वायावुक्तं विचारं तेजस्यप्यतिदिशति—

**चिंतयेद्वह्निमप्येवं मरुतो न्यूनवर्तिनम् ॥**
**ब्रह्मांडावरणेष्वेषा न्यूनाधिकविचारणा ॥ ८७ ॥**

**चिंतयेदिति** । ननु सद्वस्तुन्येकदेशस्था माया तत्रेत्यादिना वियदादीनां न्यूनाधिकभाव उक्तः स लोके न क्वापि दृश्यत इत्याशंक्याऽऽह—**ब्रह्मांडेति** ॥ ८७ ॥

**अ० टीका**—उक्तन्यायं तेजस्यप्यतिदिशति—**चिंतयेदिति** । ननु वह्नेर्वायुसकाशान्न्यूनवर्तित्वं कथमध्यवसेयमित्यत आह—**ब्रह्माण्डेति** ॥ ८७ ॥

**रा० टीका**—वायोः कियतांऽशेन न्यूनो वह्निरित्यत आह—

**वायोर्दशांशतो न्यूनो वह्निर्वायौ प्रकल्पितः ॥**
**पुराणोक्तं तारतम्यं दशांशैर्भूतपंचके ॥ ८८ ॥**

**वायोरिति** । तस्य वास्तवत्वशंकां वारयति—**वायाविति** । नन्वयं न्यूनाधिकभावः स्वकपोलकल्पित इत्याशंक्याऽऽह—**पुराणोक्तमिति** ॥ ८८ ॥

**अ० टीका**—कियांस्तदंशो न्यून इत्यत्राऽऽह—**वायोरिति** । वायौ वाय्ववच्छिन्नचैतन्य इत्यर्थः । प्रकल्पितमाययाऽध्यस्त इति यावत् । नन्वेवं नियमने किं मानमित्यत आह—**पुराणेति** । तदुक्तं **भागवते तृतीयस्कंधे** षड्विंशेऽध्याये—

" एतदंडं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ॥
तोयादिभिः परिवृतं प्रधानेनाऽऽवृतं बहिः " इति ॥

अत्र पार्थिवब्रह्मांडापेक्षया तदावरणीभूततोयस्य दशगुणाधिक्यं ततस्तदपेक्षया तेजस्ततो वायोस्तत आकाशस्येति स्फुटमेव । तेनाऽऽकाशापेक्षया दशांशतो न्यूनो वायुस्ततो दशांशतो न्यूनो वह्निरित्यादि सर्वं संगतमेतत् । प्रधानमत्र त्रिगुणा मायैव ॥ ८८ ॥

**रा० टीका**—वह्नेः स्वरूपमाह—

**वह्निरुष्णः प्रकाशात्मा पूर्वानुगतिरत्र च ॥**
**अस्ति वह्निः स निस्तत्त्वः शब्दवान्स्पर्शवानपि ॥ ८९ ॥**

**वह्निरिति** । अत्रापि वायाविव कारणधर्मा अनुगता इत्याह—**पूर्वेति** । के ते धर्मा इत्याकांक्षायामाह—**अस्तीति** ॥ ८९ ॥

**अ० टीका**—ननु किं वह्नेः स्वरूपमित्यत आह—**वह्निरिति** । अत्राप्युक्तां पूर्वानुगतिं स्पष्टयति—**अस्तीति** । स तु सतः पृथक्कारे निस्तत्त्वो भवतीत्यर्थः ॥ ८९ ॥

**रा० टीका**—एवमग्नौ कारणधर्मानुगत्यनुवादपूर्वकं स्वकीयं धर्मं दर्शयति—

**सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजो गुणः ॥**
**रूपं तत्र सतः सर्वमन्यद्बुद्ध्या विविच्यताम् ॥ ९० ॥**

**सन्मायेति** । इत्थं सविशेषणं वह्निस्वरूपं व्युत्पाद्येदानीं सद्वस्तुनो वह्निं विविनक्ति—**तत्रेति** । तत्र तेषु मध्ये सतः सद्वस्तुनोऽन्यत्सर्वं धर्मजातं मिथ्येति बुद्ध्या विविच्य तां पृथक्क्रियतामित्यर्थः ॥ ९० ॥

**अ० टीका**—एवमस्तीत्यादिसदाद्यनुवृत्तिमतोऽग्नेः को निजो गुण इत्यत आह—**सदिति** । तत्रापि प्राग्वदेव सतः पृथक्कारं विधत्ते—**तत्रेत्यादिशेषेण** ॥ ९० ॥

**सतो विवेचिते वह्नौ मिथ्यात्वे सति वासिते ॥**
**आपो दशांशतो न्यूनाः कल्पिता इति चिंतयेत् ॥९१॥**

**रा० टीका**—एवं वह्नेर्मिथ्यात्वनिश्चयानंतरमपां मिथ्यात्वं चिंतयेदित्याह—**सत इति** ॥ ९१ ॥

**अ० टी०**—तत्फले तन्मिथ्यात्वदार्ढ्ये सत्यपामप्येवं चिंतनं विधत्ते—**आप इति**॥९१॥

**संत्यापोऽमूः शून्यतत्त्वाः सशब्दस्पर्शसंयुताः ॥**
**रूपवत्योऽन्यधर्मानुवृत्त्या स्वीयो रसो गुणः ॥ ९२ ॥**

**रा० टीका**—अस्यापि कारणधर्मान्स्वधर्मांश्च विभज्य दर्शयति—**संत्याप इति** । शब्देन सह वर्तत इति सशब्दः सशब्दश्चासौ स्पर्शश्च सशब्दस्पर्शस्तेन युक्ता इत्यर्थः ॥ ९२ ॥

**अ० टीका**—अथाप्सु सदाद्यनुवृत्तिं तन्मुख्यगुणं च विवृणोति—**संतीति । सेति ।** सशब्दः शब्दसहितो यः स्पर्शस्तेन संयुता इति विग्रहः स्वीय आसामिति शेषः । अस्तीत्यार्थिकम् ॥ ९२ ॥

**सतो विवेचितास्वप्सु तन्मिथ्यात्वे च वासिते ॥**
**भूमिर्दशांशतो न्यूना कल्पिताऽप्स्विति चिंतयेत् ॥९३॥**

**रा० टीका**—विवेकध्यानाभ्यामपां मिथ्यात्वं निश्चित्यानंतरं भूमेर्मिथ्यात्वं चिंतनीयमित्याह—**सत इति** ॥ ९३ ॥

**अ० टीका**—अत्रापि प्राग्वन्मिथ्यात्वदार्ढ्ये सति भूमिचिंतनं विधत्ते—**सत इति ।** शिष्टं तु प्राग्वदेव ॥ ९३ ॥

**रा० टीका**—तस्या मिथ्यात्वचिंतनाय तद्धर्मानपि विभजते—

**अस्ति भूस्तत्त्वशून्याऽस्यां शब्दस्पर्शौ सरूपकौ ॥**
**रसश्च परतो गंधो नैजः सत्ता विविच्यताम् ॥ ९४ ॥**

**अस्ति भूरिति** । तेभ्यः सत्तामात्रं पृथक्कर्तव्यमित्याह—**सत्तेति** ॥ ९४ ॥

**अ० टीका**—एवमत्राप्यन्यधर्मानुवृत्तिं स्वकीयं प्रधानं गुणं च वदंस्तत्रापि सत्ता विवेचनीयेत्याह—**अस्ति भूरिति । तत्त्वेति** । स्वतः सत्ताशून्या मिथ्येत्यर्थः ॥ ९४ ॥

**रा० टीका**—सत्तापृथक्करणे फलमाह—

**पृथक्कृतायां सत्तायां भूमिर्मिथ्याऽवशिष्यते ॥**
**भूमेर्दशांशतो न्यूनं ब्रह्मांडं भूमिमध्यगम् ॥ ९५ ॥**

**पृथगिति** । इदानीं भौतिकेभ्यो ब्रह्मांडादिभ्यः सतो विवेचनाय तदवस्थानप्रकारं दर्शयति—**भूमेरिति** ॥ ९५ ॥

**अ० टीका**—फलितमाह—**पृथगितिप्रभृति त्रिभिः । भूमीति** । अस्तीति शेषः॥९५॥

**ब्रह्मांडमध्ये तिष्ठंति भुवनानि चतुर्दश ॥**
**भुवनेषु वसंत्येषु प्राणिदेहा यथायथम् ॥ ९६ ॥**

**रा० टीका**—**ब्रह्मांडेति** । स्पष्टम् ॥ ९६ ॥

**अ० टीका**—**ब्रह्मांडेति** । यथायथं यथा यथा शास्त्रव्यवस्थामनतिक्रम्येत्यर्थः॥९६॥

**ब्रह्मांडलोकदेहेषु सद्वस्तुनि पृथक्कृते ॥**
**असंतोऽडादयो भांतु तद्भानेऽपीह का क्षतिः ॥ ९७ ॥**

**रा॰ टीका**—तेषु सद्विवेचने फलमाह—**ब्रह्मांडेति** ॥ ९७ ॥

**अ॰ टीका**—**ब्रह्मांडलोकेति** । अत्र देहशब्देन प्राग्वर्णितत्वहिरादींद्रियसहितप्राणवायुविशिष्टसूक्ष्मदेहान्वितस्थूलदेहा बोध्यास्तेन त्वंपदार्थशुद्धिरपीत्याकूतम् ॥ ९७ ॥

**रा॰ टीका**—तद्ध्याने का क्षतिरित्युक्तमेवार्थं स्पष्टीकरोति—

**भूतभौतिकमायानामसत्त्वेऽत्यंतवासिते ॥**
**सद्वस्त्वद्वैतमित्येषा धीर्विपर्येति न क्वचित् ॥ ९८ ॥**

**भूतेति** । भूतानामाकाशादीनां भौतिकानां ब्रह्मांडादीनां मायायाश्च तत्कारणभूताया मिथ्यात्वे विवेकध्यानाभ्यां चित्ते दृढं वासिते सति सद्वस्तुनोऽद्वैतत्वबुद्धिः कदाचिन्न विहन्यत इत्यर्थः ॥ ९८ ॥

**अ॰ टीका**—नन्वेवमपि शोधिततत्पदार्थभूतसद्वस्तुनः सकाशात्पृथक्कृताः संतो ब्रह्मांडलोकदेहाः सत्ताशून्यत्वेन मिथ्याभूता एव भांतु नामेत्युक्तमयुक्तम् । तावन्मात्रेणामुक्त्यसिद्धेः । न ह्यहं ब्रह्म न जानामीत्यनुभूयमानस्याज्ञानस्य ध्वस्तिलक्षणा मुक्तिः सच्चिदानंदितब्रह्माभिन्नं सर्वं मिथ्येति प्रमित्या सिद्ध्यति । ज्ञानाज्ञानयोः समानाश्रयविषयकत्वेनैव विरोधादिति चेन्न । भावानवबोधात् । तथाहि लिंगदेहांतःपातिनोऽहंकारस्यापि ब्रह्मरूपात्सद्वस्तुनः पार्थक्यान्मिथ्यात्वे सिद्धे तदवच्छिन्नचैतन्यरूपजीवाश्रितस्य ब्रह्मविषयकाज्ञानस्याद्वैतसद्वस्तुरूपब्रह्मात्मैक्यज्ञानेनैवावच्छेदकीभूताश्रयनाशेनापि च नष्टत्वात्सैव एव जीवन्मुक्तिरित्यभिप्रेत्याह—**भूतभौतिकेति** । एतावद्भूत द्वैतमित्युक्तं सिद्धांतबिन्दावपि । अविद्यातद्व्याप्यतत्कार्यात्मकः प्रपंचो दृश्यपदार्थः । तस्य चापारमार्थिकत्वेपि व्यावहारिकसत्त्वाभ्युपगमान्न स्वाप्निकपदार्थवन्निरूपणं व्यर्थम् । उपासनाद्युपयोगात्सोऽपि त्रिविधः । अव्याकृतमूर्तामूर्तभेदात् । तत्र सामान्याविद्या मूर्तामूर्तप्रपंचबीजशक्तिरूपा तदजन्यत्वेऽपि तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैश्चैतन्यतत्संबंधजीवेशविभागचिदाभासैः सह नादित्वादव्याकृतमित्युच्यत इति । ननु मूले भूतभौतिकमायाख्यपदार्थत्रयात्मकमेव द्वैतमित्यार्थिकमुत्तरग्रंथस्यथानुपपत्त्योक्तम् (?) । **सिद्धांतबिंदौ** त्वविद्यातद्व्याप्यतत्कार्यात्मकं तदव्याकृतमूर्तामूर्ताख्यं पुनस्त्रिप्रकारकं चाप्युक्तं तत्कथमेतदेकवाक्यत्वमिति चेत्सत्यम् । मूले मायापदेनाव्याकृतस्यैवाविद्यातद्व्याप्यात्मकस्य **सिद्धांतबिंदु**व्याख्यानरीत्या विवक्षितत्वावश्यकत्वादन्यथा मायापदेनाविद्याग्रहेऽपि मूलतदितरगतादिदृश्यचतुष्टयासंग्रहापत्तेश्च । एवं मूले भूतभौतिकपदाभ्यां मूर्तामूर्तात्मकमविद्याकार्यमेव **सिद्धांतबिंदु**विवृतं विवक्षितमिति सुधीभिरेवैकमत्यता । न चैवमपि **सिद्धांतबिंदा**वविद्येत्यादिना दृश्यपदार्थं निरूप्य पुनः सोऽपि त्रिविध इत्यादिना तदाम्रेडनं किमिति कृतमिति सांप्रतम् । पूर्वसूत्रितस्यैवोत्तरवाक्येन विवृतत्वात् । नन्वथाप्येतावानेव दृश्यपदार्थ इति तु निर्विवादमेव । तथाच प्रातिभासिकस्य दृश्यपदार्थस्य क्वांतर्भावः । न चाविद्याकार्य एवेति वाच्यम् । निरुक्ताविद्यादिदृश्यपदार्थस्य व्यावहारिकसत्त्वाभ्युपगमेन प्रातिभासिकस्यास्य तत्रांतर्भावासंभवात् । नापि विमतं मिथ्यादृश्यत्वाच्छुक्तिरजतवदित्याद्यद्वैतसिद्ध्याद्यनुमानेषु दृष्टांतीकृतस्य तस्य मिथ्यात्वेनोभयवादिसंमतत्वात्प्रकृतेऽनुपन्यास इति सांप्रतम् । **प्रकृतग्रंथस्य**—

"न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा ॥

अविद्यात्मकत्वात्त्रयाणां तुरीयस्तदेकोऽवशिष्टः शिवः केवलोऽहम् " ॥

**इत्यष्टमश्लोकटीकां** प्रकृत्य । अत्र लयक्रमेणापौर्वापर्यव्यपदेशः । तथाह्यस्मन्मते पदार्थौ द्विविधः । दृग्दृश्यश्च । अन्यवादिपरिकल्पितानां पदार्थानामत्रैवांतर्भावादित्यादिनाऽऽत्मजिज्ञासुं प्रत्येवोपन्यासात्तेन तं प्रति मूलश्लोके स्वप्नादिनिषेधस्येव प्रातिभासिकस्यापि दृश्यपदार्थस्यावश्यावक्तव्यत्वाच्च । तस्मात्किमत्र **श्रीमन्मधुसूदनसरस्व**तीस्वारस्यमिति नैव वयं जानीमः । आकलय सावधानतया—तैरत्रैव ग्रंथेऽस्ति सोऽपि प्रातिभासिको दृश्यपदार्थः सूक्तः निरुक्तदृश्यपदार्थं प्रकृत्य । तस्य चापारमार्थिकत्वेऽपि व्यावहारिकसत्त्वाभ्युपगमान्न स्वाप्निकपदार्थवन्निरूपणं व्यर्थमित्युक्तम् । तथाच व्यर्थनिरूपणत्वेन तेषां संमतः स्वाप्निकादिः प्रातिभासिकोऽपि दृश्यपदार्थः संभवतीत्यवश्यं वक्तव्यमेव । अन्यथा ग्रंथस्वारस्यभंगापत्तेर्दुर्वारत्वात् । न हि तमश्चरखद्योतवद्दिवाकरः खद्योतो भगवाननमस्कार्य इति वदतस्तमश्चरत्वानमस्कार्यत्वाभ्यां कश्चित्खद्योतपदशक्यश्चेतनोनभिमत इति शिशुभिरपि श्रद्धेयम् । एवं च सोऽपि त्रिविध इत्यत्र तच्छब्देनोपासनाद्युपयुक्तव्यावहारिकदृश्यपदार्थपरामर्शं विधायाव्याकृतादित्रैविध्यविधानेऽपि तत्समभिव्याहृतेनापिशब्देन प्रातिभासिकोऽपि दृश्यपदार्थस्तावदव्याकृतमूर्तामूर्तभेदात्त्रिविध इति वाच्यमेव । तथैवोत्तरग्रंथस्वारस्यात् । तद्यथाऽत्रैवाग्रे जाग्रदवस्थां प्रकृत्योक्तम् । शुक्तिरजतादिज्ञानानामप्रामाणिकत्वात्तद्विषयस्याव्यावहारिकत्वेऽपींद्रियव्यापारकालीनत्वाज्जागरणत्वोपपत्तिरिति । तथाऽग्रेऽत्रैव जाग्रदाद्यवस्थात्रयस्यापि प्रत्येकं त्रैविध्यं प्रकृत्य स्वप्नत्रैविध्येऽप्युक्तम् । एवं स्वप्ने मंत्रादिप्राप्तिः स्वप्नजाग्रत् । स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः । जाग्रद्दशायां कथयितुं न शक्यते स्वप्नावस्थायां च यत्किंचिदनुभूयते तत्स्वप्नसुपुप्तिरिति । एवं चेयमुक्तलक्षणा स्वप्नसुपुप्तिस्तथा जागरेऽपि गाढांधकारे मया किंचिदरण्ये दृष्टमथापि तत्किं श्वापदादिकं वा पिशाचादिकं वेति कथयितुं न शक्यत इत्यादिभ्रमश्चाव्याकृतः प्रातिभासिकः । तथा निरुक्तस्वप्नजाग्रच्छुक्तिरजतादिभ्रमश्च मूर्तोऽसौ । तद्वदुक्तस्वप्नस्तथा जागरेऽपि मनोराज्यं चामूर्त एव स इति समुपपन्नमेव प्रातिभासिकदृश्यत्रैविध्यमपि। अस्पष्टत्वविस्पष्टत्वेपद्विस्पष्टत्वरूपाणामव्याकृतत्वादित्रिकासाधारणधर्माणां व्यावहारिकाव्याकृतादिष्विवात्राप्यदंडवारितत्वमेवाथापि ब्रह्मप्रमेतराबाध्यत्वतद्बाध्यत्वाभ्यां व्यावहारिकत्वाद्युपपत्तिरिति सर्वमवदातम् । ननु भवत्वेवं निदर्शित**सिद्धांतबिंदु**व्यवस्था तथाऽपि भूतभौतिकमायानामिति प्रकृतमूलव्यवस्था कथम् । तत्र मायापदेनाव्याकृतविवक्षायामपि भूतादिपदेन यथासंभवं मूर्ताद्यात्मकाविद्याकार्यविवक्षायामपि सत्याव्यावहारिकद्वैतेतरप्रातिभासिकद्वैतस्य क्व संग्रहः स्यात् । न च तस्यासत्त्वलक्षणमिथ्यात्वदार्ढ्येसर्वसंमतत्वेन पुनस्तत्कथनेऽनुवादापत्तेस्तदसंग्रहोऽभीष्ट एवेति वाच्यम् । स्वतःसत्ताशून्यत्वादिलक्षणमिथ्यात्वस्य स्वसंमतस्यानिर्वचनीयख्यातीतरान्यथादिख्यातिवादिनां केषांचिदपि **तैर्थिकाणाम**संमतत्वात् । तस्मात्तव्द्युत्पादनार्थं तत्संग्रहावश्यकत्वमेवेति चेच्छृणु । स्यान्माया शांबरीकृपा । दंभो बुद्धिश्चेति **हैमात् ।** माया स्याच्छांबरीबुद्ध्योरिति **मेदिन्याश्च** । मायाशब्दस्य शांबर्यादैंद्रजालिकविरचितभ्रांतिविशेषस्यापि वाचकत्वेन भूतान्याकाशादीनि च भौतिकानि तत्कार्याणि बुद्ध्यादीनि च माये अव्याकृतैंद्रजालादिभ्रांती चेति तथा तासामिति व्युत्पत्त्या प्रकृतेऽपि प्रातिभासिकदृश्यसंग्रहः संभवत्येवेति सरसतरहृदयाः सदया एव विदांकुर्वंत्विति संक्षेपः ॥ ९८ ॥

**सदद्वैतात्पृथग्भूते द्वैते भूम्यादिरूपिणि ॥**
**तत्तदर्थक्रिया लोके यथा दृष्टा तथैव सा ॥ ९९ ॥**

**रा०टी०**—ननु भूम्यादीनाममत्त्वे विदुषो व्यवहारलोपः प्रसज्जेतेत्याशंक्य विवेकेन मिथ्यात्वनिश्चयेऽपि भूम्यादेः स्वरूपोपमर्दनाभावान्न व्यवहारो लुप्यत इत्याह—**सदद्वैतादिति**॥९९॥

**अ० टीका**—ननु भूम्यादिसकलद्वैतस्य सद्वस्तुनः पृथक्कारे सति सद्वस्तुब्रह्माद्वैतमेवाहमस्मीत्येषा बुद्धिर्यदि क्वचिदपि देशे कालेऽहं ब्राह्मणो दृश्यं सत्यमित्यादिलक्षणविपर्ययं मैवं तु तथापि ब्रह्मविदः प्रारब्धपरिसमाप्त्यवधिप्रतीयमानद्वैतव्यवहारलोपः स्याज्ज्ञानाज्ञानयोर्यौगपद्यासंभवात्तथा सति सुखाद्यन्यतरसाक्षात्कारलक्षणं भोगं प्रारब्धकर्मापि कथं कुर्यादित्याशंक्य समाधत्ते—**सदिति** । भूम्यादिरूपद्वैतस्य मिथ्यात्वेऽपि तत्साध्यतत्तदर्थक्रियायाः प्रागिवेव सत्त्वात्सुखादिवृत्तीतरकालावच्छेदेनोक्ताद्वैतात्मवृत्तिसंभवेन प्रारब्धकर्मोपभोगजीवन्मुक्तिस्वमद्युवतिसंभोगयोरपि संभवाच्च न काऽप्यनुपपत्तिरित्याकूतम् । अत एवाऽऽहुः **श्रीमत्सर्वज्ञात्ममुनीश्वरचरणाः**—

"पश्यामि चित्रमिव सर्वमिदं द्वितीयं तिष्ठामि निष्कलचिदेकवपुष्यनंते॥
आत्मानमद्वयमनंतसुखैकरूपं पश्यामि दग्धरशनामिव च प्रपंचम् ॥
अद्वैतमप्यनुभवामि करस्थबिल्वतुल्यं शरीरमहिनिर्ल्वयनीव वीक्षे ।
एवं च जीवनमिव प्रतिभासनं च निःश्रेयसाधिगमनं च मम प्रसिद्धम् " इति ॥

अहिनिर्ल्वयनी सर्पत्वगिति सांप्रदायिकाः । तन्मूलं तु "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते " इति जीवन्मुक्तं प्रकृत्य श्रुतिरेवेति दिक् ॥ ९९ ॥

**सांख्यकाणादबौद्धाद्यैर्जगद्भेदो यथा यथा ॥**
**उत्प्रेक्ष्यतेऽनेकयुक्त्या भवत्वेष तथा तथा ॥ १०० ॥**

**रा०टी०**—ननु सत्तत्त्वस्याद्वैतरूपत्वे सांख्यादिभिरभिधीयमानस्य भेदस्य कुतो न निरासः क्रियत इत्याशंक्य व्यावहारिकभेदस्यास्माभिरभ्युपगतत्वान्न तन्निरासाय प्रयत्यत इत्याह—**सांख्येति** ॥ १०० ॥

**अ० टीका**—नन्वेतावता प्रतिभाससमानस्य द्वैतस्याऽऽकाशकार्ण्यवदनादर एव भवतु पर्यवसन्नस्तथाऽपि **सांख्यादिशास्त्रकारैः** सत्यत्वेन प्रतिपादितस्य भेदस्य खंडनार्थं तु विदुषा यतितव्यमेव ततश्च महाविक्षेप इत्याक्षिप्य समाधत्ते—**सांख्येति** । व्यावहारिकभेदस्य सिद्धांतेऽपीष्टत्वादविरोध एवेति भावः ॥ ११० ॥

**रा० टीका**—ननु प्रमाणसिद्धस्य सत्त्वभेदस्यावज्ञाऽनुपपन्नेत्याशंक्याऽऽह—

**अवज्ञातं सदद्वैतं निःशंकैरन्यवादिभिः ॥**
**एवं का क्षतिरस्माकं तद्द्वैतमवजानताम् ॥ १०१ ॥**

**अवज्ञातमिति** । यथाऽन्यवादिभिः सांख्यादिभिर्निःशंकं श्रुत्यादिसिद्धस्यापि सदद्वैतस्यावज्ञा क्रियते श्रुतियुक्त्यनुभवावष्टंभनास्माभिस्तदीयद्वैतानादरणे किं हीयत इत्यर्थः ॥१०१॥

**अ० टीका**—नन्वेवमपि द्वैतावज्ञायामेव पर्यवसानमिति चेद्भद्रवादिदृष्टांतेनैव तदिष्टमेवेति स्पष्टयति—**अवज्ञातमिति** ॥ १०१ ॥

**द्वैतावज्ञा सुस्थिता चेदद्वैते धीः स्थिरा भवेत् ॥**
**स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते ॥ १०२ ॥**

**रा०टी०**—ननु निष्प्रयोजनेयं द्वैतावज्ञेत्याशंक्य जिवन्मुक्तिलक्षणप्रयोजनसद्भावान्मैवमित्याह—**द्वैतेति** ॥ १०२ ॥

**अ० टीका**—नन्विदं द्वैतावहेलनं प्रौढीवादमात्रं ततः फलाभावादित्यत आह—**द्वैतावज्ञेति**। ततः किं तत्राऽऽह—**स्थैर्य इति**। एवं चाद्वैतात्मैकविषयकस्थिरधीत्वमेव जीवन्मुक्तत्वमिति तल्लक्षणं फलितमिति तत्त्वम् ॥ १०२ ॥

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥**
**स्थित्वाऽस्यामंतकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ १०३ ॥**

**रा०टी०**—न केवलं जीवन्मुक्तिरेव प्रयोजनमपि तु विदेहमुक्तिरपीत्यभिप्रायेण कृष्णवाक्यमपि [ भ० गी० २–७२ ] उदाहरति–**एषेति** ॥ १०३ ॥

**अ० टीका**—ननु किमत्र मानमिति चेद्भगवद्गीतैवेति वदंस्तद्वाक्यमेव पठति—**एषेति**। ब्राह्मयद्वैतब्रह्मात्मैक्यसंबंधिनीत्यर्थः। स्थितिः। तद्विषयकबुद्धिस्थिरतेति यावत् ॥ १०३॥

**रा० टीका**—अंतकालशब्देन वर्तमानदेहपातोऽभिधीयत इत्याशंकां वारयितुं विवक्षितमर्थमाह—

**सदद्वैतेऽनृतद्वैते यदन्योन्यैक्यवीक्षणम् ॥**
**तस्यांतकालस्तद्भेदबुद्धिरेव न चेतरः ॥ १०४ ॥**

**सदद्वैत इति**। सद्रूपेऽद्वैतेऽनृतरूपे द्वैते च यदन्योन्याध्यासलक्षणमैक्यज्ञानमस्ति तस्यैक्यभ्रमस्यांतकालो नाम तयोरद्वैतद्वैतयोः सत्यानृतरूपेण भेदबुद्धिरेव नापरो वर्तमानदेहपात इत्यर्थः ॥ १०४ ॥

**अ० टीका**—ननूक्तबुद्धिस्थिरतालाभादस्तु मोहाभावस्तन्मूलीभूतस्याज्ञानस्यैव नष्टत्वादथापि तत्रांतकालावच्छेदेन स्थितिश्चेद्विदेहकैवल्यं स्यान्नान्यथेत्युत्तरार्धस्वारस्यात्प्रतीयते। समुचितमेवेदम्

"अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः" ॥

इत्यादितद्वाक्यशेषादित्याशंक्यांतकालपदार्थं प्रकृतसंमतं विवृण्वन्समाधत्ते—**सदद्वैत इति**। अवच्छेदकत्वमेव सप्तम्योरर्थः। एवं च सदद्वैतत्वावच्छेदेनानृतद्वैतत्वावच्छेदेन च यत्परस्परैक्याध्यासानुभवनं सद्द्वैतमिति द्वैते सद्वस्तुनः संसृष्टतया सद्वस्तुनि च द्वैतस्य तादात्म्येनाऽऽरोपणमिति यावत्। **तस्येति**। शिष्टं तु स्पष्टमेव ॥ १०४ ॥

**यद्वांऽतकालः प्राणस्य वियोगोऽस्तु प्रसिद्धितः ॥**
**तस्मिन्कालेऽपि न भ्रांतेर्गतायाः पुनरागमः ॥ १०५ ॥**

**रा०टी०**—इदानीं लोकप्रसिद्धार्थस्वीकारेऽपि न दोष इत्यभिप्रायेणाऽऽह-**यद्वेति**॥ १०५॥

**अ० टीका**—ननूक्तांतकालस्तु दृढतरद्वैतावज्ञापूर्वकाद्वैतविषयकधीस्थैर्यप्रयोजकब्रह्मात्मैक्यविषयकप्रमैव पर्यवस्यतीति कथं तत्पश्चाद्भाविन्याः प्रोक्तधीस्थिरतायास्तदवच्छे-

देन स्वविषयकसाक्षित्वानुसंधानशालिने मुक्तिदातृत्वमुचिततामेष्येत तस्याः प्रागेव सिद्धत्वादित्यस्वरसादाह— यद्वेति । तस्मिन्निति । एवं च पूर्वगतायां भ्रांतेर्द्वैतावज्ञा सुस्थत्वपूर्वकाद्वैतविषयकधीस्थैर्यशालिनः प्राणवियोगलक्षणांतकालावच्छेदेनापि पुनर्मूर्छादिनाऽऽगमः प्राप्तिनैव भवतीत्यन्वयः । एवं चास्यामुक्तलक्षणब्राह्मस्थितौ स्थित्वा दृढतमाभ्यासं विधायांतकाले मरणकालिकमूर्छादिसत्त्वेऽपि ब्रह्म निर्वाणमृच्छत्येवेति **गीतावाक्याशयो**ऽपि ज्ञेयः ॥ १०५ ॥

**नीरोग उपविष्टो वा रुग्णो वा विलुठन्भुवि ॥**
**मूर्छितो वा त्यजत्वेष प्राणान्भ्रांतिर्न सर्वथा ॥ १०६ ॥**

**रा० टीका**—उक्तमेवार्थं प्रपंचयति—**नीरोग इति** ॥ १०६ ॥

**अ० टीका**—ननु तस्मिन्कालेऽपीत्यादि सद्योमुक्तिपरमेवास्तु तथा च पूर्वाभ्यस्तश्रवणादिपरिपाकसहकृताष्टांगयोगविशिष्टनिर्गुणाहंग्रहोपासनावशात्प्रारब्धपरिसमाप्तिलक्षणमरणक्षण एवाद्वैतब्रह्मात्मैक्यविषयकादहं ब्रह्मास्मीत्यभ्यस्तमहावाक्यजन्यसाक्षात्कारादृतताया अपि दैवाद्द्वैतभ्रांतेः पुनरागमः कालांतरे प्राप्तिर्नैव भवतीति प्रागुक्तरीत्या नैव जीवन्मुक्तिपरमिदं व्याख्येयमिति चेत्सत्यम् । इदं हि वाक्यमेषा ब्राह्मीत्यादि प्रागुदाहृत**भगवद्गीतावाक्य**स्थांतकालविवरणार्थमिति तु निर्विवादमेव । तथा चैवं व्याख्याने तत्रत्यस्य " एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति " इत्यस्य जीवन्मुक्तिपरस्य बाधापत्तेः । न च पूर्वार्धमिदं जीवन्मुक्तिपरं भवतु स्थित्वेत्याद्युत्तरार्धं तु सद्योमुक्तिपरमेव स्यात्तथा च पक्षद्वयस्यापि शास्त्रसिद्धस्यानुग्रहसूचकापिशब्दोऽपि संगच्छेतेति वाच्यम् । " अर्जुन उवाच—स्थितप्रज्ञस्य का भाषा " इत्याद्युपक्रमे जीवन्मुक्तस्यैवोपन्यासेनोपसंहारेऽपि तथैव वाच्यत्वात् । तस्मादेवमेव **भाष्यादिसिद्धांत** इति मूलकारः स्वाशयं विशदयति—**नीरोग इति** । पुनरुदियादिति शेषः ॥ १०६ ॥

**रा० टीका**—ननु प्राणवियोगकाले मूर्छादिना ज्ञाननाशे भ्रांतिः स्यादेवेत्याशंक्य ज्ञाननाशाभावे दृष्टांतमाह—

**दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम् ॥**
**परेद्युर्नानधीतः स्यात्तद्वद्विद्या न नश्यति ॥ १०७ ॥**

**दिन इति** । यथा प्रत्यहमधीते वेदे स्वप्नसुषुप्त्याद्यवस्थायां विस्मृतेऽपि परेद्युरनधीतवेदत्वं नास्ति तथा मृतिकालेऽपि तत्त्वानुसंधानाभावेऽपि ज्ञाननाशाभाव इत्यर्थः ॥ १०७ ॥

**अ० टीका**—ननु विस्मृत्या पुनर्भ्रांतिः संभवत्येवेत्यत आह—**दिने दिन इति** ॥ १०७ ॥

**प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना ॥**
**न नश्यति न वेदांतात्प्रबलं मानमीक्ष्यते ॥ १०८ ॥**

**रा० टीका**—ज्ञाननाशाभावमेवोपपादयति - **प्रमाणेति** ॥ १०८ ॥

**अ० टीका**—विद्याफलानाशे हेत्वंतरमप्याह— **प्रमाणेति** ॥ १०८ ॥

**तस्माद्वेदांतसंसिद्धं सदद्वैतं न बाध्यते ॥**
**अंतकालेऽप्यतो भूतविवेकान्निर्वृतिः स्थिता ॥ १०९ ॥**

**इति श्रीविद्यारण्यमुनिविरचितायां पञ्चदश्यां महाभूतविवेकाख्यं द्वितीयं प्रकरणं समाप्तम् ॥ २ ॥ ॥ ॥ ॥ ॥**

**रा० टीका**—उपपादितमर्थमुपसंहरति—**तस्मादिति** ॥ १०९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्येन विदुषा विरचिता महाभूतविवेकदीपिका समाप्ता ॥ २ ॥ ॥ ॥

**अ० टी०**—फलितं कथयन्नुपसंहरति—**तस्मादिति**। अंतकालेऽपि न बाध्यत इति संबंधः। एवं च सर्वमद्वैतशास्त्रं निर्गुण एव ब्रह्मात्मैक्यलक्षणकैवल्यरूपाद्वैतसद्वस्तुन्येव पर्यवसन्नमेतेन—

" सगुणे ब्रह्मण्यखिलं पर्यवसानं प्रयाति शास्त्रमिदम् ।
इति दृढतमबुद्धिर्यो प्रतिबंधोऽयं द्वितीय ईशमितौ " ॥

इति शोधिततत्पदार्थबोधे द्वितीयः प्रतिबंध उक्तस्तथा—

" एवं समन्वयोक्तेर्भूतविचारेण तत्पदस्यार्थे ।
तत्परता निर्णेया तस्य रसादित्यादिना द्वितीयेऽपि " ॥

इत्यनेन द्वितीयप्रकरणस्य तद्बाधकत्वं यदुक्तं तत्संगतमेव । तद्यथा—सदद्वैतमित्युपक्रम्य तस्माद्वेदांतसंसिद्धं सदद्वैतं न बाध्यत इत्युपसंहृतमिति ब्रह्मणि वेदांतसमन्वय एकं लिगम्

" इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ॥
सदेवाऽऽसीन्नामरूपे नाऽऽस्तामित्यारुणेर्वचः " इति ॥
" तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते " इति ।

ततो नावयवा इत्यादि **चाभ्यासः** ।

" अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिभिः " **इत्यपूर्वता** ॥
" द्वैतावज्ञा सुस्थिता चेदद्वैते धीः स्थिरा भवेत् ॥
स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते " इति **फलम्** ॥
" विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥
इति कृष्णोऽर्जुनायाऽऽह जगतस्त्वेकदेशताम् " **इत्यर्थवादः** ॥
" सत्तत्त्वमाश्रिता शक्तिः कल्पयेत्सति विक्रियाः ॥
वर्णाभित्तिगता भित्तौ चित्रं नानाविधं यथा " ॥

इत्याद्युपपत्तिरिति षोढा लिंगैरत्राद्वैतब्रह्मण्येव वेदांतानां **छांदोग्यो**पलक्षितानामखिलानामपि तात्पर्यपर्यवसानलक्षणः समन्वयः साधितः प्राधान्येनेति सगुणे ब्रह्मण्यखिलशास्त्रपर्यवसानबुद्धिदार्ढ्यलक्षणः प्रोक्तप्रतिबंधः **श्रीगुरूपसत्ति**पूर्वकमेतत्प्रकरणस्याधिकारिणा विवरणे क्रियमाणे कथं न बाध्येतेति सर्वं शिवम् ॥ १०९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमण**षष्ठ्युपनामकश्रीनारायण**शास्त्रिचरणसरोजराजहंसायमानमानस**मोडकोपनामकाच्युतशर्मणा** विद्यार्थिना विरचितायां **पूर्णानंदेंदुकौमुद्यभि**धायां **पंचदशीटीकायां भूतविवेकप्रकाशो** द्वितीयः संपूर्णः ॥ २ ॥

श्रीमच्छंकरगुरुवरचरणसरोरुहार्पणोऽस्तु सततमतितराम् ।
श्रीरस्तु सर्वदा गोब्राह्मणवर्यवेदतदनुकूलशास्त्राणामतुला ॥

# अथ पञ्चभूतविवेकाख्यं तृतीयं प्रकरणम् ।

**रा० टीका**—नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
पंचकोशविवेकस्य कुर्वे व्याख्यां समासतः ॥ १ ॥

तैत्तिरीयोपनिषत्तात्पर्यव्याख्यानरूपं पंचकोशविवेकाख्यं प्रकरणमारभमाण आचार्यस्तत्र श्रोतृप्रवृत्तिसिद्धये सप्रयोजनमभिधेयं सूचयन्मुखतश्चिकीर्षितं ग्रंथं प्रतिजानीते—

**गुहाहितं ब्रह्म यत्तत्पंचकोशविवेकतः ॥**
**बोद्धुं शक्यं ततः कोशपंचकं प्रविविच्यते ॥ १ ॥**

**गुहाहितमिति** । " यो वेद निहितं गुहायां परमे व्योमन् " [ तैत्ति० २–१–१ ] इति श्रुत्या गुहाहितत्वेनाभिहितं यद्ब्रह्मास्ति तद्गुहाशब्दवाच्यान्नमयादिकोशपंचकविवेकेन ज्ञातुं शक्यते ततस्तेषां कोशानां पंचकं प्रकर्षेण प्रत्यगात्मनः सकाशाद्विभज्य प्रदर्श्यत इत्यर्थः ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ॥
सर्वांश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
**श्रीमन्नारायणाख्यं** स्वगुरुमपि **महादेवसंज्ञं** प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ॥
कोशविवेकं रामप्रकाशतो द्योतयामि कौमुद्याः ॥ २ ॥

अथ भगवा**न्विद्यारण्यमुनिः** कोशविवेकाख्यं प्रकरणं चिकीर्षुः संभावितप्रत्यूहप्रशमफलकं प्रथितप्रमाणकं च ब्रह्मात्मतत्त्वानुसंधानात्मकं मंगलं कलयन्प्रेक्षावत्प्रवृत्तये विषयप्रयोजने अपि व्यंजयन्नेतद्वचनं प्रतिजानीते—**गुहेति** । **तैत्तिरीयोपनिषदि**—" ब्रह्मविदाप्नोति परम " इति मुमुक्षोर्ब्रह्मविषयकप्रमैककरणकमविद्याविद्यमानद्वैतबाधलक्षणं मोक्षं प्रतिज्ञाय ज्ञेयलक्षणाकांक्षायां तत्सत्यं ज्ञानमित्यादिना संक्षिप्य क्व तदिति जिज्ञासायां यो वेद निहितं गुहायामित्यादिनाऽऽम्नायते यद्गुहाशब्दितवक्ष्यमाणं देहादिपंचकोशपरं परोपलक्षितानाद्यविद्यारोपितद्वैताधिष्ठानीभूतं ब्रह्मात्मवस्तु यतस्तदेकायत्तसत्ताप्रकाशोक्तकोशादिदृश्यमात्रप्रतियोगिकतदुपादानकपृथक्कारलक्षणद्वैतबाधेनैव स्वप्रकाशतया बोद्धुं शक्यमतस्तच्छ्रुतियुक्त्यनुभूतिलक्षणप्रकर्षेण विचारपूर्वकं बोध्यत इत्यर्थः ॥ १ ॥

**रा० टीका**—ननु कयं गुहा यस्यां निहितं ब्रह्म कोशपंचकविवेकेनावबुध्यत इत्याशंक्य श्रुत्या गुहाशब्देन विवक्षितमर्थमाह—

**देहादभ्यंतरः प्राणः प्राणादभ्यंतरं मनः ॥**
**ततः कर्ता ततो भोक्ता गुहा सेयं परंपरा ॥ २ ॥**

**देहादिति** । देहादन्नमयात्प्राणः प्राणमयोऽभ्यंतर आंतरः प्राणात्प्राणमयान्मनो मनो-

मयोऽभ्यंतर आंतरस्ततो मनोमयात्कर्ता विज्ञानमय आंतर इत्यनुषज्यते । ततो विज्ञानमयाद्भोक्ताऽऽनंदमयः सोऽपि पूर्ववदांतर इत्यर्थः । सेयमन्नमयाद्यानंदमयांतानां परंपरा गुहाशब्देनोच्यत इत्यर्थः ॥ २ ॥

**अ० टीका**—का सा गुहेत्यत आह—**देहादिति** । कर्ता विज्ञानमयः कोशः । भोक्ताऽऽनंदमयः । न च कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यानौचित्यमितिवाच्यम् । तत्तत्कोशोपाधिना तत्तत्संज्ञासत्त्वेऽपि पंचस्वपि तादात्म्यापन्नचिदाभासैक्यात् ॥ २ ॥

**रा० टीका**—इदानीमन्नमयस्य स्वरूपं तदनात्मत्वं च दर्शयति—

**पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्धते ॥**

**देहः सोऽन्नमयो नाऽऽत्मा प्राक् चोर्ध्वं तदभावतः ॥ ३ ॥**

**पितृभुक्तेति** । पितृभुक्तान्नजान्मातृभुक्ताद्यवव्रीह्यादिलक्षणादन्नाज्जायमानं यद्वीर्यमस्ति तस्माद्वीर्याद्यो देहो जातो यश्च जननानंतरं क्षीराद्यन्नेनैव वर्धते स देहोऽन्नमयोऽन्नस्य विकारः स आत्मा न भवति । कुत इत्यत आह—**प्रागिति** । जन्मनः प्राङ्मरणादूर्ध्वं च तदभावतस्तस्य देहस्याभावादित्यर्थः। विवादाध्यासितो देह आत्मा न भवति कार्यत्वाद्घटादिवदिति भावः॥३॥

**अ० टीका**—तत्राऽऽदौ स्थूलदेहस्य "स एव एष पुरुषोऽन्नरसमयः" इतिश्रुतेरन्नान्वयादिनाऽन्नमयो देहः । आत्मा न । प्रागभावादिति यौगित्वाद्घटवदित्यनुभूतिघटितयुक्तेश्चानात्मत्वं साधयति—**पितृभुक्तेति** । प्राग्वीर्यनिषेकात्पूर्वम् । ऊर्ध्वं पंचत्वादनंतरमित्यर्थः॥३॥

**रा० टीका**—हेतुरस्तु साध्यं मा भूद्विपक्षे बाधकाभावादप्रयोजकोऽयं हेतुरित्याशंक्याकृताभ्यागमकृतविप्रणाशाख्यबाधकसद्भावान्मैवमिति परिहरति—

**पूर्वजन्मन्यसन्नेतज्जन्म संपादयेत्कथम् ॥**

**भाविजन्मन्यसत्कर्म न भुंजीतेह संचितम् ॥ ४ ॥**

**पूर्वजन्मनीति** । एतद्देहरूपस्याऽऽत्मनः पूर्वस्मिञ्जन्मन्यसत्त्वादेतज्जन्महेत्वदृष्टासंभवेऽप्यस्य जन्मनोऽप्यंगीक्रियमाणत्वादकृताभ्यागमः प्रसज्जेत तथा भाविजन्मन्यप्यस्य देहरूपस्याऽऽत्मनोऽसत्त्वादभावादिहानुष्ठितयोः पुण्यपापयोः फलभोक्तुरभावेन भोगमंतरेणापि कर्मक्षयः प्रसज्जेत । अयं कृतविप्रणाशः । एवं कृतनाशाकृताभ्यागमरूपबाधकसद्भावादात्मनः कार्यत्वं नांगीकर्तव्यमिति भावः ॥ ४ ॥

**अ० टीका**—ननु बाधकाभावादप्रयोजकत्वं हेतोरित्याशंक्य बाधकाभावोऽसिद्ध इत्याह—**पूर्वेति** । स्थूलदेह एवऽऽत्मा चेत्पूर्वजन्मन्यसावसन्निति तु निर्विवादमेव तथा चैतज्जन्मसंपादकक्रियाकर्त्रभावादेतज्जन्मायं देहरूप आत्मा कथं संपादयेन्न कथमपि साधयितुं शक्नुयादित्यन्वयः । तथा चाकृताभ्यागमः प्रसिद्ध एव दोषः स्यादित्याशयः । एवं कृतविप्रणाशमपि तं व्यनक्ति—**भावीति** । तद्वद्भाविजन्मन्यप्यसन्नसौ देहरूप आत्मा इह स्वध्वंसतः प्राक्कालावच्छेदेन संचितं कर्म न भुंजीत भोगमंतराऽपि तन्नाशो भूयादिति भावः ॥ ४ ॥

**रा० टीका**—एवमन्नमयकोशस्यानात्मत्वं प्रदर्श्य प्राणमयकोशस्य स्वरूपं तदनात्मत्वं च दर्शयति—

**पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्तकः ॥**

**वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात् ॥ ५ ॥**

**पूर्ण इति ।** यो वायुर्देहे पूर्णः पादादिमस्तकपर्यंतं व्याप्तः सन्बलं यच्छन्व्यानरूपेण सामर्थ्यं प्रयच्छन्नक्षाणां चक्षुरादीनामिंद्रियाणां प्रवर्तकः प्रेरको वर्तते स वायुः प्राणमय इत्युच्यते । असावप्यात्मा न भवति तत्र हेतुमाह--**चैतन्येति ।** विवादाध्यासितः प्राण आत्मा न भवति जडत्वाद्घटादिवदिति भावः ॥ ५ ॥

**अ० टीका**—एवं देहात्मवादिनं **चार्वाकं** निरस्य **हैरण्यगर्भाः** प्राणात्मवादिनस्त्वेवमूचिर इति **चित्रदीपवचनात्**प्राणमयकोशविवेचनेन तान्निराकरोति—**पूर्ण इति ।** यो देहे बलं यच्छन्पूर्णोऽत एवाक्षाणामिंद्रियाणां प्रवर्तको वायुः प्राणमयोऽसावपि चैतन्यवर्जनाज्जडत्वादात्मा न भवतीति योजना । प्राग्वदेव श्रुत्याद्यत्राप्यूह्यम् ॥ ५ ॥

**रा० टीका**—इदानीं मनोमयस्वरूपदर्शनपूर्वकं तस्याप्यनात्मत्वमाह—

**अहंतां ममतां देहे गेहादौ च करोति यः ॥**
**कामाद्यवस्थया भ्रांतो नासावात्मा मनोमयः ॥ ६ ॥**

**अहंतामिति ।** देहेऽहंतामहंभावं गृहादौ ममतां मदीयत्वाभिमानं च यः करोत्यसौ मनोमय इति स आत्मा न भवति । कुत इत्यत आह--**कामादीति ।** हेतुगर्भं विशेषणं कामक्रोधादिवृत्तिमत्त्वेनानियतस्वभावत्वादित्यर्थः । मनोमय आत्मा न भवति विकारित्वाद्देहवदिति भावः ॥ ६ ॥

**अ० टीका**—एवं मन आत्मवादं निराकुर्वाणो मनोमयकोशं विवेचयति--**अहंतामिति ।** भ्रांतविकारी । एतेनानात्मत्वे हेतुः परिणामित्वं द्योतितम् ॥ ६ ॥

**रा० टीका**—अनंतरं कर्तृशब्दवाच्यस्य विज्ञानमयस्य स्वरूपं प्रदर्शयंस्तदनात्मत्वं दर्शयति—

**लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ॥**
**चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥ ७ ॥**

**लीनेति ।** या चिच्छायोपेता धीश्चिदाभासयुक्ता बुद्धिः सुप्तौ सुप्तिकाले लीना विलीना सती बोधे जागरणकाल आनखाग्रपर्यंतं वर्तमाना सती वपुः शरीरं व्याप्नुयात्संव्याप्य वर्तेते सा विज्ञानमयशब्दभाग्विज्ञानमयशब्देनोच्यमानाऽसावप्यात्मा न भवति विलयाद्यवस्थावत्त्वाद्घटादिवदित्यर्थः ॥ ७ ॥

**अ० टीका**—अथ बौद्धं खंडयन्विज्ञानमयकोशमपि विवेचयति—**लीनेति ।** चिच्छायाचिदाभासः। अत्र सुप्तौ लीनत्वमनात्मत्वे हेतुः ॥ ७ ॥

**रा० टीका**—ननु मनोबुद्ध्योरंतःकरणत्वाविशेषान्मनोमयविज्ञानमयरूपेण कोशद्वयकल्पनाऽनुपपन्नेत्याशंक्य कर्तृत्वकरणत्वाभ्यां भेदसद्भावाद्धटत एव मनोमयत्वादिभेद इत्याह—

**कर्तृत्वकरणत्वाभ्यां विक्रियेतांतरिंद्रियम् ॥**
**विज्ञानमनसी अंतर्बहिश्चैते परस्परम् ॥ ८ ॥**

**कर्तृत्वेति ।** अंतरिंद्रियमंतःकरणं कर्तृत्वकरणत्वाभ्यां कर्तृरूपेण करणरूपेण च विक्रियेत परिणमत इत्यर्थः । एते कर्तृकरणे विज्ञानमनसी विज्ञानमनःशब्दवाच्ये भवतः । एते च परस्परमंतर्बहिर्भावेन वर्तेते अतः कोशद्वयमुपपद्यत इत्यर्थः ॥ ८ ॥

**अ० टीका**—ननु मनोविज्ञानमयकोशयोः को विशेष इत्यत्राऽऽह—**कर्तृत्वेति ।** अंतरिंद्रियमंतःकरणम् । परस्परमन्योन्यं निरूप्यनिरूपकभाविनेत्यार्थिकम् । **कर्तृत्वेति ।** एवं चांतःकरणविकारविशेषनिष्ठकर्तृत्वनिरूपितमेवापरतद्विकारविशेषे करणत्वं तन्निष्ठकरणत्वनिरूपितमेव पूर्वनिष्ठं कर्तृत्वमिति तत्त्वम् । यदा विक्रियेत तदा विज्ञानमनसी अंतर्बहिश्च भवत इत्यन्वयः ॥ ८ ॥

**रा० टीका**—इदानीं भोक्तृशब्दवाच्यस्याऽऽनंदमयस्यानात्मत्वं दर्शयितुं तस्य च स्वरूपमाह—

**काचिदंतर्मुखा वृत्तिरानंदप्रतिबिंबभाक् ॥**
**पुण्यभोगे भोगशांतौ निद्रारूपेण लीयते ॥ ९ ॥**

**काचिदिति ।** पुण्यभोगे पुण्यकर्मफलानुभवकाले काचिद्धीवृत्तिरंतर्मुखा सत्यानंदप्रतिबिंबभागात्मस्वरूपस्याऽऽनंदस्य प्रतिबिंबं भजते सेव भोगशांतौ पुण्यकर्मफलभोगोपरमे सति निद्रारूपेण लीयते विलीना भवति सा वृत्तिरानंदमय इत्यभिप्रायः ॥ ९ ॥

**अ० टीका**—एवं कोशत्रयात्मकं लिंगदेहं निरस्य कारणदेहाख्यमानंदमयकोशं निराकर्तुं तं व्युत्पादयति—**काचिदिति ।** वृत्तिर्जाग्रदादौ मनसः सुप्तावविद्यायाः ॥ ९ ॥

**रा० टीका**—तस्यानात्मत्वमाह—

**कादाचित्कत्वतो नाऽऽत्मा स्यादानंदमयोऽप्ययम् ॥**
**बिंबभूतो य आनंद आत्माऽसौ सर्वदास्थितेः ॥ १० ॥**

**कादाचित्कत्वत इति ।** अयमानंदमयोऽपि कादाचित्कत्वादात्मा न स्यादभ्रादिपदार्थवदित्यर्थः । ननु विद्यमानानामानंदमयादीनां सर्वेषामात्मत्वनिरासे नैरात्म्यं प्रसज्जेतेत्याशंक्याऽऽह—**बिंबभूत इति ।** बुद्ध्यादौ प्रतिबिंबतयाऽवस्थितस्य प्रियादिशब्दवाच्यस्याऽऽनंदमयस्य बिंबभूतः कारणभूतो य आनंदोऽसावेवाऽऽत्मा भवति । कुत इत्यत आह—**सर्वदेति ।** नित्यत्वादित्यर्थः । विवादाध्यासित आनंद आत्मा भवितुमर्हति नित्यत्वाद्य आत्मा न भवति नासौ नित्यो यथा देहादिर्गगनादेरुत्पत्तिमत्त्वेनानित्यत्वान्नानैकांतिकतेति भावः ॥ १० ॥

**अ० टीका**—तं निराकृत्याऽऽत्मानं युक्त्याऽऽह—**कादाचित्कत्वत इति ॥ १० ॥**

**रा० टीका**—चोदयति—

**ननु देहमुपक्रम्य निद्रानंदांतवस्तुषु ॥**
**मा भूदात्मत्वमन्यस्तु न कश्चिदनुभूयते ॥ ११ ॥**

**नन्विति ।** अन्नमयाद्यानंदमयांतानां कोशानामुक्तैर्हेतुभिरात्मत्वं न घटते चेन्मा घटिष्टान्यस्त्वात्मानुपलभ्यमानत्वान्नैव संभवतीति ॥ ११ ॥

**अ० टीका**—ननु सर्वदेति हेतुराश्रयासिद्ध एव निद्रानंदांतवस्तुभिन्नबिंबीभूतानंदस्यैवानुपलंभादित्याशयेन शंकते—**नन्विति ॥ ११ ॥**

**रा० टीका**—परिहरति—

**बाढं निद्रादयः सर्वेऽनुभूयंते न चेतरः ॥**
**तथाऽप्येतेऽनुभूयंते येन तं को निवारयेत् ॥ १२ ॥**

**बाढमिति** । अत्र निद्राशब्देन निद्रानंदो लक्ष्यते । निद्रादयो देहांता उपलभ्यंतेऽन्यो नानुभूयत इति यदुक्तं तत्सत्यम् । कथं तर्हि तदतिरिक्तस्याऽऽत्मनोऽगीकार इत्यत आह— **तथाऽपीति** । अन्यस्यानुपलभ्यमानत्वेऽपि यद्बलादेतेषामानंदमयादीनामुपलभ्यमानता भवति सोऽनुभवः कथं नांगीक्रियत इत्यर्थः ॥ १२ ॥

**अ० टीका**—समाधत्ते-**बाढमिति** । एवं च निद्रानंदांतवस्तूनां तदन्यस्य चाननुभवितैव भवत्यात्मेति भावः ॥ १२ ॥

**रा० टीका**—ननूक्तेभ्योऽन्य आत्मा यदि विद्यते तर्ह्युपलभ्येत नोपलभ्यतेऽतो नास्तीत्याशंक्याऽऽह—

**स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता ॥**
**ज्ञातृज्ञानांतराभावादज्ञेयो न त्वसत्तया ॥ १३ ॥**

**स्वयमिति** । आनंदमयादीनां साक्षिणोऽनुभवरूपत्वादेवानुभाव्यत्वं नास्तीति । नन्वनुभवरूपत्वेऽप्यनुभाव्यत्वं कुतो न स्यादित्याशंक्याऽऽह **ज्ञात्रिति** । ज्ञाता च ज्ञानं ज्ञातृज्ञाने अन्ये ज्ञातृज्ञाने ज्ञातृज्ञानांतरे तयोरभावस्तस्मादज्ञेयो ज्ञानविषयो न भवतीति ज्ञात्राद्यभावाद्वा न ज्ञायते स्वस्यैवासत्त्वाद्वा । किमत्र निगमने कारणमित्यत आह — **न त्वसत्तयेति** । निद्रानंदादिसाक्षित्वेनासत्त्वस्य पूर्वमेव निराकृतत्वादिति भावः ॥ १३ ॥

**अ० टीका**—ननूक्तवस्त्वनुभवितुरेव यद्यात्मत्वं तर्हि तस्य सिद्धिरनुभवित्राश्रितानुभवेनैव वाच्या तथाच यथा निद्रानंदांताः स्वाश्रितानुभवेनानुभवित्रा मयाऽनुभूतास्तथा स्वयमप्यहं तेनैवानुभूतोऽस्मीति प्रत्ययापत्तिस्तस्माद्गुणमंथपणजन्यवाह्निन्यायेन यावदनुभाव्यमेवानुभवितृसत्त्वं तदभावे तु तस्याप्यभावाच्छून्यतापत्तिरिति चेन्न । यदि निद्रानंदांतवस्त्वनुभवितानुभवाश्रयश्चेत्तदा घटेतापीदं चोद्यम् । तदेव तु नास्ति ।

" त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः " ॥

इति **श्रुत्या** स्वप्रकाशात्माभावे जगदांध्यापत्तियुक्त्या च तस्यैवानुभवरूपत्वमित्याशयेनाऽऽह-**स्वयमेवेति** । निरुक्तनिद्रानंदांतवस्तुसाक्षिण इत्यार्थिकम् । एवं जगदांध्यापत्तिं स्वप्रकाशसाक्षिण आत्मत्वावेदनेनापनोद्य शून्यवादापत्तिमपि निराकरोति **ज्ञात्रिति** । उक्तसाक्षिणः सकाशादन्यः कश्चिज्ज्ञाता तद्विषयज्ञानाश्रयस्तथा ज्ञानं तद्विषयकं संवेदनं तदभावादेव स्वप्रकाशसाक्ष्यात्मासावज्ञेयो न त्वसत्तयाऽज्ञेय इत्यन्वयः ॥ १३ ॥

**रा० टीका**—अनुभवरूपस्याऽऽत्मनोऽऽनुभाव्यत्वाभावे दृष्टांतमाह—

**माधुर्यादिस्वभावानामन्यत्र स्वगुणार्पिणाम् ॥**
**स्वस्मिंस्तदर्पणापेक्षा नो न चास्त्यन्यदर्पकम् ॥ १४ ॥**

**माधुर्यादिति** । आदिशब्देनाम्लादयो गृह्यंते । माधुर्यादयः स्वभावाः सहजा धर्मविशेषा येषां ते माधुर्यादिस्वभावा गुडादयस्तेषामन्यत्र स्वसंसृष्टपदार्थेषु चणकादिषु स्वगुणार्पिणां स्वगुणान्माधुर्यादीनर्पयंतीति स्वगुणार्पिणस्तेषां स्वस्मिन्स्वस्वरूपे गुडादिलक्षणे तदर्पणापेक्षा तेषां माधुर्यादीनामर्पणे संपादनेऽपेक्षाऽऽकांक्षा माधुर्यादिकं केनचित्संपादनीयमित्येवंरूपा नो नैव विद्यते । **किंचान्यदर्पकं नास्ति** गुडादीनां माधुर्यादिप्रदं वस्त्वंतरं नास्तीत्यर्थः ॥ १४ ॥

**अ० टीका**—तत्र दृष्टांतं स्पष्टयति—**माधुर्यादीति सार्धेन** । आदिनाऽम्लादिः । एतादृशां खंडशर्करादीनामित्यर्थः ॥ १४ ॥

**रा० टीका**—सदृष्टांतं फलितमाह—

**अर्पकांतरराहित्येऽप्यस्त्येषां तत्स्वभावता ॥**
**मा भूत्तथाऽनुभाव्यत्वं बोधात्मा तु न हीयते ॥ १५ ॥**

**अर्पकांतरेति** । माधुर्यादिसमर्पकवस्त्वंतराभावेऽपि येषां गुडादीनां माधुर्यादिस्वभावता यथा विद्यत एवमात्मनोऽप्यनुभवविषयत्वं मा भूदनुभवरूपता तु भवत्येवेत्यर्थः ॥ १५ ॥

**अ० टीका**—**अर्पकांतरेति** । एषां खंडादीनाम् । दार्ष्टांतिके योजयति—**मा भूत्तथेति** ॥ १५ ॥

**रा० टीका**—उक्तार्थे प्रमाणमाह—

**स्वयंज्योतिर्भवत्येष पुरोऽस्माद्भासतेऽखिलात् ॥**
**तमेव भांतमन्वेति तद्भासा भास्यते जगत् ॥ १६ ॥**

**स्वयमिति** । " अत्रायं पुरुषः स्वयंज्योतिर्भवति " [ बृह० ४-३-९ ] " अस्मात्सर्वस्मात्पुरतः सुविभाति " [ नृ० पू० ता० २ ] " तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " [ मुंड० २-२-१० श्वेता० ६-१४ कठ० ५-१४ ] इत्यादि श्रुतय आत्मनः स्वप्रकाशत्वं बोधयंतीत्यर्थः ॥ १६ ॥

**अ० टीका**—ननु तमात्मनः स्वप्रकाशत्वे किं प्रमाणमित्यतस्ताः श्रुतीरेव संग्रथयति **स्वयमितिप्रभृति** त्रिभिः । अत्रायं पुरुषः स्वयंज्योतिर्भवतीति **बृहदारण्यके** । पुरतोऽस्मात्सर्वस्मात्सुविभातमिति **नृसिंहोत्तरतापनीये** । तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति **मुंडके** च क्रमाच्छ्रुतय एव तत्र प्रमाणमित्यर्थः ॥ १६ ॥

**रा० टीका**—" येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयात् " [ बृह० २-४-१४ ] इति वाक्यमर्थतः पठति—

**येनेदं जानते सर्वं तत्केनान्येन जानताम् ॥**
**विज्ञातारं केन विद्याच्छक्तं वेद्ये तु साधनम् ॥ १७ ॥**

**येनेदमिति** । येन साक्षिचैतन्यरूपेणाऽऽत्मनेदं सर्वं दृश्यजातं जानते प्राणिनस्तं साक्षिणमात्मानमन्येन केन साक्ष्यभूतेन जडेन जानतामवगच्छेयुः पुमांस इति शेषः । अस्यैव वाक्यस्य तात्पर्यमाह **विज्ञातारमिति** । दृश्यजातस्य ज्ञातारं केन दृश्यभूतेन विद्याद्विजानीयान्न केनापि जानातीत्यर्थः । ननु मनसा ज्ञास्यतीत्याशंक्याऽऽह—**शक्तमिति** । साधनं तु ज्ञानसाधनं मनो वेद्ये ज्ञानस्यविषये शक्तं समर्थं न तु ज्ञातर्यात्मनि " नैव वाचा न मनसा " [ कठ० ६-१२ ] इत्यादि **श्रुतेः** । स्वस्यापि ज्ञेयत्वे कर्मकर्तृत्वविरोधाच्चेति भावः ॥ १७ ॥

**अ० टीका**—**येनेदमिति** । येनेदं सर्वं विजानाति तं केन विजानीयात् । विज्ञातारमरे केन विजानीयादिति **बृहदारण्यके** । जानते जीवा विजानंति । जानतां जानंतु ॥ १७ ॥

१ सन्वेत तद्भासेत्यच्युतरायपाठः ।

**रा० टीका**—आत्मनः स्वप्रकाशत्व एव " स वेत्ति वेद्यं न च तस्यास्ति वेत्ता " [ श्वेता० ३-१९ ] " अन्यदेव तद्विदितादथो अविदितादधि " [ केन० ३ ] इतिवाक्यद्वयमपि प्रमाणमिति मन्वानस्तद्वाक्यद्वयमर्थतः पठति—

**स वेत्ति वेद्यं तत्सर्वं नान्यस्तस्यास्ति वेदिता ॥**
**विदिताविदिताभ्यां तत्पृथग्बोधस्वरूपकम् ॥ १८ ॥**

**स वेत्तीति** । स आत्मा यद्यद्वेद्यं तत्तत्सर्वं वेद्यं वेत्ति । तस्याऽऽत्मनो वेदिता ज्ञाताऽन्यो नास्ति । तद्बोधस्वरूपकं ब्रह्म विदिताविदिताभ्यां विदितं ज्ञानेन विषयीकृतमविदितमज्ञानेनाऽऽवृतं ताभ्यां पृथग्विलक्षणं बोधस्वरूपत्वादेवेत्यर्थः ॥ १८ ॥

**अ० टीका**—**स वेत्तीति** । स वेत्ति वेद्यं न च तस्यास्ति वेत्तेति **मुंडके** । अन्यदेव तद्विदितादथो अविदितादधीति **तलवकारोपनिषदि** ॥ १८ ॥

**रा० टीका**—ननु विदिताविदितातिरिक्तो बोधो नानुभूयत इत्याशंक्य विदितविशेषणस्य वेदनस्यैव बोधस्वरूपत्वात्तदनुभवाभावे विदितस्याप्यनुभवाभावप्रसंगाद्बोधानुभवोऽवश्यमंगीकर्तव्य इति सोपहासमाह—

**बोधेऽप्यनुभवो यस्य न कथंचन जायते ॥**
**तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥ १९ ॥**

**बोधेऽपीति** । यस्य मंदस्य बोधेऽपि घटादिस्फुरणरूपेऽप्यनुभवः साक्षात्कारः कथंचन कथमपि न जायते नोत्पद्यते तं नरसमाकृतिं नरसमाकारं लोष्टं लोष्टवज्जडं मनुष्यं शास्त्रं कथं बोधयत्न कथमपि बोधयेदित्यर्थः ॥ १९ ॥

**अ० टीका**—ननु वृत्त्यात्मकज्ञानभिन्नकूटस्थबोधः स्वप्रकाशः प्रोक्तश्रुत्युक्तोऽपि मया नानुभूयत इत्याशंककमेवोपहसति—**बोधेऽपीति** । विषयसमस्येवेयम् । अनुभवः स्वप्रकाशत्वधीः ॥ १९ ॥

**रा० टीका**—बोधो न बुध्यत इत्युक्तिरेव व्याहतेति सदृष्टांतमाह—

**जिह्वा मेऽस्ति न वेत्युक्तिर्लज्जायै केवलं यथा ॥**
**न बुध्यते मया बोधो बोद्धव्य इति तादृशी ॥ २० ॥**

**जिह्वेति** । मे जिह्वाऽस्ति न वेत्युक्तिर्भाषणं यथा लज्जायै केवलं लज्जाजननायैव भवति न बुद्धिमत्त्वज्ञापनाय जिह्वया विना भाषणानुपपत्तेः । एवं मया बोधो न बुध्यत इतः परं बोद्धव्य इत्युक्तिरपि तादृशी लज्जाहेतुरेव । बोधेन विना तद्व्यवहारासिद्धेरित्यर्थः ॥ २० ॥

**अ० टीका**—तत्र दृष्टांतं स्पष्टयति—**जिह्वेति** ॥ २० ॥

**रा० टीका**—भवत्वेवंविधः स बोधस्तथाऽपि प्रकृते ब्रह्मावबोधे किमायातमित्याशंक्याऽऽह—

**यस्मिन्यस्मिन्नस्ति लोके बोधस्तत्तदुपेक्षणे ॥**
**यद्बोधमात्रं तद्ब्रह्मेत्येवंधीर्ब्रह्मनिश्चयः ॥ २१ ॥**

**यस्मिन्निति** । लोके जगति यस्मिन्यस्मिन्घटादिलक्षणे विषये बोधो ज्ञानमस्ति तत्तदुपेक्षणे तस्य तस्य घटादिविषयस्योपेक्षणेऽनादरणे कृते सति यद्बोधमात्रं घटादि सर्वत्रानु-

स्यूतं यत्स्फुरणमस्ति तदेव ब्रह्मेत्येवंरूपा धीर्बुद्धिर्ब्रह्मनिश्चयो ब्रह्मावगतिरित्यर्थः ॥ २१ ॥

**अ० टीका**—इदानीं शृंगग्राहिकान्यायेन स्वप्रकाशबोधं घटादिबोध्यविषयकस्फुरणलक्षणं तस्यैव ब्रह्मत्वं चाऽऽह—**यस्मिन्यस्मिन्निति**। तदुक्तं **वार्तिके**—

" परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणतः " इति ॥

शिष्टं तु स्पष्टमेव ॥ २१ ॥

**रा० टीका**—ननु घटादिविषयोपेक्षया तदर्थानुभवरूपं ब्रह्मावगम्यते चेत्तर्हि कोशपंचकविवेकोऽयं निष्प्रयोजनः स्यादित्याशंक्य ब्रह्मणः प्रत्यग्रूपताज्ञानेन विना संसारानिवृत्तेस्तथात्वावबोधोपयोगित्वान्न तस्यापि वैयर्थ्यमित्याह—

**पंचकोशपरित्यागे साक्षिबोधावशेषतः ॥**
**स्वस्वरूपं स एव स्याच्छून्यत्वं तस्य दुर्घटम् ॥ २२ ॥**

**पंचकोशेति**।पंचानां कोशानामन्नमयादीनां परित्यागे बुद्ध्याऽनात्मत्वनिश्चये कृते तत्साक्षिरूपस्य बोधस्यावशेषणात्स साक्षिरूपो बोध एव स्वस्वरूपं निजं रूपं ब्रह्मैव स्यात् । नन्वन्नमयादीनामनुभवसिद्धानां त्यागे शून्यपरिशेषः स्यादित्याशंक्याऽऽह—**शून्यत्वमिति**। तस्य साक्षिबोधस्य शून्यत्वं दुर्घटं दुःसंपाद्यमित्यर्थः ॥ २२ ॥

**अ० टीका**—एवं तर्हि प्रतिज्ञाविरोधः, प्रतिज्ञातं हि भवता ब्रह्म पंचकोशात्मकगुहापिहितत्वात्तद्विवेकलभ्यमित्यधुना तु घटाद्युपलक्षितबोधरूपत्वेनैव तत्प्रदर्श्यत इति चेत्सत्यम् । शोधिततत्पदार्थरूपस्य तस्य निरुक्तघटाद्युपलक्षितबोधरूपत्वेऽपि पंचकोशोपलक्षितप्रत्यग्रूपसाक्षिचिन्मात्रात्माभेदप्रमां विनाऽपरोक्षद्वैतभ्रमकारणीभूतात्माश्रिततद्विषयकानादिभावरूपमूलाज्ञानानिवृत्तेः । तदर्थं पंचकोशविवेकस्य साफल्यमेवेत्याशयेन समाधत्ते—**पंचेति**। "ज्ञातृज्ञानांतराभावादज्ञेयो न त्वसत्तया" इत्यत्र निरस्तमपि माध्यमिकमतं विस्मृतिसंभावनया पुनः प्रत्याचष्टे—**शून्यत्वमिति** चरमचरणेन । शून्यसत्ताप्रकाशयोरपि तदेकायत्तत्वात्तस्य शून्यत्वं दुर्घटमेवेत्यध्याहृत्य संबंधः ॥ २२ ॥

**रा० टीका**--दुर्घटत्वमेवोपपादयति--

**अस्ति तावत्स्वयं नाम विवादाविषयत्वतः ॥**
**स्वस्मिन्नपि विवादश्चेत्प्रतिवाद्यत्र को भवेत् ॥ २३ ॥**

**अस्तीति**। स्वयंशब्दवाच्यं स्वस्वरूपं लौकिकानां वैदिकानां च मते तावदस्त्येव, कुत इत्यत आह —**विवादेति**। स्वस्वरूपस्य विप्रतिपत्तिविषयत्वाभावादित्यर्थः। विपक्षे बाधकमाह--- **स्वस्मिन्निति**। स्वात्मन्यपि विप्रतिपत्तौ सत्यामत्रास्यां विप्रतिपत्तौ कः प्रतिवादी स्यान्न कोऽपीत्यर्थः ॥ २३ ॥

**अ० टीका**---तदेवोपपादयति---**अस्तीति**। स्वयं स्वयंशब्दशक्यः स्वप्रकाश आत्मेत्यर्थः । तत्र हेतुः---**विवादेति**। हेत्वसिद्धिमुद्धरति —**स्वस्मिन्नपीति**। विवादे विशिष्टो जल्पादिघटितो वाद इत्यर्थः । तल्लक्षणाद्युक्तं हि **सर्वदर्शनसंग्रहे** न्यायमतं प्रकृत्य मूलकारैरेव । तत्त्वनिर्णयफलः कथाविशेषो वादः । उभयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापनहीनः कथाविशेषो वितंडा । कथानाम वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रह इति ।

एवं च स्वत्त्वं हि वादिप्रतिवादिनोरुभयोरपि कथाप्रवृत्त्यन्यथानुपपत्त्यानिर्विचिकित्समेव वाच्यम् । तदेव यदि विवादास्पदं तदा प्रतिवाद्यभावः समापादितः सुघट एवेति भावः ॥ २३ ॥

**रा० टीका**—ननु स्वासत्त्ववाद्येव प्रतिवादी भविष्यतीत्याशंक्य तथाविधः कोऽपि नास्तीत्याह—

**स्वासत्त्वं तु न कस्मैचिद्रोचते विभ्रमं विना ॥**
**अत एव श्रुतिर्बाधं ब्रूते चासत्त्ववादिनः ॥ २४ ॥**

**स्वासत्त्वमिति** । भ्रांतिमेकां विहायान्यस्यां दशायां स्वस्याभावः केनापि नांगीक्रियत इत्यर्थः । कुत एवं निश्चीयत इत्याशंक्याऽऽह—**अत इति** । यतः कस्मैचिन्न रोचतेऽत एव श्रुतिरप्यसत्त्ववादिनो बाधं ब्रूते ॥ २४ ॥

**अ० टीका**—अत एव—**स्वेति** । तुशब्दोऽप्यर्थेऽपि । कस्मैचिदपीत्यर्थः । तदिदं श्रुतिसंमतमपीत्याह—**अत एवेति** ॥ २४ ॥

**रा० टीका**—केयं श्रुतिरित्याकांक्षायां " असन्नेव " [ तैत्ति० २–६–१ ] इत्यादिकां तां श्रुतिमर्थतः पठति—

**असद्ब्रह्मेति चेद्वेद स्वयमेव भवेदसत् ॥**
**अतोऽस्य मा भूद्वेद्यत्वं स्वसत्त्वं त्वभ्युपेयताम् ॥ २५ ॥**

**असदिति** । यदि ब्रह्मासदिति जानीयात्तर्हि स्वयमेव ब्रह्मणोऽसत्त्वज्ञान्यसद्भवेत्तस्यैव ब्रह्मरूपत्वादित्यर्थः । फलितमाह—**अत इति** ॥ २५ ॥

**अ० टीका**—तामेव श्रुतिमर्थतः पठति—**असदिति** । तथाच तैत्तिरीयाः समामनंति—" असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् " इति । फलितमाह—**अत इति** । अस्य पंचकोशबाधावधिभूतस्य चिन्मात्रात्मन इत्यर्थः ॥ २५ ॥

**रा० टीका**—इदानीमात्मनः स्वप्रकाशत्वं वक्तुकामस्तस्य वेद्यत्वाभावे कीदृक्स्वरूपमिति प्रश्नमुत्थापयति—

**कीदृक् तर्हीति चेत्पृच्छेदीदृक्ता नास्ति तत्र हि ॥**
**यदनीदृगतादृक् च तत्स्वरूपं विनिश्चिनु ॥ २६ ॥**

**कीदृगिति** । अयमभिप्रायः—आत्मन इदंत्वादिना केनचिद्रूपेण वैशिष्ट्यांगीकारे तेनैव रूपेण वेद्यत्वं स्यात्तदनंगीकारे शून्यत्वमिति मत्यमीदृक्ताद्यंगीकारे तथैव वेद्यत्वम् । तत्तु नांगीक्रियत इत्याह—**ईदृगिति** । उपलक्षणमेतत्तादृक्त्वस्यापि । उभयाभावमेवाऽऽह—**यदनीदृगिति** ॥ २६ ॥

**अ० टीका**—नन्वेवं यद्यवेद्योऽप्यात्मा संश्चेत्किमपराद्धं वंध्याकुमारेणेति गूढाभिसंधिस्तत्स्वरूपप्रकारं पृच्छति—**कीदृगिति** । एवं सिद्धांत्येव तत्प्रश्नं रे शिष्य वादित्वा त्वं तद्ब्रह्माऽऽत्मस्वरूपमवेद्यमपि सत्त्वेन संमतं कीदृक्किंप्रकारकं तर्ह्यस्तीति पृच्छेः प्रश्नविषयीकुर्याश्चेदित्यनूद्य तर्हि तत्र कोऽपि प्रकारो नैवास्ति समाधत्ते—**ईदृक्तेति** । अतः फलितमाह—**यदिति** । रे शिष्य वादित्वा त्वं यद्ब्रह्मत्वनीदृगपरोक्षमदक्षं न भवति तथाऽदृक्परो-

१ पृच्छेरीदृगित्यच्युतरायपाठः । २ तादृक्त्वमित्यच्युतरायपाठः ।

क्षसदृक्षमपि न भवति तदेव स्वरूपमात्मतत्त्वमिति विनिश्चिनु श्रुत्याद्यनुग्रहपूर्वकत्वलक्षणेन विशेषेण निश्चयविषयीकुर्वित्यन्वयः ॥ २६ ॥

**रा० टीका**—न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशंक्येदृक्ताहक्शब्दयोरर्थमभिद-धानस्तदवाच्यत्वमुपपादयति—

**अक्षाणां विषयस्त्वीदृक् परोक्षस्तादृगुच्यते ॥**
**विषयी नाक्षविषयः स्वत्वान्नास्य परोक्षता ॥ २७ ॥**

**अक्षाणामिति** । प्रत्यक्षस्यैव घटादेरीदृक्शब्दवाच्यत्वं दृष्टं परोक्षस्यैव धर्मादेस्तादृ-क्शब्दवाच्यत्वं द्रष्टुरात्मनस्त्विद्रियजन्यज्ञानविषयत्वाभावान्नेदृक्त्वं स्वत्वेनैव परोक्षत्वाभावान्न तादृक्त्वमित्यर्थः ॥ २७ ॥

**अ० टीका**—तत्र हेतुं द्योतयन्नीदृगादिपदार्थं कथयति—**अक्षाणामिति** । त-त्राऽऽद्याभावं सहेतुकमाह—**विषयीति** । यतो विषयी प्रकाशैकरूपोऽतोऽक्षविषयो नैवेति योजना । एवमंत्यमपि प्रत्याह—**स्वत्वादिति** ॥ २७ ॥

**रा० टीका**—तर्हि शून्यमिति द्वितीयं पक्षं फलदर्शनव्याजेन परिहरति—

**अवेद्योऽप्यपरोक्षोऽतः स्वप्रकाशो भवत्ययम् ॥**
**सत्यं ज्ञानमनंतं चेत्यस्तीह ब्रह्मलक्षणम् ॥ २८ ॥**

**अवेद्य इति** । इंद्रियजन्यज्ञानविषयत्वाभावेऽप्यपरोक्षत्वात्स्वप्रकाश इत्यर्थः । अ-त्रायं प्रयोगः । आत्मा स्वप्रकाशः संवित्कर्मतामंतरेणापरोक्षत्वात्संवेदनवदिति । न च विशे-षणासिद्धो हेतुरात्मनः संवित्कर्मत्वे कर्मकर्तृभावविरोधप्रसंगात् । स्वस्वरूपेण कर्तृत्वं विशि-ष्टरूपेण कर्मत्वमित्यविरोध इति चेद्गमनक्रियायामप्येकस्यैव स्वरूपेण कर्तृत्वं विशिष्टरूपेण कर्मत्वमित्यतिप्रसंगात् । न च साधनविकलो दृष्टांतः संवेदनस्य संवेदनांतरापेक्षायामनवस्था-नादिति । तर्कमते घटो घटज्ञानेन भासते घटज्ञानमनुव्यवसायेनेति संवेदनवत्स्वप्रकाशो दृष्टांतः साधनविकल इति चेन्न ज्ञानस्य ज्ञानांतरेण भासनाभावात् साधनविकलः । नन्वात्मनः स्व-प्रकाशत्वेन सिद्धत्वेऽपि ब्रह्मलक्षणाभावान्न ब्रह्मत्वसिद्धिरित्याशंक्य तल्लक्षणं तत्र योजयति—**सत्यमिति** " सत्यं ज्ञानमनंतं ब्रह्म " [ तैत्ति० २-१-१ ] इति श्रुत्या यद्ब्रह्मणो ल-क्षणमुक्तं तदात्मनि विद्यत इत्यर्थः ॥ २८ ॥

**अ० टीका**—एवं तर्हि परोक्षाद्यविषयत्व आत्मनो वंध्यापुत्रवच्छून्यत्वमेवेति पूर्व-वादिगूढाभिसंधिमालक्ष्य सिद्धांती सलक्षणं स्वप्रकाशत्वमुपपादयन्नसत्त्वं प्रतिक्षिपति—**अवे-द्योऽपीति** । अपिना घटादिवैलक्षण्यं द्योत्यते । एतेन वेद्यत्वे सत्यपरोक्षत्वं स्वप्रकाशत्वमिति तल्लक्षणं फलितम् । एवं च प्राङ्मदुक्तमनधीनभानत्वमेवेदं पर्यवस्यति । नन्वथाप्यस्य ब्रह्मा-भेदः कथमित्यत आह—**सत्यमिति** ॥ २८ ॥

**रा० टीका**—आत्मनः सत्यत्वोपपादनाय तावत्सत्यत्वस्य लक्षणमाह—

**सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः ॥**
**बाधः किंसाक्षिको ब्रूहि न त्वसाक्षिक इष्यते ॥ २९ ॥**

**सत्यत्वमिति** । बाधशून्यत्वं सत्यत्वं सत्यमबाध्यं बाध्यं मिथ्येति तद्विवेक इति पूर्वोचा-

यैरुक्तत्वात्। अस्तु प्रकृते किमायातमित्यत आह—**जगदिति**। जगतः स्थूलसूक्ष्मशरीरादिलक्षणस्य यो बाधः सुप्तिमूर्छासमाधिष्वविद्यमानता तत्साक्षित्वेनैव वर्तमानस्याऽऽत्मनो बाधः किंसाक्षिकः कः साक्ष्यस्य बाधस्यासौ किंसाक्षिको न कोऽपि साक्षी विद्यत इत्यर्थः । असाक्षिकोऽप्यात्मबाधः किं न स्यादित्याशंक्याऽऽह—**न त्विति** । साक्षिरहितो बाधो नाभ्युपगंतव्योऽन्यथाऽतिप्रसंगादिति भावः ॥ २९ ॥

**अ० टीका**—तत्र सत्यत्वमुपपादयति—**सत्यत्वमिति** । अपरं सरलमेव ॥२९॥

**रा० टीका**—उक्तमर्थं दृष्टांतेन स्पष्टयति—

**अपनीतेषु मूर्तेषु ह्यमूर्तं शिष्यते वियत् ॥**
**शक्येषु बाधितेष्वंते शिष्यते यत्तदेव तत् ॥ ३० ॥**

**अपनीतेष्विति** । मूर्तेषु गृहादिगतेषु घटादिष्वपनीतेषु गृहादिभ्यो निःसारितेषु सत्सु यथाऽपनेतुमशक्यं नभ एवावशिष्यत एवं स्वव्यतिरिक्तेषु मूर्तामूर्तेषु देहेंद्रियादिषु निराकर्तुं शक्येषु नेतिनेतीतिश्रुत्या [ बृह० २-३-६ ] निराकृतेषु सत्स्वंतेऽवमाने सर्वनिराकरणसाक्षित्वेन यो बोधोऽवशिष्यते स एव बाधरहित आत्मेत्यर्थः ॥ ३० ॥

**अ० टीका**—तत्र दृष्टांतं स्पष्टयति—**अपनीतेष्विति** । दार्ष्टांतिके योजयति—**शक्येष्विति** । दृश्यत्वेन बाधितुमिति शेषः । यद्बाधभासकत्वेन बाधितुमशक्यं दृङ्मात्रं शिष्यतेऽवशिष्टं भवति तदेव तत्कालत्रयाबाध्यं सद्ब्रह्मेति संबंधः ॥ ३० ॥

**रा० टीका**—ननु प्रतीयमानस्य सर्वस्यापि निषेधे किंचिन्नावशिष्यतेऽतः कथं शिष्यते यत्तदेव तदित्यवशिष्टस्याऽऽत्मत्वमुच्यत इति शंकते —

**सर्वबाधेन किंचिच्चेद्यन्न किंचित्तदेव तत् ॥**
**भाषा एवात्र भिद्यंते निर्बाधं तावदस्ति हि ॥ ३१ ॥**

**सर्वबाधेति** । न किंचिदवशिष्यत इति वदताऽपि तथा प्रयोगसिद्धये सर्वाभावविषयं ज्ञानमवश्यमभ्युपेतव्यम् । तत्तदेवास्मदभिमतात्मस्वरूपमित्यभिप्रायेण परिहरति **यन्नेति** । न किंचिदितिशब्देन यच्चैतन्यमुच्यते तदेव तद्ब्रह्मेत्यर्थः । ननु न किंचिदित्यभाववाचकेन न किंचिच्छब्देन कथं चैतन्यमुच्यत इत्याशंक्य बाधसाक्षिणोऽवश्यमभ्युपेयत्वादभिधायकशब्देष्वेव विप्रतिपत्तिर्नाभिधेय इति परिहरति—**भाषेति** । अत्र बाधसाक्षिणि प्रत्यगात्मनि भाषा एव न किंचित्साक्षीत्यादिशब्दा एव भिद्यंते निर्बाधं बाधरहितं साक्षिचैतन्यं तु विद्यत एवेत्यर्थः॥३१॥

**अ० टीका**—उक्तमेवार्थं स्थूणानिखननन्यायेन दृढीकर्तुं साशंकं प्रकाशयति —**सर्वेति** । यन्न किंचिदिति सर्वाभावावभासकं चैतन्यं तदेव तद्ब्रह्मेत्यर्थः । तथाचाविवेकिना त्वया न किंचिदिति स्वाभिप्रायेण सर्वदृश्यप्रतियोगिकाभाववाचकः शब्दः प्रयुज्यते परं त्वसौ विचारे क्रियमाणेऽभावस्यापि दृश्यत्वाविशेषात्नैव तदभिधायकः किंतु बाधसाक्षिभूतचैतन्याभिधायक इति रुदताऽप्यंगीकार्यम् । मया तु सर्वदृश्यबाधे तद्भासकं चैतन्यमेवावशिष्यत इति साक्षात्तद्वाचक एव शब्दः प्रयुज्यत इत्यावयोर्भाषा एवात्र भिद्यंत इत्यन्वयः । फलितमाह—**निर्बाधमिति** । तावत्साकल्येनैवास्तीति योजना ॥ ३१ ॥

**रा० टीका**—उक्तमर्थं श्रुत्यारूढं करोति—

**अत एव श्रुतिर्बाध्यं बाधित्वा शेषयत्यदः ॥**
**स एष नेति नेत्यात्मेत्यतद्व्यावृत्तिरूपतः ॥ ३२ ॥**

**अत एवेति** । यतः साक्षिचैतन्यमबाध्यमत एव "स एष नेति नेत्यात्मा" [ बृह० ३–९–२६ ] इति श्रुतिरतद्व्यावृत्तिरूपतोऽनात्मपदार्थनिराकरणद्वारेणबाध्यं निराकरणयोग्यं सर्वमनात्मकवस्तुजातं बाधित्वा निराकृत्यादो निराकर्तुमशक्यं प्रत्यक्स्वरूपं शेषयत्यवशेषयति ॥ ३२ ॥

**अ० टीका**—उक्तेऽर्थे श्रुतिमनुकूलयति—**अत एवेति** । 'स एष नेतिनेत्यात्मा' इति श्रुतिर्बाध्यं कार्यकारणात्मकं द्वैतं बाधित्वा । **अतदिति** । दृश्याभिन्नरूपत्वेनेत्यर्थः । अतः प्रागुक्तं प्रत्यगभिन्नमद्वैतब्रह्मचैतन्यमेव शेषयतीति संबंधः ॥ ३२ ॥

**रा० टीका**—नेति नेतीतिश्रुतिर्बाधयोग्यं बाधित्वा बाधितुमशक्यमवशेषयतीत्युक्तं तत्र कीदृशं बाधितुं शक्यं कीदृशमशक्यमिति विवक्षायां तदुभयं विभज्य दर्शयति—

**इदंरूपं तु यद्यावत्तत्त्यक्तुं शक्यतेऽखिलम् ॥**
**अशक्यो ह्यनिदंरूपः स आत्मा बाधवर्जितः ॥ ३३ ॥**

**इदंरूपमिति** । इदंरूपमित्येवं रूपं दृश्यत्वेनानुभूयमानं रूपं स्वरूपं यस्य देहादेस्तदिदंरूपम् । तुशब्दोऽवधारणे । यद्यावदितिपदद्वयं सर्वदृश्योपसंग्रहार्थम् एवं च सति यद्दृश्यं तदखिलं त्यक्तुं शक्यत एवेत्यर्थः । संपद्यतेऽनिदंरूपः प्रत्यक्त्वेनेदंतयाऽवगंतुमयोग्यः साक्ष्यशक्यस्त्यक्तुमित्यर्थः । हीतिनिपातेन प्रसिद्धिद्योतकेन त्यक्तुः स्वस्वरूपत्वेन त्यागायोग्यतां सूचयति । फलितमाह **आत्मेति** । यो बाधरहितः साक्षी स एवाऽऽत्मा नाहंकारादिर्दृश्य इत्यर्थः ॥ ३३ ॥

**अ० टीका**—तत्र हेतूनुत्पादयति इदं रूपं त्वित्याद्यर्धाभ्याम् ॥ ३३ ॥

**रा० टीका**—भवत्वात्मनो बाध्यत्वं प्रकृते किमायातमित्यत आह—

**सिद्धं ब्रह्मणि सत्यत्वं ज्ञानत्वं तु पुरेरितम् ॥**
**स्वयमेवानुभूतित्वादित्यादिवचनैः स्फुटम् ॥ ३४ ॥**

**सिद्धमिति** । ब्रह्मणि ब्रह्मलक्षणे यत्सत्यत्वमभिहितं तदात्मनि सिद्धम् । भवतु सत्यत्वं ज्ञानत्वं कथमित्याकांक्षायां तत्पूर्वमेवोपपादितमित्याह—**ज्ञानत्वमिति** । "**स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता**" [ श्लो० १२ ] इत्यादिभिर्वचनैर्ज्ञानरूपत्वं पूर्वमेव सम्यगभिहितमित्यर्थः ॥ ३४ ॥

**अ० टीका**—अथ ज्ञानत्वमुपपादयितुं वृत्तानुवादपूर्वकं प्रागेवोपपादितं तत्स्मारयति—**सिद्धमिति** । अत्र पंचकोशबाधावधिभूतसाक्षिचिन्मात्रात्मानमुद्दिश्य तत्रैव ब्रह्माभेदार्थं तल्लक्षणसमन्वयोपपादनस्य प्रकृतत्वात्सिद्धमात्मनीति वक्तव्येऽपि ब्रह्मणीत्युक्तिस्तु तदत्यंताभेदाभिप्रायेणैवेति भावः ॥ ३४ ॥

**रा० टीका**—ननु सत्यत्वज्ञानत्वयोरात्मनि सिद्धत्वेऽप्यनंत्यं न घटते ब्रह्मण्यपि तस्यासिद्धेरित्याशंक्य ब्रह्मणि तावत्तत्साधयति—

**न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः ॥**
**न वस्तुतोऽपि सार्वात्म्यादानंत्यं ब्रह्मणि त्रिधा ॥ ३५ ॥**

**न व्यापित्वादिति** । " नित्यं विभुं सर्वगतं सुसूक्ष्मम् " [ मुंड० १-१-६ ] आकाशवत्सर्वगतश्च नित्यः " " नित्यो नित्यानां चेतनश्चेतनानाम् [ कठ० ५-१३श्वेता० ६-१३ ] इदं सर्वं यदयमात्मा [ बृह० ४-५-७ ] " सर्वं ह्येतद्ब्रह्म " [ मांडू० २ ] " ब्रह्मैवेदं सर्वम् " [ नृसिं० उ० तापि० ७ ] इत्यादि श्रुतिषु व्यापित्वनित्यत्वसर्वात्मत्वप्रतिपादनाद्ब्रह्मणस्त्रिविधमप्यानंत्यं देशकालवस्तुकृतपरिच्छेदराहित्यमभ्युपेतव्यमित्यर्थः ॥३५॥

**अ० टीका**—एवमेवेह देशकालवस्तुपरिच्छेदराहित्यलक्षणमानंत्यमप्यत्रोपपादयति—**न व्यापित्वादिति** । ' आकाशवत्सर्वगतश्च नित्यः ' इति ' इदं सर्वं यदयमात्मा ' इति ' सर्वं ह्येतद्ब्रह्म ' इत्यादिश्रुतिभ्योऽपीत्यर्थः ॥ ३५ ॥

**रा० टीका**—न केवलं श्रुतितः किंतु युक्तितोऽपीत्याह —

**देशकालान्यवस्तूनां कल्पितत्वाच्च मायया ॥**
**न देशादिकृतोंऽतोऽस्ति ब्रह्मानंत्यं स्फुटं ततः ॥ ३६ ॥**

**देशकालेति** । परिच्छेदहेतूनां देशकालान्यवस्तूनां मायया कल्पितत्वाच्च गंधर्वनगरादिभिर्गगनस्येव न देशादिभिः कृतः पारमार्थिकः परिच्छेदो ब्रह्मणि संभवति यतोऽतो ब्रह्मण्यानंत्यं तावद्व्यक्तमेव " तदेतत्सत्यमात्मा ब्रह्मैव "[नृसिं० उ० तापि०—९]"ब्रह्मात्मैवात्र ह्येवं न विचिकित्स्यमित्यों सत्यमात्मैव नृसिंहो देवो ब्रह्म भवति " [ नृसिं० उ० ५-९ ] " अयमात्मा ब्रह्म " [ मांडू० २ ] इत्यादिभिः श्रुतिभिरात्मनो ब्रह्माभेदप्रतिपादनात्तस्याप्यानंत्यं सिद्धमिति तात्पर्यम् ॥ ३६ ॥

**अ० टीका**—तदेव युक्त्याऽप्युपपादयति —**देशेति** । एवं च यथा गंधर्वनगरादिभिः कल्पितत्वाद्गगनस्य देशादिपरिच्छेदत्रयं तद्वदेव मायाकल्पितैर्देशादिभिर्नैव ब्रह्मात्मवस्तुनो देशादिकृतोऽन्तोऽस्तीत्यर्थः । फलितमाह—**ब्रह्मेति** । तथाचाऽऽमनंत्याथर्वणिका ब्रह्मात्मैक्यं **नृसिंहोत्तरतापिन्याम्**—" तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येवं न विचिकित्स्यमित्यों सत्यमात्मैव नृसिंहो देवो ब्रह्म भवति " इति ॥ ३६ ॥

**रा० टीका**— ननु जडस्य जगतो ब्रह्मण्यारोपितत्वेन ब्रह्मणः परिच्छेदकत्वाभावेऽपि चेतनयोर्जीवेश्वरयोरसदसंभवात्तत्कृतपरिच्छेदवत्त्वेनाऽऽनंत्यं ब्रह्मणो न संगच्छेतेत्याशंक्य तयोरप्यौपाधिकरूपत्वेन पारमार्थिकत्वाभावान्न तयोरपि वास्तवपरिच्छेदहेतुत्वमित्यभिप्रायेणाऽऽह—

**सत्यं ज्ञानमनंतं यद्ब्रह्म तद्वस्तु तस्य तत् ॥**
**ईश्वरत्वं च जीवत्वमुपाधिद्वयकल्पितम् ॥ ३७ ॥**

**सत्यमिति** । यत्सत्यादिरूपं ब्रह्म तद्वस्तु तदेव पारमार्थिकं तस्य ब्रह्मणो यल्लोकप्रसिद्धमीश्वरत्वं जीवत्वं च तद्वक्ष्यमाणोपाधिद्वयेन कल्पितमतः कल्पितत्वादेव जडवज्जीवेश्वरयोरपि तत्परिच्छेदकत्वाभाव इति भावः ॥ ३७ ॥

**अ० टीका**—ननु जडानां देशादीनां मायया ब्रह्मणि कल्पितत्वात्परिच्छेदकत्वाभावेऽपि चेतनानां जीवानामीश्वरस्य च कथं न ब्रह्मणि वस्तुपरिच्छेदकत्वं तथात्वे ब्रह्मानंत्यं दुर्भणमेत्याशंक्य जीवेश्वरयोरपि वक्ष्यमाणोपाधिद्वयकल्पितत्वान्नैवमित्याह—**सत्यमिति** ॥३७॥

**रा० टीका**—किं तदुपाधिद्वयमित्याकांक्षायां तदुभयं क्रमेण दिदर्शयिषुरादावीश्वरोपाधिभूतां शक्तिं निरूपयति---

**शक्तिरस्त्यैश्वरी काचित्सर्ववस्तुनियामिका ॥**
**आनंदमयमारभ्य गूढा सर्वेषु वस्तुषु ॥ ३८ ॥**

**शक्तिरिति ।** ऐश्वरीश्वरोपाधितयेश्वरसंबंधिनी काचित्सदसत्त्वादिभी रूपैर्निर्वक्तुमशक्या सर्ववस्तुनियामिका सर्वेषामंतर्यामिब्राह्मणोक्तात्मा [ बृह० ३-७ ] पृथिव्यादीनां नियम्यवस्तूनां नियमनकर्त्री शक्तिरस्ति सा कुत्र तिष्ठति कुतो वा नोपलभ्यत इत्याशंक्याऽऽह—**आनंदेति ।** आनंदमयादिषु ब्रह्मांडांतेषु सर्वेषु वस्तुषु गूढा वर्ततेऽतो नोपलभ्यत इत्यर्थः॥ ३८॥

**अ० टीका**- उक्तोपाधिद्वयमेव प्रकाशयितुं पूर्वप्रकरणद्वयप्रपंचितां स्वसंमतां जीवेश्वरादिप्रक्रियां संक्षेपेणेह प्रदर्शयिष्यन् "परास्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतिप्रसिद्धां शुद्धब्रह्मण्येवानादिभावत्वेनास्मदादिदृष्ट्याऽध्यस्तां तच्छक्तिं व्युत्पादयति — **शक्तिरिति ।** ननु भवत्वेवं तस्याः शुद्धब्रह्मण्येवाधिष्ठानीभूते कल्पितत्वमथापि किमसौ स्वप्रतिबिंबितचैतन्यरूपेश्वरपक्षपातिनी किंवा स्वविशेषप्रतिबिंबिताचिद्रूपजीवपक्षपातिनी किमु वा शुद्धचिन्मात्रपक्षपातिनी । नांत्यः । उपाधेर्विनापक्षपातित्वात् । न मध्यः । तस्य सर्वज्ञत्वसर्वकारणत्वाद्यभावेन तत्र वक्ष्यमाणसर्ववस्तुनियमकत्वासंभवात् । नाप्याद्यः । सर्ववस्त्वंतःपात्यज्ञत्वप्रतियोगिकनियामकत्वस्यापि तस्यां वाच्यत्वेन तत्सार्वज्ञ्यविरोधापत्तेरिति चेन्न । सर्ववस्तुनियामकत्वेनैव तस्यां सार्वज्ञ्यघटकतयाऽऽद्यपक्षस्यैवेष्टत्वात्सर्ववस्त्वंतःपात्यज्ञत्वं त्वीश्वरसार्वज्ञ्यविरुद्धत्वेन जाड्यादिवज्जीवनिष्ठत्वेनैव सा नियमयतीत्यवश्यवाच्यत्वाच्चेत्याशयेन तां विशिनष्टि **ऐश्वरीति ।** सेश्वरसांख्यसंमतप्रधानाद्व्यावर्तयति—**काचिदिति ।** सत्त्वादिना निर्वक्तुमशक्यतयाऽनिर्वचनीयेत्यर्थः । कुतः साऽङ्गीकार्येत्यत आह—**सर्वेति ।** किमिति नोपलभ्यत इत्यत्राऽऽह **आनंदेति ॥ ३८ ॥**

**रा० टीका** नियमेनानुपलभ्यमानायास्तस्या असत्त्वमेव किं न स्यादित्याशंक्य जगन्नियमनान्यथानुपपत्त्या सावश्यमभ्युपेयेत्याह—

**वस्तुधर्मा नियम्येरञ्शक्त्या नैव यदा तदा ॥**
**अन्योन्यधर्मसांकर्याद्विप्लवेत जगत्खलु ॥ ३९ ॥**

**वस्तुधर्मा इति ।** वस्तूनां पृथिव्यादीनां काठिन्यद्रवत्वादयो यदा शक्त्या न व्यवस्थाप्यंते तदा तेषां धर्माणां सांकर्याद्विमिश्रणेनैकत्रावस्थानाज्जगद्विप्लवेतानियतव्यवहारविषयतां प्राप्नुयादित्यर्थः । खल्विति प्रसिद्धिं द्योतयति ॥ ३९ ॥

**अ० टीका**—माऽस्तु सर्ववस्तुनियमनमित्यत आह—**वस्तुधर्मा इति ॥ ३९ ॥**

**रा० टीका** —ननु जडाया अस्या जगन्नियामकत्वं न युज्यत इत्याशंक्याऽऽह—

**चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा ॥**
**तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतां व्रजेत् ॥ ४० ॥**

**चिच्छायेति ।** सा शक्तिश्चिच्छायावेशताश्चिदाभासप्रवेशाच्चेतन इव चेतनत्वमापन्नेव विभाति प्रतीयतेऽतोऽस्या नियामकत्वं घटत इत्यर्थः । अस्तु प्रस्तुते किमायातमित्यत

आह—**तच्छक्तीति** । सा चासौ शक्तिश्चेति कर्मधारयः । सैवोपाधिस्तेन संयोगः संबंधस्त-स्माद्ब्रह्मैव सत्यादिलक्षणमीश्वरतां सर्वज्ञत्वादिधर्मयोगितां व्रजेत्प्राप्नुयात् ॥ ४० ॥

**अ० टीका**—ननु सर्ववस्तुनियमनं तु यः सर्वत्र तिष्ठन्नित्याद्यंत**र्यामिब्राह्मणोक्त-**मीश्वर एव न तु जडायां तच्छक्तावित्यत्राऽऽह **चिच्छायेति** । चिदाभासस्य स्वकीयस्य सं-पर्कादिति यावत् । ननु तर्हीश्वरः क इत्यत आह **तदिति** । तादृशी स्वचिदाभासविशिष्टा या शक्तिरनाद्यविद्या सैवोपाधिस्तत्संयोगात्तत्तादात्म्याध्यासादित्यर्थः । एतेनाभासवाद एवैतेषां मतेऽ-पि पर्यवस्यतीति द्योत्यते ॥ ४० ॥

**रा० टीका**—जीवत्वोपाधिभूतानां कोशानां प्रागेवाभिहितत्वात्तन्निमित्तकं जीवत्व-मिदानीमाह—

**कोशोपाधिविवक्षायां याति ब्रह्मैव जीवताम् ॥**
**पिता पितामहश्चैकः पुत्रपौत्रौ यथा प्रति ॥ ४१ ॥**

**कोशोपाधीति** । कोशा एवोपाधिः कोशोपाधिस्तद्विवक्षायां पर्यालोचनायां क्रियमा-णायां ब्रह्मैव सत्यादिलक्षणमेव जीवतां जीवव्यवहारविषयतां गच्छति । नन्वेकस्यैव विरुद्धध-र्मद्वययोगित्वं युगपन्न क्वापि दृष्टचरमित्याशंक्याऽऽह **पितेति** । यथैक एव देवदत्त एक-दैव पुत्रं प्रति पिता भवति पौत्रं प्रति तु पितामह एवं ब्रह्मापि कोशोपाधिविवक्षायां जीवो भवति शक्त्युपाधिविवक्षायामीश्वरश्च भवतीत्यर्थः ॥ ४१ ॥

**अ० टीका**—एवमीशोपाधिं तत्स्वरूपं चाभिधाय जीवोपाध्यादिकमप्यधुनाऽभिधत्ते **कोशेति** । उभयत्रापि दृष्टांतं स्पष्टयति **पितेति** । एतदुपलक्षणं जगतोऽपीति ॥ ४१ ॥

**पुत्रादेरविवक्षायां न पिता न पितामहः ॥**
**तद्वन्नेशो नापि जीवः शक्तिकोशाविवक्षणे ॥ ४२ ॥**

**रा० टीका**—वस्तुतस्तु जीवत्वमीश्वरत्वं वा ब्रह्मणो नास्तीत्येतत्सदृष्टांतमाह—**पुत्रादेरिति** ॥ ४२ ॥

**अ० टीका**—एवमध्यारोपमभिधायेदानीं सदृष्टांतं तदपवादं स्पष्टयति **पुत्रादेरि-ति** । एवं जीवेश्वराभावे तत्कल्पितयोर्द्वैतयोरपि जगत्पदवाच्ययोरभावः कल्पकाभावनांतरीय-कतयैव सिध्यतीत्याकूतम् ॥ ४२ ॥

**रा० टीका**—इदानीमुक्तज्ञानस्य फलमाह—

**य एवं ब्रह्म वेदैष ब्रह्मैव भवति स्वयम् ॥**
**ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते ॥ ४३ ॥**

**इति श्रीविद्यारण्यमुनिविरचितायां पंचदश्यां पंचकोशविवे-को नाम तृतीयं प्रकरणं समाप्तम् ॥ ३ ॥ ॥ ॥ ॥**

**य एवमिति** । यः साधनचतुष्टयसंपन्न एवमुक्तेन प्रकारेण पंचकोशविवेकपुरःसरं ब्रह्म प्रत्यगभिन्नं सत्यादिलक्षणं वेद साक्षात्करोत्येष स्वयं ब्रह्मैव भवति " स यो ह वै तत्परम् " [ मुंड० ३-२-९ ] " ब्रह्म वेद ब्रह्मैव भवति " [ मुंड० ३-२-९ ] " ब्रह्मविदाप्नोति परम् " इत्यादिश्रुतिभ्यः । ततोऽपि किमित्यत आह **ब्रह्मण इति** । " न जायते म्रियते

वा विपश्चित् " [कठ० २–१८] इत्यादिश्रुतेर्ब्रह्मणस्तावज्जन्म नास्त्यत एव विद्वानपि स्वात्मनस्तद्रूपत्वावगमान्नैव जायते "न स पुनरावर्तते" [कालाग्निरु० २] इति श्रुतेरिति ॥४३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता पंचकोशविवेकव्याख्या समाप्ता ॥ ३ ॥ ॥ ॥

**अ० टीका**––नन्वादावुक्तेश्वरोपाधेः शरीरजीवोपाधिभूतकोशपंचकस्य च विना बाधबुद्धिमविवक्षणमेव कथं स्यात्तत्तत्कल्पितयोराकाशादिलक्षणाहंताममतादिलक्षणयोर्द्वैतयोरभावस्तु दूरतोऽपास्त एवेति चेन्न । शक्तेस्तत्कार्यीभूतकोशपंक्तेस्तदुपहितजीवेश्वरतत्कल्पितद्वैतवितंतेश्चाऽऽत्मस्वरूपाद्वैतप्रमेयकत्वाच्चात्तदुपायस्य नोक्तकोशविवेचनादिलक्षणस्याधस्तादेवाविदितत्वाच्चेति सूचयन्फलकथनेनोपसंहरति––**य इति** । तथाच **श्रुतिः**––ब्रह्म वेद ब्रह्मैव भवतीति । गुहाग्रंथिभ्यो विमुक्तोऽमृतो भवतीति ब्रह्मविदाप्नोति परमित्यादिश्च । न स भूयोऽभिजायत इत्यादिस्मृतिरपि विज्ञेया । एतेन यदुक्तमुपोद्घाते–

" निर्गुण आत्मा जगतः कर्ता भर्ता कथं नु संहर्ता ॥
संभवति वा नियंता प्रतिबंधोऽयं तृतीय ईशमितो "

इति तत्पदार्थे तृतीयप्रतिबंधकथनम् ॥

तथा––" प्रत्यक्षाद्यविरोधं वक्तुं कोशान्विवेचयद्ब्रह्म ॥
संभावयति तृतीये तदर्थभूतं गुहा " इत्यादि

इति कोशविवेकाख्यस्यास्य तृतीयप्रकरणस्य तद्बाधकत्वं च तद्युक्तमेव । तद्यथा–तत्र निर्गुणस्याप्यात्मनो जगदभिन्ननिमित्तोपादानत्वे गुहाहितं ब्रह्मेत्युपक्रमस्तथा य एवं ब्रह्म वेदेति इत्युपसंहारश्चेत्युभयैक्यमेकं लिंगं जगत्कारणत्वोपलक्षितब्रह्मण एव जीवस्वरूपत्वेन ज्ञानान्मोक्षदत्वात् । " चित्रभूतो य आनंद आत्माऽसौ सर्वदा स्थितः " इति ।

" यस्मिन्यस्मिन्नास्ति लोके बोधस्तत्तदुपेक्षणे ।
यद्बोधमात्रं तद्ब्रह्मेत्येवंधीर्ब्रह्मनिश्चयः " ।

इत्यादिश्च**अभ्यासः** । " यदनीदृगनादृक्त्वं तत्स्वरूपं विनिश्चितं" **इत्यपूर्वता** । " ब्रह्मणो नास्ति जन्मातः पुनरेष न जायते " इति **फलम्** । 'गुहा सेयं परंपरा ' **इत्यर्थवादः** । ' माधुर्यादिस्वभावानाम् ' इत्यादिः ' पिता पितामहश्चैकः पुत्रपौत्रौ यथा प्रति ' इत्यादिश्चोपपत्तिः । एवं षोढा लिंगैर्निर्गुणमपि ब्रह्म जगत्कारणत्वोपलक्षितं स्वशक्त्या तद्बाधे जीवस्वरूपमद्वैतसच्चिदानंदात्मकैवल्यरूपं संभवत्येवेति नात्र प्रमेयासंभावनागंधोऽपीति दिक् ॥ ४३ ॥

इति श्रीमत्परम० पंचदशीटीकायां कोशविवेकप्रकाशस्तृतीयः संपूर्णः ॥ ३ ॥

# अथ द्वैतविवेकाख्यं चतुर्थं प्रकरणम् ।

**रा० टीका**—नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
मया द्वैतविवेकस्य क्रियते पदयोजना ॥ १ ॥

चिकीर्षितस्य ग्रंथस्य निष्प्रत्यूहपरिपूरणायाभिलषितदेवतातत्त्वानुस्मरणलक्षणमंगलमाचरतस्य वेदांतप्रकरणत्वाच्छास्त्रीयमेवानुबंधचतुष्टयं सिद्धवत्कृत्य ग्रंथारंभं प्रतिजानीते—

**ईश्वरेणापि जीवेन सृष्टं द्वैतं विविच्यते ॥**
**विवेके सति जीवेन हेयो बंधः स्फुटी भवेत् ॥ १ ॥**

**ईश्वरेणेति** । ईश्वरेण कारणोपाधिकेनांतर्यामिणा जीवेनापि कार्योपाधिकेनाहंप्रत्ययिना च सृष्टमुत्पादितं द्वैतं जगद्विविच्यते विभज्य प्रदर्श्यते । अस्य द्वैतविवेचनस्य काकदंतपरीक्षावन्निष्प्रयोजनत्वं वारयति- **विवेक इति** । विवेके सति जीवेश्वरसृष्टयोर्द्वैतयोर्विवेचने कृते सति जीवेन पूर्वोक्तेन हेयः परित्याज्यो बंधो बंधहेतुर्द्वैतं स्फुटीभवेत्स्पष्टतां गच्छेदेतावज्जीवेन हेयमिति निर्धार्यत इत्यर्थः ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्द्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्द्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ॥
सर्वाचार्यवर्यात्रयकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवमंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ॥
द्वैतविवेकं तुर्यप्रकाशतो द्योतयामि कौमुद्याः ॥ २ ॥

अथ भगवान्विद्यारण्याचार्यः पंचदश्याश्चतुर्थं प्रकरणं द्वैतविवेकाख्यं चिकीर्षुस्तद्विषयप्रयोजने कंठत एव प्रेक्षावत्प्रवृत्त्यर्थं कथयंस्तेन वास्तविकशास्त्रीये अपि ते स्वेतरत्वीश्वरस्मरणलक्षणं प्रसिद्धप्रमाणप्रयोजनं मंगलमप्याचरति -- **ईश्वरेणेति** । अयं भावः । अत्रेश्वरजीवाभ्यां सृष्टद्वैतविवेचननांतरीयकतया तद्धर्मीभूतयोस्तयोस्तदनुकूले रूपे तथा वास्तवरूपे वक्तव्ये शुद्धतदैक्यलक्षणः शास्त्रस्य चतुर्लक्षण्याख्यस्य विषयस्तद्विषयकाविद्याध्वस्तिरूपमुक्त्यात्मकं प्रयोजनमपि वास्तवं स्यादिति ॥ १ ॥

**रा० टीका**—नन्वदृष्टद्वारा जीवानामेव जगद्धेतुत्वं वादिनो वर्णयंत्यतः कथमीश्वरसृष्टत्वमुच्यते जगत इत्याशंक्य बहुश्रुतिविरोधान्नेदं चोद्यमुत्थापयितुमर्हतीत्यभिप्रेत्य **श्वेताश्वतरवाक्यं** [ श्वेता० ४-९-१० ] तावदर्थतः पठति--

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥**
**स मायी सृजतीत्याहुः श्वेताश्वतरशाखिनः ॥ २ ॥**

**मायां त्विति** । मायोपाधिकमीश्वरं प्रस्तुत्यास्मान्मायी सृजते विश्वमेतदिति तस्येश्वरस्य जगत्स्रष्टृत्वं श्वेताश्वतरशाखिनो वर्णयंतीत्यर्थः ॥ २ ॥

**अ० टीका**—तत्रेश्वरसृष्टद्वैते चतुर्वेदशाखानामपि श्रुतीरीश्वरानंगीकर्तृंस्तदंगीकारेऽपि जीवस्यैव कर्मद्वारा सर्जकत्वमंगीकर्तृन्प्रकारांतरेण तस्य सर्जकत्वांगीकर्तृन्**माध्यमिककापिला-दीन्बौद्धरामानुजादीनाहततार्किकादींश्चा**थोन्निराकरिष्यन्नर्थतः संग्रथयति–**मायां त्विल्या-द्यर्धेन** । एवं मायोपहितचैतन्यं प्रकृत्य " अस्मान्मायी सृजते विश्वमेतत् " इति **श्वेताश्व-तर**शाखिनो याजुषा आहुरित्यन्वयः ॥ २ ॥

**रा० टीका**—ऐतरेयोपनिषद्वाक्यमर्थतोऽनुसंक्रामति—

**आत्मा वा इदमग्रेऽभूत्स ईक्षत सृजा इति ॥**
**संकल्पेनासृजल्लोकान्स एतानिति बह्वृचाः ॥ ३ ॥**

**आत्मेति** । " आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचनमिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत " [ ऐत० १–१ ] इत्यनेन वाक्येनाद्वितीयस्य परमात्मन एव जगत्स्रष्टृत्वं बह्वृचा ऋक्शाखाध्यायिन आहुरित्यर्थः ॥ ३ ॥

**अ० टीका**—**आत्मेति** । " आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचनमिषत्स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत् " इत्यैतरेयोपनिषद्याम्नायते ॥ ३ ॥

**खं वाय्वग्निजलोर्व्योषध्यन्नदेहाः क्रमादमी ॥**
**संभूता ब्रह्मणस्तस्मादेतस्मादात्मनोऽखिलाः ॥ ४ ॥**

**रा० टीका** ईश्वरस्य जगत्कारणत्वे **तैत्तिरीयश्रुतिरपि** [ तैत्ति० २–१ ] प्रमाणमित्यभिप्रेत्य तद्वाक्यमर्थतः पठति द्वाभ्याम् **खमिति** ॥ ४ ॥

**अ० टीका** **खेति** । " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादि॥४॥

**बहु स्यामहमेवातः प्रजायेयेति कामतः ॥**
**तपस्तप्त्वाऽसृजत्सर्वं जगदित्याह तित्तिरिः ॥ ५ ॥**

**रा० टीका**—" सत्यं ज्ञानमनंतं ब्रह्म " इत्युपक्रम्य " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादिना " अन्नात्पुरुषः " इत्यंतेन वाक्येन गुहाहितत्वेन प्रत्यगभिन्नाद्ब्रह्मण आकाशादिदेहपर्यंतं जगदुत्पन्नमित्यभिधायोपरिष्टादपि " सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा। इदं सर्वमसृजत यदिदं किंच " इति वाक्येन तस्यैव ब्रह्मणो जगत्सर्जनेच्छापूर्वकपर्यालोचनेन जगत्स्रष्टृत्वं तित्तिरिराहेत्यर्थः ॥ ५ ॥

**अ० टीका** **बहु स्यामिति** । " सोऽकामयत । बहु स्यां प्रजायेयेति । स तपो तप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच " इति **तैत्तिरीयो**पनिषद्यप्याम्नायत इत्यर्थः । तपोऽत्र सृज्यमानजगद्विषयकं जीवकर्माद्यालोचनमेव । यस्य ज्ञानमयं तप इति श्रुत्यंतरादित्याशयः ॥ ५ ॥

**रा० टीका** छांदोग्येऽपि [ छांदो० ६–२ ] ब्रह्मण एव जगत्स्रष्टृत्वं श्रुतमित्याह—

**इदमग्रे सदेवासीद्बहुत्वाय तदैक्षत ॥**
**तेजोऽबन्नांडजादीनि ससर्जेति च सामगाः ॥ ६ ॥**

**इदमिति** " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " इति सद्रूपमद्वितीयं ब्रह्मोप-

क्रम्य " तदैक्षत बहु स्यां प्रजायेय " इति " तत्तेजोऽसृजत " इत्यादिना तत्सृष्टेरीक्षणपूर्वकं तेजोऽबन्नस्रष्टृत्वमभिधाय " तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यांडजं जीवजमुद्भिज्जम् " [ छांदो० ६-३-१ ] इत्यादिनांऽडजादिशरीरनिर्मातृत्वं च सामगा वर्णयंतीत्यर्थः ॥६॥

**अ० टीका—**इदमग्र इति । " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " इत्युपक्रम्य " तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत " इत्यादिना तेजोबन्नांऽडजादीनि सस-र्जेति **छांदोग्य** आम्नायत इत्यर्थः ॥ ६ ॥

**विस्फुलिंगा यथा वह्नेर्जायंतेऽक्षरतस्तथा ॥**
**विविधाश्चिज्जडा भावा इत्याथर्वणिका श्रुतिः ॥ ७ ॥**

**रा० टीका—** मुंडकोपनिषद्यपि " तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवंते सरूपास्तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायंते तत्र चैवापियंति " [ मुंड० २-१-१ ] इत्यक्षरशब्दवाच्याद्ब्रह्मणो जगदुत्पत्तिः श्रूयत इत्याह **विस्फुलिंगा इति**॥७॥

**अ० टीका—विस्फुलिंगा इति ।** " यथा सुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवंते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायंते तत्र चैवापियंति " **इत्यथर्वणमुंडकोपनिषदि** श्रूयते ॥ ७ ॥

**रा० टीका—**एवं **बृहदारण्यके**ऽप्यव्याकृतशब्दवाच्याद्ब्रह्मणो नामरूपात्मकं जगदुत्पन्नमिति श्रुतमित्याह द्वाभ्याम्—

**जगदव्याकृतं पूर्वमासीद्व्याक्रियताधुना ॥**
**दृश्याभ्यां नामरूपाभ्यां विराडादिषु ते स्फुटे ॥ ८ ॥**

**जगदिति ।** " तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूपः " [ बृह० १-४-७ ] इति वाक्येन सृष्टेः पूर्वं स्पष्टनामरूपत्वेनाव्याकृतशब्दवाच्यात्मायोपाधिकाद्ब्रह्मणो नामरूपस्पष्टीकरणलक्षणा सृष्टिरुक्ता तयोर्नामरूपयोर्विराडादिषु स्थूलकार्येषु स्पष्टता च " तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदंरूप " [ बृ० १-४-७ ] इति वाक्येनाभिहिता । ते च विराडादयः " आत्मैवेदमग्र आसीत्पुरुषविधः " इत्यादिना " एवमेव यदिदं किंच मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत " इत्यंतेन दर्शितेत्यर्थः ॥८॥

**अ० टीका—**जगदिति । " तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौनामाऽयमिदंरूपः " इति **बृहदारण्यके** पठ्यते ॥ ८ ॥

**विराण्मनुर्नरा गावः खराश्वाजावयस्तथा ॥**
**पिपीलिकावधिद्वंद्वमिति वाजसनेयिनः ॥ ९ ॥**

**रा० टीका—** ॥ ९ ॥

**अ० टीका—विराडिति ।** " आत्मैवेदमग्र आसीत्पुरुषविधः " इत्यादिना " एवमेव यदिदं किंचमिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत" इत्यंतेन **तत्रैव** दर्शितमिति यावत् ॥९॥

**रा० टीका०** उदाहृताभिः श्रुतिभिरीश्वरसृष्ट्यभिधानानंतरं ब्रह्मणो जीवरूपेण तत्र प्रवेशोऽप्यभिहित इत्याह—

**कृत्वा रूपांतरं जैवं देहे प्राविशदीश्वरः ॥**
**इति ताः श्रुतयः प्राहुर्जीवत्वं प्राणधारणात् ॥ १० ॥**

**रा०टी०**—**कृत्वेति।** श्रुतयो जे... असंबंधिरूपांतरमविक्रियब्रह्मणो विलक्षणं विकारिरूपमित्यर्थः । देहे देहजाते जीवत्वं कुत ... न आह—**जीवत्वमिति** । प्राणादीनां स्वामित्वेन प्रेरकत्वं प्राणधारणं तस्माज्जैवं रूपं कृत... ाविशदित्युक्तम् ॥ १० ॥

**अ० टीका**—एवं "स ए... सीमानं विदार्यैतया द्वारा प्रापद्यत" इति तत्सृष्ट्वा । तदेवानुप्राविशत् " इति । "अनेनैव जीवेन... त्मनाऽनुप्रविश्य नामरूपे व्याकरोत्" इति च क्रमात्प्रसिद्धगादिश्रुतिभिर्जीवसंबंधिनापन्ननि... ण निरुक्तविराडादिदेहे प्रवेशोऽप्युक्त इत्याह—**कृत्वेति** । नन्वीशस्यापि जीवत्वं कुत इत्य... ऽऽह—**जीवत्वमिति** । प्राणोपलक्षितलिंगशरीरतादात्म्याध्यासादित्यर्थः । एवं च जीव प्राणधारण इति धातुरपि संगच्छते ॥ १० ॥

**रा०टी०**—किं तदित्यपेक्षायामाह—

> **चैतन्यं यदधिष्ठानं लिंगदेहश्च यः पुनः ॥**
> **चिच्छाया लिंगदेहस्था तत्संघो जीव उच्यते ॥ ११ ॥**

**चैतन्यमिति** । यदधिष्ठानं लिंगदेहकल्पनाधारभूतं यच्चैतन्यमस्ति यश्च तत्र कल्पितो लिंगदेहो यश्च तस्मिँल्लिंगदेहे वर्तमानश्चिदाभासस्तत्संघस्तेषां त्रयाणां समूहो जीवशब्देनोच्यत इत्यर्थः ॥ ११ ॥

**अ० टीका**—तदेव विवृणोति—**चैतन्यमिति** । छाया प्रतिबिंबः ॥ ११ ॥

**रा०टी०**—नन्वीश्वरस्यैव जीवरूपेण प्रविष्टत्वे तस्याज्ञत्वदुःखित्वादिविरुद्धधर्मवत्त्वं कुत इत्याशंक्याऽऽह—

> **माहेश्वरी तु माया या तस्या निर्माणशक्तिवत् ॥**
> **विद्यते मोहशक्तिश्च तं जीवं मोहयत्यसौ ॥ १२ ॥**

**माहेश्वरी त्विति** । माहेश्वरी "मायिनं तु महेश्वरम्" [ श्वे० ४—१० ] इति श्रुत्युक्तो महेश्वरसंबंधिनी या मायाऽस्ति तस्या निर्माणशक्तिवज्जगत्सर्जनसामर्थ्यवन्मोहशक्तिश्च मोहनसामर्थ्यमप्यस्ति "तदेतज्जडं मोहात्मकम्" [ नृसिं० उ० ता० ९ ] इति श्रुतेः । ततः किमित्यत आह—**तं जीवमिति** । असौ मोहनशक्तिस्तं पूर्वोक्तं जीवं मोहयति चिदानंदादिस्वरूपज्ञानरहितं करोति ॥ १२ ॥

**अ० टीका**—नन्वथाप्यस्याज्ञत्वं कुत इत्यत आह—**माहेश्वरीत्विति** ॥ १२ ॥

**रा० टीका**—ततोऽपि किमित्यत आह—

> **मोहादनीशतां प्राप्य मग्नो वपुषि शोचति ॥**
> **ईशसृष्टमिदं द्वैतं सर्वमुक्तं समासतः ॥ १३ ॥**

**मोहादिति** । मोहात्पूर्वोक्तादनीशतामिष्टानिष्टप्राप्तिपरिहारयोरसामर्थ्यं प्राप्य वपुषि निमग्नः शरीरे तादात्म्याभिमानं गतः शोचति दुःखित्वाद्यभिमानं करोति "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः" [ श्वे० ४—मुं० ३—१—२ ] इति श्रुतेरित्यर्थः । वक्ष्यमाणसांकर्यपरिहाराय वृत्तं निगमयति—**ईशेति** । समासतः संक्षेपेणेत्यर्थः ॥ १३ ॥

**अ० टीका**—अत एव **मोहादिति** । मग्नस्तादात्म्यवान् । उपसंहरति-**ईशेति**॥ १३॥

**रा० टीका**—ननु जीवस्य द्वैतस्रष्टृत्वे किं मानमित्याशंक्याऽऽह—

**सप्तान्नब्राह्मणे द्वैतं जीवसृष्टं प्रपंचितम् ॥**
**अन्नानि सप्तज्ञानेन कर्मणाऽजनयत्पिता ॥ १४ ॥**

**सप्तान्नेति** । कथं तत्र प्रपंचितमित्याशंक्य सप्तान्नशब्दवाच्यद्वैतसृष्टिप्रतिपादकं " यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता " [ बृ० १ ५ १ ] इति वाक्यमर्थतः संगृह्णाति- **अन्नानीति** । पिता स्वादृष्टद्वारा जगदुत्पादनेन सर्वलोकपालको जीव इत्यर्थः ॥ १४ ॥

**अ० टीका**—एवमीश्वरसृष्टद्वैतं प्रतिज्ञाततद्विवेकार्थमुपपाद्यावसरप्राप्तं जीवद्वैतं वक्तुं तन्निर्मूलत्वशंकां शमयति—**सप्तान्नेति** । बाहदारण्यक इत्यर्थः । तत्प्रकारं कथयंस्तद्वाक्यमेवार्थतः संग्रथयति -**अन्नानीति** । तथा च **बृहदारण्यक** आम्नाये " यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता " इति । पिता स्वादृष्टद्वारा वक्ष्यमाणान्नसप्तकोत्पादकः समष्टिजीव इत्यर्थः॥१४॥

**रा० टीका**—नन्वन्नसप्तकसर्जनं किमर्थमित्याशंक्य तद्विनियोगोऽपि " एकमस्य साधारणं द्वे देवानभाजयत्त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् " [ बृह० १-५ ] इति वाक्येनोक्त इत्याह—

**मर्त्यान्नमेकं देवान्ने द्वे पश्वन्नं चतुर्थकम् ॥**
**अन्यत्त्रितयमात्मार्थमन्नानां विनियोजनम् ॥ १५ ॥**

**मर्त्यान्नमिति** । विनियोजनमकरोदिति शेषः ॥ १५ ॥

**अ० टीका** अथ तत्प्रसंगतस्तद्विभागं चाऽऽह **मर्त्यान्नमिति** । काण्वाः समामनंति "एकमस्य साधारणं द्वे देवानभाजयत्त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्" इति॥१५॥

**व्रीह्यादिकं दर्शपूर्णमासौ क्षीरं तथा मनः ॥**
**वाक् प्राणश्चेति सप्तत्वमन्नानामवगम्यताम् ॥ १६ ॥**

**रा० टीका**—तानि च सप्तान्नानि " एकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते " इत्यादिना " अयमात्मा वाङ्मयो मनोमयः प्राणमयः " [ बृ० १ ५ ] इत्यंतेन वाक्यसंदर्भेणपदृतकंडिकाद्वयरूपेण दर्शितानीत्याह - **व्रीह्यादिकमिति** ॥ १६ ॥

**अ० टीका**—किंरूपाणि तानीत्यपेक्षायामेकमस्य साधारणमित्यारभ्य मनोमयः प्राणमय इति तृतीयकंडिकांतेन **बृहदारण्यक** एव तृतीये प्रपाठके पंचमब्राह्मणे प्रपंचितं तद्रूपं संक्षिपति—**व्रीह्यादिकमिति** । एवं च व्रीह्यादिकं मर्त्यानां दर्शपूर्णमासौ देवानां क्षीरं पशूनां वाङ्मनःप्राणा जीवस्य चेत्यन्नसप्तकविभागः सिद्धः ॥ १६ ॥

**रा० टीका**—ननूक्तसप्तान्नानां जगदंतःपातित्वेनेश्वरनिर्मितत्वाज्जीवनिर्मितत्वाभिधानमयुक्तमित्याशंक्य तत्स्वरूपस्येश्वरनिर्मितत्वेऽपि भोग्यत्वाकारस्य जीवनिर्मितत्वान्मैवमित्याह -

**ईशेन यद्यप्येतानि निर्मितानि स्वरूपतः ॥**
**तथाऽपि ज्ञानकर्मभ्यां जीवोऽकार्षीत्तदन्नताम् ॥ १७ ॥**

**ईशेनेति** । ज्ञानकर्मभ्यां ज्ञानं विहितं प्रतिषिद्धं च देवतापरयोषिदादिविषयध्यानं कर्म च विहितं यज्ञादिरूपं प्रतिषिद्धं हिंसादिरूपं ताभ्यामित्यर्थः । तदन्नतां तेषां व्रीह्यादिप्राणांतानां स्वभोगोपकरणत्वमित्यर्थः ॥ १७ ॥

**अ० टीका**—ननु सप्तानामप्येतेषां जगदंतःपातित्वेन प्रागुक्तश्रुतिगत्येशसृष्टत्वमे-

वेष्टव्यमितिचेत्सत्यम् । तथापि तं ि ाणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतेर्ज्ञानकर्मभ्यां जीवेनापि तेषामात्मभोगार्थं सृष्टत्वमस्त्ये पभोक्तृत्वादित्याह—ईशेनेति ॥ १७ ॥

**रा० टीका**—किमुक्तं भव तत्राऽऽह—

**ईशकार्यं जीवभो जगद्वाभ्यां समन्वितम् ॥**
**पितृजन्या भर्तृभ था यथा योषित्तथेष्यताम् ॥ १८ ॥**

**ईशकार्यमिति** । जगत्समात्वेनो गोह्यादिरूपसोशकार्यत्वेन जीवभोग्यत्वेन च द्वाभ्यां संबद्धमित्यर्थः । एकस्योभयसंबंधे दृष्टा - **पितृजन्येति** ॥ १८ ॥

**अ० टीका**—नन्वेकेन वस्तु निमा समर्पणे तद्भोक्तव्यमित्ययुक्तमित्याशंक्य तथैव संभवान्नैवमित्याह **ईशेनेति** । ईशस्य जीवं कर्मादिफलदातृत्वेन जगन्निर्मातृत्वेऽपि पूर्णकामत्वादभोक्तृत्वं जीवस्य तु कर्मादिना तत्संपा दत्वात्तद्भोक्तृत्वं युक्तमेवेति भावः । तत्र निदर्शनम् । **पित्रिति** ॥ १८ ॥

**मायावृत्त्यात्मको हीशसंकल्पः साधनं जनौ ॥**
**मनोवृत्त्यात्मको जीवसंकल्पो भोगसाधनम् ॥ १९ ॥**

**रा० टीका**—ईशजीवयोर्जगत्सर्जने किं साधनमित्यत आह—**मायेति** ॥ १९ ॥

**अ० टीका**—नन्वीशजीवयोः क्रमात्कर्मफलदानार्थं स्वोपभोगार्थं च जगत्सृजतोस्तत्र किं साधनमित्यपेक्षायां तदाह **मायेति** ॥ १९ ॥

**रा० टीका**—नन्वीशसृष्टवस्तुस्वरूपातिरिक्तो भोग्यत्वाकार एव नास्ति को जीवेन सृज्यत इत्याशंक्याऽऽह—

**ईशनिर्मितमण्यादौ वस्तुन्येकविधे स्थिते ॥**
**भोक्तृधीवृत्तिनानात्वात्तद्भोगो बहुधेष्यते ॥ २० ॥**

**ईशनिर्मितेति** । एकस्मिन्नेव विषये बहुविधोपभोग उपलभ्यमानस्तत्प्रयोजकं भोग्याकारभेदं गमयतीत्यर्थः ॥ २० ॥

**अ० टीका** ननु यदि जीवसृष्टः कश्चिदीश्वरसृष्टवस्तुस्वरूपातिरिक्तः स्याच्चेद्भोग्य आकारस्तदा घटेतापि तत्र जीवस्रष्टृत्वकल्पना तमेव तु न पश्याम इत्याशंक्य तं प्रदर्शयति— **ईशेति** ॥ २० ॥

**रा० टीका**—ननु सति भोगभेदे भोग्यभेदः कल्प्येत स एव नास्तीत्याशंक्य दृश्यमानत्वान्नैवमित्याह—

**हृष्यत्येको मणिं लब्ध्वा क्रुध्यत्यन्यो ह्यलाभतः ॥**
**पश्यत्येव विरक्तोऽत्र न हृष्यति न कुप्यति ॥ २१ ॥**

**हृष्यतीति** । एको मणयर्थी तं लब्ध्वा हृष्यत्यन्यस्तथाविधस्तदलाभात्कुप्यति । अत्र मणौ विषये विरक्तस्तु तं मणिं पश्यत्येव लाभालाभनिमित्तौ हर्षक्रोधौ न प्राप्नोतीत्यर्थः ॥२१॥

**अ० टीका**—कथं भोगबहुत्वमित्यत आह —**हृष्यतीति** । एतेन रजस्तमःसत्त्वात्मकान्यासुरराक्षसदैवप्रकृतिकार्याणि द्योत्यंते ॥ २१ ॥

**रा० टीका**—के ते भोगभेदोपरक्ता जीवसृष्टा आकारभेदा इत्यत आह—

**प्रियोऽप्रिय उपेक्ष्यश्चेत्याकारा मणिगास्त्रयः ॥**
**सृष्टा जीवैरीशसृष्टं रूपं साधारणं त्रिषु ॥ २२ ॥**

**प्रिय इति** । मणिनिष्ठाः प्रियत्वाप्रियत्वोपेक्ष्यत्वलक्षणा आकारभेदा जीवैः सृष्टास्त्रिष्वपि साधारणमनुस्यूतं यन्मणिरूपं तदीश्वरनिर्मितमित्यर्थः ॥ २२ ॥

**अ० टीका**—ननु भवतु लाभादिजन्यो हर्षादिकार्यभेदस्तथाऽपि वस्तुभेदस्तु नैवेति चेद्दृष्टत्वान्मैवमित्याह-**प्रिय इति** ॥ २२ ॥

**रा० टीका**—उक्तं जीवसृष्टाकारभेदमुदाहरणांतरेण स्पष्टयति—

**भार्या स्नुषा ननांदा च याता मातेत्यनेकधा ॥**
**प्रतियोगिधिया योषिद्भिद्यते न स्वरूपतः ॥ २३ ॥**

**भार्येति** । ननांदा भर्तृभगिनी याता देवरपत्नी प्रतियोगिधिया भर्तृश्वशुरादिलक्षणप्रतियोगिगोचरया बुद्ध्या तत्तदपेक्षयेत्यर्थः ॥ २३ ॥

**अ० टीका**—तद्दार्ढ्यार्थमुदाहरणांतरमाह-**भार्येति** । ननांदा भर्तृभगिनी । याता देवरपत्नी ॥ २३ ॥

**ननु ज्ञानानि भिद्यंतामाकारस्तु न भिद्यते ॥**
**योषिद्वपुष्यतिशयो न दृष्टो जीवनिर्मितः ॥ २४ ॥**

**रा० टीका०**—ननु योषिद्विषयाणि भार्यास्नुषात्यादिज्ञानान्येव भिन्नान्युपलभ्यंते न तु तद्विषयभूताया योषितः स्वरूपं भेदो दृश्यतेऽतः प्रतियोगिधिया योषिद्भिद्यत इत्युक्तमयुक्तमिति शंकते—**नन्विति** ॥ २४ ॥

**अ० टीका**—पुनः शंकते-**नन्विति** ॥ २४ ॥

**मैवं मांसमयी योषित्काचिदन्या मनोमयी ॥**
**मांसमय्या अभेदेऽपि भिद्यते हि मनोमयी ॥ २५ ॥**

**रा० टीका**—ज्ञानवैलक्षण्यस्य ज्ञेयवैलक्षण्याविनाभूतत्वाज्ज्ञेयाकारभेदोऽङ्गीकर्तव्य एवेत्याशयेन परिहरति—**मैवमिति** ॥ २५ ॥

**अ० टीका**—समाधत्ते-**मैवमिति** । तत्र हेतुः **मांसेत्यादिना** । काचिदन्येति मनोमयीत्यत्रापि काकाक्षिगोलकन्यायेन संबध्यते । ततः किं तत्राऽऽह **मांसेति** । हि हेतौ । अन्यथा भार्यादिशब्दज्ञानव्यवहाराणां भेदो न स्यात्तद्वत् तत्तज्जीवदृष्टिकल्पिताऽन्या मनोमयी योषिद्भिन्नैव बहुविधात्ववश्यमेवाङ्गीकार्येति तात्पर्यम् ॥ २५ ॥

**रा० टीका**—ननु भ्रांत्यादिस्थले बाह्यविषयाभावात्तत्रत्यं वस्तु मनोमयमस्तु प्रमितिस्थले तु तदनुपपन्नं बाह्यवस्तुनः सत्त्वादिति शंकते—

**भ्रांतिस्वप्नमनोराज्यस्मृतिष्वस्तु मनोमयम् ॥**
**जाग्रन्मानेन मेयस्य न मनोमयतेति चेत् ॥ २६ ॥**

**भ्रांतीति** । मानेन प्रत्यक्षादिप्रमाणेन मेयस्य प्रमेयस्येत्यर्थः ॥ २६ ॥

**अ० टीका**—पुनरपि शंकते-**भ्रांतीति** । **जाग्रदिति** । जाग्रत्कालिकव्यावहारिकप्रत्यक्षादिप्रमाणेनेत्यर्थः ॥ २६ ॥

**रा० टीका**—प्रमितिम्[illegible] बाह्यं विषयसत्त्वमंगीकरोति—

**बाढं माने तु मेयस्य योगात्स्याद्विषयाकृतिः ॥**
**भाष्यवार्तिककाराभ्यामयमर्थ उदीरितः ॥ २७ ॥**

**बाढमिति** । कथं तर्हि तद्विषयस्य मनोमयत्वमुच्यत इत्यत आह—**माने त्विति** । माने विषयाकृतिस्तु तस्य मेयेन योगात्संब[illegible]त्स्यात् । नन्विदं स्वकपोलकल्पितमित्याशंक्याऽऽह—**भाष्येति** ॥ २७ ॥

**अ० टीका**—व्यावहारिकप्रमाणप्रमेयेऽपि मनोमयमन्यद्वस्तु प्रमित्याख्यं वर्तत एव अन्यथाऽन्तःकरणवृत्त्यवच्छिन्नचैतन्यस्याऽऽलो[illegible]नुगृहीतचक्षुर्द्वारा घटपर्यंतमागतत्वेन प्रमाणपदवाच्यस्य प्रमेयपदवाच्या ज्ञातघटावच्छिन्नचैतन्याकारतारूपप्रमितिमंतरा तद्विषयकारणरूपमज्ञानमेव देहव्याप्यंतःकरणभागावच्छिन्नप्रमा आश्रितं नैव नश्येदित्याशयेन समाधत्ते—**बाढमिति।** बुद्धिरिति शेषः । ननु भ्रान्त्यादिषु बाह्यविषयाभावादस्तु मनोमयो विषयः प्रमाणसिद्धबाह्यविषयसत्त्वेऽपि पुनर्मनोमयविषयांगीकरणं प्रौढीवादमात्रत्वेनासांप्रदायिकमेवेत्याशंकां शमयति—**भाष्येति** ॥ २७ ॥

**रा० टीका**—तत्र तावद्भाष्यकारवचनमुदाहरति—

**मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ॥**
**रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ २८ ॥**

**मूषेति** । यथा द्रुतं ताम्रं मूषायां सिक्तं सत्तन्निभं जायते तत्समानाकारवद्भवति तथा रूपादीन्विषयान्व्याप्नुवद्विषयीकुर्वच्चित्तं ध्रुवमवश्यं तन्निभं दृश्यत उपलभ्यत इत्यर्थः ॥ २८ ॥

**अ० टीका** तत्रादावुपदेशसाहस्रीस्थं श्रीमद्भाष्यकारवाक्यद्वयमुदाहरति—**मूषेत्यादिना** । मूषा हि धातुमूर्त्यादिरचनार्थं कृतमभृत्थाकारापरिसिंलेपितमृत्तिकानिर्मितयंत्रविशेषः प्रसिद्ध एव तत्र सिक्तं निषेचितमेतादृशं ताम्रम् । उपलक्षणमिदं सुवर्णादेः । तद्धि परमप्रज्वलत्पावकसंपर्कादद्रवीभूतं सद्रक्तमूषाख्यकठिनद्रव्यसंयोगाद्यथा तन्निभं ध्रुवं तदाकारमेव जायते तथा चित्तमपि रूपादीन्विषयान्व्याप्नुवत्सत्तन्निभं ध्रुवं तदाकारमेव दृश्यत इत्यन्वयः ॥ २८ ॥

**रा० टीका**—ननु ताम्रादेरग्निसंपर्काद्द्रुतस्य मूषानिषिक्तस्य कठिनमूषाभिघातेन शैत्यापत्तौ मूषाकारापत्तावपि बुद्धेरमूर्तायास्ताम्रादिविलक्षणाया विषयव्याप्तावपि कुतस्तदाकारापत्तिरित्याशंक्य दृष्टांतांतरमाह

**व्यंजको वा यथाऽऽलोको व्यंग्यस्याऽऽकारतामियात् ॥**
**सर्वार्थव्यंजकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ २९ ॥**

**व्यंजक इति** । यथा वा व्यंजकः प्रकाशक आलोक आतपादिर्व्यंग्यस्य प्रकाश्यस्य घटादेराकारतामाकारवत्तामियात्प्राप्नुयादेवं धीरपि सर्वार्थस्य व्यंजकत्वात्सकलपदार्थप्रकाशकत्वादर्थाकाराऽर्थस्याऽऽकार इवाऽऽकारो यस्याः सा तथा प्रदृश्यते प्रकर्षेणोपलभ्यत इत्यर्थः २९

**अ० टीका**—ननु मूर्तस्य ताम्रादेर्मूषाकारत्वसंभवेऽप्यमूर्तस्य चित्तस्य तदनुचितमेवेत्यस्वरसाद्दृष्टांतांतरं स्पष्टयति—**व्यंजको वेति** । व्यंजको द्योतकः । आलोक इति छेदः व्यंग्यस्य द्योत्यस्य ॥ २९ ॥

**रा० टीका**—इदानीं वार्तिककारवचनमाह—

**मातुर्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति तत् ॥**
**मेयाभिसंगतं तच्च मेयाभत्वं प्रपद्यते ॥ ३० ॥**

**मातुरिति** । मातुः साधिष्ठानबुद्धिस्थचिदाभासरूपात्प्रमातुर्मानाभिनिष्पत्तिर्मानस्य साभासांतःकरणवृत्तिरूपस्याभिनिष्पत्तिरुत्पत्तिर्भवतीति शेषः । निष्पन्नमुत्पन्नं तन्माने मेयं घटादिरूपमेति प्राप्नोति । किंच तन्मानं मेयाभिसंगतं प्रमेयेण संबद्धं सन्मेयाभत्वं मेयस्याऽऽभेवाऽऽभा यस्य तन्मेयाभं तस्य भावस्तत्त्वं मेयसमानाकारतां प्रपद्यते प्राप्नोतीत्यर्थः ॥ ३० ॥

**अ० टीका**—एवं वार्तिकमप्युदाहरति–**मातुरिति** । प्रमातुः सकाशादित्यर्थः । **मानेति** । प्रागुक्तप्रमाणोत्पत्तिर्भवतीति संबंधः । ततः किं तत्राऽऽह–**निष्पन्नमित्यादिना** । तदुक्तलक्षणं प्रमाणम् । मेययुक्तलक्षणं प्रमेयं प्रत्येत्यागच्छतीत्यर्थः । ततोऽपि किं तदाह— **मेयेत्यादि** ॥ ३० ॥

**रा० टीका**—भवत्वेवं प्रकृते किमायातमित्यत आह—

**सत्येवं विषयौ द्वौ स्तो घटौ मृन्मयधीमयौ ॥**
**मृन्मयो मानमेयः स्यात्साक्षिभास्यस्तु धीमयः ॥ ३१ ॥**

**सत्येवमिति** । ननु मृन्मयघटस्येव मनोमय घटस्य तेनैव मनसा ग्रहीतुमशक्यत्वाद्ग्राहकांतराभावाच्चासिद्धिरेवेत्याशंक्य ग्राहकांतराभावोऽसिद्ध इत्याह—**मृन्मय इति** । यथा मृन्मयो मानमेयस्तथा धीमयः साक्षिभास्य इत्यर्थः ॥ ३१ ॥

**अ० टीका**—फलितमाह–**सत्येवमिति** । अपरं तु ऋज्वेव ॥ ३१ ॥

**रा० टीका**—भवत्वेवं द्विविधं द्वैतमत्र कस्य हेयत्वं कस्य वा नेति न ज्ञायत इत्याशंक्य जीवसृष्टस्यैव हेयत्वमित्यभिप्रेत्य तस्य बंधहेतुत्वं दर्शयति—

**अन्वयव्यतिरेकाभ्यां धीमयो जीवबंधकृत् ॥**
**सत्यस्मिन्सुखदुःखे स्तस्तस्मिन्नसति न द्वयम् ॥ ३२ ॥**

**अन्वयेति** । अन्वयव्यतिरेकावेव दर्शयति –**सत्यस्मिन्निति** । अस्मिञ्जीवसृष्टे मानसप्रपंचे सति विद्यमाने सुखदुःखे स्तो भवतः । असति तु तस्मिन्न द्वयं सुखं दुःखं च नास्तीत्यर्थः ॥ ३२ ॥

**अ० टीका**—ननु भवत्वेवं धीमयविषयस्य भ्रांत्यादिवन्मनोमयत्वात्साक्षिभास्यत्वमथापि प्रकृते इत्यत आह–**अन्वयेति** । धीमयविषयसत्त्वे जाग्रत्स्वप्नयोर्बंधसत्त्वं तदभावे समाधिसुषुप्त्योर्बंधाभाव इति प्रसिद्धावेव तावेवेति भावः । नन्वविद्यास्तमयो मोक्षः स च बंध उदाहृत इति **श्रीमद्वार्तिकाचार्यचरणवचना**त्सुषुप्त्यादावपि मूलाविद्यासत्त्वे बंधसत्त्वमेवेतदभावे तु जाग्रदादावपि बंधाभाव एवेत्युक्तान्वयव्यतिरेकावयुक्तावेवेति चेन्सत्यम् । वास्तविकतथात्वेऽपि मूलाविद्याध्वंसोत्तरमपि सुखदुःखप्रदमनोमयविषयविलयस्यैव बंधाभावत्वेन विवक्षितत्वात् । जीवन्मुक्तेः परा काष्ठा जीवद्वैतविवर्जनादित्यत्रैव तथैव वक्ष्यमाणत्वात्तदभावे त्वविद्याध्वंसोत्तरमपि जीवन्मुक्त्यभावाच्चेत्याशयेनाऽऽह– **सत्यस्मिन्निति** ॥ ३२ ॥

**रा० टीका**—ननूक्तावन्वयव्यतिरेकौ बाह्यार्थविषयौ किं न स्यातामित्यत आह–

**असत्यपि च बाह्यार्थे स्वप्नादौ बध्यते नरः ॥**
**समाधिसुप्तिमूर्छासु सत्यप्यस्मिन्न बध्यते ॥ ३३ ॥**

**असतीति** । नरो मनुष्य एतदुपलक्षणमन्येषामपि स्वप्नादौ स्वप्नस्मृत्यादिकाले बाह्यार्थेऽनुकूले योषिदादौ प्रतिकूले व्याघ्रादौ च पारमार्थिके विषयेऽसत्यप्यविद्यमानेऽपि बध्यते सुखदुःखाभ्यां युज्यते समाध्यादिषु त्वस्मिन्बाह्यार्थे सत्यपि न बध्यते न सुखदुःखादिभाग्भवति । अतस्तद्विषयावन्वयव्यतिरेकौ न स्त इत्यर्थः ॥ ३३ ॥

**अ० टीका**—नन्वेवमपि भवतु बाह्यार्थस्यैव भवतः सुखादिप्रदत्वं किमांतरेण धीमयेन तेनेत्यत आह—**असत्यपि चेति** । बध्यते सुखादि मनुत इत्यर्थः ॥ ३३ ॥

**रा० टीका**—मनोमयप्रपंचस्य बंधकत्वेनान्वयव्यतिरेकावुदाहरणेन स्पष्टयति—

**दूरदेशं गते पुत्रे जीवत्येवात्र तत्पिता ॥**
**विप्रलंभकवाक्येन मृतं मत्वा प्ररोदिति ॥ ३४ ॥**

**दूरदेशमिति** । देशांतरं प्राप्ते पुत्रे तत्र जीवत्येव सत्यत्र स्वगृहे स्थितस्तस्य पिता विप्रलंभकस्य मिथ्यावचनैः परवंचकस्य त्वत्पुत्रो मृत इत्येवंरूपेण वाक्येन स्वपुत्रं मृतं कल्पयित्वा प्रकर्षेण रोदनं करोति ॥ ३४ ॥

**अ० टीका**—तदेवान्वयव्यतिरेकाभ्यामनुभावयति—**दूरदेशमित्यादिद्वाभ्याम्** । विप्रलंभको वंचकः ॥ ३४ ॥

**मृतेऽपि तस्मिन्वार्तायामश्रुतायां न रोदिति ॥**
**अतः सर्वस्य जीवस्य बंधकृन्मानसं जगत् ॥ ३५ ॥**

**रा० टी०**—तस्मिन्नेव पुत्रे तत्रैव मृतेऽपि तन्मृतिवार्तायामश्रुतायां सत्यां न रोदनं करोति । फलितमाह—**अत इति** ॥ ३५ ॥

**अ० टीका०**—**मृतेऽपीति** । फलितमाह—**अत इति** ॥ ३५ ॥

**रा० टीका**—धीमयस्यैव जगतो बंधहेतुत्वांगीकारे बाह्यार्थापलापादपसिद्धांतापातः स्यादिति शंकते—

**विज्ञानवादो बाह्यार्थवैयर्थ्यात्स्यादिहेति चेत् ॥**
**न हृद्याकारमाधातुं बाह्यस्यापेक्षितत्वतः ॥ ३६ ॥**

**विज्ञानेति** । यद्यपि मानसप्रपंचस्यैव बंधहेतुत्वं तथापि तद्धेतुत्वेन बाह्यार्थस्यापि स्वीकारान्न विज्ञानवादप्रसंग इति भावः ॥ ३६ ॥

**अ० टीका**—तत्रापि शंकते—**विज्ञानेति** । समाधत्ते—**नेति** । हृदि चित्ते ॥ ३६ ॥

**रा० टीका**—ननु न हृद्याकारसमर्पणाय बाह्यपदार्थोऽपेक्षणीयः पूर्वपूर्वमानसप्रपंचसंस्कारस्यैवोत्तरोत्तरमानसप्रपंचहेतुत्वोपपत्तेरित्याशंक्य प्रौढवादेन तदंगीकरोति—

**वैयर्थ्यमस्तु वा बाह्यं न वारयितुमीश्महे ॥**
**प्रयोजनमपेक्षंते न मानानीति हि स्थितिः ॥ ३७ ॥**

**वैयर्थ्यमिति** । तर्हि विज्ञानवादात्को भेद इत्यत आह—**बाह्यमिति** । विज्ञानवादिनो बाह्यार्थमेवापलपंति वयं न तथेत्ययमेव भेद इत्यर्थः । प्रयोजनशून्यत्वादभ्युपगमोऽप्ययुक्त

एवेत्याशंक्याऽऽह—**प्रयोजनमिति** । मानाधीना वस्तुसिद्धिर्न प्रयोजनाधीना मानसिद्धस्य प्रयोजनशून्यत्वमात्रेणासत्त्वस्य लौकिकैर्वादिभिर्वाऽनभ्युपगमादिति भावः ॥ ३७ ॥

**अ० टीका**—पूर्वपूर्वसंस्कारादिनैव मनसो विषयाकारपरिणामः स्यादतः किं बाह्यार्थेनेत्यस्वरसात्प्रकारांतरेण तं बाह्यार्थं समर्थयति—**वैयर्थ्यमिति** । प्रयोजनं विनाऽपि तृणादिज्ञप्तेः प्रमाणानां न प्रयोजनापेक्षेति भावः ॥ ३७ ॥

**बंधश्चेन्मानसद्वैतं तन्नीरोधेन शाम्यति ॥**
**अभ्यसेद्योगमेवातो ब्रह्मज्ञानेन किं वद ॥ ३८ ॥**

**रा० टीका**—मानसद्वैतस्यैव बंधहेतुत्वे तस्य मनोनिरोधात्मकयोगेनैव निवृत्तिसंभवाद्ब्रह्मज्ञानस्य बंधनिवर्तकत्वाभ्युपगमो विरुध्येतेति शंकते—**बंधश्चेदिति** ॥ ३८ ॥

**अ० टीका०**—पुनः शंकते—**बंधश्चेति** ॥ ३८ ॥

**रा० टीका**—योगेन किं द्वैतोपशमस्तात्कालिक उच्यत आत्यंतिको वेति विकल्प्याऽऽद्यमंगीकृत्य द्वितीयं दूषयति—

**तात्कालिकद्वैतशांतावप्यागामिजनिक्षयः ॥**
**ब्रह्मज्ञानं विना न स्यादिति वेदांतडिंडिमः ॥ ३९ ॥**

**तात्कालिकेति** । "ज्ञात्वा देवं मुच्यते सर्वपाशैः" [श्वेता० १-८।२-१५।४-१६।५-१३] "ज्ञात्वा शिवं शांतिमत्यंतमेति" [श्वेता० ४-१४] "यदा चर्मवदाकाशं वेष्टयिष्यंति मानवाः । तदा देवमविज्ञाय दुःखस्यांतो भविष्यति" [श्वेता० ६-२०] इत्यादिश्रुतिष्वन्वयव्यतिरेकाभ्यां ब्रह्मज्ञानादेव बंधनिवृत्तिरभिधीयत इति भावः ॥ ३९ ॥

**अ० टीका०**—समाधत्ते—**तात्कालिकेत्यंगीकारेण** ॥ ३९ ॥

**अनिवृत्तेऽपीशसृष्टे द्वैते तस्य मृषात्मताम् ॥**
**बुद्ध्वा ब्रह्माद्वयं बोद्धुं शक्यं वस्त्वैक्यवादिनः ॥ ४० ॥**

**रा० टीका**—ननु बाह्यद्वैतनिवारणमंतरेणाद्वितीयब्रह्मज्ञानमेव नोदीयादित्याशंक्य तन्निवारणाभावेऽपि तस्य मिथ्यात्वज्ञानादेव पारमार्थिकमद्वैतं बोद्धुं शक्यत इत्याह—**अनिवृत्तेऽपीति** ॥ ४० ॥

**अ० टीका०**—ननु बाह्यद्वैतं निवृत्तिमंतरा त्वद्वैतब्रह्मज्ञानमेवाशक्यं तस्य तद्बाधकत्वादित्याशंक्य तस्य मिथ्यात्वबोधेन तद्बाधकत्वासंभवाद्दर्शगृहानिविष्टदेवदत्तादौ तथैव दृष्टत्वाच्च सर्वमिति समाधत्ते—**अनिवृत्तेपीति** ॥ ४० ॥

**रा० टीका**—न द्वैतमृषात्वज्ञानमद्वैतज्ञानप्रयोजकमपि तु तन्निवारणमेवेत्यभिनिवेशमानं प्रत्याह—

**प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः ॥**
**विरोधिद्वैताभावेऽपि न शक्यं बोद्धुमद्वयम् ॥ ४१ ॥**

**प्रलय इति** । प्रलये प्रलयावस्थायां तन्निवृत्तौ तु तस्य द्वैतस्य निवृत्तौ सत्यां तु वि-

१ द्वैताभानेऽपीत्यच्युतराय पाठः ।

रोधिद्वैताभावेऽप्यद्वैतज्ञानविरोधित्वेन भवदभिमतस्य द्वैतस्य निवारणे सत्यपि गुरुशास्त्राद्यभावा-तो गुरुशास्त्रादिरूपस्य ज्ञानसाधनस्याभावाद्धेतोरद्वयं वस्तु बोद्धुं शक्यं न भवत्यतस्तन्निवारण-मप्रयोजकमिति भावः ॥ ४१ ॥

**अ० टीका०**—द्वैतध्वंस एवात्यभिनिविष्टं प्रति व्यभिचारमुदाहरति—**प्रलय इति** । उपलक्षणमिदं सुप्त्यादीनामपीति भावः ॥ ४१ ॥

**रा० टीका**—तथाऽपि सति द्वैते कथमद्वैतज्ञानमित्याशंक्याऽऽह—

**अबाधकं साधकं च द्वैतमीश्वरनिर्मितम् ॥**
**अपनेतुमशक्यं चेत्यास्तां तद्द्विष्यते कुतः ॥ ४२ ॥**

**अबाधकमिति** । ईश्वरनिर्मितं द्वैतमबाधकं तन्मृषात्वज्ञानेनैवाद्वैतज्ञानोत्पत्तेरुक्तत्वात्सा-धकं च गुरुशास्त्रादिरूपस्य तस्य ज्ञानसाधनत्वादाकाशादिरूपद्वैतमस्माभिरपनेतुमशक्यं चेति हेतोस्तद्द्वैतमास्तां कुतः कारणाद्द्विष्यत इत्यर्थः ॥ ४२ ॥

**अ० टीका**—फलितमाह—**अबाधकमिति** । स्वमिथ्यात्वबोधेनाद्वैतब्रह्मबोधाप्रति-रोधकत्वात्तत्राबाधकत्वं गुरुशास्त्रादिरूपेण तज्जनकत्वात्साधकत्वमपीति तत्त्वम् । किं चैवं तस्येश्वरनिर्मितत्वात्तेनैवापनेतुं शक्यं न जीवेनेत्यतस्तद्द्वेषोऽनुचित एवेत्याह—**अपनेतुमिति**॥४२॥

**रा० टीका**—इदानीं जीवसृष्टद्वैतं विभजते—

**जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा ॥**
**उपाददीत शास्त्रीयमा तत्त्वस्यावबोधनात् ॥ ४३ ॥**

**जीवेति** । किं तद्द्विविधमपि सदा हेयमेव नेत्याह—**उपाददीतेति** । आ तत्त्वस्याव-बोधनात्तत्त्वस्यावबोधनपर्यंतमित्यर्थः ॥ ४३ ॥

**अ० टीका०**—ननु यथेश्वरनिर्मितद्वैतस्य गुरुशास्त्रादिरूपिणो ब्रह्मज्ञानोपयोगित्वं तथा जीवनिर्मितद्वैतस्यापि कस्याचित्तदस्ति न वेति संशयप्रशमनाय तद्विभजते—**जीवद्वैतं त्विति** । पूर्ववैलक्षण्यार्थस्तुशब्दः । ततः किं तदाह—**उपाददीतेति** ॥ ४३ ॥

**रा० टीका**—किं तच्छास्त्रीयं द्वैतमित्याकांक्षायामाह—

**आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ॥**
**बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् ॥ ४४ ॥**

**आत्मेति** । प्रत्यग्रूपस्य ब्रह्मणो विचाराख्यं यच्छ्रवणादिकं तच्छास्त्रीयं मानसं जग-दित्यर्थः । नन्वा तत्त्वस्यावबोधनादित्युक्तमनुपपन्नम् "आसुप्तेरा मृतेः कालं नयेद्वेदांतचिंतया" इत्युक्तत्वादित्याशंक्याऽऽह— **बुद्ध इति** । तत्त्वे ब्रह्मात्मैक्यलक्षणे बुद्धे साक्षात्कृते सतीत्यर्थः। तर्ह्यासुप्तेरिति वाक्यस्य का गतिरिति चेत् " दद्यान्नावसरं किंचित्कामादीनां मनागपि " इति पूर्वार्धे कामाद्यवसरप्रदानस्य निषिद्धत्वात्तत्परतैवेति वदामः । अतो न काऽप्यनुपपत्तिरिति भावः ॥ ४४ ॥

**अ० टीका०**—ननु भवत्वेवं जीवद्वैतस्य शास्त्रीयादिभेदेन द्वैविध्येऽपि शास्त्रीयस्य तस्याऽऽतत्त्वसाक्षात्कारमुपादेयत्वमथापि किं तत्स्वरूपमेवेत्यपेक्षायां तदाह—**आत्मेति** । एतेन त्वंपदार्थस्तत्पदार्थश्च क्रमादुक्तौ स्तस्तयोर्यो विचारः प्रागुक्तलक्षणश्रवणादित्रयात्मकमनोव्यापार-

... मयोमुक्तिः सम्यगेतस्य हेतोः " इति ।

...नीभिः—ननु तत्त्वविदः सद्योविदेहकैवल्यो-

...एव तात्पर्या...

...सतीति यावत् ॥ ४० ॥

...मेधावी अभ्य...

परमं ... उल्कावत्तान्यथोत्सृजेत् ॥

रा० टीका—तत्त्वबोधो... ...प्रतिपादनपराः श्रुतीरुदाहरति ... मकवाम- णीत्यारभ्य ॥ ४५ ॥

अ० टीका—काः श्रुतय एवमाहुरित्यपेक्षायां क्रमाद्विविधामृतबिंदुबृहदारण्य- कोपनिषद्गास्ता एव पठति—शास्त्राण्यधीत्येत्यादि । उल्कावज्ज्वलत्काष्ठादिवदित्यर्थः ॥ ४५ ॥

ग्रंथमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ॥
पलालमिव धान्यार्थी त्यजेद्ग्रंथमशेषतः ॥ ४६ ॥

रा० टीका—॥ ४६ ॥

अ० टीका—ग्रंथमिति । पलालं तुषम् ॥ ४६ ॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥ ४७ ॥

रा० टीका—॥ ४७ ॥

अ० टीका—तमेवेति । अद्वैतात्मानमेव ॥ ४७ ॥

तमेवैकं विजानीथ ह्यन्या वाचो विमुंचथ ॥
यच्छेद्वाङ्मनसी प्राज्ञ इत्याद्याः श्रुतयः स्फु... ॥ ४८ ॥

रा० टीका—तमेवैकं विजानीथेत्यनेन " तमेवैकं जान... विमुंचथ " [ मुंड० २–२–५ ] " अमृतस्यैष सेतुः " [ मुंड... रर्थतः पठितेति ॥ ४८ ॥

अ० टीका—एवं तमेवैकं जानथ आत... क्तेऽर्थे संमतित्वेन संग्रथयति—तमेवैकमिति । ... न त्वितरव्यापारजातं किंचिदपीत्याकूतम् ... च्छेन्निरोधयेदित्यर्थः । उपसंहरति— ... ति ज्ञानोत्तरं विद्वत्संन्यासपूर्व... आश्रम् ॥ ४८ ॥

रा० टीका—...

अथा...

काम...

१ [ अमृतबिन्दूपनिषद् ... ]

रोधिद्वैताभावेऽप्यद्वैतज्ञानविरोधित्वेन भवदभिमतस्य द्वैतस्य निवारणे सत्यपि गुरुशास्त्राद्यभावतो गुरुशास्त्रादिरूपस्य ज्ञानसाधनस्याभावाद्वितीयब्रह्म वस्तु बोद्धुं शक्यं न भवत्यतस्तन्निवारणमप्रयोजकमिति भावः ॥ ४१ ॥

**अ० टीका०**—द्वैतध्वंस एवात्मनि निविष्टं प्रति व्यभिचारमुदाहरति—**प्रलय इति** । उपलक्षणमिदं सुप्त्यादीनामपीति भावः ॥ ४१ ॥

**रा० टीका**—तथाऽपि सति द्वैते कथमद्वैतज्ञानमित्याशंक्याऽऽह—

**अबाधकं साधकं च द्वैतमीश्वरनिर्मितम् ॥**
**अपनेतुमशक्यं चेत्यास्तां तद्द्विष्यते कुतः ॥ ४२ ॥**

**अबाधकमिति** । ईश्वरनिर्मितं द्वैतमबाधकं तन्मृषात्वज्ञानेनैवाद्वैतज्ञानोत्पत्तेरुक्तत्वात्साधकं च गुरुशास्त्रादिरूपस्य तस्य ज्ञानसाधनत्वादाकाशादिरूपद्वैतमस्माभिरपनेतुमशक्यं चेति हेतोस्तद्द्वैतमास्तां कुतः कारणाद्द्विष्यत इत्यर्थः ॥ ४२ ॥

**अ० टीका**—फलितमाह—**अबाधकमिति** । स्वमिथ्यात्वबोधेनाद्वितब्रह्मबोधाप्रतिरोधकत्वात्तत्राबाधकत्वं गुरुशास्त्रादिरूपेण तज्जनकत्वात्साधकत्वमपीति तत्त्वम् । किं चैवं तस्येश्वरनिर्मितत्वात्तेनैवापनेतुं शक्यं न जीवेनेत्यतस्तद्द्वेषोऽनुचित एवेत्याह—**अपनेतुमिति**॥४२॥

**रा० टीका**—इदानीं जीवसृष्टद्वैतं विभजते—

**जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा ॥**
**उपाददीत शास्त्रीयमा तत्त्वस्यावबोधनात् ॥ ४३ ॥**

**जीवेति** । किं तद्द्विविधमपि सदा हेयमेव नेत्याह—**उपाददीतेति** । आ तत्त्वस्यावबोधनात्तत्त्वस्यावबोधनपर्यंतमित्यर्थः ॥ ४३ ॥

**अ० टीका०**—ननु यथेश्वरनिर्मितद्वैतस्य गुरुशास्त्रादिरूपिणो ब्रह्मज्ञानोपयोगित्वं तथा जीवनिर्मितद्वैतस्यापि कस्यचित्तदस्ति न वेति संशयप्रशमनाय तद्विभजते—**जीवद्वैतं त्विति** । पूर्ववैलक्षण्यार्थस्तुशब्दः । ततः किं तदाह—**उपाददीतेति** ॥ ४३ ॥

**रा० टीका**—किं तच्छास्त्रीयं द्वैतमित्याकांक्षायामाह—

**आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ॥**
**बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् ॥ ४४ ॥**

**आत्मेति** । प्रत्यग्रूपस्य ब्रह्मणो विचाराख्यं यच्छ्रवणादिकं तच्छास्त्रीयं मानसं जगदित्यर्थः । नन्वा तत्त्वस्यावबोधनादित्युक्तमनुपपन्नम् "आसुप्तेरा मृतेः कालं नयेद्वेदांतचिंतया" इत्युक्तत्वादित्याशंक्याऽऽह—**बुद्ध इति** । तत्त्वे ब्रह्मात्मैक्यलक्षणे बुद्धे साक्षात्कृते सतीत्यर्थः। तर्ह्यासुप्तेरिति वाक्यस्य का गतिरिति चेत् "दद्यात्नावसरं किंचित्कामादीनां मनागपि" इति पूर्वार्धे कामाद्यवसरप्रदानस्य निषिद्धत्वात्तत्परत्वेनेति वदामः । अतो न काऽप्यनुपपत्तिरिति भावः ॥ ४४ ॥

**अ० टीका०**—ननु भवत्वेवं जीवद्वैतस्य शास्त्रीयादिभेदेन द्वैविध्येऽपि शास्त्रीयस्य तस्याऽऽतत्त्वसाक्षात्कारमुपादेयत्वमथापि किं तत्स्वरूपमेवेत्यपेक्षायां तदाह—**आत्मेति** । एतेन त्वंपदार्थस्तत्पदार्थश्च क्रमादुक्तौ स्तस्तयोर्यो विचारः प्रागुक्तलक्षणश्रवणादित्रयात्मकमनोव्यापार-

स्तदाख्यमित्यर्थः । ननु साक्षात्कारोत्तरमपि तदस्तु । दग्धात्नावसरं किंचित्कामादीनां मनागपि। आसुप्तेरा मृतेः कालं नयेद्वेदांतचिंतयेति चेन्न । वक्ष्यमाणश्रुतिविरोधाद्युक्तवाक्यस्य कामाद्यवसरादान एव तात्पर्याच्चेत्याह -बुद्ध इति । तत्त्वे दृश्यमिथ्यात्वपूर्वकं ब्रह्मात्मैक्य इत्यर्थः । बुद्धेऽप्रतिबद्धमपरोक्षीकृते सतीति यावत् ॥ ४४ ॥

**शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुन ॥**
**परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ ४५ ॥**

**रा० टीका**—तत्त्वबोधोत्तरकालं तद्धेयत्वप्रतिपादनपराः श्रुतीरुदाहरति—**शास्त्राणीत्यारभ्य** ॥ ४५ ॥

**अ० टीका**—काः श्रुतय एवमाहुरित्यपेक्षायां क्रमाद्द्विविधाममृतबिंदुबृहदारण्यकोपनिषद्वास्ता एव पठति-**शास्त्राण्यधीत्येत्यादि** । उल्कात ज्वलत्काष्ठादिवदित्यर्थः॥४५॥

**ग्रंथमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ॥**
**पलालमिव धान्यार्थी त्यजेद्ग्रंथमशेषतः ॥ ४६ ॥**

**रा० टीका**—॥ ४६ ॥

**अ० टीका—ग्रंथमिति** । पलालं तृणम् ॥ ४६ ॥

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥**
**नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥ ४७ ॥**

**रा० टीका**—॥ ४७ ॥

**अ० टीका**—**तमेवेति** । अद्वैतात्मानमेव ॥ ४७ ॥

**तमेवैकं विजानीथ ह्यन्या वाचो विमुंचथ ॥**
**यच्छेद्वाङ्मनसी प्राज्ञ इत्याद्याः श्रुतयः स्फुटाः ॥ ४८ ॥**

**रा० टीका**—**तमेवैकं विजानीथेत्यनेन** " तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथ " [ मुंड० २-२-५ ] " अमृतस्यैष सेतुः " [ मुंड० २-२-५ ] इति श्रुतिरर्थतः पठितेति ॥ ४८ ॥

**अ० टीका**—एवं तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथेति **मुंडकश्रुतिमप्युक्ते**ऽर्थे संमतित्वेन संग्रथयति **तमेवैकमिति** । एवं च सदाऽप्यद्वैतात्मानुसंधानमेव विधेयं न त्वितरव्यापारजातं किंचिदपीत्याकूतम् । **तद्वत्कठवल्लीवाक्यमपि** पठति **यच्छेद्वागिति** । यच्छेन्निरोधयेदित्यर्थः । उपसंहरति--**इत्याद्या इति** । आद्यपदेनतमेव विदित्वा मुनिर्भवतीति ज्ञानोत्तरं विद्वत्संन्यासपूर्वकं ब्रह्मात्मैक्यानुसंधानकर्तव्यतायकं वाक्यं **बार्हदारण्यकमेव ग्राह्यम्** ॥ ४८ ॥

**रा० टीका**—अशास्त्रीयस्यापि द्वैतस्यावांतरभेदमाह —

**अशास्त्रीयमपि द्वैतं तीव्रं मंदमिति द्विधा ॥**
**कामक्रोधादिकं तीव्रं मनोराज्यं तथेतरत् ॥ ४९ ॥**

---

१ [ अमृतबिन्दूपनिषत् १ ] २ [ ब्रह्मबिन्दूपनिषत् १८ ] ३ [ बृहदारण्यकोपनिषत् ४-४-२१

**अशास्त्रीयमिति**। द्विधा द्विविधमपि क्रमेणोदाहरति—**कामेति**। इतरन्मंदमित्यर्थः॥४९॥

**अ० टीका**—एवमशास्त्रीयं जीवकल्पितं द्वैतं तीव्रादिभेदेन द्विविधमस्तीत्याह—**अशास्त्रीयमपीति**। तत्किंलक्षणमित्यत आह **कामेति**॥ ४९॥

**रा० टीका**—किमनयोः शास्त्रीयस्यैव तत्त्वबोधोत्तरकालमेव हेयत्वं नेत्याह—

**उभयं तत्त्वबोधात्प्राङ्निवार्यं बोधसिद्धये ॥**
**शमः समाहितत्वं च साधनेषु श्रुतं यतः ॥ ५० ॥**

**उभयमिति**। प्राङ्निवारणं किमर्थमित्यत आह—**बोधसिद्धय इति**। तत्र लिंगमाह—**शम इति**। यतस्तत्त्वबोधात्प्राक्तनयोर्हेयत्वं तत एव नित्यानित्यवस्तुविवेकादिब्रह्मज्ञानसाधनेषु मध्ये शांतः समाहित इति पदाभ्यां शांतिसमाधी श्रूयेते इत्यर्थः॥ ५०॥

**अ० टीका**—ततः किं तत्राऽऽह—**उभयमिति**। किमत्र मानमित्यपेक्षायां तदाह—**शम इति**। शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदिति **काण्वश्रुतिप्रसिद्धमेवैतदित्यभिप्रायः**॥ ५०॥

**रा० टीका**—ननु तत्त्वबोधात्प्राङ्निवार्यमित्यभिधानादुत्तरकालमस्य स्वीकार्यता स्यादित्याशंक्याऽऽह—

**बोधादूर्ध्वं च तद्धेयं जीवन्मुक्तिप्रसिद्धये ॥**
**कामादिक्लेशबंधेन युक्तस्य न हि मुक्तता ॥ ५१ ॥**

**बोधादिति**। उक्तमर्थं व्यतिरेकमुखेन द्रढयति—**कामादीति**। कामादिरूपो यः क्लेशः स एव बंधस्तेन युक्तस्य बद्धस्य मुक्तता जीवन्मुक्तत्वं न हि नास्त्येवेत्यर्थः॥ ५१॥

**अ० टीका**—ननु भवत्वेवं कामादेर्जीवकल्पितस्य तीव्राद्यशास्त्रीयद्वैतस्य तत्त्वबोधात्प्रागेव शमादिसाधनसंपद्धेयत्वमथापि तत्त्वबोधोत्तरं तु तत्सत्त्वेऽपि किं बाधकमित्याशंक्य निवारितस्य तस्य तत्त्वबोधादूर्ध्वं समूलबाधितत्त्वेन संस्कारात्मनैवानुवृत्तिर्वाच्या साऽपि जीवन्मुक्तिप्रतिबंधकत्वाद्बोधोत्तरमपि प्रध्वंस्यैवेति समाधत्ते—**बोधादिति**। तत्र हेतुः—**कामादीति**। कामादिना यः क्लेशः श्रमः स एव बंधस्तेनेत्यर्थः॥ ५१॥

**रा० टीका**—ननु जन्मादिसंसारादुद्विग्नस्याऽऽत्यंतिकपुरुषार्थरूपया विदेहमुक्त्यैवालं किमनयाऽऽपातिकया जीवन्मुक्त्येति शंकते—

**जीवन्मुक्तिरियं मा भूज्जन्माभावे त्वहंकृती ॥**
**तर्हि जन्मापि तेऽस्त्वेव स्वर्गमात्रात्कृती भवान् ॥ ५२ ॥**

**जीवन्मुक्तिरिति**। ऐहिकभोगनिवृत्तिभयाज्जीवन्मुक्तित्यागे आमुष्मिकभोगनिवृत्तिभयाद्विदेहमुक्तिरपि त्याज्या स्यादिति प्रतिबंद्या परिहरति—**तर्हीति**॥ ५२॥

**अ० टीका**—ननु जीवन्मुक्तिसत्त्वे सर्वमिदं घटेतापि सति कुड्ये चित्रमिति न्यायेन परत्वादौ तत्रैव न प्रमाणं पश्यामः। न च तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इत्यादिशास्त्रमेव तत्र प्रमाणमिति सांप्रतम्। **श्रीमत्सर्वज्ञात्ममुनीश्वरचरणै**स्तस्यार्थवादत्वोक्तेः। तदुक्तं **संक्षेपशारीरकचतुर्थाध्याये**—

" जीवन्मुक्तिप्रत्ययं शास्त्रजातं जीवन्मुक्ते कल्पिते योजनीयम्।

तावन्मात्रेणार्थवत्त्वोपपत्तेः सद्योमुक्तिः सम्यगेतस्य हेतोः " इति ।

व्याख्यातं चेदं पद्यं **श्रीमधुसूदनसरस्वतीभिः**—ननु तत्त्वविदः सद्योविदेहकैवल्योपगमे " तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये "

" प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते "

इत्यादिजीवन्मुक्तिप्रतिपादकशास्त्रं निर्विषयं स्यादित्याशंक्य तस्यार्थवादतया **शुकवामदेवादि**मुक्तिशास्त्रवत्प्रकृष्टप्राज्ञकल्पितजीवन्मुक्त्यनुवादेन ब्रह्मविद्यास्तुतिपरत्वान्न तद्विरोध इत्यभिप्रेत्याऽऽह— **जीवन्मुक्तीति** । जीवन्मुक्तेः प्रत्ययो येन तत्तथोक्तम् । अर्थवत्त्वोपपत्तेः । स्तुतिरूपप्रयोजनवत्त्वोपपत्तेः । एतस्य हेतोरितस्माद्धेतोः । जीवन्मुक्तिशास्त्रस्यान्यविषयत्वाद्धेतोरिति यावदिति । एवमेव **सिद्धांतलेश**सूक्तिमंजर्यामप्येतन्मतमुक्तं चतुर्थपरिच्छेद एव ।

" विरोधिन्युदिते शेषासंभवादर्थवादताम् ।
सर्वज्ञात्मगुरुः प्राह जीवन्मुक्तश्रुतेः स्फुटम् " इति ॥

एतदपि निवृत्तं तदीयायामेव **तट्टीकायाम्**—विरोधिज्ञानोदयेऽज्ञानस्य लेशतोऽपि शेषायोगाल्लेशनाशाय ज्ञानांतरकल्पने तस्यैव लाघवाद्विद्यानाशकत्वौचित्यात्तस्य तावदेव चिरमित्यादिश्रुतेरात्मज्ञानप्रशंसार्थत्वेन जीवन्मुक्तौ तात्पर्याभावादर्थवादमात्रत्वमिति मतांतरमाह— **विरोधिनीति** । तस्मादेव मतम सति शंकते **जीवन्मुक्तिरिति** । तत्पूर्वोत्तरतात्पर्यानभिज्ञानमूलकमेवेदं चोद्यमिति मनसि निधाय जीवन्मुक्तिर्स्वीकारे तत्सिद्ध्यर्थं कामादित्यागेनैहिकभोगहानिरिति यदि जीवन्मुक्तिमेव नांगीकरोषि तर्हि पारत्रिकभोगनिवृत्तिभीत्या ते विदेहमुक्तिरप्यनादरणीया स्यादिति प्रतिबंदीमेव प्रकटयति—**तर्हीत्युत्तरार्धेन** । तत्र हि

" सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्संभवं
सद्यो वस्तुबलप्रवर्तनमरुद्व्यापारसंदीपितः ।
निर्लेपं नहि दंदहीति न मनागप्यस्य रूपांतरं
संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा "

इति **पूर्वपद्ये** सद्योमुक्तिपक्षः प्रतिपादित इत्युत्तरपद्यमिदं तत्परमेव । तथा त्वत्रापि कंठत एवोक्तम्—सद्योमुक्तिः सम्यगेतस्य हेतोरिति । यद्वा विद्वद्रोचरमित्यादितदुत्तरश्लोकैर्जीवन्मुक्तिपक्षमेवोपन्यस्य

" जीवन्मुक्तिस्तावदस्ति प्रतीतिर्द्वैतच्छाया तत्र चास्ति प्रतीतेः ।
द्वैतच्छायारक्षणायास्ति लेशस्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् "

इत्यंतग्रंथेन तमुपपाद्य ।

" पश्यामि चित्रमिव सर्वमिदं द्वितीयं तिष्ठामि निष्कलचिदेकवपुष्यनंते ।
आत्मानमद्वयमनंतसुखैकरूपं पश्यामि दग्धरशनामिव च प्रपंचम् ।
अद्वैतमप्यनुभवामि करस्थबिल्वतुल्यं शरीरमोहितनिवर्तनीव वीक्षे ।
एवं च जीवनमिव प्रतिभासनं च निःश्रेयसाधिगमनं च मम प्रसिद्धम् "

इति स्वानुभूतिरपि प्रादर्शीति नैव सा तदसंमतेति दिक् ॥ ९२ ॥

**रा० टीका**—प्रतिबंदी मोचनं शंकते—

**क्षयातिशयदोषेण स्वर्गो हेयो यदा तदा ॥**
**स्वयं दोषतमात्माऽयं कामादिः किं न हीयते ॥ ५३ ॥**

**क्षयेति** । दोषयुक्तत्वेन स्वर्गादेस्त्याज्यत्वे सकलपुरुषार्थविघातकत्वेनातीव दोषरूपस्य कामादेः सुतरां त्याज्यत्वमित्याह–**तदेति** ॥ ५३ ॥

**अ० टीका**– निरुक्तप्रतिबंदीमोचनमाशंक्य सिद्धांत्येव पुनस्तां तदाधिक्यादेव द्रढयति—**क्षयेति** । न हीयते किं हीनः छिदितपरमत्यागयोग्यो न भवति किमपि भवत्येवेत्यन्वयः ॥ ५३ ॥

**रा० टीका**—ननु वैराग्यादिसंपादनेनात्यंतानर्थहेतोः कामादेस्त्यक्तत्वादैहिकभोगमात्रोपयोगिकामाद्यभ्युपगमे को दोष इत्याशंक्याऽऽह—

**तत्त्वं बुद्ध्वाऽपि कामादीन्निःशेषं न जहासि चेत् ॥**
**यथेष्टाचरणं ते स्यात्कर्मशास्त्रातिलंघिनः ॥ ५४ ॥**

**तत्त्वमिति** । तत्त्ववित्त्वाभिमानेन विधिनिषेधशास्त्रमतिक्रम्य कामाद्यधीनतया वर्तमानस्य तव यथेष्टाचरणं स्यादित्यर्थः ॥ ५४ ॥

**अ० टीका**—ननु " ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् "

इति **वचनान्मम** कामादित्यागोऽपि क्व कार्यतयाऽवशिष्ट इत्याशंकामनर्थापत्त्या प्रतिक्षिपति—**तत्त्वमिति** । अत्र निःशेषपदेन तत्संस्कारलेशोऽपि जीवन्मुक्तिसुखविनाशक एवेति सूचितम् । यथेष्टाचरणे हेतुः । **कर्मेति** ॥ ५४ ॥

**रा० टीका**—अस्तु को दोष इत्याशंक्य तदनिष्टत्वप्रतिपादनपरं **सुरेश्वराचार्य**-वचनमुदाहरति—

**बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ॥**
**शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ ५५ ॥**

**बुद्धाद्वैतेति** । बुद्धमद्वैतस्वतत्त्वमद्वैतस्वरूपं ब्रह्म येन स बुद्धाद्वैतस्वतत्त्वस्तत्त्ववित्तस्य यथेष्टाचरणं यदि स्यात्तर्ह्यशुचिभक्षणादिकमपि स्यात् । तथा सति शुनां तत्त्वदृशां चैव न कोऽपि विशेषः स्यादित्यर्थः ॥ ५५ ॥

**अ० टीका**—नत्रेष्टापत्तिमाशंक्येदं संप्रदायेनाद्वैतात्मतत्त्वं दृश्यमिथ्यात्वपूर्वकमनुभवतो नैवेष्टापत्तिवचनं किंतु जनवंचकचक्रवर्तिनः किंचिच्छास्त्रसंस्कारशालिनः संप्रदायसूर्यघूकस्य कामुकस्यैव कस्यचिदिति सूचयन्यथेष्टनेष्टादोष्टच्चपरं **नैष्कर्म्यसिद्धिवचनमेव** शमयति–**बुद्धेति** । बुद्धमपरोक्षीकृतमद्वैतं ब्रह्मात्मैक्यं सतत्त्वं द्वैतमिथ्यात्वपूर्वकत्वलक्षणेन तत्त्वेन सह येन स तथा तस्येत्यर्थः । यदि यथेष्टाचरणं स्याच्चेत्तर्हि शुनां तत्त्वदृशां चाशुचिभक्षणे को भेदः स्यादिति संबंधः । तस्माद्वास्तविकब्रह्मविदां नैव यथेष्टाचरणं भवतीति भावः । **एवमेवो**-क्तं मूलकारैरप्यनुभूतिप्रकाशे—

" किंच पुण्यरतः पूर्वं ज्ञानमाप्नोति नान्यथा ।
पश्चाच्च तद्वासनया पुण्यमेव करोत्यसौ " इति ॥ ५५ ॥

**रा० टीका**—एतावता किमनिष्टमापादितमित्याशंक्य सोपहासमुत्तरमाह—

**बोधात्पुरा मनोदोषमात्रात्क्लिश्नास्यथाधुना ॥**
**अशेषलोकनिंदा चेत्यहो ते बोधवैभवम् ॥ ५६ ॥**

**बोधादिति** । तत्त्वज्ञानोदयात्प्राक्कामक्रोधादिचित्तदोषैस्तव क्लेशोऽभूदिदानीं तु सर्वलोकनिंदामपि सहस्वेति क्लेशद्वैगुण्यमिति भावः ॥ ५६ ॥

**अ० टीका**—तत्राप्यत्यभिनिविष्टं निरुक्तवंचकमेव सन्मार्गे प्रवर्तयितुं करुणयैवोपहसति—**बोधादिति** । अत्र क्लिश्यसीति वार्तमानिकप्रयोगेणाद्यापि तव बोधो नैवेति ध्वन्यते ॥ ५६ ॥

**रा० टीका**—तर्हि किं कर्तव्यमित्यत आह—

**विड्वराहादितुल्यत्वं मा कांक्षीस्तत्त्वविद्भवान् ॥**
**सर्वधीदोषसंत्यागाल्लोकैः पूज्यस्व देववत् ॥ ५७ ॥**

**विड्वराहेति** । सर्वोत्कर्षहेतुज्ञानवांस्त्वं कामादित्यागाशक्तत्वेन सर्वाधमविड्वराहादिसाम्यं मा कांक्षीः किंतु कामादिलक्षणसकलमनोदोषहानेन सर्वजनैर्देववत्पूज्यस्व पूज्यो भवेत्यर्थः ॥ ५७ ॥

**अ० टीका**—एवमपि कृपया ऽस्य तत्त्ववित्त्वमेवाहार्यं लोके प्रख्यापयन्नुपदिशति—**विड्वराहेत्यादिद्वाभ्याम्** । स्वोपदेशांगीकारार्थमेवैतदाहार्यतत्त्ववित्त्वकथनमित्याकूतम् ॥ ५७ ॥

**रा० टीका**—तत्त्यागोपायमाह—

**काम्यादिदोषदृष्ट्याद्याः कामादित्यागहेतवः ॥**
**प्रसिद्धा मोक्षशास्त्रेषु तानन्विष्य सुखी भव ॥ ५८ ॥**

**काम्येति** । काम्याः कामनाविषयाः स्त्र्यादय आदयो येषां द्वेष्यादीनां ते काम्यादयस्तेषां ये दोषा अनित्यत्वसातिशयत्वादयस्तेषां दृष्टिरवलोकनमाद्यं येषां कोपस्वरूपविचारादीनां ते तथोक्तास्तेषां कामादित्यागहेतुत्वे प्रमाणमाह—**प्रसिद्धा इति** । भवतु ततः किमायातमित्यत आह—**तानन्विष्येति** ॥ ५८ ॥

**अ० टीका**—**काम्यादीनि** । आदिना कामकामुकौ । आद्यपदेन तत्रयस्वरूपविचारः । **मोक्षेति** । बृहद्वासिष्ठमोक्षधर्मसूतसंहितादिमोक्षप्रतिपादकापरग्रंथेष्वित्यर्थः । तथा चोक्तं **बृहद्योगवासिष्ठे**—

"केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहंति तृणवन्नरम्" इत्यादि ।
चितानिचयचक्राणि नाऽऽनंदाय धनानि मे ।
संप्रसृतकलत्राणि गृहाण्युग्रापदामिव"

इत्यादि च । एवमन्यत्रापि द्रष्टव्यम् ॥५८॥

**रा० टीका**—ननु कामादीनामनर्थहेतुत्वात्त्याज्यत्वमस्तु मनोराज्यस्य त्वनर्थत्वात्तत्त्यागो नापेक्षित इति शंकते—

**त्यज्यतामेष कामादिर्मनोराज्ये तु का क्षतिः ॥**
**अशेषदोषबीजत्वात्क्षतिर्भगवतेरिता ॥ ५९ ॥**

**त्यज्यतामिति ।** साक्षादनर्थहेतुत्वाभावेऽपि परम्परया तद्धेतुत्वात्त्याज्यत्वमेवेत्यभिप्रेत्य परिहरति—**अशेषेति** ॥ ५९ ॥

**अ० टीका**—ननु भवत्वेवं कामादेः साक्षादनर्थहेतुत्वात्त्याज्यत्वमथापि मनोराज्यं तु न तथेति शंकते—**त्यज्यतामिति ।** साक्षादतथात्वेऽपि परम्परया तथात्वान्मैवमित्याह—**अशेषेति** ॥ ५९ ॥

**ध्यायतो विषयान्पुंसः संगस्तेषूपजायते ॥**
**संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६० ॥**

**रा० टीका**—परंपरयाऽनर्थहेतुत्वप्रदर्शनपरं **भगवद्वाक्यम्** [भ० गी० २–६२] उदाहरति—**ध्यायत इति** ॥ ६० ॥

**अ० टीका**—तदेव भगवद्वाक्यं किंचित्पठति—**ध्यायत इति ।** संगः स्वहित-साधनत्वाध्यासः । कामस्तत्प्राप्त्यादीच्छा । क्रोधस्तत्प्रतिहतिजन्यः समभिज्वलनलक्षणो मनः-परिणामः ॥ ६० ॥

**रा० टीका**—तर्ह्यस्य मनोराज्यस्य कः परिहारोपाय इत्यत आह—

**शक्यं जेतुं मनोराज्यं निर्विकल्पसमाधिनः ॥**
**सुसंपादः क्रमात्सोऽपि सविकल्पसमाधिना ॥ ६१ ॥**

**शक्यमिति ।** सोऽपि कुतः सिध्यतीत्याह—**सुसंपाद इति** ॥ ६१ ॥

**अ० टीका**—नन्वेवमपि तद्दुष्परिहारमेवेत्यत आह—**शक्यं जेतुमिति ।** स एव दुर्लभस्तत्राऽऽह—**सुसंपाद इति ।** क्रमाद्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमा-धयोऽष्टावंगानीति पतंजल्युक्तानुक्रमेणेत्यर्थः ॥ ६१ ॥

**रा० टीका**—नन्वष्टांगयोगयुक्तस्य तथाऽस्तु तद्रहितस्य का गतिरित्यत आह—

**बुद्धतत्त्वेन धीदोषशून्येनैकांतवासिना ॥**
**दीर्घं प्रणवमुच्चार्य मनोराज्यं विजीयते ॥ ६२ ॥**

**बुद्धतत्त्वेनेति ।** बुद्धमवगतं तत्त्वं ब्रह्मात्मैक्यलक्षणं येन स बुद्धतत्त्वस्तेन कामक्रो-धादिबुद्धिदोषरहितेनैकांतवासिना विजनदेशनिवासशीलेन पुरुषेण दीर्घं पञ्चद्वादशादिमात्रोपेतं प्रणवमोंकारमुच्चार्य मनोराज्यं विजीयते विनिवार्यत इत्यर्थः ॥ ६२ ॥

**अ० टीका**—ननु नायं सुलभ उपाय इति तमाह—**बुद्धेति ।** धीदोषाः कामा-दयः ॥ ६२ ॥

**रा० टीका**—मनोराज्यविजये किं भवतीत्यत आह—

**जिते तस्मिन्वृत्तिशून्यं मनस्तिष्ठति मूकवत् ॥**
**एतत्पदं वसिष्ठेन रामाय बहुधेरितम् ॥ ६३ ॥**

**जिते तस्मिन्निति ।** यथा मूकः सकलवाग्व्यवहाररहितस्तिष्ठत्येवं मनोऽपि सर्वव्या-

पाररहितमवतिष्ठत इत्यर्थः। अवृत्तिकमनोवस्थानस्य पुरुषार्थत्वे प्रमाणमाह—**एतत्पदमिति।** एतत्पदमियं दशेत्यर्थः॥ ६३॥

**अ० टीका**—ततः किं तत्राऽऽह—**जित इति**। पदं साधकप्राप्यं मनसो निःसंकल्पावस्थानमित्यर्थः॥ ६३॥

**रा० टीका**—वसिष्ठश्लोकद्वयवाक्यमुदाहरति—

**दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम्॥**
**संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः॥ ६४॥**

**दृश्यमिति**। "नेह नानाऽस्ति किंचन" [बृह० ४-४-१९। कठश्रुति ४-११] इत्यादिश्रुत्याऽद्वितीयब्रह्मातिरिक्तजगदभावज्ञानेन मनसः सकाशाद्दृश्यनिवारणं संपन्नं यदि तर्हि निरतिशयं मोक्षसुखं निष्पन्नमिति जानीयादित्यर्थः॥ ६४॥

**अ० टीका**—कथं **भगवता वसिष्ठेनोक्तं** मनोनिःसंकल्पत्वावस्थानमित्यपेक्षायां स्थालीपुलाकन्यायेन रसास्वादार्थं बृहद्योगवासिष्ठगतं श्लोकद्वयमुदाहरति—**दृश्यमिति**। **दृश्येति**। मनसः सकाशाद्दृश्याध्यासनिरसनमित्यर्थः। संपन्नं चेत्तर्हि तदेव नेह नानाऽस्ति किंचनेति श्रुतिबोधितयाद्वैतबोधनमेव परोत्कर्षानिर्वाणनिर्वृतिरात्माभिन्नमोक्षलक्षणस्वप्रकाशसुखाभिव्यक्तिः संजातेति संबंधः। एवं च तत्कालावच्छेदेन मनसः संकल्पशून्यतैव भवतीति भावः॥ ६४॥

**विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः॥**
**संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम्॥ ६५॥**

**रा० टीका**—किंचाद्वैतशास्त्रमत्यर्थं विचारितं तथा परस्परं गुरुशिष्यादिसंवादद्वारा चिरकालं प्रत्यायितं च। एवं कृत्वा किं निश्चितमित्यत आह—**संत्यक्तेति**। सम्यक्परित्यक्तकामादिवासनान्मनसस्तूष्णीभावादृतेऽधिकः पुरुषार्थो नास्तीति निश्चितमित्यर्थः॥ ६५॥

**अ० टीका**—**विचारितमिति**। शास्त्रमद्वैतग्रंथजातम्। यद्यपि मयाऽलं गुरूपसत्तिपूर्वकं विचारितं विवेचितम्। तथा चिरं दीर्घकालम्। मिथः परस्परं सतीर्थ्याञ्शिष्यांश्च प्रत्युद्ग्राहितं प्रत्यायितमप्यस्ति। तथाऽपि **संत्यक्तेति**। निःशेषनिर्मूलितकामादिसंस्कारादित्यर्थः। एतादृशान्मौनादमौनं च मौनं च निर्विद्याथ ब्राह्मण इति श्रुतेर्मननशीलो मुनिस्तस्य कर्म मौनमिति व्युत्पत्तेश्च निदिध्यासनसमकक्षापरोक्षज्ञानपूर्वकद्वैतबाधनिश्चविरोधान्यतरजन्यसंकल्पशून्यमनोवस्थानादिति यावत्। ऋते विना उत्तमं पदं स्थानं नास्तीति योजना॥ ६५॥

**रा० टीका**—एवं निर्वृत्तिकस्य चित्तस्य प्रारब्धकर्मणा विक्षेपे सति तत्प्रतीकारोपायः क इत्यपेक्षायामाह—

**विक्षिप्यते कदाचिद्धीः कर्मणा भोगदायिना॥**
**पुनः समाहिता सा स्यात्तदैवाभ्यासपाटवात्॥ ६६॥**

**विक्षिप्यत इति**। भोगप्रदेन प्रारब्धकर्मणा बुद्धिः कदाचिद्विक्षिप्यते चेत्तर्हि सा बुद्धिरभ्यासदार्ढ्यात्तदैव पुनरपि समाहिता स्यादित्यर्थः॥ ६६॥

**अ० टीका**—ननु निरुक्तावस्थातोऽपि प्रारब्धभोगार्थं चित्तविक्षेपे क उपाय इत्यत आह—**विक्षिप्यत इति**। तस्मादभ्यासदार्ढ्यमेव विधेयमिति तत्त्वम्॥ ६६॥

**विक्षेपो यस्य नास्त्यस्य ब्रह्मवित्त्वं न मन्यते ॥**
**ब्रह्मैवायमिति प्राहुर्मुनयः पारदर्शिनः ॥ ६७ ॥**

**रा० टीका**—सदा चित्तविक्षेपरहितस्य ब्रह्मवित्त्वमप्यौपचारिकमित्याह—**विक्षेप** इति । पारदर्शिनो वेदांतपारगा इत्यर्थः ॥ ६७ ॥

**अ० टीका**—अत एव—विक्षेप इति । तथाचोक्तं **श्रीमद्भगवत्पूज्यपादपादारविंदमनीषापंचके**—

" यत्सौख्यांबुधिलेशलेशत इमे शक्रादयो निर्वृता
यच्चित्ते नितरां प्रशांतकलने लब्ध्वा मुनिर्निर्वृतः ॥
तस्मिन्नित्यसुखांबुधौ गलितधीर्ब्रह्मैव न ब्रह्मवि-
द्यः कश्चित्स सुरेंद्रवंदितपदो नूनं मनीषा मम " इति ॥ ६७ ॥

**रा० टीका**—अत्रापि वसिष्ठवाक्यमुदाहरति—

**दर्शनादर्शने हित्वा स्वयं केवलरूपतः ॥**
**यस्तिष्ठति स तु ब्रह्मन्ब्रह्म न ब्रह्मवित्स्वयम् ॥ ६८ ॥**

**दर्शनादर्शने** इति । यो ब्रह्म जानामि न जानामीति व्यवहारद्वयं परित्यज्य स्वयमद्वितीयचैतन्यमात्ररूपेणावतिष्ठते स स्वयं ब्रह्मैव न ब्रह्मविदित्यर्थः ॥ ६८ ॥

**अ० टीका**—उक्तेऽर्थे वासिष्ठवाक्यमेवोदाहरति—**दर्शनेति** । अयि ब्रह्मन्निति तत्कथाप्रसंगागतब्राह्मणशिरोमणिं प्रत्येव संबोधनम् । **दर्शनेति** । ज्ञानाज्ञाने इत्यर्थः । हित्वा ज्ञोऽहमज्ञोऽहमित्युभयत्रापि तादात्म्याध्यासं बाधित्वेत्यर्थः । अपरं तु सरलमेव॥ ६८ ॥

**रा० टीका**—सकलद्वैतविवेचनमुपसंहरति—

**जीवन्मुक्तेः परा काष्ठा जीवद्वैतविवर्जनात् ॥**
**लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम् ॥ ६९ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकृतपंचदश्यां चतुर्थो द्वैतविवेकः समाप्तः ॥ ४ ॥ ॥ ॥**

**जीवन्मुक्तेरिति** । असावुक्तप्रकारा जीवन्मुक्तेः परा काष्ठा निरतिशयपर्यवसानभूमिर्जीवद्वैतस्य मनोमयप्रपंचस्य विवर्जनात्परित्यागाल्लभ्यते प्राप्यतेऽतःकारणादिदं जीवद्वैतमीशद्वैतादीश्वरसृष्टद्वैताद्विवेचितं विविच्य प्रदर्शितमित्यर्थः ॥ ६९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता द्वैतविवेकपदयोजना समाप्ता ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**अ० टीका**—अथ फलितं कथयन्नेव प्रकरणमुपसंहरति—**जीवन्मुक्तेरिति** । एवं चात्र यदुक्तमुपोद्घाते प्राक्—

" ईशोपदिष्टबोधादेव विमुक्तिर्नतु क्वचिद्गुरुजात् ।
इति या निर्णीतमतिः प्रतिबंधोऽयं चतुर्थ ईशमितौ "

इति तत्पदार्थबोधविषयकसाधनाविपरीतभावनाख्यश्चतुर्थः प्रतिबंधः ।

तथा—" ईश्वरमुख्यक्रमद्वैतविचारेण गुरुमृते प्रलये ।

बोधाभावोक्त्या तन्मुख्यत्वं स्याच्चतुर्थेऽपि "

इति **चतुर्थप्रकरणस्यास्य द्वैतविवेकाख्यस्य** तद्बोधकत्वमप्येतत्सर्वमुपक्रमादिलिंगैः संगतमेव । तद्यथाऽत्र—

" ईश्वरेणापि जीवेन सृष्टं द्वैतं विविच्यते ।
विवेके सति जीवेन हेयो बंधः स्फुटीभवेत् "

इत्युपक्रमः ।

तथा—" जीवन्मुक्तेः पराकाष्ठा जीवद्वैतविवर्जनात् ।
लभ्यतेऽसावतोऽत्रेदमीशद्वैताद्विवेचितम् "

इत्युपसंहारश्चेति जीवहेयबंधस्य गुरूपदिष्टजीवेश्वरसृष्टद्वैतविवेकद्वारेव स्फुटीभवनपूर्वकं तदुपदिष्टोपायैरेव जीवद्वैतविवर्जनजन्यजीवन्मुक्तिपरकाष्ठालाभोक्तेर्गुरूपदिष्टबोध एव तात्पर्यप्रथममिदमुपक्रमाद्यैक्यलक्षणं लिंगम् । यद्यपीश्वरोऽपि हरिहरचतुराननादिलीलाविग्रहेणार्जुनादिजिज्ञासूनद्वैतात्मत्वमबोधयदितिस्मृत्यादौ प्रसिद्धमेवाथापि शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नमिति तत्प्रसिद्धार्जुननिष्ठशिष्यत्वप्रयुक्तस्तत्र गुरुत्वमेवेत्यंततस्तत्रैव तत्पक्षेऽपि पर्यवसानमिति रहस्यम्।

" अनिवृत्तेऽपीशसृष्टे द्वैते तस्य मृषात्मताम् ।
बुद्ध्वा ब्रह्माद्वयं बोद्धुं शक्यं वस्त्वैक्यवादिनः ।
प्रलये तन्निवृत्तौ न गुरुशास्त्राद्यभावतः ।
विरोधिद्वैताभानेऽपि न शक्यं बोद्धुमद्वयम् " इत्याद्यभ्यासश्च ।
" मनो मांसमयी काचिद्भवत्यन्या मनोमयी "

इत्यादिरपूर्वता । प्रत्यक्षाद्युपलब्धमांसमय्योपिद्भिन्नमनोमय्योपितो गुरुणैवोपदिष्टत्वात् । " भाष्यवार्तिककाराभ्यामयमर्थ उदीरितः " इति गुरोर्महत्त्वे संप्रदायादरः **फलम्** । एतत्पदं **वसिष्ठेन रामायणे** बहुधोरितमिति तत्रैवा**र्थवादः** । " प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः " इत्यादिनो**पपत्तिरि**ति सर्वेषामपि षड्विधलिंगानां गुरुमहत्त्वमेव प्राधान्यमिति सर्वं **सुमंगलम्** ॥ ६९ ॥

इति श्री० पूर्णानंदेंदुकौमुद्यां चतुर्थः प्रकाशः संपूर्णः ॥ ४ ॥

# अथ पंचदश्यां महावाक्यविवेकाख्यं पंचमं प्रकरणम् ।

**रा० टीका**—नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
महावाक्यविवेकस्य कुर्वे व्याख्यां समासतः ॥ १ ॥

मुमुक्षोर्मोक्षसाधनब्रह्मात्मैकत्वावगतिसिद्धये प्रसिद्धानां चतुर्णां महावाक्यानामर्थं क्रमेण निरूपयन्परमकृपालुराचार्य आदौ तावदैतरेयारण्यकगते "प्रज्ञानं ब्रह्म" [ ऐत० ५–३ आत्मबोधोप० १ ] इति महावाक्ये प्रज्ञानशब्दस्यार्थमाह—

**येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ॥**
**स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ १ ॥**

**येनेक्षत इति** । येन चक्षुर्द्वारा निर्गतांतःकरणवृत्त्युपहितचैतन्येनेदं दर्शनयोग्यं रूपादिकमीक्षते पश्यति पुरुषस्तथा श्रोत्रद्वारा निर्गतांतःकरणवृत्त्युपाधिकेन येन शब्दजातं शृणोति तथैव घ्राणद्वारा निर्गतांतःकरणवृत्त्युपाधिकेन येन गंधजातं जिघ्रति येन वागिंद्रियावच्छिन्नेन व्याकरोति शब्दजातं व्याहरति येन रसनेंद्रियद्वारा निर्गतांतःकरणवृत्त्युपाधिकेन स्वाद्वस्वादु रसो विजानात्यनुक्तसमुच्चयार्थश्चशब्दस्तथाचोक्तानुक्तैः सकलेंद्रियैरंतःकरणवृत्तिभेदैश्चोपलक्षितं यच्चैतन्यमस्ति तदेवात्र प्रज्ञानमित्युच्यत इत्यर्थः । अनेन येन वा पश्यतीत्यादेः सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानीत्यंतस्यावांतरवाक्यसंदर्भस्यार्थः संक्षिप्य दर्शितः ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ॥
सर्वांश्चा चार्यवर्यौघकुलतिलकं मद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
नत्वा जीवंजीवान्विद्यारण्यं च भारतीर्थम् ॥
वाक्यविवेकं विषयप्रकाशनो द्योतयामि कौमुद्याः ॥ २ ॥

अथ भगवान्विद्यारण्यगुरुः पंचदश्यां महावाक्यविवेकाख्यं पंचमप्रकरणं चिकीर्षुः सुप्रसिद्धप्रमाणाद्यद्वैतात्मानुसंधानलक्षणं मंगलं कल्पयन्विषयाद्यपि सूचयन्क्रमेण वर्गादिवेदशाखास्थलभूतराणि चत्वारि महावाक्यानि तीव्रतमजिज्ञासुं प्रति संक्षेपेण विवृणोति—**येनेत्यादिचतुर्भिर्युग्मैः । ऐतरेयोपनिषद्गतं** हि प्रज्ञानं ब्रह्मेति महावाक्यं तत्र प्रज्ञानपदार्थः शुद्धं जीवचैतन्यमेव येन पश्यति येन वा शृणोतीत्याद्युद्देशादित्याह—**येनेक्षत इति** । एतेन सर्वबहिरंतःकरणमाभासवृत्तिमाश्रित्योपलक्षितचैतन्यमेव प्रज्ञानस्य नामधेयानीत्यंतश्रुत्याशयेन दर्शितम् ॥१॥

**रा० टीका**—एवं प्रज्ञानशब्दस्यार्थमभिधाय ब्रह्मशब्दस्यार्थमाह—

**चतुर्मुखेंद्रदेवेषु मनुष्याश्वगवादिषु ॥**
**चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्ममय्यपि ॥ २ ॥**

**चतुर्मुखेति** । उत्तमेषु देवादिषु मध्यमेषु मनुष्येष्वधमेष्वश्वगवादिषु देहधारिष्वाकाशादि-

भूतेषु च जगज्जन्मादिहेतुभूतं यदेकं चैतन्यमस्ति तद्ब्रह्मेत्यर्थः । अनेन च " एष ब्रह्मैष इंद्रः" इत्यादेः " प्रज्ञा प्रतिष्ठा " [ ऐत० ५-३ । आत्मबो० १ ] इत्यंतस्यावांतरवाक्यस्यार्थः संक्षिप्य दर्शितः । इत्थं पदार्थमभिधाय वाक्यार्थमाह---**अत इति** । यतः सर्वत्रावस्थितं प्रज्ञानं ब्रह्मातो मय्यपि स्थितं प्रज्ञानं ब्रह्मैव प्रज्ञानत्वाविशेषादित्यर्थः ॥ २ ॥

**अ० टीका**— अथ ब्रह्मपदार्थमाह—**चतुर्मुखेति** । एष ब्रह्मेत्यादिप्रज्ञाप्रतिष्ठेत्यंतश्रुतेरिति शेषः । अत एकत्वाद्धेतोः । मय्यप्यस्मच्छब्दवाच्यदेहादिसंघातावच्छिन्नत्वोपलक्षितं चैतन्यं ब्रह्माद्भिन्नमेवास्तीत्यन्वयः ॥ २ ॥

**रा० टीका**---एवं ऋक्शाखागतं महावाक्यार्थं निरूप्य **यजुःशाखासु** मध्ये **बृहदारण्यकोपनिषद्**गतस्य " अहं ब्रह्मास्मि " [ बृह० १-४-१० ] इति महावाक्यस्यार्थाविष्करणायाहंशब्दस्यार्थमाह

**परिपूर्णः परात्माऽस्मिन्देहे विद्याधिकारिणि ॥**
**बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ ३ ॥**

**परिपूर्ण इति** । परिपूर्णः स्वभावतो देशकालवस्तुभिरपरिच्छिन्नः परमात्माऽस्मिन्मायाकल्पिते जगति विद्याधिकारिणि शमादिसाधनसंपन्नत्वेन विद्यासंपादनयोग्येऽस्मिञ्छ्रवणाद्यनुष्ठानवति देहे मनुष्यादिशरीरे बुद्धेर्बुद्ध्युपलक्षितस्य सूक्ष्मशरीरस्य साक्षितया विकारित्वेनावभासकतया स्थित्वाऽवस्थाय स्फुरन्भासमानोऽहमितीर्यते लक्षणयाऽहंपदेनोच्यत इत्यर्थः ॥३॥

**अ० टीका**---एवं **बृहदारण्यकस्थ**महं ब्रह्मास्मीति महावाक्यं विवृणोति **परिपूर्ण इति** । देशकादिपरिच्छेदत्रयशून्यत्वेन चतुर्विधाभावाप्रतियोगीत्यर्थः । एवं च देशपरिच्छेदराहित्येनात्यंताभावस्य कालपरिच्छेदराहित्येन प्रागभावप्रध्वंसाभावयोर्वस्तुपरिच्छेदराहित्येनान्योन्याभावस्य चाऽऽत्मन्यप्रतियोगित्वं ध्वन्यते । अत एव परेति ।

" यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥
यच्चास्य संततो भावस्तस्मादात्मेति भण्यते "

इत्यभियुक्तोक्तेः परश्चासावात्मेति व्युत्पत्तेश्च प्रत्यक्प्रकाशपरमानंद इत्येतत् । एतेन निरतिशयपुमर्थत्वं तत्र द्योत्यते । सोऽप्यस्मिन्विद्याधिकारिणि देहे नित्यानित्यविवेकादिनिदिध्यासनांतसाधनसंपन्नशरीरे इति यावत् । बुद्धेः साक्षितया स्थित्वा स्फुरन्सन्नित्यर्थः । वस्तुतश्चिन्मात्रभूम्नि तस्मिन्नेव स्फूर्तिक्रियाश्रयत्वमित्याशयः । अहमितीर्यते लक्ष्यत इत्यर्थः ॥ ३ ॥

**रा० टीका**—ब्रह्मशब्दार्थमाह –

**स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ॥**
**अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ॥ ४ ॥**

**स्वत इति** । स्वतः परिपूर्णः स्वभावतो देशकालाद्यनवच्छिन्नः पूर्वोक्तः परमात्माऽत्रास्मिन्महावाक्ये ब्रह्मशब्देन ब्रह्मेत्येतेन पदेन वर्णितो लक्षणयोक्त इत्यर्थः । एतद्वाक्यगतेनास्मीतिपदेन पदद्वयसामानाधिकरण्यलभ्यं जीवब्रह्मणोरैक्यं परामृश्यत इत्याह—**अस्मीति** । फलितमाह—**तेनेति** ॥ ४ ॥

**अ० टीका**—**स्वत इति** । एवं च ब्रह्मपदस्याप्यव्यावृत्तत्वादिविशेषणैरुक्त एवार्थ

इत्यतः फलितमाह—**अस्मीति** । एवं च **तैत्तिरीयाणां** ब्रह्माहमस्मीत्यपि तद्व्याख्यातम् ॥४॥

**रा० टीका**—इदानीं छांदोग्यश्रुतिगतस्य "तत्त्वमसि" [ छांदो० ६–८–७ ] इति वाक्यस्यार्थप्रकाशनाय तत्पदलक्ष्यार्थमाह—

**एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ॥**
**सृष्टेः पुराऽधुनाऽप्यस्य तादृक्त्वं तदितीर्यते ॥ ५ ॥**

**एकमेवेति** । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छान्दो० ६–२–१ ] इतिवाक्येन सृष्टेः पुरा स्वगतादिभेदशून्यं नामरूपरहितं यत्सद्वस्तु प्रतिपादितमस्त्यस्य सद्वस्तुनोऽधुनाऽपि सृष्ट्युत्तरकालेऽपि तादृक्त्वं विचारदृष्ट्या तथात्वं तदितिपदेनेर्यते लक्ष्यत इत्यर्थः ॥ ५ ॥

**अ० टीका**—**तद्द्राणायन्याख्यसामवेदशाखीयछांदोग्योपनिषद्गतं** तत्त्वमसीति महावाक्यं व्याचष्टे—**एकमेवेति** । स्वगतादिभेदत्रयवियुक्तम् । तथा कालत्रयाबाध्यं नामरूपहीनं च यदद्वैतं कल्पितद्वैतसृष्टेः प्रागद्यापि वर्तते तद्वस्तु तत्पदलक्ष्यमस्तीत्यर्थः ॥ ५ ॥

**श्रोतुर्देहेंद्रियातीतं वस्त्वत्र त्वंपदेरितम् ॥**
**एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ ६ ॥**

**रा० टीका**—त्वंपदलक्ष्यार्थमाह—**श्रोतुरिति** । श्रोतुः श्रवणाद्यनुष्ठानेन महावाक्यार्थप्रतिपत्तुर्देहेंद्रियातीतं देहेंद्रियोपलक्षितस्थूलादिशरीरत्रयसाक्षितया तद्विलक्षणं वस्तु सद्वस्त्वेव त्वंपदेरितं वाक्यगतेन त्वमितिपदेन लक्षितमित्यर्थः । एतद्वाक्यस्थेनासीतिपदेन तत्त्वंपदसामानाधिकरण्यलब्धं पदार्थद्वयैक्यं शिष्यं प्रति प्रत्याय्यत इत्याह—**एकतेति** । सिद्धमर्थमाह—**तदैक्यमिति** । तयोस्तत्त्वंपदार्थयोरैक्यं प्रमाणसिद्धमेकत्वमनुभूयतां मुमुक्षुभिरित्यर्थः ॥६॥

**अ० टीका**—**श्रोतुरिति** । श्रवणादिसाधनकर्तुः शिष्यस्येत्यर्थः । **देहेति** । उपलक्षणमिदमंतःकरणादेरपि । एवं त्वंपदलक्ष्यं मनःसाक्षित्वोपलक्षितं चिन्मात्रमुपपाद्यासिपदार्थं तदुभयैक्यमाह—**एकतेति** । पुनः परमकरुणयाऽऽचार्यः शिष्याननुशास्ते—**तदैक्यमिति** ॥६॥

**रा० टीका**—क्रमप्राप्तस्याथर्वणवेदगतस्य "अयमात्मा ब्रह्म" [ मांडू० २ ] इति वाक्यस्यार्थं व्याचिकीर्षुरादावयमात्मेति पदद्वयेन विवक्षितमर्थं क्रमेण दर्शयति—

**स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ॥**
**अहंकारादिदेहांतात्प्रत्यगात्मेति गीयते ॥ ७ ॥**

**स्वप्रकाशेति** । अयमित्युक्तितोऽयमितिशब्देन स्वप्रकाशापरोक्षत्वं स्वप्रकाशेनापरोक्षत्वं मतमभिमतमदृष्टादिवन्नित्यपरोक्षत्वं घटादिवद्दृश्यत्वं च व्यावर्तयितुं विशेषणद्वयमिति बोद्धव्यम् । देहादिष्वप्यात्मशब्दप्रयोगदर्शनादत्राऽऽत्मशब्देन किं विवक्षितमित्याकांक्षायामाह—**अहंकारेति** । अहंकार आदिर्यस्य प्राणमनइंद्रियदेहसंघातस्य सोऽहंकारादिस्तथा देहेंऽतो यस्योक्तसंघातस्य स देहांतोऽहंकारादिश्चासौ देहांतश्चेति तथा । तस्मात्प्रत्यगधिष्ठानतया साक्षितया चाऽऽन्तर आत्मेति गीयतेऽस्मिन्वाक्य इत्यर्थः ॥ ७ ॥

**अ० टीका**—इत्थमेवाथर्वणवेदगतमांडूक्यशाखोपनिषद्गतमयमात्मा ब्रह्मेति महावाक्यं विशदयति—**स्वप्रकाशेति** । अनधीनभानात्मत्वमित्यर्थः । **अहंकारेति** । सूक्ष्मा-

दिदेहद्वयसंघातादित्यर्थः । प्रत्यक्प्रातिकूल्येन प्रकाशमान इति यावत् । आत्मेति गीयत आत्मपदेन लक्ष्यत इत्येतत् ॥ ७ ॥

**रा० टीका**—ब्राह्मणादिष्वपि ब्रह्मशब्दस्य प्रयोगदर्शनात्तद्व्यावर्तनायात्र विवक्षितमर्थमाह—

**दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ॥**
**ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ८ ॥**

**इति श्रीविद्यारण्यमुनिविरचितायां पंचदश्यां पंचमो महावाक्यविवेकः समाप्तः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥**

**दृश्यमानस्येति ।** दृश्यत्वेन मिथ्याभूतस्य सर्वस्याऽऽकाशादेर्जगतस्तत्त्वमधिष्ठानतया तद्बाधावधित्वेन च पारमार्थिकं सच्चिदानंदलक्षणं यद्रूपमस्ति तद्ब्रह्मशब्देनेर्यते कथ्यत इत्यर्थः । वाक्यार्थमाह—**तद्ब्रह्मेति ।** यदुक्तलक्षणं ब्रह्म स्वप्रकाशात्मरूपं स्वरूपं यस्य तत्स्वप्रकाशात्मरूपकं स एवेत्यर्थः ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता महावाक्यविवेकव्याख्या समाप्ता ॥ ५ ॥

**अ० टीका**—अथ ब्रह्मपदार्थमाह **दृश्येति ।** द्वैतस्य मिथ्यात्वेन तद्बाधावधिभूतं वस्त्वित्यर्थः । फलितमाह **तदित्यादिशेषेण ।** एवं चेह यद्यपोद्धाते पुरा प्रतिपादितम्—

" मुक्तस्य सर्वभानं सर्वात्मत्वेन भवति सर्वत्र ।
सर्वनियंतृत्वाद्यपि प्रतिबंधः पंचमोऽयमीशमितौ "

इतितत्पदार्थभूतेश्वरस्वरूपज्ञानविषयकफलविपरीतभावनालक्षणपंचप्रतिबंधमुक्त्वा

" ब्रह्मैक्यमेव मुक्तिर्यत्र द्वैतं न विद्यते किमपि ।
इति तत्प्रधानताऽपि स्पष्टतरा पंचमे ज्ञेया "

इति पंचमप्रकरणस्य पंचदश्या **महावाक्यविवेकाख्यस्यास्य** निरुक्तप्रतिबंधबाधकत्वं ब्रह्माद्वैतात्मैक्यलक्षणामोक्षमात्रपरत्वेन तत्संगतमेव । ऋगादिवेदचतुष्टयमहावाक्यानामप्यद्वैतस्वप्रकाशात्मानंदरूपब्रह्ममात्रपरत्वान्निरतिशयसुखं च दुःखजातस्योपरमणं च वदंति मोक्षतत्त्वमिति **संक्षेपशारीरकोक्त्या** मोक्षस्य तदेकरूपत्वादुक्तमहावाक्यार्थविरुद्धतदर्थप्रतिपादकयावद्भेदवादिनां तु पूर्वाचार्यैः सर्वैरप्यनेकाकरप्रकरणग्रंथेषु खंडितत्वाच्च । तस्मादित्थं पंचकमिदं निरुक्तेशमितिविषयकविपर्ययवासनाप्रमाणासंभावनाप्रमेयासंभावनासावनविपरीतभावनाफलविपरीतभावनाख्यकामिकप्रतिबंधपंचकबाधकत्वेन शोधिततत्पदार्थाख्यविशुद्धेश्वरे महातात्पर्येणैव पर्यवसनमिति शिवम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमणपट्टचूपनामकश्रीनारायणशास्त्रिचरणसरोजराजहंसायमानमानसमोडकोपनामकाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानंदेंदुकौमुद्यभिधायां पंचदशीटीकायां महावाक्यविवेकप्रकाशः पंचमः संपूर्णः ॥ ५ ॥

# अथ पंचदश्यां चित्रदीपाख्यं षष्ठं प्रकरणम्

**रा० टीका**—शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ॥
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ १ ॥
यस्य स्मरणमात्रेण विघ्ना दूरं प्रयांति हि ॥
वंदेऽहं दंतिवक्त्रं तं वांछितार्थप्रदायकम् ॥ २ ॥
नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
क्रियते चित्रदीपस्य व्याख्या तात्पर्यबोधिनी ॥ ३ ॥

चिकीर्षितस्य ग्रंथस्य निष्प्रत्यूहपरिपूरणाय परमात्मनीतिपदेनेष्टदेवतातत्त्वानुसंधानलक्षणं मंगलमाचरन्नस्य ग्रंथस्य वेदांतप्रकरणत्वात्तदीयैरेव विषयादिभिस्तद्वत्तासिद्धिं मनसि निधाय "अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते" इति **न्यायमनुसृत्य** परमात्मन्यारोपितस्य जगतः स्थितिप्रकारं सदृष्टांतं प्रतिजानीते—

**यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् ॥**
**परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम् ॥ १ ॥**

**यथेति ।** चित्रपटे यथा वक्ष्यमाणानामवस्थानां चतुष्टयं तथैव परमात्मन्यपि वक्ष्यमाणमवस्थाचतुष्टयं ज्ञेयमिति ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्द्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वांश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ।
स्फुटयामि चित्रदीपं कौमुद्याः किल रसप्रकाशेन ॥ २ ॥

अथ भगवान्विद्यारण्याचार्यश्चित्रदीपाख्यं पंचदश्याः षष्ठं प्रकरणं कुर्वाणोऽतर्वाणिप्रवीणप्रवृत्तयेऽस्याद्वैतशास्त्रीये एव विषयप्रयोजने अपि प्रतिपादयन्प्रथितप्रमाणप्रयोजनकमात्मतत्त्वानुसंधानलक्षणं मंगलमपि 'चित्रमिव मिथ्यामनोरमम्' इति **मैत्रायणीयश्रुतेः** 'अकृत्रिममरंगं च गगने चित्रमुत्थितम्' इति **बृहद्योगवासिष्ठाख्यस्मृतेश्च** प्रसिद्धचित्रपटदृष्टांतेनैव व्यनक्ति—**यथेति** ॥ १ ॥

**रा० टीका**—किं तदित्याकांक्षायां दृष्टांतदार्ष्टांतिकयोरुभयोरप्यवस्थाचतुष्टयं क्रमेणोद्दिशति—

**यथा धौतो घट्टितश्च लांछितो रंजितः पटः ॥**
**चिदंतर्यामी सूत्रात्मा विराट् चाऽऽत्मा तथेर्यते ॥ २ ॥**

**यथेति ।** धौतो घट्टितो लांछितो रंजित इत्येवंप्रकाराश्चतस्रोऽवस्था यथा चित्रपट उप-

लभ्यंते तथा परमात्मन्यपि चिदंतर्यामी सूत्रात्मा विराट् चेत्यवस्थाचतुष्टयं बोद्धव्यमित्यर्थः॥२॥

**अ० टीका**—कथं तदवस्थाचतुष्टयं दृष्टांतदार्ष्टांतिकयोरुभयोरपीत्यपेक्षायां तत्स्पष्टयति–**यथेति** ॥ २ ॥

**रा० टीका**—दृष्टांतस्थितानामवस्थानां स्वरूपं क्रमेण व्युत्पादयति—

**स्वतः शुभ्रोऽत्र धौतः स्याद्घट्टितोऽन्नविलेपनात् ॥**
**मष्याकारैर्लांछितः स्याद्रंजितो वर्णपूरणात् ॥ ३ ॥**

**स्वत इति** । अत्राऽवस्थासु मध्ये स्वतो द्रव्यांतरसंबंधं विना शुभ्रो धौत इत्युच्यते । अन्नेन लिप्तो घट्टितो मषीमयराकारैर्युक्तो लांछितो यथायोग्यं वर्णैः पूरितो रंजितः स्यात् ॥ ३ ॥

**अ० टीका** – धौतादित्वमेव विशदयति **स्वत इति** ॥ ३ ॥

**रा० टीका**—दार्ष्टांतिकं ता व्युत्पादयति—

**स्वतश्चिदंतर्यामी तु मायावी सूक्ष्मसृष्टितः ॥**
**सूत्रात्मा स्थूलसृष्ट्यैव विराडित्युच्यते परः ॥ ४ ॥**

**स्वत इति** । परः परमात्मा मायातत्कार्यरहितश्चिदित्युच्यते । मायायोगादंतर्यामी । अपंचीकृतभूतकार्यसमष्टिसूक्ष्मशरीरयोगात्सूत्रात्मा । पंचीकृतभूतकार्यसमष्टिस्थूलशरीरोपाधियोगाद्विराडिति ॥ ४ ॥

**अ० टीका** दार्ष्टांतिकेऽर्थंतद्योजयति **स्वतश्चिदिति** । ननु तंतुवायनिर्मिते पटे रजककृतधावनलक्षणसंस्कारविशेष एव धौतत्वं तथाऽत्र चितिनैव संस्कारः कोऽप्युक्त इति वैषम्यमिति चेन्न । तत्र धौतशब्देन वास्तविककार्पास तंतुनिष्ठशुभ्ररूपवत्त्वस्यैव विवक्षितत्वान्निरुक्तरजककृत्यापारस्य तु तत्राऽऽरोपितकर्तृत्वायकृतसंस्कारनिरासार्थमुपयोगाच्च । एतदाशयेनैवोभयत्रापि शुद्धत्वसाधर्म्यं पटकस्वतःपदप्रयोग इति । सूक्ष्मेत्यादि सूत्रेत्युत्तरार्धेऽपि ॥ ४ ॥

**रा० टीका** ननु परमात्मनश्चित्रपटस्थानीयत्वे तदाश्रितानि चित्राणि वक्तव्यानीत्यत आह—

**ब्रह्माद्याः स्तंबपर्यंताः प्राणिनोऽत्र जडा अपि ॥**
**उत्तमाधमभावेन वर्तंते पटचित्रवत् ॥ ५ ॥**

**ब्रह्माद्या इति** । अत्र परमात्मन्युत्तमाधमभावेन वर्तमानं ब्रह्मादि स्तंबपर्यंतं चेतनात्मकं गिरिनद्यादि जडजातं च चित्रस्थानीयमित्यर्थः ॥ ५ ॥

**अ० टीका**—ननु भवत्वयं परशब्दितः परमात्मैव स्थूलसृष्ट्याख्योपाधिविशेषेण विराडथापि सूक्ष्मसृष्टिलक्षणापंचीकृतपंचमहाभूततत्कार्यप्रपंचरूपोपाध्यवच्छिन्नसूत्रात्मपदवाच्यसमष्टिजीवव्याप्या व्यष्टिजीवाः क कल्पिता इत्याशंकयात्रैवैतत्सदृष्टांतं समाधत्ते – **ब्रह्माद्या इति** । ब्रह्मा चतुराननः आद्यः प्रथमो येषां ते तथेत्यर्थः । अत्र लंबकर्णमानयेत्यादिवत्तद्गुणसंविज्ञानबहुव्रीहिपक्षे ।

> "स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
> आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत "

इतिस्मृतेश्चतुरास्योऽपि जीवविशेष एव । चित्रगुमानयेत्यादिवदतद्गुणसंविज्ञानपक्षे तु "अथ यो ह खलु वावाऽस्य राजसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्म" इति । **मैत्रायणीय**श्रुतेस्तस्य मायीश्वरराजसलीलाविग्रहविशेषत्वेनेश्वरत्वात्तद्वचुदास एव विवक्षित इति भावः । नन्वथापि कोऽत्र पक्षः श्रेयानिति विचिकित्सां कः शमयेदिति चेत्सत्यम् । "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मिति तस्मात्तत्सर्वमभवत्" इति श्रुत्येकवाक्यतया स्मार्तं ब्रह्मपदमेव समष्टिजीवपरमित्याद्यपक्ष एव श्रेयान् । अन्यथा स्तंबेत्यादौ वैरूप्यापत्तेरिति तत्त्वम् । **प्राणिन इत्यादि** । प्राणिनस्तथा जडाः पर्वतादयोऽपि । **उत्तमेति** । **पटेति** । अत्र वर्तंत इत्यन्वयः ॥ ५ ॥

**रा० टीका**—ब्रह्मादिजगतश्चेतनस्थानीयत्वे कारणं वक्तुं दृष्टांतमाह—

**चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् ॥**
**चित्राधारेण वस्त्रेण सदृशा एव कल्पिताः ॥ ६ ॥**

**चित्रेति** । यथा चित्रे लिखितानां मनुष्यादिशरीराणामेव नानावर्णोपेता वस्त्रविशेषा लिख्यंते ते च शीताद्यनिवारकत्वाद्वस्त्राभासा एव ॥ ६ ॥

**अ० टीका**—एवं चेह जीवानां किं स्वरूपमित्यपेक्षायां वक्ष्यमाणाभासवादमेव प्रपंचयितुं सदृष्टांतं तदाह—**चित्रेति** प्रभृतिद्वाभ्याम् । चित्रकारेणेत्यार्थिकम् ॥ ६ ॥

**रा० टीका**—दार्ष्टांतिकमाह—

**पृथक् पृथक् चिदाभासाश्चैतन्याध्यस्तदेहिनाम् ॥**
**कल्प्यंते जीवनामानो बहुधा संसरंत्यमी ॥ ७ ॥**

**पृथगिति** । एवं परमात्मन्यारोपितानां देवादीनां शरीराणामेव जीवनामानश्चिदाभासाः प्रत्येकं कल्प्यंते न पर्वतादीनाम् । तेषां तत्कल्पने कारणमाह—**बहुधेति** । अमी जीवा देवतिर्यङ्मनुष्यादिशरीरप्राप्त्या बहुधा संसरंति न परमात्मा तस्य निर्विकारित्वादित्यभिप्रायः॥७॥

**अ० टीका**—**पृथक्पृथगिति** । **चैतन्येति** । अधिष्ठानीभूतब्रह्मचैतन्ये आरोपितोक्तशरीरिणामित्यर्थः । कल्प्यंते माययेति शेषः ॥ ७ ॥

**वस्त्राभासस्थितान्वर्णान्यद्वदाधारवस्त्रगान् ॥**
**वदंत्यज्ञास्तथा जीवसंसारं चिद्गतं विदुः ॥ ८ ॥**

**रा० टीका**—ननु सर्वे वादिनो लौकिकाश्चाऽऽत्मन एव संसार इति वदंति तत्र किं कारणमित्याशंक्याज्ञानमेव कारणमिति सदृष्टांतमाह—**वस्त्राभासेति** ॥ ८ ॥

**अ० टीका**—ननः किं तदाह—**वस्त्राभासेति** । यथा चित्रपटलिखितदेवमनुष्यादीनां विलिखितपरिहितवस्त्राभासनिष्ठनीलपीतादिवर्णानज्ञा मूढा आधारवस्त्रगान्वदंति तथैव जीवसंसारं चिदाभासनिष्ठकर्तृत्वादिकं मूर्खा एव चिद्गतं विदुरिति ॥ ८ ॥

**रा० टीका**—गिरिनद्यादीनां तु चिदाभासकल्पनाभावं दृष्टांतपुरःसरमाह—

**चित्रस्थपर्वतादीनां वस्त्राभासो न लिख्यते ॥**
**सृष्टिस्थमृत्तिकादीनां चिदाभासस्तथा न हि ॥ ९ ॥**

**चित्रस्थेति** । प्रयोजनाभावादिति भावः ॥ ९ ॥

**अ० टीका**—ननु भवत्वेवमथाप्युक्तचिदाभासरूपा जीवाः किं मृत्पाषाणादीनां जडानां संति न वेति शंकां सनिदर्शनं शमयति—**चित्रस्थेति** । न चैवं तर्हि चित्रस्थवृक्षादीनामपि वस्त्राभासा लेखनात्तेषामपि मृत्तिकादिवन्निर्जीवत्वापत्तिरिति सांप्रतम् । यत्र शास्त्रादिना सजीवत्वं न सिध्यति तावन्मात्रस्यैव मृत्तिकादीनामित्यादिपदेन विवक्षितत्वाद्वृक्षादीनां तु सजीवत्वस्य "तस्माज्जिघ्रंति पादपाः" इत्यादिमोक्षधर्मादिशास्त्रसिद्धत्वाच्चेति दिक् ॥ ९ ॥

**संसारः परमार्थोऽयं संलग्नः स्वात्मवस्तुनि ॥**

**इति भ्रांतिरविद्या स्याद्विद्ययैषा निवर्तते ॥ १० ॥**

**रा० टीका**—एवमात्मन्यारोपितस्य संसारस्य ज्ञाननिवर्त्यत्वसिद्धये तन्मूलभूतामविद्यामाह—**संसार इति** ॥ १० ॥

**अ० टीका**—ननु प्रपूर्वपद्ये चिदाभासगतमेव संसारं शुद्धब्रह्मरूपात्मगतमज्ञा एव वदंतीत्युक्तं तत्कीदृशमज्ञानमिति तत्स्वरूपाकांक्षायां तदाह **संसार इति** ॥ १० ॥

**रा० टीका**—कथं विद्या तल्लाभोपायश्च क इत्याकांक्षायां विद्यास्वरूपं तल्लाभोपायं च दर्शयति—

**आत्माभासस्य जीवस्य संसारो नाऽऽत्मवस्तुनः ॥**

**इति बोधो भवेद्विद्या लभ्यतेऽसौ विचारणात् ॥ ११ ॥**

**आत्माभासस्येति** । चिदाभासस्येत्यर्थः ॥ ११ ॥

**अ० टीका**—कीदृशी सा विद्येत्यत आह—**आत्मेति** । संसारः सत्यत्वेन द्वैतप्रतिभासः । सा विद्या कथं लभ्येतेत्यत्राऽऽह—**लभ्यत इति** ॥ ११ ॥

**रा० टीका**—विचारात्लभ्यते विद्येत्युक्तं कस्य विचारात्लभ्यते विद्येत्याशंक्याऽऽह—

**सदा विचारयेत्तस्माज्जगज्जीवपरात्मनः ॥**

**जीवभावजगद्भावबाधे स्वात्मैव शिष्यते ॥ १२ ॥**

**सदेति** । ननु परमात्मा विचारितो मोक्षावस्थायां फलरूपेणावस्थानाज्जीवजगतोर्विचारः क्वोपयुज्यत इत्याशंक्य तयोरपवादेन परमात्मावशेषेण उपयुज्यत इत्याह **जीवभावेति** ॥ १२ ॥

**अ० टीका**—ननु त्रिविषयकविचारेणैकरूपविद्यालाभ इत्याशंक्य तानाह **सदेति** । यथाऽयं सर्प इति भ्रमे भासमानसर्पेदंपदार्थतत्संसर्गा एव विचारणीयास्तत्र दीपालोकेन मंदांधकारध्वंसद्वारा सर्पतत्संसर्गयोर्बाधे सतीदंपदार्थोऽवशिष्यते तद्वत्त्रिविचारेणोक्ताविद्याध्वंसद्वारा जीवभावजगद्भावयोर्बाधे सति स्वात्मैव शिष्यत इत्युचितमेवेति भावः ॥ १२ ॥

**नाप्रतीतिस्तयोर्बाधः किं तु मिथ्यात्वनिश्चयः ॥**

**नो चेत्सुषुप्तिमूर्छादौ मुच्येतायत्नतो जनः ॥ १३ ॥**

**रा० टीका**—ननु विचारेण जीवभावजगद्भावबाधे स्वात्मैव शिष्यत इत्युक्तविचारेण जीवजगतोर्बाधे तदप्रतीत्या व्यवहारलोपः प्रसज्जेतेत्याशंक्य बाधशब्दस्य विवक्षितमर्थं विपक्षे दंडं चाऽऽह **नाप्रतीतिरिति** । सुषुप्तिमूर्छादौ स्वत एव द्वैतप्रतीत्यभावात्तत्त्वज्ञानं विनाऽपि मुक्तिः स्यादित्यर्थः ॥ १३ ॥

**अ० टीका**—ननु कोऽत्र बाधपदार्थ इत्यतस्तमाह—**नाप्रतीतिरिति** । न चेदं

शुक्तिरजतरज्जुसर्पादिभ्रमेष्वव्याप्तमिति सांप्रतम् । तत्र निरुपाधिभ्रमत्वेनाप्रतीतिसत्त्वेऽपि मिथ्यात्वनिश्चयानपायादित्याशयः । विपक्षे बाधकमाह—**नो चेदिति** । आदिना मरणाद्यपि ॥ १३ ॥

**परमात्मावशेषोऽपि तत्सत्यत्वविनिश्चयः ॥**
**न जगद्विस्मृतिर्नो चेज्जीवन्मुक्तिर्न संभवेत् ॥ १४ ॥**

**रा० टीका**—स्वात्मैव शिष्यत इत्यनेनापि परमात्मनः सत्यत्वज्ञानमेव विवक्ष्यते न तदतिरिक्तजगद्विस्मृतिर्जीवन्मुक्त्यभावप्रसंगादित्याह—**परमात्मेति** ॥ १४ ॥

**अ० टीका**—नन्वेवं चेत्तर्हि स्वात्मैव शिष्यत इति स्ववचसैव पूर्वपद्येऽवधारणध्वनितद्वैताप्रतीत्या सह विरोध इति चेत्सत्यम् । तत्राप्येवमेव पारिभाषिकार्थस्य विवक्षितत्वादित्याह—**परमात्मेति** । तत्रापि विपक्षे बाधकमाह—**नो चेदित्यादिना** ॥ १४ ॥

**परोक्षा चापरोक्षेति विद्या द्वेधा विचारजा ॥**
**तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यते ॥ १५ ॥**

**रा० टीका**—सदा विचारयेदित्युक्त्या देहपातपर्यंतं विचारप्रसक्तौ सत्यां तस्यावधिमाह—**परोक्षेति** ॥ १५ ॥

**अ० टीका**—ननु भवत्वेवं ' जीव प्राणधारणे ' इति स्मरणाज्जीवतीति जीवस्तस्य मुक्तिरिति व्युत्पत्तेश्च सिद्धाया बाधोत्तरमपि मृगजलादिवत्सोपाधिकभ्रमत्वेन यावदुपाधिमिथ्यात्वेन भासमानमृत्वाविद्येतरप्रारब्धभोगोपयुक्ताखिलदृश्यपूर्वकाद्वैतात्मानुसंधानलक्षणाया जीवन्मुक्तेरन्यथासिद्ध्यनापत्त्या चिन्मात्रसत्यत्वविनिश्चय एव परमात्मावशेषस्तथाऽपि सदा विचारयेदित्यादि प्रपूर्वपद्ये सर्वदा जगदादिविचारो विहितः स तु—

" आत्मब्रह्मविचाराख्यं शास्त्रीयं मानसं जगत् ।
बुद्धे तत्त्वे तच्च हेयमिति श्रुत्यनुशासनम् "

इति द्वैतविवेकोक्तिविरुद्ध एवेत्याशंका समाधातुं प्राक्सामान्यतो लक्षितविद्याया द्वैविध्यं विभत्ते—**परोक्षा चेति** । ततः किं तत्राऽऽह—**तत्रापरोक्षेति** ॥ १५ ॥

**अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत् ॥**
**अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते ॥ १६ ॥**

**रा० टीका**—विचारजन्या विद्या परोक्षत्वापरोक्षत्वभेदेन द्वेधेत्युक्तं तयोरुभयोः स्वरूपं क्रमेण दर्शयति—**अस्ति ब्रह्मेति** ॥ १६ ॥

**अ० टीका**—ते अपि विद्ये लक्षयति—**अस्तीति** । तथा चाऽऽम्नायते क्रमाद्ब्रह्मवल्लीबृहदारण्यकयोः—' अस्ति ब्रह्मेति चेद्वेद । संतमेनं ततो विदुः ' इति । ' तदाऽऽत्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् ' इति च ॥ १६ ॥

**रा० टीका**—एवं विधात्मसाक्षात्कारासाधारणकारणमात्मतत्त्वविवेचनं प्रतिजानीते—

**तत्साक्षात्कारसिद्ध्यर्थमात्मतत्त्वं विविच्यते ॥**
**येनायं सर्वसंसारात्सद्य एव विमुच्यते ॥ १७ ॥**

**तत्साक्षात्कारेति** । येन साक्षात्कारेण पुमान्सद्य एव विमुच्यते तत्साक्षात्कारसिद्ध्यर्थमिति पूर्वेणान्वयः ॥ १७ ॥

**अ० टीका**—ननूक्तसाक्षात्कारः कथं स्यादित्याशंक्याऽऽत्मतत्त्वविवेचनादेवेति सूचयंस्तत्प्रतिजानीते—**तत्साक्षात्कारेति** । अयं मुमुक्षुः । येन साक्षात्कारेण । **सर्वेति** । यावद्द्वैताध्यासादित्यर्थः । सद्य एव शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्येतरोपाधिनिवृत्तिरुदयत इति **कल्पतरूक्तेः** साक्षात्काराख्यमद्गुरुमुपदिष्टस्वशाखीयसुविचारितवेदांतमहावाक्यजन्यचरमचित्तवृत्तितुल्यकालमेवेति यावत् । विमुच्यते जीवन्मुक्तः प्रागुक्तरीत्या भवति । **तदिति** । तादृशसाक्षात्कारसिद्ध्यर्थमित्यर्थः । **आत्मेति** । आत्मनः कालत्रयाबाध्यं स्वरूपमित्येतत् । विविच्यते तदध्यस्तद्वैतात्पृथक्कारेण तन्मिथ्यात्वपूर्वकं ज्ञाप्यत इत्यन्वयः । नयेत्यध्याहारेणामानित्वस्वाभाव्यं द्योत्यते ॥ १७ ॥

**रा० टीका**—चिदात्मनः पारमार्थिकमेकत्वं निश्चेतुं व्यवहारदशायां प्रतीयमानं चैतन्यभेदमुद्दिशति—

**कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ॥**
**घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा ॥ १८ ॥**

**कूटस्थ इति** । एकस्याश्चितेश्चातुर्विध्ये दृष्टांतमाह—**घटाकाशेति** ॥ १८ ॥

**अ० टीका**—तत्रास्मिञ्शास्त्रे जीवेश्वरस्वरूपैक्यबोधकं वाक्यं हि महावाक्यमित्युच्यते । शास्त्रस्य तन्मात्रविषयकत्वात् । तस्य तु जीवेश्वरवाचकपदयोर्जहदजहत्स्वार्थलक्षणावृत्त्यंगीकारं विना परस्परविरुद्धविशिष्टचिल्लक्षणयोः स्वार्थयोरैक्यायोगात्तल्लक्ष्यौ वाच्यौ च पदार्थौ क्रमादुद्दिशति—**कूटस्थ इति**। एवं चात्र मूलकारस्याऽऽचार्यस्य **पूर्वाश्रमे माधवाख्यस्य**—

" **भारद्वाजः** कुलं यस्य शाखा यस्य च **याजुषी** ।
**सूत्रं बोधायनं** यस्य स सर्वज्ञो हि **माधवः** " ।

इति तदीयग्रंथगततत्प्रशस्तिवचनाद्बोधायनसूत्रत्वेन तैत्तिरीयाख्यस्वीयशाखागतयजुःशाखीयोपनिषद्गतमेव 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' । इत्येव **महावाक्यं** विवेचनीयत्वेन विवक्षितम् । जीववाचकपदस्य प्रथमं तत्रैव समुपलब्धत्वात् ' अहं ब्रह्मास्मि ' इत्यादिशाखांतरमहावाक्यस्य तथात्वेऽपि ।

" स्वाध्यायधर्मपठितं निजवेदशाखावेदांतभूमिगतमादरपालितं च ।
संन्यासिना परदृशा गुरुणोपदिष्टं साक्षान्महावचनमेव विमुक्तिहेतुः "

इति **सर्वज्ञात्ममुनीश्वरचरणवचनेन** स्वशाखास्थस्यैव तस्य विमुक्तिसाधकत्वात्प्रकृतश्लोके जीवाद्यनुक्रमस्यैवोपलंभाच्च । नन्वेकैवासंगस्वप्रकाशभूमाचित्कथंचतुर्धेत्याशंक्य दृष्टांतेन तत्स्पष्टयति—**घटाकाशेति** । जलाकाशादिस्वरूपं त्वग्रेऽनुपदमेव विवरिष्यत्याचार्यः । ननु **तत्त्वविवेके** प्रागेतैरेव जीवेश्वरयोः स्वरूपमेवं प्रतिपादितमस्ति—

" चिदानंदमयब्रह्मप्रतिबिंबसमन्विता ।
तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा ।
सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते ।
मायाबिंबो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ।
अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा " इति ।

एवं चात्र पर्यवसितोऽर्थस्तु मयोक्तो बोधैक्यसिद्धावेवैतन्मतं प्रकृत्य—

" रजस्तमोभ्यामभिभूतसत्त्वा भवेदविद्या न तथा तु माया ।
जीवेश्वरौ तत्प्रतिबिंबरूपौ ब्रह्मात्मनः शुद्धचितेः क्रमेण " ॥

**तदिति** । तत्राविद्यादौ प्रतिबिंबस्वरूपावित्यर्थः । ब्रह्मेत्यादि शुद्धचिद्विशेषणमेव । अत्र पुनर्ग्रंथारंभे—

" यथा धौतो घट्टितश्च लांछितो रंजितः पटः ।
चिदंतर्यामी सूत्रात्मा विराडात्मा तथेर्यते "

इत्युपक्रम्य—' स्वतश्चिदंतर्यामी तु मायावी सूक्ष्मसृष्टितः ।
सूत्रात्मा स्थूलसृष्टचैष विराडित्युच्यते परः " इत्युक्तम् ।

अत्र पुनरिदानीं कूटस्थ इत्याद्युच्यते । तत्कथं न परस्परविरुद्धमिदं प्रक्रियात्रयमेकाचार्यस्यापीति चेदुच्यते । तत्त्वविवेके तावच्चत्स्वसंमतत्वेन जीवेश्वरस्वरूपमवर्णि श्रीमद्विद्यारण्याचार्यचरणैस्तदेव मया **बोधैक्यसिद्धौ** पूर्वाचार्यसंप्रदायसरण्या रजस्तमोभिभूतसत्त्वाख्यमूलाविद्यापरनामकप्रकृतिप्रतिबिंबं ब्रह्म चैतन्यं जीवस्तदनभिभूतसत्त्वाख्यतद्भागप्रतिबिंबितं तदीश्वर इति तत्तथैव । अस्मिन्प्रकरणे परं हरिहरचतुराननावतारीभूतभगवद्बादरायणश्रीशंकरभगवत्पादश्रीमत्सुरेश्वराचार्यचरणाभिधसूत्रभाष्यवार्तिककारप्रणीतत्वेन त्रिमुनिव्याकरणवत्रीश्वरेऽस्मिन्नद्वैतशास्त्रे 'यथोत्तरं मुनीनां प्रामाण्यम्' इति न्यायेन स्वोक्तजीवेश्वरस्वरूपासिद्धांतस्य श्रीमच्चरममुन्याख्यवार्तिककृत्संमतभासवादेन सहैकमत्यध्वननार्थं तद्वादस्य चित्रपटघटाकाशादिदृष्टांतैर्द्विविधसरण्येव बुभुत्सुबुद्ध्यधिरोहसौकर्यार्थमतुलकरुणयैवोपन्यासः कृतः । तत्र श्रीमद्वार्तिककारसंमत आभासवादस्तूक्तः **सिद्धांतबिंदौ** । अज्ञानोपहित आत्माऽज्ञानतादात्म्यापन्नस्वचिदाभासाविवेकादंतर्यामी साक्षी जगत्कारणमिति च कथ्यते । बुद्ध्युपहितश्च तत्तादात्म्यापन्नस्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति च कथ्यत इति वार्तिककारपादा इत्यादिनाऽयमेव पक्ष आभासवाद इति गीयत इत्यंतेन । आभासलक्षणं तूक्तं मया **बोधैक्यसिद्धावेव** प्रतिबिंबेशवादारंभ एव प्रकटार्थकृन्मतं प्रकृत्य । जीवेशौ रचयति या स्वर्गाविभासादित्यादि श्रुतिवचसोऽपि युक्तमेतत् । आभासत्वमपि च बिंबनिघ्नसत्त्वे सत्येतत्समपरिभासमात्रत्वेवेति । ' अधीनो निघ्न आयत्तः ' इत्यमराद्बिंबाधीनसत्ताकत्वे सतीत्यर्थः । एवं बिंबत्वोपाधित्वे अपि तत्रैव लक्षिते । यदीयप्रमास्वप्रयुक्तं भ्रमं न प्रबाधेत तद्बिंबमाराढुपाधेः । स्वधर्मोद्यदारोपकत्वं हि तत्त्वं मुखादौ तु तद्दृश्यते दर्पणादेरिति । तत्त्वमुपाधित्वमिति यावत् । एवं च **वार्तिककारमते** जीवोपाधित्वेन बुद्धिरेव संमतेति तु निर्विवादमेव । सा च तत्त्वविवेके शुद्धमलिनसत्त्वप्रधानात्मकमूलाविद्यापरनामकमायाविद्याख्यप्रकृतिभागयुगभिन्ना सत्त्वप्रधानतामस्याख्यततृतीयभागपरिणताकाशादिशब्दाद्यात्मकापंचीकृतसूक्ष्मपंचमहाभूतसत्त्वांशपंचकजन्येत्यभिहितम् ।

तथा च—" अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ।
सा कारणशरीरं स्यात्प्राज्ञस्तत्राभिमानवान् "

इति पूर्वार्धे जीवस्वरूपं यदुक्तं तत्समष्ट्यव्याकृताभिधव्यष्टिसुषुप्तसंज्ञकविलयकालिकमेवेत्यवश्यं वाच्यम् । उत्तरार्धे सेत्यादिना तथैव प्रतीतेस्तदुत्तरमेव ।

" तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया ।
वियत्पवनतेजोंबुभुवो भूतानि जज्ञिरे " ॥

इत्यादिना निरुक्तसृष्ट्युक्तेश्च । तेनाव्याकृतदशायां त्रयाणामप्युक्तमूलाविद्याख्यप्रकृतिभागानामेकीभूतत्वेनैव स्थितत्वाज्जीवस्य त्वजन्यत्वाच्च तदानीमपि विद्यमानावश्यकत्वात्सृष्टिदशायामुक्तरीत्या बुद्धिरूपेण यत्परिणतं यत्सत्त्वं तदपि निरुक्ततमःप्रधानप्रकृतिकार्यत्वेन सृष्टिदशापन्नत्वेन च रजस्तमोभ्यामभिभूतमेवेति निरुक्तव्यक्तदशापन्नबुद्धावपि तादृशाविद्यात्वं तादृशाविद्यायामप्यव्याकृतदशापन्नायां जीवानादित्वान्यथानुपपत्तिसिद्धसूक्ष्मतमसंस्कारात्मकबुद्धिरूपत्वमपि युक्तमेवेति वार्तिकमततत्त्वविवेकमतयोर्जीवोपाध्योरैकरूप्यं सिद्धम् । एवं वार्तिकमतेऽपि **सिद्धांतबिंदौ** जहल्लक्षणामाभासवादत्वेनोक्त्वाऽग्रे जहदजहल्लक्षणाया अपि सर्वसंमताया उक्तत्वेन तत्त्वविवेकसंमतप्रतिबिंबवादस्याप्युक्ताभासवादे पर्यवसानं तद्रूपाध्यंशमिथ्यात्वेन प्रतिबिंबवादेऽप्याभासवादपर्यवसानमित्युपर्येयजीवस्वरूपैक्यमप्युक्तमतयोर्युक्तमेव । तद्वत्तत्त्वविवेक ईश्वरोपाधिर्मायैवोक्ता वार्तिकमते त्वविद्योक्तेति यद्यपि भेद इव भाति तथाऽपि विचारे क्रियमाणे माया च तमोरूपेतिश्रुतेः ।

" तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै ज्ञानात्मने नमः "

इति स्मृतेश्च मायायां ज्ञाननिरस्यत्वेनाविद्यात्वस्याविद्यायां चेश्वरोपाधित्वेन शुद्धसत्त्वप्रधानत्वेन मायात्वस्यापि पर्यवसानात्मतद्वयेऽपीश्वरोपाध्यैकरूप्येण तदुपहितस्य साक्षिण ईश्वरस्याप्यैक्यमेवेति क्व नाम तत्त्वविवेकचित्रदीपयोर्विरोधगंधोऽपि । **एवं कोशविवेके—**

" चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा ।
तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतां व्रजेत् ।
कोशोपाधिविवक्षायां याति ब्रह्मैव जीवताम् ।
पिता पितामहश्चैकः पुत्रपौत्रौ यथा प्रति " इति ।

**द्वैतविवेकेऽपि—**

" चैतन्यं यदधिष्ठानं लिंगदेहश्च यः पुनः ।
चिच्छाया लिंगदेहस्था तत्संघो जीव उच्यते ।
माहेश्वरी तु या शक्तिस्तस्या निर्माणशक्तिवत् ।
विद्यते मोहशक्तिश्च तं जीवं मोहयत्यसौ " ।

इति च जीवादिस्वरूपप्रतिपादकवाक्यानि तात्पर्येणोक्ताभासवादपर्यवसितान्येव बोध्यानि । चिच्छायापदप्रयोगस्वारस्यादिति रहस्यम् । यच्चात्र चित्रपटघटाकाशादिदृष्टांतैराभासवादविशदीकारे पद्धतिद्वयमुपन्यस्तं तदप्यविरुद्धमेव । तथा हि । तत्र तावच्छुद्धब्रह्मस्थानीयो धौतपटो महाकाशश्च युक्त एव । परन्त्वीश्वरस्थानीयो घट्टितपटो जलाकाशश्च कथमिति शंका तु मूल एवाग्रेऽपाक्रियते साक्षेपमपि ।

" तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् ।
परः कारणतामेति भावनाज्ञानकर्मभिः ।
इति वार्तिककारेण जडचेतनहेतुता ।
परमात्मन एवोक्ता नेश्वरस्येति चेन्न तत् ।
अन्योन्याध्यासमत्रापि जीवकूटस्थयोरिव ।

ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः ।
सत्यं ज्ञानमनन्तं यद्ब्रह्मतस्मात्समुत्थिताः ।
खवाय्वग्निजलोर्व्योषध्यन्नदेहा इति श्रुतिः ।
आपातदृष्टितस्तत्र ब्रह्मणो भाति हेतुता ।
हेतोश्च सत्यता तस्मादन्योन्याध्यास इष्यते ।
अन्योन्याध्यासरूपोऽसावन्नलिप्तपटो यथा ।
घट्टितेनैकतामेति तद्वद्भ्रांत्यैकतां गतः ।
मेघाकाशमहाकाशौ विविच्येते न पामरैः ।
तद्वद्ब्रह्मेशयोरैक्यं पश्यंत्यापातदर्शिनः " इति ॥

एवमीश्वरदृष्टांतस्पष्टीकारवज्जीवजगद्दृष्टांतस्पष्टीकरणमपि—

" सर्वतो लांछितो मष्या यथा स्याद्घट्टितः पटः ।
सूक्ष्माकारैस्तथेशस्य वपुः सर्वत्र लांछितम् ।
सस्यं वा शाकजातं वा सर्वतोऽकुरितं यथा ।
कोमलं तद्वदेवैष पेलवो जगदंकुरः ।
आतपाभानलोको वा पटो वा वर्णपूरितः ।
सस्यं वा फलितं यद्वत्तथा स्पष्टवपुर्विराट् " इति ।

**सूक्ष्माकारैरिति** । सूक्ष्मलिंगशरीरैरित्यर्थः ।

एतेन समष्टिलिंगशरीराभिमानिसूत्रात्माध्यासः सूचितः । एवं च पटाभाससमो सुभृदिति ।

" जलव्योम्ना घटाकाशो यथा सर्वैस्तिरोहितः ।
तथा जीवेन कूटस्थः सोऽन्योन्याध्यास उच्यते "

इति च व्यष्टिजीवाध्यासस्तथा जगदध्यासश्च सर्वोऽपि द्योतित इति ध्येयम् ।

प्रपंचितं चैतच्चित्रदीपप्रक्रियाद्वयविरोधबाधने **बोधैक्यसिद्धौ** मया सप्रश्नमपि—

" अंतर्यामी किमीशो भवति यदि न वा नाऽऽद्य आत्मत्वहाना-
न्नांत्याऽतत्त्वानुभूतेरिति विकलधियं शिक्षितुं चित्रदीपे ।
विद्यारण्या वदेयुः श्रुतिसमभिमतं वार्तिकाचार्यजुष्टं
चिच्चातुर्विध्ययुक्तं द्विविधसरणितः स्पष्टमाभासवादम् ।
आदौ चित्रपटीनिदर्शनमिषादग्रे घटाकाशत-
द्वारिस्थप्रतिबिंबखाभ्रगततच्छायादिदृष्टांततः ।
चैतन्यस्य चतुर्विधत्वमुदितं कूटस्थजीवेशाचि-
च्छुद्धब्रह्मभिदामृषात्वमनयोर्जीवेशयोः सर्वथा ।
पटो धौतो ब्रह्म स्फुटितमथ संघट्टित इह
क्षणादंतर्यामी पुनरपि ससूत्रं स लिखितः ।
विराड्वर्णैः पूर्णस्तदुपरि पटाभाससदृशो
मतो जीवस्तस्माद्भवति न तु चित्पंचविधता ।
आकर्ण्यैक्यमनयोः शुभयोः सरण्योर्यल्लांछितत्वमुदितं **बत चित्रशाय्या** ।

सूत्रे निदर्शनमतः क्व पटावभासो भूयात्पृथक्समरसस्तदिहैव जीवः ।
पटाभासो रेखारचनमिति नैवात्र विमति
स्तथा जीवः सूत्रात्कनु किल समष्टेरपि परः ।
अथो वर्णैः पूर्णः पट इव विराड्वो निगदितो
जगत्स्थानीयोऽसौ तदपि च विचार्यं यत इह ।
भवत्वेवं जीवे जगति च समाधानमुचितं
तथाऽपीशः किं स्यादिति न यदसावप्यति समः ।
विशेषस्त्वेतावान्प्रथमकथितादीशवपुषो
द्वितीये तद्रूपं परमिव विभात्यज्ञमनसः ।
योऽयं घट्टितवस्त्रवन्निगदितो मायी पुराऽस्त्यादरा-
दंतर्याम्यभिधो महेश इह धीसंस्कारसंबिंबितः ।
उक्तोऽसौ घनबिंबितांबरसमस्तत्रापि चेच्चिंत्यते
नो भेदोस्त्यनयोर्लवादपि परं भंग्येव भिन्ना खलु ।
रेखा एव धियो मताः किल ततः संस्कारसंघाः पटे
ये जाताः परिघट्टिते स तु न ते किं तैः परिच्छिद्यते ।
एवं तेऽपि समष्टिधीप्रकृतिमन्मायैकगात्मेन त
द्भेदः कः प्रतिबिंबितात्तदपरिच्छिन्ने निरुक्ते भवेत् ।
अवच्छिन्नो जीवो ननु निगदितो भामतिकृता प्रतिच्छायात्माऽसौ विवरणकृदाद्यैरपि ततः ।
कथं नो भेदः स्यादिति न हृदयानाकलनतो द्वयोरप्याहत्यै गुरुभिरियमुक्ताऽत्र सरणिः ।
कूटस्थस्तदपि कथं पुरा सरण्यां संसिध्येद्धटखसमो न चेति वाच्यम् ।
यो रेखाद्यभिलिखितः पटावभासस्तन्मात्रः शुचिरपि किं पटो न यस्मात् ।
चोरोऽयं स्थाणुरेवेत्यभिवदति गुरौ चोरधीः स्थाणुबुद्ध्या
बाध्या दृष्टेह तद्वत्किल समभिमतं तत्त्वमस्यादिवाक्ये ।
बाधायामेव सत्यां सममधिकरणं स्याद्ययोस्तत्त्वमेवं
शुद्धस्याऽऽभासयोगाद्भवकलनमतो बद्धमुक्तव्यवस्था " इति ।

विस्तरस्त्वत्र **मदीयायामेतट्टीकायामद्वैतात्मप्रबोधा**भिधायामवबोध्य इति दिक् ।
एवं चाऽऽत्र कूटस्थः साक्षित्वोपलक्षितश्चिदात्मा शोधितस्त्वंपदार्थस्तच्चिदाभासस्तत्र मूला-
विद्याकल्पितबुद्धौ तत्प्रतिबिंब एव जीवस्त्वंपदवाच्यार्थः सर्वथा मिथ्यैव । कूटस्थे दृष्टांतीकृतो
घटाकाशः पटाभासावच्छिन्नः शुद्धपटश्च । जीवे त्वसौ घटाकाशपूरितजलप्रतिबिंबितमहाकाश
एव तथा पटाभासश्च । तद्ब्रह्म तु शुद्धाद्वैतचिन्मात्रमेव शोधितस्तत्पदार्थः । तत्र दृष्टांतो
महाकाशो धौतपटश्च । ईश्वरस्तु तदारोपितमूलाविद्यायां प्रतिबिंबितस्तच्चिदाभास एव सर्वथाऽपि
मिथ्यैव तत्पदवाच्यार्थः । तत्र दृष्टांतो मेघावच्छिन्नजले प्रतिबिंबितो महाकाशो घट्टितपटश्च ।
सूत्रात्मा समष्टिजीवो विराट् च जगत्स्थूलादि तत्र दृष्टांतो लांछितो रंजितश्च पट एव । यश्चोरः
स स्थाणुरित्यादौ चोरो नास्त्येव स्थाणुरेवास्तीत्यादिवद्बाधायां जीवादेः सत्यामेव ब्रह्मसामाना-
धिकरण्यम् । आनंदमयकोश एव मायाद्यभिध ईश्वरोपाधिः पक्षांतरे भागत्यागलक्ष-

णाऽपि प्रागुक्तैव । अवच्छिन्नप्रतिबिंबवादयोरत्रैवांतर्भावश्चेति संक्षेपः ॥ १८ ॥

**रा० टीका**—घटावच्छिन्नस्य घटाकाशस्य तदनवच्छिन्नस्य च महाकाशस्य प्रसिद्धत्वात्तौ विहायाप्रसिद्धं जलाकाशं व्युत्पादयति—

**घटावच्छिन्नखे नीरं यत्तत्र प्रतिबिंबितः ॥**
**साभ्रनक्षत्र आकाशो जलाकाश उदीर्यते ॥ १९ ॥**

**घटावच्छिन्नेति** । घटावच्छिन्न आकाशे यदुदकमस्ति तत्र जले प्रतिबिंबितोऽभ्रनक्षत्रसहित आकाशो जलाकाश इत्युच्यते ॥ १९ ॥

**अ० टीका**—ननु जीवेश्वरदृष्टांतीकृतौ जलाकाशाभ्राकाशौ कावित्यतस्तौ स्वसंमतौ व्युत्पादयति—**घटावच्छिन्नेत्यादि**द्वाभ्याम् ॥ १९ ॥

**रा० टीका**—अभ्राकाशं व्युत्पादयति—

**महाकाशस्य मध्ये यन्मेघमंडलमीक्ष्यते ॥**
**प्रतिबिंबतया तत्र मेघाकाशो जले स्थितः ॥ २० ॥**

**महाकाशस्येति** । तत्र मेघमंडले यज्जलं तस्मिन्नित्यर्थः ॥ २० ॥

**अ० टीका**—**महाकाशस्येत्यादि** । तत्र जले प्रतिबिंबतया स्थित इति संबंधः ॥२०॥

**रा० टीका**—ननु मेघजलस्याप्रतीयमानत्वान्नभसस्तत्र कथं प्रतिबिंबितत्वज्ञानमित्याशंक्याऽऽह—

**मेघांशरूपमुदकं तुषाराकारसंस्थितम् ॥**
**तत्र खप्रतिबिंबोऽयं नीरत्वादनुमीयते ॥ २१ ॥**

**मेघांशेति** । मेघस्थजलस्य प्रत्यक्षेणानुपलंभेऽपि वृष्टिलक्षणकार्येण मेघे तदुपादानमुदकं सूक्ष्मावयवरूपमस्तीत्यनुमीयते । उदकत्वेनैव लिंगेन प्रतिबिंबवत्त्वमपि । विमतं जलमाकाशबिंबवद्भवितुमर्हति जलत्वाद्धटगतजलवदित्यनुमानेन मेघांशरूपे जलेऽप्याकाशप्रतिबिंबसद्भावोऽवगम्यत इत्यर्थः ॥ २१ ॥

**अ० टीका**—ननु किमत्र मानमित्यतस्तदाह—**मेघांशेति** । यद्यन्नीरं तत्खप्रतिबिंबवन्नीरत्वादितिव्याप्तेर्जलाकाशे दृष्टत्वादित्यभिप्रायः ॥ २१ ॥

**रा० टीका**—एवं दृष्टांतभूतमाकाशचतुष्टयं व्युत्पाद्य दार्ष्टांतिके प्रथमोद्दिष्टं कूटस्थं व्युत्पादयति—

**अधिष्ठानतया देहद्वयावच्छिन्नचेतनः ॥**
**कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते ॥ २२ ॥**

**अधिष्ठानेति** । पंचीकृतापंचीकृतभूतकार्यत्वेन स्थूलसूक्ष्मरूपस्य देहद्वयस्याविद्याकल्पितस्याऽऽधारतया वर्तमानत्वेन ताभ्यामवच्छिन्न आत्मा कूटस्थ इत्युच्यते । तत्र कूटस्थशब्दप्रवृत्तौ निमित्तमाह—**कूटवदिति** ॥ २२ ॥

**अ० टीका**—नन्वेवमपि दार्ष्टांतिके प्रथमोद्दिष्टः कूटस्थपदार्थोऽप्यलौकिक एवेत्यतस्तमपि स्वाभिमतं व्युत्पादयति—**अधिष्ठानेति । कूटेति** । " **अयोधने शैलशृंगे सीरांगे**

कूटमस्त्रियाम्" इत्यमरात्कनकादि ताड्यवस्तु ताडनशतेऽपि कृते निर्विकारलोहघनवदित्यर्थः ॥ २२ ॥

**रा० टीका**—एवं कूटस्थं व्युत्पाद्य जीवस्य कूटस्थे कल्पितबुद्धिप्रतिबिंबकत्वेन तत्पक्षपातित्वात्तं व्युत्पादयति—

**कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिंबकः ॥**
**प्राणानां धारणाज्जीवः संसारेण स युज्यते ॥ २३ ॥**

**कूटस्थ इति** । तस्य जीवशब्दाभिधेयत्वे निमित्तमाह—**प्राणानामिति** । कूटस्थातिरिक्तजीवकल्पनमप्रयोजकमित्याशंक्याविकारिणः कूटस्थस्य संसारसंभवान्निर्वाहार्थं सोऽङ्गीकर्तव्य इत्याह—**संसारेणेति** ॥ २३ ॥

**अ० टीका**—अथ स्वाभिमतं जीवमपि व्युत्पादयति—**कूटेति । चिदिति** । चितः कृत्रिमः सर्वथा मिथ्याभूतः प्रतिबिंब इत्यर्थः । **प्राणानामिति** । जीव प्राणधारण इति हि स्मरणम् ॥ २३ ॥

**रा० टीका**—ननु जीवातिरिक्तः कूटस्थोऽस्ति चेत्किमिति न प्रतिभासत इत्याशंक्य जीवेन तिरोहितत्वादिति सदृष्टांतमाह—

**जलव्योम्ना घटाकाशो यथा सर्वस्तिरोहितः ॥**
**तथा जीवेन कूटस्थः सोऽन्योन्याध्यास उच्यते ॥ २४ ॥**

**जलेति** । नन्वेतत्तिरोधानं न क्वापि शास्त्रे प्रतिपादितमित्याशंक्य तस्यान्योन्याध्यासशब्देनाभिधानान्मैवमित्याह—**सोऽन्योन्याध्यास इति** । उच्यते भाष्यादिष्विति शेषः॥२४॥

**अ० टीका**—तत्र हेतुमन्योन्याध्यासं प्रतिबोधयति **जलेति** । निरुक्तजलाकाशमित्यर्थः ॥ २४ ॥

**अयं जीवो न कूटस्थं विविनक्ति कदाचन ॥**
**अनादिरविवेकोऽयं मूलाऽविद्येति गम्यताम् ॥ २५ ॥**

**रा० टीका**—नन्वयमेवाध्यासश्चेदस्य कारणरूपाऽविद्या वक्तव्येत्याशंक्य जीवकूटस्थयोः संसारदशायां भेदाप्रतीतिरेवाविद्येत्याह—**अयमिति** ॥ २५ ॥

**अ० टीका**—तत्र हेतुः—**अयमिति** । मूलाविद्येवायमनादिरविवेक इति गम्यतामित्यन्वयः । एतेन सांख्यादयः प्रत्याख्याता इति तत्त्वम् ॥ २५ ॥

**रा० टीका**—पूर्वोक्तस्य जीवस्याविद्याकल्पितत्वस्य स्पष्टीकरणायाविद्यां विभजते—

**विक्षेपावृत्तिरूपाभ्यां द्विधाऽविद्या व्यवस्थिता ॥**
**न भाति नास्ति कूटस्थ इत्यापादनमावृतिः ॥ २६ ॥**

**विक्षेपेति** । विक्षेपहेतुत्वेनाभ्यर्हितत्वादावृतिं प्रथमं लक्षयति—**न भातीति** । कूटस्थो न भाति न प्रकाशते नास्ति चेति व्यवहारहेतुरावरणमित्यर्थः ॥ २६ ॥

**अ० टीका**—नन्वन्योन्याध्यासस्तु सर्वत्राधिष्ठानीय आरोपे संसर्गस्तस्य न तत्र तादात्म्यमिति प्रसिद्ध एव स कथमविद्या स्यादित्यत्राऽऽह—**विक्षेपेति** । एवं चोक्ताध्यासस्तु विक्षेपात्मैव सेत्यर्थः । आवृत्तिमाह—**नेति** ॥ २६ ॥

**रा० टीका**—नन्वविद्यायाः तत्कृतावरणस्य च सद्भावे किं प्रमाणमित्याशंक्य लोकानुभव एवेत्याह—

**अज्ञानी विदुषा पृष्टः कूटस्थं न प्रबुध्यते ॥**
**न भाति नास्ति कूटस्थ इति बुद्ध्वा वदत्यपि ॥ २७ ॥**

अज्ञानीति । विदुषा कूटस्थं किं जानासीति पृष्टोऽज्ञानी तं न जानामीत्यज्ञानमनुभूय वक्त्ययमविद्यानुभवः । न केवलमज्ञानानुभवमेव वक्त्यपि तु नास्ति न भाति कूटस्थ इति कूटस्थाभावाभाने चानुभूय वदत्ययमावरणानुभवः । अत उभयत्रानुभवः प्रमाणमिति भावः ॥२७॥

**अ० टीका०**—ननु क्वेदमापादनं दृष्टमित्याशंक्य लोकानुभव एवेति समादधंस्तत्स्पष्टयति—**अज्ञानीति** । रे देवदत्त त्वं कूटस्थं वेत्सीति विदुषा **पृष्टो** ह्यज्ञानी नेत्युत्तरं ददानोऽसौ कूटस्थं न प्रबुध्यते नैव जानातीति योजना । अत एव कूटस्थो नास्ति न भातीति च तं स्वप्रकाशत्वेन सामान्यतो बुद्ध्वाऽपि तद्विषयकमसदादिभेदेन द्विविधमप्यावरणं वदतीत्यन्वयः ॥ २७ ॥

**रा० टीका**—ननु भवन्मत आत्मनः स्वप्रकाशत्वात्तस्मिन्नविद्या नोपपद्यते तेजस्तिमिरयोरिव विरुद्धस्वभावत्वेन तयोः संबंधानुपपत्तेरविद्याऽभावे च तत्कृतमावरणं दुर्निरूप्यं स्यात्तदभावे च तन्मूलकस्य विक्षेपस्यासंभवो विक्षेपाभावे च ज्ञाननिवर्त्यस्यानर्थस्याभावाज्ज्ञानवैयर्थ्यं ततस्तत्प्रतिपादकं शास्त्रप्रमाणं स्यादित्याशंक्यैतत्सर्वं पूर्वोक्तानुभवबाधितमित्याह—

**स्वप्रकाशे कुतोऽविद्या तां विना कथमावृतिः ॥**
**इत्यादितर्कजालानि स्वानुभूतिर्ग्रसत्यसौ ॥ २८ ॥**

**स्वप्रकाश इति** । न हि दृष्टेऽनुपपन्नं नामेति **न्यायादि**ति भावः ॥ २८ ॥

**अ० टीका**—नन्विदं स्वसिद्धांतविरुद्धमित्याक्षिपति—**स्वेति** । अनुभवविरोधान्नेदं चोद्यमुदेतीति समाधत्ते—**इत्यादीति** । असौ प्रागुदाहृतेत्यर्थः ॥ २८ ॥

**रा० टीका**—नन्वनुभवस्योक्ततर्कविरोधेनाभासत्वान्न तेन तत्त्वनिश्चय इत्याशंक्यानुभवप्रामाण्यानभ्युपगमे केवलतर्कस्यानिश्चायकस्य स्वेनैवाभ्युपगतत्वान्न तार्किकस्य तत्त्वनिश्चयः क्वापि स्यादित्याह—

**स्वानुभूतावविश्वासे तर्कस्याप्यनवस्थितेः ॥**
**कथं वा तार्किकंमन्यस्तत्त्वनिश्चयमाप्नुयात् ॥ २९ ॥**

**स्वानुभूताविति** ॥ २९ ॥

**अ० टीका**—नन्वनुभवस्य स्वप्नादिवद्भ्रमत्वसंभवान्न प्रमाणानुग्रहकतर्कबाधकतेत्याशंक्य "**तर्काप्रतिष्ठानात्**" इति सूत्रात्तत्रापि तर्कबाधितानुभवाबाधकता समानैवेति प्रतिबंद्या समाधत्ते—**स्वानुभूताविति** । तस्मात्तार्किकपक्षेऽपि तत्त्वानिश्चयस्तदवस्थ एवेति भावः ॥२९॥

**रा० टीका**—नन्वनुभवस्तत्त्वानिश्चायक एव तथाऽप्यनुभूयमानस्यार्थस्य संभावितत्वज्ञानाय तर्कोऽप्यभ्युपेतव्य इत्याशंकामनूद्य तर्ह्यनुभवानुसारेणैव तर्को वर्णनीयो न तद्विरोधेनेत्याह—

**बुद्ध्यारोहाय तर्कश्चेदपेक्षेत तथा सति ॥**
**स्वानुभूत्यनुसारेण तर्क्यतां मा कुतर्क्यताम् ॥ ३० ॥**

बुद्ध्यारोहायेति ॥ ३० ॥

**अ० टीका**—अथ प्रतिबंदीं मोचयति–**बुद्धीति** । सिद्धांती तदंगीकारेण तं समुपदिशति–**तथेति** ॥ ३० ॥

**रा० टीका**—कोऽसावनुभवो यदनुसारेण तर्को वर्णनीय इत्याकांक्षायां पूर्वोक्तमविद्यादिगोचरमनुभवं स्मारयति—

**स्वानुभूतिरविद्यायामावृतौ च प्रदर्शिता ॥**
**अतः कूटस्थचैतन्यमविरोधीति तर्क्यताम् ॥ ३१ ॥**

स्वानुभूतिरिति । फलितमाह–अत इति ॥ ३१ ॥

**अ० टीका**—एवं तर्हि काऽत्र स्वानुभूतिरित्यत्राह—**स्वेति** । फलितमाह—**अत इति** ॥ ३१ ॥

**रा० टीका**—तमेव तर्कमभिनीय दर्शयति—

**तच्चेद्विरोधि केनेयमावृतिर्ह्यनुभूयताम् ॥**
**विवेकस्तु विरोध्यस्यास्तत्त्वज्ञानिनि दृश्यताम् ॥ ३२ ॥**

**तच्चेदिति** । अविद्यावरणमात्रकचैतन्यस्यैव तद्विरोधित्वेऽविद्याप्रतीतिरेव न स्यादिति भावः । तर्ह्यविद्यायाः को विरोधीत्यत आह **विवेक इति** । विवेक उपनिषद्विचारजन्यं ज्ञानम् । विवेकस्याविद्याविरोधित्वं क्व दृष्टमित्यत आह **तत्त्वज्ञानिनीति** ॥ ३२ ॥

**अ० टीका**—कूटस्थचैतन्यस्याविद्याऽविरोधितायामन्यथानुपपत्तिमाह–**तच्चेदिति** । तर्हि किमेतद्विरोधीत्यत आह–**विवेकस्त्विति** ॥ ३२ ॥

**रा० टीका**—एवमविद्यावरणं दर्शयित्वा विक्षेपाख्याममाह—

**अविद्यावृतकूटस्थे देहद्वययुता चितिः ॥**
**शुक्तौ रूप्यवदध्यस्ता विक्षेपाख्याम एव हि ॥ ३३ ॥**

**अविद्येति** । पूर्वोक्ताविद्यावरणवति कूटस्थे प्रत्यगात्मन्यारोपितस्थूलसूक्ष्मशरीरसहितश्चिदाभासो विक्षेपाख्याम इत्यर्थः ॥ ३३ ॥

**अ० टीका**—एवमनादिरविवेकोऽयं मूलाविद्येत्यनेनोपक्रांताया मूलाविद्याया विक्षेपावृतिरूपाभ्यां द्विधा विद्या व्यवस्थितेत्यनेनोद्दिष्टतदवस्थाद्वैरूप्यमध्ये विक्षेपस्यावरणपूर्वकत्वात्प्रथमं तदुपपाद्येदानीं विक्षेपं निरूपयति -**अविद्येति** । "**कूटस्थब्रह्मणोर्भेदो नाममात्राहते नहि**" इति वक्ष्यमाणत्वादत्राविद्यातदावरणतत्कृतविक्षेपं चाधिष्ठानं कूटस्थपदेन **ब्रह्मैव बोध्यम्** । चितिर्बुद्धिप्रतिबिंबितश्चिदाभासः । ईति प्रसिद्धं शास्त्र इत्यर्थः ॥ ३३ ॥

**रा० टीका**—अस्य विक्षेपस्याध्यासत्वसिद्धये शुक्तिरजताध्यासमास्यं दर्शयति—

**इदमंशश्च सत्यत्वं शुक्तिगं रूप्य ईक्ष्यते ॥**
**स्वयंत्वं वस्तुता चैवं विक्षेपे वीक्ष्यतेऽन्यगम् ॥ ३४ ॥**

**इदमंशश्चेति** । शुक्तिकायां स्थितं पुरोदेशादिसंबंधित्वमबाध्यत्वं च यथाऽऽरोपिते र-

जतेऽवभासत एवं स्वयंत्वं वस्तुत्वं च कूटस्थनिष्ठमारोपिते चिदाभासेऽवभासत इत्यर्थः ॥३४॥

**अ० टीका**—ननु कथमस्याभासत्वमित्याशंक्य दृष्टांते तत्सामग्रीं विविच्य दार्ष्टांतिकेऽपि तां प्रकटयति– इदमंशश्चेति । अन्यगं कूटस्थनिष्ठम् ॥ ३४ ॥

**रा० टीका**—एवं सामान्यांशप्रतीतिमुभयत्र प्रदर्श्य विशेषांशप्रतीतिसाम्यं दर्शयति–

**नीलपृष्ठत्रिकोणत्वं यथा शुक्तौ तिरोहितम् ॥**
**असंगानंदताद्येवं कूटस्थेऽपि तिरोहितम् ॥ ३५ ॥**

नीलेति ॥ ३५ ॥

**अ० टी०**—तत्साम्यसामग्र्यंतरमप्याह—**नीलेति** द्वाभ्याम् । आदिना ब्रह्मत्वम् ॥३५॥

**रा० टीका**—साम्यान्तरं दर्शयति——

**आरोपितस्य दृष्टांते रूप्यं नाम यथा तथा ॥**
**कूटस्थाध्यस्तविक्षेपनामाहमिति निश्चयः ॥ ३६ ॥**

आरोपितस्येति । दृष्टांते शुक्तिस्थल आरोपितपदार्थस्य रूप्यनाम रूप्यमिति नाम यथा एवं कूटस्थे कल्पितस्य चिदाभासरूपविक्षेपस्य पूर्वोक्तस्याहमिति नामेत्यर्थः ॥ ३६ ॥

**अ० टीका**—**आरोपितस्येति** । उभयत्रापि नामपदं संज्ञापरमेव । निश्चयो निर्णय एवेत्यर्थः ॥ ३६ ॥

**रा० टीका**—ननु दृष्टांते पुरोवर्तिनि शुक्तिशकल इंद्रियसन्निकर्षे जाते सति रूप्यमिदमिति तदतिरिक्तरजताभिमान उपपद्यते नैवं दार्ष्टांतिक आत्मातिरिक्तवस्त्वभिमान इत्याशंक्यात्रापि स्वप्रकाशतया चिदात्मन्यवभासमाने तदतिरिक्तोऽहमित्यभिमान उपलभ्यतेऽतो न वैषम्यमित्यभिप्रायेणाऽऽह—

**इदमंशं स्वतः पश्यन् रूप्यमित्यभिमन्यते ॥**
**तथा स्वं च स्वतः पश्यन्नहमित्यभिमन्यते ॥ ३७ ॥**

इदमंशमिति ॥ ३७ ॥

**अ० टीका**—नन्वहंकारेतरकूटस्थसत्त्वे तस्य शुक्तिरूप्यसाम्यं स्यात्तत्रैव किं मानमित्यत आह—इदमंशमिति । स्वतः साक्षिणा । पश्यंश्चक्षुर्गृहीता लोकावच्छेदेनापरोक्षीकुर्वन्नित्यर्थः । स्वयमेतत्पदवाच्यं कूटस्थम् । स्वतः स्वप्रकाशत्वेनैव । पश्यन्वृत्तिमंतरैवानुभवन्निति यावत् ॥ ३७ ॥

**इदंत्वरूप्यते भिन्ने स्वत्वाहंते तथेष्यताम् ॥**
**सामान्यं च विशेषश्च ह्युभयत्रापि गम्यते ॥ ३८ ॥**

**रा० टीका**—ननु स्वयमहंशब्दयोरेकार्थत्वात्कथं दृष्टांतदार्ष्टांतिकयोः साम्यमित्याशंक्येदंरूप्यशब्दार्थयोः स्वयमहंशब्दार्थयोश्च सामान्यविशेषरूपत्वस्योभयत्र साम्यान्मैवमित्याह—**इदमिति** ॥ ३८ ॥

**अ० टीका**—अत एव—इदंत्वेति । तत्र हेतुः—**सामान्यं चेति** ॥ ३८ ॥

**देवदत्तः स्वयं गच्छेत्त्वं वीक्षस्व स्वयं तथा ॥**
**अहं स्वयं न शक्नोमीत्येवं लोके प्रयुज्यते ॥ ३९ ॥**

**रा० टीका**—स्वयंशब्दार्थस्य सामान्यरूपत्वं स्पष्टीकर्तुं लौकिकं प्रयोगं तावद्दर्शयति--**देवदत्त इति** ॥ ३९ ॥

**अ० टीका**—तदेवानुभावयति—**देवदत्त** इत्यादिद्वाभ्याम् ॥ ३९ ॥

**रा० टीका**—भवत्वेवं लोके प्रयोगः कथमेतावता स्वयंशब्दार्थस्य सामान्यरूपत्वमित्याशंक्येदंशब्दार्थवदित्याह--

**इदं रूप्यमिदं वस्त्रमिति यद्वदिदं तथा ॥**
**असौ त्वमहमित्येषु स्वयमित्यभिमन्यते ॥ ४० ॥**

**इदं रूप्यमिति** । यथा रूप्यवस्त्रादौ सर्वत्रेदंशब्दस्य प्रयुज्यमानत्वात्तदर्थस्य सामान्यरूपत्वं तथाऽसौ त्वमहमित्यादौ सर्वत्र स्वयंशब्दप्रयोगात्तदर्थस्यापि सामान्यरूपत्वमवगम्यत इत्यर्थः ॥ ४० ॥

**अ० टीका**—**इदं रूप्यमिति** । अभिमानः संसर्गः ॥ ४० ॥

**रा० टीका**—भवतु स्वयमहंशब्दयोर्लोके भेद एतावता कूटस्थात्मनि किमायातमिति पृच्छति—

**अहंत्वाद्भिद्यतां स्वत्वं कूटस्थे तेन किं तव ॥**
**स्वयंशब्दार्थ एवैष कूटस्थ इति मे भवेत् ॥ ४१ ॥**

अहंत्वादिति । सामान्यरूपः स्वयंशब्दार्थ एव कूटस्थ इतीदमायातमित्याह—**स्वयंशब्दार्थ इति** ॥ ४१ ॥

**अ० टीका**—एवं स्वत्वाहत्वयोर्भेदे साधिते तमंगीकृत्यापि शंकते—**अहंत्वादिति**। सिद्धांती समाधत्ते—**स्वयंशब्देति** ॥ ४१ ॥

**रा० टीका**—ननु स्वत्वरूपो धर्मोऽन्यत्वं निवारयति न कूटस्थत्वं बोधयतीति शंकते—

**अन्यत्ववारकं स्वत्वमिति चेदन्यवारणम् ॥**
**कूटस्थस्याऽऽत्मतां वक्तुरिष्टमेव हि तद्भवेत् ॥ ४२ ॥**

**अन्यत्ववारकमिति** । स्वयंशब्दार्थस्य कूटस्थस्यैवाऽऽत्मत्वात्स्वत्वेनान्यवारणमिष्टमेवेति परिहरति—**अन्यवारणं कूटस्थस्येति** ॥ ४२ ॥

**अ० टीका**—नन्वेवं स्वशब्दपर्यायस्य स्वयंशब्दस्यान्यवारणमेवार्थः स्यान्नतु कूटस्थ इति पुनराक्षिपति—**अन्यत्वेति** । इष्टापत्त्या प्रत्याऽऽह—**अन्यवारणमित्यादिना** । कूटस्थस्यैव सिद्धांते ह्यद्वैतब्रह्मत्वादित्याकूतम् ॥ ४२ ॥

**रा० टीका**—ननु स्वयमात्मशब्दयोर्भिन्नप्रवृत्तिनिमित्तयोर्गवाश्वादिशब्दयोरिवैकार्थत्वाभावात्कथं स्वयंशब्दार्थस्य कूटस्थस्याऽऽत्मत्वमित्याशंक्य हस्तकरादिशब्दवदेकार्थत्वोपपत्तेर्मैवमिति परिहरति—

**स्वयमात्मेति पर्यायौ तेन लोके तयोः सह ॥**
**प्रयोगो नास्त्यतः स्वत्वमात्मत्वं चान्यवारकम् ॥ ४३ ॥**

**स्वयमात्मेतीति** । पर्यायत्वे सहप्रयोगाभावं हेतुमाह—**तेन लोक इति** । फलितमाह—**अतः स्वत्वमिति** ॥ ४३ ॥

**अ० टीका**—ननु घटपटशब्दार्थवत्स्वयमात्मशब्दार्थयोरपि भेद इत्याशंक्य समाधत्ते—**स्वयमित्यादिना** । फलितमाह—**अत इत्यादिशेषेण** ॥ ४३ ॥

**घटः स्वयं न जानातीत्येवं स्वत्वं घटादिषु ॥**
**अचेतनेषु दृष्टं चेद्दृश्यतामात्मसत्त्वतः ॥ ४४ ॥**

**रा० टीका**—ननु घटादिष्वचेतनेष्वपि स्वयंशब्दस्य प्रयोगदर्शनात्स्वयंत्वात्मत्वयोरेकत्वं न घटत इति शंकते—**घट इति** । घटादिष्वपि स्फुरणरूपेणाऽऽत्मचैतन्यस्य सत्त्वात्तेष्वपि स्वयंशब्दप्रयोगो न विरुध्यत इत्याह—**दृश्यतामिति** ॥ ४४ ॥

**अ० टीका**—निरुक्तपर्यायत्वेऽतिप्रसंगं शंकते—**घटः स्वयमिति** । तदपीष्टापत्त्या निराकरोति—**दृश्यतामित्यादिशेषेण** ॥ ४४ ॥

**चेतनाचेतनभिदा कूटस्थात्मकृता न हि ॥**
**किंतु बुद्धिकृता भासकृतैवेत्यवगम्यताम् ॥ ४५ ॥**

**रा० टी०**—ननु घटादिष्वप्यात्मचैतन्यस्य सत्त्वे चेतनाचेतनविभागो निर्निमित्तकः स्यादित्याशंक्य चेतनाचेतनविभागस्य चिदाभाससत्त्वासत्त्वलक्षणकारणसद्भावान्मैवमिति परिहरति—**चेतनेति** ॥ ४५ ॥

**अ० टीका**—ननु घटादिष्वप्यात्मत्वे चेतनाचेतनभिदा किं मूलेत्याशंक्य बुद्धिप्रतिबिंबितचिदाभाससदसद्भावमूलैवेत्याह—**चेतनेति** ॥ ४५ ॥

**यथा चेतन आभासः कूटस्थे भ्रांतिकल्पितः ॥**
**अचेतनो घटादिश्च तथा तत्रैव कल्पितः ॥ ४६ ॥**

**रा० टीका**—ननु चेतनाचेतनविभागस्य चिदाभाससत्त्वासत्त्वप्रयुक्तत्वाभ्युपगमेऽचेतनेष्वात्मसत्त्वाभ्युपगमो निष्प्रयोजनः स्यादित्याशंक्य चेतनाचेतनविभागहेतुत्वेन कूटस्थस्यानभ्युपगम्यत्वेऽप्यचेतनकल्पनाधिष्ठानत्वेन कूटस्थोऽभ्युपगंतव्य इत्यभिप्रायेण घटादेस्तत्र कल्पितत्वं सदृष्टांतमाह—**यथा चेतन इति** ॥ ४६ ॥

**अ० टीका**—एवं तर्हि घटादिष्वात्मत्वे किं मूलं तदाह—**यथेति** । कूटस्थे ब्रह्मात्मवस्तुनीत्यर्थः । भ्रांतिरनाद्यविद्यैव ॥ ४६ ॥

**रा० टीका**—स्वत्वात्मत्वयोरेकत्वेऽतिप्रसंगं शंकते—

**तत्तेदंते अपि स्वत्वमिव त्वमहमादिषु ॥**
**सर्वत्रानुगते तेन तयोरप्यात्मतेति चेत् ॥ ४७ ॥**

**तत्तेदंते अपीति** । त्वमहमादिषु सर्वत्रानुगतस्य स्वत्वस्येव सर्वत्रानुगतयोस्तत्तेदंतयोरप्यात्मस्वरूपता किं न स्यादिति भावः ॥ ४७ ॥

**अ० टीका**—तत्राप्यतिप्रसंगं शंकते—**तत्तेदंते अपीति** । स्वत्वामिव स्वत्ववदित्यर्थः ॥ ४७ ॥

**रा० टीका**—तत्तेदंतयोरात्मत्वाधिकवृत्तित्वादात्मत्वं न संभवतीत्याह—

**ते आत्मत्वेऽप्यनुगते तत्तेदंते ततस्तयोः ॥**
**आत्मत्वं नैव संभाव्यं सम्यक्त्वादेर्यथा तथा ॥ ४८ ॥**

**ते आत्मत्वेऽपीति** । तत्तेदंते स्वत्वमिव यद्यपि त्वमहमादिष्वनुगते तथाऽपि तेष्वनुवर्तमाने आत्मत्वेऽप्यनुगते तदात्मत्वमिदमात्मत्वमित्यादिव्यवहारसंभवादतस्तयोरात्मत्वाधिकवृत्तित्वादात्मस्वरूपता न संभाव्यते तत्र दृष्टांतः--**सम्यक्त्वादेरिति** । आत्मत्वं सम्यगात्मत्वमसम्यगितिव्यवहारवशादात्मत्वेऽप्यनुवर्तमानयोः सम्यक्त्वासम्यक्त्वयोरिवेत्यर्थः ॥४८॥

**अ० टीका**—पूर्ववादिसंमतं तदात्मत्वं सिद्धांतिसंमतमिदमात्मत्वमित्यादिव्यवहारात्ते तत्तेदंते आत्मत्वेऽप्यनुगते भवतस्तेन तयोरात्मसम्यक्त्वादिधर्मवन्नैव संभाव्यमिति समाधत्ते—**ते आत्मत्वेऽपीति** ॥ ४८ ॥

**रा० टीका**—एवं प्रासंगिकं परिसमाप्य फलितदर्शनाय लोकव्यवहारसिद्धमर्थमनुवदति—

**तत्तेदंते स्वतान्यत्वे त्वंताहंते परस्परम् ॥**
**प्रतिद्वंद्विनया लोके प्रसिद्धे नास्ति संशयः ॥ ४९ ॥**

**तत्तेदंते इति** । तत्ताप्रतियोगित्वमिदंतायास्तदिदमिति स्वत्वप्रतियोगित्वमन्यत्वस्य स्वयमन्य इति त्वंताप्रतियोगित्वमहंतायास्त्वमहमिति लोके प्रतिद्वंद्वित्वेन प्रयोगदर्शनात्प्रसिद्धमिति भावः ॥ ४९ ॥

**अ० टीका**—भवत्वेवमथापि किं प्रकृत इत्याशंक्य स्वयंत्वं ह्यन्यत्वस्यैव प्रतिद्वंद्वि तच्च कूटस्थ एवेति प्रदर्शयितुं सामान्यतः प्रतिद्वंद्विधर्मयुग्मान्युदाहरति---**तत्तेदंते इति** ॥ ४९ ॥

**रा० टीका**—भवत्वेवं लोके प्रकृते किमायातमित्यत आह—

**अन्यतायाः प्रतिद्वंद्वी स्वयं कूटस्थ इष्यताम् ॥**
**त्वंतायाः प्रतियोग्येषोऽहमित्यात्मनि कल्पितः ॥ ५० ॥**

**अन्यताया इति** । अन्यत्वप्रतियोगी स्वयंशब्दार्थस्त्वंताप्रतियोग्यहंशब्दार्थश्चिदाभासः कूटस्थे कल्पित इत्यर्थः ॥ ५० ॥

**अ० टीका**—फलितमाह—**अन्यताया इति** । ततोऽपि किं तत्राऽऽह---**त्वंताया इति** ॥ ५० ॥

**रा० टीका**—ननूक्तप्रकारेण जीवकूटस्थयोर्भेदे सत्यपि सर्वे इत्थं किमिति न जानंतीत्याशंक्याऽऽह—

**अहंतास्वत्वयोर्भेदे रूप्यतेदंतयोरिव ॥**
**स्पष्टेऽपि मोहमापन्ना एकत्वं प्रतिपेदिरे ॥ ५१ ॥**

**अहंतेति** । बुद्धिसाक्षिणः कूटस्थस्य बुद्ध्या प्रत्यक्षीकर्तुमशक्यत्वादहमिति प्रतिभाससमानयोर्जीवकूटस्थयोर्भ्रांत्यैकत्वं प्रतिपन्ना इत्यर्थः ॥ ५१ ॥

**अ० टीका**—एवं चाहंत्वस्वत्वयोर्भेदसिद्धौ सत्यामपि मोहात्तयोः परस्पराध्यासः सिध्यतीत्याह---**अहंत्वेति** ॥ ५१ ॥

**रा० टीका**—नन्वस्य जीवकूटस्थयोरेकत्वभ्रमस्य किं कारणमित्यपेक्षायामाह—

**तादात्म्याध्यास एवात्र पूर्वोक्ताविद्यया कृतः ॥**
**अविद्यायां निवृत्तायां तत्कार्यं विनिवर्तते ॥ ५२ ॥**

**तादात्म्येति** । अत्रास्मि 'ग्रंथे' अनादिरविवेकोऽयमित्यत्रोक्तयाऽविद्ययेत्यर्थः । यतोऽविद्याकार्यत्वमस्यातोऽविद्यानिवर्तकज्ञानेनैव तन्निवृत्तिरित्याह—**अविद्यायामिति** ॥ ५२ ॥

**अ० टीका**—नन्वस्त्वयमहंकाराध्यासः कूटस्थात्मनि तथाऽपि किमसौ तादात्म्यरूपः संसर्गरूपो वेति विषयं प्रशमयत्ति—**तादात्म्येति** । तत्र हेतुः—**पूर्वेति** । ततः किं तत्राऽऽह—**अविद्यायामिति** । कार्यमेकत्वमेव प्राथमिकम् । विनिवर्तत उपादानाभावाद्विनश्यतीत्यर्थः ॥ ५२ ॥

**रा० टीका**—नन्वध्यासस्याविद्याकार्यत्वात्तन्निवृत्त्या निवृत्तिरित्येतदनुपपन्नं ब्रह्मात्मैकत्वविद्यायामुत्पन्नायामप्यविद्याकार्यस्य देहादेरुपलभ्यमानत्वादित्यत आह—

**अविद्यावृत्तितादात्म्ये विद्ययैव विनश्यतः ॥**
**विक्षेपस्य स्वरूपं तु प्रारब्धक्षयमीक्षते ॥ ५३ ॥**

**अविद्यावृत्तीति** । अविद्यैककारणयोरावृत्तितादात्म्ययोर्विद्ययैव विनिवृत्तिः । कर्मसहिताविद्याजन्यस्य तु विक्षेपस्वरूपस्य कर्मावसानपर्यंतमवस्थानमित्याविरोध इति भावः ॥५३॥

**अ० टीका**—नन्वेवं चेज्जीवन्मुक्तिर्न स्यादित्यत आह—**अविद्येति** । अविद्यामात्रजन्यत्वादित्यर्थः । देहेंद्रियविषयादिविक्षेपस्तु प्रारब्धकर्मजन्यत्वात्तन्नाश एव नश्यतीत्याह—**विक्षेपस्येति** ॥ ५३ ॥

**उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीक्षते ॥**
**इत्याहुस्तार्किकास्तद्वदस्माकं किं न संभवेत् ॥ ५४ ॥**

**रा० टीका**—ननु प्रारब्धकर्मणो निमित्तमात्रत्वात्तत्सद्भावमात्रेणोपादाने विनष्टेऽपि कथं कार्यानुवृत्तिरित्याशंक्य शास्त्रांतरसिद्धदृष्टांतेन तदनुवृत्तिं संभावयति—**उपादान इति** ॥ ५४ ॥

**अ० टीका**—ननु प्रारब्धस्यापि बीजांकुरवदनादिकामसंस्कारद्वारा ह्यविद्यापादानैकत्वात्तन्नाशे कथमवस्थानमित्यत आह—**उपादान इति** । नष्टः पट इति प्रतीतेरित्यार्थिकम् ॥ ५४ ॥

**रा० टीका**—ननु **तार्किकैः** कार्यस्य क्षणमात्रमवस्थानमंगीकृतं न चिरकालमित्याशंक्याऽऽह—

**तंतूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः ॥**
**भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यताम् ॥ ५५ ॥**

**तंतूनामिति** । संसारस्यानादिकालमारभ्यानुवृत्तत्वात्तत्संस्कारवशेन कुलालचक्रभ्रमवच्चिरकालानुवृत्तिर्न विरुध्यत इति भावः ॥ ५५ ॥

**अ० टीका**—ननु तत्कल्पितक्षणेन सह प्रारब्धभोगपर्याप्तकालस्य कथं तौल्यमित्यत्राऽऽह—**तंतूनामिति** । पटोपादानसूत्राणामित्यर्थः । **दिनेति** । उत्पत्तिमारभ्य नाशावधिकतिचिद्दिनमात्रप्रख्यातानाम् ॥ ५५ ॥

**रा० टीका**—ननु तार्किकैर्यथा युक्तमभिहितं तद्वद्भवताऽपीत्याशंक्य स्वोक्तौ ततो वैषम्यं दर्शयति—

**विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते ॥**
**श्रुतियुक्त्यनुभूतिभ्यो वदतां किं नु दुःशकम् ॥ ५६ ॥**

**विनेति** । क्षोदक्षमं विचारसहं मानं विना प्रमाणमंतरेणेत्यर्थः "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" [छांदो० ६-१४-२] इति श्रुतिः । चक्रभ्रमादिदृष्टांतो युक्तिः । अनुभूतिर्विद्वदनुभवः । एतेभ्यः प्रमाणेभ्यः किं वक्तुमशक्यमित्यभिप्रायः ॥ ५६ ॥

**अ० टीका**—वस्तुतस्त्वारंभवादिनां तार्किकाणामेवोपादानध्वंसोत्तरं क्षणमात्रं कार्यावस्थित्यनौचित्यमेव तत्र दृढतरप्रमाणाभावात् । विवर्तवादिनामद्वैतिनामस्माकं तु **'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये'** इति श्रुतेर्मृगजले जलबुद्ध्या प्राशनाद्यर्थं समुपागतस्य तदधिष्ठानीभूतमध्याह्नकालिकसौरालोकावच्छिन्नोषरधरणीसाक्षात्कारेण बाधेऽपि यावदुक्तालोकादिसंयोगं तदग्रदेशावच्छेदेन तत्प्रतीत्यादियुक्तेः ।

" जीवन्मुक्तिस्तावदस्ति प्रतीतेर्द्वैतच्छाया तत्र चास्ति प्रतीतेः ।
द्वैतच्छायारक्षणायास्ति लेशस्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् "

इति **संक्षेपशारीर**प्रकटितस्वानुभूतेश्च वदतामुपादानध्वंसोत्तरमपि किंचित्कालं कार्यावस्थितौ न किमपि बाधकमित्याह— **विनेति** ॥ ५६ ॥

**रा० टीका**—प्रकृतमनुसरति—

**आस्तां दुस्तार्किकैः साकं विवादः प्रकृतं ब्रुवे ॥**
**स्वाहमोः सिद्धमेकत्वं कूटस्थपरिणामिनोः ॥ ५७ ॥**

**आस्तामिति** । स्वयमहंशब्दार्थयोः कूटस्थपरिणामिनोरेकत्वं भ्रांत्या सिद्धम् ॥ ५७ ॥

**अ० टीका**—अतस्तानुपेक्ष्य प्रकृतमनुसराम इत्याह—**आस्तामिति** । तत्कथयति—**स्वेति** । अध्यासादिति शेषः । तत्र हेतुः—**कूटस्थेति** ॥ ५७ ॥

**भ्राम्यंते पंडितंमन्याः सर्वे लौकिकतैर्थिकाः ॥**
**अनादृत्य श्रुतिं मौर्ख्यात्केवलां युक्तिमाश्रिताः ॥ ५८ ॥**

**रा० टीका**—ननु कूटस्थजीवयोरेकत्वं भ्रांतिसिद्धं चेदिदं भ्रांतीमति केऽपि कुतो न जानंतीत्याशंक्य श्रुतितात्पर्यपर्यालोचनशून्यत्वादित्याह—**भ्राम्यंत इति** ॥ ५८ ॥

**अ० टीका**—ननु कुतस्तार्किकाणामुपेक्षेत्याशंक्य कैमुतिकन्यायेन समाधत्ते— **भ्राम्यंत इति** ॥ ५८ ॥

**पूर्वापरपरामर्शविकलास्तत्र केचन ॥**
**वाक्याभासान्स्वस्वपक्षे योजयंत्यप्यलज्जया ॥ ५९ ॥**

**रा० टीका**—ननु श्रुत्यर्थप्रवक्तारोऽपि केचिदित्थं कुतो न जानंतीत्याशंक्य तेषां साकल्येन श्रुत्यर्थपर्यालोचनाभावादित्याह—**पूर्वापरेति** ॥ ५९ ॥

**अ० टीका**—ननु तैर्थिकाणामपि श्रुत्यनादरे को हेतुरित्यत्राऽऽह—**पूर्वापरेति**॥५९॥

**रा० टीका**—तत्र तावत्प्रत्यक्षैकप्रमाणाभ्युपगमेनातिस्थूलत्वाल्लोकायतादिपक्षं प्रथमतोऽनुभाषते—

**कूटस्थादिशरीरांतसंघातस्याऽऽत्मतां जगुः ॥**
**लोकायताः पामराश्च प्रत्यक्षाभासमाश्रिताः ॥ ६० ॥**

**कूटस्थादीति** । प्रत्यक्षसिद्धत्वेन देहादेरात्मत्वं पारमार्थिकं स्यादित्याशंक्योक्तं प्रत्यक्षाभासमिति ॥ ६० ॥

**अ० टीका**—तानेव सर्वानपि भेदवादिनः खंडयितुं प्रथममतिस्थूलं लोकायतमतमनुवदति—**कूटस्थादीति** । पामराः सर्वे लौकिका अपीत्यर्थः । आभासपदात्तत्रापरीक्षितत्वं द्योत्यते ॥ ६० ॥

**रा० टीका**—ते प्रत्यक्षैकप्रमाणवादिनोऽपि परव्यामोहनाय स्वमतं श्रुतिसिद्धमिति दर्शयितुं वाक्यमप्युदाहरंतीत्याह—

**श्रौतीकर्तुं स्वपक्षं ते कोशमन्नमयं यथा ॥**
**विरोचनस्य सिद्धांतं प्रमाणं प्रतिजज्ञिरे ॥ ६१ ॥**

**श्रौतीकर्तुमिति** । कोशमन्नमयमितिशब्देनान्नमयकोशप्रतिपादकं "स वा एष पुरुषोऽन्नरसमयः" [ तैत्ति० २–१–१ ] इत्यादिवाक्यं लक्ष्यते विरोचनस्य सिद्धांतमिति । तत्सिद्धांतप्रतिपादकमात्मैव देहमय इत्यादिवाक्यं लक्ष्यते । एतद्वाक्यद्वयं प्रमाणत्वेन प्रतिजानंत एव न तूपपादयितुं क्षमाः प्रकरणविरोधादिति भावः ॥ ६१ ॥

**अ० टीका**—प्रत्यक्षैकप्रमाणवादिनस्ते वंचका अपीत्याह—**श्रौतीकर्तुमिति** ॥ ६१ ॥

**रा० टीका**—अस्मिन्मते दोषदर्शनपुरःसरं मतांतरमुत्थापयति—

**जीवात्मनिर्गमे देहमरणस्यात्र दर्शनात् ॥**
**देहातिरिक्तएवाऽऽत्मेत्याहुर्लोकायताः परे ॥ ६२ ॥**

जीवात्मेति ॥ ६२ ॥

**अ० टीका**—अथ प्रोक्तमतं दूषयन्नेव लोकायतांतरमतमाह—**जीवेति** ॥ ६२ ॥

**रा० टीका**—कीदृशो देहातिरिक्त आत्मा केन वा प्रमाणेनावगम्यत इत्याशंकायामाह—

**प्रत्यक्षत्वेनाभिमताऽहंधीर्देहातिरेकिणम् ॥**
**गमयेदिंद्रियात्मानं वच्मीत्यादिप्रयोगतः ॥ ६३ ॥**

**प्रत्यक्षत्वेनेति** । अहं वच्म्यहं पश्यामीत्यादिप्रयोगदर्शनाद्देहातिरिक्ताहंबुद्धिगम्यानींद्रियाण्यात्मेत्यर्थः ॥ ६३ ॥

**अ० टीका**—ननु भवत्वेवं मयाऽप्यनुमानं तु तत्र नास्माकं मते प्रमाणमेवातः कथं तत्सिद्धिः किंवा तद्रूपमित्याशंक्य तव प्रत्यक्षत्वेन संमताऽहमिति धीरेवाहदेहे इत्यनुल्लेखाद्देहातिरिक्तं तं विषयीकरोत्यथाहं वच्मीत्यादि प्रयोगादिंद्रियरूप एव स इति समाधत्ते—**प्रत्यक्षत्वेनेति** ॥ ६३ ॥

**रा० टीका**—नन्विंद्रियाणामचेतनानां कथमात्मत्वमित्याशंक्य श्रुतिष्विंद्रियसंवादश्रवणादचेतनत्वमसिद्धमित्याह—

**वागादीनामिंद्रियाणां कलहः श्रुतिषु श्रुतः ॥**
**तेन चैतन्यमेतेषामात्मत्वं तत एव हि ॥ ६४ ॥**

वागादीनामिति । चेतनत्वस्यैवाऽऽत्मलक्षणत्वाच्चेतनानामिंद्रियाणामात्मत्वमुचितमित्याह—आत्मत्वमिति ॥ ६४ ॥

**अ० टीका**—नन्विंद्रियाणां जडत्वात्कथमात्मत्वमत आह—**वागादीनामिति** । तथा च **काण्वै**राम्नायते—" ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत् " इत्यादि ॥ ६४ ॥

**हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे ॥**
**चक्षुराद्यक्षलोपेऽपि प्राणसत्त्वे तु जीवति ॥ ६५ ॥**

**रा० टीका**—मतांतरमुत्थापयितुं-**हैरण्यगर्भा इति** ॥ ६५ ॥

**अ० टीका**—अथ प्राणात्मवादिमतमाह-**हैरण्यगर्भा इति** युग्मेन ॥ ६५ ॥

**रा० टीका**—प्राणस्याऽऽत्मत्वे श्रौतलिंगानीति दर्शयति

**प्राणो जागर्ति सुप्तेऽपि प्राणश्रैष्ठ्यादिकं श्रुतम् ॥**
**कोशः प्राणमयः सम्यग्विस्तरेण प्रपंचितः ॥ ६६ ॥**

प्राण इति । " प्राणाग्नय एवैतस्मिन्पुरे जाग्रति " [ प्रश्नो० ४ ३ ] इत्यादिना प्राणजागरणं श्रूयते " तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत्तदेतदुक्थम् " इति प्राणस्य श्रैष्ठ्यादिकं श्रूयते " अन्योऽन्तर आत्मा प्राणमयः " इत्यादिना प्राणमयः कोशः प्रपंचितः । आदिशब्देन प्राणसंवादप्रवेशादिकं ग्राह्यम् ॥ ६६ ॥

**अ० टीका**—**प्राण इति** । सुप्तेऽपि देवदत्त इत्यार्थिकम् । तथा च सुषुप्तिं प्रकृत्य श्रुतिः " **प्राणाग्नय एवैतस्मिन्पुरे जाग्रति** " इति । "**प्राणस्येदं वशे सर्वम्**" इत्यपि **प्रश्नोपनिषद्येव** ॥ ६६ ॥

**रा० टीका**—प्राणादप्यांतरस्य मनस आत्मत्ववादिनो मतं दर्शयति-

**मन आत्मेति मन्यंत उपासनपरा जनाः ॥**
**प्राणस्याभोक्तृता स्पष्टा भोक्तृत्वं मनसस्ततः ॥ ६७ ॥**

मन आत्मेतीति । प्राणस्यानात्मत्वे युक्तिमाह—**प्राणस्येति** ॥ ६७ ॥

**अ० टीका**—इदानीमुपासकमतमाह—**मन इति** । प्राणात्मवादं दूषयति—**प्राणस्येति** । सुखाद्यनाश्रयत्वादिति शेषः ॥ ६७ ॥

**रा० टीका**—मनस आत्मत्वे युक्तिप्रतिपादिकां श्रुतिमाह—

**मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥**
**श्रुतो मनोमयः कोशस्तेनात्मेतीरितं मनः ॥ ६८ ॥**

**मन एवेति** । " तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः " इति श्रुत्यंतरं दर्शयति—**श्रुत इति** । फलितमाह—**तेनेति** ॥ ६८ ॥

**अ० टीका**—तत्र श्रुतिमपि स्वमते प्रमाणयति—**मन एवेति** ॥ ६८ ॥

**रा० टीका**—मनसोऽप्यांतरस्य विज्ञानस्याऽऽत्मत्ववादिनो बौद्धस्य मतं दर्शयति—

**विज्ञानमात्मेति परे आहुः क्षणिकवादिनः ॥**
**यतो विज्ञानमूलत्वं मनसो गम्यते स्फुटम् ॥ ६९ ॥**

**विज्ञानमिति** । विज्ञानस्यांऽऽतरत्वे युक्तिमाह — **यत इति** ॥ ६९ ॥

**अ० टीका**—अथ बौद्धमतमुपपादयति —**विज्ञानमित्यादिपंचभिः** । तत्र हेतुः—**यत इति** । आंतरत्वाद्बुद्धेरिति शेषः ॥ ६९ ॥

**रा० टीका**—विज्ञानमनःशब्दवाच्यस्यांतःकरणस्यैकत्वात्कथं मनोविज्ञानयोः कार्यकारणभाव इत्याशंक्य तमुपपादयितुं तयोर्भेदं तावद्दर्शयति—

**अहंवृत्तिरिदंवृत्तिरित्यंतःकरणं द्विधा ॥**
**विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत् ॥ ७० ॥**

**अहंवृत्तिरिति** ॥ ७० ॥

**अ० टीका**—आंतरत्वमेव मनोपेक्षया बुद्धेरुपपादयितुं तयोः स्वरूपं संक्षिपति—**अहंवृत्तिरिति** ॥ ७० ॥

**रा० टीका**—तयोः कार्यकारणभावमाह—

**अहंप्रत्ययबीजत्वमिदंवृत्तेरिति स्फुटम् ॥**
**अविदित्वा स्वमात्मानं बाह्यं वेत्ति न तु क्वचित् ॥ ७१ ॥**

**अहंप्रत्ययबीजत्वमिति** । तदेवोपपादयति—**अविदित्वेति** । अहंवृत्त्युदयाभाव इदंवृत्त्यनुदयादनयोः कार्यकारणभाव इत्यर्थः ॥ ७१ ॥

**अ० टीका**—ततः किं तदाह -**अहंप्रत्ययेति** । तत्र हेतुः—**अविदित्वेति** ॥७१॥

**रा० टीका**—तस्य विज्ञानस्य क्षणिकत्वेऽनुभवं प्रमाणयति -

**क्षणे क्षणे जन्मनाशावहंवृत्तेर्मितौ यतः ॥**
**विज्ञानं क्षणिकं तेन स्वप्रकाशं स्वतो मितेः ॥ ७२ ॥**

**क्षण इति** । क्षणिकत्वमुपपाद्य स्वप्रकाशत्वमुपपादयति—**स्वप्रकाशमिति** । स्वेनैव प्रमितत्वादित्यर्थः ॥ ७२ ॥

**अ० टीका**—तस्य क्षणिकत्वमाह—**क्षणे क्षण इति** । तस्य स्वप्रकाशत्वमप्याह—**स्वेति** चरमचरणेन ॥ ७२ ॥

**रा० टीका**—विज्ञानस्याऽऽत्मत्व आगमः प्रमाणमित्याह—

**विज्ञानमयकोशोऽयं जीव इत्यागमा जगुः ॥**
**सर्वसंसार एतस्य जन्मनाशसुखादिकः ॥ ७३ ॥**

**विज्ञानमयेति** । " तस्माद्वा एतस्मान्मनोमयादन्योंऽतर आत्मा विज्ञानमयः " विज्ञानं यज्ञं तनुते " इत्यादिवाक्यं विज्ञानस्याऽऽत्मत्वप्रतिपादकमिति भावः ॥ ७३ ॥

**अ० टीका**—तत्र श्रुतिमपि तैत्तिरीयाणां प्रमाणयति—**विज्ञानमयेति** ॥ ७३ ॥

**विज्ञानं क्षणिकं नाऽऽत्मा विद्युदभ्रनिमेषवत् ॥**
**अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगुः ॥ ७४ ॥**

**रा० टीका**—बौद्धावांतरभेदस्य शून्यवादिनो मतं दर्शयति—**विज्ञानमिति** ॥७४॥

**अ० टीका**—अथ विज्ञानवादं खंडयन्योगाचारमतमाह—**विज्ञानमित्यादिद्वा-**भ्याम् ॥ ७४ ॥

**रा० टीका**—तत्र श्रुतिमाह—

**असदेवेदमित्यादाविदमेव श्रुतं ततः ॥**
**ज्ञानज्ञेयात्मकं सर्वं जगद्भ्रांतिप्रकल्पितम् ॥ ७५ ॥**

**असदेवेदमितीति** । शून्यस्यैव तद्रूपत्वे प्रतीयमानस्य जगतः का गतिरित्यत आह—**ज्ञानेति** ॥ ७५ ॥

**अ० टीका**—**असदेवेति** । " तद्धैक आहुरसदेवेदमग्र आसीत् " इत्यादि **छांदोग्यश्रुता**वित्यार्थिकम् ॥ ७५ ॥

**रा० टीका**—तदेतन्मतं दूषयति—

**निरधिष्ठानविभ्रांतेरभावादात्मनोऽस्तिता ॥**
**शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते ॥ ७६ ॥**

**निरधिष्ठानेति** । निःस्वरूपस्य शून्यस्याधिष्ठानत्वायोगान्निरधिष्ठानस्य भ्रमस्यानुपपत्तेर्जगत्कल्पनाधिष्ठानस्याऽऽत्मनः सत्ताऽभ्युपगंतव्या । किंच शून्यवादिनोऽपि शून्यसाक्षित्वेनावश्यमात्माऽभ्युपगंतव्यः । अन्यथा तस्यानभ्युपगमेऽस्य शून्यस्योक्तिः शून्यमित्यभिधानं ते **बौद्धस्य** तव मते न सिध्येदिति भावः ॥ ७६ ॥

**अ० टीका**—एतन्मतं खंडयति **निरधिष्ठानेति** । सकलदेशकालावच्छिन्नसमस्तात्यंताभावप्रतियोगिनः शून्यशब्दितासतः शशविषाणादेरधिष्ठानत्वासंभवात्सद्रूपस्यैव सर्वभ्रमाधिष्ठानत्वेत्याकूतम् । तत्र हेतुं वदंस्तस्याधिष्ठानीभूतसद्रूपस्याऽऽत्मनोऽभिद्रूपतामप्याह **शून्यस्यापीति** । इदमात्मनोऽस्तित्वेत्यत्रान्वेति । तत्रान्यथानुपपत्तिं प्रमाणयति **अन्यथेति** । ते माध्यमिकस्यास्य शून्यस्य विषयिण्युक्तिस्तद्विषयकानुभवस्तेन शून्यमस्तीत्यादिशब्दप्रयुक्तिरेव न भवेदिति संबंधः ॥ ७६ ॥

**रा० टीका**—कस्तर्ह्यात्मेत्यत आह—

**अन्यो विज्ञानमयत आनंदमय आंतरः ॥**
**अस्तीत्येवोपलब्धव्य इति वैदिकदर्शनम् ॥ ७७ ॥**

**अन्य इति** । " तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनंदमयः " " अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन " इति च श्रुतिसद्भावादानंदमय आत्माऽभ्युपगंतव्य इति वैदिकदर्शनं वैदिकसिद्धांतः ॥ ७७ ॥

**अ० टीका**—एवं चेत्कस्तर्हि तवाऽऽत्मेत्यत्राह—**अन्य इति** । " **तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनंदमयः** " इति अस्तीत्येवोपलब्धव्यस्तत्त्वभावेनेति च श्रुतिरूपं तत्र वैदिकदर्शनमस्तीत्यन्वयः ॥ ७७ ॥

**अणुर्महान्मध्यमो वेत्येवं तत्रापि वादिनः ॥**
**बहुधा विवदंते हि श्रुतियुक्तिसमाश्रयात् ॥ ७८ ॥**

**रा० टीका**—एवमात्मस्वरूपे विप्रतिपत्तिं प्रदर्श्य तत्परिमाणविशेषेऽपि वादिविप्रतिपत्तिं दर्शयति—**अणुरिति** ॥ ७८ ॥

**अ० टीका**—एवं तद्रूपं निर्णीय तत्परिमाणे विवादमाह—**अणुरिति** ॥ ७८ ॥

**रा० टीका**—अत्राणुत्ववादिनस्तावद्दर्शयति—

**अणुं वदंत्यांतरालाः सूक्ष्मनाडीप्रचारतः ॥**
**रोम्णः सहस्रभागेन तुल्यासु प्रचरत्ययम् ॥ ७९ ॥**

**अणुमिति** । अणुत्वाभिधाने हेतुमाह—**सूक्ष्मेति** । तदुपपादयति—**रोम्ण इति** । नाडीष्विति शेषः । सूक्ष्मासु नाडीषु संचारोऽणुत्वमंतरेण न घटत इत्यभिप्रायः ॥ ७९ ॥

**अ० टीका**—एवं प्रथमोद्दिष्टत्वादणुवादिनस्तावदाह—**अणुमिति** । आंतराला अंतः शरीरमध्ये भवतीत्यांतरः सूक्ष्मतमनाडीप्रचारस्तमेवाणुवादहेतुत्वेन लांति स्वीकुर्वंतीति तथा **रामानुजा माध्वाश्चे**त्यर्थः । तदुक्तं **मूलकारैरेव सर्वदर्शनसंग्रहे** माध्वमतारंभे—तदेतद्रामानुजमतं जीवाणुत्वदासत्ववेदापौरुषेयत्वसिद्धार्थबोधकत्वस्वतःप्रमाणत्वप्रमाणत्रित्वपांचरात्रोपजीव्यत्वप्रपंचभेदसत्यत्वादिसाम्येऽपि परस्परविरुद्धभेदादिपक्ष[1]त्रयकक्षीकारेण क्षपणकपक्षनिक्षिप्तमित्युपेक्षमाणः स आत्मा तत्त्वमसीत्यादेर्वेदांतवाक्यजातस्य भंग्यंतरेणार्थांतरपरत्वमुपपाद्य ब्रह्ममीमांसाविवरणव्याजेना**ऽऽनंदतीर्थः** प्रस्थानांतरमास्थिषतेति ॥ ७९ ॥

**रा० टी०**—अणुत्वे किं प्रमाणमित्यत आह—

**अणोरणीयानेषोऽणुः सूक्ष्मात्सूक्ष्मतरं त्विति ॥**
**अणुत्वमाहुः श्रुतयः शतशोऽथ सहस्रशः ॥ ८० ॥**

**अणोरिति** । " अणोरणीयान्महतो महीयान् " " एषोऽणुरात्मा चेतसा वेदितव्यः " " सूक्ष्मात्सूक्ष्मतरं नित्यम् " इत्यादिश्रुतय इत्यर्थः ॥ ८० ॥

**अ० टीका**—तत्र श्रुतीरपि प्रमाणयति—**अणोरित्यादिद्वाभ्याम्** ॥ ८० ॥

**वालाग्रशतभागस्य शतधा कल्पितस्य च ॥**
**भागो जीवः स विज्ञेय इति चाऽऽहापरा श्रुतिः ॥ ८१ ॥**

**रा० टी०**—श्रुत्यंतरमुदाहरति—**वालाग्रेति** ॥ ८१ ॥

**अ० टीका**—**वालेति** । कल्पितस्य तर्कितस्येत्यर्थः ॥ ८१ ॥

**रा० टी०**—मध्यमपरिमाणवादिनो मतं दर्शयति—

**दिगंबरा मध्यमत्वमाहुरापादमस्तकम् ॥**
**चैतन्यव्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि ॥ ८२ ॥**

**दिगंबरा इति** । तत्रोपपत्तिमाह—**आपादेति** । " स एष इह प्रविष्ट आनखाग्रेभ्यः " इति श्रुतिरप्यत्र प्रमाणमित्याह—**आनखाग्रेति** ॥ ८२ ॥

---

१ भेदः, अभेदः, भेदाभेदश्चेति पक्षत्रयम् ।

**अ० टीका**—अथोद्देशेष्वन्यमप्यार्हतमतं खंडनीयत्वसाम्यादेवाणुवादोत्तरमाह—**दिगंबरा** इत्यादित्रिभिः। **आनखाग्रेति** । स एष इह प्रविष्ट **आनखाग्रेभ्य** इति ॥ ८२ ॥

**रा०टी०**—ननु मध्यमपरिमाणत्वे श्रुतिसिद्धो नाडीप्रचारो न घटत इत्याशंक्याऽऽह -

**सूक्ष्मनाडीप्रचारस्तु सूक्ष्मैरवयवैर्भवेत् ॥**
**स्थूलदेहस्य हस्ताभ्यां कंचुकप्रतिमोकवत् ॥ ८३ ॥**

**सूक्ष्मनाडीति** । यथा देहावयवयोर्हस्तयोः कंचुकप्रवेशेन देहस्य कंचुकप्रवेशस्तद्वदात्मावयवानां सूक्ष्माणां नाडीषु प्रचारेणाऽऽत्मनोऽपि प्रचार उपचर्यत इत्यर्थः ॥ ८३ ॥

**अ० टीका**—**सूक्ष्मेति** । **कंचुकेति** । "कंचुको वारबाणोऽस्त्री" इत्यमरात्कवचपरिधानवदित्यर्थः ॥ ८३ ॥

**रा० टीका**—नन्वात्मनो नियतमध्यमपरिमाणत्वे कर्मवशान्न्यूनाधिकशरीरप्रवेशो न घटत इत्याशंक्यावयवागमापायाभ्यामात्मनो नियतमध्यमपरिमाणत्वाद्देहवदुभयं न विरुध्यत इत्याह—

**न्यूनाधिकशरीरेषु प्रवेशोऽपि गमागमैः ॥**
**आत्मांशानां भवेत्तेन मध्यमत्वं विनिश्चितम् ॥ ८४ ॥**

**न्यूनाधिकेति** । फलितमाह **तेनेति** ॥ ८४ ॥

**अ० टीका**—**न्यूनेति** । गमागमैर्विनाशोत्पादैः ॥ ८४ ॥

**रा० टीका**— आत्मनः सावयवत्वे घटादिवदनित्यत्वप्रसंगेनैतद्दूषयति

**सांशस्य घटवन्नाशो भवत्येव तथा सति ॥**
**कृतनाशाकृताभ्यागमयोः को वारको भवेत् ॥ ८५ ॥**

**सांशस्येति** । भवतु को दोषस्तत्राऽऽह **तथा सतीति** । कृतयोः पुण्यपापयोर्भोगमंतरेण नाशः । अकृतयोरकस्मात्फलदातृत्वमकृताभ्यागमः । एतद्दोषद्वयमात्मनोऽनित्यत्वाभ्युपगमे भवेदिति भावः ॥ ८५ ॥

**अ० टीका**—अण्वादिवादद्वयमपि खंडयन्नादावार्हतमतमेव खंडयति —**सांशस्येति** । उपलक्षणमिदं मिथ्यात्वस्यापि ॥ ८५ ॥

**रा० टीका**—अतः परिशेषादात्मनो विभुत्वं सिद्धमित्याह—

**तस्मादात्मा महानेव नैवाणुर्नापि मध्यमः ॥**
**आकाशवत्सर्वगतो निरंशः श्रुतिसंमतः ॥ ८६ ॥**

**तस्मादिति** । तत्र प्रमाणमाह—**आकाशवदिति** । "आकाशवत्सर्वगतश्च नित्यः" "निष्कलं निष्क्रियम्" इत्याद्यागमः प्रमाणमित्यर्थः ॥ ८६ ॥

**अ० टीका**—अथोभयत्रापि दूषणपुरःसरं सिद्धांतयति—**तस्मादिति** । तत्र हेतुः—**आकाशवदिति** । "**आकाशवत्सर्वगतश्च नित्यः**" इति "**निष्कलं निष्क्रियं शांतम्**" इति च श्रुतेरण्वानखाग्रश्रुत्योः सूक्ष्मतमत्वप्रयुक्तेंद्रियागम्यत्वबुद्ध्युपहितत्वाद्यभिप्रायकत्वाच्चेत्यर्थः ॥ ८६ ॥

**इत्युक्त्वा तद्विशेषे तु बहुधा कलहं ययुः ॥**
**अचिद्रूपाऽ चिद्रूपश्चिदचिद्रूप इत्यपि ॥ ८७ ॥**

**रा० टीका**—एवमात्मनो विभुत्वं प्रसाध्य तस्य चिद्रूपत्वं निश्चेतुं तावद्वादिविप्रतिपत्तिं दर्शयति—**इत्युक्त्वेति** ॥ ८७ ॥

**अ० टीका**—एवमात्मनो विभुत्वं सामान्यतो निर्णीय तद्विशेषनिर्णयार्थमुपक्रमते—**इत्युक्त्वेति** । वादिन इत्यार्थिकम् । इति निरुक्तप्रकारेणोक्त्वा स्वस्वमतयुक्त्याद्युपन्यस्येत्यर्थः । **तद्विशेष** इत्यादि सरलमेव । तत्प्रकारमेव सूत्रयति—**अचिदिति** ॥ ८७ ॥

**रा० टीका**—अचिद्रूपत्ववादिनो मतं दर्शयति—

**प्राभाकरास्तार्किकाश्च प्राहुरस्याचिदात्मताम् ॥**
**आकाशवद्द्रव्यमात्मा शब्दवत्तद्गुणश्चितिः ॥ ८८ ॥**

**प्राभाकरा इति** । तत्प्रक्रियामनुभाषते—**आकाशवद्द्रव्यमिति** । आत्मा द्रव्यं भवितुमर्हति गुणवत्त्वादाकाशवदित्यनुमानं सूचितम् । आत्मनः पृथिव्यादिभ्यो भेदसाधकं विशेषगुणं दर्शयति—**शब्दवदिति** । आत्मा पृथिव्यादिभ्यो भिद्यते ज्ञानगुणत्वात् । यत्पृथिव्यादिभ्यो न भिद्यते तज्ज्ञानगुणकमपि न भवति यथा पृथिव्यादीत्यनुमानं द्रष्टव्यम् ॥ ८८ ॥

**अ० टीका**—तत्रोद्दिष्टाचिद्रूपवादिनः प्रथममाह—**प्राभाकरा इति** । तत्र तत्संमतां युक्तिमाह—**आकाशवदिति** ॥ ८८ ॥

**रा० टीका**—तस्यैव विशेषगुणांतराण्याह—

**इच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ सुखासुखे ॥**
**तत्संस्काराश्च तस्यैते गुणाश्चितिवदीरिताः ॥ ८९ ॥**

**इच्छेति** । तत्संस्कारा भावनाः ॥ ८९ ॥

**अ० टीका**—किं चितिलक्षण एक एवाऽऽत्मगुण इत्याशंकायामन्यानपि तद्गुणानाह—**इच्छेति** । एवमेते ज्ञानेन सह **नवसंख्यादिपंचकं** चेति **चतुर्दशगुणवाञ्जीव** इति तन्मतमिति तत्त्वम् ॥ ८९ ॥

**रा० टीका**—एषां गुणानामुत्पत्तिविनाशकारणमाह—

**आत्मनो मनसा योगे स्वादृष्टवशतो गुणाः ॥**
**जायंतेऽथ प्रलीयंते सुषुप्तेऽदृष्टसंक्षयात् ॥ ९० ॥**

**आत्मन इति** । स्वादृष्टवशात आत्मनो मनसा योग इत्यन्वयः ॥ ९० ॥

**अ० टीका**—अथोक्तगुणोत्पत्त्यादिप्रकारमाह—**आत्मन इति** ॥ ९० ॥

**रा० टीका**—आत्मनोऽचिद्रूपत्वे कथं चेतनत्वाभ्युपगम इत्याशंक्य चितिमत्त्वादित्याह—

**चितिमत्त्वाच्चेतनोऽयमिच्छाद्वेषप्रयत्नवान् ॥**
**स्याद्धर्माधर्मयोः कर्ता भोक्ता दुःखादिमत्त्वतः ॥ ९१ ॥**

**चितिमत्त्वादिति** । आत्मनश्चेतनत्वे हेत्वंतरमाह—**इच्छेति** । तस्येश्वराद्वैलक्षण्यमाह—**स्यादिति** ॥ ९१ ॥

**अ० टीका**—एवमचिद्रूपस्याप्यात्मनश्चेतनत्वे हेतुं वदंस्तत एव कर्तृत्वाद्यपीत्याह—**चितिमत्त्वादिति** ॥ ९१ ॥

**यथाऽत्र कर्मवशतः कादाचित्कं सुखादिकम् ॥**
**तथा लोकांतरे देहे कर्मणेच्छादि जन्यते ॥ ९२ ॥**

**रा० टीका**—नन्वात्मनो विभुत्वे लोकांतरगमनादिकं कथं घटेतेत्याशंक्यास्मिन्देहे कर्मवशादिच्छाद्युत्पत्तौ सत्यामत्राऽऽत्मनोऽवस्थानादिव्यवहार इव कर्मवशाल्लोकांतरे देहांतरोत्पत्तौ तदवच्छिन्नात्मप्रदेशे सुखाद्युत्पत्तिवशात्तत्राऽऽत्मनो गमनादिकव्यवहार इत्यौपचारिकमात्मनो गमनादिकमित्यभिप्रेत्याऽऽह—**यथाऽत्र कर्मवशत इति** ॥ ९२ ॥

**अ० टीका**—ननु विभोर्लोकांतरगमनादिकं कथमित्यत आह—**यथेति** । दार्ष्टांतिके योजयति—**तथेति** । लोकांतरे कर्मणा देहे जाते सति तत्र कर्मणैवेच्छादि जन्यत इति योजना ॥ ९२ ॥

**एवं च सर्वगस्यापि संभवेतां गमागमौ ॥**
**कर्मकांडः समग्रोऽत्र प्रमाणमिति तेऽवदन् ॥ ९३ ॥**

**रा० टीका**—**एवमिति** । आत्मनः कर्तृत्वादिधर्मवत्त्वे किं प्रमाणमित्यत आह—**कर्मकांड इति** ॥ ९३ ॥

**अ० टीका**—ततः किं तत्राह—**एवं चेति** । अत्र किं प्रमाणमित्यपेक्षायां तदाह—**कर्मकांड इति** । उक्तवादिद्वयमतमुपसंहरति—**इतीति** । ते प्राभाकरतार्किकाश्चावदन्नूचुरित्यन्वयः ॥ ९३ ॥

**रा० टीका**—नन्वन्यो विज्ञानमयादानंदमय आंतर इत्यत्रानंदमयस्याऽऽत्मत्वमुक्तमिदानीमिच्छादिमानन्यः प्रतिपाद्यतेऽतः पूर्वोत्तरविरोध इत्याशंक्याऽऽह

**आनंदमयकोशो यः सुषुप्तौ परिशिष्यते ॥**
**अस्पष्टचित्स आत्मैषां पूर्वकोशोऽस्य ते गुणाः ॥ ९४ ॥**

**आनंदमयेति** । सुषुप्तावस्पष्टचित्स्य आनंदमयकोशः परिशिष्यते स पूर्वकोशः । श्रौतेषु पंचकोशेषु प्रथम एषां प्राभाकरादीनामात्मा । अस्याऽऽत्मनस्ते पूर्वोक्ता ज्ञानादयो गुणा इत्यर्थः ॥ ९४ ॥

**अ० टीका**—ननु स्वसंमतात्मन एतेषां को विशेष इत्यतस्तमाह—**आनंदमय इति** । एषां प्राभाकरादीनाम् । पूर्वकोशः विज्ञानमयकोशः । अस्य एतत्संमतात्मनोऽस्पष्टचितः । ते पूर्वोक्ता बुद्ध्यादयः ॥ ९४ ॥

**रा० टीका**—अस्यैवाऽऽत्मनश्चिदचिद्रूपत्वं भाट्टा वर्णयंतीत्याह—

**गूढं चैतन्यमुत्प्रेक्ष्य जडबोधस्वरूपताम् ॥**
**आत्मनो ब्रुवते भाट्टाश्चिदुत्प्रेक्षोत्थितस्मृतेः ॥ ९५ ॥**

**गूढमिति** । भाट्टा आत्मनो गूढमस्पष्टं चैतन्यमुत्प्रेक्ष्योहित्वा चिज्जडोभयात्मकतां वर्णयंति । चैतन्योत्प्रेक्षायां कारणमाह—**चिदुत्प्रेक्षेति** । उत्थितस्मृतेश्चिदुत्प्रेक्षा भवतीति योजना । सुप्तोत्थितस्य जायमानात्स्मरणात्सौषुप्तचैतन्यस्योत्प्रेक्षा भवतीत्यर्थः ॥ ९५ ॥

**अ० टीका**—अथोक्तात्मविषयकमेव भाट्टमतमाह—**गूढमिति** । चिदुत्प्रेक्षायां हेतुः—**उत्थितेति** । सुषुप्तेरुत्थितस्य **देवदत्तस्य** या स्मृतिः सुखमहमस्वाप्सं न किंचिदवेदिषमित्यादिरूपा तस्या इत्यर्थः ॥ ९५ ॥

**रा० टी०**—चिदुत्प्रेक्षाप्रकारमेव स्पष्टयति—

**जडो भूत्वा तदाऽस्वाप्समिति जाड्यस्मृतिस्तदा ॥**
**विना जाड्यानुभूतिं न कथंचिदुपपद्यते ॥ ९६ ॥**

**जडो भूत्वेति** । तदा सुषुप्तिकाले जडो भूत्वाऽस्वाप्समित्येवंरूपा जाड्यस्मृतिरुत्थितस्य पुरुषस्य जायमाना सुषुप्तिकालीनजाड्यानुभवमंतरेणानुपपद्यमाना तदानींतनजाड्यानुभवं कल्पयतीति भावः ॥ ९६ ॥

**अ० टीका**—तामेवानूद्य तल्लिंगसाध्यमात्मनो जडबोधरूपत्वमुपपादयति—**जडो भूत्वेति** । अहं तदा सुषुप्तिकाले । जडो भूत्वाऽस्वाप्समितीत्याकारा । तदा सुप्तेरुत्थानकाले । **जाड्येति** । विनेत्यादि योज्यम् ॥ ९६ ॥

**द्रष्टुर्दृष्टेरलोपश्च श्रुतः सुप्तौ ततस्त्वयम् ॥**
**अप्रकाशप्रकाशाभ्यामात्मा खद्योतवद्युतः ॥ ९७ ॥**

**रा० टी०**—सुषुप्तौ चैतन्यलोपाभावे प्रमाणमाह—**द्रष्टुरिति** । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादिति **श्रुतौ** द्रष्टुरात्मनः स्वरूपभूताया दृष्टेर्लोपो न विद्यते विनाशरहितस्वभावत्वात् । अन्यथा लोपवादिनोऽपि निःसाक्षिकस्य वक्तुमशक्यत्वात्सुषुप्तौ चैतन्यलोपाभावः श्रूयते ततोऽपि कारणादयमात्मा खद्योतवदस्फुरणस्फुरणाभ्यां युक्तो भवतीत्यर्थः ॥ ९७ ॥

**अ० टीका**—तत्र श्रुतिमपि प्रमाणयति—**द्रष्टुरिति** । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति सुषुप्तिं प्रकृत्य **बृहदारण्यक** एवाऽऽम्नायत इत्यर्थः । युतो युक्तः ॥ ९७ ॥

**निरंशस्योभयात्मत्वं न कथंचिद्घटिष्यते ॥**
**तेन चिद्रूप एवाऽऽत्मेत्याहुः सांख्यविवेकिनः ॥ ९८ ॥**

**रा० टी०**—अस्मिन्भाट्टमते दूषणाभिधानपुरःसरं सांख्यमतमुत्थापयति—**निरंशस्येति** ॥ ९८ ॥

**अ० टीका**—अथैतत्खंडनपूर्वकं सांख्यमतमाह—**निरंशस्येति** ॥ ९८ ॥

**जाड्यांशः प्रकृते रूपं विकारि त्रिगुणं च तत् ॥**
**चितो भोगापवर्गार्थं प्रकृतिः सा प्रवर्तते ॥ ९९ ॥**

**रा० टीका**—जाड्यस्मृतेस्तर्हि का गतिरित्याशंक्याऽऽह—**जाड्यांश इति** । तत्प्रकृतिरूपं सत्त्वरजस्तमोगुणात्मकं प्रकृतिकल्पनायां प्रयोजनमाह—**चित इति** । चितः पुरुषस्येति यावत् ॥ ९९ ॥

**अ० टीका**—एवं तर्हि निरुक्तस्मृत्यनुमितजाड्यांशस्य का गतिरित्यत आह—

जाड्यांश इति । तत्प्रकृते रूपम् । ननूक्तप्रकृतिः किमिति कल्प्येत्यत आह—चित इति । चिद्रूपस्याऽऽत्मन इत्यर्थः ॥ ९९ ॥

रा० टीका—ननु चितोऽसंगत्वेन प्रकृतिपुरुषयोरत्यंतविविक्तत्वात्प्रकृतिप्रवृत्त्या कथं पुरुषस्य भोगापवर्गावित्याशंक्य तयोर्विवेकस्याग्रहणात्पुरुषे भोगापवर्गौ व्यवह्रियेते इत्याह—

**असंगायाश्चितेर्बंधमोक्षौ भेदाग्रहान्मतौ ॥**
**बंधमुक्तिव्यवस्थार्थं पूर्वेषामिव चिद्भिदा ॥ १०० ॥**

असंगाया इति । तार्किकादिभिरिव सांख्यैरात्मभेदोऽङ्गीक्रियत इत्याह—बंधमुक्तीति ॥ १०० ॥

अ० टीका—ननु त्वन्मते त्वसंगस्याऽऽत्मनः कथं बंधादीत्यत आह—असंगाया इति । प्रकृतितत्कार्याभ्यां सकाशादात्मनोऽनादिसिद्धादित्यार्थिकम् । एतादृशात् । भेदेति । पूर्वेषां भाट्टादीनां प्रागुक्तवादिनामिवेत्यर्थः । चिदिति । नानात्मत्वमस्तीति संबंधः ॥ १०० ॥

**महतः परमव्यक्तमिति प्रकृतिरुच्यते ॥**
**श्रुतावसंगता तद्वदसंगो हीत्यतः स्फुटा ॥ १०१ ॥**

रा० टीका प्रकृतिसद्भावे पुरुषस्यासंगत्वे च श्रुतिमुदाहरति -महत इति ॥ १०१ ॥

अ० टीका -तत्र श्रुती प्रमाणयति—महत इति । असंगो ह्ययं पुरुष इति श्रूयत इत्यर्थः ॥ १०१ ॥

रा० टीका—एवं जीवविषयां वादिविप्रतिपत्तिं प्रदर्श्येश्वरविषयां तां प्रदर्शयितुमीश्वररूपं तावत्स्थापयति—

**चित्संनिधौ प्रवृत्तायाः प्रकृतेर्हि नियामकम् ॥**
**ईश्वरं ब्रुवते योगाः स जीवेभ्यः परः श्रुतः ॥ २ ॥**

चित्संनिधाविति । ननु प्रकृतिपुरुषातिरिक्तेश्वरकल्पनमप्रमाणमित्याशंक्याऽऽह—स जीवेभ्य इति ॥ २ ॥

अ० टीका—एवं त्वंपदवाच्यजीवे वादिविप्रतिपत्तीः समुपन्यस्य तदनंतरं तत्पदवाच्य ईश्वरेऽपि ताः संप्रदर्शयन्नत्र पातंजलमतमाह चित्संनिधाविति । नियामकं नियंतारम् । एतेन जडायाः प्रकृतेः स्वातंत्र्यानौचित्यं प्राच्यमते दोषः सूचितः ॥ १०२ ॥

रा० टीका—तामेवेश्वरसद्भावप्रतिपादिकां श्रुतिं पठति—

**प्रधानक्षेत्रज्ञपतिर्गुणेश इति हि श्रुतिः ॥**
**आरण्यकेऽसंभ्रमेण ह्यंतर्याम्युपपादितः ॥ ३ ॥**

प्रधानेति । प्रधानं गुणसाम्यावस्थारूपं क्षेत्रज्ञा जीवास्तेषां पतिर्गुणाः सत्त्वादयस्तेषामीशो नियामक इत्यर्थः । न केवलमियमेव श्रुतिरीश्वरप्रतिपादिकाऽन्तर्यामिब्राह्मणमपीत्याह—आरण्यक इति ॥ ३ ॥

अ० टीका—अत्रापि श्रुतीं प्रमाणयति—प्रधानेति । प्रधानं गुणसाम्यावस्थापन्ना प्रकृतिः क्षेत्रज्ञा जीवास्तेषां पतिरित्यर्थः । गुणाः सत्त्वादयस्तेषामीशो नियामक इति यावत् ।

न केवलमियं श्वेताश्वतरश्रुतिरेवात्र मानं किंतु बृहदारण्यकस्थमंतर्यामिब्राह्मणमपीत्याह—आरण्यक इति ॥ १०३ ॥

**अत्रापि कलहायंते वादिनः स्वस्वयुक्तिभिः ॥**
**वाक्यान्यपि यथाप्रज्ञं दार्ढ्यायोदाहरंति हि ॥ ४ ॥**

**रा० टीका**—तामेव वादिविप्रतिपत्तिं प्रतिजानीते—**अत्राऽपीति** । प्रज्ञामनतिक्रम्य यथाप्रज्ञम् ॥ ४ ॥

**अ० टीका**—तत्रापि वादिविप्रतिपत्तीः प्रतिजानीते—**अत्रापीति** ॥ १०४ ॥

**रा० टीका**—इदानीं पतंजलिनोक्तमीश्वरप्रतिपादकं "क्लेशकर्मविपाकैस्तदाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इत्येतत्सूत्रमर्थतः पठति—

**क्लेशकर्मविपाकैस्तदाशयैरप्यसंयुतः ॥**
**पुंविशेषो भवेदीशो जीववत्सोऽप्यसंगचित् ॥ १०५ ॥**

**क्लेशेति** । क्लेशा अविद्यादयः पंच । कर्माणि "कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषाम्" इति सूत्रितानि । सति मूले तद्विपाका जात्यायुर्भोगा इत्युक्ताः कर्मविपाकाः । फलविशेषास्तदाशयास्तेषां संस्कारास्तैः क्लेशादिभिरसंस्पृष्टः पुरुषविशेष ईश्वरो भवति सोऽपि जीववदसंगश्चिद्रूपश्चेत्यर्थः ॥ ५ ॥

**अ० टीका**—तत्राऽऽदौ पातंजलमत एवेशं प्रदर्शयति—**क्लेशेति** । **क्लेशकर्मविपाकाशयैरपरामृष्टः** पुरुषविशेष ईश्वर इति हि **पातंजलं** सूत्रम् । एवं क्लेशादिसूत्राण्यपि । **अविद्याऽस्मितारागद्वेषाभिनिवेशाः** पंच क्लेशाः । **कर्माशुक्लकृष्णं** योगिनस्त्रिविधमितरेषाम् । **सति** मूले तद्विपाको जात्यायुर्भोगाः । आशयास्त्वेतेषां त्रयाणां संस्कारा इत्यर्थः ॥ १०५ ॥

**रा० टीका**—नन्वसंगचिद्रूपत्वे कथं नियंतृत्वमित्यत आह—

**तथाऽपि पुंविशेषत्वाद्घटतेऽस्य नियंतृता ॥**
**अव्यवस्थौ बंधमोक्षावापतेतामिहान्यथा ॥ ६ ॥**

**तथाऽपीति** । ईश्वरस्य नियंतृत्वानभ्युपगमे दोषमाह—**अव्यवस्थाविति** ॥ ६ ॥

**अ० टीका**—नन्वसंगचिद्रूपस्यास्य कथं नियंतृत्वमित्यत आह—**तथापीति**॥ १०६॥

**रा० टीका**—असंगस्येश्वरस्य नियंतृत्वं निष्प्रमाणकमित्याशंक्याऽऽह—

**भीषाऽस्मादित्येवमादावसंगस्य परात्मनः ॥**
**श्रुतं तद्युक्तमप्यस्य क्लेशकर्माद्यसंगमात् ॥ ७ ॥**

**भीषेति** । तन्नियंतृत्वं श्रुतम् । ननु श्रुतमप्ययुक्तं कथमंगीक्रियत इत्यत आह—**युक्तमपीति** । जीवधर्मस्य क्लेशादेरभावादुपपन्नं चेत्यर्थः ॥ ७ ॥

**अ० टीका**—अत एव "**भीषाऽस्माद्वातः** पवते" इत्यादावसंगस्य वातादिभयजनकत्वं यदुक्तं तदपि युक्तमेवेत्याह—**भीषाऽस्मादिति** ॥ १०७ ॥

**जीवानामप्यसंगत्वात् क्लेशादिर्न ह्यथाऽपि च ॥**
**विवेकाग्रहतः क्लेशकर्मादि प्रागुदीरितम् ॥ ८ ॥**

**रा० टीका**—ननु जीवा अप्यसंगचिद्रूपाः क्लेशादिरहिता एव तथाचेश्वरे को विशेष इत्याशंक्य जीवानां स्वतः क्लेशादिरहितत्वेऽपि बुद्ध्या सह विवेकाग्रहात्क्लेशादिरस्तीति पूर्वोक्तं स्मारयति—**जीवानामिति** ॥ ८ ॥

**अ० टीका**—वस्तुतस्तु जीवानामपि क्लेशाद्यभाव एवाथापि तद्विवेकाग्रहनिबंधनमेवेत्याह—**जीवानामपीति** ॥ १०८ ॥

**नित्यज्ञानप्रयत्नेच्छा गुणानीशस्य मन्वते ॥**
**असंगस्य नियंतृत्वमयुक्तमिति तार्किकाः ॥ ९ ॥**

**रा० टीका**—तार्किकास्त्वसंगस्य नियामकत्वमसहमाना जीवविलक्षणत्वाय ज्ञानादिगुणत्रयं नित्यमंगीकुर्वत इत्याह—**नित्येति** ॥ ९ ॥

**अ० टीका**—अथैतत्खंडनपूर्वकं तार्किकमतमाह—**नित्यज्ञानेति** ॥ १०९ ॥

**रा० टीका**—नन्विच्छादिगुणकस्य तस्य कथं जीवाद्वैलक्षण्यमित्याशंक्य गुणानां नित्यत्वादेवेति परिहरति—

**पुंविशेषत्वमप्यस्य गुणैरेव न चान्यथा ॥**
**सत्यकामः सत्यसंकल्प इत्यादिश्रुतिर्जगौ ॥ ११० ॥**

**पुंविशेषत्वमिति** । गुणानां नित्यत्वे प्रमाणमाह—**सत्येति** ॥ ११० ॥

**अ० टीका**—एवं पुंविशेषत्वमपीशस्य नित्यज्ञानादिगुणैरेव "**सत्यकामः सत्यसंकल्पः**" इत्यादिश्रुत्योक्तमुपपद्यत एवेत्याह—**पुंविशेषत्वमपीति** ॥ ११० ॥

**रा० टीका**—तत्रापि दोषसद्भावात्पक्षांतरमाह

**नित्यज्ञानादिमत्त्वेऽस्य सृष्टिरेव सदा भवेत् ॥**
**हिरण्यगर्भ ईशोऽतो लिंगदेहेन संयुतः ॥ ११ ॥**

**नित्येति** । तस्य हिरण्यगर्भस्य किं रूपमित्यत आह—**लिंगदेहेनेति** । मायोपाधिकः परमात्मा लिंगशरीरसमष्ट्यभिमानेन हिरण्यगर्भ इत्युच्यत इत्यर्थः ॥ ११ ॥

**अ० टीका**—अथैतन्मतमपि दूषयन्हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिर इति प्रागुक्तहैरण्यगर्भमतं जीवात्मवदीश्वरनिर्णयेऽप्युपन्यस्यति—**नित्येति** । **लिंगेति** । समष्टिलिंगशरीरेणेत्यर्थः ॥ १११ ॥

**रा० टीका**—हिरण्यगर्भस्येश्वरत्वे किं प्रमाणमित आह—

**उद्गीथब्राह्मणे तस्य माहात्म्यमतिविस्तृतम् ॥**
**लिंगसत्त्वेऽपि जीवत्वं नास्य कर्माद्यभावतः ॥ १२ ॥**

**उद्गीथेति** । ननु लिंगशरीरयोगे जीवः स्यादित्याशंक्याविद्याकामकर्माभावान्न जीव इत्याह—**लिंगसत्त्वेऽपीति** ॥ १२ ॥

**अ० टीका**—तत्र मानमाह—**उद्गीथेति** ॥ ११२ ॥

**स्थूलदेहं विना लिंगदेहो न क्वापि दृश्यते ॥**
**वैराजो देह ईशोऽतः सर्वतो मस्तकादिमान् ॥ १३ ॥**

**रा० टीका**—केवलं लिंगशरीरस्य स्थूलदेहं विहायानुपलभ्यमानत्वात्स्थूलशरीरसमष्ट्यभिमानी विराडेवेश्वर इत्याह—**स्थूलदेहं विनेति** ॥ १३ ॥

**अ० टीका**—अत्रापि दूषणपूर्वकं **विश्वरूपोपासकमतमाह—स्थूलेति** ॥ ११३ ॥

**रा० टीका**—तत्सद्भावे प्रमाणमाह—

**सहस्रशीर्षेत्येवं च विश्वतश्चक्षुरित्यपि ॥**
**श्रुतमित्याहुरनिशं विश्वरूपस्य चिंतकाः ॥ १४ ॥**

**सहस्रशीर्षेति** । श्रुतं वाक्यमिति शेषः । विश्वरूपस्य चिंतका विराडुपासकाः ॥१४॥

**अ० टीका**—तत्र मानमाह—**सहस्रेति** । "**विश्वतश्चक्षुरुत** विश्वतोमुखः" इत्यादिरपि तैत्तिरीयश्रुतिरेव ॥ ११४ ॥

**सर्वतः पाणिपादत्वे कृम्यादेरपि चेशता ॥**
**ततश्चतुर्मुखो देव एवेशो नेतरः पुमान् ॥ ११५ ॥**

**रा० टीका**—अत्रापि दोषदृष्ट्या देवतांतरमालंबत इत्याह—**सर्वत इति** ॥११५॥

**अ० टीका**—अत्रापि दोषापत्तेश्चतुरास्योपासकमतमाह—**सर्वत इत्यादिद्वाभ्याम्** ॥ ११५ ॥

**रा० टीका**—एवं कैरुच्यत इत्यत आह—

**पुत्रार्थं तमुपासीना एवमाहुः प्रजापतिः ॥**
**प्रजा असृजतेत्यादिश्रुतिं चोदाहरंत्यमी ॥ १६ ॥**

**पुत्रार्थमिति** । प्रजापतिः प्रजा असृजतेत्यादिवाक्यं तत्र प्रमाणमित्याहुरित्याह—**प्रजापतिरिति** ॥ १६ ॥

**अ० टीका**—**पुत्रार्थमिति** । तत्रापि मानमाह—**प्रजापतिरिति** । इयमपि **श्रुतिस्तैत्तिरीयशाखास्थैव** ॥ ११६ ॥

**विष्णोर्नाभेः समुद्भूतो वेधाः कमलजस्ततः ॥**
**विष्णुरेवेश इत्याहुर्लोके भागवता जनाः ॥ १७ ॥**

**रा० टीका**—भागवतमतमाह—**विष्णोरिति** ॥ १७ ॥

**अ० टीका**—इदानीं वैष्णवपक्षं संक्षिपति—**विष्णोरिति** ॥ ११७ ॥

**शिवस्य पादावन्वेष्टुं शार्ङ्ग्यशक्तस्ततः शिवः ॥**
**ईशो न विष्णुरित्याहुः शैवा आगममानिनः ॥ १८ ॥**

**रा० टीका**—शैवानां मतमाह—**शिवस्येति** ॥ १८ ॥

**अ० टीका**—अथ **पांचरात्रप्रधानभागवताख्यमाध्वरामानुजादिसाहचर्यात्तांत्रिक**शैवमतमप्युपक्षिपति—**शिवस्येति** । अत एव आगममानिनस्तांत्रिका इत्यर्थः ॥ ११८ ॥

**पुरत्रयं सादयितुं विघ्नेशं सोऽप्यपूजयत् ॥**
**विनायकं प्राहुरीशं गाणपत्यमते रताः ॥ १९ ॥**

**रा० टीका**—गाणपत्यमतमाह—**पुरत्रयमिति** ॥ १९ ॥

**अ० टीका**—तेनापि त्रिपुरासुरपराजयसिद्ध्यर्थं गणपतिपूजनानुष्ठानकृतत्वस्य पुराणादौ सुप्रसिद्धत्वात्स एवेश्वर इति गाणपतानां मतमाह—**पुरेति** ॥ ११९ ॥

**रा० टीका**—उक्तन्यायमन्यत्राप्यतिदिशति—

**एवमन्ये स्वस्वपक्षाभिमानेनान्यथाऽन्यथा ॥**
**मंत्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे ॥ २० ॥**

**एवमिति** । अन्ये भैरवमैरालाद्युपासकाः । अन्यथाऽन्यथावर्णने कारणमाह—**स्वस्वेति** । तत्र तत्र प्रमाणानि संतीति दर्शयति—**मंत्रेति** ॥ २० ॥

**अ० टीका**—अर्थापत्तिलक्षणविधया मैरारादीनामपि मतानि स्वयमेवोह्यानीति सूचयन्नुक्तेश्वरवादवादिविप्रतिपत्तीरुपसंहरति—**एवमिति । मंत्रेति** । लिङ्लोट्तव्यान्यतमघटितवाक्यत्वलक्षणविधिस्तावकार्थवादादिभिन्नमंत्रपदव्यवहार्यप्रमाणवाक्यत्वं मंत्रत्वमित्यर्थः । इतिकर्तव्यताघटकार्षवाक्यत्वमेव कल्पत्वमित्यर्थः । आदिना स्मृतिपुराणादिः । आश्रित्य । स्वस्वपक्षाभिमानेन । अन्यथाऽन्यथा ईश्वरं प्रतिपेदिर इति संबंधः ॥ १२० ॥

**रा० टीका**—एवं कति मतानीत्याशंक्यासंख्यानीत्याह

**अंतर्यामिणमारभ्य स्थावरांतेशवादिनः ॥**
**संत्यश्वत्थार्कवंशादेः कुलदैवतदर्शनात् ॥ २१ ॥**

**अंतर्यामिणमिति** । स्थावरेशवादो न क्वापि दृष्टचर इत्याशंक्याऽऽह—**अश्वत्थार्केति** २१

**अ० टीका**—नन्वथापि प्रकृतेश्वरवादे कति मतानि संतीत्यत आह—**अंतर्यामिणमिति** । असंख्याः संतीति शेषं संपूर्य संबंधः । तत्र हेतुः—**अश्वत्थेत्यादिना** ॥१२१॥

**रा० टीका**—नन्वेवं मतभेदे कस्योपादेयत्वं कस्य वा हेयत्वमित्याकांक्षायामाह—

**तत्त्वनिश्चयकामेन न्यायागमविचारिणाम् ॥**
**एकैव प्रतिपत्तिः स्यात्साऽप्यत्र स्फुटमुच्यते ॥ २२ ॥**

**तत्त्वनिश्चयेति** । तत्त्वनिश्चयकामेन तत्त्वनिश्चयेच्छया न्यायागमयोर्विचारणशीलानां पुरुषाणां प्रतिपत्तिरेकैव स्यात् । सा कीदृशीत्यत आह—**साऽप्यत्रेति** ॥ २२ ॥

**अ० टीका**—नन्वेवं तर्हि सर्वत्रानाश्वासप्रसंग एवेत्यत्राऽऽह—**तत्त्वेति** । अबाधितार्थविषयकनिर्णयाभिलाषेणेत्यर्थः । युक्तिमूलकं शास्त्रं न्यायः । आज्ञामूलकं तु तदागमः । अत्रैव वेदादिकाव्यांतयावच्छब्दब्रह्मांतर्भाव इति बोध्यम् ॥ १२२ ॥

**रा० टीका**—तामेव प्रतिपत्तिं दर्शयितुं तदनुकूलां श्रुतिं पठति—

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥**
**अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ २३ ॥**

**मायां त्विति** । मायामेव प्रकृतिं जगदुपादानकारणं विद्याज्जानीयान्मायिनं तु मायोपाधिकमंतर्यामिणमेव महेश्वरं मायाधिष्ठातारं निमित्तकारणं जानीयात् । अस्य मायिनो महेश्वरस्यावयवभूतैरंशरूपैश्चराचरात्मकैर्जीवैः कृत्स्नमिदं जगद्व्याप्तमित्यस्याः श्रुतेरर्थः ॥ २३ ॥

**अ० टीका**—तामेवैकरूपप्रतिपत्तिशब्दितप्रमितिं जनयितुमुपोद्घातत्वेनाऽऽदौ श्रुतिं पठति—**मायां त्विति** ॥ १२३ ॥

**रा० टीका**—एतच्छ्रुत्यनुसारेणेश्वरविषयो निर्णयो युक्त इत्याह—

**इति श्रुत्यनुसारेण न्याय्यो निर्णय ईश्वरे ॥**
**तथा सत्यविरोधः स्यात्स्थावरांतेशवादिनाम् ॥ २४ ॥**

**इतीति** । कुतो युक्त इत्याशंक्य सर्वत्राविरुद्धत्वादित्याह—**तथेति** । सर्वस्यापीश्वरत्वाभ्युपगमान्न केनापि विरोध इति भावः ॥ २४ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**इतीति** । तत्रोपपत्तिमाह—**तथा सतीति** ॥ १२४ ॥

**रा० टीका**—ननु जगत्प्रकृतिभूताया मायायाः किं रूपमित्यत आह—

**माया चेयं तमोरूपा तापनीये तदीरणात् ॥**
**अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ॥ १२५ ॥**

**माया चेयमिति** । कुत इत्यत आह—**तापनीय इति** । माया च तमोरूपेति **तापनीयोपनिषदि** तमोरूपत्वमस्याभिधानादित्यर्थः । मायायास्तमोरूपत्वे किं प्रमाणमित्याकांक्षायामनुभूतेरिति श्रुतिरेवात्रानुभवः प्रमाणमिति प्रतिजानीत इत्याह—**अनुभूतिमिति** ॥ १२५ ॥

**अ० टीका**—ननु मायापदार्थ एव क इत्याशंक्य **नृसिंहोत्तरतापनीयप्रसिद्धां** माया च तमोरूपानुभूतेस्तदेतज्जडं मोहात्मकमनंतं तुच्छमिदं रूपमिति श्रुतिमेवार्थतः संग्रथयन्समाधत्ते—**माया चेत्यादिद्वाभ्याम्** ॥ १२५ ॥

**रा० टीका**—तत्र मायायास्तमोरूपत्वे कोऽसावनुभव इत्याकांक्षायां तदेतज्जडं मोहात्मकमिति श्रुतिरेवात्रानुभवं स्पष्टयतीत्याह—

**जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः ॥**
**आबालगोपं स्पष्टत्वादानंत्यं तस्य साऽब्रवीत् ॥ २६ ॥**

**जडमिति** । अनंतमिति श्रुत्या सर्वानुभवसिद्धत्वमुच्यत इत्याह—**आबालेति** । जडं मोहं च प्रकृतेः कार्यमित्याबालगोपालादीनां सर्वेषामनुभव इत्यर्थः ॥ २६ ॥

**अ० टीका**—**जडमिति** । **आबालेति** । बालं गोपं मर्यादीकृत्येत्यर्थः । एवं च सर्वचेतनप्रसिद्धत्वादेवाज्ञानस्याऽऽनंत्यं न त्वविनाशित्वादित्याशयः ॥ १२६ ॥

**रा० टीका**—जडशब्दस्यार्थमाह—

**अचिदात्मघटादीनां यत्स्वरूपं जडं हि तत् ॥**
**यत्र कुंठीभवेद्बुद्धिः स मोह इति लौकिकाः ॥ २७ ॥**

**अचिदात्मेति** । मोहशब्दार्थमाह—**यत्रेति** ॥ २७ ॥

**अ० टीका**—एवमपि तत्र जाड्यं कथं तदाह—**अचिदिति** । एवं मोहरूपमपि व्युत्पादयति—**यत्रेति** । मुह वैचित्त्य इति स्मृतिरपि ॥ १२७ ॥

**रा० टीका**—उक्तप्रकारेण सर्वानुभवसिद्धत्वलक्षणमानंत्यं सिद्धमित्याह—

**इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते ॥**
**युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः ॥ २८ ॥**

**इत्थमिति** । एतज्जाड्यमोहलक्षणतमोरूपत्वं नन्वेवं मायायाः सर्वानुभवसिद्धत्वे घटा-

दिवज्ज्ञानेनानिवर्त्यत्वं स्यादित्याशंक्याऽऽह—**युक्तीति**। तुशब्दः शंकाव्यावृत्त्यर्थः। अनिर्वाच्यं सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यं तत्र किं प्रमाणमित्यत आह—**नासदिति** ॥ २८ ॥

**अ० टीका**—एतद्रूपं तु तस्य पामरसाधारणमेवेत्याह—**इत्थमिति**। तर्हि विद्वद्दृष्ट्या कथं तदाह—**युक्तीति**। तत्रापि तर्काप्रतिष्ठानादिति न्यायेनास्वरसाच्छ्रुतिमेव प्रमाणयति—**नेति** ॥ १२८ ॥

**रा० टीका**—अस्याः श्रुतेरभिप्रायमाह—

**नासदासीद्विभातत्वान्नो सदासीच्च बाधनात् ॥**
**विद्यादृष्ट्या श्रुतं तुच्छं तस्यानित्यनिवृत्तितः ॥ २९ ॥**

**नासदासीदिति**। बाधनान्नेह नानाऽस्ति किंचनेति श्रुत्या निषेधादित्यर्थः। सदसद्रूपत्वं तु विरुद्धत्वादयुक्तमिति श्रुत्योपेक्षितम्। एवं युक्तिदृष्ट्याऽनिर्वचनीयत्वं प्रदर्श्य तुच्छमिदं रूपमस्येति श्रुतिर्विद्वदनुभवेन तस्यास्तुच्छत्वं दर्शयतीत्याह—**विद्येति**। तुच्छत्वे हेतुमाह—**तस्येति** ॥ २९ ॥

**अ० टीका**—तामेव श्रुतिमर्थतः पठति—**नासदिति**। ज्ञानदृष्ट्या तर्हि कथं तदाह—**विद्येति**। **श्रुतं** तुच्छमिदं रूपमित्याम्नातमित्यर्थः। तदुक्तं **वार्तिके**—"**ब्रह्मदृष्ट्या** त्वविद्येयं न कथंचन युज्यते" इति ॥ १२९ ॥

**रा० टीका**—उपपादितमर्थमुपसंहरति—

**तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ॥**
**ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥ १३० ॥**

**तुच्छेति**। श्रौतबोधेन तुच्छा कालत्रयेऽप्यसती यौक्तिकबोधेनानिर्वचनीया लौकिकबोधेन वास्तवी चेत्येवं त्रिधा माया ज्ञेयेत्यर्थः ॥ १३० ॥

**अ० टीका**—एवं च फलितं तद्विषयकं दृष्टित्रयं कथयति—**तुच्छेति** ॥ १३० ॥

**रा० टीका**—अस्य सत्त्वमसत्त्वं च दर्शयतीति श्रुतेरर्थमस्याः कृत्यमाह—

**अस्य सत्त्वमसत्त्वं च जगतो दर्शयत्यसौ ॥**
**प्रसारणाच्च संकोचाद्यथा चित्रपटस्तथा ॥ ३१ ॥**

**अस्येति**। एकस्या एव मायाया जगत्सत्त्वासत्त्वप्रदर्शकत्वे दृष्टांतमाह—**प्रसारणादिति** ॥ ३१ ॥

**अ० टीका**—ननु भवत्वेवंविधा माया तथाऽप्यसौ किं करोतीत्याशंक्य अस्य सत्त्वमसत्त्वं च दर्शयतीत्यपि **तापनीयश्रुतेरर्थं** कथयन्समाधत्ते—**अस्येति**। तत्र दृष्टांतं प्रकृतप्रकरणस्थमेवोपस्थापयति **प्रसारणाच्चेति**। यथा चित्रपटः प्रसारणाच्चित्रनिचयस्य सत्त्वं संकोचादसत्त्वं च दर्शयति तथाऽसौ मायाऽस्य जगतः सत्त्वमुत्पत्तिस्थितिभ्यामसत्त्वं प्रलयेन च दर्शयतीत्यर्थः ॥ १३१ ॥

**अस्वतंत्रा हि माया स्यादप्रतीतेर्विना चितिम् ॥**
**स्वतंत्राऽपि तथैव स्यादसंगस्यान्यथाकृतेः ॥ ३२ ॥**

**रा० टीका**—स्वतंत्रास्वतंत्रत्वेनेति श्रुत्या मायायाः स्वातंत्र्यास्वातंत्र्ये **दर्शिते** त-

त्रोभयत्रोपपत्तिमाह—अस्वतंत्रेति आभासकचैतन्यं विहाय न प्रकाशत इत्यस्वतंत्राऽसंगस्याऽऽत्मनोऽन्यथाकरणात्स्वतंत्राऽ र्थः ॥ ३२ ॥

अ० टीका—एवं स्वतंत्र नंतत्वे नेति चोत्तरतापनीयश्रुत्युक्तमेव मायास्वातंत्र्यास्वातंत्र्यशालित्वमपि प्रकटयति अस्वतंत्रा हीति । अन्यथेति । ससंगत्वापादनादित्यर्थः ॥ १३२ ॥

रा० टीका—अन्यथाकरणमेव स्पष्टयति—

**कूटस्थासंगमात्मानं जगत्त्वेन करोति सा ॥**
**चिदाभासस्वरूपेण जीवेशावपि निर्ममे ॥ ३३ ॥**

कूटस्थासंगमिति । जीवेशावाभासेन करोतीति श्रुत्युक्तं जीवेश्वरविभागं च करोतीत्याह—चिदाभासेति ॥ ३३ ॥

अ० टीका—तदेव स्पष्टयति—कूटस्थेति । एवं जीवेशावाभासेन करोतीति श्रुतेश्चिदाभासात्मना जीवेश्वरावपि प्रकटयतीत्याह—चिदाभासेति ॥ १३३ ॥

रा० टीका—नन्वात्मनोऽन्यथाकरणे कूटस्थत्वहानिः स्यादित्याशंक्याऽऽह—

**कूटस्थमनुपद्रुत्य करोति जगदादिकम् ॥**
**दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः ॥ ३४ ॥**

कूटस्थमिति । ननु कूटस्थत्वाविघातेन जगदादिस्वरूपत्वापादनं दुर्घटमित्याशंक्य मायायां दुर्घटैकविधायित्वान्नेदमाश्चर्यकारणमित्याह—दुर्घटेति । अन्यथा मायात्वमेव भज्येतेति भावः ॥ ३४ ॥

अ० टीका—नन्वात्माऽन्यथाकृतौ कूटस्थत्वहानिरित्यत आह—कूटस्थमिति । ननु कथमिदमुपपद्यत इत्यत्राऽऽह—दुर्घटेति ॥ १३४ ॥

रा० टीका—मायाया दुर्घटकारित्वस्वभावत्वे दृष्टांतमाह—

**द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि ॥**
**मायाया दुर्घटत्वं च स्वतः सिध्यति नान्यतः ॥ १३५ ॥**

द्रवत्वमिति । उदकादीनां द्रवत्वादि यथा स्वाभाविकं तद्वन्मायाया दुर्घटकारित्वमित्यर्थः ॥ १३५ ॥

अ० टीका—ननु दुर्घटकारित्वं कथमित्याशंक्य नैसर्गिकमेवेत्याह—द्रवत्वमिति १३५

**न वेत्ति लोको यावत्तां साक्षात्तावच्चमत्कृतिम् ॥**
**धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति ॥ ३६ ॥**

रा० टीका—ननु मायादुर्घटकारित्वमाश्चर्यकारणं न भवतीत्युक्तमनुपपन्नलोके मायायाश्चमत्कारहेतुत्वदर्शनादित्याशंक्य मायायाः प्रयोक्तृत्वसाक्षात्कारपर्यंतमेवास्या आश्चर्यकारणत्वं नोपरिष्टादित्याह—न वेत्तीति ॥ ३६ ॥

अ० टीका—नन्वाश्चर्यमिदं माया दुर्घटकारित्वमित्यत्राऽऽह—न वेत्तीति । तं मायानियंतारमद्वैतात्मानमित्यर्थः ॥ १३६ ॥

**प्रसरंति हि चोद्यानि जगद्वस्तुत्ववादिषु ॥**
**न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः ॥ ३७ ॥**

**रा० टीका**—किंच जगत्सत्यत्ववादिनो नैयायिकादीन्प्रत्येवंविधानि चोद्यानि कर्तव्यानि न मायावादिनं प्रतीत्याह-**प्रसरंतीति** ॥ ३७ ॥

**अ० टीका**—ननु कूटस्थात्मत्वमनुपसृत्य कथं माया जगत्त्वादिना दर्शयतीत्याशंक्याऽऽरंभपरिणामादिवादशालिषु तार्किकादिष्वेव कार्यकारणभावप्रश्नप्रसरः स्यान्न तु विवर्तवादिनीत्याह-**प्रसरंति हीति**। चोदनीयमाक्षेप्तव्यम्। तत्र हेतुः-**तस्या** इत्यादिना। आक्षेपमूलीभूताज्ञानमात्ररूपत्वादित्यर्थः ॥ १३७ ॥

**रा० टीका**—मायावादिनं प्रति चोद्यकरणेऽतिप्रसंगमाह—

**चोद्येऽपि यदि चोद्यं स्यात्त्वच्चोद्ये चोद्यते मया ॥**
**परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम् ॥ ३८ ॥**

**चोद्येऽपीति**। तर्हि किं कर्तव्यमित्यत आह **परिहार्यमिति** ॥ ३८ ॥

**अ० टीका**—तत्राप्याक्षेपाग्रहे त्वदाक्षेपलक्षणे कार्येऽपि किंचित्कारणं कार्यत्वादेव वक्तव्यम्। तत्र कारणत्वं हि कार्यनियतपूर्ववृत्तित्वमेवेति कार्यमपेक्षमित्यन्योन्याश्रय इत्याद्यस्माकं त्वदुपर्येवाक्षेपः स्यात्तत्परिहारः सुदुर्लभ एवातः पुनरनंतरं विवर्तवादिनं प्रत्याक्षेपो नैव कर्तव्यस्त्वया भेदवादिनेत्याह—**चोद्येऽपीति** ॥ १३८ ॥

**विस्मयैकशरीराया मायायाश्चोद्यरूपतः ॥**
**अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः ॥ ३९ ॥**

**रा० टीका**—उक्तमेवार्थं प्रपंचयति **विस्मयेति** ॥ ३९ ॥

**अ० टीका**—ननु भवत्वेवं प्रतिपादिनं प्रति खंडनयुक्त्या समाधानमथापि जिज्ञासोर्मम समाधानं कथमित्यत्राऽऽह **विस्मयैकेति**। अघटितघटनपाटवेनाद्भुतमात्रदेहाया इत्यर्थः। एतादृश्या मायायाश्चोद्यरूपतच्चोद्यस्यास्याऽऽक्षेप्तव्यस्य संशयविपर्यासभूतार्थस्य रूपं येनाज्ञानेन तस्मादज्ञाने सत्येवार्थे संदिग्धत्वं भासते। अयं स्थाणुर्न वेति। एवं चाज्ञानमात्ररूपत्वादिति यावत्। अत एव। अन्वेष्य इत्यादिबुद्धिमद्भिः "एतद्बुद्ध्वा बुद्धिमान्स्यादिति" स्मृतेः परोक्षज्ञानवद्भिरित्यर्थः। यद्वा स्मृतौ कृतकृत्यश्चेति वाक्यशेषादपरोक्षज्ञानमेवात्र बुद्धिमत्त्वप्रयोजकमित्यस्वरसाच्चतुरचक्रवर्तिमुमुक्षुभिरिति यावत्। तत्रापि प्रयत्नतः प्राणांतायसेनेत्येतत्। एतेनात्र सर्वथोपेक्षानर्हत्वं ध्वन्यते ॥ १३९ ॥

**रा० टीका**—मायात्वनिश्चये तत्परिहारान्वेषणमुचितं स एव नेदानीं सिद्ध इति शंकते—

**मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चिनु ॥**
**लोकप्रसिद्धमायाया लक्षणं यत्तदीक्ष्यताम् ॥ १४० ॥**

**मायात्वमिति**। मायालक्षणसद्भावान्मायात्वं निश्चीयतामित्यभिप्रायेणाऽऽह-**तर्हीति**। किं लक्षणमित्यत आह—**लोकेति** ॥ १४० ॥

**अ० टीका**-एवं चेत्तत्र—

" न वेत्ति लोको यावत्तं साक्षात्तावच्चमत्कृतिम् "
" धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति " ॥

इति श्रीमद्भिरेव प्रागुपदिष्टं विद्वदनुभवनमेव शरणीकरणीयमिति वदंतमंतेवासिनं प्रति सानुवादमनुमोदते–**मायात्वमेवेति** । तदुपायमाह–**लोकेति** । त्वयाऽत्रेति शेषः ॥ १४० ॥

**रा० टी०**—तस्या अपि किं लक्षणमित्यत आह–

**न निरूपयितुं शक्या विस्पष्टं भासते च या ॥**
**सा मायेतींद्रजालादौ लोकाः संप्रतिपेदिरे ॥ ४१ ॥**

**न निरूपयितुमिति** ॥ ४१ ॥

**अ० टीका**–किं लोकप्रसिद्धमायालक्षणमित्यत आह–**नेति** । एवं च निरूपणानर्हत्वे सति स्पष्टतरभासमानत्वं मायात्वमिति तदीयमसामान्यलक्षणं फलितम् । ब्रह्मतुच्छयोरतिव्याप्तिव्यावृत्तये क्रमाद्दलयुगलम् ॥ १४१ ॥

**रा० टीका**—दृष्टांते सिद्धं लक्षणं दार्ष्टांतिके योजयति—

**स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् ॥**
**मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥ ४२ ॥**

**स्पष्टमिति** ॥ ४२ ॥

**अ० टीका**–लक्ष्ये तद्योजयति—**स्पष्टमिति** ॥ १४२ ॥

**रा० टीका**—जगतोऽशक्यनिरूपणत्वं कथमित्याशंक्य तद्दर्शयति—

**निरूपयितुमारब्धे निखिलैरपि पंडितैः ॥**
**अज्ञानं पुरतस्तेषां भाति कक्षासु कासुचित् ॥ ४३ ॥**

**निरूपयितुमिति** ॥ ४३ ॥

**अ० टी०** ननु नव्यतार्किकादिभिर्जगन्निरूप्यतएवेत्यत आह–**निरूपयितुमिति** १४३

**रा० टीका**—अशक्यनिरूपणत्वमेवोदाहरणेन स्पष्टयति—

**देहेंद्रियादयो भावा वीर्येणोत्पादिताः कथम् ॥**
**कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम् ॥ ४४ ॥**

**देहेन्द्रियादय इति** ॥ ४४ ॥

**अ० टीका**–ता एव कक्षाः प्रकटयति–**देहेति** । आदिना प्राणांतःकरणादयः । आत्मनश्चैतन्यरूपस्य देहादिना कः संबंध इति तृतीयकक्षाऽपि कक्षोपक्रमे बहुवचनाद्बोध्या ॥ १४४ ॥

**रा० टीका**—स्वभाववादी शंकते—

**वीर्यस्यैष स्वभावश्चेत्कथं तद्विदितं त्वया ॥**
**अन्वयव्यतिरेकौ यौ भग्नौ तौ वंध्यवीर्यतः ॥ १४५ ॥**

**वीर्यस्येति** । सिद्धांती पृच्छति—**कथं तदिति** । अन्वयव्यतिरेकाभ्यां जानामीत्याशंक्य व्याहत्यभावान्मैवमित्याह–**अन्वयेति** । वंध्यवीर्येण वंध्यायां च तत्र वीर्यस्य व्यर्थत्वाद्व्याप्तिर्न घटते यत्र वीर्यं तत्र तत्र देहादिकमिति नान्वयोऽपि ॥ १४५ ॥

**अ० टीका**–तत्र स्वभाववादमाशंक्य दूषयति–**वीर्यस्येति** । ननु किमिति वीर्यस्वभावोऽधिक्षिप्यतेऽन्वयव्यतिरेकाभ्यामेव तन्निर्णयसंभवादिति चेन्न । व्यभिचारादित्याह—**अन्वयेति** ॥ १४५ ॥

**रा० टीका**— एवं पुनः पुनः पृष्टे सति किमपि न जानामीत्येवोत्तरं देयमिति फलितमाह—

**न जानामि किमप्येतदित्यंते शरणं तव ॥**
**अत एव महांतोऽस्य प्रवदंतींद्रजालताम् ॥ ४६ ॥**

**न जानामीति** ॥ ४६ ॥

**अ० टीका**–अतो मूल्याज्ञान एव पर्यवसानमित्याह–**न जानामीति** । तत्र भेदवादिनस्तार्किकादेः । फलितमाह–**अत एवेति** ॥ १४६ ॥

**रा० टीका**–उक्तानिर्वचनीयत्वे वृद्धसंमतिं दर्शयति–

**एतस्मात्किमिवेंद्रजालमपरं यद्गर्भवासस्थितं**
**रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुरम् ॥**
**पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं**
**पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथाऽऽगच्छति ॥४७॥**

**एतस्मादिति** ॥ ४७ ॥

**अ० टीका**—कथं वदंत्यस्य जगतस्येंद्रजालतां महांत इत्यतस्तद्वाक्यमेवोदाहरति—**एतस्मादिति** । मयाऽप्युक्तमकल्पितचिद्विलासम्

"क्षणं शिरसि वल्लभा क्षणमिहैव कल्लोलिनी क्षणं युवतिरंकगा क्षणमसौ स्वदेहार्धभाक्" ।
" क्षणं मदनसुंदरो विकटपंचवक्त्रः क्षणं चिदात्मनि किमीश्वरतामपरमिंद्रजालं पुनः "

इति ॥ १४७ ॥

**देहवद्वटधानादौ सुविचार्य विलोक्यताम् ॥**
**क्व धानाः कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु ॥४८ ॥**

**रा० टीका**–न केवलं देहस्यैव दुर्निरूपत्वं किंतु वटवृक्षादेरपीत्याह–**देहवदिति**॥४८॥

**अ० टीका**–उक्तेऽर्थे श्रुतिमपि संवादित्वेन सूचयंस्तद्गतं वटधानादृष्टांतं स्पष्टयति—**देहवदिति** । तथा च छांदोग्यषष्ठे द्वादशखंडे न्यग्रोधफलमत आहरेतीत्यादिना प्रपंचितमेव । फलितमाह —**तस्मादिति** । निश्चिनु निखिलमपि दृश्यमिंद्रजालवन्मायामात्ररूपत्वेन मिथ्यैवेति निर्णयविपर्याकुर्वित्यर्थः ॥ १४८ ॥

**निरुक्तावभिमानं ये दधते तार्किकादयः ॥**
**हर्षमिश्रादिभिस्ते तु खंडनादौ सुशिक्षिताः ॥ ४९ ॥**

**रा० टीका**—नन्वस्माभिर्निर्वक्तुमशक्यत्वेऽप्युदयनादिभिराचार्यैर्निरुच्यत इत्याशंक्याऽऽह **निरुक्ताविति** ॥ ४९ ॥

**अ० टीका**—ननु यद्यप्यस्माकं जगन्निरुक्तौ नैव सामर्थ्यमथापि प्राचीनैस्तार्किकादिभिः स्वस्वग्रंथेषु कार्यकारणभावादिजगन्निरुक्तिः कृतैवेत्यत्राऽऽह—**निरुक्ताविति** ।

**हर्षेति** । श्रीहर्षमिश्राख्यैर्भगवद्भिः खंडनकारैः । आदिनाऽन्येपि भेदवादिविदलनप्रवीणाः पूर्वविद्वांसो ग्राह्याः ॥ १४९ ॥

**अचिंत्याः खलु ये भावा न तांस्तर्केषु योजयेत् ॥**
**अचिंत्यरचनारूपं मनसाऽपि जगत्खलु ॥ १५० ॥**

**रा० टीका**—उक्तार्थे सांप्रदायिकानां वाक्यं संवादयति–**अचिंत्या इति**॥१५०॥

**अ० टीका**—सांप्रदायिकवाक्यमप्येवमेवेत्याह–**अचिंत्याः खलु ये भावा इति।** प्रकृते किं तदाह—**अचिंत्येति** ॥ १५० ॥

**रा० टीका**—ननु भवत्वेवं जगतोऽचिंत्यरचनात्वं मायायां किमायातमित्यत आह–

**अचिंत्यरचनाशक्तिबीजं मायेति निश्चिनु ॥**
**मायाबीजं तदेवैकं सुषुप्तावनुभूयते ॥ ५१ ॥**

**अचिंत्यरचनेति** । अचिंत्यरचनाशक्तिमद्यद्बीजं कारणं सैव मायेत्यर्थः । नन्वेवंविधं कारणं क्व दृष्टमित्यत आह–**मायेति** ॥ ५१ ॥

**अ० टीका**—नन्वस्तु जगतो ह्यचिंत्यरचनात्मकत्वमथापि प्रकृते मायायां किमागतमित्यत आह—**अचिंत्येति** । अचिंत्यरचनाशक्तिशालीत्यर्थः । एतादृशं बीजं " हेतुर्ना कारणं बीजं " इत्यमरात्कारणमिति यावत् । तत्क्वास्तीत्यत्राऽऽह --**मायेति** । मायारूपं बीजं तदेवैकमस्ति यत्सुषुप्तावनुभूयत इत्यन्वयः । सर्वजीवैरिति शेषः ॥ १५१ ॥

**रा० टीका**—कथं तस्य जगद्बीजत्वमित्यत आह–

**जाग्रत्स्वप्नजगत्तत्र लीनं बीज इव द्रुमः ॥**
**तस्मादशेषजगतो वासनास्तत्र संस्थिताः ॥ ५२ ॥**

**जाग्रदिति** । ततः किमित्यत आह--**तस्मादिति** । यतो जगत्कारणं मायाऽतोऽशेषजगद्वासनास्तत्र मायायां तिष्ठंतीत्यर्थः ॥ ५२ ॥

**अ० टीका**—तत्र हेतुमाह—**जाग्रदिति** । तत्र --

" देहवद्वटधानादौ सुविचार्य विलोक्यताम् ।
**क्व धानाः** कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु "

इत्यधस्ताच्छांदोग्योक्तवटधानादिदृष्टांतमूलकप्रतिपादितदृष्टांतमेव स्पष्टयति —**बीज इत्यादिना** । बीजे द्रुम इव तत्र सुषुप्तावनुभूयमाने मायारूपे जाग्रत्स्वप्नरूपजगतः कारणलक्षणे बीजे मायात्मके । जाग्रत्स्वप्नजगज्जाग्रदादिकालिकं विश्वं लीनं यस्माद्भवति तस्मादशेषजगतो वासनास्तत्र संस्थिताः संतीति संबंधः । एतेन तत्त्वविवेकादौ द्योतितदृष्टिसृष्टिपक्षस्याप्यत्रैवांतर्भावो व्यज्यते ॥ १५२ ॥

**रा० टीका** --ततोऽपि किं तत्राऽऽह--

**या बुद्धिवासनास्तासु चैतन्यं प्रतिबिंबति ॥**
**मेघाकाशवदस्पष्टचिदाभासोऽनुमीयताम् ॥ ५३ ॥**

**या बुद्धीति** । ननु तासु प्रतिबिंबोऽस्ति चेत्कुतो नानुभूयत इत्याशंक्यास्पष्टत्वादित्याह–**मेघेति** । तर्हि कुतस्तत्सिद्धिरित्यत आह–**अनुमीयतामिति** ॥ ५३ ॥

**अ० टीका**—नन्वथापि किं तत्राऽऽह—**या बुद्धिवासना** इति । तत्रोक्तप्रतिबिंबाख्यचिदाभास ईश्वरत्वसाधकं प्रागुपन्यस्तं मेघाकाशदृष्टांतं संस्मार्यैते न तदनुमानं सूचयति—**मेघेति** ॥ १५३ ॥

**रा० टीका**—ननु मेघांशोदकस्यास्पष्टाकाशप्रतिबिंबवत्त्वेऽपि तज्जातीयस्य घटोदकस्य स्पष्टाकाशप्रतिबिंबवतः सद्भावान्मेघाकाशानुमानं घटत इह तथाविधदृष्टांताभावात्कथमनुमानोदय इत्याशंक्यात्रापि तथाविधदृष्टांतसंपादनायाऽऽह—

**साभासमेव तद्बीजं धीरूपेण प्ररोहति ॥**
**अतो बुद्धौ चिदाभासो विस्पष्टं प्रतिभासते ॥ ५४ ॥**

**साभासमिति** । चिदाभासविशिष्टं तदेवाज्ञानं बुद्धिरूपेण परिणममानं विस्पष्टचिदाभासवद्भवतीति भावः । एवं चेदनुमानमत्र सुचितं भवति विमता बुद्धिवासनाश्रितप्रतिबिंबवत्यो भवितुमर्हंति बुद्ध्यवस्थाविशेषत्वाद्बुद्धिवृत्तिवदिति ॥ ५४ ॥

**अ० टीका**—एवं निरुक्तरीत्या सर्वात्मकालिकाज्ञानगतसकलबुद्धिसंस्कारप्रतिबिंबितसूक्ष्मचिदाभासरूपमीश्वरं निरूप्य जीवमपि निरूपयति—**साभासमेवेति** । तन्निरुक्तसुषिकालिकाज्ञानाख्यं साभासमेवोक्तेश्वराख्यचिदाभासविशिष्टमेवेत्यर्थः । धीत्यादि सरलमेव । अज्ञानापेक्षया तत्कार्यभूतधियः स्थूलत्वमेव तच्चिदाभासाख्यजीवस्य विस्पष्टप्रतिभाने हेतुरित्याकूतम् ॥ १५४ ॥

**रा० टीका**—एवं जीवेश्वरयोर्मायिकत्वं श्रुत्युक्तमुपपादितमुपसंहरति—

**मायाभासेन जीवेशौ करोतीति श्रुतौ श्रुतम् ॥**
**मेघाकाशजलाकाशाविव तौ सुव्यवस्थितौ ॥ १५५ ॥**

**मायाभासेनेति** । ननु जीवेशयोर्मायिकत्वे समाने कथमवांतरभेदसिद्धिरित्याशंक्य स्पष्टास्पष्टोपाधिमत्त्वेन मेघाकाशजलाकाशयोरिव तत्सिद्धिरित्याह—**मेघाकाशेति** ॥ १५५ ॥

**अ० टीका**—एवं सप्रमाणिकं जीवेश्वरस्वरूपनिरूपणं सदृष्टांतमुपसंहरति—**मायेति** । श्रुतौ श्रुतमिति तु प्रामादिकमेव । श्रुतौ श्रुतौ श्रवणविपर्यासकृतौ यौ जीवेशौ तौ मेघाकाशजलाकाशाविव सुव्यवस्थितौ भवत इत्येव योजनायाः सरसत्वात् ॥ १५५ ॥

**मेघवद्वर्तते माया मेघस्थिततुषारवत् ॥**
**धीवासनाश्चिदाभासस्तुषारस्थखवत्स्थितः ॥ ५६ ॥**

**रा० टीका**—ईशस्य मेघाकाशसाम्यं स्फुटीकरोति—**मेघवदिति** ॥ ५६ ॥

**अ० टीका**—तत्र मेघाकाशदृष्टांतं दार्ष्टांतिके स्पष्टयति—**मेघवदिति** । चिदाभासो निरुक्तवासनासु चितः प्रतिबिंब ईश्वर इत्यर्थः ॥ १५६ ॥

**रा० टीका**—मायाप्रतिबिंबस्येश्वरत्वे किं प्रमाणमित्याशंक्य श्रुतिरित्याह—

**मायाधीनश्चिदाभासः श्रुतो मायी महेश्वरः ॥**
**अंतर्यामी च सर्वज्ञो जगद्योनिः स एव हि ॥ ५७ ॥**

**मायाधीन इति** । न केवलमीश्वरत्वमस्य श्रुतमपि त्वंतर्यामित्वादिकमपि धर्मजातं श्रुतमस्तीत्याह—**अंतर्यामीति** ॥ ५७ ॥

**अ० टीका**—ननु " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् " इति । श्रुतो मायी महेश्वरस्तथा यः पृथिव्यां तिष्ठन्नित्यादिना " **एष त** आत्मांऽतर्याम्यमृतः " इति श्रुतोंऽतर्यामी तथा " **यः सर्वज्ञः** सर्ववित् " इति श्रुतः सर्वज्ञः "**यस्मान्मायी** सृजते विश्व-मेतत् " इति श्रुतो जगद्योनिश्च क इत्यत आह—**मायेति** ॥ १५७ ॥

**रा० टीका**—ननु धीवासनाप्रतिबिंबस्येश्वरत्वादिकं कथं श्रुतिसिद्धमित्याशंक्य त-दुपपादिकां श्रुतिं दर्शयति—

**सौषुप्तमानंदमयं प्रक्रम्यैवं श्रुतिर्जगौ ॥**
**एष सर्वेश्वर इति सोऽयं वेदोक्त ईश्वरः ॥ ५८ ॥**

**सौषुप्तमिति** । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवेत्यादिका श्रुतिर्धीवासनाप्रतिबिंब-रूपस्याऽऽनंदमयस्येश्वरत्वादिकं प्रतिपादयतीत्यर्थः ॥ ५८ ॥

**अ० टीका**—ननूक्तसुषुप्ति (?) ज्ञाननिष्ठबुद्धिसंस्कारप्रतिबिंबितचिदाभास्येश्वरत्वे किं प्रमाणमित्यत्राऽऽह-**सौषुप्तमिति** । " तस्य **प्रियमेव शिरः** " " **मोदो** दक्षिणः पक्षः " " **प्रमोद** उत्तरः पक्षः " इत्यादिश्रुतेर्जाग्रदादिकालिकेष्टदर्शनादिजन्यमनोवृत्त्यात्मकानंदमय-कोशांशत्युदामायेदं विशेषणम् । श्रुतिर्माण्डूक्यगेति शेषः ॥ १५८ ॥

**रा० टीका**—नन्वानंदमयस्य सर्वज्ञत्वादिकमनुभवविरुद्धमित्याशंक्याऽऽह—

**सर्वज्ञत्वादिके तस्य नैव विप्रतिपद्यताम् ॥**
**श्रौतार्थस्याऽवितर्क्यत्वान्मायायां सर्वसंभवात् ॥ ५९ ॥**

सर्वज्ञत्वादिक इति । कुत इत्यत आह—**श्रौतेति** । इतोऽपि न विप्रतिपत्तिः कार्ये-त्याह—**मायायामिति** ॥ ५९ ॥

**अ० टीका**—नन्वेवमपि कथमस्य सर्वज्ञत्वादिकमित्यत आह—**सर्वेति** । तत्र हेतुः—**श्रौतेति** । एवं तर्हि ग्रावाणः प्लवंत इत्यादेर्गुणवादत्वं न स्यादित्यस्वरसादाह—मा-यायामित्यादिशेषेण ॥ १५९ ॥

**रा० टीका**—तन्वनुकूलयुक्त्यभावे श्रुतिरपि ग्रावप्लववाक्यवदर्थवादः स्यादित्याशं-क्य श्रुतिप्रामाण्यसिद्धये सर्वेश्वरत्वादिकमुपपादयति—

**अयं यत्सृजते विश्वं तदन्यथयितुं पुमान् ॥**
**न कोऽपि शक्तस्तेनायं सर्वेश्वर इतीरितः ॥ ६० ॥**

**अयमिति** । अयमानंदमयो यज्जाग्रदादि विश्वं सृजति तन्न केनाप्यन्यथाकर्तुं शक्य-तेऽतोऽयं सर्वेश्वर इत्यर्थः ॥ ६० ॥

**अ० टीका**—एवं चेत्तर्हीश्वरस्यापि जीवत्वं जगत्त्वं च तयोरपीश्वरत्वं च माया संपादयेदित्यत आह—**अयमिति** ॥ १६० ॥

**रा० टीका**—इदानीं सर्वज्ञत्वमुपपादयति—

**अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः ॥**
**ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः ॥ ६१ ॥**

**अशेषेति** । तत्र सौषुप्तेऽज्ञाने कारणभूते कार्यभूतानां सर्वप्राणिबुद्धीनां वासना निवसंति ताभिश्च वासनाभिः सर्वं जगत्क्रोडीकृतं विषयीकृतं तेन सर्वबुद्धिवासनावदज्ञानोपाधिकत्वेन सर्वज्ञ उच्यत इत्यर्थः ॥ ६१ ॥

**अ० टीका**—एवं सार्वज्ञ्यमपि तदीयमुपपादयति—**अशेषेति** । क्रोडीकृतं विषयीकृतमित्यर्थः ॥ १६१ ॥

**रा० टीका**—ननु यदि सर्वज्ञत्वमस्ति तर्हि तत्कुतो नानुभूयत इत्याशंक्य तदुपाधीनां वासनानां परोक्षत्वान्नानुभव इत्याह—

**वासनानां परोक्षत्वात्सर्वज्ञत्वं न हीक्ष्यते ॥**
**सर्वबुद्धिषु तद्दृष्ट्वा वासनास्वनुमीयताम् ॥ ६२ ॥**

**वासनानामिति** । कथं तर्हि तदवगम इत्याशंक्याऽऽह **सर्वबुद्धिष्विति** । सर्वबुद्धिनिष्ठं सर्वज्ञत्वं स्वकारणभूतवासनागतसर्वज्ञत्वपुरःसरं भवितुमर्हति कार्यनिष्ठधर्मविशेषत्वात्पटगतरूपादिवदित्यर्थः ॥ ६२ ॥

**अ० टीका**—एवं तर्हि सुषुप्तौ सर्वेषां सर्वविषयकप्रत्यक्षापत्तिरित्यत आह—**वासनानामिति** । धर्मादिवन्नित्यपरोक्ष्यादित्यर्थः । साक्षिणस्तज्ज्ञानं त्वज्ञातत्वेनैव । अत एव ज्ञातत्वाज्ञातत्वाभ्यां सर्वं साक्षिभास्यमिति विवरणनिर्णयः ॥ १६२ ॥

**रा० टीका**—ससर्वज्ञत्वमुपपाद्येशोऽन्तर्यामीति श्रुत्युक्तमंतर्यामित्वमुपपादयति—

**विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि ॥**
**अंतस्तिष्ठन्यमयति तेनांतर्यामितां व्रजेत् ॥ ६३ ॥**

**विज्ञानेति** । अन्यत्र पृथिव्यादौ तिष्ठन्यमयति यतस्तेनेत्यन्वयः ॥ ६३ ॥

**अ० टीका**—एवमस्यांतर्यामित्वमप्युपपादयति—**विज्ञानमयेत्यादिद्वाभ्याम्** । अन्यत्र पृथ्व्यादौ ॥ १६३ ॥

**बुद्धौ तिष्ठन्नांतरोऽस्या धियाऽनीक्ष्यश्च धीवपुः ॥**
**धियमंतर्यमयतीत्येवं वेदेन घोषितम् ॥ ६४ ॥**

**रा० टीका**—अस्मिन्नर्थेऽन्तर्यामिब्राह्मणं कृत्स्नं प्रमाणमिति दर्शयितुं तदेकदेशभूतं यो विज्ञाने तिष्ठन्नित्यादिवाक्यमर्थतोऽनुक्रामति—**बुद्धाविति** ॥ ६४ ॥

**अ० टीका**—तत्र यो विज्ञाने तिष्ठन्निति श्रुतिमर्थतः संग्रथयति **बुद्धाविति** ॥ १६४ ॥

**तंतुः पटे स्थितो यद्वदुपादानतया तथा ॥**
**सर्वोपादानरूपत्वात्सर्वत्रायमवस्थितः ॥ १६५ ॥**

**रा० टीका**—इदानीमंतर्यामिब्राह्मणस्य प्रतिपर्यायव्याख्याने ग्रंथबाहुल्यभयाद्व्याख्यानस्य सर्वपर्यायसंचारित्वसिद्धये यः सर्वेषु भूतेष्विति पर्यायं व्याचक्षाणो यः सर्वेषु भूतेषु तिष्ठन्नित्यस्यार्थं दृष्टांतेनाऽऽह—**तंतुरिति** ॥ १६५ ॥

**अ० टीका**—तत्रोपपत्तिमपि सदृष्टांतं प्रकटयति—**तंतुरिति** ॥ १६५ ॥

**रा० टीका**—ननूपादानत्वे सर्वत्रायमवस्थितश्चेत्किमिति सर्वत्र नोपलभ्यत इत्याशंक्य सर्वांतरत्वादित्याह—

**पटादप्यांतरस्तन्तुस्तंतोरप्यंशुरांतरः ॥**
**आंतरत्वस्य विश्रांतिर्यत्रासावनुमीयताम् ॥ ६६ ॥**

**पटादपीति** । अत्रेदमनुमानमान्तरत्वतारतम्यं क्वचिद्विश्रांतं तारतम्यत्वादणुत्वतारतम्यवदिति ॥ ६६ ॥

**अ० टीका**—नन्वंतर्यामिणः सर्वोपादानरूपत्वे घटादिषु मृदादिवत्सर्वत्र प्रत्यक्षत्वापत्तिरिति चेत्सत्यम् । किमुपादानत्वेन प्रत्यक्षत्वमापाद्यतेऽधिष्ठानसामान्यांशेन वा । नाऽऽद्यः । घट्टितपटवत्सौषुप्ताविद्यागतधीवासनाप्रतिबिंबितचिदाभासरूपेश्वरस्यास्योपाधिपारोक्ष्यस्य वासनानां परोक्षत्वादित्यादिनाऽधुनैवोक्तत्वात् तदुपधेयस्यापि तथात्वात् । नाप्यंत्यः । एतस्याधिष्ठानत्वाभावात् । धौतपटवच्छुद्धस्यैव सर्वदृश्यभ्रमाधिष्ठानत्वेन तत्सामान्यांशस्य सत्तात्मकप्रकाशस्य स्वप्रकाशत्वेन सर्वत्र नामरूपभ्रमस्वरूपलाभार्थमेव प्रत्यक्षताया इष्टत्वाच्च । तस्मादयमनुमानागमाभ्यामेवावगम्य इत्याह—**पटादपीति** ॥ १६६ ॥

**रा० टीका**—नन्वांतरत्वेऽप्यंश्वादिवदंतर्यामिणो दर्शनं किं न स्यादित्याशंक्य तेषामिव बाह्यत्वाभावान्न दृश्यत इत्यभिप्रायेणाऽऽह—

**द्वित्रांतरत्वकक्षाणां दर्शनेऽप्ययमांतरः ॥**
**न वीक्ष्यते ततो युक्तिश्रुतिभ्यामेव निर्णयः ॥ ६७ ॥**

**द्वित्रान्तरत्वेति** । कुतस्तर्हि तन्निर्णय इत्यत आह—**तत इति** । अचेतनस्य चेतनाधिष्ठानमंतरेण प्रवृत्त्यनुपपत्तिर्युक्तिः । श्रुतिस्तूदाहृतैव ॥ ६७ ॥

**अ० टीका**—ननु पटादप्यांतरांतराणां तंत्वादीनां प्रत्यक्षवदंतर्यामिण उपादानीभूतस्याप्यज्ञानाद्यपहितत्वान्नैवेक्ष्येति ततस्तत्सत्त्वे किं मानमित्याशंक्य समाधत्ते—**द्वित्र्यांतरत्वेति** । द्वेवा तिस्रोवांऽऽतरत्वकक्षा अंतरवस्थानभूमयस्तासामित्यर्थः ॥ १६७ ॥

**पटरूपेण संस्थानात्पटस्तंतोर्वपुर्यथा ॥**
**सर्वरूपेण संस्थानात्सर्वमस्य वपुस्तथा ॥ ६८ ॥**

**रा० टीका**—यस्य सर्वाणि भूतानि शरीरमित्यस्यार्थमाह—**पटरूपेणेति** । पटरूपेणावस्थितस्य तंतोः पटः शरीरं यथा, एवं सर्वरूपेणावस्थितस्य सर्वशरीरमित्यर्थः ॥ ६८ ॥

**अ० टीका**—अथाप्यस्य यः सर्वत्र तिष्ठन्नित्यादिश्रुत्युक्तं सर्वशरीरत्वं कथमित्यत आह—**पटरूपेणेति** ॥ १६८ ॥

**तंतोः संकोचविस्तारचलनादौ पटस्तथा ॥**
**अवश्यमेव भवति न स्वातंत्र्यं पटे मनाक् ॥ ६९ ॥**

**रा० टीका**—यः सर्वाणि भूतान्यांतरो यमयतीति वाक्यस्य तात्पर्यं सदृष्टांतमाह-श्लोकद्वयेन—**तंतोरिति** ॥ ६९ ॥

**अ० टीका**—अत एवायमेव स्वतंत्र इत्याह—**तंतोरितिप्रभृतिद्वाभ्याम्** ॥ १६९ ॥

**तथाऽन्तर्याम्ययं यत्र यया वासनया यथा ॥**
**विक्रियेत तथाऽवश्यं भवत्येव न संशयः ॥ १७० ॥**

**रा० टीका**—तन्तुसंकोचादिना पटसंकोचादिर्यथा भवत्येवं पृथिव्यादिषूपादानत्वेन स्थितोऽन्तर्यामी यथा यया वासनया यथा घटादिकार्यरूपेण विक्रियेत तथा तत्कार्यजातमवश्यं भवतीति भावः ॥ १७० ॥

**अ० टीका**—तथेति । यावद्दृश्यमिति शेषः ॥ १७० ॥

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ७१ ॥**

**रा० टीका**—एवमन्तर्यामिप्रतिपादिकां श्रुतिमुपन्यस्य स्मृतिमप्युपन्यस्यति—**ईश्वर इति** ॥ ७१ ॥

**अ० टीका**—तत्र स्मृतिं प्रमाणतयोदाहरति **ईश्वर इति** ॥ १७१ ॥

**रा० टीका**—सर्वभूतानामिति पदस्यार्थमाह—

**सर्वभूतानि विज्ञानमयास्ते हृदये स्थिताः ॥**
**तदुपादानभूतेशस्तत्र विक्रियते खलु ॥ ७२ ॥**

**सर्वभूतानीति** । ते च हृदयान्तर्गते स्थिताः । ननु तेषां कुतो हृदयस्थानमित्याशंक्य हृदन्तर्यामिणो विज्ञानमयाकारेण परिणामादित्याह—**तदुपादानेति** ॥ ७२ ॥

**अ० टीका**—उदाहृतवाक्यं व्याचष्टे **सर्वभूतानीत्यादित्रिभिः** । हृदये समष्ट्यन्तःकरणे । विक्रियते तत्तत्कर्मफलप्रदानार्थं तथा तथा विकारं वासनाद्युपहितत्वेन प्राप्नोतीत्यर्थः । जीवेषु तत्तत्कामादिक्रियापारतन्त्र्यकारि करणपरिणामो भवतीति भावः ॥ १७२ ॥

**रा० टीका**—यन्त्रारूढानीत्यत्र यन्त्रारोहणशब्दयोरर्थमाह—

**देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानिता ॥**
**विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥ ७३ ॥**

**देहादीति** । भ्रामयन्निति पदं प्रकृत्यर्थमाह—**विहितेति** ॥ ७३ ॥

**अ० टीका**—अथ यन्त्रारोहणपदार्थौ कथयति **देहादीति** । एवं भ्रामयन्नित्यत्र धात्वर्थं कथयति—**विहितेति** । भ्रमु अनवस्थाने इति हि धातुसूत्रम् । एवं च प्रवृत्तौ तदस्त्येव ॥ १७३ ॥

**विज्ञानमयरूपेण तत्प्रवृत्तिस्वरूपतः ॥**
**स्वशक्त्येशो विक्रियते मायया भ्रामणं हि तत् ॥ ७४ ॥**

**रा० टीका**—इदानीं णिच्प्रत्ययमायापदयोरर्थमाह **विज्ञानमयेति** ॥ ७४ ॥

**अ० टीका**—अथ प्रत्ययमायापदयोरर्थौ कथयति **विज्ञानमयेति** । **तदिति** । तत्र प्रवृत्तिर्विहितादिविषये देहेन्द्रियमनःसंचारपरंपरेत्यर्थः । स्वशक्त्या सौषुप्तिकाज्ञानगततत्संस्कारसंहत्येति यावत् । विक्रियते निरुक्तजीवेभ्यस्तत्तत्कर्मफलप्रदानार्थं तत्तदन्तःकरणोपाधिच्छेदे जन्मानुकूलो भवतीत्यर्थः ॥ १७४ ॥

**अंतर्यमयतीति युक्त्याऽयमेवार्थः श्रुतौ श्रुतः ॥**
**पृथिव्यादिषु सर्वत्र न्यायोऽयं योज्यतां धिया ॥ १७५ ॥**

**रा० टीका**—श्रौतस्य यमयतीतिपदस्याप्ययमेवार्थ इत्याह—**अंतर्यमयतीति** । उक्तव्याख्यानं पर्यायांतरेष्वतिदिशति—**पृथिव्यादिष्विति** ॥ १७५ ॥

**अ० टीका**—निरुक्तस्मृतिमूलीभूताया अंतर्यामिब्राह्मणश्रुतेरप्ययमेवार्थ इत्याह—**अंतर्यमयतीति** । पृथिव्यादिपर्यायांतरेष्वप्युक्तमर्थमतिदिशति—**पृथिव्यादिष्विति** ॥१७५॥

**रा० टीका**—प्रवृत्तिजातस्य सर्वेश्वराधीनत्वे वचनांतरमुदाहरति—

**जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ॥**
**केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥७६॥**

**जानामि धर्ममिति** ॥ ७६ ॥

**अ० टीका**—उक्तेऽर्थे वचनांतरमप्युदाहरति—**जानामीति** ॥ १७६ ॥

**नार्थः पुरुषकारेणेत्येवं मा शंक्यतां यतः ॥**
**ईशः पुरुषकारस्य रूपेणापि विवर्तते ॥ ७७ ॥**

**रा० टीका**—ननु प्रवृत्तेरीश्वराधीनत्वे पुरुषप्रयत्नो व्यर्थः स्यादित्याशंक्य पुरुषप्रयत्नस्यापीश्वररूपत्वान्नैवमिति परिहरति—**नार्थ इति** । अर्थः प्रयोजनं पुरुषकारः पुरुषप्रयत्नः ॥ ७७ ॥

**अ० टीका**—नन्वेवं चेत्तर्हि सर्वत्र पुंप्रयत्नवैफल्यमेव तथा च तद्विषयकविधिनिषेधशास्त्रमखिलमपि व्यर्थमेवेत्याशंक्य समाधत्ते—**नार्थ इति** ॥ १७७ ॥

**रा० टीका**—ननु पुरुषप्रयत्नस्यापीश्वररूपत्वे यमयति भ्रामयतीति प्रतिपादितमंतर्यामिप्रेरणं वृथा स्यादित्याशंक्य तद्बोधेन स्वात्मासंगत्वज्ञानलक्षणफलस्य सत्त्वान्नैवमिति परिहरति—

**ईदृग्बोधेनेश्वरस्य प्रवृत्तिर्मैव वार्यताम् ॥**
**तथाऽपीशस्य बोधेन स्वात्मासंगत्वधीजनिः ॥ ७८ ॥**

**ईदृगिति** । ईदृग्बोधेनेशस्य पुरुषकारादिरूपेणाप्यवस्थानज्ञानेन प्रवृत्तिरंतर्यामिरूपेण प्रेरणा ॥ ७८ ॥

**अ० टीका**—ननु पुरुषप्रयत्नोऽपीश्वररूप एवेति ज्ञाने सत्यपीश्वरस्य कर्मफलप्रदानार्थमस्मदाद्यंतर्यमनप्रवृत्तिस्तु नैव निवर्तेत तथा च किं फलमुक्तबोधस्येत्यत आह—**ईदृगिति** । इयं पुण्यासादने मत्प्रवृत्तिरीश्वरस्वरूपैव तथा चाहमसंग एवेति बोधोदयः फलमित्याशयः ॥ १७८ ॥

**रा० टीका**—आत्मनोऽसंगत्वज्ञानेनापि किं प्रयोजनमित्यत आह—

**तावता मुक्तिरित्याहुः श्रुतयः स्मृतयस्तथा ॥**
**श्रुतिस्मृती ममैवाज्ञे इत्यपीश्वरभाषितम् ॥ ७९ ॥**

**तावतेति** । श्रुतिस्मृत्युदितस्यानतिलंघनीयत्वे स्मृतिं दर्शयति—**श्रुतिस्मृती इति**॥७९॥

**अ० टीका**—ततः किं तत्राऽऽह—**तावतेति** । तयोरपीश्वराज्ञात्वमेवेत्यत्रापि स्मृतिमाह—**श्रुतिस्मृती इति** ॥ १७९ ॥

**रा० टीका**—श्रुत्याऽपीश्वरस्य भीतिहेतुत्वमुक्तमित्याह—

**आज्ञाया भीतिहेतुत्वं भीषाऽस्मादिति हि श्रुतम् ॥**
**सर्वेश्वरत्वमेतत्स्यादंतर्यामित्वतः पृथक् ॥ १८० ॥**

**आज्ञाया इति** । ईश्वरस्य भीतिहेतुत्वं किमर्थमुक्तमित्याशंक्य सर्वेश्वरत्वमस्यांतर्यामित्वतः पार्थक्यमिद्धय इति मत्वाऽऽह—**सर्वेश्वरेति** ॥ १८० ॥

**अ० टीका**—तदनुल्लंघनीयत्वे श्रुतिमुदाहरति—**आज्ञाया इति** । एवं च **एष सर्वेश्वर** इति प्रागुपन्यस्तश्रुत्युक्तसर्वेश्वरत्वमिदं प्रपंचितादंतर्यामित्वलक्षणसर्वप्रेरकत्वात्तन्निष्ठमायिकधर्मात्सर्ववशास्तृत्वलक्षणं तादृशं धर्मांतरमेव भवतीति भावः ॥ १८० ॥

**एतस्य वा अक्षरस्य प्रशासन इति श्रुतिः ॥**
**अंतः प्रविष्टः शास्ताऽयं जनानामिति च श्रुतिः ॥ ८१ ॥**

**रा० टीका**—बहिरंतश्चेश्वर एव नियामक इत्यत्र श्रुतिद्वयमाह **एतस्येति** ॥ ८१ ॥

**अ० टीका**—अत्रैव श्रुत्यंतरद्वयमपि **काण्वं तैत्तिरीयकं** च क्रमात्समुदाहरति **एतस्य वा इति** ॥ १८१ ॥

**रा० टीका**—क्रमप्राप्तस्यैव योनित्वस्यार्थमाह—

**जगद्योनिर्भवेदेष प्रभवाप्ययकृत्त्वतः ॥**
**आविर्भावतिरोभावावुत्पत्तिप्रलयौ मतौ ॥ ८२ ॥**

**जगद्योनिरिति** । प्रतिज्ञातार्थे प्रभवाप्ययौ हि भूतानामिति **वाक्यं** हेतुत्वेन योजयति—**प्रभवेति** । प्रभवाप्ययावुत्पत्तिप्रलयौ तत्कर्तृत्वाज्जगद्योनिरित्यर्थः । उत्पत्तिप्रलयशब्दयोर्विवक्षितमर्थमाह—**आविर्भावेति** । उत्पत्तिप्रलयावाविर्भावतिरोभावौ मताविति योजना ॥ ८२ ॥

**अ० टीका**—एवं प्राक्प्रतिज्ञातमुक्तरूपस्येश्वरस्य विश्वकारणत्वमप्युपपादयति—**जगदिति** । तत्र हेतुः **प्रभवेति** । स्वसंमतौ तौ व्युत्पादयति—**आविर्भावेति** ॥ १८२ ॥

**रा० टीका**—आविर्भावकारित्वं सदृष्टांतमुपपादयति

**आविर्भावयति स्वस्मिन्विलीनं सकलं जगत् ॥**
**प्राणिकर्मवशादेष पटो यद्वत्प्रसारितः ॥ ८३ ॥**

**आविर्भावयतीति** । यथा संकुचितश्चित्रपटः स्वस्य प्रसारणेन स्वनिष्ठानि चित्राण्याविर्भावयत्येवमीशोऽपीत्यर्थः ॥ ८३ ॥

**अ० टीका**—ननु कथमयं जगदाविर्भावयतीत्यत्राऽऽह—**आविर्भावयतीति** । तत्र दृष्टांतं स्पष्टयति—**पटो यद्वदिति** ॥ १८३ ॥

**रा० टीका**—तस्यैव प्रलयकारणत्वं दर्शयति —

**पुनस्तिरोभावयति स्वात्मन्येवाखिलं जगत् ॥**
**प्राणिकर्मक्षयवशात्संकोचितपटो यथा ॥ ८४ ॥**

**पुनरिति** । स एव पटः संकुचितश्चित्राणि यथा तिरोभावयति तद्वदित्यर्थः ॥ ८४ ॥

**अ० टीका**—एवमेव तिरोभावप्रकारमप्याह—**पुनरिति** ॥ १८४ ॥

**रा० टीका**—आविर्भावतिरोभावयोर्दृष्टांतांतराणि दर्शयति—

**रात्रिघस्रौ सुप्तिबोधावुन्मीलननिमीलने ॥**
**तूष्णींभावमनोराज्ये इव सृष्टिलयाविमौ ॥ १८५ ॥**

**रात्रिघस्राविति** । स्पष्टोऽर्थः ॥ १८५ ॥

**अ० टीका**—तत्रापि दार्ढ्यार्थं दृष्टांतांतरगण्याह–**रात्रिघस्राविति** ॥ १८५ ॥

**आविर्भावतिरोभावशक्तिमत्त्वेन हेतुना ॥**
**आरंभपरिणामादिचोद्यानां नात्र संभवः ॥ ८६ ॥**

**रा० टीका**—नन्वीश्वरस्य जगद्योनित्वं किमारंभकत्वेन किंवा तदाकारपरिणामत्वेन । नाऽऽद्यः । अद्वितीयस्याऽऽरंभकत्वायोगात् । न द्वितीयः । निरवयवस्य परिणामासंभवादित्याशंक्य विवर्तवादाश्रयणान्नायं दोष इति परिहरति–**आविर्भावेति** ॥ ८६ ॥

**अ० टीका**—सिद्धांते विवर्तवादिनामस्माकमाविर्भावाद्यखिलकार्यं मायावित्वादेवोपपद्यत इति नात्राऽऽरंभादिवादांतरशंकावकाश इत्याह– **आविर्भावतिरोभावेति** ॥ १८६ ॥

**अचेतनानां हेतुः स्याज्जाड्यांशेनेश्वरस्तथा ॥**
**चिदाभासांशतस्त्वेष जीवानां कारणं भवेत् ॥ ८७ ॥**

**रा० टीका**—नन्वेक एवेश्वरः कथं चेतनाचेतनजगदुपादानं भविष्यतीत्याशंक्य उपाधिप्राधान्येनाचेतनोपादानं चित्प्राधान्येन चेतनोपादानं च भविष्यतीत्याह –**अचेतनानामिति** ॥ ८७ ॥

**अ० टीका**—नन्वेवं भवतूक्तेश्वरः कारणं जडस्याकाशादिजगतस्तथाऽपि—

" जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः " ॥

इति **प्राचीनाचार्य**वचनादनादिजीवानां तु नैवायं हेतुस्तथा च प्रतिज्ञातं जगद्योनित्वं संकोच्येतैवेत्यत आह—**अचेतनानामिति** । यथा सूर्यः स्वकिरणांशेन मृगजलाविर्भावहेतुः स्वनिष्ठकल्पिततद्धेतुत्वरूपबिंबत्वांशेन तच्चाकचक्यरूपप्रतिबिंबानामप्याविर्भावे हेतुस्तद्वदित्याकूतम् । एवं च नात्र विरोधगंधोऽपीति दिक् ॥ १८७ ॥

**रा० टीका**—ननु मायाविन ईश्वरस्य जगत्कारणत्वप्रतिपादनमनुपपन्नं **सुरेश्वराचार्यैः** परमात्मन एव तदभिधानादिति शंकते द्वाभ्याम्–

**तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् ॥**
**परः कारणतामेति भावनाज्ञानकर्मभिः ॥ ८८ ॥**

**तमःप्रधान इति** । तमःप्रधानस्तमोगुणप्रधानमायोपाधिकः क्षेत्राणां शरीरादीनां भावनाज्ञानकर्मभिर्भावना संस्कारो ज्ञानं देवताध्यानादि कर्म पुण्यापुण्यलक्षणं तैर्निमित्तभूतैरित्यर्थः ॥ ८८ ॥

**अ० टीका**—तत्रापि वार्तिकमतेनैव सह विरोधमाशंक्य समाधातुं तद्वचः पठनपूर्वकं प्रतिजानीते–**तमःप्रधान** इत्यादिद्वाभ्याम् ॥ १८८ ॥

**इति वार्तिककारेण जडचेतनहेतुना ॥**
**परमात्मन एवोक्ता नेश्वरस्येति चेच्छृणु ॥ ८९ ॥**

**रा० टीका**—॥ ८९ ॥

**अ० टीका**—इतीति । परमात्मनः शुद्धब्रह्मण एव । वस्तुतस्त्वियं शंकैव कस्यचित्पूर्वापरस्वारस्यानभिज्ञस्य मादृशाव्युत्पन्नमतिविशद्यार्थैवाचार्यैरत्रानूद्य दूषितेति तत्त्वम् । परपदेन शुद्धग्रहे तमःप्राधान्यादेरेवासंभवात् ॥ १८९ ॥

**अन्योन्याध्यासमत्रापि जीवकूटस्थयोरिव ॥**
**ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः ॥ १९० ॥**

**रा० टीका**—त्वंपदार्थ इव तत्पदार्थेऽप्यधिष्ठानारोपयोरन्योन्याध्यासस्य विवक्षितत्वान्नैवमिति परिहरति—**अन्योन्याध्यासमिति** ॥ १९० ॥

**अ० टीका**—प्रतिज्ञाते हेतुं द्योतयति—**अन्योन्येति** ॥ १९० ॥

**सत्यं ज्ञानमनन्तं यद्ब्रह्म तस्मात्समुत्थिताः ॥**
**खं वाय्वग्निजलोर्व्योषध्यन्नदेहा इति श्रुतिः ॥ ९१ ॥**

**रा० टीका**—ननु **सुरेश्वराचार्यै**रीश्वरब्रह्मणोरन्योन्याध्यासः सिद्धवत्कृत्य व्यवहृत इति कुतोऽवगम्यत इत्याशंक्य श्रुत्यर्थपर्यालोचनवशादिति दर्शयितुं श्रुतिमर्थतः पठति—**सत्यमिति** ॥ ९१ ॥

**अ० टीका**—ननु कथमीशब्रह्मणोरन्योन्याध्यासः **श्रीमत्सुरेश्वराचार्यचरणानां** संमत इत्याशंक्य तमुपपादयितुं प्रतिवाद्यभिमतोक्तवार्तिकवचने शुद्धब्रह्मकारणत्ववादमूलीभूतां श्रुतिमेवार्थतः संग्रहयति—**सत्यमिति** ॥ १९१ ॥

**रा० टीका**—भवत्वेषा श्रुतिस्तया कथमन्योन्याध्यासावगतिरित्यत आह—

**आपातदृष्टितस्तत्र ब्रह्मणो भाति हेतुता ॥**
**हेतोश्च सत्यता तस्मादन्योन्याध्यास इष्यते ॥ ९२ ॥**

**आपातेति** । तत्र तस्यां श्रुतौ सत्यादिलक्षणस्य निर्गुणब्रह्मणो जगत्कारणत्वं जगत्कारणस्य मायाधीनचिदाभासस्य च सत्यत्वमापाततः प्रतीयमानमन्योन्याध्यासमन्तरेण न घटत इति भावः ॥ ९२ ॥

**अ० टीका**—एवं समुदाहृतश्रुतिरहस्यादेवोक्तान्योन्याध्यासं साधयति—**आपातेति** । पातमज्ञानस्तंभं मर्यादीकृत्येत्यापातं तस्मादर्वाग्या दृष्टिः संशयात्मिका चित्तवृत्तिस्तस्या इत्यर्थः । ब्रह्मणः सत्यादिलक्षणस्य निर्गुणस्य ब्रह्मणः । हेतुता जगत्कारणता भाति प्रतीयते न तु प्रमीयत इत्यर्थः । तत्र हेतुः—**हेतोरिति** । हेतोरीशितुः सत्यता प्रतीयतेऽतोऽन्योन्याध्यास इष्यत इत्यन्वयः । " **वाचारंभणं** विकारो नामधेयं मृत्तिकेत्येव सत्यम् " इत्यादिश्रुत्यंतरगद्धतुना हि सत्यत्वधर्मवत एव न तु निर्धर्मकस्य ब्रह्मणस्तस्मात्सत्यत्वादिधर्मावच्छिन्नेश्वरस्य तदुपलक्षितनिर्धर्मकब्रह्मणा सहावश्यमन्योन्याध्यासोऽङ्गीकार्य इति तात्पर्यम् । एवं च कारणोपाधिरीश्वर इति " **अस्मान्मायी** सृजते विश्वमेतत् " इति च श्रुत्यंतरमप्येवमनुगृहीतम् ॥ १९२ ॥

**अन्योन्याध्यासरूपेणासावन्नलिप्तपटो यथा ॥**
**घट्टितेनैकतामेति तद्भ्रांत्यैकतां गतः ॥ ९३ ॥**

**रा० टीका**—एवमन्योन्याध्यासेसिद्धमीश्वरब्रह्मणोरेकत्वं पूर्वत्रोदाहृतं घट्टितपटदृष्टांतस्मरणेन द्रढयति—**अन्योन्येति** ॥ ९३ ॥

**अ० टीका**—एवं परस्पराध्याससिद्धमीश्वरस्य स्वरूपं प्रागुक्तदृष्टांतं स्मारयन्नेव निरूपयति—**अन्योन्याध्यासेति** ॥ १९३ ॥

**रा० टीका**—प्रतीतौ पूर्वोक्तमत्र दृष्टांतांतरं दर्शयति—

**मेघाकाशमहाकाशौ विविच्येते न पामरैः ॥**
**तद्वद्ब्रह्मेशयोरैक्यं पश्यंत्यापातदर्शिनः ॥ १९४ ॥**

**मेघाकाशेति** । तद्वद्ब्रह्मेशयोरैक्यं पश्यंति न भेदमित्यर्थः ॥ १९४ ॥

**अ० टीका**—एवमीश्वरब्रह्मणोरैक्याध्यासे दृष्टांतमभिधाय भेदाभानेऽपि तमाह—**मेघेति** ॥ १९४ ॥

**रा० टीका**—कुतस्तर्हि ब्रह्मेशयोर्भेदावगतिरित्यत आह—

**उपक्रमादिभिर्लिंगैस्तात्पर्यस्य विचारणात् ॥**
**असंगं ब्रह्म मायावी सृजत्येष महेश्वरः ॥ १९५ ॥**

**उपक्रमेति** । उपक्रमोपसंहारावभ्यासोऽपूर्वफलमर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णय इत्युक्तैः पड्भिर्लिंगैः श्रुतितात्पर्यावधारणे सति ब्रह्मासंगं मायाविसृष्टेत्यगवम्यत इति शेषः ॥ १९५ ॥

**अ० टीका**—फलितमाह—**उपक्रमादिभिरिति** ॥ १९५ ॥

**रा० टीका**—श्रुतावुपक्रमोपसंहारैकरूपप्रदर्शनेनोक्तं ब्रह्मणोऽसंगत्वं स्पष्टयति—

**सत्यं ज्ञानमनंतं चेत्युपक्रम्योपसंहृतम् ॥**
**यतो वाचो निवर्तंत इत्यसंगत्वनिर्णयः ॥ ९६ ॥**

**सत्यमिति** । अतोऽसंगत्वनिर्णयो भवतीति शेषः ॥ ९६ ॥

**अ० टीका**—तत्र ब्रह्मासंगत्वे लिंगमाह—**सत्यमिति** ॥ १९६ ॥

**रा० टीका**—मायाविन ईश्वरस्य स्रष्टृत्वप्रतिपादिकां श्रुतिमर्थतो दर्शयति—

**मायी सृजति विश्वं संनिरुद्धस्तत्र मायया ॥**
**अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत् ॥ ९७ ॥**

**मायीति** । " अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः " इति श्रुतिरीश्वरस्य स्रष्टृत्वं जीवस्य तत्र जगति बद्धत्वं च दर्शयतीति भावः ॥ ९७ ॥

**अ० टीका**—मायिनः स्रष्टृत्वे श्रुतिमेवाऽऽह—**मायीति** । " **अस्मान्मायी सृजते** विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः " इति **श्वेताश्वतरश्रुतिः** ॥ १९७ ॥

**रा० टीका**—एवमानंदमयस्येश्वरस्य जगत्कारणत्वं प्रतिपाद्य तस्माज्जगदुत्पत्तिप्रकारमाह—

**आनंदमय ईशोऽयं बहु स्यामित्यवैक्षत ॥**
**हिरण्यगर्भरूपोऽभूत्सुप्तिः स्वप्नो यथा भवेत् ॥ १९८ ॥**

**आनंदमय इति ।** ईक्षित्वा च हिरण्यगर्भरूपोऽभूदित्यन्वयः । तत्र दृष्टांतमाह—**सुप्तिरिति** ॥ १९८ ॥

**अ० टीका**—एवमीश्वरं समष्ट्यानंदमयकोशावच्छिन्नचैतन्यं निर्णीय तस्य सृष्टिव्यापारं स्पष्टयति—**आनंदमय इति** । यदाऽवैक्षत तदा हिरण्यगर्भरूपोऽभूदिति संबंधः । तत्र दृष्टांतस्तु स्पष्ट एव ॥ १९८ ॥

**रा० टीका**—" तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादौ क्रमेण सृष्टिश्रवणादिदं सर्वमसृजतेति युगपच्छ्रवणाच्च कस्योपादेयत्वं कस्य वा हेयत्वमित्याकांक्षायां श्रुतियुक्त्युपेतत्वादुभयं ग्राह्यमित्याह—

**क्रमेण युगपद्वैषा सृष्टिर्ज्ञेया यथाश्रुति ॥**
**द्विविधश्रुतिसद्भावाद्द्विविधस्वप्नदर्शनात् ॥ १९९ ॥**

**क्रमेणेति ।** एषा जगत्सृष्टिर्द्विविधश्रुतिसद्भावात्क्रमेण युगपद्वा यथाश्रुति ज्ञेयेति योजना । तत्रोपपत्तिर्द्विविधस्वप्नदर्शनादिति लोके क्रमयुक्तस्य चाक्रमयुक्तस्य च स्वप्नपदार्थजातस्य दर्शनादिति भावः ॥ १९९ ॥

**अ० टीका**—ननु किं सृष्टेः क्रमिकत्वमन्यथा वेत्यत्राऽऽह—**क्रमेणेति** । " **तस्माद्वा** एतस्मादात्मन आकाशः संभूत " इति क्रमश्रवणम् । **इदं** सर्वमसृजतेति युगपच्छ्रवणम् ॥ १९९ ॥

**रा० टीका**—हिरण्यगर्भस्य स्वरूपं निरूपयति—

**सूत्रात्मा सूक्ष्मदेहाख्यः सर्वजीवघनात्मकः ॥**
**सर्वाहंमानधारित्वात् क्रियाज्ञानादिशक्तिमान् ॥ २०० ॥**

**सूत्रात्मेति ।** सूत्रात्मा पटे सूत्रमिव जगत्यनुस्यूत आत्मा स्वरूपं यस्य स सूक्ष्मदेह इत्याख्या यस्य स तथाविधः । सर्वजीवघनात्मकः सर्वेषां जीवानां लिंगशरीराभिमानिनां घनात्मकः समष्टिस्वरूपः । तत्र हेतुः **सर्वाहंमानेति** । सर्वेषु व्यष्टिलिंगशरीरेष्वहंमानवत्त्वादिति भावः । इच्छाज्ञानक्रियाशक्तिमांश्च ॥ २०० ॥

**अ० टी०**—ननु सर्वेश्वर एव किंचिदुपाध्याधिक्याद्धिरण्यगर्भस्तथापि किं तद्रूपं तत्राऽऽह—**सूत्रेति** ॥ २०० ॥

**रा० टीका**—हिरण्यगर्भावस्थायां जगत्प्रतीतौ दृष्टांतमाह—

**प्रत्यूषे वा प्रदोषे वा मग्नो मंदे तमस्ययम् ॥**
**लोको भाति यथा तद्वदस्पष्टं जगदीक्ष्यते ॥ २०१ ॥**

**प्रत्यूष इति ।** प्रत्यूष उषःकालः ॥ २०१ ॥

**अ० टी०**—तेन तदानीं जगत्कथमीक्ष्यते सांकल्पिकमित्यपेक्षायां तत्सदृष्टांतं स्पष्टयति—**प्रत्यूषे वेति** ॥ २०१ ॥

**रा० टीका**—एवं लोकप्रसिद्धदृष्टांतमभिधाय **यथा धौत इति** पूर्वोक्तश्लोकेऽभिहितं लांछितं पटं दृष्टांतयति—

**सर्वतो लांछितो मष्या यथा स्याद्धट्टितः पटः ॥**
**सूक्ष्माकारैस्तथेशस्य वपुः सर्वत्र लांछितम् ॥ २ ॥**

**सर्वत इति** । यथा घट्टितः पटो मषीमयैराकारविशेषैर्लांछितो भवति तथा मायिन ईश्वरस्य वपुरपंचीकृतभूतकार्यैर्लिंगशरीरैर्लांछितमित्यर्थः ॥ २ ॥

**अ० टी०**—अथ प्राक्तनदृष्टांतमपि तत्र योजयति—**सर्वत इति** । यथा घट्टितः पटो मष्या सूक्ष्माकारैः सर्वतो लांछितो भवति तथेशस्य वपुः सूक्ष्माकारैः सर्वत्र लांछितं स्यादिति योजना ॥ २०२ ॥

**सस्यं वा शाकजातं वा सर्वतोऽकुरितं यथा ॥**
**कोमलं तद्वदेवैष पेलवो जगदंकुरः ॥ ३ ॥**

**रा० टीका**—बुद्ध्यारोहाय वैभवाद्दृष्टांतांतरमाह—**सस्यं वेति** ॥ ३ ॥

**अ० टी०**—पुनरपि दार्ढ्यार्थं दृष्टांतांतरं प्रकटयति—**सस्यं वेति** "पेलवं मृदुलं तनु" इत्यमरः ॥ २०३ ॥

**रा० टीका**—एवं सूत्रात्मस्वरूपं विशदीकृत्य तस्यैवावस्थाभेदं पंचीकृतभूतकार्योपाधिकं विराजं दृष्टांतत्रयेण विशदयति—

**आतपाभातलोको वा पटो वा वर्णपूरितः ॥**
**सस्यं वा फलितं यद्वत्तथा स्पष्टवपुर्विराट् ॥ ४ ॥**

**आतपेति** । सूर्योदयानंतरमातपेन प्रकाशितो लोक आतपाभातलोकः ॥ ४ ॥

**अ० टी०**—एवं हिरण्यगर्भस्वरूपं तत्कार्यं तदवस्थापन्नजगत्स्वरूपं च प्रपंच्याथ तस्य किंचिदधिकोपाधिविशेषस्य विराट्त्वं प्रकटयति—**आतपेत्यादिदृष्टांतत्रयेण** ॥ २०४ ॥

**रा० टीका**—तत्सद्भावे प्रमाणमाह—

**विश्वरूपाध्याय एष उक्तः सूक्तेऽपि पौरुषे ॥**
**धात्रादिस्तंबपर्यंतानेतस्यावयवान्विदुः ॥ २०५ ॥**

**विश्वरूपेति** । विश्वरूपाध्यायादौ कीदृग्रूपमुदितमित्याकांक्षायां ब्रह्मादिस्तंबपर्यंतजगद्रूपमुदितमित्याह—**धात्रादीति** ॥ २०५ ॥

**अ० टी०**—सप्रमाणं तं प्रतिपादयति—**विश्वरूपेति** । स्तंबः सूक्ष्मतमः कीटविशेषः । श्रुत्यादय इति शेषं प्रपूर्य विदुरित्याख्यातान्वयः कार्यः ॥ २०५ ॥

**ईशसूत्रविराड्वेधोविष्णुरुद्रेंद्रवह्नयः ॥**
**विघ्नभैरवमैरालमारिका यक्षराक्षसाः ॥ ६ ॥**

**रा० टीका**—एतावता प्रकृते किमायातमित्याशंक्यांतर्यामिप्रभृतिकुद्दालकादिपर्यंतं वस्तुजातं प्रत्येकमीश्वरत्वेन पूज्यतामित्याह—**ईशेत्यादिना** श्लोकत्रयेण ॥ ६ ॥

**अ० टी०**—ततः किं प्रकृत इत्यत आह—**ईशेत्यादित्रयेण** ॥ २०६ ॥

---

१ विरलमिति पाठो वर्तते ।

**विप्रक्षत्रियविट्शूद्रा गवाश्वमृगपक्षिणः ॥**
**अश्वत्थवटचूताद्या यवव्रीहितृणादयः ॥ ७ ॥**

**रा० टीका—**॥ ७ ॥

**अ० टी०—विप्रेति** । आम्रश्चूत इत्यमरः ॥ २०७ ॥

**जलपाषाणमृत्काष्ठवास्याकुद्दालकादयः ॥**
**ईश्वराः सर्व एवैते पूजिताः फलदायिनः ॥ ८ ॥**

**रा० टीका—**॥ ८ ॥

**अ० टी०—जलेति** । वास्यपदेन तक्ष्णः करणं काष्ठच्छिदायाः प्रसिद्धं **वांकस इति** महाराष्ट्रभाषायाम् ॥ २०८ ॥

**रा० टीका**—तं यथा यथोपासते तदेव भवतीति श्रुतिस्तत्तत्पूजानस्तत्फलसद्भावे प्रमाणमित्याह—

**यथा यथोपासते तं फलमीयुस्तथा तथा ॥**
**फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः ॥ ९ ॥**

**यथायथेति** । ननु सर्वेषामीश्वरत्वे फलवैषम्यं कुत इत्याशंक्य पूज्यानामधिष्ठानानां पूजनानामर्चादीनां च सात्त्विकादिभेदेन वैषम्यमित्याह—**फलोत्कर्षेति** ॥ ९ ॥

**अ० टी०**—तत्र मानमर्थयतः । तं यथा यथोपासते तदेव भवतीति श्रुतिमेवार्थतः संग्रथयति—**यथा यथेति** । एवं तर्हि कथं फलतारतम्यं तत्राऽऽह—**फलेति** ॥ २०९ ॥

**रा० टीका**—सांसारिकफलसिद्धिरेवं भवतु मुक्तिः कस्योपासनाद्भवतीत्याशंक्य ज्ञानव्यतिरेकेण केनापि न भवतीत्याह—

**मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा ॥**
**स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा ॥ २१० ॥**

**मुक्तिरिति** । तत्र दृष्टांतमाह—**स्वप्रबोधमिति** । स्वजागरणमंतरेण स्वनिद्राकल्पित-स्वप्नो यथा न निवर्तते तथा ब्रह्मतत्त्वज्ञानमंतरेण तदज्ञानकल्पितः स्वसंसारो न निवर्तत इति भावः ॥ २१० ॥

**अ० टीका**—भवत्वेवमथापि मोक्षः कस्य समुपासनाद्भवतीत्यत्राऽऽह—**मुक्तिस्त्वि-ति** । अत एवाऽऽहुः श्रीमद्वार्तिककारचरणाः—

"**भावनाजं** फलं यत्स्याद्यच्च स्यात्कर्मणः फलम् ।
न तत्स्थास्न्विति विज्ञेयं पण्यस्त्रीसंगतं यथा" इति ।

तत्र दृष्टांतं स्पष्टयति—**स्वेति** । ततः प्रेक्षावता मोक्षदज्ञानायैव यतितव्यमिति॥२१०॥

**रा० टीका**—ननु द्वैतनिवृत्तिलक्षणाया मुक्तेः स्वप्नदृष्टांतेन तत्त्वबोधसाध्यत्वाभि-धानमनुपपन्नं निवर्त्यस्य द्वैतस्य स्वप्नतुल्यत्वाभावादित्याशंक्यान्यथाग्रहणरूपत्वेन स्वप्नतुल्य-त्वमस्त्येव त्रयमेतत्सुषुप्तं स्वप्नं मायामात्रमिति श्रुत्याऽभिहितत्वात्सिद्धमित्याह—

**अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत् ॥**
**ईशजीवादिरूपेण चेतनाचेतनात्मकम् ॥ ११ ॥**

अद्वितीयेति । ईश[illegible]दिरूपेण वर्तमानं चेतनात्मकं यदखिलं जगदस्त्ययमद्वितीयब्रह्मतत्त्वे स्वप्न इति योजना [illegible] ११ ॥

**अ० टीका**—ननु [illegible]स्य बंधस्य स्वप्नदृष्टांतोऽनुचित एव तस्य प्रातिभासिकत्वेन सति प्रमातरि बाध्यमानत्वा[illegible]न्य तु जीवेश्वरादिद्वैतात्मकस्य सति प्रमातर्यबाध्यमानत्वेन व्यावहारिकसत्त्वाभ्युपगमादित्याशंक्य **"तस्य त्रय** आवसथास्त्रयः स्वप्ना इति त्रयमेतत्सुप्तं स्वप्नं मायामात्रम्" इति च [illegible]रन्यथा गृह्णतः स्वप्न इति **मांडूक्यकारिका**वचनाच्च जाग्रदादेरखिलद्वैतस्यापि सामान्यतोऽन्[illegible]ग्रहणत्वेन प्रातिभासिकत्वाद्यवांतरविशेषेऽपि स्वप्नत्वानपायादिति समाधत्ते—**अद्वितीयेति** । २११ ॥

**आनंदमयविज्ञानमयावीश्वरजीवकौ ॥**
**मायया कल्पितावेतौ ताभ्यां सर्वं प्रकल्पितम् ॥ १२ ॥**

**रा० टीका**—नन्वीशजीवयोर्ब्रह्माभिन्नयोः कथं जगदंतःपातित्वमित्याशंक्य तयोर्मायाकल्पितत्वेन जगदंतःपातित्वमित्याह—**आनंदमयेति** ॥ १२ ॥

**अ० टीका**—ननु कोऽस्य स्वप्नस्य दृश्यरूपस्य कल्पक इत्याशंक्य स्वप्नस्य निद्रेवास्यानादिमायैवाऽऽनंदमयं विज्ञानमयकोशाख्येश्वरजीवौ साक्षिद्रष्टारौ प्रकल्प्य तद्द्वारा सर्वं जगत्कल्पयतीत्याह—**आनंदमयेति** ॥ २१२ ॥

**रा० टीका**—ताभ्यां सर्वं कल्पितमित्युक्तं तत्र केन कियत्कल्पितमित्याकांक्षायामाह—

**ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ॥**
**जाग्रदादिविमोक्षांतः संसारो जीवकल्पितः ॥ १३ ॥**

ईक्षणादीति । स ईक्षत लोकान्नुसृजा इत्यादिकयैतया द्वारा प्रापद्यतेत्यंतया श्रुत्या प्रतिपादिता सृष्टिरीश्वरकर्तृका तस्य त्रय आवसथा इत्यादिकया स एतमेव पुरुषं ब्रह्मततममपश्यदित्यंतया श्रुत्या प्रतिपादितः संसारो जीवकर्तृक इत्यर्थः ॥ १३ ॥

**अ० टीका**—नन्वेवमपि कियद्द्वैतमीश्वरेण कल्पितं कियज्जीवेनेत्यत आह—**ईक्षणादीति** ॥ २१३ ॥

**अद्वितीयं ब्रह्मतत्त्वमसंगं तन्न जानते ॥**
**जीवेशयोर्मायिकयोर्वृथैव कलहं ययुः ॥ १४ ॥**

**रा० टीका**—ननु ब्रह्मण एव पारमार्थिकत्वे वादिनां जिवेश्वरतत्त्वविषया विप्रतिपत्तिः कुत इत्याशंक्य श्रुतिसिद्धतत्त्वज्ञानशून्यत्वादित्याह—**अद्वितीयमिति** ॥ १४ ॥

**अ० टीका**—नन्वेवं यदि जीवेश्वरयोरुभयोरपि कल्पितत्वं तर्हि तत्स्वरूपविषय एव सर्ववादिनां किमिति कलह इत्यत्राऽऽह—**अद्वितीयमिति** ॥ २१४ ॥

**ज्ञात्वा सदा तत्त्वनिष्ठाननुमोदामहे वयम् ॥**
**अनुशोचाम एवान्यान्न भ्रांतैर्विवदामहे ॥ २१५ ॥**

**रा० टीका**—जीवेश्वरविषयाया वादिविप्रतिपत्तेरज्ञानमूलत्वे तथाविधतत्त्वेन बोधनीया इत्याशंक्य वृथाश्रमत्वान्नेत्याह—**ज्ञात्वेति** ॥ २१५ ॥

**अ० टीका**—नन्वेवं चेत्ते सर्वेऽपि भेदवादिनः सिद्धांतिना त्वया शिक्षणीया इत्यत

आह—ज्ञात्वेति । सदेतिपदं देहलीदीपवदनुमोदेऽप्यन्वेति । अन्यान्शास्त्रसंस्कारशून्यान् ॥२१५॥

**तृणार्चकादियोगांता ईश्वरे भ्रांतिमाश्रिताः ॥**
**लोकायतादिसांख्यांता जीवे विभ्रान्तिमाश्रिताः ॥१६॥**

**रा० टीका**—ईश्वरे जीवे च भ्रांत्या विप्रतिपन्नान्वादिनो विभज्य दर्शयति—**तृणेति** ॥ १६ ॥

**अ० टीका**—ननु के ते भ्रान्ता इत्यत्राऽऽह—**तृणेति** । एते सर्वेऽप्यधस्तादुपन्यस्ता एवेति भावः ॥ २१६ ॥

**रा० टीका**—कुतो भ्रांतत्वं तेषामित्यत आह—

**अद्वितीयब्रह्मतत्त्वं न जानंति यदा तदा ॥**
**भ्रांता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥१७॥**

अद्वितीयेति । ततः किं तत्राऽऽह—**तेषामिति** । परिगृहीतपक्षप्रतिपादनाभिनिवेशेन चित्तविश्रांत्यभावान्नैहिकमपि सुखं तेषामित्याह —**क्वेह वेति** ॥ १७ ॥

**अ० टीका**—ननु कुतः सांख्ययोगयोरपि भ्रांतत्वं तत्राऽऽह—**अद्वितीयं ब्रह्मेति** ॥ २१७ ॥

**उत्तमाधमभावश्चेत्तेषां स्यादस्तु तेन किम् ॥**
**स्वप्नस्थराज्यभिक्षाभ्यां न बुद्धः स्पृश्यते खलु ॥ १८ ॥**

**रा० टीका**—ननु तेषां ब्रह्मविद्याभावेऽप्यंतरविद्याप्रयुक्त उत्तमाधमभावो दृश्यत उत्तमत्वप्रयुक्तं सुखं केषांचित्स्यादित्याशंक्य तस्य मुमुक्षुभिरनादरणीयत्वं दृष्टांतेनाऽऽह—**उत्तमाधमेति** ॥ १८ ॥

**अ० टीका**—ननु तत्राप्यंतरंगत्वादिनारतम्यमस्त्येवेत्यत आह—**उत्तमेति** । तत्रार्थांतरन्यासतः समर्थनं कथयति—**स्वप्नेति** ॥ २१८ ॥

**तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ॥**
**कार्या किंतु ब्रह्मतत्त्वं विचार्य बुध्यतां च तत् ॥ १९ ॥**

**रा० टीका**—जीवेश्वरवादयोर्मुक्तिहेतुत्वाभावान्न मुमुक्षुभिस्तत्र मतिर्निवेशनीयेत्युपसंहरति—**तस्मादिति** । तर्हि किं कर्तव्यमित्याशंक्य श्रुतिविचारेण ब्रह्मबोध एव कर्तव्य इत्याह—**किंत्विति** ॥ १९ ॥

**अ० टीका**—फलितमाह—**तस्मादिति** । न केवलं विचार एव कालक्षेपः कार्यः किंतु तत्फलीभूतबोधे स्वस्य कः प्रतिबंध इति परीक्ष्य शास्त्रोक्तोपायैस्तन्निरासमासाद्य सद्यः स्वाद्वैततत्त्वबोधोऽपि साध्य एवेत्याह—**बुध्यतां चेति** शेषेण ॥ २१९ ॥

**रा० टीका**—ननु ब्रह्मतत्त्वनिश्चयाय तयोः स्वरूपं हेयत्वेन ज्ञातव्यमित्याशंक्य तथात्वे जीवेशवादयोरेव बुद्धिर्न परिसमापनीयेत्याह—

**पूर्वपक्षतया तौ चेत्तत्त्वनिश्चयहेतुताम् ॥**
**प्राप्नुतोऽस्तु निमज्जस्व तयोर्नैतावताऽवशः ॥ २२० ॥**

पूर्वपक्षतयेति । एत... पूर्वपक्षतया तत्त्वनिर्णयहेतुत्वसंभवेन तयोर्जीवेशवादयोरेवा-वशो विवेकज्ञानशून्यो न निम...ति योजना ॥ २२० ॥

**अ० टीका**—ननूक्त...श्वरावन्यवादिसंमतावपि पूर्वपक्षत्वेन तत्त्वनिर्णयोपयोगि-नावेव ततः कथं तदुपेक्षोचितेत्य... आह—**पूर्वपक्षतयेति** । तौ सांख्यादिजीवेश्वरवादौ । पूर्वेति । तत्त्वेति । यदि प्राप्तुतस्ता... तथाऽस्तु । तथाप्येतावतारे मुमुक्षो त्वमवशोऽस्वाधिनः संस्तयोरुक्तवादयोर्न निमज्जस्वेति संब... । एतेन तयोः समुद्रवदपारत्वमनर्थहेतुत्वं च सूचितम् ॥ २२० ॥

**रा० टीका**—ननु सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेन भवद्भिरप्युपा-देयत्वान्न तयोः पूर्वपक्षत्वमिति शंकते—

**असंगचिद्विभुर्जीवः सांख्योक्तस्तादृगीश्वरः ॥**
**योगोक्तस्तत्त्वमोरर्थौ शुद्धौ ताविति चेच्छृणु ॥ २१ ॥**

असंगचिदिति । सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेऽपि तयोर्वास्तवभे-दस्य तैरंगीकारान्नायमस्मात्सिद्धांत इत्याह —**शृण्विति** ॥ २१ ॥

**अ० टीका**—तत्र सांख्याद्युक्तौ जीवेशावनूद्य शंकते—**असंगेति** । तत्र समाधातुं प्रतिजानीते—**शृण्विति** ॥ २२१ ॥

**न तत्त्वमोरुभावर्थावस्मत्सिद्धांततां गतौ ॥**
**अद्वैतबोधनायैव सा कक्षा काचिदिष्यते ॥ २२ ॥**

**रा० टीका**—**न तत्त्वमोरिति** । तत्त्वंपदयोरुभावर्थावस्मत्सिद्धांतत्वं न गताविति योजना । ननु कूटस्थब्रह्मशब्दाभ्यां शुद्धौ तत्त्वंपदार्थौ भवद्भिरपि भिन्नौ निरूपितावित्याशं-क्याऽऽह—**अद्वैतबोधनायैवेति** । लोकप्रसिद्धभेदनिरासद्वारा तदैक्यप्रतिपादनायैव तौ भेदे-नानूदितौ न तु तयोर्भेदः प्रतिपाद्यत इति भावः ॥ २२ ॥

**अ० टीका**—तदाह—**नेति** । कक्षा युक्तिः ॥ २२२ ॥

**रा० टीका**—तर्हि पदार्थशोधनं किमर्थमित्यत आह—

**अनादिमायया भ्रांता जीवेशौ सुविलक्षणौ ॥**
**मन्यंते तद्व्युदासाय केवलं शोधनं तयोः ॥ २३ ॥**

अनादीति । अत्र मायाशब्देन स्वाश्रयव्यामोहिकाऽविद्या लक्ष्यते । तया विपरीत-ज्ञानं प्राप्ताः कर्तृत्वादिमत्त्वं जीवस्य सर्वज्ञत्वादिगुणयोगित्वं चेश्वरस्य पारमार्थिकं मन्यंतेऽत-स्तन्निवृत्त्यर्थमेव शोधनं क्रियत इत्यर्थः ॥ २३ ॥

**अ० टीका**—तत्र हेतुमाह—**अनादीति** । अस्मादिष्टमित्यार्थिकम् ॥ २२३ ॥

**रा० टीका**—पदार्थशोधनप्रकारमेव दिदर्शयिषुस्तदुपायत्वेन पूर्वोक्तदृष्टांतं स्मारयति—

**अत एवात्र दृष्टांतो योग्यः प्राक् सम्यगीरितः ॥**
**घटाकाशमहाकाशजलाकाशाभ्रखात्मकः ॥ २४ ॥**

अत एवेति । यतः पदार्थशोधनं कर्तव्यमत एवेत्यर्थः ॥ २४ ॥

**अ० टीका**—कुत एवमित्यत्राऽऽह—**अत एवेति** ॥ २२४ ॥

**रा० टीका**—पदार्थशोधनप्रकारमाह—

**जलाभ्रोपाध्यधीने ते जलाकाशाभ्रखे तयोः ॥**
**आधारौ तु घटाकाशमहाकाशौ सुनिर्मलौ ॥ २२५ ॥**

**जलाभ्रेति।** ये जलाकाशाभ्रखे ते जलाभ्रोपाध्यधीनत्वादपारमार्थिके तयोराधारभूतौ घटाकाशमहाकाशौ सुनिर्मलौ जलाद्युपाधिनिरपेक्षाकाशमात्ररूपावित्यर्थः ॥ २२५ ॥

**अ० टीका**—तमेव विशदयति—**जलेति। जलाकाशेति।** पूर्णकुंभजलप्रतिबिंबितो महाकाशो जलाकाशः। मेघोदरगततुषारात्मकजलप्रतिबिंबितमहाकाश एवाभ्राकाश इति प्राङ्मूल एव व्युत्पादितमेवेति भावः ॥ २२५ ॥

**एवमानंदविज्ञानमयौ मायाधियोर्वशौ ॥**
**तदधिष्ठानकूटस्थब्रह्मणी तु सुनिर्मले ॥ २६ ॥**

**रा० टीका**—दार्ष्टांतिकमाह—**एवमिति** ॥ २६ ॥

**अ० टीका**—दार्ष्टांतिके योजयति—**एवमिति।** ननु विषमोऽयं दृष्टांतः। जलाकाशोऽभ्राकाशश्चोक्तरीत्या महाकाशस्यैव प्रतिबिंबाविति हि निर्विवादमेव। जीवस्तु भवतां बुद्धौ कूटस्थस्यैव तदधिष्ठानस्य प्रतिबिंबत्वेन संमतो न तु मायायां ब्रह्मणः प्रतिबिंब ईश्वर इव ब्रह्मप्रतिबिंबत्वेन। महाकाशस्थानीयं तु ब्रह्मैवेति ब्रह्मप्रतिबिंबत्वेनैव यदि विवक्षितः स्याच्चेत्तदा दृष्टांतदार्ष्टांतिकयोः साम्यं स्यादिति चेत्सत्यम्। कूटस्थस्य ब्रह्माभेदविवक्षयैव तथोक्तत्वात्। एवमेवाग्रे वक्ष्यंति मूलकारा एव—

" कूटस्थब्रह्मणोर्भेदो नाममात्रादृते न हि।
घटाकाशमहाकाशौ वियुज्येते न हि क्वचित् " इति ॥ २२६ ॥

**एतत्कक्षोपयोगेन सांख्ययोगौ मतौ यदि ॥**
**देहोऽन्नमयकक्षत्वादात्मत्वेनाभ्युपेयताम् ॥ २७ ॥**

**रा० टीका**—ननु पदार्थद्वयशोधनकक्षोपयोगित्वेनापि सांख्ययोगमतद्वयमंगीकार्यमिति चेदत्यल्पमिदमुच्यते इतरेषामपि शास्त्राणां तत्कक्षोपयोगित्वेनास्माभिरभ्युपेयत्वादित्याह—**एतदिति** ॥ २७ ॥

**अ० टीका**—ननु तर्हि शोधितजीवादिसिद्ध्यर्थमेवास्तु सांख्याद्युपयोग इत्याशंकां प्रतिबंद्या प्रत्याह—**एतदिति** ॥ २२७ ॥

**आत्मभेदो जगत्सत्यमीशोऽन्य इति चेत्त्रयम् ॥**
**त्यज्यते तैस्तदा सांख्ययोगवेदांतसंमतिः ॥ २८ ॥**

**रा० टीका**—कुतस्तर्हि सांख्ययोगयोर्वेदांतविरोधित्वमित्याशंक्य जीवभेदजगत्सत्यत्वेश्वरताटस्थ्यलक्षणेंऽश इत्याह—**आत्मभेद इति** ॥ २८ ॥

**अ० टीका**—नन्वेवं चेत्तर्हि किमंशे सांख्ययोगयोर्वेदांतविरोधित्वं तत्राऽऽह—**आत्मेति** ॥ २२८ ॥

**जीवोऽसंगत्वमात्रेण कृतार्थ इति चेत्तदा ॥**
**स्रक्चंदनादिनित्यत्वमात्रेणापि कृतार्थता ॥ २९ ॥**

**रा० टीका**—ननु जीवस्यासंगत्वज्ञानादेव मुक्तिसिद्धेः किमद्वैतबोधेनेत्याशंक्याद्वै-तज्ञानमंतरेणासंगत्वादिकं न संभाव्यत इत्यभिसंधिं हृदि निधायोत्तरमाह—**जीव** इति॥२९॥

**अ० टीका**—ननु जीवस्तदुक्तासंगत्वबोधमात्रात्कृतार्थः स्यादित्याशंकां प्रतिबंद्या परिहरति—**जीव इति** ॥ २२९ ॥

**रा० टीका**—अभिसंधिमाविष्करोति—

**यथा स्रगादिनित्यत्वं दुःसंपाद्यं तथाऽऽत्मनः ॥**
**असंगत्वं न संभाव्यं जीवतोर्जगदीशयोः ॥ २३० ॥**

**यथेति** । जीवतोर्विशेषणाकारेण भासमानयोः ॥ २३० ॥

**अ० टीका**—ननु स्रगादिनित्यत्वं दुःसंपादमिति चेत्तर्हि सांख्यादिमत आत्मासं-गत्वमपि तथैवेत्याह—**यथेति** । जीवतोः सत्ययोः सतोरित्यर्थः ॥ २३० ॥

**रा० टीका**—असंभवमेव स्पष्टयति—

**अवश्यं प्रकृतिः संगं पुरेवापादयेत्तथा ॥**
**नियच्छत्येतमीशोऽपि कोऽस्य मोक्षस्तथा सति ॥ ३१ ॥**

**अवश्यमिति** । फलितमाह—**कोऽस्येति** ॥ ३१ ॥

**अ० टीका**—तदेवोपपादयति—**अवश्यमिति** । पुरेव प्राग्वत् । अमुं जीवम्॥२३१॥

**रा० टीका**—संगनियमनयोरविवेककार्यत्वाद्विवेकज्ञानेन चाविवेकनिवृत्तौ कुतः पुनः संगाद्युत्पत्तिरिति शंकते—

**अविवेककृतः संगो नियमश्चेति चेत्सदा ॥**
**बलादापतितो मायावादः सांख्यस्य दुर्मतेः ॥ ३२ ॥**

**अविवेकेति** । एवं सत्यपसिद्धांतापात इति परिहरति—**बलादिति** । अयमभाव-मात्रस्य भावकार्यजनकत्वायोगात् । न द्वितीयः । विवेकादन्यस्य घटादेः संगहेतुत्वादर्शनात् । तृतीये तु तस्य भावरूपाज्ञानत्वमेवेति मायावादप्रसंग इति ॥ ३२ ॥

**अ० टीका**—इदं प्रकृतिसंगादिकमविवेकमूलकमित्याशंक्य मायावादापत्तेर्मैवमि-त्याऽऽह—**अविवेकेति** । अविवेको हि विवेकाभावस्तस्मात्संगादिभावकार्यं कथं स्यादित्यं-ततो गत्वाऽविवेकशब्देन रुदताऽपि सांख्येन भावरूपमेवानाद्यज्ञानमुररीकरणीयमिति स्यादि-त्याशयः ॥ २३२ ॥

**रा० टीका**—अद्वैताभ्युपगमे बंधमोक्षव्यवस्थानुपपत्तेरात्मभेदोऽगीकर्तव्य इति चो-दयति—

**बंधमोक्षव्यवस्थार्थमात्मनानात्वमिष्यताम् ॥**
**इति चेन्न यतो माया व्यवस्थापयितुं क्षमा ॥ ३३ ॥**

**बंधमोक्षेति** । एकस्याप्यात्मनो मायया बंधमोक्षव्यवस्थोपपत्तेर्मैवमिति परिहरति—**न यत इति** ॥ ३३ ॥

**अ० टीका**—ननु तर्हि तव मत आत्मनानात्वमंतरा बंधादिव्यवस्था न स्यादतः सांख्यमतमेष्टव्यमित्याशंक्य मायैव सर्वां व्यवस्थां संस्थापयिष्यतीति समाधत्ते—**बंधेति**॥२३३॥

**रा० टीका**—मायाऽपि कथं व्यवस्थापयेदित्याशंक्य तस्या दुर्घटकारित्वस्वाभाव्यादित्याह—

**दुर्घटं घटयामीति विरुद्धं किन्न पश्यसि ॥**
**वास्तवौ बंधमोक्षौ तु श्रुतिर्न सहतेतराम् ॥ ३४ ॥**

**दुर्घटमिति ।** बंधस्याविद्यकत्वेऽपि मोक्षो वास्तवोऽभ्युपेतव्य इत्याशंक्य श्रुतिविरोधान्मैवमित्याह—**वास्तवाविति ।** न सहतेतरामतितरां नैव सहत इत्यर्थः । बंधमिव मोक्षमपि वास्तवं न सहत इति भावः ॥ १४ ॥

**अ० टीका**—ननु साऽपि कथमिदं कुर्यादित्याशंक्याहं दुर्घटमपि घटयिष्यामीति प्रतिज्ञाया ऐंद्रजालिकादौ मायाबलादेव दृष्टत्वान्मैवमित्याह—**दुर्घटमिति ।** इदं कल्पितमिति चेत्तत्राऽऽह —**वास्तवाविति** ॥ २३४ ॥

**रा० टीका**—मोक्षादेर्वास्तवत्वप्रतिषेधिकां श्रुतिं पठति—

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ २३५ ॥**

**न निरोध इति ।** निरोधो नाशः । उत्पत्तिर्देहसंबंधः । बद्धः सुखदुःखादिधर्मवान् । साधकः श्रवणाद्यनुष्ठाता । मुमुक्षुः साधनचतुष्टयसंपन्नः । मुक्तो निवृत्ताविद्यः । इत्येतत्सर्वं वस्तुनो नास्तीत्यर्थः ॥ २३५ ॥

**अ० टीका**—तामेवामृतबिंदुश्रुतिं पठति—**नेति** ॥ २३५ ॥

**मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ ॥**
**यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि ॥ ३६ ॥**

**रा० टीका**—एवं जीवेश्वरादिभेदस्य मायामयत्वमुपपादितमुपसंहरति —**मायाख्याया इति** ॥ ३६ ॥

**अ० टीका**—एवं जीवेश्वरादिभेदस्य मायिकत्वेनेंद्रजालवदुपपादितं मिथ्यात्वं रूपकेणोपसंहरति—**मायेति** ॥ २३६ ॥

**रा० टीका**—ननु जीवेश्वरयोर्मायिकत्वेन तद्भेदस्य मिथ्यात्वेऽपि कूटस्थब्रह्मणोः पारमार्थिकत्वेन तद्भेदोऽपि पारमार्थिकः स्यादित्याशंक्य भेदप्रयोजकस्य स्वरूपवैलक्षण्यस्याभावान्मैवमिति परिहरति—

**कूटस्थब्रह्मणोर्भेदो नाममात्रादृते न हि ॥**
**घटाकाशमहाकाशौ वियुज्येते न हि क्वचित् ॥ ३७ ॥**

**कूटस्थेति ।** नाममात्राद्भेदप्रतीतावपि वस्तुतो भेदाभावे दृष्टांतं पूर्वोक्तं स्मारयति —**घटाकाशेति** ॥ ३७ ॥

**अ० टीका**—नन्वेवमपि कूटस्थब्रह्मणोर्भेदस्तु तदवस्थ एवेति कथमद्वैतकैवल्यसिद्धिरित्यत आह—**कूटस्थेति** ॥ २३७ ॥

**रा० टीका**—एवं भेदस्य मिथ्यात्वसमर्थनेन किं फलमित्याह—

**यदद्वैतं श्रुतं सृष्टेः प्रागेवाद्य चोपरि ॥**
**मुक्तावपि वृथा माया भ्रामयत्यखिलाञ्जनान् ॥ ३८ ॥**

**यदद्वैतमिति** । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतौ यदद्वितीयं ब्रह्म प्रतिपादितं तदेव कालत्रयेऽप्यबाध्यत्वेन वास्तवं न भेद इति भावः । कुतस्तर्हि सर्वैर्भेदाभिनिवेशः क्रियत इत्यत आह—**वृथा मायेति** । तत्त्वज्ञानरहितत्वादभिनिवेशं कुर्वंतीति भावः ॥ ३८ ॥

**अ० टीका**—एवं च त्रैकालिकत्वोपलक्षिताद्वैतात्मलाभ एव संपद्यत इत्याह—**यदद्वैतमिति** । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति **छांदोग्य** इत्यार्थिकम् । नन्वेवं तर्हि कस्य संसार इत्यत्राऽऽह—**वृथेत्यादिशेषेण** । वृथा स्वतः सत्ताशून्यत्वेन मिथ्याभूता एतादृशी या माया मूलाविद्या साऽखिलं संपूर्णं जगज्जीवनिकुरंबं वृथा व्यर्थमेव भ्रामयत्यद्वैतात्मन्यपि द्वैतसत्यत्वबुद्ध्या स्वर्गनरकादिषु पर्यावर्तयतीत्यपि वृथैवेति वृथापदावृत्त्या योजनीयम् । तेन प्रतिज्ञाताद्वैतेन शंकावकाशलेशोऽपीति दिक् । अन्यथा मायायां तत्कर्तृकभ्रमणे जगति चामिथ्यात्वापत्तेः ॥ २३८ ॥

**रा० टीका**—ननु प्रपंचस्य मायामयत्वं तत्त्वस्याद्वितीयत्वं च ये वर्णयंति तेऽपि संसारवंतो दृश्यंतेऽतस्तत्त्वज्ञानेन किं प्रयोजनमिति शंकते—

**ये वदंतीत्थमेतेऽपि भ्राम्यंतेऽविद्ययाऽत्र किम् ॥**
**न यथा पूर्वमेतेषामत्र भ्रांतेरदर्शनात् ॥ ३९ ॥**

**ये वदंतीति** । कर्मवशात्केषांचिद्व्यवहारे सत्यपि पूर्ववदभिनिवेशाभावान्नैवमिति परिहरति—**न यथेति** ॥ ३९ ॥

**अ० टीका**—एवं सिद्धांतवादिनोऽपि मायया भ्राम्यंत एवातः किं ब्रह्मविद्ययेत्याशंक्य समाधत्ते—**य इति** । तत्र हेतुः—**यथापूर्वमित्यादिशेषेण** । अत्र दृश्यमिथ्यात्वे अद्वैतात्मत्वे च ॥ २३९ ॥

**रा० टीका**—ज्ञानिनां भ्रांत्यभावं दर्शयितुमज्ञानिनां निश्चयं तावदाह—

**ऐहिकामुष्मिकः सर्वः संसारो वास्तवस्ततः ॥**
**न भाति नास्ति चाद्वैतमित्यज्ञानिविनिश्चयः ॥ २४० ॥**

**ऐहिकेति** । इह लोके भव ऐहिकः पुत्रकलत्रादिपोषणरूपः । अमुष्मिन्परलोके भव आमुष्मिकः स्वर्गसुखाद्यनुभवरूपः ॥ २४० ॥

**अ० टीका**—अथोक्तं ज्ञानिभ्रांत्यदर्शनं विशदयितुमज्ञभ्रांतिमनुवदति—**ऐहिकेति** ॥ २४० ॥

**रा० टीका**—तत्त्वविनिश्चयस्य ततो वैलक्षण्यं दर्शयति—

**ज्ञानिनो विपरीतोऽस्मान्निश्चयः सम्यगीक्ष्यते ॥**
**स्वस्वनिश्चयतो बद्धो मुक्तोऽहं चेति मन्यते ॥ ४१ ॥**

**ज्ञानिनामिति** । अद्वैतं पारमार्थिकं भाति न संसारस्त्वपारमार्थिक इति निश्चय इत्यर्थः । ततः किमित्याशंक्य स्वस्वनिश्चयानुसारेण फलं भवतीत्याह—**स्वस्वेति** ॥ ४१ ॥

**अ० टीका—**ज्ञानिनां निश्चयस्तु प्रमारूपत्वादुक्तनिश्चयाद्विपरीत एवेत्याह—**ज्ञानिनामिति** । द्वैतरूपः सर्वोऽपि संसारो मृगजलवन्मृषैव । अद्वैतसच्चिदानंदं ब्रह्मैवाहमित्याकार इत्यर्थः । ततः किं तदाह—**स्व स्वेति** ॥ २४१ ॥

**रा० टीका—**अद्वैतं भातीत्युक्तिः शास्त्रत एव नानुभवतोऽतो न तन्निश्चय इति शंकते—

**नाद्वैतमपरोक्षं चेन्न चिद्रूपेण भासनात् ॥**
**अशेषेण न भातं चेद्द्वैतं किं भासतेऽखिलम् ॥ ४२ ॥**

**नाद्वैतमिति** । अनुभवागोचरत्वमसिद्धमिति परिहरति **न चिद्रूपेणेति** । घटः स्फुरति पटः स्फुरतीति घटादिष्वनुस्यूतस्फुरणरूपेण भानादित्यर्थः । ननु चिद्रूपत्वस्य भानेऽपि तत्कात्स्न्येन न प्रतीयत इति शंकते **अशेषेणेति** । साकल्येन भानाभावो द्वैतेऽपि समान इत्याह— **द्वैतं किमिति** ॥ ४२ ॥

**अ० टीका** ननु शाब्दज्ञानसत्त्वेऽपि तेषामपरोक्षज्ञानाभावान्न मोक्षः संभवतीत्यत्राऽऽह **नेति** । तत्राप्यांशिकत्वमाशंक्य प्रतिबंद्या समाधत्ते **अशेषेणेति** ॥ २४२ ॥

**रा० टीका** एवं दोषसाम्यमभिधाय परिहारसाम्यमाह

**दिङ्मात्रेण विभानं तु द्वयोरपि समं खलु ॥**
**द्वैतसिद्धिवदद्वैतसिद्धिस्ते तावता न किम् ॥ ४३ ॥**

**दिङ्मात्रेणेति** । दिङ्मात्रेणैकदेशेन द्वयोर्द्वैताद्वैतयोरित्यर्थः । एतावता कथं परिहारसाम्यमित्याशंक्याऽऽह— **द्वैतसिद्धिवदिति** । ते तव पक्षे तावता एकदेशप्रतीतिसद्भावेन द्वैतसिद्धिवद्द्वैतनिश्चय इवाद्वैतसिद्धिरद्वैतनिश्चयोऽपि किं न भवति किंतु भवत्येवेत्यर्थः ॥ ४३ ॥

**अ० टीका** अथ गूढाभिसंधिरेव सिद्धांती दोषसाम्यवत्समाधानसाम्यमप्यभिधत्ते—**दिङ्मात्रेणेति** ॥ २४३ ॥

**रा० टीका—**पूर्ववादी प्रकारांतरेणाद्वैतासिद्धिं शंकते

**द्वैतेन हीनमद्वैतं द्वैतज्ञाने कथं त्विदम् ॥**
**चिद्भानं त्वविरोधित्वाद्द्वैतस्यातोऽसमे उभे ॥ ४४ ॥**

**द्वैतेनेति** । अद्वैतं द्वैतरहितं तयोः परस्परविरोधात्तथा सति द्वैतप्रतीतावद्वैतं न संभवतीत्यर्थः । ननु तर्हि द्वैतस्याप्यद्वैतविरोधित्वादद्वैते प्रतिभासमाने द्वैतस्यासिद्धिरिति चोद्यं समानमित्याशंक्याऽऽह पूर्ववादी **चिद्भानं त्विति** । भवन्मते चिद्रूपप्रतीतेरेवाद्वैतप्रतीतित्वात्तस्याश्च द्वैतविरोधित्वाभावात्तेोभयोः साम्यमिति भाव ॥ ४४ ॥

**अ० टीका** पुनरपि पूर्ववादी प्रकारांतरेण शंकते **द्वैतेनेति** । तव ज्ञानिनोऽद्वैतं ब्रह्म तु द्वैतेन हीनमिति निर्विवादमेव । अतोऽस्मदादिप्रतिवाद्यादिरूपद्वैतविषयकज्ञाने सतीदमुक्तलक्षणमद्वैतं ब्रह्म कथं सिध्येत्न कथमपीत्यन्वयः । एवं तर्हि द्वैतमपि चिद्भानरूपमद्वैतं विहाय कथं भानादित्याशंक्य तस्य द्वैताविरोधित्वान्मैवमित्याह—**चिद्भानं त्विति** । अत उभे द्वैताद्वैतभाने असमे नैव तुल्ये इत्यर्थः ॥ २४४ ॥

**रा० टीका**—प्रतीयमानस्यापि द्वैतस्य वास्तवत्वाभावान्न वास्तवाद्वैतविघातित्वमिति परिहरति सिद्धांती—

**एवं तर्हि शृणु द्वैतमसन्मायामयत्वतः ॥**
**तेन वास्तवमद्वैतं परिशेषाद्विभासते ॥ २४५ ॥**

एवमिति । प्रसक्तप्रतिषेधेऽन्यत्राप्रसंगाच्छिष्यमाणे संप्रत्ययः परिशेषः ॥ २४५ ॥

**अ० टीका**—अथ सिद्धांती स्वगूढाभिसंधिमुद्बोधयन्त्समाधत्ते—**एवं तर्हीति** । परिशेषादसतो मिथ्याभूतस्य द्वैतस्य मायामयत्वेन बाधे सत्यवधिभूताधिष्ठानत्वोपलक्षितत्वेनावशेषादित्यर्थः ॥ २४५ ॥

**रा० टीका**—परिशेषप्रकारमेव दर्शयति—

**अचिंत्यरचनारूपं मायैव सकलं जगत् ॥**
**इति निश्चित्य वस्तुत्वमद्वैते परिशेष्यताम् ॥ ४६ ॥**

अचिंत्येति । न चिंत्या अचिंत्या अचिंत्या रचना रूपं यस्य तत्तथाविधं सकलं जगन्मायैव मिथ्यैवेत्यनेन प्रकारेणानिर्वचनीयत्वान्मिथ्यात्वं द्वैतस्य निश्चित्य वास्तवमद्वैतं परिशेष्यतामित्यर्थः ॥ ४६ ॥

**अ० टीका**—तत्प्रकारमेव प्रकटयति—**अचिंत्येति** ॥ २४६ ॥

**पुनर्द्वैतस्य वस्तुत्वं भाति चेत्त्वं तथा पुनः ॥**
**परिशीलय को वाऽत्र प्रयासस्तेन ते वद ॥ ४७ ॥**

**रा० टीका**—नन्वेवमद्वैतनिश्चये कृतेऽपि पुनः पुनर्द्वैतसत्यत्वं पूर्ववासनया भातीत्याशंक्य तन्निवृत्तये पुनः पुनर्मिथ्यात्वं विचारयेदित्याह—**पुनर्द्वैतस्येति** । "आवृत्तिरसकृदुपदेशात्" इति **चतुर्थाध्याय** आत्मनः श्रवणाद्यावर्तनस्य विहितत्वाभ्यासेनेति भावः ॥ ४७ ॥

**अ० टीका**—एवं मुमुक्षं शिष्यं प्रति द्वैतबाधाद्वैतपरिशेषप्रकारे समुपदिष्टेऽपि पुनरपि प्राक्तनसंस्काराद्वैतवस्तुत्वं परिस्फुरति चेत्तथैव पुनरपि बाधाद्यनुसंधाने का तव क्षतिरित्याह—**पुनरिति** ॥ २४७ ॥

**कियंतं कालमिति चेत्खेदोऽयं द्वैत इष्यताम् ॥**
**अद्वैते तु न युक्तोऽयं सर्वानर्थनिवारणात् ॥ ४८ ॥**

**रा० टीका**—कियंतं कालमित्थं विचारणीयमित्याशंक्य तत्रापरोक्षविद्याप्तौ विचारोऽयं समाप्यत इति विचारकालावधेरुक्तत्वान्नाद्वैतविचारेऽयं खेदो युक्तः किंतु द्वैतप्रतिभास एव युक्त इत्याह—**कियंतमिति** ॥ ४८ ॥

**अ० टीका**—एवं कियत्कालमनुसंधानावर्तनं कर्तव्यमित्यत्राऽऽह—**कियंतमिति** २४८

**क्षुत्पिपासादयो दृष्टा यथापूर्वं मयीति चेत् ॥**
**मच्छब्दवाच्येऽहंकारे दृश्यतां नेति को वदेत् ॥ ४९ ॥**

**रा० टीका**—नन्वेवमद्वैतात्मतत्त्वापरोक्षज्ञानवत्यपि मयि क्षुत्पिपासानर्थस्य परिदृश्यमानत्वादनर्थनिवारकत्वमात्मज्ञानस्यासिद्धमिति शंकते—**क्षुत्पिपासादय इति** । **किं मच्छ-**

ब्दवाच्येऽहंकारे दृश्यंत उत मच्छब्दोपलक्षिते चिदात्मनीति विकल्प्याऽऽद्यमंगीकरोति— मच्छब्दवाच्य इति। न द्वितीयः तस्यासंगत्वादविषयत्वाच्चेति बहिरेव द्रष्टव्यम्॥ ४९॥

**अ० टीका**—पुनरप्यनुभवविरोधं शंकते—**क्षुदिति**। विषयविभेदेन समाधत्ते— **मच्छब्देति**॥ २४९॥

**चिद्रूपेऽपि प्रसज्येरंस्तादात्म्याध्यासतो यदि॥**
**माऽध्यासं कुरु किंतु त्वं विवेकं कुरु सर्वदा॥ २५०॥**

**रा० टीका**—वस्तुतस्तत्प्रतीत्यभावेऽपि भ्रांत्या तत्प्रसक्तिः स्यादिति शंकते— **चिद्रूपेऽपीति**। एवं तर्ह्यनर्थहेतोरध्यासस्य निवृत्तये सदा विवेकः क्रियतामित्याह—**माऽध्यासमिति**॥ ५०॥

**अ० टीका**—नन्वथापि तेऽध्यासवशादात्मन्यपि भांतीत्यत आह—**चिद्रूपेऽपीति**॥ २५०॥

**झटित्यध्यास आयाति दृढवासनयेति चेत्॥**
**आवर्तयेद्विवेकं च दृढं वासयितुं सदा॥ ५१॥**

**रा० टीका**—अनादिवासनावशात्पुनरध्यासागमने तन्निवृत्तये विवेक एवावर्तनीयो नोपायांतरमित्याह—**झटितीति**॥ ५१॥

**अ० टीका**—संस्कारदार्ढ्याच्छीघ्रमध्यासागममाशंक्याऽऽह—**झटितीति**॥ २५१॥

**विवेके द्वैतमिथ्यात्वं युक्त्यैवेति न भण्यताम्॥**
**अचिंत्यरचनात्वस्यानुभूतिर्हि स्वसाक्षिकी॥ ५२॥**

**रा० टीका**—ननु विचारेण द्वैतस्य मायामयत्वं युक्त्यैव सिद्ध्यति नानुभवत इत्याशंक्याचिंत्यरचनात्वलक्षणमिथ्यात्वानुभवस्य स्वसाक्षिकत्वान्नैवमिति परिहरति—**विवेक इति**॥ ५२॥

**अ० टीका**—तत्राप्यनुभवाभावमाशंक्य प्रत्याचष्टे—**विवेक इति**॥ २५२॥

**रा० टीका**—नन्वचिंत्यरचनात्वं मिथ्यात्वपदार्थलक्षणमुक्तं चिदात्मन्यतिव्याप्तमिति शंकते—

**चिदप्यचिंत्यरचना यदि तर्ह्यस्तु नो वयम्॥**
**चितिं सुचिंत्यरचनां ब्रूमो नित्यत्वकारणात्॥ ५३॥**

**चिदपीति**। प्रागभावयुक्तत्वे सत्यचिंत्यरचनात्वमिथ्यालक्षणमिति विवक्षुरचिंत्यरचनात्वमात्मनोऽगीकरोति तर्ह्यस्त्वित्येवमंगीकारेऽपसिद्धांत इत्याशंक्य परिहरति—**नो वयमिति**। तत्र हेतुमाह—**नित्यत्वेति**। वयं चितिं सुचिंत्यरचनां नो ब्रूम इति योजना॥ ५३॥

**अ० टीका**—तत्रापि प्रतिवादी पुनः प्रतिबंद्या शंकते—**चिदपीति**। गूढाभिसंधिः सिद्धांती तामंगीकरोति—**तर्हीत्यादिना**। तमेवाभिसंधिं प्रबोधयन्नंगीकारे हेतुं प्रकटयति—**नित्यत्वेति**। नित्यत्वरूपाद्धेतोरित्यर्थः॥ २५३॥

**रा० टीका**—चितेर्नित्यत्वं कुत इत्याशंक्य प्रागभावानुभवाभावादित्याह—

**प्रागभावो नानुभूतश्चितेर्नित्या ततश्चितिः ॥**
**द्वैतस्य प्रागभावस्तु चैतन्येनानुभूयते ॥ ५४ ॥**

**प्रागभाव इति ।** यतश्चितेः प्रागभावो नानुभूतस्ततो नित्येति योजना । इदमत्राकूतं चितेः प्रागभावोऽस्तीति वदन्प्रष्टव्यश्चित्प्रागभावः किं चिताऽनुभूयत उतान्येन । नान्येन । तदन्यस्य जडत्वेनानुभवितृत्वानुपपत्तेः । चिताऽनुभूयत इत्यपि पक्षे किं चिदंतरेणोत स्वेनैव । नाऽऽद्यः । अद्वैतवादे चिदंतरस्यैवाभावात् । तत्स्वीकारेऽपि चित्प्रतियोगिकस्याभावस्य चिद्ग्रहणमंतरेण गृहीतुमशक्यत्वात्तस्या अपि गृह्यमाणत्वे घटादिवदचित्त्वापत्तेः । नापि द्वितीयः । स्वाभावस्य स्वेन गृहीतुमशक्यत्वादिति । ननु द्वैतस्य प्रमात्रादिभेदरूपत्वात्तदभावस्य च तेनैवानुभवितुमशक्यत्वात्तदनुभवित्रंतराभावाच्च चैतन्यवदेव द्वैतस्यापि नित्यत्वापत्तिरित्याशंक्यानुभवित्रंतराभावोऽसिद्ध इति परिहरति—**द्वैतस्येति ।** जाग्रदादिद्वैताभावस्य सुषुप्तौ साक्षिणाऽनुभूयमानत्वात्तमसः साक्षी सर्वस्य साक्षीति श्रुतेश्चेति भावः ॥ ५४ ॥

**अ० टीका**—एवं तर्ह्यस्त्वचिंत्यरचनात्वादेव द्वैतमपि नित्यमित्यत आह—**प्रागिति ।** द्वैते हेत्वसिद्धिमाह—**द्वैतस्येति ।** अनादिभिन्नद्वैतस्येत्यर्थः । यद्वा द्वैताविर्भावस्येति यावत् । तेनानादौ नाव्याप्तिरिति रहस्यम् ॥ ५४ ॥

**रा० टीका**—एवं च प्रागभावयुतत्वे सत्यचिंत्यरचनात्वस्य मिथ्यात्वलक्षणस्य सद्भावाद्द्वैतमिथ्यात्वं सिद्धमित्याह—

**प्रागभावयुतं द्वैतं रच्यते हि घटादिवत् ॥**
**तथापि रचनाऽचिंत्या मिथ्या तेनेंद्रजालवत् ॥ २५५ ॥**

**प्रागभावेति ।** प्रागभावयुतमिति हेतुगर्भितं विशेषणं द्वैतं प्रागभावयुतत्वाद्धटादिवद्रच्यते हि तथाऽपि रच्यमानत्वेऽपि तस्य द्वैतस्य रचनाऽचिंत्या तेन रच्यमानत्वे सत्यचिंत्यरचनात्वेनैंद्रजालिकप्रासादवन्मिथ्येत्यर्थः ॥ २५५ ॥

**अ० टीका**—फलितमाह—**प्रागभावेति** ॥ २५५ ॥

**चित्प्रत्यक्षा ततोऽन्यस्य मिथ्यात्वं चानुभूयते ॥**
**नाद्वैतमपरोक्षं चेत्येतन्न व्याहतं कथम् ॥ ५६ ॥**

**रा० टीका**—चितिस्तावत्स्वप्रकाशत्वेन नित्याऽपरोक्षा च भासते चिद्व्यतिरिक्तस्य च मिथ्यात्वं तयैव चिताऽनुभूयत इति दर्शितमेवं च सत्यद्वैतस्यापरोक्षत्वं नास्तीति वदतो व्याघातश्च स्यादित्याह—**चित्प्रत्यक्षेति ।** चिद्रूपेण भासनादित्यभिहितयुक्तिसमुच्चयार्थश्चशब्दः । अद्वैतमपरोक्षं नेत्येतत्कथं न व्याहतं चेति योजना ॥ ५६ ॥

**अ० टीका**—नन्वेवं द्वैतस्य मिथ्यात्वं तावद्भिमतं मिथ्याऽचिंत्यरचनात्वादिंद्रजालवदिति युक्त्यैव सिध्यति नानुभूत्येत्यत्राऽऽह—**चिदिति ।** ततश्चितः सकाशादन्यस्य भिन्नस्य नामरूपात्मकस्य निखिलद्वैतजालस्येत्यर्थः । मिथ्यात्वधिया पृथक्कारे सत्ताप्रकाशराहित्येन स्वरूपोपमर्दात्स्वतःसत्ताशून्यत्वं चानुभूयते स्वप्रकाशचितैव विपर्यीक्रियत इत्यर्थः । ततः किं तदाह—**नाद्वैतमिति ।** एवं च यदुच्यते भेदवादिभिरद्वैतमपरोक्षं न भवतीति तत्कथं न खंडितं स्यादिति संबंधः ॥ २५६ ॥

**रा० टीका**—एवं वेदांतार्थं जानतामपि पुरुषाणां केषांचिदत्र विश्वासः कुतो न जायत इति पृच्छति—

**इत्थं ज्ञात्वाऽप्यसंतुष्टाः केचित्कुत इतीर्यताम् ॥**
**चार्वाकादेः प्रबुद्धस्याप्यात्मा देहः कुतो वद ॥ ५७ ॥**

**इत्थमिति ।** सम्यग्विचारशून्यत्वादिति विवक्षुः प्रतिबंदीं गृह्णाति—**चार्वाकादेरिति ।** आदिशब्देन पामरा गृह्यंते प्रबुद्धस्योहापोहकुशलस्य ॥ ५७ ॥

**अ० टीका**—नन्वेवं परोक्षतः शास्त्रार्थज्ञा अप्यत्र केचित्कथमसंतृप्ता इत्याशंक्य समाधत्ते—**इत्थमिति** । तथाचात्र दूरदृष्टप्रतिबंध एव हेतुरित्याकूतम् ॥ २५७ ॥

**रा० टीका**—प्रतिबंदीमोचनं शंकते—

**सम्यग्विचारो नास्त्यस्य धीदोषादिति चेत्तथा ॥**
**असंतुष्टास्तु शास्त्रार्थे न त्वैक्षंत विशेषतः ॥ ५८ ॥**

**सम्यगिति** । साम्येन समाधत्ते—**तथेति** । धीदोषादित्यनुषज्यते तुशब्दः एवशब्दार्थः ॥ ५८ ॥

**अ० टीका**—प्रतिबंदीमोचनं प्रकटयति—**सम्यगिति** । प्रकृतेऽपि तत्तौल्यमेवेत्याह—**असंतुष्टास्त्विति** ॥ २५८ ॥

**रा० टीका**—इत्थं नत्त्वं विचार्य तज्जन्यतत्त्वज्ञानफलं विचारयितुं तत्प्रतिपादिकां श्रुतिं पठति—

**यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः ॥**
**इति श्रौतं फलं दृष्टं नेति चेद्दृष्टमेव तत् ॥ ५९ ॥**

**यदेति ।** "अथ मर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुते" इत्यस्य मंत्रस्योत्तरार्धमस्य मुमुक्षोर्हृदि श्रिया ये कामास्तादात्म्याध्यासमूला इच्छादयः संति ते सर्वे यदा यस्मिन्काले प्रमुच्यंते तत्त्वज्ञानेनाध्यासनिवृत्तौ निवर्ततेऽथ तदानीमेव मर्त्यः पूर्वदेहतादात्म्याध्यासेन मरणशीलः पुरुषोऽमृतोऽध्यासाभावेन तद्रहितो भवति। तत्र हेतुमाह—**अत्र ब्रह्म समश्नुत इति** । अत्रास्मिन्नेव देहे ब्रह्म सत्यादिलक्षणं समश्नुते सम्यगाप्नोतीत्यस्याः श्रुतेरर्थः । श्रुत्या प्रतिपादितं फलं कामनिवृत्त्यादिलक्षण नानुभवसिद्धं किंतु शाब्दमेवेति शंकते—**इति श्रौतमिति** । समनंतरश्रुतिवाक्यतात्पर्यालोचनया तस्य दृष्टत्वं सिध्यतीत्यभिप्रायेण परिहरति—**दृष्टमेव तदिति** ॥ ५९ ॥

**अ० टीका**—नन्वेवमपि तत्त्वज्ञानफलं श्रुत्युक्तं तत्त्वविदि न दृश्यत इत्याशंक्य समाधत्ते—**यदेति** ॥ २५९ ॥

**रा० टीका**—तस्य दृष्टत्वस्पष्टीकरणाय तद्वाक्यमुदाहृत्य तस्यार्थमाह—

**यदा सर्वे प्रभिद्यंते हृदयग्रंथयस्त्विति ॥**
**कामा ग्रंथिस्वरूपेण व्याख्याता वाक्यशेषतः ॥ २६० ॥**

**यदा सर्व इति ।** अनेन वाक्यशेषेण कामप्रमोकस्य ग्रंथिभेदत्वेन व्याख्यातत्वाद्ग्रंथिभेदस्याहंकारचिदात्मनोस्तादात्म्याध्यासनिवृत्तिलक्षणस्यानुभवसिद्धत्वान्नाप्रत्यक्षतेति भावः । वाक्यशेषत इत्यनेन वाक्येनेत्यर्थः ॥ २६० ॥

**अ० टीका**—तदुपपादयति- यदा सर्व इति ॥ २६० ॥

**अहंकारचिदात्मानावेकीकृत्याविवेकतः ॥**
**इदं मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः ॥ ६१ ॥**

**रा० टीका**—ननु लोके कामशब्देनेच्छाभेद एवोच्यतेऽतः कथं तस्य ग्रंथित्वेन व्याख्यानमित्याशंक्याध्यासमूलस्यैवेच्छाविशेषस्य कामशब्दवाच्यत्वं नेच्छामात्रस्येत्याह—**अहंकारेति** ॥ ६१ ॥

**अ० टीका**—नन्वेवमपि किं ग्रंथेरेवाऽऽदौ स्वरूपमित्यत आह—**अहंकारेति** । चिदाभासकूटस्थावित्यर्थः । अविवेकतः परस्पराध्यासात् । एवं ग्रंथिमुक्त्वा तन्मूलकं कामपदार्थमाह—**इदं मे स्यादिति** ॥ २६१ ॥

**रा० टीका**—नन्वध्यासमूलस्यैव कामस्य त्याज्यत्वे सतीतरोऽभ्युपेतव्यः स्यादित्याशंक्य बाधकत्वाभावादभ्युपेयत एवेत्याह—

**अप्रवेश्य चिदात्मानं पृथक् पश्यन्नहंकृतिम् ॥**
**इच्छंस्तु कोटिवस्तूनि न बाधो ग्रंथिभेदतः ॥ ६२ ॥**

**अप्रवेश्येति** । अहंकारे चिदात्मानमप्रवेश्य तादात्म्याध्यासेनानंतर्भाव्येत्यर्थः ॥६२॥

**अ० टीका**—ततः किं तत्राऽऽह—**अप्रवेश्येति** । अहंकारं तदवच्छिन्नचिदाभासम् । चिदात्मानं कूटस्थं प्रत्यप्रवेश्य मूलाज्ञानप्रयुक्ततादात्म्यादन्योन्याध्यासेनानैकीकृत्येत्यर्थः । अत एव । पृथक्कूटस्थात्सकाशाद्भिन्नं पश्यन्सत्तादिशून्यत्वेन मिथ्याभूतमनुसंदधानः सन्तु पुनः कोटिवस्तूनि तदभिलषणीयत्वेन संस्कारादिच्छन्नपि यस्तत्त्वज्ञो भवति तस्य निरुक्तग्रंथिभेदतः कोऽपि बाधो नास्तीति संबंधः ॥ २६२ ॥

**रा० टीका**—नन्वध्यासाभावे कामानामनुदय एव स्यादित्याशंक्याऽऽरब्धकर्मवशात्तेषामुत्पत्तिः संभविष्यतीत्याह—

**ग्रंथिभेदेऽपि संभाव्या इच्छाः प्रारब्धदोषतः ॥**
**बुद्ध्वाऽपि पापबाहुल्यादसंतोषो यथा तव ॥ ६३ ॥**

**ग्रंथिभेदोऽपीति** । अत्र दृष्टांतमाह—**बुद्ध्वाऽपीति** ॥ ६३ ॥

**अ० टीका**—नन्वेवं चेत्काम एव न स्यादित्याशंक्याऽऽह—**ग्रंथिभेदेऽपीति** । तत्र तमेव प्रतिवादिनं दृष्टांतं करोति । **बुद्ध्वापीति** ॥ २६३ ॥

**रा० टीका**—अध्यासाभावेऽहंकारगतेच्छादेरबाधकत्वं दृष्टांतद्वयप्रदर्शनेन विशदयति—

**अहंकारगतेच्छाद्यैर्देहव्याध्यादिभिस्तथा ॥**
**वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् ॥ ६४ ॥**

**अहंकारेति** । यथा देहगतव्याध्यादिभिरहंकारसाक्षिणो बाधो नास्ति देहसंबंधरहितत्वाद्यथा वृक्षादिगतैर्जन्मादिभिरेवमध्यासनिवृत्तावहंकारगतेच्छादिभिरपीति भावः ॥ ६४ ॥

**अ० टीका**-नन्वेवमप्यहंकारप्रतिबिंबितचिदाभासगतेच्छाद्यैः कूटस्थस्याऽऽत्मनः सा-

...त्वं तु स्यादेवेत्याशंक्य नैतावता कश्चिद्बाध इति सदृष्टांतद्वयं स्पष्टयति—अहंका-
...रेति ॥ २६४ ॥

रा० टीका–चिदात्मनो... ...पूर्वमपि कामादिबाधो नास्तीति शंकते–

**ग्रंथिभेदात्पुरा- ... ...तन्न विस्मर ॥**
**अयमेव ग्रंथिभेदस्तव तेन कृती भवान् ॥ २६५ ॥**

ग्रंथिभेदादिति । एवंविधबोधस्यैव ग्रंथिभेदत्वेनास्माभिरभिधीयमानत्वादिदं चोद्यमस्म-
दनुकूलमित्याह—**तन्न विस्मरेति** ॥ २६५ ॥

अ० टीका—इदं तु ग्रंथिभेदतः प्रागपीति चेदयमेव ग्रंथिभेद इति संतोषयति—
ग्रंथीति ॥ २६५ ॥

रा० टीका—एवंविधज्ञानाभाव एव ग्रंथिरित्याह—

**नैवं जानंति मूढाश्चेत्सोऽयं ग्रंथिर्न चापरः ॥**
**ग्रंथितद्भेदमात्रेण वैषम्यं मूढबुद्धयोः ॥ ६६ ॥**

नैवमिति । ननु ज्ञानिनोऽपीच्छाभ्युपगमे ज्ञान्यज्ञानिनोः कुतो वैलक्षण्यमित्याशंक्य
ग्रंथिभेदाभेदातिरेकेण न कुतोऽपीत्याह—**ग्रंथितद्भेदेति** ॥ ६६ ॥

अ० टीका—इच्छादिकमखिलं चिदाभासनिष्ठमेव न तु तत्साक्षित्वोपलक्षितकूट-
स्थात्मनिष्ठमिति मूढा नैव किमपि जानंति चित्रमेतदिति शिष्यः श्रीगुरुं प्रति प्रोत्साहादाह—
**नैवमिति** । ततः श्रीगुरुः पुनर्बोधदृढीकारार्थं ग्रंथित्वं तत्रैवोक्ताविवेके विधत्ते—**सोऽयमिति** ।
फलितमाह—**ग्रंथितद्भेदेति** ॥ २६६ ॥

**प्रवृत्तौ वा निवृत्तौ वा देहेंद्रियमनोधियाम् ॥**
**न किंचिदपि वैषम्यमस्त्यज्ञानिविबुद्धयोः ॥ ६७ ॥**

रा० टीका—कारणांतराभावमेव विशदयति—**प्रवृत्ताविति** ॥ ६७ ॥

अ० टीका—ननु मात्रचा धर्मांतरव्युदासः कृतः स कथमुपपद्यते लोकादौ प्रवृत्त-
निवृत्तयोर्धर्मभेदादित्यत्राऽऽह **प्रवृत्तौ वेति** ॥ २६७ ॥

**व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा ॥**
**नाऽऽहारादावस्ति भेदः सोऽयं न्यायोऽत्र योज्यताम् ॥६८॥**

रा० टीका—उक्तार्थे दृष्टांतमाह—**व्रात्येति** ॥ ६८ ॥

अ० टीका—तत्र दृष्टांतं स्पष्टयति—**व्रात्येति** ॥ ६८ ॥

रा० टीका—ज्ञानिनो ग्रंथिशून्यत्वे गीतावाक्यं प्रमाणयति—

**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥**
**उदासीनवदासीन इति ग्रंथिभिदोच्यते ॥ ६९ ॥**

न द्वेष्टीति संप्रवृत्तानि प्राप्तानि दुःखानि न द्वेष्टि निवृत्तानि सुखानि न कांक्षत्यु-
दासीनवद्वर्तत इत्यर्थः । ग्रंथिभिदा ग्रंथिभेदः ॥ ६९ ॥

अ० टीका—ननु किमत्र मानमित्यत आह—**न द्वेष्टीति** । इति निरुक्तभगवद्वा-
क्येनैव ॥ २६९ ॥

**रा० टीका**—इदं वाक्यमौदासीन्यविधिपरं न तु ग्रंथिभेदे प्रमाणमिति शंकते—

**औदासीन्यं विधेयं चेद्वच्छब्दव्यर्थता तदा ॥**
**न शक्ता अस्य देहाद्या इति चेद्रोग एव सः ॥ २७० ॥**

**औदासीन्यमिति** । विधिपरत्वे वच्छब्दो व्यर्थः स्यादिति परिहरति—**वच्छब्देति** । ज्ञानिदेहादेरकार्यक्षमत्वादप्रवृत्तिर्न तु ग्रंथिभेदादित्याशंक्योपहसति—**न शक्ता इति** ॥२७०॥

**अ० टीका**—नन्वथापि सर्वदौदासीन्यं त्वद्वैतात्मबोधोत्तरमपि कर्तव्यमेवेत्याशंक्य समाधत्ते—**औदासीन्यमिति** । सर्वदृश्येऽपि मिथ्यात्वबोधाच्चित्रचंचलविलोचनालिंगनादौ देहादेः प्रवृत्त्यभाव इवाद्वैतब्रह्मविदां देहादिस्तब्धीभाव एव भूयादित्याशंक्य सोपहासं समाधत्ते—**न शक्ता इत्यादि सार्धेन** । यदिदं चित्रचंद्राननालिंगनप्रवृत्त्यभावनिदर्शनं प्रतिपादितं तत्रास्ति कश्चिद्विशेषः । चित्रे लिखिताकारातिरिक्तस्थूलाकाराभावादेव प्रवृत्त्यभावो न तु मिथ्यात्वबोधात् । अन्यथा सानुरागं भूयस्तदीक्षणप्रवृत्तिरपि न स्यात् । सा तु तत्सजातीयसमनुभूतकांतास्मारकत्वेन मृषात्मकेऽपि तत्रास्त्येवेति रहस्यम् ॥ २७० ॥

**रा० टीका**—भवतु को दोषस्तत्राऽऽह—

**तत्त्वबोधं क्षयं व्याधिं मन्यंते ये महाधियः ॥**
**तेषां प्रज्ञाऽतिविशदा किं तेषां दुःशकं वद ॥ ७१ ॥**

**तत्त्वबोधमिति** । दुःशकमसाध्यमित्यर्थः ॥ ७१ ॥

**अ० टीका**—**तत्त्वेति** । क्षयमिति व्याधिविशेषणम् ॥ ७१ ॥

**रा० टीका**—नन्वस्थाने परिहासोऽयं ज्ञानिनां प्रवृत्त्यभावस्य पुराणसिद्धत्वादिति शंकते—

**भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा ॥**
**जक्षन् क्रीडन् रतिं विंदन्नित्यश्रौषीर्न किं श्रुतिम् ॥ ७२ ॥**

**भरतादेरिति** । श्रुतिमजानानश्चोदयसीति परिहरति—**जक्षन्निति** । जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरमिति श्रौतं वाक्यं नाश्रौषीरित्यर्थः । जक्षन्भक्षञ्जक्ष भक्ष हसनयोरिति धातुः । क्रीडन्स्वेच्छया विहरन्रममाणः स्त्र्यादिभिर्नोपजनं स्मरन्निदं शरीरमित्युपजनं जनानां समीपे वर्तमानमिदं स्वशरीरं न स्मरन्नानुसंदधान इत्यर्थः । श्लोके रतिं विंदन्निति श्रौतस्य रममाण इति पदस्य व्याख्यानम् ॥ ७२ ॥

**अ० टीका**—ननु तत्त्वज्ञानिनां जडभरतादीनां प्रवृत्त्यभावस्य पुराणादौ सुप्रसिद्धत्वात्कथमुक्तोपहासः समुचित इति शंकसे चेत्तन्न । तत्तात्पर्यस्य त्वयैवाज्ञातत्वादिति गूढाभिसंधिः प्रतिवंदीमाह—**भरतादेरिति** । आदिनर्षभदेवादिः । **जक्षदिति** । तथा च **छांदोग्ये**ऽष्टमाध्याये **प्रजापति**विद्यायां समाम्नायते—जक्षन्क्रीडन्नममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरमिति । अस्या अर्थस्तु **मूलकृद्भि**रेवाभिहितोऽनुभूतिप्रकाशे—

“ **इंद्र**राजादिदेहेषु नाना खाद्यादि भक्षयन् ।
**बालैः** साकं हसन्स्त्रीभिः कदाचिद्रमते सह ॥
यानैः क्वापि ज्ञातिभिश्च सहितो मोदते खलु ।

न कदाचित्स्मरत्येतद्वपुर्जनसमीपगम् ॥
एतद्देहेन तादात्म्यभ्रांत्या दुःखमभूत्पुरा ।
विवेकेन भ्रमेऽपेते तद्दुःखं नाद्य वीक्ष्यते ॥
इंद्रराजादिदेहेषु न तादात्म्यं पुराऽपि च ।
अतो न तद्देहदुःखशंकाऽप्यस्य तु विद्यते ॥
सुखानि तद्देहगानि साक्षी सर्वाण्यवेक्षते ।
साक्ष्यात्मत्वाभिमानी सञ्ज्ञानी तान्यभिमन्यते ॥
दुःखान्यपीक्षते साक्षी तथाऽप्येतेषु तत्त्ववित् ।
नाभिमानमुपादत्ते दुःखानां मायिकत्वतः ॥
ब्रह्मानंदस्य लेशाः स्युरानंदा विषयोत्थिताः ।
अतस्तत्त्वविदः पक्षपातो ह्येतेषु विद्यते ॥
पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुयात् ।
इति श्रुत्यंतरं ब्रूते सुखं सर्वात्मदर्शिनः ॥
प्रजाः शोचंति यत्किंचित्तासामेव भवेदिदम् ।
न सर्वात्मदृशोऽस्तीति प्राहैतदपि सा श्रुतिः ॥
सर्वात्मत्वेऽपि देहादिदोषलेपो न मेऽस्ति हि ।
अदुष्टा सूर्यता यद्वच्चंडालादिस्पृगप्यसौ ॥
ब्रह्माद्याः स्थावरांता ये प्राणिनो मम पूः स्मृताः ।
कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥
इत्याचार्या ब्रह्मबोधकुशला अब्रुवन्पुरा ।
सुखमात्रग्राहिणोऽत्र दृष्टांताः संत्यनेकशः ॥
वृक्षे मधुकरः पुष्परसं गृह्णाति नेतरत् ।
यतिर्भिक्षामुपादत्ते नाशौचं कस्यचिद्गृहे ॥
मूर्खस्यापि सुखे पक्षपातोऽस्तीत्युच्यते यदि ।
तर्हि तस्य प्रसिद्ध्यर्थं तत्त्वं सोऽप्यवगच्छतु ॥
तत्त्वे बुद्धे स्वदेहेन तादात्म्यं न स्मरत्यसौ ।
तेन दुःखे विनष्टेऽथ सुखमेव सदेक्षते " इति ।

न च नैतावताऽपि तत्त्वविदः प्रवृत्तिसाधनसिद्धिरिति वाच्यम् । सर्वसुखाभिमानप्रवृत्तेरेव सिद्धत्वात् । तस्मादुदासीनतौल्यं युक्तमेवेति ॥ ७२ ॥

**न ह्याहारादि संत्यज्य भरताद्याः स्थिताः क्वचित् ॥**
**काष्ठपाषाणवत्किंतु संगभीता उदासते ॥ ७३ ॥**

**रा० टीका**—ननु तर्हि पुराणस्य का गतिरित्याशंक्य पुराणमप्यौदासीन्यबोधनपरं न प्रवृत्त्यभावपरमित्यभिप्रेत्याह—**न ह्याहारादीति** ॥ ७३ ॥

**अ० टीका—**तदेवाऽऽह—**न हीति** ॥ ७३ ॥

**संगी हि बाध्यते लोके निःसंगः सुखमश्नुते ॥**
**तेन संगः परित्याज्यः सर्वदा सुखमिच्छता ॥ ७४ ॥**

**रा० टीका**—संगोऽपि कुतस्त्यजत इत्यत आह—**संगी हीति** ॥ ७४ ॥

**अ० टीका**—तत्र हेतुमाह—**संगी हीति** । बाध्यते पीड्यत इत्यर्थः । सुखं सार्वात्म्यानुसंधानजन्यजीवन्मुक्तिसुखमित्यर्थः ॥ ७४ ॥

**रा० टीका**—ननु तर्हि मानसमंगस्यैव त्याज्यत्वेऽतःसंगशून्यानां बहिर्व्यवहरतामज्ञत्वादिकं जनैः कथमुच्यत इत्याशंक्य शास्त्रतात्पर्यज्ञानशून्यत्वादित्याह—

**अज्ञात्वा शास्त्रहृदयं मूढो वक्त्यन्यथाऽन्यथा ॥**
**मूर्खाणां निर्णयस्त्वास्तामस्मत्सिद्धांत उच्यते ॥ २७५ ॥**

**अज्ञात्वेति** । अतो मूढव्यवहारो नात्र विचारणीय इत्याह—**मूर्खाणामिति** । तर्हि किमनुसंधेयमित्याकांक्षायां शास्त्रहृदयमित्याह—**अस्मत्सिद्धांत इति** ॥ ७५ ॥

**अ० टीका**—नन्वत्र संगपदेन देहाद्यध्यास एव स च मानम एव तथा चांतस्त्यागे सति बहिर्यथेच्छविहारेऽपि का क्षतिः । तथाचोक्तं **वासिष्ठसारे**—" अंतस्त्यागी बहिः संगी लोके विहर राघव " इति चेन्न । यथेष्टाचरणस्य द्वैतविवेक एव खंडितत्वात् । उक्तवाक्ये बहिःसंगीपदेन बहिर्लोकसंग्रहार्थं स्वस्ववर्णाश्रमाचारस्यैव तत्र राघवविहारोपदेशान्यथानुपपत्तिसिद्धत्वाच्चेत्याशयेनाऽऽह—**अज्ञात्वेति** ॥ २७५ ॥

**वैराग्यबोधोपरमाः सहायास्ते परस्परम् ॥**
**प्रायेण सह वर्तंते वियुज्यंते क्वचित् क्वचित् ॥ ७६ ॥**

**रा० टीका**—कोऽसावित्यत आह—**वैराग्येति** ॥ ७६ ॥

**अ० टीका**—ननु कोऽसौ भवतां सिद्धांत इत्यपेक्षायां तमाह—**वैराग्येति** । क्वचिद्देशे काले च क्वचित्तत्त्वज्ञविशेषे च । तदुक्तं **बृहदारण्यके**—**गोकामा** एव वयं स्म इति **जनकसभायां** गोसहस्रग्रहणप्रयुक्ततद्गतमुन्याक्षेपकाले **याज्ञवल्क्यस्य** तान्प्रत्युक्तिः ॥ ७६ ॥

**हेतुस्वरूपकार्याणि भिन्नान्येषामसंकरः ॥**
**यथावदवगंतव्यः शास्त्रार्थं प्रविविच्यता ॥ ७७ ॥**

**रा० टीका**—वैराग्यादीनामन्योन्यपरिहारेणावस्थानदर्शनादभेदशंकाया तद्धेत्वादीनां भेदाद्भेदोऽवगंतव्य इत्याह—**हेतुस्वरूपेति** ॥ ७७ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**हेत्विति** । यतोहेतोरेषां वैराग्यादीनाम् । हेत्विति भिन्नानि पृथक्पृथगेव संत्यत एषाममंकरो भवतीत्यन्वयः । स तु शास्त्रार्थम् । ब्रह्माद्वैतशास्त्ररहस्यम् । प्रविचिन्वता प्रकर्षेणोपक्रमादिलिंगानुग्रहरूपोत्कर्षेण ब्रह्मविदनुभवसंप्रदायलक्षणाधिक्येन चिनोति शोधयति संगृह्णातीति वा तथा तेनेदृशेन मुमुक्षुणेत्यर्थः । प्रविविच्यतेत्यपपाठः । एवं प्रविचिन्वतेति साधुरप्युक्तार्थपरिपोषाभावादुपेक्ष्य एव यथावदवगंतव्य इति संबंधः ॥ ७७ ॥

**दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता ॥**
**असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी ॥ ७८ ॥**

**रा० टीका**—तत्र वैराग्यस्य हेत्वादित्रयं दर्शयति—**दोषदृष्टिरिति** ॥ ७८ ॥

**अ० टीका**—तान्येव तेषां प्रत्येकं क्रमेणाऽऽह—**दोषेत्यादि**त्रिभिः ॥ ७८ ॥

**रा० टीका**—इदानीं तत्त्वबोधस्य कारणादीनि दर्शयति—

**श्रवणादित्रयं तद्वत्तत्त्वमिथ्याविवेचनम् ॥**
**पुनर्ग्रंथेरनुदयो बोधस्यैते त्रयो मताः ॥ ७९ ॥**

**श्रवणादीति** । आदिशब्देन मनननिदिध्यासने गृह्येते "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इत्यात्मदर्शनसाधनत्वेन श्रवणादिविधानाच्छ्रवणादेर्ज्ञानहेतुत्वं तत्त्वमिथ्याविवेचनं कूटस्थाहंकारादेश्च भेदज्ञानं ग्रंथेरनुदयोऽन्योन्याध्यासानुत्पत्तिः ॥७९॥

**अ० टीका**—**श्रवणादीति** । ग्रंथेश्चिदचिदध्यासस्य । अनुदयोऽप्रतिभासः ॥७९॥

**रा० टीका**—उपरतेस्तानि दर्शयति—

**यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ॥**
**स्युर्हेत्वाद्या उपरतेरित्यसंकर ईरितः ॥ २८० ॥**

**यमादिरिति** । आदिपदेन नियमादयो गृह्यंते धीनिरोधश्चित्तवृत्तिनिरोधलक्षणो योगः ॥ २८० ॥

**अ० टीका**—**यमादिरिति** । संक्षयः सम्यङ्नाशः सुप्तिवद्विस्मृतिः सीमा भवेदुपरमस्य हीति वक्ष्यमाणत्वादात्यंतिकध्वंस इत्यर्थः । न चैवं निर्विकल्पापराभिधासंप्रज्ञातसमाधिनिष्ठस्य जीवन्मुक्तस्य संस्कारतः कश्चिद्व्यवहारोऽपि देवहूत्याः परपोष्यशरीरायाः परपायितपयोगिलनादेस्तथर्षभदेवस्य संचारादिव्यवहारस्य च **श्रीमद्भागवते** वर्णितत्वेनाऽऽत्यंतिकतद्व्यवहारविरहवर्णनमनुचितमेवेति वाच्यम् । श्रीमद्**बृहद्योग**वासिष्ठप्रसिद्धो**द्दालकमुने**रसंप्रज्ञातसमाधिनोपविष्टस्याप्रारब्धपरिसमाप्तिलोकदृशाऽपि लेशतोऽपि व्यवहारानुक्तेस्तदभिप्रायेणैवेह संक्षयस्योक्तत्वाद्देवहूत्यास्तु ततः किंचिन्न्यूनत्वेनर्षभस्य तु तस्या अपि किंचिन्न्यूनत्वेन गौणत्वस्यैवागत्या वाच्यत्वाच्च । विस्तरतस्त्वेतज्जीव**न्मुक्ति**विवेकप्रकरणविवरणात्मकैतदीयषोडशप्रकाशे वक्ष्याम इति संक्षेपः ॥ २८० ॥

**रा० टीका**—किमेतेषां समं प्राधान्यमुत नेत्याशंक्याऽऽह—

**तत्त्वबोधः प्रधानं स्यात्साक्षान्मोक्षप्रदत्वतः ॥**
**बोधोपकारिणावेतौ वैराग्योपरमावुभौ ॥ ८१ ॥**

**तत्त्वबोध इति** । "तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" इति श्रुतेरित्यर्थः । इतरयोस्तूपकारित्वं ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेच्छांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति श्रुतिभ्यामवगम्यते ॥ ८१ ॥

**अ० टीका**—नन्वथापि किमेतेषु मध्ये प्रधानमित्यत्राऽऽह—**तत्त्वेति** । एवं तर्हि वैराग्यादिव्यर्थमेवेति चेत्तत्राऽऽह—**बोधेति** ॥ ८१ ॥

**रा० टीका**—प्रायेण सह वर्तंते वियुज्यंते क्वचित्क्वचिदित्युक्तं तत्र कारणमाह—

**त्रयोऽप्यत्यंतपक्काश्चेन्महतस्तपसः फलम् ॥**
**दुरितेन क्वचित्किंचित्कदाचित्प्रतिबध्यते ॥ ८२ ॥**

**त्रयोऽपीति** । अनेकजन्मार्जितपुण्यपुंजपरिपाके त्रयाणां सहभावो भवत्यन्यथा तु प्रतिबंधकपापानुसारेण पुरुषविशेषे कालविशेषेण कस्यचित्प्रतिबंधो भवतीति भावः ॥ ८२ ॥

**अ० टीका**—ननु त्रयाणामप्येतेषां कथं पूर्णत्वमिति चेन्महातपसैवेत्याह—**त्रयोऽपीति** । ननु न्यूनत्वमप्येतेषां किं निरुक्ततपोऽभावमात्रेणैवोत कारणांतरादपीति शंकायामंत्यमंगीकरोति । **दुरितेनेति** । क्वचिज्जनकसभादेश एव । किंचिद्विषयविशेषीभूतगवादिवस्त्वंशत एव । कदाचिदुक्तसदस्याक्षेपकाल एवेति भावः । न तु सर्वदेशाद्यवच्छेदेनेति यावत् ॥ ८२ ॥

**रा० टीका**—तत्रापि तत्त्वज्ञानप्रतिबंधे मोक्षो नास्तीत्याह—

**वैराग्योपरती पूर्णे बोधस्तु प्रतिबध्यते ॥**
**यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात् ॥ ८३ ॥**

**वैराग्येति** । तर्हि वैराग्यादिसंपादनं निष्फलमित्याशंक्य—

" प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वतीः समाः ॥
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते "॥

इति भगवद्वचनात्पुण्यलोकप्राप्तिर्भवतीत्याह—**पुण्यलोकस्तपोबलादिति** ॥ ८३ ॥

**अ० टीका**—तत्र कस्य प्रतिबंधे किं भवतीत्यत आह—**वैराग्येति** प्रभृतिद्वाभ्याम् ॥ ८३ ॥

**पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ॥**
**मोक्षो विनिश्चितः किंतु दृष्टदुःखं न नश्यति ॥ ८४ ॥**

**रा० टीका**—वैराग्योपरत्योस्तु प्रतिबंधे जीवन्मुक्तिसुखं न सिध्यतीत्याह—**पूर्णे बोध इति** ॥ ८४ ॥

**अ० टीका**—**पूर्ण इति** । **दृष्टेति** । प्रारब्धफलीभूतं दुःखमित्यर्थः ॥ ८४ ॥

**ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः ॥**
**देहात्मवत् परात्मत्वदार्ढ्ये बोधः समाप्यते ॥ ८५ ॥**

**रा० टीका**—इदानीं वैराग्यादीनामवधिं दर्शयति—**ब्रह्मलोकेति** ॥ ८५ ॥

**अ० टीका**—तत्र त्रयाणामपि काष्ठां कथयति—**ब्रह्मेतिप्रभृतिसार्धेन** ॥ २८५ ॥

**सुप्तिवद्विस्मृतिः सीमा भवेदुपरमस्य हि ॥**
**दिशाऽनया विनिश्चेयं तारतम्यमवांतरम् ॥ ८६ ॥**

**रा० टीका**—सुप्तिवदित्यवांतरतारतम्यं स्वस्वबुद्ध्या निश्चेयमित्याह—**दिशेति**॥८६॥

**अ० टीका**—**सुप्तिवदिति** । उपलक्षणमिदं मध्यमवैराग्यादेरपि बोध्यमित्याह—**दिशेति** ॥ ८६ ॥

**आरब्धकर्मनानात्वाद्बुद्धानामन्यथाऽन्यथा ॥**
**वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पंडितैः ॥ ८७ ॥**

**रा० टीका**—ननु तत्त्वबोधवतामपि रागादिमत्त्वेन वैषम्योपलंभाज्ज्ञानस्यापि मुक्तिहेतुत्वं निश्चेतुं न शक्यमित्याशंक्य रागादेर्व्याध्यादिवदारब्धकर्मफलत्वान्मुक्तिप्रतिबंधकत्वमसिद्धमतो न शास्त्रार्थे विप्रतिपत्तव्यमित्याह—**आरब्धकर्मनानात्वादिति** ॥ ८७ ॥

**अ० टीका**—ननु प्रधानीभूताद्वैततत्त्वबोधवंतोऽपि—

" केऽपि वर्णाश्रमाचारनिष्ठापरा मुग्धबालप्रमत्तोपमाश्चापरे ।
**रागिणो** भोगिनो योगिनश्चेतरे ज्ञानिनां लक्ष्यते नैकरूपा स्थितिः "

इति **स्वाराज्य**सिद्धिवचनान्नानाविधशीला एवातो ज्ञानस्यापि रागाद्यासुरसंपत्सत्त्वे किं ज्ञानाभासत्वं वास्तवत्वं वा तथाऽत्येऽपि निरुक्तरागादिना वह्न्यादेर्मण्यादिना प्रतिबद्धत्वंस्वदाह्यदहन इवाविद्याध्वस्तिरूपमुक्तिव्यक्तीकारे किं वा नेति कथं निश्चेयमित्याशंक्य समाधत्ते—**आरब्धेति** ॥ ८७ ॥

**रा० टीका**—किं तर्हि प्रतिपत्तव्यमित्यत आह—

**स्वस्वकर्मानुसारेण वर्तनां ते यथा तथा ॥**
**अविशिष्टः सर्वबोधः समा मुक्तिरिति स्थितिः ॥ ८८ ॥**

**स्वस्वेति** । सर्वेषां ब्रह्माहमस्मीति ज्ञानमेकाकारं निरवद्यब्रह्मरूपेणावस्थानं च समानमिति भावः ॥ ८८ ॥

**अ० टीका**—नन्वथापि किं प्रकृत इत्यत आह—**स्वस्वेति** ॥ ८८ ॥

**जगच्चित्रं स्वचैतन्ये पटे चित्रमिवार्पितम् ॥**
**मायया तदुपेक्ष्यैव चैतन्यं परिशेष्यताम् ॥ ८९ ॥**

**रा० टीका**—प्रकरणस्यास्य तात्पर्यं संक्षिप्य दर्शयति—**जगदिति** ॥ ८९ ॥

**अ० टीका**—अथ प्रकरणार्थमुपक्रांतदृष्टांतेनैव संक्षिपति—**जगदिति** । परिशेष्यतामधिष्ठानीभूतचिन्मात्र एव बाधावधिभूते पर्यवमानं क्रियतामित्यर्थः । न हि रजतादेः शुक्तिशकलं विहायान्यत्र बाधपर्यवमानं भवति । आरोपितभावाभावयोरधिष्ठानैकसत्तायत्तत्त्वस्य नियतत्वादिति तत्त्वम् ॥ ८९ ॥

**चित्रदीपमिमं नित्यं येऽनुसंदधते बुधाः ॥**
**पश्यंतोऽपि जगच्चित्रं ते मुह्यंति न पूर्ववत् ॥ २९० ॥**

**इति विद्यारण्यविरचितायां श्रीपंचदश्यां षष्ठश्चित्रदीपः समाप्तः॥६॥**

**रा० टीका**—ग्रंथाभ्यासफलमाह—**चित्रदीपमिति** ॥ २९० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यश्रीचरणशिष्येण रामकृष्णाख्यविदुषा विरचितं तात्पर्यबोधनीनामकं चित्रदीपव्याख्यानं समाप्तम् ॥ ६ ॥

**अ० टीका**—प्रकरणाभ्यासफलमाह—**चित्रदीपमिति** । अनुसंदधते न तु केवलं पठंत्येव । एतेनैतद्ग्रंथतात्पर्यानुसंधानस्यैव प्रागवन्मोहाभावः फलं न तु केवलघोषणादेरिति द्योत्यते—ननु यदुक्तं प्रागुपोद्घाते त्वया—

" सूत्रात्मानं दांतानानंदानेव भोक्तुमतिवांच्छा ।
रूपादि धन्यता च प्रतिबंधः प्रथम एव इह जीवे " ।

इति जीवशब्देष्टशुद्धत्वंपदार्थबोधविषयकं विषयवासनाख्यं प्रथमप्रतिबंधमुक्त्वा चित्रपटादिनिदर्शनवशेन वैराग्यमात्मशब्देन । जीवस्वरूपमिति तत्प्राधान्यं भवति षष्ठेऽपि । इति प्रकृतचित्रदीपाख्यस्यास्य षष्ठप्रकरणस्य वैराग्यप्राधान्यपूर्वकजीवस्वरूपनिर्णयप्रधानत्वेनोक्तप्रतिबंधबाधकत्वं तत्कथमिति चेदुच्यते —

तथाहि—" यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् ।
परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम् " ।

इत्युपक्रमः ।

" जगच्चित्रं स्वचैतन्ये पटे चित्रमिवार्पितम् ।
मायया तदुपेक्ष्यैव चैतन्ये परिशेष्यताम् " ।

इत्युपसंहारश्च चित्रपटदृष्टांतेन यावद्दृश्यसुखविषयकवैरस्ये तथा कूटस्थात्माख्यजीवस्य शुद्धस्वरूपे च स्पष्टमेव प्रथमलिंगं तात्पर्यग्राहकम् ।

" ब्रह्माद्याः स्तंबपर्यंताः प्राणिनोऽत्र जडा अपि ।
उत्तमाधमभावेन वर्तंते पटचित्रवत् " इति ।

" न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ।
उदासीनवदासीन इति ग्रंथिभिदोच्यते " इत्यादिरभ्यासः ।

" भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा ।
जक्षन्क्रीडन्रतिं विंदन्नित्यश्रौषीर्न किं श्रुतिम् " ।

इत्यपूर्वताफलमर्थवादश्च ।

" संगी हि बाध्यते लोकैर्निःसंगः सुखमश्नुते ।
तस्मात्संगः परित्याज्यः सर्वदा सुखमिच्छता " ।

इत्युपपत्तिश्च । तस्मान्निरुक्तषोढालिंगैरस्य प्रकरणस्य विवेकवैराग्याद्यखिलसाधनसंपत्साक्षित्वोपलक्षितकूटस्थाख्यशोधितजीवस्वरूपैकपरत्वप्राधान्यादुक्तप्रतिबंधबाधकत्वं निर्बाधमेवेति दिक् ॥ २९० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्येण श्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमणपण्ठ्युपनामकश्रीमन्नारायणशास्त्रिचरणसरोजराजहंसायमानमानसेन मोडकोपाह्वयेनाच्युतशर्मणा विद्यार्थिना विरचितः पूर्णानंदेंदुकौमुद्याख्यायाः पंचदशीव्याख्यायाश्चित्रदीपप्रकाशः षष्ठः संपूर्णः ॥ ६ ॥

# अथ पंचदश्यां तृप्तिदीपाख्यं सप्तमं प्रकरणम् ।

**रा० टीका**—अखंडानंदरूपाय शिवाय गुरवे नमः ॥
शिष्याज्ञानतमोध्वंसपटवेऽद्वह्निमूर्तये ॥ १ ॥
वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥
नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
क्रियते तृप्तिदीपस्य व्याख्यानं गुर्वनुग्रहात् ॥ ३ ॥

**आत्मानं चेद्विजानीयादयमस्मीति पुरुषः ॥**
**किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ १ ॥**

तृप्तिदीपाख्यं प्रकरणमारभमाणः श्रीभारतीतीर्थगुरुस्तस्य श्रुतिव्याख्यानरूपत्वात्तव्द्याख्येयां श्रुतिमादौ पठति—**आत्मानं चेदिति** ॥ १ ॥

**अ० टीका**—अद्वैतं ब्रह्मसच्चिद्विभुविमलपरानंदकूटस्थरूपं
मोहाद्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ॥
सर्वाश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
भक्त्यैकाश्रयतः प्रवृत्तिरिति मे प्राचां वचोव्याकृतौ ।
विद्यारण्यगवीं सुदुर्लभरसां संदुह्य यावन्मति ॥
कुर्वे तद्गुरुवर्यविश्वविदितश्रीभारतीतीर्थवा-
ग्रूपां पंचदशीं नवप्रकरणीं व्याख्यानतो मंडिताम् ॥ २ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ॥
स्फुटयामि तृप्तिदीपं कौमुद्याः खलु मुनिप्रकाशेन ॥ ३ ॥

अथ भगवान्भारतीतीर्थमुनिवरः सर्वदा वक्ष्यमाणवैचारिकयौगिकान्यतराद्वैतात्मतत्त्वनिष्ठैकपरायणः परमकरुणया **श्रीमद्विद्यारण्याचार्याख्यपूर्वाश्रमप्रख्यातसर्वज्ञमाधवाचार्याभि**धस्वशिष्यसमारब्धाद्वैतशास्त्रीयतीव्रतरमुमुक्षुवरैकोपकारकपरमसरलपंचदशप्रकरणीगतचित्रदीपांतषट्प्रकरणीं संपूर्णां समवलोक्य संतुष्टस्तदंत्यश्लोकविशिष्टचरमचरणार्थमनुसंधाय लीलयैवावशिष्टनवप्रकरणीं स्वयमेवसमारभमाणस्तत्रादावुक्ततृप्तिमात्रजन्यत्वात्तृप्तिदीपाख्यमिदं सप्तमप्रकरणमेव वक्ष्यमाणवैचारिकसप्तमभूम्येकनिविष्टत्वेन कुर्वाणस्तद्विषयाद्यप्याविष्कुर्वाणः प्रथितप्रमाणादिमंगलमप्याकलयन्काण्वोपनिषन्मंत्रमेव पठति—**आत्मानं चेदिति** ॥ १ ॥

**रा० टीका**—इदानीं चिकीर्षितविचारं तत्फलं च दर्शयति—

**अस्याः श्रुतेरभिप्रायः सम्यगत्र विचार्यते ॥**
**जीवन्मुक्तस्य या तृप्तिः सा तेन विशदायते ॥ २ ॥**

**अस्या इति ।** अत्र तृप्तिदीपाख्ये ग्रंथेऽस्या आत्मानं चेदित्यादिकायाः श्रुतेरभिप्रायस्तात्पर्यं सम्यग्विचार्यते तेनाभिप्रायविचारेण जीवन्मुक्तस्य श्रुतिप्रसिद्धा या तृप्तिः सा विशदायते स्पष्टीभवति ॥ २ ॥

**अ० टीका**—अथोक्तश्रुतेर्भाष्यवार्तिककारादिनिखिलपूर्वाचार्यानुसारेण चिकीर्षितप्रकृतप्रकरणे तात्पर्यवर्णनं पठितश्रुतिध्वनितनिखिलाद्वैतशास्त्रीयाकरप्रकरणसाधारणपंचकोशसाक्षित्वोपलक्षिताचिन्मात्ररूपत्वं पदलक्ष्ययावद्दृश्याधिष्ठानत्वोपलक्षितचिन्मात्रलक्षणतत्पदलक्ष्यार्थैक्यरूपविषयतदेकाश्रयो विषयकोक्तप्रमैकनिरस्यानादिभावरूपमूलाविद्याध्वस्तिरूपमुक्त्याख्यप्रयोजनेतरासाधारणविषयप्रयोजने प्रेक्षावन्मुक्तमुमुक्षुप्रवृत्तये क्रमात्पूर्वोत्तरार्धाभ्यां कथयन्प्रतिजानीते—**अस्या इति ।** तेन निरुक्तश्रुत्यभिप्रायवर्णनेन विशदायते स्वयमेव प्रकटीभवतीत्यर्थः ॥ २ ॥

**रा० टीका**—" पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ॥
आक्षेपस्य समाधानं व्याख्यानं पंचलक्षणम् " ॥

इति व्याख्यानलक्षणस्योक्तत्वात्पुरुष इतिपदस्यार्थमभिधातुं तदुपोद्घातत्वेन सृष्टिं संक्षिप्य दर्शयति—

**मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ॥**
**कल्पितावेव जीवेशौ ताभ्यां सर्वं प्रकल्पितम् ॥ ३ ॥**

**मायाभासेनेति ।** प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थांतरवर्णनमुपोद्घातः । अत्र मायाशब्देन चिदानंदमयब्रह्मप्रतिबिंबसमन्विता सत्त्वरजस्तमोगुणात्मिका जगदुपादानभूता प्रकृतिरुच्यते सा च सत्त्वगुणस्य शुद्ध्यविशुद्धिभ्यां द्विधा भिद्यमाना क्रमेण माया चाविद्या च भवति तयोर्मायाविद्ययोः प्रतिबिंबितं ब्रह्म चैतन्यमेवेश्वरो जीवश्चेत्युच्यते तदिदं **तत्त्वविवेकाख्ये ग्रंथे श्रीमद्विद्यारण्यगुरुभिर्निरूपितम् ।**

" चिदानंदमयब्रह्मप्रतिबिंबसमान्विता ॥
तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा ॥
सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते ॥
मायाबिंबो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ॥
अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ॥
सा कारणशरीरं स्यात्प्राज्ञस्तत्राभिमानवान् " इति ॥

इममेवार्थं मनसि निधाय **जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति इति** श्रुतिरपि प्रवृत्ता । अतो जीवेश्वरयोर्मायाकल्पितत्वम् । अन्यत्कृत्स्नं जगत्ताभ्यामेव कल्पितम् ॥ ३ ॥

**अ० टीका**—एवमस्याभिनवविषयप्रयोजने प्रतिज्ञाय तत्प्रतिपादनोत्साहत्वरया विचारप्रतिज्ञायास्तद्व्याख्यानं विना सिद्ध्यसंभवात्तस्य च—

" पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपस्य समाधानं व्याख्यानं पंचलक्षणम् ॥ "

इति पाराशरपुराणोक्तलक्षणस्य पदार्थकथनादिघटितत्वात्तद्गतपूरुषपदार्थकथनार्थमुपोद्घातत्वेनसृष्टिं संक्षिप्योपदेष्टुं मायाभासेन जीवेशौ करोतीति ताभ्यां सर्वं प्रकल्पितमिति च चित्रदीपस्थकारिकयोरेव ।

"मायाभासेनजीवेशौ करोतीति श्रुतौ श्रुतम्" इति ॥
आनंदमयविज्ञानमयावीश्वरजीवकौ ।
मायया कल्पितावेतौ ताभ्यां सर्वं प्रकल्पितम्" ।

इति चैतयोरंशौ गृहीत्वा । श्रुतत्वतः कल्पितावेव जीवेशाविति स्वविवक्षितांशं प्रपूर्य प्रथमकारिकां तथा । ईक्षणादीत्यादि तत्रत्यामेव द्वितीयकारिकां कियती सृष्टिः केन कल्पितेति विभागकथनार्थं च लिखति स्म—**मायेति** ॥ ३ ॥

**ईक्षणादिप्रवेशांता सृष्टिरीशेन कल्पिता ॥**
**जाग्रदादिविमोक्षांतः संसारो जीवकल्पितः ॥ ४ ॥**

**रा० टीका**—तत्र केन कियत्कल्पितमित्यत आह—**ईक्षणादीति** "तदैक्षत बहु स्यां प्रजायेय" इति श्रुतमीक्षणमादिर्यस्याः सा ईक्षणादिरनेन जीवेनाऽऽत्मनाऽनुप्रविश्येति श्रुतः प्रवेशोंऽतो यस्याः सा प्रवेशांता । ईक्षणादिश्चासौ प्रवेशांता चेति पश्चात्कर्मधारयः । सेयं सृष्टिरीश्वरेण कल्पिता जाग्रदादिर्यस्य संसारस्यासौ जाग्रदादिः । विमोक्षो मुक्तिरंतो यस्य स विमोक्षांतः संसारो जीवेन कल्पितस्तदभिमानित्वाज्जीवस्येत्यर्थः । ते च जाग्रदादय इत्थं श्रूयंते—

"स एष मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ॥
स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥
स्वप्नेऽपि जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके ॥
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥
पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः ॥
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ॥
जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ॥
तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यत" इति ॥ ४ ॥

**अ० टीका**—**ईक्षणेति** । 'स ईक्षत । तत्तेजोऽसृजत' अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति च छांदोग्यश्रुतिप्रसिद्धेत्यर्थः । **विमोक्षेति** । न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थतेति श्रुतेरविद्याध्वस्तिरूपमुक्तेरपि कल्पितप्रतियोगिकत्वेन तथात्वमेवेति॥४॥

**रा० टीका**—एवं पुरुषशब्दार्थावबोधोपयोगिनीं सृष्टिमभिधायेदानीं पुरुषशब्दार्थमाह—

**भ्रमाधिष्ठानभूतात्मा कूटस्थासंगचिद्वपुः ॥**
**अन्योन्याध्यासतोऽसंगधीस्थजीवोऽत्र पूरुषः ॥ ५ ॥**

**भ्रमाधिष्ठानेति ।** यः कूटस्थासंगचिद्वपुरविकार्यसंगचित्स्वरूपो भ्रमाधिष्ठानभूतात्मा भ्रमस्य देहेंद्रियाद्यध्यासस्याधिष्ठानभूतोऽधिष्ठानत्वेन वर्तमानः परमात्माऽस्ति सोऽसंग एव । अन्योन्याध्यासतोऽन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सर्वव्यवहारभाग्भवतीत्या-

चार्यैर्निरूपितेन तादात्म्याध्यासेनासंगश्चीस्थजीवः स्वेन पारमार्थिकसंबंधशून्यायां बुद्धौ वर्तमानो जीवः सन्नत्रास्यां श्रुतौ पुरुष इत्युच्यते । **"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः"** इति श्रुत्या पुरुषशब्दस्य व्युत्पादितत्वात्पुरुषस्यैव च पूरुपत्वात्पुरुष एव पूरुषो बुद्ध्यादिकल्पनाधिष्ठानं कूटस्थचैतन्यमेव बुद्धौ प्रतिबिंबितत्वेन प्राप्तजीवभावं सत्पुरुषशब्देनोच्यत इत्यभिप्रायः ॥ ५ ॥

**अ० टीका**—एवं सृष्टिसंसारावीश्वरजीवकल्पितावुपोद्धातीभूतावभिधायेदानीं पुरुषशब्दार्थं कथयति—**भ्रमेति** । एवं चात्र चित्रदीपोक्तभगवद्वार्तिककारचरणसंमता सिद्धांतीश्वरीभूताभासवादप्रक्रियाया एवेष्टत्वं स्पष्टमेव । अक्षरार्थस्तु भ्रमस्य—

" कूटस्थे कल्पिताबुद्धिस्तत्र चित्प्रतिबिंबकः ।
प्राणानां धारणाज्जीवः संसारेण स युज्यते " ।

इति चित्रदीपोक्तेरविद्यया स्वस्मिन्नध्यस्तसाभासबुद्धिरूपारोपस्याधिष्ठानभूतः संसिद्धा सविलाससोहविषये वस्तुन्यधिष्ठानगीरिति **संक्षेपशारीरकोक्तेः** । सकार्यकाविद्याविषय एतादृशो य आत्मा प्रत्यगित्यर्थः । **कूटस्थेति** । निर्विकारासंगचिदेकस्वरूप इत्यर्थः । एतादृशोऽपि । **असंगेति** । स्वासंबद्धबुद्धिप्रतिफलितचिदाभासश्चेत्यर्थः । उभाविमौ । **अन्योन्येति** । अन्योन्यस्मिन्नन्योन्यात्मकतासन्योन्यधर्मांश्चाध्यस्येत्याद्यध्यासभाष्योक्ति संसर्गतादात्म्यलक्षणपरम्पराध्यासादिति यावत् । अत्र प्रकृतश्रुतौ । 'पुरुषः स वा अयं पुरुषः सर्वासु पूर्षु पुरिशय इति' श्रुतेः । पुरुष एव पूरुषः ' पुरत्रये क्रीडति यस्तु जीवः ' इति च श्रुतेः साधिष्ठानपंचकोशावच्छिन्नचिदाभासोऽस्तीति संबंधः ॥ ५ ॥

**रा० टीका**—नन्वत्र पुरुषशब्देन केवलचिदाभासरूपो जीव एवोच्यतां किमनेन कूटस्थचैतन्येनाधिष्ठानभूतेनेत्याशंक्य तस्य मोक्षाद्यन्वयितृत्वसिद्धये तदपि स्वीकर्तव्यमित्याह—

**साधिष्ठानो विमोक्षादौ जीवोऽधिक्रियते न तु ॥**
**केवलो निरधिष्ठानविभ्रांतेः क्वाप्यसिद्धितः ॥ ६ ॥**

**साधिष्ठान इति** । साधिष्ठानोऽधिष्ठानेन कूटस्थचैतन्येन सहितो जीवो विमोक्षादौ मोक्षस्वर्गादिसाधनानुष्ठानेऽधिक्रियतेऽधिकारी भवति न केवलचिदाभासः कुत इत्यत आह— **निरधिष्ठानेति** । अधिष्ठानरहितस्याऽऽरोप्यस्य लोकेऽदृष्टत्वादिति भावः ॥ ६ ॥

**अ० टीका**—ननु जाग्रदादिविमोक्षांत इत्यादिप्रपूर्वपद्योक्तिरसंगत्वेनाधिष्ठानीभूतकूटस्थात्मनः किमिति पुरुषपदार्थप्रवेश इत्यत्राऽऽह—**साधिष्ठान इति** । तत्र हेतुः-**निरधिष्ठानेति** । तथा चाऽऽहुः **श्रीमद्वार्तिककारचरणाः** अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनमिति ॥ ६ ॥

**रा० टीका**—इदानीं साधिष्ठानस्यैव तस्य संसाराद्यन्वयितृत्वं श्लोकद्वयेन विभज्य दर्शयति—

**अधिष्ठानांशसंयुक्तं भ्रमांशमवलंबते ॥**
**यदा तदाऽहं संसारीत्येवं जीवोऽभिमन्यते ॥ ७ ॥**

**अधिष्ठानांशेति** । जीवो यदाऽधिष्ठानांशसंयुक्तं कूटस्थसहितं भ्रमांशं चिदाभासोपेतं शरीरद्वयमवलंबते स्वस्वरूपत्वेन स्वीकरोति तदाऽहं संसारीत्येवमभिमन्यते ॥ ७ ॥

**अ० टीका**—ननु भवत्वेवमथाप्यस्य पूरुषस्य जीवपदवाच्यस्य जाग्रदादिविमोक्षांत इत्यत्र विमोक्षस्य संसाराद्वैलक्षण्यार्थमवश्यं चित्रग्वादिवदतद्गुणसंविज्ञानबहुव्रीह्यंगीकारात्क्रमात्संसारित्वानुभवस्तथा मुक्तत्वानुभवश्च कदा कथं भवतीत्यपेक्षायां तावाह—**अधिष्ठानांशेत्यादिद्वाभ्याम्** ॥ ७ ॥

**भ्रमांशस्य तिरस्कारादधिष्ठानप्रधानता ॥**
**यदा तदा चिदात्माऽहमसंगोऽस्मीति बुध्यते ॥ ८ ॥**

**रा० टीका**—यदा पुनर्भ्रमांशस्य देहद्वयमहितस्य चिदाभासस्य तिरस्कारान्मिथ्यात्वज्ञानेनानादरणादधिष्ठानप्रधानताऽधिष्ठानभूतस्यैव कूटस्थस्य स्वरूपत्वं जीवेन स्वीक्रियते तदाऽहं चिदात्माऽसंगश्चास्मीति बुध्यते जानाति ॥ ८ ॥

**अ० टीका—भ्रमांशस्येति** । यदाऽस्य श्रवणाद्यभ्यासपरिपाटवश्रीगुरुचरणारविंदप्रसादाभ्यां विचारितनत्त्वमस्यादिमहावाक्यजन्याद्वैतात्मैक्यविषयकद्वैतमिथ्यात्वपूर्वकब्रह्मसाक्षात्काराख्यचरमप्रभोदयाद्भवति तदेतिसंबंधः ॥ ८ ॥

**रा० टीका**—नन्वधिष्ठानचैतन्यस्य जीवस्वरूपत्वस्वीकारे चिदात्माऽहमसंगोऽस्मीति बुध्यत इति यदुक्तं तदनुपपन्नं स्यात् । असंगचिद्रूपस्य कूटस्थस्याहंप्रत्ययविषयत्वाभावादिति शंकते—

**नासंगेऽहंकृतिर्युक्ता कथमस्मीति चेच्छृणु ॥**
**एको मुख्यो द्वावमुख्यावित्यर्थस्त्रिविधोऽहमः ॥ ९ ॥**

**नासंग इति** । असंगे चिदात्मविषयेऽहंप्रत्ययो न युज्यते यतोऽन्यतः कथमहमस्मीति जानीयान्न कथमपीत्यर्थः । मुख्यया वृत्त्याऽहंप्रत्ययविषयत्वाभावेऽपि लक्षणया तदस्तीति विवक्षुरहंशब्दार्थं तावद्विभजते —**शृण्विति** । अहमोऽहंशब्दस्येत्यर्थः ॥ ९ ॥

**अ० टीका**—तत्राऽऽशंकते-**नेति** । अस्मीत्यहंकृतिः कथमित्यहंकृतिपदमनुकृष्यात्रापि योज्यम् । असंगे शक्तिवृत्त्याऽहंपदप्रवृत्तितज्जन्यदेहादिविशिष्टचिद्विषयकचित्तवृत्त्यभावेऽपि ' ब्रह्माहमस्मीति ' तैत्तिरीयश्रुतेरहं ब्रह्मास्मीति काण्वश्रुतेश्च लक्षणावृत्त्या विशिष्टांशं विहाय चिन्मात्रांशग्रहेण तन्मात्राकारोक्तचरमप्रमारूपवृत्त्यात्मिकाऽसौ संभवत्येवेति समाधातुं शिष्यमभिमुखीकरोति—**शृण्विति** ।

" आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या ।
तत्संपर्कात्सत्यता तत्र चान्या व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र " ॥

इति सर्वज्ञात्ममुनीश्वर चरणेऽस्ति रीत्याजहदजहत्स्वार्थाख्यलक्षणाप्रकारमेव प्रकाशयन्नहंपदार्थमेव त्रिधा विभजते—**एक इति** । मुख्यः शक्यः । अमुख्यौ लक्ष्यौ ॥ ९ ॥

**रा० टीका**—कीदृशो मुख्योऽर्थ इत्याकांक्षायां तं दर्शयति—

**अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः ॥**
**एकीभूय भवेन्मुख्यस्तत्र मूढैः प्रयुज्यते ॥ १० ॥**

**अन्योन्येति** । कूटस्थचिदाभासयोः स्वरूपमन्योन्याध्यासेनैक्यं प्राप्तमहंशब्दस्य वाच्यत्वेन मुख्योऽर्थो भवति । अस्य कुतो मुख्यत्वमित्यत आह—**तत्र मूढैरिति** । यत इत्य-

ध्याहारः । तत्र तस्मिन्नविविक्तकूटस्थचिदाभासयोः स्वरूपे यतो विवेकज्ञानशून्यैः सर्वैरप्यहंशब्दः प्रयुज्यतेऽतोऽस्य मुख्यत्वमित्यर्थः ॥ १० ॥

**अ० टीका**—तत्र को मुख्य इत्यपेक्षायां तमाह—**अन्योन्येति** । प्राग्व्युत्पादितपरस्पराध्यासात्मनेत्यर्थः । **कूटस्थेति** । साक्षित्वोपलक्षितनिर्विकारचैतन्यबुद्धिप्रतिबिंबितचिदाभासयोरिति यावत् । वपुः स्वरूपम् । एकीभूयैकमिव भूत्वा । मुख्योऽहमर्थो भवेदित्यन्वयः । ननु क्वेदं दृष्टमित्यतस्तदुदाहरणमाह—**तत्रेति** । तादृशे शक्यार्थ एव । मूढाः सर्वेऽप्यज्ञानिनः । प्रयुंजतेऽहं ब्राह्मणोऽस्मीत्यहं पदमिति शेषः ॥ १० ॥

**रा० टीका**—इदानीममुख्यौ द्वौ दर्शयति—

**पृथगाभासकूटस्थावमुख्यौ तत्र तत्त्ववित् ॥**
**पर्यायेण प्रयुंक्तेऽहंशब्दं लोके च वैदिके ॥ ११ ॥**

**पृथगिति** । आभासकूटस्थौ प्रत्येकमहंशब्दार्थत्वेन यदा विवक्षितौ तदाऽमुख्यार्थौ भवतः । अनयोरमुख्यत्वे कारणमाह—**तत्र तत्त्वविदिति** । अत्रापि यत इत्यध्याहारः । तत्त्वविद्यतस्तत्र तयोः कूटस्थचिदाभासयोरहंशब्दं लोके लौकिके वैदिके वैदिकव्यवहारे च पर्यायेण प्रयुंक्त इति योजना । अयं भावः । चिदाभासकूटस्थयोरविविक्तरूपस्य सार्वजनीनव्यवहारविषयत्वान्मुख्यार्थत्वम् । विविक्तरूपस्य तु कतिपयजनैः कदाचिदेव व्यवह्रियमाणत्वादमुख्यार्थत्वमिति ॥ ११ ॥

**अ० टीका**—अथामुख्यौ तावाह—**पृथगिति** । विभिन्नावेवाहंशब्दार्थत्वेन विवक्षितौ चेदमुख्यौ लक्ष्यावेवास्मदर्थौ भवत इत्यर्थः । तयोरप्युदाहरणं प्रागवद्दर्शयति—**तत्रेति** । तत्त्वविद्ब्रह्मनिष्ठः । तत्र तयोराभासकूटस्थयोः पर्यायेण क्रमेण । लोके अहमद्य स्नातुं गंगां प्रति गच्छामीत्यादिलौकिकव्यवहार इत्यर्थः । तथा वैदिके 'अहं ब्रह्मास्मि' इत्यादिसंप्रज्ञातसमाधिकाले साधारण्येन यथेच्छं तत्त्वानुसंधानकाले चेत्यर्थः । अहंशब्दं प्रयुङ्क्त इति योजना ॥ ११ ॥

**रा० टी०**—पर्यायेण प्रयुंक्त इत्युक्तमेवार्थं प्रपंचयति प्रतिपत्तिसौकर्याय श्लोकद्वयेन—

**लौकिकव्यवहारेऽहं गच्छामीत्यादिके बुधः ॥**
**विविच्यैव चिदाभासं कूटस्थात्तं विवक्षति ॥ १२ ॥**

**लौकिकेति** । बुधो विद्वानहं गच्छामीत्यादिलौकिकव्यवहारे कूटस्थाच्चिदाभासं विविच्य तमेवाहंशब्देन विवक्षति वक्तुमिच्छति ॥ १२ ॥

**अ० टीका**—उक्तव्यवहारं स्वयमेव विवृणोति—**लौकिकेत्यादिक्रमेण** द्वाभ्याम् १२

**असंगोऽहं चिदात्माऽहमिति शास्त्रीयदृष्टिना ॥**
**अहंशब्दं प्रयुंक्तेऽयं कूटस्थे केवले बुधः ॥ १३ ॥**

**असंग इति** । अयमेव बुधः शास्त्रीयदृष्टिना वेदांतश्रवणजनितज्ञानेन केवले चिदाभासाद्विविक्ते कूटस्थेऽसंगोऽहं चिदात्माऽहमिति लक्षणयाऽहंशब्दं प्रयुंक्ते । अतो लक्षणयाऽहंशब्दार्थत्वेनाहंप्रत्ययाविषयत्वसंभवादसंगोऽहमस्मीति ज्ञानमुपपद्यत इत्यभिप्रायः ॥ १३ ॥

**अ० टीका**—**असंगोऽहमिति** । अयं बुध इति संबंधः । अयं प्रकृतः । बुधस्तत्त्वनिष्ठ इत्यर्थः । एवं च लक्षणावृत्तिवृत्तिभ्यामिभ्यामसंगोऽप्यहंकृतियुक्तैवेति भावः ॥ १३ ॥

**ज्ञानिताज्ञानिते त्वात्माभासस्यैव न चाऽऽत्मनः ॥**
**तथा च कथमाभासः कूटस्थोऽस्मीति बुध्यताम् ॥ १४ ॥**

**रा० टीका**—ननु पृथगाभासकूटस्थावहंशब्दस्यामुख्यार्थावित्युक्तं तयोर्मध्ये कूटस्थः किमज्ञाननिवृत्तयेऽसंगोऽस्मीति जानाति किंवा चिदाभासो न तावत्कूटस्थस्तस्यासंगचिद्रूपत्वेन ज्ञानित्वाज्ञानित्वयोरनुपपत्तेरताश्चिदाभासस्य ज्ञानित्वादिकं वक्तव्यम्। तथा च सति कूटस्थादन्यश्चिदाभासोऽहं कूटस्थोऽस्मीति न ज्ञातुमर्हतीति शंकते—**ज्ञानिताज्ञानितेति**॥१४॥

**अ० टीका**—तत्र शंकते—**ज्ञानितेति**। ज्ञानाज्ञानयोः समानाश्रयविषयकत्वेनैव निवर्त्यनिवर्तकभावस्य व्युत्क्रमेण सर्वत्र दृष्टत्वादिति हेतुरार्थिक एवेति भावः। ततः किं तत्राऽऽह—**तथा चेति**। एवं चासंग इत्याद्युक्तसिद्धांतोऽनुचित एवेत्याकूतम्॥ १४ ॥

**रा० टीका**—तस्य कूटस्थान्यत्वमेवासिद्धमिति परिहरति—

**नायं दोषश्चिदाभासः कूटस्थैकस्वभाववान् ॥**
**आभासत्वस्य मिथ्यात्वात्कूटस्थत्वावशेषणात् ॥ १५ ॥**

**नायमिति**। तत्रोपपत्तिमाह—**आभासत्वस्येति**। यथा दर्पणे प्रतीयमानस्य मुखाभासस्य ग्रीवास्थं मुखमेव तत्त्वं तद्वदिति भावः॥ १५ ॥

**अ० टीका**—तत्र समाधातुं प्रतिजानीते—**नायमिति**। तत्र हेतुः—**चिदाभास इत्यादिना**। कूटस्थमात्रायत्तसत्तादिमानित्यर्थः। तदपि कुत इत्यत्राऽऽह—**आभासस्येत्युत्तरार्धेन**। एवं च यथा कौंतेयैकसत्तादिमात्राधेयः कौंतेयोऽस्मीति मातृवचसा पूर्वं बोद्धुमर्होऽभूत्तथाऽऽभासोऽपि श्रुतिवचसाऽस्मीति बोद्धुमर्हत्येवेति तत्त्वम्॥ १५ ॥

**रा० टीका**—ननु चिदाभासस्य मिथ्यात्वे तदाश्रितं कूटस्थोऽस्मीति ज्ञानमपि मिथ्या स्यादिति शंकते—

**कूटस्थोऽस्मीति बोधोऽपि मिथ्या चेन्नेति को वदेत् ॥**
**न हि सत्यतयाऽभीष्टं रज्जुसर्पविसर्पणम् ॥ १६ ॥**

**कूटस्थ इति**। कूटस्थस्वरूपातिरिक्तस्य कृत्स्नस्यापि मिथ्यात्वाभ्युपगमात्तन्मिथ्यात्वमस्माकमिष्टमेवेति परिहरति—**नेति को वदेदिति**। उक्तमर्थं दृष्टांतेन स्पष्टयति—**न हीति**। रज्ज्वां कल्पितस्य सर्पस्य गत्यादिकमपि प्रतीयमानं वास्तवं नांगीक्रियते यथा तद्वदिति भावः॥ १६ ॥

**अ० टीका**—नन्वेवमपि मिथ्याभूताभासनिष्ठज्ञानिताख्यधर्मस्यापि तथात्वमेवेति शंकते—**कूटस्थोऽस्मीतीति**। इष्टापत्त्या परिहरति—**नेतीति**। एष भावः। रज्जुसर्पोऽपगत इतिव्यवहारः संदृष्टोऽपि यथा न तथ्यस्तथेत्यर्थः॥ १६ ॥

**रा० टीका**—ज्ञानस्य मिथ्यात्वे तेन संसारनिवृत्तिर्न स्यादित्याशंक्य निवर्त्यस्य संसारस्यापि तथात्वात्तन्निवृत्तिरुपपद्यते स्वप्नव्याघ्रदर्शनेन निद्रानिवृत्तिवदित्यभिप्रायेणाऽऽह—

**तादृशेनापि बोधेन संसारो हि निवर्तते ॥**
**यक्षानुरूपो हि बलिरित्याहुर्लौकिका जनाः ॥ १७ ॥**

**तादृशेनेति** । तत्र यादृशो यक्षस्तादृशो बलिरिति लौकिकगाथां संवादयति—**यक्षेति** ॥ १७ ॥

**अ० टीका**—ननु यदि तत्त्वावबोधोऽपि मिथ्या चेत्ततः कथं संसारो विनिवर्ततेति चेन्निवर्त्यस्य संसारस्यापि तादृशत्वाद्यथा यक्षस्तथाबलिरिति न्यायात्स्वाप्राप्तोपदेशेन स्वाप्नदृष्टव्याघ्रविषयकमिथ्यात्वबोधैककरणकतन्निवृत्तिदर्शनाच्च तादृशबोधेनापि निखिलद्वैतात्मकः संसारो निवर्तत एवेत्याह—**तादृशेनापीति** ॥ १७ ॥

**रा० टीका**—उपपादितमर्थमुपसंहरति—

**तस्मादाभासपुरुषः सकूटस्थो विविच्य तम् ॥**
**कूटस्थोऽस्मीति विज्ञातुमर्हतीत्यभ्यधाच्छ्रुतिः ॥ १८ ॥**

**तस्मादिति** । यस्मात्कूटस्थ एव चिदाभासस्य निजं स्वरूपं तस्मात्पुरुषशब्दवाच्यः कूटस्थसहितश्चिदाभासस्तं कूटस्थं मिथ्याभूतात्स्वस्माद्विविच्य लक्षणया कूटस्थोऽहमस्मीत्यवगतुं शक्नोतीत्यभिप्रायेण श्रुतिरस्मीत्युक्तवतीत्यर्थः ॥ १८ ॥

**अ० टीका**—उपसंहरति—**तस्मादिति** । यस्माच्चिदाभासस्य वास्तवं रूपं कूटस्थ एव तस्मात् । स कूटस्थः कूटस्थविशिष्टः । **आभासेति** । आभास एव पुरुषः प्रकृतश्रुतौ पुरुषपदवाच्यो जीव इत्यर्थः । तं कूटस्थं विविच्य स्वेन महानाद्यविद्याकृतादेतस्मात्पृथक्कृत्याऽहं कूटस्थोऽस्मीति विज्ञातुमवबोद्धुमर्हतीत्यात्मानं चेदित्यादिश्रुतिरभ्यधादकथयदित्यन्वयः ॥ १८ ॥

**रा० टीका**—एवं पुरुषोऽस्मीतिपदद्वयप्रयोगाभिप्रायमभिधायायमितिपदप्रयोगाभिप्रायमाह—

**असंदिग्धाविपर्यस्तबोधो देहात्मनीक्ष्यते ॥**
**तद्वदेतन्निर्णेतुमयमित्यभिधीयते ॥ १९ ॥**

**असंदिग्धेति** । लौकिकानां प्रसिद्धे देहरूप आत्मनि संशयविपर्ययरहितोऽयमस्मीति बोधो यद्वदुपलभ्यते। अत्र प्रत्यगात्मनि विषये तद्वत्तथाविधं ज्ञानं मुक्तिसिद्धये संपाद्यमिति निर्णेतुमयमित्यभिधीयते श्रुत्येति शेषः ॥ १९ ॥

**अ० टीका**—एवं प्रागभिहितपुरुषपदार्थेन महास्मीत्याख्यानस्यान्वयेन विवक्षितार्थमभिवर्ण्य श्रौतस्यायमिति पदप्रयोगस्याशयं सूचयति—**असंदिग्धेति** । समानाश्रयविषयकभावाभावोभयकोटिकमव्यवहितं ज्ञानद्वयं संशयापरपर्यायः संदेहः यथाऽयं घटो न वेति । अतस्मिंस्तद्बुद्धिर्विपर्ययः । यथेदं रजतमिति । तदुभयानास्कंदितो बोधोऽहं गौरो ब्राह्मण इति यथा देहलक्षणात्मनि सदाऽनुभूयते तद्वदत्र नित्यापरोक्षात्मनि कूटस्थेऽपि विषये बोधोऽपेक्षित इत्यभिप्रायः ॥ १९ ॥

**रा० टीका**—ईदृशस्यैव बोधस्य मोक्षसाधनत्वे चाऽऽचार्यवाक्यं संवादयति—

**देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ॥**
**आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥ २० ॥**

**देहात्मेति** । अहं मनुष्य इति देहात्मविषयो दृढप्रत्ययो यथा, एवं प्रत्यगात्मन्येव देह

एव आत्मा इत्येवं देहात्मत्वज्ञानापबाधनेन ब्रह्माहमस्मीति ज्ञानं यस्य जायते स विद्वानिच्छन्नपि मोक्षेच्छारहितोऽपि मुच्यते संसारहेतोरज्ञानस्य ज्ञानेनापबाधितत्वादिति भावः ॥ २० ॥

**अ० टीका**—तत्र श्रीमद्भाष्यकारवाक्यमुपदेशमाहस्त्रीत्थं प्रमाणयति—**देहेति** । देहात्मज्ञानबाधकमित्युपलक्षणम् । तेनाखिलदृश्यबाधकमित्यर्थः । एवकारेण ब्रह्मात्मैक्येतरविषयव्यावृत्तिः ॥ २० ॥

**रा० टीका**—अयमितिपदप्रयोगस्याभिप्रायांतरं शंक्यते—

**अयमित्यपरोक्षत्वमुच्यते चेत्तदुच्यताम् ॥**
**स्वयंप्रकाशचैतन्यमपरोक्षं सदा यतः ॥ २१ ॥**

**अयमिति** । यथाऽयं घट इत्यादिप्रयोगेष्विदमानिर्दिष्टस्य वस्तुनोऽपरोक्ष्यं दृष्टं तथाऽयमस्मीत्यत्रापीति भावः । तदप्यस्माकमिष्टमेवेत्याह—**तदुच्यतामिति** । कुत इत्यत आह—**स्वयमिति** । साधनांतरनिरपेक्षतयाऽवभासमानं चैतन्यं व्यवधायकाभावान्नित्यमपरोक्ष्यमित्यस्माभिरभ्युपेतत्वादित्यर्थः ॥ २१ ॥

**अ० टीका**—' इदमस्तु संनिकृष्टं समीपतरवर्तिचैतदो रूपम् ' इत्यादि वचनादपरोक्षप्रकृतायं पदार्थ इत्याशंक्य स्वप्रकाशचिन्मात्रत्वादात्मनस्तामिष्टापत्त्यांगीकरोति—**अयमितीति** । स्वयंप्रकाशलक्षणं त्वनधीनज्ञानत्वमेव । विस्तरस्तु मदीयबोधैक्यसिद्धावद्वैतात्मप्रबोधाभिधतट्टीकायां च द्रष्टव्य इति संक्षेपः ॥ २१ ॥

**रा० टीका**—नन्वात्मनः स्वप्रकाशचिद्रूपत्वेन नित्यापरोक्षत्वाभ्युपगमेऽयमितिपदप्रयोगस्याभिप्रायवर्णनांगीकारबलादागतमात्मनः परोक्षविषयत्वमपरोक्षविषयत्वं पूर्वोक्तं ज्ञानाज्ञानाश्रयविषयत्वं वाऽनुपपन्नं स्यादित्याशंक्य दशम इव सर्वमुपपत्स्यत इत्याह—

**परोक्षमपरोक्षं च ज्ञानमज्ञानमित्यदः ॥**
**नित्यापरोक्षरूपेऽपि द्वयं स्याद्दशमे यथा ॥ २२ ॥**

**परोक्षमिति** । परोक्षमपरोक्षं चेत्येकं युगल ज्ञानमज्ञानमित्यपरमिदं द्वयं नित्यापरोक्षरूपेऽप्यात्मनि दशम इव स्यादित्यर्थः ॥ २२ ॥

**अ० टीका**—नन्वयमित्यपरोक्षत्वमित्यनेन नित्यस्वयंप्रकाशतयाऽऽत्मनोऽपरोक्षत्वं त्रैकालिकमेवांगीक्रियते । असंदिग्धेत्यनेन तद्विषयकमपरोक्षज्ञानमपि स्वीक्रियते तेनार्थात्तद्विषयकं परोक्षज्ञानं तथाऽनाद्यज्ञानमपि च सिद्ध्यति । तदेतत्परोक्षादिज्ञानद्वयमज्ञानं च स्वप्रकाशत्वेन नित्यापरोक्षरूपे त्वद्वैतात्मनि विरुद्धमेवेति चेन्न । लोके तथादृष्टत्वात् । तथाहि । विमते ज्ञानद्वयानाद्यज्ञाने । नित्यापरोक्षात्ममात्रविषयाश्रये । आरोपितत्वे सति सविषयकत्वात् । दशमनिष्ठज्ञानद्वयविस्मृतिजन्याज्ञानवदित्याशयेन समाधत्ते—**परोक्षमिति** ॥ २२ ॥

**रा० टीका**—दृष्टांतं व्युत्पादयति—

**नवसंख्याहृतज्ञानो दशमो विभ्रमात्तदा ॥**
**न वेत्ति दशमोऽस्मीति वीक्ष्यमाणोऽपि तान्नव ॥ २३ ॥**

**नवसंख्येति** । परिगणनीयपुरुषनिष्ठया नवसंख्यया अपहृतविवेकज्ञानो दशमस्तदा

तान्परिगणनीयान्नवसंख्याकान्वीक्षमाणोऽपि सम्यक्पश्यन्नपि भ्रांत्या गणनाकर्तारं स्वात्मानं दशमोऽहमस्मीति न वेत्तीत्यर्थः ॥ २३ ॥

**अ० टीका**—निरुक्तदृष्टांतमेव स्पष्टयति—**नवेत्यादिपंचभिः** । केचित्पृथ्वीप्रदक्षिणोद्देशेन भरतवर्षाखिलतीर्थानि विनिषेवितुं प्रस्थिताः संतो दश ब्राह्मणाः क्वचित्सायं विपुलजलां कांचिन्नदीमुत्तीर्य निशि पारमाजग्मुस्तत्रैकः कश्चिदुक्तदेशकालसंभावितान्यतमनदीमरणः स्वयं सर्वान्गणयितुं प्रवृत्तः सन्गणनीयानाम् । **नवेति** । नवसंख्यया हृतमपहृतं ज्ञानमहं दशम इत्याकारकं बोधजातं यस्य स तथैतादृशोऽत एव विभ्रमाद्धेतोस्तदा स्वयं दशमोऽपि तान्गणितान्नव ब्राह्मणान्वीक्षमाणोऽप्यहं दशमोऽस्मीति न वेत्ति नैव जानातीत्यन्वयः । एवं च स्वयमपरोक्षत्वेन भासमानेऽपि स्वस्मिन्गणनीयस्वेतरपुरुषनवसंख्योद्दीपितस्वविषयकदशमस्मृतेरभावसंस्कारेण प्रदीपापसरणे मनि तम इव पल्लवाज्ञानमुपसृतमासीदित्याशयः ॥२३॥

**रा० टीका**—एवं दशमे ज्ञानं प्रदर्श्य तत्कार्यमावरणं दर्शयति—

**न भाति नास्ति दशम इति स्वं दशमं तदा ॥**
**मत्वा वक्ति तदज्ञानकृतमावरणं विदुः ॥ २४ ॥**

**न भातीति** । तदा दशमः स्वं दशमं मंतं दशमो न भाति नास्तीति मत्वा वक्ति । अस्य व्यवहारस्य यत्कारणं तदज्ञानकृतमज्ञानकार्यमावरणं विदुर्बुधा इति शेषः ॥ २४ ॥

**अ० टीका**—एवं दृष्टांतीकृते दशमे ह्यज्ञानानुभवं नित्यापरोक्षत्वेन भासमानेऽप्युपदर्श्य वक्ष्यमाणपरोक्षापरोक्षज्ञाननाश्ये तत्कृते द्वे आवरणे अपि सामान्येनैकीकृत्याऽऽह—**न भातीति** । दशमो न भाति नवानां युष्माकं गणनायां कृतायामपि न प्रकाशत इत्यर्थः । इदं ह्यभानावरणमपरोक्षप्रमैकप्रध्वंस्यमित्याकूतम् । अत एव नास्ति नैव विद्यत इत्यर्थः । इदं ह्यसदावरणं परोक्षप्रमैकप्रबाध्यमिति बोध्यम् । इति निरुक्तप्रकारेण । तदा स्वेतरनवपुरुषपरिगणनवेलायां । स्वमात्मानं । दशमं दश मिमीतेऽसौ दशमः प्रागुक्तरीत्या दश संख्यापरिगणनार्थं प्रवृत्तोऽहमेतादृशस्तम् । निरुक्तदशगणनप्रवृत्तमिति यावत् । एतादृशं मत्वाऽपि स्वनित्यापरोक्षत्वेन ज्ञात्वाऽपीत्यर्थः । वक्ति प्रव्रूते । यत्तदज्ञानकृतमावरणं विदुः परिजानीयुरिति संबंधः । पंडिता इति शेषः । प्राञ्चस्तु—**न भातीति** । तदा दशमः स्वं दशमं संतं दशमो न भाति नास्तीति मत्वा वक्ति । अस्य व्यवहारस्य यत्कारणं तदज्ञानकृतमज्ञानकार्यमावरणं विदुर्बुधा इति शेष इति व्याचख्युः । तत्र मत्वेति क्त्वाप्रत्ययांतं पदं किं दशमो न भाति नास्तीत्यनेनैव महान्वेति किंवा स्वं दशमं संतं मत्वा दशमो न भाति नास्तीति च मत्वेत्युभयत्रापि प्रत्येकमन्वेति । अथवा स्वं दशमं संतं दशमो न भाति नास्तीति मत्वेति यथा लिखितप्रतिभासमानोभयविशेष्यविशेषणभावेनान्वेति । नाऽऽद्यः । स्वं दशमं संतमिति द्वितीयांतत्रयस्यानन्वितत्वापत्तेः । न द्वितीयः । दशमत्वेन मनने स्वस्याऽऽभातत्वादिमननासंभवात् । न तृतीयोऽपि । स्वं दशमं संतं दशमो न भाति नास्तीत्यावरणद्वयविषयं मत्वेत्यन्वयसंभवेऽपि वक्तीति क्रियायाः कर्मसापेक्षत्वापत्तेर्दशमो न भाति नास्तीति वक्तीत्यार्थिकान्वये यथाकथंचिद्वक्तव्ये शाब्दी ह्याकांक्षा शब्देनैव पूर्यत इति नियमभंगापत्तेरावृत्त्या योजने गौरवापत्तेश्च । तस्मान्मद्योजनं वा साधीयः प्राचां वेति सहृदयधुरीणा एव विदंत्विति ॥ २४ ॥

**नद्यां ममार दशम इति शोचन्प्ररोदिति ॥**
**अज्ञानकृतविक्षेपं रोदनादिं विदुर्बुधाः ॥ २५ ॥**

**रा० टीका**—अज्ञानस्यैव कार्यविशेषविक्षेपं दर्शयति—**नद्यामिति** ॥ २५ ॥

**अ० टीका**—एवं दशमविषयकमावरणमुक्त्वा विक्षेपमाह—**नद्यामिति** ॥ २५ ॥

**न मृतो दशमोऽस्तीति श्रुत्वाऽऽप्तवचनं तदा ॥**
**परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत् ॥ २६ ॥**

**रा० टीका**—दशमस्यासत्त्वांशानिवर्तकं परोक्षज्ञानमाह—**न मृत इति** ॥ २६ ॥

**अ० टीका**—अथैतद्विषयकं परोक्षं ज्ञानमाह—**न मृत इति** । आप्तेति । तदानीमुक्तरोदनध्वनिश्रवणजन्यकरुणोत्कर्षोदकस्मात्काकतालीयन्यायेन तत्राऽऽगतस्य कस्यचित्पूर्वपरिचितस्य समनुभूतभूरितरप्रामाणिकत्वस्यावंचकस्य वाक्यमित्यर्थः ॥ २६ ॥

**रा० टीका**—तस्यैवाभानांशनिवर्तकमपरोक्षज्ञानं दर्शयति—

**त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः ॥**
**अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति ॥ २७ ॥**

**त्वमेवेति** । स्वेन परिगणितैर्नवभिः सह स्वात्मानं गणयित्वा त्वमेव दशमोऽसीति प्रदर्शितोऽहं दशमोऽस्मीत्यपरोक्षतया ज्ञात्वा हर्षं प्राप्नोति रोदनं त्यजति ॥ २७ ॥

**अ० टीका**—अथ क्वास्ति दशम इति तेन पृष्टे यद्वृत्तं तदाह—**त्वमेवेति** ॥ २७ ॥

**रा० टीका**—एवं दृष्टांतभूते दशमे प्रदर्शितमवस्थासप्तकमनूद्य दार्ष्टांतिक आत्मन्यपि तद्योजनीयमित्याह—

**अज्ञानावृतिविक्षेपद्विविधज्ञानतृप्तयः ॥**
**शोकापगम इत्येते योजनीयाश्चिदात्मनि ॥ २८ ॥**

**अज्ञानेति** । अज्ञानं चाऽऽवृतिश्च विक्षेपश्च द्विविधज्ञानं च तृप्तिश्चेति द्वंद्वसमासः॥२८॥

**अ० टीका**—एवं भवतु नाम दशमदृष्टांते निरुक्ताज्ञानाद्यवस्थासप्तकमथापि प्रकृते दार्ष्टांतिकेऽद्वैतात्मनि किमागतमित्यपेक्षायां तत्राप्येतदवस्थासप्तकं योज्यमित्याह—**अज्ञानेति** । तृप्तय इत्यत्र हृष्टय इति क्वचित्पाठः । एतेऽध्यस्ता अवस्थाविशेषा इत्यर्थः ॥ २८ ॥

**रा० टीका**—तत्राऽऽत्मन्यज्ञानादिकं क्रमेण दर्शयति—

**संसारासक्तचित्तः संश्चिदाभासः कदाचन ॥**
**स्वयंप्रकाशकूटस्थं स्वतत्त्वं नैव वेत्त्ययम् ॥ २९ ॥**

**संसारासक्तेत्यादिना** चतुर्भिः । अयं चिदाभासो विषयसंपादनादिध्यानासक्तचित्तः सन्कदाचन श्रुतिविचारात्पूर्वं कदाऽपि स्वतत्त्वं स्वस्य निजं रूपं स्वप्रकाशचिद्रूपं कूटस्थं प्रत्यगात्मानं नैव वेत्ति न जानाति यत्तदज्ञानम् ॥ २९ ॥

**अ० टीका**—तमेवोक्तावस्थासप्तकयोजनप्रकारं प्रदर्शयन्प्रथममज्ञानावस्थां विशदयति—**संसारेति** । सम्यक्सारोऽस्मिन्निति प्रवृत्तव्युत्पत्त्या 'सर्वेषामानंदानामुपस्थ एकायतनम्' इति श्रुत्या च मैथुनजन्यक्षणिकसुखमात्रसाराभासवति द्वैतप्रपंच आसक्तमानस इत्यर्थः ॥ २९ ॥

**न भाति नास्ति कूटस्थ इति वक्ति प्रसंगतः ॥**
**कर्ता भोक्ताहमस्मीति विक्षेपं प्रतिपद्यते ॥ ३० ॥**

**रा० टीका—न भातीति।** चिदात्मविषये प्रसंगे जाते कूटस्थो नास्ति भातीति मत्वा ब्रूते। इदमज्ञानकार्यमावरणं कूटस्थासत्त्वाभानाभिधानवत्कर्तृत्वादिकमात्मन्यारोपयति। अस्यारोपस्य हेतुर्देहद्वययुतश्चिदाभासो विक्षेपः ॥ ३० ॥

**अ० टीका**—अथावरणद्वयं क्रमेणाऽऽभानलक्षणमसत्त्वलक्षणं च प्रकाशयति—**न भातीत्यादिपूर्वार्धेन**। ततो विक्षेपमप्याह—**कर्तेत्याद्युत्तरार्धेन** ॥ ३० ॥

**अस्ति कूटस्थ इत्यादौ परोक्षं वेत्ति वार्तया ॥**
**पश्चात्कूटस्थ एवास्मीत्येवं वेत्ति विचारतः ॥ ३१ ॥**

**रा० टीका—अस्ति कूटस्थ इति।** परेण बोधितः कूटस्थोऽस्तीति जानाति। इदं परोक्षज्ञानं श्रवणादिपरिपाकवशात्कूटस्थोऽहमेवास्मीति जानाति। इदमपरोक्षज्ञानम् ॥३१॥

**अ० टीका**—अथास्य परोक्षज्ञानं प्रदर्शयति—**अस्तीत्यादिपूर्वार्धेन**। अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुरिति तैत्तिरीयकश्रुतेरर्थश्रवणेनेत्यर्थः। ततोऽधिकारतः श्रवणादिपरिपाके विचारितमहावाक्यतोऽपरोक्षज्ञानमप्याह—**पश्चादित्याद्युत्तरार्धेन** ॥ ३१ ॥

**कर्ता भोक्तेत्येवमादि शोकजातं प्रमुंचति ॥**
**कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तुष्यति ॥ ३२ ॥**

**रा० टीका—कर्तेति।** कूटस्थासंगात्मज्ञानानंतरं कर्तृत्वादिशोकजातं त्यजतीति यदयं शोकापगमः कृत्यं कर्तव्यजातं कृतं निष्पादितं प्रापणीयं फलजातं प्राप्तं लब्धमिति तुष्यति। इयं तृप्तिरित्यर्थः ॥ ३२ ॥

**अ० टीका**—अथ क्रमाच्छोकमोक्षनिरंकुशतृप्ती अप्याह—**कर्तेत्याद्यर्धद्वयेन** ॥३२॥

**अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः ॥**
**अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरंकुशा ॥ ३३ ॥**

**रा० टीका**—दार्ष्टांतिकेऽप्युक्तमवस्थासप्तकमनुवदति—**अज्ञानमिति** ॥ ३३ ॥

**अ० टीका**—दशमदृष्टांते प्रागुक्तमज्ञानाद्यवस्थासप्तकं दार्ष्टांतिके प्रदर्शितमेव तत्र विशेषांतरविधानार्थमनुवदति—**अज्ञानमिति** ॥ ३३ ॥

**रा० टीका**—ननूक्तावस्थासप्तकस्याऽऽत्मधर्मत्वांगीकारे तस्य कूटस्थत्वं व्याहन्येतेत्याशंक्यैताः सप्तावस्थाश्चिदाभासस्यैव न कूटस्थस्येत्याह—

**सप्तावस्था इमाः संति चिदाभासस्य तास्विमौ ॥**
**बंधमोक्षौ स्थितौ तत्र तिस्रो बंधकृतः स्मृताः ॥ ३४ ॥**

**सप्तावस्था इति।** सर्वं वाक्यं सावधारणमिति न्यायेन चिदाभासस्यैवेत्यवगम्यते न कूटस्थस्य। सप्तावस्थानामासामत्रोपन्यासो वृथेत्याशंक्य न वृथात्वम्। बंधमोक्षकारित्वद्योतनफलत्वादुपन्यासस्येत्यभिप्रायेणाऽऽह—**तास्विमाविति**। किमासां सप्तानामप्यविशेषेण बंधमोक्षकारित्वं नेत्याह—**तत्रेति**। अज्ञानावरणविक्षेपरूपास्तिस्र इत्यर्थः ॥ ३४ ॥

**अ० टीका**—तत्र तमेव विशेषं विदधानस्तासां चिदाभासैकधर्मत्वमपि विधत्ते—

**समेत्यादि ।** एतेन कूटस्थस्याऽऽत्मनो निर्धर्मकत्वं ध्वन्यते । तासु कति बंधविधायिन्य इत्यत आह—**तत्रेति** चरमचरणांतम् । तिस्रोऽज्ञानावृतिविक्षेपलक्षणा इत्यर्थः ॥ ३४ ॥

**रा० टीका**—आसां बंधकारित्वदर्शनाय तिसृणामपि स्वरूपं प्रत्येकं कार्यप्रदर्शनेन स्पष्टीचिकीर्षुरज्ञानस्य स्वरूपं तावद्दर्शयति—

**न जानामीत्युदासीनव्यवहारस्य कारणम् ॥**
**विचारप्रागभावेन युक्तमज्ञानमीरितम् ॥ ३५ ॥**

**न जानामीति ।** आत्मतत्त्वविचारप्रागभावसहितमुदासीनव्यवहारस्य कारणं न जानामीत्यनुभूयमानमज्ञानमीरितमित्यर्थः ॥ ३५ ॥

**अ० टीका**—ननु किमादावज्ञानस्यैव लक्षणमित्यपेक्षायां तत्संक्षिपति—**न जानामीति ।** एवं च पंचकोशा अपि देहादयो यस्य ' मम देहो मम प्राणो मम चित्तं च धीर्मम । सुखं ममेति यो वेत्ति स कस्त्वमिह नोत्तरम् ' । इतिमत्कृतकारिकरीत्या ममत्वेन भास्यतयाप्रत्यक्षाः स कोऽहमिति न जानामि । तद्वज्जन्यजगज्जन्माद्यभिन्ननिमित्तोपादानतया यतो वेत्यादि श्रुत्यादिभिः परोक्षतया प्रतिपादितमपि ब्रह्माहमपरोक्षतया न जानामीत्याद्युदासीनव्यवहारलक्षणकार्यलिंगकानुमानगम्यं विचारासहानादिभावरूपं वस्त्वेवाज्ञानमिति पर्यवस्यति । एतेन स्वप्रकाशानंतसन्मात्रैकाश्रयविषयकत्वे सति तादृगप्रतिबद्धापरोक्षबोधमात्राबाध्यानादिभावत्वमज्ञानत्वमिति तल्लक्षणं फलितम् । अत्र बाध्यभावत्वमित्येतावन्मात्रोक्तौ शुक्तिरजतादावज्ञानकार्येऽतिव्याप्तिव्यावृत्तये सत्यंतम् । सुषुप्त्याद्यवस्थाऽज्ञानघटादिविषयकपल्लवाज्ञानव्युदसनायानादीति । तत्रापि बाध्यपदस्थाने ध्वंस्येति निवेशे जीवन्मुक्तिपक्षे शुकाद्यज्ञानेऽप्यव्याप्तिरतो बाध्येति । एवं भावपदाभावेऽप्युक्तबोधप्रागभावेऽप्यतिव्याप्तिरिति तत् । एतेन ज्ञानभागभाव एवाज्ञानमिति वदंतस्तार्किकादयः प्रत्यस्ताः । तद्वन्मात्रचा योगभक्तिकर्मोपासनान्यतमसमुच्चयवादा अपि प्रत्युक्ताः । तथा परोक्षबोधबाध्यासदावरणवारणायापरोक्षेति । एवंभूतभाविवर्तमानाद्यन्यतमप्रतिबंधवदज्ञानेऽप्यव्याप्तिरिति तद्वद्युदासायाप्रतिबद्धेति । घटादिप्रमापनोद्यपल्लवाज्ञानेऽतिप्रसंगभंगाय तादृगिति । एवं पूर्वदलेऽपि तत्पदलक्ष्यब्रह्मणः पारोक्ष्यनिरासाय **स्वप्रकाशेति ।** त्वंपदलक्ष्यस्याऽऽत्मनः सद्वयत्वव्यावृत्तयेऽनंतेति । बौद्धप्राभाकरसंमतसंविद्विनिवारणाय सदिति । अनंतपदे वस्तुपरिच्छेदाख्यान्योन्याभावरूपभेदाभावस्यापि विवक्षार्थमेकेति । निर्गुणत्वसूचनाय मात्रेति । तत्त्वंपदलक्ष्याभेदायाश्रयेत्यादीति दिक् ॥ ३५ ॥

**रा० टीका**—आवृतिस्वरूपं तत्कार्यं च दर्शयति—

**अमार्गेण विचार्योऽथ नास्ति नो भाति चेत्यसौ ॥**
**विपरीतव्यवहृतिरावृतेः कार्यमिष्यते ॥ ३६ ॥**

**अमार्गेणेति ।** शास्त्रोक्तं प्रकारमतिलंघ्य केवलं तर्केण विचार्यानंतरं कूटस्थो नास्ति न भातीत्येवंरूपो विपरीतव्यवहार आवरणकार्यमित्यर्थः ॥ ३६ ॥

**अ० टीका**—एवमज्ञानं निरूप्याथ क्रमप्राप्तामावृतिमपि विषयात्मनिष्ठत्वेन क्रमादज्ञानासत्त्वापादनरूपत्वाद्द्विविधामभिधत्ते—**अमार्गेणेत्यर्धेन ।** तं त्वौपनिषदं पुरुषं पृच्छामीति नावेदविन्मनुते तं बृहंतमिति चान्वयव्यतिरेकश्रुतिविहितोपनिषद्विचारेतरभेदवादिशास्त्रविचारलक्षणामार्गेणेत्यर्थः । ननु भवत्वेवममार्गेण विचारे कृतेऽपि यदा भेदवादिनां पंडितानामपि ब्रह्मा-

त्मैक्यविषयकसत्ताभानाभावानुभवलक्षणावरणरूपा ह्यावृतिस्तदेतरजीवानामसौ कैमुत्यसिद्धैवाथा-पि प्रागज्ञानलक्षणोपपादनावसरे यथोदासीनव्यवहार एवाहं ब्रह्मापरोक्षत्वेनाऽऽत्मानमप्यद्वैतत्वेन नैव जानामीत्येवंरूपस्तत्कार्यमुक्तस्तद्वदुक्तलक्षणावृतेरपि कार्यं कथनीयमेवेत्यत्राऽऽह—**विपरीते-तिशेषेण।** पूर्वार्धमत्राप्यावृत्त्याऽनुषज्जते। अमार्गेण भेदवादिशास्त्रादिना विचार्याथानंतरं ब्रह्मात्मै-क्यं नास्ति तथा नो भाति चेत्यसौ विपरीतव्यवहृतिरेव सन्मात्रस्वप्रकाशाद्वैतात्मविषयकस्फुर-णाभिवदनादिरीतिरेवावृतेरुक्तलक्षणावरणावस्थायाः कार्यमिष्यत इत्यन्वयः ॥ ३६ ॥

**रा० टीका**—विक्षेपस्य स्वरूपं तत्कार्यं च दर्शयति—

**देहद्वयचिदाभासरूपो विक्षेप ईरितः ॥**
**कर्तृत्वाद्यखिलः शोकः संसाराख्योऽस्य बंधकः ॥ ३७ ॥**

**देहद्वयेति** । स्थूलसूक्ष्माख्यशरीरद्वयसहितश्चिदाभास एव विक्षेपः । बंधको बंधहेतुः सं-साराख्यः कर्तृत्वाद्यखिलः शोकोऽस्य चिदाभासस्य कार्यमिति शेषः । कर्तृत्वादीत्यत्राऽऽदि-शब्देन प्रमातृत्वादयो गृह्यंते ॥ ३७ ॥

**अ० टीका**—अथोद्देशक्रमप्राप्तं विक्षेपं लक्षयति—**देहद्वयेति । स्थूलदेहोऽन्नमयः** प्रत्यक्ष एव । श्रोत्रादिज्ञानेंद्रियपंचकं वागादिकर्मेंद्रियपंचकं प्राणादिपंचकं मनोबुद्धिश्चेति स-प्तदशकलात्मकः सूक्ष्मो देहश्च तदुभयविशिष्टो यश्चिदाभासो बुद्धौ प्रतिबिंबितात्मचैतन्यावभा-स इत्यर्थः । एवमस्यापि कार्यमाह—**कर्तृत्वादीति** । संसाराख्योऽखिलः संपूर्णः शोकेऽस्यो-क्तविक्षेपलक्षणचिदाभासस्य जीवस्य कार्यमपि कोशकारकृमिवद्बंधकोऽपि कर्तृत्वादि यथा स्यात्त-थाऽस्तीत्यध्याहृत्य संबंधः ॥ ३७ ॥

**रा० टीका**—ननु सप्तावस्थाश्चिदाभासस्येत्युक्तमनुपपन्नमज्ञानावरणयोर्विक्षेपोत्पत्तेः पुरा चितत्वाच्चिदाभासस्य च विक्षेपांतःपातित्वात्तदवस्थात्वानुपपत्तेरित्याशंक्याऽऽह—

**अज्ञानमावृतिश्चैते विक्षेपात्प्राक्प्रसिध्यतः ॥**
**यद्यप्यथाप्यवस्थे ते विक्षेपस्यैव नाऽऽत्मनः ॥ ३८ ॥**

**अज्ञानमिति** । अनयोरज्ञानावरणयोर्विक्षेपात्पुरा स्थितत्वेऽपि नाऽऽत्मावस्थात्वं तस्या-संगत्वेनावस्थावत्त्वानुपपत्तेः । अतः परिशेषाच्चिदाभासावस्थात्वमेव तयोर्वक्तव्यमिति भावः॥३८॥

**अ० टीका**—ननु चिदाभासस्याज्ञानावच्छिन्नात्मचैतन्यजन्याकाशाद्यपंचीकृतपंचम-हाभूतसत्त्वांशकार्यबुद्धिप्रतिबिंबत्वेनाज्ञानावरणयोः कथं तदवस्थात्वं सप्तावस्था इमाः संति चिदा-भासस्येत्युक्तमित्याशंक्य समाधत्ते—**अज्ञानमिति** ॥ ३८ ॥

**रा० टीका**—अवस्थावतो विक्षेपस्य तदानीमभावात्तदवस्थात्वाभिधानमनुपपन्नमि-त्याशंक्य विक्षेपाभावेऽपि तत्संस्कारस्य तदानीं सत्त्वाद्विक्षेपावस्थात्वाभिधानं न विरुध्यत इत्याह—

**विक्षेपोत्पत्तितः पूर्वमपि विक्षेपसंस्कृतिः ॥**
**अस्त्येव तदवस्थात्वमविरुद्धं ततस्तयोः ॥ ३९ ॥**

**विक्षेपेति** । ततः कारणात्तयोस्तदवस्थात्ववर्णनमविरुद्धमिति योजना ॥ ३९ ॥

**अ० टीका**—ननु विक्षेपो ह्यनुपदोक्तरीत्या तावदज्ञानावरणयोः कार्यमेव तथा च तत्पूर्वभाविनी ते कथं तदवस्थे स्यातामित्याशंक्य समाधत्ते—**विक्षेपेति** । एतेन कार्योपाधिरयं जी-

व इति 'अजो ह्येको जुषमाणोऽनुशेते' इतिश्रुत्योर्जीवस्य जन्यत्वाजन्यत्ववादिन्योर्विरोधः प्रयुक्तः । जीवोपाधिभूताया बुद्धेः कार्यत्वाभिप्रायिका हि प्रथमश्रुतिस्तत्संस्कृतेरतिसूक्ष्माया मूलाविद्यानिष्ठाया बीजांकुरन्यायेन प्रवाहानादित्वाभिप्राया तु द्वितीयश्रुतिरिति तयोर्विभिन्नविषयत्वादिति रहस्यम् । एवमेव स्मृतीतिहासपुराणबृहद्वासिष्ठरामायणादिनिष्ठजीवजन्यत्ववादिवाक्यानि व्याख्येयानीति दिक् ॥ ३९ ॥

**ब्रह्मण्यारोपितत्वेन ब्रह्मावस्थे इमे इति ॥**
**न शंकनीयं सर्वासां ब्रह्मण्येवाधिरोपणात् ॥ ४० ॥**

**रा० टीका**—नन्वप्रसिद्धसंस्काराभ्युपगमद्वारा विक्षेपावस्थात्ववर्णनाद्वरमधिष्ठानतया प्रसिद्धब्रह्मावस्थात्ववर्णनमित्याशंक्यातिप्रसंगान्नैवमिति परिहरति—**ब्रह्मणीति** ॥४०॥

**अ० टीका**—ननु किमनया संस्कारानादित्वकल्पनेनाज्ञानावृत्त्योर्जीवावस्थात्वकल्पनं कुदृष्ट्या तयोर्ब्रह्मण्यारोपितत्वेन तदवस्थात्वमेव मुख्यवस्थमित्याशंक्य समाधत्ते—**ब्रह्मणीति** । विक्षेपाद्यग्रिमावस्थापंचकस्यापि मूलाविद्योपहितब्रह्मण्येवाऽऽरोपात्काऽपि जीवावस्था नैव स्यादित्यतिप्रसंगापत्तिरित्याकूतम् ॥ ४० ॥

**रा० टीका**—ननु ब्रह्मण्यारोपितत्वाविशेषेऽपि विक्षेपोत्पत्त्युत्तरकालभाविनीनां संसारित्वाद्यवस्थानां जीवाश्रितत्वेनानुभूयमानत्वान्न ब्रह्मावस्थात्वमिति शंकते—

**संसार्यहं विबुद्धोऽहं निःशोकस्तुष्ट इत्यपि ॥**
**जीवगा उत्तरावस्था भांति न ब्रह्मगा यदि ॥ ४१ ॥**

**संसारीति** । संसारी कर्तृत्वादिधर्मवान्विबुद्धस्तत्त्वसाक्षात्कारवान्निःशोकः शोकरहितस्तुष्टो वक्ष्यमाणकृतकृत्यत्वादिजनितसंतोषवानहमस्मीत्युत्तरावस्था जीवगा जीवाश्रिता भांति न ब्रह्माश्रितेत्यर्थः ॥ ४१ ॥

**अ० टीका**—तत्रानुभवविरोधान्नायमतिप्रसंग इति प्रतिवाद्याशंकां सिद्धांत्यनुवदति—**संसार्यहमिति** ॥ ४१ ॥

**रा० टीका**—एवं तर्ह्यज्ञानावरणयोरपि जीवाश्रितत्वेनानुभूयमानत्वाज्जीवावस्थात्वमेवेति परिहरति—

**तर्ह्यज्ञोऽहं ब्रह्मसत्त्वभाने मद्दृष्टितो न हि ॥**
**इति पूर्वे अवस्थे च भासेते जीवगे खलु ॥ ४२ ॥**

तर्ह्यज्ञोऽहमिति । मद्दृष्टितो ममानुभवेनेत्यर्थः ॥ ४२ ॥

**अ० टीका**—तां दूषयति—**तर्हीति** । यथा त्वयाऽनुभवावष्टंभेनैव मदुक्तातिप्रसंगस्य भंगः साधितस्तथा मयाऽपि तेनैव पुनरज्ञानावृत्त्यवस्थयोर्जीवगत्वमप्युच्यप्रबुद्धः परोक्षापरोक्षज्ञानवान् । मानमंगीकार्यमेवेति तात्पर्यम् । **ब्रह्मेति** । एतेनैकस्या अप्यावृत्त्यवस्थाया असदावरणाभानावरणाभिप्रायेण परोक्षापरोक्षद्विविधज्ञाननाश्यत्वाद्वैविध्यं न त्वन्यथा । तत्त्वे त्वज्ञानमावृतिरिति पूर्वग्रंथ इति पूर्वे अवस्थे चेत्युत्तरत्र च तदैक्योक्तिविरोधादित्याशयः । न चैवं तर्हि परोक्षादिज्ञानद्वयेऽप्येकावस्थात्वमेवास्तु लाघवादिति वाच्यम् । परोक्षज्ञानस्य सकलकर्मकांडानुष्ठानोपयोगित्वादवस्थांतरत्वमावश्यकमेवेति भावः ॥ ४२ ॥

**रा० टीका**—ननु तर्ह्यज्ञानाश्रयत्वं ब्रह्मणः पूर्वाचार्यैः कथमुक्तमित्याशंक्य तद्विवक्षां दर्शयति—

**अज्ञानस्याऽऽश्रयो ब्रह्मेत्यधिष्ठानतया जगुः ॥**
**जीवावस्थात्वमज्ञानाभिमानित्वादवादिषम् ॥ ४३ ॥**

**अज्ञानस्येति** । ब्रह्मणोऽज्ञानाधिष्ठानत्वविवक्षया तदाश्रयत्वमुक्तमित्यर्थः । भवद्भिस्तर्हि किं विवक्षया जीवावस्थात्वमुक्तमित्याशंक्य स्वविवक्षां दर्शयति—**जीवावस्थात्वमिति**॥४३॥

**अ० टीका**—नन्वेवं यद्यज्ञानमहमज्ञ इत्याद्यनुभवाज्जीवाश्रितमेव चेत्तर्हि श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैराश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलेति तस्य ब्रह्ममात्राश्रयविषयकत्वं कथमुक्तमित्याशंक्याज्ञानात्मकानादिभावभ्रमाधिष्ठानत्वैकविवक्षया संक्षेपशारीरकोक्तिः प्रकृताऽस्त्यस्मदीया तद्व्यज्ञोऽहं ब्रह्मतत्त्वभाने मद्दृष्टिनो न हीत्याद्युक्तिस्तु जीवे निरुक्तरीत्या तदभिमानित्वात्तत्र तदवस्थात्वाभिप्रायिकैवेति विषयविभेदान्नात्र विरोधगंधोऽपीत्याह—**अज्ञानस्येति** । जगुः प्रोक्तसंक्षेपशारीरकाचार्यादयः प्रोचुरित्यर्थः ॥ ४३ ॥

**रा० टीका**—एवं बंधहेतुमवस्थात्रयं प्रदर्श्यावशिष्टास्ववस्थासु मध्ये पूर्वोक्ताज्ञानावरणनिवृत्तिद्वारा मुक्तिहेतुमवस्थाद्वयं दर्शयति—

**ज्ञानद्वयेन नष्टेऽस्मिन्नज्ञाने तत्कृताऽऽवृतिः ॥**
**न भाति नास्ति चेत्येषा द्विविधाऽपि विनश्यति ॥ ४४ ॥**

**ज्ञानद्वयेनेति** । परोक्षत्वापरोक्षत्वलक्षणेन ज्ञानद्वयेनाऽऽवरणकारणेऽज्ञाने नष्टे सति तत्कृताऽऽवृतिस्तेनाज्ञानेनोत्पादितं न भाति नास्तीतिव्यवहारकारणं द्विविधमप्यावरणं कारणाभावान्नश्यतीति ॥ ४४ ॥

**अ० टीका**—ननु भवत्वेवमज्ञानमेकमप्यधिष्ठेयत्वावच्छेदेन ब्रह्माश्रितमभिमेयत्वावच्छेदेन जीवावस्थात्वापन्नमथापि कथमेतस्य सकार्यस्य विनाशः स्यादित्यत्राऽऽह—**ज्ञानद्वयेनेति** । **तत्कृतेति** । आवृतिरिति च्छेदः । एतेनासदावरणाभानावरणयोरज्ञानकार्यत्वमेवेति द्योत्यते । न चैवं चेत्तर्हि तत्र प्रागभावप्रतियोगित्वलक्षणं जन्यत्वेन तत्प्राक्कालावच्छेदेनावरणाभावापत्तिस्तथात्वे त्वनावरणज्ञानोपलब्ध्यापत्तिश्चेति वाच्यम् । प्रकृते कार्यत्वस्य तद्बाधबाध्यत्वाख्यस्य तदितरदृश्यसाधारणस्यैव विवक्षितत्वात् । तच्च तत्सहचरे द्विविधावरणे मंदांधकारे नीलरूपवत्तव्याप्ये जीवेश्वराद्यनादिदृश्यचतुष्टयेऽवतमसे सर्पमंदर्शनशक्तिवन्निरुक्ततिमिरकार्ये विषधरत्वादिवदुक्ताज्ञानजन्ये नभःप्रभृतिप्रपंचेऽपि वर्तत एवेत्युचितमेवास्य साधारण्यम् । एवं च न जीव ईश इत्याद्यनादिषट्संख्याप्रत्याख्यानमपीति दिक् ॥ ४४ ॥

**रा० टीका**—कस्यांशस्य केन निवृत्तिरित्यपेक्षायामुभयं विभज्य दर्शयति—

**परोक्षज्ञानतो नश्येदसत्त्वावृतिहेतुता ॥**
**अपरोक्षज्ञाननाश्या ह्यभानावृतिहेतुता ॥ ४५ ॥**

**परोक्षज्ञान इति** । कूटस्थोऽस्तीत्येवंरूपात्परोक्षज्ञानादज्ञानस्यासत्त्वावरणकारणत्वं निवर्तते । कूटस्थोऽस्मीत्यपरोक्षज्ञानेन तु कूटस्थो न भातीत्येवंरूपावरणकारणत्वं निवर्तते ॥४५॥

**अ० टीका**—तत्र तन्नाशनविभागमाह—**परोक्षेति** । **असत्त्वेति** । मूलाज्ञानानिष्ठासदावरणोपादानतेत्यर्थः ॥ ४५ ॥

**रा० टीका**—इदानीं ज्ञानस्य फलरूपावस्थाद्वये प्रथमावस्थामाह—

**अभानावरणे नष्टे जीवत्वारोपसंक्षयात् ॥**
**कर्तृत्वाद्यखिलः शोकः संसाराख्यो निवर्तते ॥ ४६ ॥**

**अभानावरण** इति । अभानावरणे निवृत्ते भ्रांत्या प्रतीयमानस्य जीवत्वस्यापि निवृत्तत्वात्तन्निमित्तकः कर्तृत्वादिलक्षणः संसाराख्यः शोकः सर्वोऽपि निवर्तत इत्यर्थः ॥ ४६ ॥

**अ० टीका** —एवमज्ञानमावृतिस्तद्वदित्यादिना प्राक्प्रतिज्ञातजीवावस्थासप्तकमध्ये विक्षेपांतावस्थात्रयस्यैव तिस्रो बंधकृतः स्मृता इत्यनेन बंधकत्वमुक्त्वा ज्ञानस्य तन्निवारकस्य स्वरूपभूतमवस्थाद्वयं कथितमिदानीं तत्फलीभूतं शोकमोक्षाद्यवस्थाद्वयं क्रमात्पूर्वोत्तरहेतुहेतुमद्भावेनाववोधयति—**अभानेत्यादिद्वाभ्याम्** । कर्तृत्वादीत्यत्रादिना भोक्तृत्वमंतृत्वादिग्रहः ॥ ४६ ॥

**निवृत्ते सर्वसंसारे नित्यमुक्तत्वभासनात् ॥**
**निरंकुशा भवेत्तृप्तिः पुनः शोकासमुद्भवात् ॥ ४७ ॥**

**रा० टीका**—एवं शोकापगमरूपामवस्थां प्रदर्श्य निरंकुशतृप्तिलक्षणां द्वितीयां दर्शयति—**निवृत्ते सर्वसंसार** इति ॥ ४७ ॥

**अ० टीका—निवृत्त** इति । **नित्येति** । स्वप्रकाशपञ्चरागादिरज्वारोपितनवहृच्चध्यासबाधे तज्ज्ञानवन्निखिलद्वैतबाधे सति सद्य एव निजाधिष्ठानीभूताद्वैतब्रह्मात्मनिष्ठनित्यमुक्तत्वानुभवनादित्यर्थः ॥ ४७ ॥

**रा० टीका**—नन्वात्मानं चेद्विजानीयादिति मंत्रव्याख्याने प्रवृत्तत्वात्तद्विहाय मध्येऽज्ञानाद्यवस्थासप्तकनिरूपणं प्रकृतासंगतमित्याशंक्य "**आत्मानं चेद्विजानीयात्**" इत्यस्याः श्रुतेस्तात्पर्यनिरूपणशेषत्वेनाभिहितत्वान्न प्रकृतासंगतमित्यभिप्रेत्य श्रुतितात्पर्यमाह—

**अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे ॥**
**अवस्थे जीवगे ब्रूत आत्मानं चेदिति श्रुतिः ॥ ४८ ॥**

**अपरोक्षज्ञानेति** । चिदाभासनिष्ठं यदवस्थासप्तकमस्ति तत्रापरोक्षज्ञानशोकनिवृत्तिलक्षणमवस्थाद्वयं प्रतिपादयितुमयं मंत्रः प्रवृत्त इत्याभिप्रायः ॥ ४८ ॥

**अ० टीका**—एवमुपपादितं शास्त्रार्थं प्राक्प्रतिज्ञातमंत्रविवरणेन सह संयोजयति—**अपरोक्षेति** । एवं चाऽऽत्मानं चेदित्यादिमंत्रस्तावच्चिदाभासाख्यजीवनिष्ठोक्ताज्ञानाद्यवस्थासप्तकमध्ये ह्यपरोक्षज्ञानशोकनिवृत्त्यात्मकावस्थाद्वयमेव पंचमषष्ठसंख्यं प्रतिपादितुं प्रवृत्त इत्याशयः ॥ ४८ ॥

**रा० टीका**—अयमित्यपरोक्षत्वमित्यत्रायमिति पदेनाऽऽत्मनोऽपरोक्षत्वमुच्यत इत्युक्तम् । तथा सत्यपरोक्षज्ञानविषयत्वमेव स्यान्न परोक्षज्ञानविषयत्वमित्याशंक्य तदुपपादनायापरोक्षज्ञानं विभजते—

**अयमित्यपरोक्षत्वमुक्तं तद्विविधं भवेत् ॥**
**विषयस्वप्रकाशत्वाद्धियाऽप्येवं तदीक्षणात् ॥ ४९ ॥**

**अयमितीति** । द्वैविध्ये कारणमाह—**विषयेति** । विषयस्य चिद्रूपस्याऽऽत्मनः स्वप्र-

काशत्वात्स्वव्यवहारसाधनांतरनिरपेक्षत्वाद्धियाबुद्ध्यैवं स्वप्रकाशत्वेन तदीक्षणात्तस्य विषयस्याऽऽत्मनोऽवलोकनाच्चेत्यर्थः ॥ ४९ ॥

**अ० टीका**—ननु यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेर्ब्रह्मस्वरूपस्य नैसर्गिकमनधीनभानलक्षणं स्वप्रकाशत्वरूपमपरोक्षत्वं स्वतः सिद्धमेव तथा च तस्य कथमसंगकूटस्थचिद्रूपस्याजन्यत्वादवस्थारूपत्वं मंत्रः प्रतिपादयेदित्याशंक्य निरुक्तश्रुतिवत् ' तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय ' इत्यादीनां श्रुतिशतानां सत्त्वात्तत्त्वमस्यादिविचारजन्यचरमवृत्त्याख्यापरोक्षप्रमावृत्तिविषयत्वमेवोक्तमंत्रेऽवस्थाज्ञानत्वेन विवक्षितमिति समाधातुं सानुवादमुक्तमंत्रोक्तापरोक्षत्वं द्वेधा विभजते—**अर्यामिनीत्यादिना** । तत्र क्रमाद्धेतू अप्याह—**विषयेत्यादिना** ॥ ४९ ॥

**रा० टीका**—भवतु द्वैविध्यमेतावता परोक्षज्ञानविषयत्वे किमायातमित्याशंक्य विषयस्वप्रकाशत्वं परोक्षज्ञानविषयत्वविरोधि न भवतीत्याह—

**परोक्षज्ञानकालेऽपि विषयस्वप्रकाशता ॥**
**समा ब्रह्म स्वप्रकाशमस्तीत्येवं विबोधनात् ॥ ५० ॥**

**परोक्षज्ञानेति** । अपरोक्षज्ञानकाल इव परोक्षज्ञानकालेऽपि विषयस्य ब्रह्मणः स्वप्रकाशताऽस्त्येव तत्रोपपत्तिमाह—**ब्रह्म स्वप्रकाशमिति** ॥ ५० ॥

**अ० टीका**—नन्वेवं यद्यपरोक्षत्वं ब्रह्मणः स्वरूपत्वप्रमावृत्ति कर्मैक्यविषयत्वाभ्यां द्विविधं चेद्ब्रह्मविषयकं परोक्षज्ञानमेव न स्यात्तस्य स्वप्रकाशत्वेन नित्यापरोक्षत्वादित्याशंक्य समाधत्ते—**परोक्षेत्यादिना** ॥ ५० ॥

**रा० टीका**—प्रत्यगभिन्नब्रह्मगोचरस्य ज्ञानस्य कुतः परोक्षत्वमित्याशंक्य प्रत्यगंशाग्रहणादित्याह—

**अहं ब्रह्मेत्यनुल्लिख्य ब्रह्मास्तीत्येवमुल्लिखेत् ॥**
**परोक्षज्ञानमेतन्न भ्रांतं बाधानिरूपणात् ॥ ५१ ॥**

**अहं ब्रह्मेति** । नन्विदं भ्रांतमित्याशंक्यास्य भ्रांतत्वं किं बाध्यत्वादुत वस्त्वनुल्लेखादथवाऽऽपरोक्ष्येण ग्रहणयोग्यस्य पारोक्ष्येण ग्रहणात् । यद्वांऽशाग्रहणादिति चतुर्धा विकल्प्य प्रथमं प्रत्याह—**एतदिति** ॥ ५१ ॥

**अ० टीका**—ननु भवत्वेवं 'अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुरिति' इति श्रुतेर्ब्रह्म स्वप्रकाशमस्तीति बोधसंभवेन ब्रह्मणः परोक्षज्ञाने स्वप्रकाशत्वं माऽस्तु विरुद्धमथाप्युक्तपरोक्षज्ञानं यथार्थानुभवो मानमनपेक्षतयेष्यत इत्यभियुक्तोक्तेरयथावद्ग्राहकत्वेन प्रमाणमेव कथं स्यादिति चेत्सत्यम् । किं ज्ञानस्याप्रामाण्यं बाधितत्वेनेष्टमुत स्वविषयीभूतवस्तुगतयत्किंचिदंशाग्रहणेनापि । नाऽऽद्यः । ब्रह्म नास्तीति मानं चेदित्यादिनाऽग्रेऽनुपदमेव प्रकृते तस्या निरासिष्यमाणत्वात् । एवं नांत्योऽपि । तदग्र एव तस्य व्यक्त्यनुल्लेखमात्रेणेत्यादिना समाधास्यत्वादित्यभिसंधायाऽऽदौ परोक्षज्ञानमेव सप्रतियोग्युल्लेखमभिनीय तस्याभ्रांतत्वं प्रतिजानीते—**अहमित्यादिना न भ्रांतमित्यंतेन** । तत्र हेतुं प्रतिबोधयति—**बाधेति** ॥ ५१ ॥

**ब्रह्म नास्तीति मानं चेत्स्याद्बाध्येत तदा ध्रुवम् ॥**
**न चैवं प्रबलं मानं पश्यामोऽतो न बाध्यते ॥ ५२ ॥**

**रा० टीका**—हेतुं विवृणोति—**ब्रह्म नास्तीति** ॥ ९२ ॥

**अ० टीका**—तमेव प्रतिपादयन्नुक्ताभिसंधिं समुद्घाटयति—**ब्रह्म नास्तीत्यादिना** ॥ ९२ ॥

**रा० टीका**—द्वितीयमतिप्रसंगेन दूषयति—

**व्यक्त्यनुल्लेखमात्रेण भ्रमत्वे स्वर्गधीरपि ॥**
**भ्रांतिः स्याद्व्यक्त्यनुल्लेखात्सामान्योल्लेखदर्शनात् ॥९३॥**

**व्यक्तीति**। अयं स्वर्ग इत्येवमाकारेण ग्रहणाभावात्किंतु स्वर्गोऽस्तीत्येवंसामान्याकारेण प्रतीतेः स्वर्गबुद्धेरपि भ्रमत्वप्रसंग इत्यर्थः ॥ ९३ ॥

**अ० टीका**—द्वितीयदोषमपि प्रतिबंद्या प्रत्याह—**व्यक्तीति** ॥ ९३ ॥

**रा० टीका**—तृतीयं निराकरोति—

**अपरोक्षत्वयोग्यस्य न परोक्षमतिर्भ्रमः ॥**
**परोक्षमित्यनुल्लेखादर्थात्पारोक्ष्यसंभवात् ॥ ९४ ॥**

**अपरोक्षत्वेति**। अपरोक्षत्वेन ग्रहणयोग्यस्य प्रत्यगभिन्नब्रह्मविषयस्य परोक्षज्ञानस्य भ्रमत्वं न संभवति। कुत इत्यत आह—**परोक्षमिति**। ब्रह्म परोक्षमित्येवमाकारेण ग्रहणाभावात्कुतस्तर्हि तस्य परोक्षत्वमित्याशंक्याऽऽह—**अर्था दिति**। इदं ब्रह्मेत्येवंव्यक्त्युल्लेखाभावासामर्थ्यात्परोक्षत्वसिद्धिरिति भावः ॥ ९४ ॥

**अ० टीका**—ननूक्तप्रतिबंद्ययुक्तैव। स्वर्गस्य दृश्यत्वेन जातिव्यक्तिघटितस्य स्वर्गत्वजातिविषयिण्याः स्वर्गधियो व्यक्त्यनुल्लेखेन परोक्षाया अपि प्रमात्वसंभवादद्वैतब्रह्मणस्तु दृङ्मात्रत्वेनातथात्वान्नित्यापरोक्षयोग्यस्य परोक्षज्ञानं भ्रांतिरेवेत्याशंक्य मैवमित्याह—**अपरोक्षत्वेति**। तत्र हेतुं द्योतयति—**परोक्षमितीत्याद्युत्तरार्धेन** ॥ ९४ ॥

**रा० टीका**—चरममाशंकते—

**अंशागृहीतेर्भ्रांतिश्चेद्घटज्ञानं भ्रमो भवेत् ॥**
**निरंशस्यापि सांशत्वं व्यावर्त्यांशविभेदतः ॥ ९५ ॥**

**अंशेति**। ब्रह्मांशग्रहणेऽपि प्रत्यगंशाग्रहणाद्भ्रमत्वमित्यर्थः। एवं तर्हि घटादिज्ञानस्यापि भ्रमत्वप्रसंग इति परिहरति—**घटज्ञानमिति**। आंतरावयवानामग्रहणादिति भावः। ननु घटस्य सावयवत्वादंशग्रहणेऽप्यंशाग्रहणं संभवति। ब्रह्मणस्तु निरंशत्वात्कथमंशाग्रहणसंभव इत्याशंक्य व्यावर्त्यांशोपाधिनिमित्तकं सांशत्वं तस्य भविष्यतीत्याह—**निरंशस्येति** ॥९५॥

**अ० टीका**—ननु ब्रह्मैवेदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति श्रुतेरपरोक्षज्ञाने ब्रह्मात्मसदंशाः प्रतीयंते। 'अस्ति ब्रह्मेति चेद्वेद' इत्यादिश्रुतौ परोक्षज्ञानप्रतिपादिकायां त्वात्मांशं विना ब्रह्मसदंशावेव प्रतीतिगोचरावतोंऽशाग्रहणात्परोक्षप्रमितिर्भ्रांतिरेवेत्याशंक्य पुनः प्रतिबंद्यैव प्रत्याचष्टे—**अंशेत्याद्यर्धेन**। घटज्ञाने हि यदवयवावच्छेदेन सालोकलोचनसंनिकर्षः स एव प्रतिभातीति तत्राप्यंशाग्रहाद्भ्रांतित्वापत्तिरित्याशयः। न चैवमप्यंशांगीकृतिरनुचितैवेति वाच्यम्। अनृतजडविरोधिरूपमंतत्रयमलबंधनदुःखिताविरुद्धमि-

त्यारंभ एव **संक्षेपशारीरके** यथा प्राचीनाचार्यचरणैर्निर्णीतं तथैवेहापीष्टत्वादित्याशयं विशदयति—**निरंशस्यापीत्याद्यर्धेनैव** ॥ ५५ ॥

**असत्त्वांशो निवर्तेत परोक्षज्ञानतस्तथा ॥**
**अभानांशनिवृत्तिः स्यादपरोक्षधिया कृता ॥ ५६ ॥**

**रा० टीका**—कौ तौ व्यावर्त्यावंशावित्याकांक्षायामाह—**असत्त्वांश इति** ॥ ५६ ॥

**अ० टीका**—ननु **संक्षेपशारीरके** तु व्यावर्त्याः सकलद्वये प्रसिद्धा अनृतादयोंशाः कंठत एवोक्तास्तथेह परोक्षापरोक्षज्ञानक्षपणीयौ द्वैते सुप्रसिद्धावद्वैते ब्रह्मणि निराकरणीयौ कावंशावित्याशंक्य क्रमात्तौ व्युत्पादयति—**असत्त्वेत्यादि** सप्रपंचम् । समेधितमेवेदं मयैतन्मतप्रस्तावे **बोधैक्यसिद्धौ** प्रथमपरिछेद एव प्रतिकर्मव्यवस्थादिप्रकरणे—

" आस्तामेवंविषयनिलयो मोह एतावता किं नष्टं तत्रानुपदमतवचेत्परोक्षव्यवस्था ।
भायात्तर्हि स्व इव विषयस्तेन साक्षात्स्वरादिः शाब्दादावित्यमुदमवदन्भारतीतीर्थपादाः " ।

इति **भारतीतीर्थ**मतं परोक्षादिव्यवस्थामुपक्रम्य—

" असदावरणं भवेद्यथावदभानावरणं च गोचरे ।
प्रथमक्षपणं परोक्षतश्चरमस्यापि बतापरोक्षतः ।
विषये तु विषयाभिधमंबंधेनैव तत्स्थितिं याति ।
आश्रयतयैव चाऽऽत्मन्याक्षिणि काचादिवत्मननम् ।
**सिद्धांतलेशे** तु न दीक्षितैरिदं प्रपंचितं प्रागुपलक्षणत्वतः ।
मयैव तेनाद्य तु तृप्तिदीपमवेक्ष्य मध्यक्प्रकृतेनिरूपितम् ।
अद्वैतसिद्धादिषु तस्य विस्तरः स्पष्टस्ततो नेदमसांप्रदायिकम् ।
सद्भानयोस्तत्प्रतियोगिनाऽपि विशिष्टयोरेव न तद्विरोधः ।
सत्तास्फुरत्तापरमात्मनो या नाऽऽच्छाद्यते सा ह्युपजीव्यभावात् ।
आनंदमाच्छादयतीव मायेत्यादर्शवाचाऽपि महेति मंगलम् " इति ।

अधिकं त्वद्वैतात्मप्रबोधाभिधायां मदीयतट्टीकायामेव द्रष्टव्यमिति दिक् ॥ ५६ ॥

**रा० टीका**—अपरोक्षत्वेन ग्रहणयोग्यविषयं परोक्षज्ञानं भ्रमो न भवतीत्येतद्दृष्टांतप्रदर्शनेनापि द्रढयति—

***दशमोऽस्तीति विभ्रांतं परोक्षज्ञानमीक्ष्यते ॥**
**ब्रह्मास्तीत्यपि तद्वत्स्यादज्ञानावरणं समम् ॥ ५७ ॥**

**दशम इति** । दशमोऽस्तीत्याप्तवाक्यजन्यं परोक्षज्ञानमभ्रांतम् । यथा ब्रह्मास्तीतिवाक्यजन्यज्ञानमपि तद्वदभ्रांतं स्यात् । अज्ञानकृतस्यासत्त्वावरणांशस्य समत्वादिति भावः ॥ ५७ ॥

**अ० टीका**—नन्वात्मत्वेनाहं ब्रह्मास्मीत्युत्तमपुरुषाख्यानभानार्हब्रह्माद्वैतात्मवस्तुन्यस्ति ब्रह्मेति प्रथमपुरुषाख्यानभानघटितपरोक्षज्ञानं कथं प्रमेत्याशंक्य दशमदृष्टांतेन निराचष्टे—**दशमोऽस्तीत्यविभ्रांतमिति** ॥ ५७ ॥

* दशमोऽस्तीत्यविभ्रान्तमिति पाठः ।

**रा० टीका**—ननु वाक्यात्परोक्षज्ञानमुत्पद्यते चेदपरोक्षज्ञानं कुतो जायत इत्याशंक्य विचारसहिताद्वाक्यादेवेत्याह—

**आत्मा ब्रह्मेतिवाक्यार्थे निःशेषेण विचारिते ॥**
**व्यक्तिरुल्लिख्यते यद्वद्दशमस्त्वमसीत्यतः ॥ ५८ ॥**

**आत्मेति** । ' **अयमात्मा** ब्रह्म ' इतिमहावाक्यार्थे सम्यग्विचार्यमाणे पूर्वमस्तीति परोक्षतयाऽवगतस्य ब्रह्मणः प्रत्यगभिन्नत्वं साक्षात्क्रियते । तत्र दृष्टांतो **यद्वदिति** । दशमस्त्वमसीत्यतो वाक्यात्स्वात्मनि दशमत्वं यथा साक्षात्क्रियते तद्वदित्यर्थः ॥ ५८ ॥

**अ० टीका**—नन्वाप्तवाक्याद्दशमोऽस्तीति परोक्षज्ञानवद्भवतु वेदवाक्याद्ब्रह्मणोऽपि परोक्षज्ञानं प्रमारूपमेव तथाऽप्यपरोक्षं तु दशमस्थले गौरादिरूपवच्चेतनचाक्षुपं संभवदप्यद्वैतब्रह्मणि निर्गुणे तत्कथमित्याक्षेपं सदृष्टांतं निराचष्टे—**आत्मेति** ॥ ५८ ॥

**रा० टीका**—विचारसहकृतेन वाक्येनापरोक्षज्ञानोत्पत्तिप्रकारं सदृष्टांतमाह—

**दशमः क इति प्रश्ने त्वमेवेति निराकृते ॥**
**गणयित्वा स्वेन सह स्वमेव दशमं स्मरेत् ॥ ५९ ॥**

**दशम इति** । त्वयाऽस्तीति निरूपितो दशमः क इति प्रश्ने कृते तस्य त्वमेवेति परिहारेऽभिहिते स्वात्मना सह इतरान्नव गणयित्वाऽहं दशमोऽस्मीति स्वमेव दशमं स्मरेदित्यर्थः ॥ ५९ ॥

**अ० टीका**—ननु यदि दशमापरोक्षमपि शाब्दं नैव स्यात्किंतु गौरादिरूपवच्चेतनचाक्षुपमेव स्याच्चेत्तर्हि स्यादपि दार्ष्टांतिके निर्गुणे ब्रह्मणि तद्वैषम्यशंकावकाशस्तदेवाऽऽदौ न पश्याम इति दशमापरोक्षप्रकारविवरणेन व्यनक्ति—**दशम इत्यादिना** ॥ ५९ ॥

**रा० टीका**—अस्य दशमोऽस्मीति ज्ञानस्य विचारसहितवाक्यजनितत्वाद्विपर्ययादिरूपतेत्याह—

**दशमोऽस्मीति वाक्योत्था न धीरस्य विहन्यते ॥**
**आदिमध्यावसानेषु न नवत्वस्य संशयः ॥ ६० ॥**

**दशम इति** । अस्य दशमस्य त्वमेव दशमोऽसीतिवाक्यात्परिगणनादिलक्षणाविचारसहितादुत्पन्नोऽहं दशमोऽस्मीतिबुद्धिर्न विहन्यते न केनापि ज्ञानेन बाध्यते । परिगणनक्रियायां च नवानामादिमध्यावसानेषु परिगणनेऽप्यहं दशमो न वेति संशयश्च न भवेत् । अतः सा दृढाऽपरोक्षरूपेत्यर्थः ॥ ६० ॥

**अ० टी०**—पूर्वं स्वगणनाभ्रमान्न कृतेति नद्यां ममार दशम इत्यादिविक्षेपः संपन्नोऽभूदिदानीं केन चित्कारुणिकेनास्ति दशमस्त्वं शोकं मा कुर्विति प्रतिज्ञाय तेन क्वासौ को वेत्यादिपृष्टे त्वमेव दशमोऽसीति समुपदिष्टे स्वेन सह तान्नव गणयित्वा स्वमेव दशमं दशमस्त्वमसीति वाक्यकरणकान्निरुक्तरीतिकगणनाविनिरस्तप्रतिबंधत्वेन विशुद्धाद्बोधादनुसंदधतोऽस्य दशमोऽस्मीति धीर्दशमस्त्वमसीति वाक्योत्था धीः प्रमानिरुक्तरीतिकनवादिगणनारंभमध्यसमाप्तिष्वपि नैव विहन्यते तथा स्वस्मिन्नवत्वस्य संशयोऽपि न भवतीति फलितमाह—**दशमोऽस्मीति वाक्योत्थेति** ॥ ६० ॥

**रा० टीका**—एतत्सर्वं दार्ष्टांतिके योजयति—

**सदेवेत्यादिवाक्येन ब्रह्मसत्त्वं परोक्षतः ॥**
**गृहीत्वा तत्त्वमस्यादिवाक्याद्व्यक्तिं समुल्लिखेत् ॥ ६१ ॥**

**सदेवेत्यादीति ।** 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादिवाक्येन ब्रह्मसद्भावं प्रथमं निश्चित्य तस्य जीवरूपेण प्रवेशादियुक्तिपर्यालोचनया प्रत्यग्रूपत्वं संभाव्य 'तत्त्वमसि' इत्यादिवाक्येनाद्वितीयब्रह्मरूपमात्मानमहं ब्रह्मास्मीति साक्षात्कुर्यात् ॥ ६१ ॥

**अ० टीका**—उक्तमर्थं दार्ष्टांतिके स्पष्टयति—**सदेवेत्यादीति ।** 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युद्दालकाख्यपित्रा **छांदोग्यषष्ठे** श्वेतकेत्वाख्यं स्वपुत्रं प्रति समुपदिष्टेनेत्यर्थः । तत्रासौ तेन परोक्षतो ब्रह्मसत्त्वं गृहीत्वाऽनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादिश्रुत्युक्तयुक्तिप्रयुक्तासंभावनादिप्रतिबंधे सति यथा विचारितात्तत्त्वमस्यादिवाक्यात्संजातसंबोधेन द्वैतमिथ्यात्वपूर्वकाद्वितब्रह्मात्मैक्यव्यक्त्युल्लेखं यथा प्राक्संपादितवांस्तथाऽऽधुनिकोऽप्यधिकारी निरुक्तरूपां व्यक्तिं समुल्लिखेदिति संबंधः ॥ ६१ ॥

**आदिमध्यावसानेषु स्वस्य ब्रह्मत्वधीरियम् ॥**
**नैव व्यभिचरेत्तस्मादापरोक्ष्यं प्रतिष्ठितम् ॥ ६२ ॥**

**रा० टीका—आदिमध्येति ।** अत इयमात्मनो ब्रह्मत्वबुद्धिः पंचानां कोशानामादिमध्यावसानेष्वात्मनो व्यवहारेऽपि नैवान्यथा भवति । अतोऽस्या बुद्धेरपरोक्षज्ञानत्वं सुस्थितमित्यर्थः ॥ ६२ ॥

**अ० टीका**—अथ फलितं कथयन्नुक्तशब्दापरोक्षवादसिद्धांतमुपसंहरति—**आदिमध्येति ।** 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति तच्छ्रुतेः सृष्टिस्थितिलयकालेष्वपीत्येतत् । आपरोक्ष्यं शब्दापरोक्षत्वमित्यर्थः ॥ ६२ ॥

**रा० टीका**—नन्वेवं प्रथमतः केवलं वाक्यात्परोक्षज्ञानमुत्पद्यते पश्चाद्विचारसहितादपरोक्षज्ञानमित्येतत्कुतोऽवगम्यत इत्याशंक्य तैत्तिरीयकादिश्रुत्यर्थपर्यालोचनयेत्याह —

**जन्मादिकारणत्वाख्यलक्षणेन भृगुः पुरा ॥**
***पारोक्ष्येण गृहीत्वाऽथ विचाराद्व्यक्तिमैक्षत ॥ ६३ ॥**

**जन्मादीति ।** भृगुनामकः कश्चिदृषिः पुरा 'यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंतीति तद्विजिज्ञासस्व तद्ब्रह्मेति' इति वाक्यश्रुतेन जगज्जन्मादिकारणत्वाख्यलक्षणेन जगत्कारणं ब्रह्म परोक्षतयाऽवगत्यान्नमयादिपंचकोशविचाराद्व्यक्तिं प्रत्यगात्मरूपं ब्रह्म दृष्टवानित्यर्थः ॥ ६३ ॥

**अ० टीका**—न केवलं छांदोग्योपनिषद्येव विचारप्रवृत्तिप्रयोजकं ब्रह्मसत्त्वमात्रोपपादकाद्वाक्यात्प्रथमं तस्य परोक्षज्ञानं ततो विचारप्रवृत्तौ सत्यां तत्प्रसादाद्ब्रह्मात्मैक्यप्रतिपादकादुपनिषद्वाक्यादेवापरोक्षज्ञानमपीति नियतं किंतु तैत्तिरीयाद्युपनिषत्स्वपीति प्रकटयति- **जन्मादीति ।** एवं हि तैत्तिरीयैर्भृगुवल्ल्युपनिषत्समाम्नायते—' भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ।

* परोक्षेणेत्यच्युतरायपाठः ।

तं होवाच। यतो वा इमानि भूतानि जायंते। येन जातानि जीवंति। यत्प्रयंत्यभिसंविशंति। तद्विजिज्ञासस्व। तद्ब्रह्मेति' इत्यादि। तत्र वरुणपुत्रो भृगुनामा प्रसिद्धो महर्षिर्ब्रह्मजिज्ञासुः स्वपितरमुपसन्नः संस्तेनोक्तयतो वेत्यादिवाक्यज्ञापितेन जन्यजगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वाख्येन ब्रह्मणस्तटस्थलक्षणेन पूर्वं ब्रह्म परोक्षेण। वह्निभ्रमाधिष्ठानं स्वप्रकाशं रत्नं भवितुमर्हति। तदभिन्ननिमित्तोपादानकारणत्वात्। यो यद्भ्रमाभिन्ननिमित्तोपादानं स तदधिष्ठानम्। यथाविषधरभ्रमाभिन्ननिमित्तोपादानं हारस्तदधिष्ठानमित्यादिवदनुमित्यात्मपरोक्षज्ञानेनेत्यर्थः। गृहीत्वा तद्विविषयकासत्त्वापादकावरणनिवृत्तिं संपाद्येति यावत्। अथानंतरं विचारात्। अन्नं प्राणमित्यादिना पित्रुक्तपंचकोशाख्यतदुपलब्धिस्थलविवेचनाद्धेतोरित्येतत्। व्यक्तिं ब्रह्मात्मैक्यस्थितिम्। ऐक्षतापरोक्षीचकारेत्यन्वयः॥ ६३॥

**यद्यपि त्वमसीत्यत्र वाक्यं नोचे भृगोः पिता॥**
**तथाप्यन्नं प्राणमिति विचार्य स्थलमुक्तवान्॥ ६४॥**

**रा० टीका**—नन्वस्मिन्प्रकारणे त्वं ब्रह्मासीत्येवमाद्युपदेशवाक्याभावात्कथं भृगोरात्मसाक्षात्कार इत्याशंक्याऽऽत्मसाक्षात्कारहेतुविचारयोग्यस्थलप्रदर्शनादित्याह—**यद्यपीति**॥६४॥

**अ० टीका**—ननु त्वं ब्रह्मासीति वरुणेन भृगुं प्रत्यपरोक्षताधायकं वाक्यं तु नैव प्रयुक्तं तथा च कथं तदुदय इत्याशंक्य समाधत्ते—**यद्यपीति**। अत्र भृगुवल्ल्याम्॥ ६४॥

**अन्नप्राणादिकोशेषु सुविचार्य पुनः पुनः॥**
**आनंदव्यक्तिमीक्षित्वा ब्रह्मलक्ष्माप्ययूयुजत्॥ ६५॥**

**रा० टीका**—नन्वन्नमयादिकोशेषु विचारितेषु प्रतीचः साक्षात्कारो भवतु ब्रह्मणस्तु कथमित्याशंक्य प्रतीच एव ब्रह्मत्वात्पंचकोशविचारेणाऽऽनंदात्मव्यक्तिं साक्षात्कृत्याऽऽनंदाद्ध्येव खल्विमानि भूतानि जायंते आनंदेन जातानि जीवंति आनंदं प्रयंत्यभिसंविशंतीत्येवं ब्रह्मलक्षणमपि प्रतीच्येव योजितवानित्याह—**अन्नप्राणादीति**॥ ६५॥

**अ० टीका**—ननूक्तविचार्यस्थले कथं भृगुर्विचारं विधाय ततः शुद्धाद्वैतब्रह्मात्मैक्यविषयकापरोक्षप्रमां संपादितवानित्यत आह—**अन्नप्राणादीति**। आदिना मनोमयविज्ञानमयानंदमयाः। विचारे सौष्ठवपौनःपुन्ये तु जन्यजगज्जन्माद्यभिन्ननिमित्तोपादानत्वरूपब्रह्मलक्षणयोजनतदनुग्राहकनानाविधलौकिकादितर्कोपन्यासाभ्यासपौष्कल्य एवेत्यर्थः॥ ६५॥

**रा० टीका**—ननु ब्रह्मलक्षणस्याऽऽनंदात्मरूपेण प्रतीचि योजनं न घटेत ब्रह्मणस्तटस्थत्वेन प्रतीचो भिन्नत्वादित्याशंक्य न भेदः सत्यादिलक्षणस्य ब्रह्मणः प्रत्यग्रूपेणावस्थानश्रवणादित्याह—

**सत्यं ज्ञानमनंतं चेत्येवं ब्रह्मस्वलक्षणम्॥**
**उक्त्वा गुहाहितत्वेन कोशेष्वेतत्प्रदर्शितम्॥ ६६॥**

**सत्यमिति**। 'सत्यं ज्ञानमनंतं ब्रह्म' इत्येवं ब्रह्मस्वलक्षणं ब्रह्मणः स्वरूपलक्षणमभिधाय 'यो वेद निहितं गुहायां परमे व्योमन्' इत्यनेन वाक्येन पंचकोशगुहांतःस्थितत्वेन तस्यैव प्रत्यग्रूपत्वमभिहितमित्यर्थः॥ ६६॥

**अ० टीका**—नन्वन्नमयादिकोशचतुष्टयवदानंदमयकोशस्यापि दृश्यत्वाविशेषात्तत्र

दृङ्मात्रपर्यवसन्ननिरुक्तब्रह्मलक्षणस्य कथं योजनसंभव इत्याशंक्य समाधत्ते—**सत्यमिति।** ब्रह्मवल्ल्यां हि ब्रह्मविदाप्नोति परमिति प्रथमसूत्रवाक्येनाद्वैतविषयकज्ञानलक्षणं साधनं तत्साध्यं च तन्मात्राश्रयविषयकाज्ञानमात्रध्वस्तिरूपकैवल्यमप्युपन्यस्य किं लक्षणं तद्ब्रह्मवस्तु यद्विषयकाज्ञानेनोक्तलक्षणमुक्तिरित्यपेक्षायां सत्यं ज्ञानमनंतं ब्रह्मेति वाक्येन तदीयं स्वरूपभूतं लक्षणं संक्षिप्याथ कस्तज्ज्ञानोपाय इत्याकांक्षायां 'यो वेद निहितं गुहायां परमे व्योमन्' इत्यादिना गुहाशब्दविवक्षितान्नमयाद्यानंदमयांतपंचकोशाधिष्ठानत्वोपलक्षितमेतदबाधितनित्यापरोक्षचैतन्यमेव यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति श्रुतिसिद्धमनंतशब्दितदैशिकादित्रिविधपरिच्छेदविधुरं पंचकोशोपलक्षिताखिलद्वैतभ्रमाधिष्ठानीभूतं निर्विकल्पप्रत्यगानंदरूपं वस्त्वेव प्रदर्शितमस्ति निरुक्तश्रुत्येत्यध्याहृत्य संबंधः। तस्मात्प्रमोदाख्येष्टवस्तुसंभोगजन्यमनोवृत्तिविशेषलक्षणस्याऽऽनंदस्य दृश्यत्वेऽपि तत्साक्षित्वोपलक्षितप्रत्यगभिन्नब्रह्मात्मानंदस्य दृङ्मात्रत्वं समुचितमेवेति भावः ॥ ६६ ॥

**रा० टीका**—एवं तैत्तिरीयश्रुतिपर्यालोचनया भृगोः परोक्षज्ञानपूर्वकविचारजन्यत्वं साक्षात्कारस्य दर्शयित्वा छांदोग्यश्रुतिपर्यालोचनेनापि तद्दर्शयति—

**पारोक्ष्येण विबुध्येंद्रो य आत्मेत्यादिलक्षणात् ॥**
**अपरोक्षीकर्तुमिच्छंश्चतुर्वारं गुरुं ययौ ॥ ६७ ॥**

**पारोक्ष्येणेति।** इंद्रः 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकः' इत्यादिवाक्यप्रतिपादितेन लक्षणेनाऽऽत्मानं परोक्षतयाऽवगत्य विचाराच्छरीरत्रयनिराकरणेन तत्साक्षात्करणाय गुरुं ब्रह्माणं चतुर्वारमुपसन्न इति छांदोग्योपनिषद्यष्टमाध्याये श्रूयते ॥ ६७ ॥

**अ० टीका**—एवं श्वेतकेतुभृग्वोरुभयोरपि पूर्वं विचारप्रवर्तकं वाक्यैककरणकं परोक्षज्ञानं ततस्तद्विचारपरिपाके तत्प्रसादादेवापरोक्षज्ञानमपि दर्शयित्वा संप्रदायबाहुल्येन श्रोतॄणामाधुनिकमुमुक्षूणां श्रद्धासमृद्ध्यर्थमिंद्रस्यापि तथात्वं छांदोग्याष्टमाध्यायप्रसिद्धमेव समुदाहरति—**परोक्षेणेति। य आत्मेत्यादीति।** 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकः' इत्यादिलक्षणात्प्रजापतिप्रोक्ताद्वाक्यादित्यर्थः। परोक्षेणासत्त्वापादकावरणमात्रनिवर्तकांतःकरणवृत्तिविशेषलक्षणज्ञानेनेति यावत्। विबुध्याद्वैतं ब्रह्मेति शेषः। तद्विषयकोक्तावरणमेव विनिवर्त्यैत्येतत्। शिष्टं तु तत्रैव स्पष्टमेव ॥ ६७ ॥

**रा० टीका**—इदानीमैतरेयश्रुतावपि तद्दर्शयति—

**आत्मा वा इदमित्यादौ परोक्षं ब्रह्म लक्षितम् ॥**
**अध्यारोपापवादाभ्यां प्रज्ञानं ब्रह्म दर्शितम् ॥ ६८ ॥**

**आत्मावा इति।** 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' इत्यनेन वाक्येन ब्रह्मणो लक्षणमभिधाय 'स ईक्षत लोकान्नुसृजा इति' इत्युपक्रम्य 'तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथः' इत्यनेन परमात्मनि जगदध्यारोपणप्रकारमभिधाय 'स जातो भूतान्यभिव्यैक्षत किमिहान्यं वावदिषत्' इति तस्याऽऽरोपितस्यापवादमभिधाय 'स एतमेव पुरुषं ब्रह्मततममपश्यदिदमदर्शमिति' इति प्रत्यगात्मना ब्रह्मस्वरूपत्वमभिहितं पुनश्च 'पुरुषे हवा' इत्यादिना ज्ञानसाधनवैराग्यजननाय गर्भवासादिदुःखं प्रदर्श्य

कोऽयमात्मेति वयमुपास्महे इत्यादिना विचारेण तत्त्वंपदार्थपरिशोधनपुरःसरं प्रज्ञानं ब्रह्मेति प्रज्ञानरूपस्याऽऽत्मनो ब्रह्मत्वं दर्शितमित्यर्थः ॥ ६८ ॥

**अ० टीका**—एवमैतरेयकश्रुतावपि प्रथममवांतरवाक्यात्परोक्षज्ञानं ततो विचारितान्महावाक्यादेवापरोक्षज्ञानमपि दर्शितमस्तीत्याह—**आत्मा वा इति**। तत्र ह्येवमाम्नायते—'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचनमिषत्' इत्यादि। एवमनेन स्वरूपलक्षणवाक्येनाऽऽत्मनः स्वरूपलक्षणमभिधाय तेन परोक्षज्ञाने संजाते सति ततः 'स ईक्षत लोकान्नुसृजा' इत्यादिना तत्र जगदध्यारोपप्रकारं प्रपंच्यांते प्रज्ञानं ब्रह्मेति महावाक्येन तदपवादपूर्वकमपरोक्षज्ञानमपि तस्य स्फुटीकृतमस्तीत्यर्थः ॥ ६८ ॥

**रा० टीका**—उक्तन्यायमितरासु श्रुतिष्वप्यतिदिशति—

**अवांतरेण वाक्येन परोक्षा ब्रह्मधीर्भवेत् ॥**
**सर्वत्रैव महावाक्यविचारादपरोक्षधीः ॥ ६९ ॥**

**अवांतरेणेति**। सर्वत्र सर्वासु श्रुतिष्वित्यर्थः ॥ ६९ ॥

**अ० टीका**—अयं नियमस्तूपनिषदंतरेऽपि द्रष्टव्य इति स्पष्टयति—**अवांतरेणेति** ॥ ६९ ॥

**रा० टीका**—ननु महावाक्यविचारस्यापरोक्षज्ञानजनकत्वं स्वकपोलकल्पितमित्याशंक्य वाक्यवृत्तावाचार्यैस्तथा प्रतिपादितत्वान्नैवमित्याह—

**ब्रह्मापरोक्ष्यसिद्ध्यर्थं महावाक्यमितीरितम् ॥**
**वाक्यवृत्तावतो ब्रह्मापरोक्ष्ये विमतिर्नहि ॥ ७० ॥**

**ब्रह्मापरोक्ष्येति**। अतो वाक्याद्ब्रह्मापरोक्षज्ञाने विप्रतिपत्तिर्नास्तीत्यर्थः ॥ ७० ॥

**अ० टीका**—ननु सिद्धांतलेशसिद्धांतसूक्तिमंजरीकारैः श्रवणविधिविचारे विवरणमतमुपन्यस्य—

"तथा तदीयाः शब्दस्तुपरोक्षज्ञानकृत्पुरा। मननादियुतोऽध्यक्षं कुर्याद्धिधुरचित्तवत्" ॥

इत्युक्तत्वादिदमसांप्रदायिकमित्याशंक्य भगवद्भिर्भाष्यकारैरेव बृहद्वाक्यवृत्तौ कंठत एवैतदुपपादनान्नैवमित्याह—**ब्रह्मेति**। ब्रह्मापरोक्ष्ये तत्त्वमस्यादिलक्षणाद्विचारितमहावाक्यादिति शेषः ॥ ७० ॥

**रा० टीका**—वाक्यवृत्तावुपपादनप्रकारं दर्शयति—

**आलंबनतया भाति योऽस्मत्प्रत्ययशब्दयोः ॥**
**अंतःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ७१ ॥**

**आलंबनतयेति**। योऽतःकरणसंभिन्नबोधेंऽतःकरणोपाधिकश्चिदात्माऽस्मत्प्रत्ययशब्दयोरहमितिज्ञानस्याहमितिशब्दस्य चाऽऽलंबनतया विषयत्वेन भाति। स तथाविधो बोधस्त्वंपदाभिधस्त्वमितिपदमभिधा वाचकं यस्य स त्वंपदाभिधस्त्वंपदवाच्य इत्यर्थः ॥ ७१ ॥

**अ० टीका**—अथ तत्प्रतिपादकं तत्रत्यमेव श्लोकाष्टकं लिखति—**आलंबनतयेत्यादिना**। त्वंपदाभिधस्तत्त्वमसीति वाक्यगतत्वंपदवाच्यार्थ इत्यर्थः ॥ ७१ ॥

**रा० टीका**—एवं त्वंपदवाच्यार्थमभिधाय तत्पदवाच्यार्थमाह—

**मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ॥**
**पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ७२ ॥**

**मायोपाधिरिति ।** पारोक्ष्यशबलः परोक्षत्वधर्मविशिष्ट इत्यर्थः । एवं तटस्थलक्षणमभिधाय स्वरूपलक्षणमाह—**सत्याद्यात्मक इति ।** सत्यमादिर्येषां ज्ञानादीनां ते सत्यादयः । आत्मा स्वरूपं यस्य स तथाविधस्तत्पदाभिधस्तत्पदमभिधा वाचकं यस्य स तत्पदाभिधस्तत्पदवाच्य इत्यर्थः ॥ ७२ ॥

**अ० टीका**—एवं मोक्षफलभाक्त्वेनाभ्यर्हितत्वात्प्रथमं त्वंपदवाच्यार्थमभिधायावसरप्राप्तत्वात्तत्पदवाच्यार्थमपि कथयति—**मायेति ।** माया शुद्धसत्त्वप्रधानाऽनाद्यविद्योपाधिः स्वधर्मारोपकत्वमुपाधित्वमित्युपाधिलक्षणाद्रक्तः स्फटिक इति विभ्रमे तत्संनिकृष्टकुंकुमवदखिलद्वैतविभ्रमे सामग्री यस्य स तथेत्यर्थः । अत एव । **जगदिति ।** जन्यजगज्जन्माद्यभिन्ननिमित्तोपादानमित्येतत् । अत एव । सर्वज्ञत्वादीति । आदिना सर्वशक्तित्वादि । अत एव । **पारोक्ष्येति ।** पारोक्ष्येण नित्यापरोक्षस्वप्रकाशप्रत्यगभिन्नत्वेन शबलः संकरशालीति यावत् । एवं तटस्थलक्षणं तत्पदार्थीयं संक्षिप्य स्वरूपलक्षणमपि सूचयति—**सत्यादीति ।** आदिना ज्ञानानंतानंदादिग्रहः । एतादृशः । **तत्पदेति ।** तत्पदस्य तत्त्वमसीति महावाक्यस्य संबंधि यत्तदिति सुबंतं तस्याभिधा शक्तिवृत्तिर्यस्मिन्स तथेत्यर्थः ॥ ७२ ॥

**रा० टीका**—एवं पदार्थावभिधाय वाक्यार्थबोधनाय लक्षणावृत्तिराश्रयणीयेत्याह—

**प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ॥**
**विरुध्येते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ७३ ॥**

**प्रत्यक्परोक्षतेति ।** प्रत्यक्परोक्षत्वे सद्वितीयत्वेन सहिता पूर्णतेति मध्यमपदलोपी समासः । सद्वितीयत्वपूर्णत्वे चैकस्य वस्तुनो यतो विरुध्येते अतो लक्षणावृत्तिराश्रयणीयेत्यर्थः ॥ ७३ ॥

**अ० टीका**—ननु भवत्वेवं त्वंपदादिवाच्यार्थकथनमथापि किं प्रकृत इत्याशंक्य यतोऽसिपदबोधितस्यैकस्याद्वितीयस्याऽऽत्मनः प्रत्यक्परोक्षते नित्यापरोक्षत्वविप्रकृष्टत्वे तथा स द्वितीयत्वपूर्णते दृश्यवैशिष्ट्याखंडैकरसते विरुध्येते अनुपपन्ने भवतस्तत्राविरोधेन स्वारसिकवाक्यार्थसिद्ध्यर्थं लक्षणाऽभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यत इत्यभियुक्तोक्तलक्षणा जघन्यैव शब्दवृत्तिः संप्रवर्तते मुमुक्षुभिरवश्यांगीकरणार्थं प्रवृत्ता भवतीति समाधत्ते—**प्रत्यगिति ।** एवं चात्र प्रत्यगादिपदैरन्वयानुपपत्तिस्तथैकपदेन 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्याद्युपक्रमादिश्रुतीनां तात्पर्यानुपपत्तिरपि लक्षणाबीजं व्यज्यते ॥ ७३ ॥

**रा० टीका**—सा च कीदृशीत्यत आह—

**तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ॥**
**सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ७४ ॥**

**तत्त्वमसीति ।** भागलक्षणा भागत्यागलक्षणेत्यर्थः । तत्र दृष्टांतः—**सोऽयमिति ।** सोऽयं देवदत्त इतिवाक्यस्थयोः सोऽयमितिपदयोर्यथा जहदजहल्लक्षणावृत्तिराश्रिता नापरा न जहल्लक्षणा नाप्यजहल्लक्षणा तद्वदत्रापीत्यर्थः ॥ ७४ ॥

**अ० टीका**—नन्वेवमपि किमसावपि गंगायां घोष इत्यादिवज्जहत्स्वार्था किं वा श्वेतो धावतीत्यादिवदजहत्स्वार्था यद्वा सोऽयं देवदत्त इत्यादिवज्जहदजहत्स्वार्थेत्याक्षेपेऽत्य एवेत्याह—**तत्त्वमस्यादीति । भागेति ।** जहदजहत्स्वार्थाख्या भागत्यागलक्षणेत्यर्थः ॥७४॥

**रा० टीका**—ननु गामानयेत्यादिवाक्येषु लक्षणावृत्त्या विनाऽपि वाक्यार्थबोधो दृश्यते तद्वदत्रापि किं न स्यादित्याशंक्याऽऽह—

**संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ॥**
**अखंडैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ७५ ॥**

**संसर्ग इति ।** लोके गामानयेत्यादौ पदैः स्मारितानामाकांक्षादिमतां गवादिपदार्थानामन्वयो वाक्यार्थत्वेनांगीकृतः । यथा नीलं महत्सुगंध्युत्पलमित्यादौ नीलत्वादिविशिष्टस्योत्पलस्य वाक्यार्थत्वं स्वीकृतं नैवमत्र महावाक्येषु संसर्गविशिष्टयोरन्यतरस्य वाक्यार्थत्वमभ्युपगम्यते किंत्वखंडैकरसत्वेन स्वगतादिभेदशून्यवस्तुमात्ररूपेण वाक्यार्थो विद्वद्भिरभ्युपेयतेऽतो लक्षणाऽऽश्रयणीयेत्यर्थः ॥ ७५ ॥

**अ० टीका**—ननु गामानयेत्यादिवाक्येषु गवादिपदैः प्राग्गृहीतशक्तिकैराकांक्षायोग्यतासत्तिवशात्स्मारितानां धेन्वादिपदार्थानां संसर्गापरनामासंबंधलक्षणो वाक्यार्थो लक्षणां विनैव दृष्टस्तथा नीलं महत्सुगंध्युत्पलमित्यादिवाक्येषु तु नीलरूपादिविशिष्ट एव सशक्तिवृत्त्यैव यथा दृष्टस्तद्वत्प्रकृतेऽप्यस्त्विति चेन्न । सर्ववेदार्थज्ञभगवद्बादरायणादिप्राचीनाचार्यासंप्रतिपत्तेरित्याह—**संसर्गो वेति ।** कस्तर्हि तत्संमतोऽत्र तत्त्वमस्यादिमहावाक्येषु वाक्यार्थ इत्यत्राऽऽह—**अखंडेकेति ।** स्वगतादिभेदत्रयविधुरप्रत्यगभिन्नब्रह्मत्वेनेत्यर्थः । तथा च पारमर्षे सूत्रे—'तदनन्यत्वमारंभणशब्दादिभ्यः' इति 'तत्तु समन्वयात्' इति च । अत्र विस्तरस्त्वेतद्भाष्यादावेव द्रष्टव्य इति दिक् ॥ ७५ ॥

**रा० टीका**—अखंडैकरसं वाक्यार्थं दर्शयति—

**प्रत्यग्बोधो य आभाति सोऽद्वयानंदलक्षणः ॥**
**अद्वयानंदरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ७६ ॥**

**प्रत्यग्बोध इति ।** प्रत्यग्बोधः सर्वांतरश्चिदात्माऽऽभाति बुद्ध्यादिसाक्षित्वेन स्फुरति सोऽद्वयानंलक्षणोऽद्वितीय आनंदरूपः परमात्मेत्यर्थः । अद्वयानंदरूपश्च तथाविधः परमात्मा प्रत्यग्बोधैकलक्षणश्चिदेकरसः प्रत्यगात्मैवेत्यर्थः ॥ ७६ ॥

**अ० टीका**—ननु कीदृशोऽसौ तेऽस्त्यखंडैकरसो वाक्यार्थ इत्यपेक्षायां तं संक्षिपति—**प्रत्यगिति ।** द्वैतस्य प्रातिकूल्येनांचति प्रकाशत इति प्रत्यगद्वैतत्वेनैव भासमान इत्यर्थः ॥ एतादृशो यो बोधः सुषुप्त्यादिसाक्षित्वेनोपलक्षितश्चिन्मात्र आत्मा शोधितस्त्वंपदार्थ इति यावत् । आभाति पंचकोशप्रकाशकत्वेन परिस्फुरति सः । **अद्वयेति ।** तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरं यदयमात्मेति । एतस्यैवाऽऽनंदस्यान्यानि भूतानि मात्रामुपजीवंतीति । आनंदो ब्रह्मेति व्यजानादिति । एष ह्येवाऽऽनंदयातीति च श्रुतेरद्वैतसच्चिदानंदलक्षणब्रह्मरूप एवेत्यर्थः । अस्तीत्यार्थिकम् । एवं व्यतिहारमाह—**अद्वयानंदेत्यादिना ।** एवमद्वैतब्रह्मलक्षणः परमात्माऽपि । **प्रत्यगिति ।** सर्वांतश्चिदेकरूप एव भवतीति यावत् । एतेन शोधिततत्त्वंपदार्थयोर्वास्तविकैकरूपत्वं सूच्यते ॥ ७६ ॥

**इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ॥**
**अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ७७ ॥**

**रा० टीका**—एवमखंडार्थबोधेन किं स्यादित्यत आह—**इत्थमिति** ॥ ७७ ॥

**अ० टीका**—अथैतत्फलं कथयति—**इत्थमित्यादिद्वाभ्याम्** । **अन्योन्येति** । परस्परवास्तविकैक्यविषयकप्रमेत्यर्थः । तादात्म्यमत्रपारमार्थिकाभिन्नत्वमेव न तु भेदसहिष्णुरभेदस्तादात्म्यमित्युक्तलक्षणं धर्मधर्म्यादिनिष्ठं पारिभाषिकमिति । यदेतिपदेनोक्तप्रमितेरनंतजन्मपुण्यफलत्वेनातिदुर्लभत्वं ध्वन्यते । त्वमर्थस्य शोधितत्वंपदार्थस्य पंचकोशसाक्षित्वोपलक्षितस्य प्रतीच इति यावत् । अब्रह्मत्वं सर्वदृश्याधिष्ठानत्वोपलक्षितसत्यज्ञानानंतानंदरूपशोधिततत्पदार्थीभूतब्रह्मभिन्नत्वमित्येतत् । तदेव निरुक्तप्रतिपत्तिलक्षण एवेत्यर्थः । नतूत्तरक्षणे । उक्तं हि **कल्पतरुकारैः**—शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिरुदयत इति । हिर्विद्वदनुभवप्रसिद्ध्यर्थक एव । व्यावर्तेत निवृत्तं स्यादिति संबंधः ॥ ७७ ॥

**तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ॥**
**पूर्णानंदैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ७८ ॥**

**रा० टीका**—**तदर्थस्येति** । त्वमर्थस्य प्रत्यगात्मनोऽब्रह्मत्वं भ्रांतिसिद्धा ब्रह्मरूपता तदर्थस्य ब्रह्मणश्च पारोक्ष्यं परोक्षज्ञानैकविषयत्वं च निवर्तेते ततोऽपि किमिति पृच्छति—**यद्येवमिति** । उत्तरमाह—**शृण्विति** ॥ ७८ ॥

**अ० टीका**—**तदर्थस्य चेति** । चोऽप्यर्थे । उक्तलक्षणतत्पदार्थस्य परोक्षत्वमपि व्यावर्तेत तत्क्षण एव ध्वस्तं भवेदित्यनुकृष्य योज्यम् । तत्फलमपि साकांक्षं संक्षिपति—**यद्येवमित्यादिशेषेण** ॥ ७८ ॥

**रा० टीका**—ननु समयबलेन सम्यक्परोक्षानुभवसाधनमागम इत्यागमलक्षणमतो वाक्यस्यापरोक्षज्ञानजनकत्वं कथमुच्यत इत्याशंक्य सिद्धांतपरिज्ञानशून्योऽयमिति मनसि निधायोपहसति—

**एवं सति महावाक्यात्परोक्षज्ञानमीर्यते ॥**
**यैस्तेषां शास्त्रसिद्धांतविज्ञानं शोभतेतराम् ॥ ७९ ॥**

**एवं सतीति** । एवं वदंतः सिद्धांतरहस्यं ते न जानंतीत्यर्थः ॥ ७९ ॥

**अ० टीका**—नन्वेवं यदि विचारितान्महावाक्यादेवाद्वैतब्रह्मात्मैक्यविषयको परोक्षबोधश्चेत्तर्हि ‘ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः ’ इति श्रुत्या श्रवणादिविधानं किमिति कृतं स्यात्तस्मात्समयबलेन सम्यक्परोक्षानुभवसाधनमागम इति **रामकृष्ण**लिखितागमलक्षणानुरोधेन समयाः शपथाचारकालसिद्धांतसंविद इत्यमरात्समयशब्दवाच्यपदार्थविषयकपदशक्तिग्रहणज्ञानबलेन प्रमात्मकपरोक्षानुभवजनकाज्ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिरूपाद्वैदिकाद्ग्रामानयेत्यादिरूपाल्लौकिकाच्चाऽऽगमशब्दाभिधेयादाप्तवाक्यात्परोक्षमेव ज्ञानं भवतीत्याशंकामुपहासेनैव निराकरोति—**एवं सतीति** । इदमत्रोपहासबीजम् । तद्यथा—‘ आत्मा वा अरे द्रष्टव्यः ’ इत्याद्युदाहृतश्रुतिस्त्वनुभूतिप्रकाशे **श्रीविद्यारण्यचरणैरेव** व्याख्याता—

" आत्मा द्रष्टव्य इत्युक्त्या तत्त्वधीरुपदर्शिता । श्रोतव्य इत्यादिना तु विचार उपदर्श्यते । श्रुत्यर्थविप्लुतेर्हेतुः शब्दशक्तिविवेककृत् । श्रुतिलिंगादिको न्यायः प्रोक्तः श्रोतव्य इत्यतः । अर्थासंभावनोच्छेदी तर्को मननमीरितम् । वेदशास्त्राऽविरोध्यत्र तर्को ग्राह्यो न चेतरः । अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते । ध्यानाशंकानिवृत्त्यर्थं विज्ञानेनेत्युदीरणात् । द्रष्टव्य इति विज्ञानमुद्दिश्य श्रवणं तथा । मननं च विधायाथ विज्ञानमवधिं जगौ " इति ।

एवं चेहाद्वैतब्रह्मात्मापरोक्षाप्रतिबद्धबोधमुद्दिश्य तदंतरंगतमसाधने श्रवणमनने एव विधाय तत्फलीभूतमुपक्रांतमात्मज्ञानमेवोक्तलक्षणं पर्यवसानभूमित्वेनोक्तमिति क्व नाम निदिध्यासनशब्दवाच्यध्यानापरोक्षवादावसरः । एवं यदिदं रामकृष्णाख्येन प्राचैतट्टीकाकृताऽत्रैव समयबलेनेत्यादिनाऽऽगमलक्षणमुक्तं तत्किमार्षं मानुषं वा । नाऽऽद्यः । प्रत्यक्षानुमानागमाः प्रमाणानीति योगसूत्र एव शब्दप्रमाणस्थले ह्यागमशब्दः प्रयुक्तस्तद्भाष्ये वैयासके तु । आप्तेन दृष्टोऽनुमितो वार्थः परत्र स्वबोधसंक्रांतये शब्देनोपदिश्यते शब्दात्तदर्थविषयावृत्तिः श्रोतुरागम इत्यत्र निरुक्ततल्लक्षणानुपलंभात् । नांत्योऽपि । क्षोदाक्षमत्वात् । तद्यथा—अव्याप्त्यादिविधुरो धर्म एव लक्षणमिति प्रायः सर्वसंमतम् । दशमस्त्वमसि कौंतेयस्त्वमसीत्यादिशब्देष्वाप्तवाक्यत्वेनाऽऽगमत्वेऽपि समयबलेन सम्यक्परोक्षानुभवसाधनत्वाभावादव्याप्तिः । एवं व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्श इति तस्माल्लिंगपरामर्शोऽनुमानमिति च तर्कसंग्रहस्याप्युक्तेर्व्याप्तिस्मृतिद्वारकत्वेन पक्षधर्मीभूतपार्वतधूमादिज्ञानस्यैव समयशब्दितस्य बलेन सम्यक्परोक्षानुभवसाधनेऽनुमानेऽतिव्याप्तिरपि स्फुटतरैवेति । तस्मादेवं सतीत्यादिना मूलकारैः कृतः शब्दापरोक्षवादासहिष्णुतदीयपरोक्षैकज्ञानजननैयत्यवादिनामुपहासः समुचित एवेति भावः । अत्र विस्तरस्तु मदीयबोधैक्यसिद्ध्यादावेव द्रष्टव्य इति दिक् ॥ ७९ ॥

**रा० टीका**—ननु सिद्धांतस्तावत्तिष्ठतु वाक्यस्य परोक्षज्ञानजनकत्वं त्वनुमानसिद्धमिति शंकते—

**आस्तां शास्त्रस्य सिद्धांतो युक्त्या वाक्यात्परोक्षधीः ॥**
**स्वर्गादिवाक्यवन्नैवं दशमे व्यभिचारतः ॥ ८० ॥**

**आस्तामिति ।** विमतं वाक्यं परोक्षज्ञानजनकं भवितुमर्हति वाक्यत्वात्स्वर्गादिप्रतिपादकवाक्यवदित्यनुमानेन परोक्षज्ञानजनकत्वं सिद्धमित्यर्थः । अनैकांतिकोऽयं नेतुरिति परिहरति—**नैवमिति** । दशमस्त्वमसीतिवाक्ये वाक्यत्वे सत्यपरोक्षज्ञानजनकत्वस्योपलंभादिति भावः ॥ ८० ॥

**अ० टीका**—अथैवमप्युक्तवाद्यनुमानबलेन शब्दस्य परोक्षैकप्रमाकरणत्वं साधयति—**आस्तामित्यादिना** । तथा चेत्थं प्रयोगः कथायाम् । वाक्यं परोक्षैकप्रमाकरणम् । वाक्यत्वात् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्यवदिति । ततः सिद्धांती निरुक्तहेतोरनैकांतिकत्वेन तत्खंडयति—**नैवमिति** । तत्र हेतुं प्रतिबोधयति—**दशम इत्यादिना** ॥ ८० ॥

**स्वतोऽपरोक्षजीवस्य ब्रह्मत्वमभिवांछतः ॥**
**नश्येत्सिद्धापरोक्षत्वमिति युक्तिर्महत्यहो ॥ ८१ ॥**

**रा० टीका**—किंच त्वंपदार्थस्य जीवस्यापरोक्षत्वाभावप्रसंगादपि न महावाक्यं परोक्षज्ञानजनकमित्यंगीकार्यमित्याह—**स्वत इति** ॥ ८१ ॥

**अ० टीका**—एवं निरुक्तमतेऽतिप्रसंगमप्याह—**स्वत इति** । अहो इति युक्तिर्महतीत्युपहासक एव संबंधः ॥ ८१ ॥

**वृद्धिमिष्टवतो मूलमपि नष्टमितीदृशम् ॥**
**लौकिकं वचनं सार्थं संपन्नं त्वत्प्रसादतः ॥ ८२ ॥**

**रा० टीका**—इष्टापत्तिरित्याशंक्याऽऽह-**वृद्धिमिति** ॥ ८२ ॥

**अ० टीका**—निरुक्तोपहासे लौकिकाभाणकमप्यनुकूलयति—**वृद्धिमिति** ॥८२॥

**अंतःकरणसंभिन्नबोधो जीवोऽपरोक्षताम् ॥**
**अर्हत्युपाधिसद्भावान्न तु ब्रह्मानुपाधितः ॥ ८३ ॥**

**रा० टीका**—ननु सोपाधिकत्वाज्जीवस्यापरोक्षत्वं युक्तम् । ब्रह्मणस्तु निरुपाधिकत्वात्तन्न युज्यत इति शंकते—**अंतःकरणेति** ॥ ८३ ॥

**अ० टीका**—तत्रापि पुनः पूर्ववादी शंकते-**अंतःकरणेति** । कार्योपाधिरयं जीव इति श्रुतेर्बुद्ध्यवच्छिन्नचैतन्यमित्यर्थः ॥ ८३ ॥

**रा० टीका**—ब्रह्मणो निरुपाधिकत्वमसिद्धमिति परिहरति—

**नैवं ब्रह्मत्वबोधस्य सोपाधिविषयत्वतः ॥**
**यावद्विदेहकैवल्यमुपाधेरनिवारणात् ॥ ८४ ॥**

**नैवं ब्रह्मेति** । जीवस्य ब्रह्मरूपताज्ञानं यदस्ति तस्य सोपाधिकवस्तुविषयत्वात्तद्विषयस्य ब्रह्मणोऽपि सोपाधिकत्वं ज्ञानस्य सोपाधिकविषयत्वं च ज्ञेयस्य सोपाधिकत्वमंतरेण न घटत इति भावः । तदेव कुत इत्यत आह—**यावदिति** ॥ ८४ ॥

**अ० टीका**—अथ सिद्धांती बोधविषयीभूतब्रह्मण्यनुपाधिकत्वहेतोः स्वरूपासिद्धिमभिदधन्समाधत्ते—**नैवमिति** । अत एवोक्त मयाऽपि **सिद्धांतरत्नशुद्धांते**—एतेन शबलज्ञानान्मुक्तिः शुद्धज्ञानान्मुक्तिरिति मतद्वयविरोधोऽपि प्रत्युक्तः । अद्वैतचिन्मात्रविषयकचरमचित्तवृत्तिरूपज्ञानप्रयुक्तविषयताशाबल्येऽपि तत्र तदितरदृश्यानास्कंदितत्वात् । न हि विशुद्धहीरकादिरत्नं पश्यतः परीक्षकस्य चक्षुःप्रतिबिंबनमंतरा तत्र तथात्वेन प्रमेति ॥ ८४ ॥

**रा० टीका**—ननु तर्हि जीवब्रह्मणोर्विलक्षणमुपाधिद्वयं वक्तव्यमित्याशंक्याऽऽह--

**अंतःकरणसाहित्यराहित्याभ्यां विशिष्यते ॥**
**उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा ॥ ८५ ॥**

**अंतःकरणेति** । जीवभावब्रह्मभावयोरंतःकरणसाहित्यराहित्ये एवोपाधी इत्यर्थः॥८५॥

**अ० टीका**—ननु यदि ब्रह्मत्वबोधः सोपाधिकविषय एव तर्हि—

" अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते ।
ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि "

इति वार्तिकविरोध इत्याशंक्य तत्तात्पर्यस्य त्वयैवाज्ञातत्वान्नैवमित्याह—**अंतःकरणेति** । एवं च द्वितीये वस्तुनि सत्यत्राद्वैतशास्त्रे ब्रह्मार्थो दुर्लभः स्यादिति वदतां श्रीमद्वार्तिकाचार्यचरणानां यावद्द्वैताभावावच्छिन्नचैतन्यत्वमेव ब्रह्मत्वमिति स्पष्टमेवेष्टमिति न तद्विरोधगंधोऽपीत्याकूतम् ॥ ८५ ॥

**रा० टीका**—नन्वंतःकरणसंबंधस्य भावरूपत्वादुपाधित्वमस्तु नाभावरूपस्य तद्राहित्यस्य तदुचितमित्याशंक्य यावत्कार्यमवस्थायिभेदहेतोरुपाधित इत्युक्तोपाधिलक्षणस्य साहित्यराहित्ययोरुभयोरपि सत्त्वादुचितमेवोपाधित्वमित्यभिप्रायेण परिहरति—

**यथा विधिरुपाधिः स्यात्प्रतिषेधस्तथा न किम् ॥**
**सुवर्णलोहभेदेन शृंखलात्वं न भिद्यते ॥ ८६ ॥**

**यथेति**। विधिर्भावरूपोंऽतःकरणसंबंधो यथोपाधिः स्यात्तथा प्रतिषेधोऽभावरूपोंऽतःकरणवियोगो न किमुपाधिर्न स्यात्किं स्यादेवेत्यर्थः। तथाऽपि भावाभावरूपत्वलक्षणमवांतरवैलक्षण्यं दृश्यत एवेत्याशंक्य तस्याकिंचित्करत्वेनानादरणीयत्वमित्यभिप्रेत्य दृष्टांतमाह—**सुवर्णेति**। पुरुषप्रचारनिरोधकत्वांशेऽनुपयुक्तं सुवर्णत्वलोहत्वादिवैलक्षण्यं यद्वदनादरणीयं तद्वदित्यर्थः ॥ ८६ ॥

**अ० टीका**—ननु भावपदार्थस्यैव स्फटिकादिसंनिहितकुंकुमादेर्लोके रक्तः स्फटिक इत्यादिभ्रमं प्रति दृष्टमुपाधित्वम्। तथा चोक्तमद्वैतसिद्धौ—अत एवाविद्यादिकं साक्षित्वादावुपाधिरिति सिद्धांतो वेदांतिनामिति। तथा च कथमंतःकरणोपलक्षितद्वैतराहित्यस्याभावरूपस्य ब्रह्मतां प्रत्युपाधित्वमित्याशंक्य समाधत्ते—**यथेति**। अत्र विधित्वं भावत्वमेव न तु लिङ्गादिघटितवाक्यप्रतिपाद्यत्वम्। एवं निषेधत्वमपि संसर्गाभावान्योन्याभावान्यतरत्वमेव न त्वनिष्टसाधनताबोधकवाक्यबोध्यत्वम्। एवं च यद्यप्यध्यस्तभावाभावावधिष्ठानैकस्वरूपकाविति मते प्रतिषेधस्यानुपाधित्वेऽपि जायतेऽस्तीत्यादियास्कवचनाद्विनाशोऽपि कश्चिद्भावविकार एवेति मते युक्तमेव तस्योपाधित्वमिति तत्त्वम्। एतदेवार्थांतरन्यासविशेषेण द्रढयति—**सुवर्णेति**। यद्वाऽयमुक्तार्थदाढ्यार्थं व्यतिरेकदृष्टांत एव बोध्यः ॥ ८६ ॥

**रा० टीका**—विधेरिव निषेधस्यापि ब्रह्मबोधोपायत्वेन ब्रह्मोपाधित्वं द्रढयितुं विधिनिषेधयोरुभयोरपि ब्रह्मबोधोपायत्वमाचार्यैर्निरूपितमिति दर्शयति—

**अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥**
**वेदांतानां प्रवृत्तिः स्याद्विधेत्याचार्यभाषितम् ॥ ८७ ॥**

**अतदिति**। तच्छब्देन ब्रह्माभिधीयते। अतच्छब्देन तदतिरिक्तमज्ञानादि नेति नेतीत्यादिव्यावृत्तिर्निरसनं न तदतत्तस्य प्रपंचस्य व्यावृत्तिर्निरसनं तदेव रूपमुपायस्तेन साक्षाद्विधिमुखेन च विधिर्विधानं साक्षाद्वाचकशब्दप्रयोगः सत्यं ज्ञानमनंतमित्येवमादिरूपस्तेन च विधिमुखेन तद्द्वारेणापीत्यर्थः। वेदांतानामुपनिषदां प्रवृत्तिः प्रवर्तनं प्रतिपादनं ब्रह्मणीति शेषः ॥८७॥

**अ० टीका**—ननु निषेधस्योपाधित्वमसांप्रदायिकमित्याशंक्य श्रीमद्भाष्यकारैरेव विधिनिषेधयोरुभयोरपि साम्येनैव ब्रह्मबोधोपायत्वस्य बृहद्वाक्यवृत्तावुक्तत्वान्मैवमिति समाधित्सुः पूर्वार्धं तत्रत्यमेव विलिख्य तच्छेषं पूरयति—**अतदित्यादिना**। एवं हि तत्र पूर्वोक्तग्रंथसंदर्भः—

"त्वमर्थमेवं निश्चित्य तदर्थं चिंतयेत्पुनः। अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेनच। निरस्ताशेषसंसारदोषोऽस्थूलादिलक्षणः। अदृश्यत्वादिगुणकः पराकृततमोमलः। निरस्तातिशयानंदः सत्यप्रज्ञानविग्रहः। सत्तास्वलक्षणः पूर्णः परमात्मेति गीयते" इत्यादिः।

तेनात्र निरस्तेति श्लोकेन शुक्तौ कल्पितं रजतमिव ब्रह्मणि कल्पितं यदतदनृतजडदुःखपरिच्छिन्नरूपं दृश्यं तस्य या व्यावृत्तिर्नेदं रजतं नात्र रजतमित्यादिवदस्थूलमनण्वित्यादिश्रुत्यादिभिर्बाध एव तद्रूपेण प्रकारेणेत्यर्थः । एवं निरस्तानिशयेत्याद्युत्तरश्लोके न तु को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनंदो न स्यादिति सत्यं ज्ञानमनंतं ब्रह्मेत्यादि श्रुतिबोधितो यः साक्षाद्विधिमुखलक्षणप्रकारः प्रत्यगद्वैतबोधोपायस्य तेनेति यावत् । वेदांतानामुपनिषदाम् । द्विधा निरुक्तरीत्या द्विप्रकारा । प्रवृत्तिः सकलद्विजराजाद्वैतब्रह्मजिज्ञासुप्रबोधाय श्रीमत्सद्गुरुद्वारोत्कंठेत्यर्थः । स्याद्भूयादित्युक्तप्रकारकम् । आचार्येति । आचार्याणां भगवत्पादाख्यश्रीजगद्गुरुणा भाषितं बृहद्वाक्यवृत्तावुक्तिजातमस्तीत्यार्थिकम् । तस्माद्विधिवन्निषेधस्यापि ब्रह्मबोधोपायत्वेनोपाधित्वं समानमेवेति भावः ॥ ८७ ॥

**रा० टीका**—ननु वेदांतानामतद्व्यावृत्त्या ब्रह्मबोधकत्वांगीकारेऽहंशब्दार्थस्य कूटस्थस्यापि त्यागप्रसंगादहं ब्रह्मास्मीति सामानाधिकरण्येन ज्ञानं नोदेतुमर्हतीति शंकते—

**अहमर्थपरित्यागादहं ब्रह्मेति धीः कुतः**
**नैवमंशस्य हि त्यागो भागलक्षणयोदितः ॥ ८८ ॥**

**अहमर्थेति** । अहंशब्दार्थस्य सर्वस्यात्यक्तत्वान्नैवमिति परिहरति—**नैवमिति** । हि यस्मात्कारणाद्भागलक्षणया जहदजहल्लक्षणयांऽशस्याहंशब्दार्थैकदेशस्य जडांशस्येरितो न कूटस्थस्य । अतोऽहं ब्रह्मास्मीति ज्ञानमुपपद्यत इत्यर्थः ॥ ८८ ॥

**अ० टीका**—ननु यद्येवं सिद्धांते वेदांतानामतद्वस्तुव्यावृत्त्यैवाद्वैतब्रह्मबोधकत्वं चेत्तर्ह्यहं पदार्थस्यावश्यं त्यागेऽहं ब्रह्मास्मीति सामानाधिकरण्येन कथं तत्त्वमस्यादिवाक्यविचारजन्योऽनुभवः स्यादिति शंकते—**अहमर्थेति** । पूर्वोक्तभागत्यागलक्षणांगीकारेणाहमर्थवाच्यांशीभूतपंचकोशविशिष्टचैतन्यस्यैव दृश्यानात्मत्वादिना मिथ्यात्वात्त्यागेऽपि दृङ्मात्रस्य तदुपलक्षितचैतन्यस्य तल्लक्ष्यार्थस्यात्यागेन तद्विस्मरणादिदं चोद्यमेवानुचितमित्याशयेन समाधत्ते—**नैवमिति** । अत एवोदितः प्रागनुपदमेवास्माभिर्हि यस्मादुपपादित इति भूतार्थकः प्रयोगः ॥ ८८ ॥

**अंतःकरणसंत्यागादवशिष्टे चिदात्मनि ॥**
**अहं ब्रह्मेति वाक्येन ब्रह्मत्वं साक्षिणीक्ष्यते ॥ ८९ ॥**

**रा० टीका**—अंशत्यागेन बोधनप्रकारमभिनीय दर्शयति—**अंतःकरणेति** ॥ ८९ ॥

**अ० टीका**—एवं च सविशेषणविधिनिषेधन्यायेनाहं पदवाच्यार्थगतविशेषणीभूतसाभासोपादानांतःकरणस्य श्रुतियुक्त्यनुभूतिपूर्वकविचारेण सम्यक्त्यागलक्षणबाधे सति बाधावधित्वेनावशिष्टे लक्ष्यार्थे साक्षित्वोपलक्षिते चिदात्मन्यहं ब्रह्मास्मीत्याद्यनुभववाक्येनाद्वैतब्रह्मत्वं विद्वद्भिरनुभूयत एव तस्याद्वैतब्रह्मत्वतिरोधानतद्भेदभानोपादानमूलाज्ञानध्वंसनद्वारैवाखंडब्रह्मविद्याख्यचरमवृत्त्येत्याह—**अंतःकरणेति** ॥ ८९ ॥

**रा० टीका**—ननु केवलस्य प्रत्यगात्मनः स्वप्रकाशत्वाद्बुद्धिवृत्तिविषयत्वं न घटत इत्याशंक्याऽऽह—

**स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत् ॥**
**फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥ ९० ॥**

**स्वप्रकाश इति** । अन्यवद्धटादिवदित्यर्थः । स्वप्रकाशोऽहमित्येवं बुद्धिवृत्तिसंभवादिति भावः । तर्ह्यपसिद्धांतापात इत्याशंक्य पूर्वाचार्यैरपि वृत्तिव्याप्यत्वस्यांगीकृतत्वान्नायमपसिद्धांत इति परिहरति—**फलव्याप्यत्वमिति** । फलं वृत्तिप्रतिबिंबितचिदाभासस्तद्व्याप्यत्वमेवास्य प्रत्यगात्मनो निराकृतं स्वस्यैव स्फुरणरूपत्वादिति भावः ॥ ९० ॥

**अ० टीका**—तदुपपादयति—**स्वप्रकाशोऽपीति** । अपिना तद्भाने वृत्त्यनुपयोगेऽपि तस्योक्तमूलाज्ञानकृताद्वैतानंदावरणविनिवारणार्थमेव तदुपयोग आवश्यक इति द्योत्यते । धीवृत्त्या विचारिततत्त्वमस्यादिमहावाक्यजन्यचरमचित्तवृत्त्येत्यर्थः । अन्यवत्साक्षिभास्यभिन्नघटपटादिवदित्येतत् । ननु यदि स्वप्रकाशोऽपि साक्षी प्रमाणवृत्त्या घटादिवद्व्याप्यते चेत्तर्हि तत्प्रतिफलितचिदाभासेनाप्यसौ व्याप्यतां तथा च तस्य तद्वदेव जडत्वापत्तिरित्यत्र प्राचीनाचार्यचरणसंमतिसूचनपूर्वकं समाधत्ते—**फलेति** । साक्षिलक्षणं ब्रह्मैव स्वप्रकाशत्वेन नित्यापरोक्षत्वादुपक्रांतत्वाच्चेदंशब्दार्थः । एवं चास्य प्रकृतस्य साक्षिलक्षणब्रह्मण इत्यर्थः । **शास्त्रकृद्भिः**-सूत्रादिकर्तृभिः प्राचीनाचार्यैरिति यावत् । फलव्याप्यत्वमेव चिद्विषयत्वमेव न तु—

> " मोहातीतो विशुद्धो मुनिभिरभिहितो मोहसंक्रांतमूर्तिः
> साक्षी स्वांते तदुत्थे प्रतिफलितवपुर्गीयतेऽसौ प्रमाता ।
> वृत्त्यारूढं प्रमाणं फलमथ धिषणावृत्तिमंव्याप्यचेत्यो-
> पाधिर्मोहोत्थशब्दप्रमुखविषयगः स्यात्प्रमेयः परात्मा " ।

इति **सांप्रदायिका**भिहितं प्रमाणजन्यबुद्धिवृत्त्यवच्छिन्नचैतन्यं विषयावच्छिन्नचैतन्येन सहैक्यं प्राप्तं सत्फलपदवाच्यमिति । तद्विषयत्वम् । तथात्वस्यायुक्तत्वात् । तथा हि । ब्रह्मण्युक्तलक्षणे निरुक्तरूपफलव्याप्तिर्नैव भवतीति वदन्प्रष्टव्यः किं यत्र यत्र फलव्याप्तिस्तत्र घटादाविव जडत्वमिति व्याप्त्या ब्रह्मणोऽपि जडत्वापत्तेस्तदनंगीकारः किं वा यत्र यत्र घटादाविव जडत्वं तत्र फलव्याप्यत्वमिति व्याप्त्या ब्रह्मणश्चित्त्वेन जडत्वाभावात्तदनंगीकार इति । नाऽऽद्यः । इष्टापत्तेः । नांत्यः । साक्षिभास्येष्वविद्यादिषु व्यभिचारात् । तत्र हि चिद्भिन्नत्वादिना जडत्वसत्त्वेऽपि फलव्याप्यत्वाभावस्य सर्वसंमतत्वाच्च । प्रपंचितं चैतद्वेदांतकल्पलतिकायां मधुसूदनसरस्वतीभिः—अस्तु वा ब्रह्मण्यपि कल्पितविषयता । न कर्मत्वेन जडत्वापात इतिवाच्यम् । स्वसमानसत्ताकविषयता एव कर्मत्वापादकत्वात् । सा च घटादौ संभवति । उभयोरपि व्यावहारिकत्वेन तुल्यत्वात् । ब्रह्मणि तु परमार्थसतिव्यावहारिक्यपि विषयता परमार्थसत्त्वाभावेन न समानेति किमनुपपन्नम् । एतेन तं त्वौपनिषदमिति श्रुतिरप्यनुगृहीता भवति । अथवा चैतन्यविषयतैव जडत्वापादिका न तु वृत्तिविषयताऽपि ॥ यतो वाचो निवर्तंते न चक्षुषा गृह्यते नापि वाचा तत्त्वौपनिषदं पुरुषं पृच्छामि । नावेदविन्मनुते तं बृहंतम् । वेदेनैव यद्वेदितव्यमित्याद्युभयविधश्रुत्यनुसारेण कल्पनात् । यत्तु फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिते युक्तत्वात्फलव्याप्यत्वमेव जडत्वापादकमित्याहुस्तत्र प्रमाणजन्यांतःकरणवृत्त्यभिव्यक्तचैतन्यस्यैव शास्त्रे फलत्वव्यपदेशात्तद्व्याप्यत्वस्यैव जडत्वापादकत्वे ब्रह्मण इव साक्षिभास्यानामपि जडत्वं न स्यात् । चैतन्यकर्मता तु चिद्भिन्नत्वावच्छेदेन सर्वत्रैवेति सैव जडत्वप्रयोजिका । उदाहृतकारिकायामपि चैतन्यमात्रपरमेव फलपदमिति द्रष्टव्यम् । **ननु वृत्तिविषयत्वेन तदुपरक्तचैतन्यविषयत्वमपि नियतम् । वृत्तेश्चिदाकारगर्भिण्या एवोत्पत्तेः ।**

तदुक्तम्—" वियद्वस्तु स्वभावानुरोधादेव न कारकात् ।
वियत्संपूर्णतोत्पत्तौ कुंभस्येव दृशा धियाम् ।
घटदुःखादिरूपत्वं धियो धर्मादिहेतुतः ।
स्वतःसिद्धार्थसंबोधव्याप्तिर्वस्त्वनुरोधतः " इति ।

तथा चैतन्यविषयत्वेन जडत्वं दुर्वारमेव । न वृत्त्युपरक्तचैतन्यस्य स्वयमेव चैतन्यरूपत्वान्न तद्व्याप्यता । फले फलांतरानुपपत्तेः । तद्भिन्नानां तु स्वतो भानरहितानां तद्व्याप्तिरवश्यमाश्रयणीयेति न कोऽपि दोषः ।

तदुक्तम्—" परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणतः " इति ।

नन्वत्रैतैर्निगदितकारिकागतफलपदस्य चैतन्यमात्रपरत्वेन व्याचक्षाणैस्तत्कर्तॄणां तदुदाहर्तॄणां च मतं खंडितमिति प्रतीयत इति चेन्नूनं भ्रांतोऽसि । एतैस्तत्तात्पर्यस्यैव प्रत्युत सयुक्तिससंमति च विवृतत्वात् । अत एव विशिष्टं शुद्धान्नातिरिच्यत इति पक्षमुररीकृत्यैवात्र परागर्थप्रमेयेष्वित्यादिवार्तिकस्याप्युदाहृतत्वाच्च । न च तदुक्तखंडनं क्व प्रसरतीति वाच्यम् । निरुक्तकारिकागतमेवकारमितरयोगव्यवच्छेदार्थकत्वेन वृत्तिव्याप्तिस्वीकारपरमेऽपि शास्त्रकृद्भिः फलव्याप्यत्वमेवास्य जडत्वापादकत्वान्निवारितामिति साध्याहारं व्याचक्षाणपरतायाः फलव्याप्यत्वमेव जडत्वापादकमित्याहुरिति कंठत एवोक्तत्वात् । तथैवोक्तं **श्रीमद्भाष्यकारचरणैः** सदाचारप्रकरणे—

" वृत्तिव्याप्यत्वमेवास्तु फलव्याप्तिः कथं भवेत् ।
स्वप्रकाशैकरूपत्वात्सिद्धत्वाच्च परात्मनः " इति ॥ ९० ॥

**रा० टीका**—आत्मनि फलव्याप्त्यभावं दर्शयितुमनात्मनो वृत्त्या फलेन च व्याप्यत्वं दर्शयति—

**बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ॥**
**तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ ९१ ॥**

**बुद्धितदिति** । उभयव्याप्तेः प्रयोजनमाह—**तत्रेति** । तत्र तयोर्बुद्धिचिदाभासयोर्मध्ये धिया बुद्धिवृत्त्या प्रमाणभूतयाऽज्ञानं नश्यति ज्ञानाज्ञानयोर्विरोधात् । आभासेन चिदाभासेन घटः स्फुरेज्जडत्वेन स्वतः स्फुरणायोगादिति भावः ॥ ९१ ॥

**अ० टीका**—ननु माऽस्त्वात्मनि फलव्याप्तिः परं त्वनात्मन्येवाऽऽदावेकावृत्तिव्याप्तिरपरा फलव्याप्तिश्चेति द्वयं क्वोपलभ्यते केवलमिंद्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षं परामर्शजन्यं ज्ञानमनुमितिरित्यादिकमेव सर्वप्रमात्मकं ज्ञानमनुभूयत इत्याशंक्य **तार्किकमते** तथात्वेऽपि तस्य सामान्यत्वात्स्वमतानुसारेण सूक्ष्मतरविचारे तत्स्फुटमेवेति मन्वानस्तद्विशदयति—**बुद्धीति** । बुद्धिवृत्तेरुत्पत्त्यवच्छेदेनैव साभासत्वमिति तु " वियद्वस्तु स्वभावानुरोधादेव न कारकात् " इत्यादिवा**र्तिकवचना**दनुपदमेव सूचितमिति घटज्ञाने तदुभयात्मकत्वे यद्यपि नैव वैमत्यमथापि तद्दाढ्याय तत्र कार्यभेदेन तल्लिंगकमनुमानमपि व्यनक्ति—**तत्रेति** । घटाज्ञाननाशस्तद्विषयकबुद्धिमात्रजन्यः । घटाज्ञाननाशत्वात् । व्यतिरेके पटाज्ञाननाशवदिति । एवं घटस्फूर्तिः ।

घटव्यापकचिन्मात्रजन्या । घटस्फूर्तित्वात् । व्यतिरेके पटस्फूर्तिवदित्यपि बोध्यम् । तस्मान्नैव घटादिप्रमायां वृत्तिव्याप्त्याद्युभयरूपत्वे विवादगंधोऽपीति बोध्यम् ॥ ९१ ॥

**रा० टीका**—इदानीमात्मनि ततो वैलक्षण्यं दर्शयति—

**ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥**
**स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते ॥ ९२ ॥**

**ब्रह्मणीति** । प्रत्यग्ब्रह्मणोरेकत्वस्याज्ञानेनाऽऽवृतत्वात्तस्याज्ञानस्य निवृत्तये वाक्यजन्ययाऽहं ब्रह्मास्मीत्येवमाकारया धीवृत्त्या व्याप्तिरपेक्ष्यते । स्वस्यैव स्फुरणरूपत्वात्तत्स्फुरणाय चिदाभासो नापेक्ष्यतेऽतो युज्यमानोऽपि चिदाभासो नोपयुज्यत इत्यर्थः ॥ ९२ ॥

**अ० टीका**—ननु भवत्वेवं घटादिप्रमायामथाऽपि ब्रह्मप्रमायां प्रमात्वसाम्येऽपि किमिति तद्वदेव नोभयात्मत्वमंगीक्रियत इति चेत्प्रयोजनाभावादेवेत्याह—**ब्रह्मणीति** ॥ ९२ ॥

**रा० टीका**—उक्तमर्थं दृष्टांतप्रदर्शनेन विशदयति—

**चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने यथा ॥**
**न दीपदर्शने किंतु चक्षुरेकमपेक्ष्यते ॥ ९३ ॥**

**चक्षुरिति** । अंधकारावृतघटादिदर्शने चक्षुर्दीपावुभावप्यपेक्ष्येते । दीपप्रदर्शने तु तथा न । किं त्वेकं चक्षुरेवापेक्ष्यते यथा तथा ब्रह्मण्यज्ञाननाशायेति पूर्वेण संबंधः ॥ ९३ ॥

**अ० टीका**—उक्तमेवार्थं व्यावहारिकस्वप्रकाशदृष्टांतेन स्पष्टयति—**चक्षुर्दीपाविति** । उपलक्षणमिदं सूर्यादेरपि । एवं च घटादेर्दर्शने चक्षुर्दीपावुभावपि देवदत्तेनापेक्ष्येते दीपदर्शने तु नैव तावपेक्ष्येते किं त्वेकं चक्षुरेव यथाऽपेक्ष्यते तद्वद्ब्रह्मण्यज्ञाननाशायेत्यादिपूर्वपद्येन संबंधो बोध्यः ॥ ९३ ॥

**रा० टीका**—ननु बुद्धितद्वृत्तीनां चिदाभासवैशिष्ट्यस्वाभाव्याद्घटादिष्विव ब्रह्मण्यपि फलव्याप्तिर्बलाद्भवेदित्याशंक्याऽऽह—

**स्थितोऽप्यसौ चिदाभासो ब्रह्मण्येकीभवेत्परम् ॥**
**न तु ब्रह्मण्यतिशयं फलं कुर्याद्घटादिवत् ॥ ९४ ॥**

**स्थितोऽपीति** । यद्यपि घटाद्याकारवृत्तिवद्ब्रह्मगोचरवृत्तावपि चिदाभासोऽस्ति तथाऽपि नासौ ब्रह्मणो भेदेन भासते किंतु प्रचंडातपमध्यवर्तिप्रदीपप्रभावत्तेनैकीभूत इव भवति । अतः स्फुरणलक्षणातिशयजनको न ब्रह्मणीत्यर्थः ॥ ९४ ॥

**अ० टीका**—नन्वेवमपि वियद्वस्तुस्वभावानुरोधादेवेत्यादिसमुदाहृतवार्तिकोक्तयुक्त्या घटादिवदद्वैतब्रह्माकारवृत्तावपि चिदाभाससत्वस्वाभाव्यात्तत्रापि फलव्याप्तिर्दुर्वारैवेत्यत्राऽऽह—**स्थितोऽपीति** । आदर्शप्रतिफलितसूर्याभासः स्वाभिमुख्ये सति गृहगतघटादिकं प्रकाशयन्नपि सूर्यैकाभिमुख्ये सति तेन साकमैक्यमेव प्राप्नोति न तु तत्र तृणमात्रमप्यतिशयं यथा तनोति तथा ब्रह्माकारबुद्धिवृत्तावपि स्वाभाव्याद्विद्यमानोऽपि चिदाभासो ब्रह्मैक्यमेव प्राप्नोति न तु तत्राणुतुल्यमपि कंचिद्धर्मं विधत्त इति ध्येयम् ॥ ९४ ॥

**रा० टीका**—ननु ब्रह्मणि फलव्याप्तिर्नास्ति वृत्तिव्याप्तिस्तु विद्यत इत्युक्तं तत्र किं प्रमाणमित्याशंक्य आगमः प्रमाणमित्याह—

**अप्रमेयमनादिं चेत्यत्र श्रुत्येदमीरितम् ॥**
**मनसैवेदमाप्तव्यमिति धीव्याप्यता श्रुता ॥ ९५ ॥**

**अप्रमेयमिति** । ' निर्विकल्पमनंतं च हेतुदृष्टांतवर्जितम् । अप्रमेयमनादिं च यज्ज्ञात्वा मुच्यते बुधः ' इत्यत्रास्मिन्मंत्रे श्रुत्याऽमृतबिंदूपनिषदाऽप्रमेयशब्देनेदं फलव्याप्तिराहित्यमुक्तम् । 'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन' इति **कठवल्ल्यां** धीव्याप्यता श्रुता । वृत्तिव्याप्यत्वं श्रुतमित्यर्थः ॥ ९५ ॥

**अ० टीका**—एवं चाप्रमेयमनादिं चेत्यादिमनसैवेदमाप्तव्यमित्यादि च परस्परविरुद्धश्रुतिद्वयं क्रमात्फलव्याप्त्यभाववृत्तिव्याप्तिसद्भावाभिप्रायेणैव संगतमित्याह—**अप्रमेयमिति** ॥ ९५ ॥

**रा० टीका**—' आत्मानं चेद्विजानीयात् ' इति मंत्रेणापरोक्षज्ञानं शोकनिवृत्त्याख्यं जीवगतमवस्थाद्वयमभिधीयत इत्युक्तम् । अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे अवस्थे जीवगे ब्रूत । आत्मानं चेदिति श्रुतिरित्यनेन श्लोकेन तत्र कियतांऽशेनापरोक्षज्ञानमुच्यत इत्याकांक्षायामाह—

**आत्मानं चेद्विजानीयादयमस्मीति वाक्यतः ॥**
**ब्रह्मात्मव्यक्तिमुल्लिख्य यो बोधः सोऽभिधीयते ॥ ९६ ॥**

**आत्मानमिति** । ब्रह्मात्मव्यक्तिं सत्यादिलक्षणब्रह्माभिन्नप्रत्यगात्मस्वरूपमुल्लिख्य विषयीकृत्य यो बोधो जायते ब्रह्माहमस्मीति सोऽभिधीयतेऽनेन वाक्येनेत्यर्थः ॥ ९६ ॥

**अ० टीका**—ननु भवत्वेवमथापि प्रकृतप्रकरणारंभे प्रतिज्ञातश्रुतिविशेषव्याख्याने किमागतमित्यपेक्षायामपरोक्षज्ञानमेव तत्पूर्वार्धार्थ एतावता ग्रंथसंदर्भेणैतावन्मात्रं शब्दापरोक्षवादस्यैव सिद्धांतत्वेन निरणायीत्याह—**आत्मानं चेदिति** । इतिशब्दः प्रतीकसमाप्त्यर्थः । वाक्यतो विचारिततत्त्वमस्यादिमहावाक्यात्सकाशादित्यर्थः ॥ ९६ ॥

**रा० टीका**—ननु तर्हि पूर्वोक्तरीत्या सकृद्वाक्यविचारादेवापरोक्षज्ञानसिद्धेरावृत्तिरसकृदुपदेशादित्यादौ विहितं श्रवणाद्यावर्तनमननुष्ठेयं स्यादित्याशंक्य ज्ञानदार्ढ्याय तदावर्तनानुष्ठानस्याऽऽचार्यैरभिहितत्वादनुष्ठेयमेवेत्याह—

**अस्तु बोधोऽपरोक्षोऽत्र महावाक्यात्तथाऽप्यसौ ॥**
**न दृढः श्रवणादीनामाचार्यैः पुनरीरणात् ॥ ९७ ॥**

**अस्तु बोध इति** । अत्र ब्रह्मात्मविषये महावाक्यात्सकृच्छ्रुताद्विचारसहितादपरोक्षबोधोऽस्तु । भवत्वेवं तथाऽपि नासौ दृढोऽतः श्रवणाद्यावर्तनीयं श्रीमच्छंकराचार्यैः पुनर्वाक्यार्थज्ञानोत्पत्त्यनंतरमपि श्रवणाद्यावर्तनाभिधानादित्यर्थः । ज्ञानदार्ढ्यायेत्येतदर्थाल्लभ्यते ॥ ९७ ॥

**अ० टीका**—तत्रापि शंकते—**अस्त्विति** । ननु पदतदर्थगृहीतशक्तिकस्य देवदत्तस्याकांक्षादिविशिष्टादाप्तवाक्याज्जायमानः शाब्दबोधः प्रमात्वेन दृढ एव समुदेति दशमस्त्वमसि कौंतेयस्त्वमसीत्यादिवदतः क्व तत्र दृढत्वापेक्षेत्यत्राऽऽह—**श्रवणादीनामित्यादिशेषेण** ॥ ९७ ॥

**अहं ब्रह्मेतिवाक्यार्थबोधो यावद्दृढीभवेत् ॥**
**शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ९८ ॥**

**रा० टीका**—आचार्यैः केन वाक्येनाभिहितमित्याशंक्य तद्वाक्यं पठति—**अहं-ब्रह्मेति** ॥ ९८ ॥

**अ० टीका**—ननु किं तदाचार्यवचनमित्यपेक्षायां बृहद्वाक्यवृत्तिस्थं तद्वाक्यमेव पठति–**अहं ब्रह्मेतीति** । इतिशब्दोऽयं वाक्यार्थबोधेन सहैवान्वेति न तु वाक्येन । अन्यथाऽहं ब्रह्मास्मीति वाक्यप्रतीकग्रहेऽपि तत्त्वमस्यादिवाक्यसंग्रहाभावापत्तेरित्याकूतम् । उदरंभर्यभ्यासव्युदासाय–**शमेति** । आदिना मननादि ॥ ९८ ॥

**रा० टीका**—ननु वाक्यप्रमाणजनितज्ञानस्यादार्ढ्यं कुत इत्याशंक्याऽऽह—

**बाढं संति ह्यदार्ढ्यस्य हेतवः श्रुत्यनेकता ॥**
**असंभाव्यत्वमर्थस्य विपरीता च भावना ॥ ९९ ॥**

**बाढमिति** । हि यस्मात्कारणाच्छ्रुत्यनेकता श्रुतीनां नानात्वमेको हेतुः । अर्थस्याप्यखंडैकरसस्याद्वितीयब्रह्मरूपस्यालौकिकत्वेनासंभावितत्वमपरः । विपरीतभावना च पुनः कर्तृत्वाभिमानरूपस्तृतीय इत्येवंविधा दार्ढ्यस्य हेतवो बाढं संति सर्वथा विद्यंतेऽतोऽपरोक्षानुभवदार्ढ्याय श्रवणादिकमावर्तनीयमिति भावः ॥ ९९ ॥

**अ० टीका**—नन्वाचार्यैरपि सति वाक्यात्प्रमारूपे शाब्दबोधे समानविषयकाविद्याध्वंसके पुनस्तद्दार्ढ्यार्थं निरुक्तरीत्या श्रवणाद्यभ्यासविधानं किमिति कृतं किमत्रादार्ढ्यकारणमित्याशंक्य समाधत्ते–**बाढमिति** । तदुक्तं **सर्वज्ञात्ममुनीश्वरचरणैः—**

"पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा ।
न फलाय नर्जुविषया भवति श्रुतिसंभवाऽपि तु तथाऽऽत्मनि धीः ॥
पुरुषापराधविगमे तु पुनः प्रतिबंधकव्युदसनात्सफला ।
मणिमंत्रयोरपगमे तु यथा सति पावकाद्भवति धूमलता" ॥

इत्यन्वयव्यतिरेकाभ्यामपि । एवं चात्रोक्तप्रमायामदार्ढ्यप्रयोजकाः श्रुत्यनेकतेत्यादिना क्रमात्प्रमाणासंभावनाप्रमेयासंभावनासाधनविपरीतभावना चकारात्फलविपरीतभावना चेति । चत्वारः प्रतिबंधाश्चतुर्लक्षण्याख्योत्तरमीमांसायाः श्रोत्रियब्रह्मनिष्ठाचार्यचरणानुग्रहपरिशीलितैः **श्रीमद्भगवत्पादभाष्यादि**विवृतैरेव समन्वयाविरोधसाधनफलाभिधैश्चतुर्भिरध्यायैरत्र श्रवणमनननिदिध्यासनसमाधानविषयीकृतैर्निरसनीयाः सूच्यंते ॥ ९९ ॥

**रा० टीका**—एवं त्रिविधानदार्ढ्यहेतूननुपन्यस्य श्रुतिनानात्वप्रयुक्ता दार्ढ्यनिवृत्तये श्रवणावृत्तिः कार्येत्याह—

**शाखाभेदात्कामभेदाच्छ्रुतं कर्मान्यथान्यथा ॥**
**एवमत्रापि मा शंकीत्यतः श्रवणमाचरेत् ॥ १०० ॥**

**शाखेति** । यथा शाखाभेदात्कर्मभेदः श्रूयते 'यदृचैव हौत्रं क्रियते यजुषाऽध्वर्यवं साम्नोद्गीथम्' इति । यथा वा 'कामभेदात्कारीर्या वृष्टिकामो यजेत शतकृष्णलमायुष्कामः'

इत्यादिकर्मभेदः श्रुतः । एवमुपनिषत्स्वपि प्रतिपाद्यतत्त्वस्य भेदशंकायां तन्निवारणाय श्रवणं पुनः पुनः कर्तव्यमित्यर्थः ॥ १०० ॥

**अ० टीका**—तत्र श्रुत्यनेकत्वप्रयुक्तप्रमाणासंभावनाभंगार्थं श्रवणमेव कर्तव्यमिति पूर्वतंत्रीयव्यतिरेकदृष्टांतेन विधत्ते—**शाखाभेदादिति** । 'यद्वचैव हौत्रं क्रियते यजुषाऽध्वर्यवं साम्नोद्गीथम्' इति शाखाभेदात्कर्मभेद आम्नायते । 'कारीर्या वृष्टिकामो यजेत चित्रया पशुकामः' इत्यादिः कामभेदात्सः । एवं पूर्वकांडवदत्रापि ब्रह्मकांडेऽपीत्यर्थः । ब्रह्मभेद इत्यार्थिकम् । **मेत्यादि** । ब्रह्मभेदविषयकशंका नैव कर्तव्येत्यतः श्रवणमाचरेन्मुमुक्षुरिति शेषः ॥ १०० ॥

**रा० टीका**—किं तच्छ्रवणमित्याकांक्षायां तल्लक्षणमाह—

**वेदांतानामशेषाणामादिमध्यावसानतः ॥**
**ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत् ॥ १ ॥**

**वेदांतानामिति** । सर्वासामप्युपनिषदामुपक्रमोपसंहारादिपर्यालोचनायां ब्रह्मरूपे प्रत्यगात्मन्येव तात्पर्यम् । इदं पारंपर्येण पर्यवसानमित्येवंरूपो निश्चयः श्रवणमित्यर्थः ॥ १ ॥

**अ० टीका**—भवत्वेवमथापि किं श्रवणलक्षणमित्याकांक्षायां तत्संक्षिपति—**वेदांतानामिति** ॥ १०१ ॥

**रा० टीका**—एवंविधं श्रवणं कुत्र निरूपितमित्यत आह—

**समन्वयाध्याय एतत्सूक्तं धीस्वास्थ्यकारिभिः ॥**
**तर्कैः संभावनाऽर्थस्य द्वितीयाध्याय ईरिता ॥ २ ॥**

**समन्वयाध्याय इति** । एतच्छ्रवणं समन्वयाध्याये सुष्टूक्तं व्यासादिभिरिति शेषः । अर्थासंभावनानिवृत्तिहेतुर्मननं तु द्वितीयाध्याये निरूपितमित्याह—**धीस्वास्थ्यति** । प्रमेयगतानुपपत्तिपरिहारद्वारा बुद्धिस्वास्थ्यकारिभिस्तर्कैर्युक्तिशब्दाभिधेयैरर्थस्य संभावना । संभावितत्वानुसंधानं मननं द्वितीयाध्याये निरूपितमित्यर्थः ॥ २ ॥

**अ० टीका**—नन्वसर्वज्ञदुर्ज्ञेयं तत्तात्पर्यमुपक्रमादिनेत्यत आह—**समन्वयेति** । एतदुक्तलक्षणं तात्पर्यम् । सूक्तं **श्रीमद्भिर्बादरायणाचार्यै**रित्यार्थिकम् । एवं प्रमेयासंभावनानिवृत्तिफलकं मननमपि तत्रैव **ब्रह्मसूत्रे द्वितीयाध्याये**ऽविरोधाभिध उक्तमित्याह—**धीत्यादिना** ॥ १०२ ॥

**बहुजन्मदृढाभ्यासाद्देहादिष्वात्मधीः क्षणात् ॥**
**पुनः पुनरुदेत्येवं जगत्सत्यत्वधीरपि ॥ ३ ॥**

**रा० टीका**—इदानीं विपरीतभावनां तन्निवृत्त्युपायं च दर्शयति—**बहुजन्मेति** ॥३॥

**अ० टीका**—ननु भवत्वेवमथापि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः' इति श्रुतिविहितनिदिध्यासननिवर्त्या काऽसौ प्रागुक्ताद्विविधविपरीतभावनैवेत्याशंक्य समाधत्ते—**बहुजन्मेत्यादिसपादश्लोकेन** । एवं चात्राद्यादेहादिरेवात्मपदार्थः स्यान्न तु तत्साक्षित्वोपलक्षितः शुद्धचिन्मात्रत्वेन चिंतित इति साधनविपरीतभावना तथा द्वितीया तु द्वैतमेव सत्यं न तु तत्त्वज्ञानसाध्याऽविद्यानिवृत्त्युपलक्षितद्वैतमिथ्यात्वफलीभूतस्वप्रकाशब्रह्मानंदलक्षणकैवल्यमिति फलविपरीतभावनेति विभागः ॥ १०३ ॥

**विपरीता भावनेयमैकाग्र्यात्सा निवर्तते ॥**
**तत्त्वोपदेशात्प्रागेव भवत्येतदुपासनात् ॥ ४ ॥**

**रा० टीका**—**विपरीतेति** । विपरीतभावनानिवर्तकं यदैकाग्र्यं तत्कुतो जायत इत्याशंक्याऽऽह—**तत्त्वेति** । एतदैकाग्र्यं ब्रह्मोपदेशात्प्रागेव सगुणब्रह्मोपासनाद्भवति भवेदित्यर्थः ॥ ४ ॥

**अ० टीका**—ननु कथमस्यानिवृत्तिरित्यत आह—**ऐकाग्र्यादिति** । द्वितीयपादेन उत्तरमीमांसायास्तृतीयचतुर्थाध्यायोक्तनिरुक्तासिद्धांतानुसंधानजन्यचित्तवृत्तिनिरोधादित्यर्थः । ननूक्तलक्षणमैकाग्र्यं तु "शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वा" इति "नाविरतो दुश्चरितान्नाशांतो नासमाहितः । नाशांतमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्" इति चान्वयव्यतिरेकश्रुतिभ्यां तवानुभवात्प्रागेवेदमधिकारिविशेषणत्वेन विहितनिरोधसमाधिना सिद्धमेवेति चेद्गूढाभिसंधिरंगीकरोति—**तत्त्वेति** । तत्र हेतुमाह—**उपासनादिति** । सगुणनिर्गुणब्रह्मप्रतीकाहंग्रहान्यतमोपास्तिपदवाच्यनिरंतरतदेकाकारचित्तवृत्तिसंपादनलक्षणभावनाभृरितराभ्यासादित्यर्थः ॥ १०४॥

**रा० टीका**—नन्वेतत्कुतोऽवगतमित्याशंक्योपासनाविचारस्य वेदांतशास्त्रे कृतत्वादित्याह—

**उपास्तयोऽत एवात्र ब्रह्मशास्त्रेऽपि चिंतिताः ॥**
**प्रागनभ्यासिनः पश्चाद्ब्रह्माभ्यासेन तद्भवेत् ॥ १०५ ॥**

**उपास्तय** इति । अकृतोपास्तिकस्य कुतस्तज्जन्मेत्यत आह—**प्रागिति** ॥ १०५ ॥

**अ० टीका**—तत्रोपपत्तिमाह—**उपास्तय इति** । अत्र प्रकृतोत्तरमीमांसाख्ये । चिंतितास्तृतीयाध्यायादौ विचारिता इति यावत् । तमेव गूढाभिसंधिमुद्घाटयति—**प्रागिति** । तदुक्तं **जीवन्मुक्तिविवेकेऽत** एव—"विद्याधिकारी द्विविधः । कृतोपास्तिरकृतोपास्तिश्चेति । तत्रोपास्यसाक्षात्कारपर्यंतामुपास्तिं कृत्वा यदि ज्ञाने प्रवर्तते तदा वासनाक्षयमनोनाशयोर्दृढतत्त्वोनज्ञानादूर्ध्वं विद्वत्संन्यासजीवन्मुक्ती स्वत एव सिद्ध्यतः । तादृश एव शास्त्राभिमतो मुख्योऽधिकारी । ततस्तं प्रति शास्त्रेषु सहोपन्यासात्स्वरूपेण विविक्तावपि विद्वत्संन्यासाविविदिषासंन्यासौ संकीर्णाविव प्रतिभासेते । इदानींतनास्तु प्रायेणाकृतोपास्तय एवौत्सुक्यमात्रात्सहसा विद्यायां प्रवर्तंते । वासनाक्षयमनोनाशौ च तात्कालिकौ संपादयंति । तावता श्रवणमननिदिध्यासनानि निष्पाद्यंते तैश्च दृढाभ्यस्तैरज्ञानसंशयविपर्ययनिरासात्तत्त्वज्ञानं सम्यगुदेति । तस्य बाधकप्रमाणाभावान्निवृत्तायामविद्यायां पुनरुत्पत्तिकारणाभावाच्च नास्ति तस्य शैथिल्यम् । वासनाक्षयमनोनाशौ तु दृढाभ्यासाभावायोगप्रदेन प्रारब्धेन तदा तदा बाध्यमानत्वाच्च सवातप्रदेशदीपवत्सहसा निवर्तेते । तथा च **वसिष्ठः**—

" पूर्वेभ्यस्तु प्रयत्नेभ्यो विषमोऽयं हि संमतः । दुःसाध्यो वासनात्यागः सुमेरून्मूलनादपि " । **अर्जुनोऽपि**—" चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् । तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करमिति " ।

तस्मादिदानींतनानां विद्वत्संन्यासिनां ज्ञानस्यानुवृत्तिमात्रं वासनाक्षयमनोनाशौ तु प्रयत्नसाध्याविति सिद्धमिति " । नन्वत्राकृतोपास्तिनाऽप्यधिकारिणा तावद्दृढाभ्यस्तैः श्रवणमननिदिध्यासनैः क्रमादज्ञानसंशयविपर्ययनिरासात्तत्त्वज्ञानं सम्यगुदेति यद्यप्यथापि वासनाक्षय-

मनोनाशयोर्दृढाभ्यासाभावात्तावेव प्रयत्नसाध्यावित्युक्तम् । त्वया त्विदं विपरीतभावनानिवर्तकैकाग्र्याख्यनिदिध्यासनं प्रकृत्य तत्प्रकमैवाग्र्यं तत्त्वोपदेशात्प्रागेव यद्यप्युपासनाद्भवत्यथापि प्रागुपासनाभ्यासाभावे ब्रह्माभ्यासेन तदैकाग्र्यं स्यादित्यत्र संमतित्वेन वाक्यजातमुदाहृतमत किं केन संगतमिति चेन्न । भावानवबोधात् । तथा हि । अत्र तत्त्वोपदेशात्प्रागेव भवत्येतदुपासनादित्यारभ्य प्रागनभ्यासिनः पश्चाद्ब्रह्माभ्यासेन तद्भवेदित्यंतग्रंथेन ब्रह्मोपदेशात्पूर्वं कृतोपास्तेश्चित्तैकाग्र्यं निसर्गसिद्धमेवेति ब्रह्मविद्यास्वोदयमात्रादेव दृढीभवत्यकृतोपास्तेस्त्वसावदृढेति तद्दार्ढ्यार्थं श्रवणमननाभ्यामसंभावनां निर्मूल्य विपरीतभावनाभंगार्थं ब्रह्माभ्यासेनैकाग्र्यं निदिध्यासनाख्येन साधनीयमित्युक्तं तत्तु समुदाहृतजीवन्मुक्तिविवेकेऽपि समानमेवेति किमत्र वैसांगत्यम् । यत्तु तत्र निवृत्ताविद्यस्यापि जीवन्मुक्त्यर्थं वासनाक्षयादिसाध्यमुक्तमिह त्वतथाविधस्यैव विपरीतभावनानिवृत्त्यर्थं ब्रह्माभ्यासेनैकाग्र्यं साध्यमित्युक्तमित्यवांतरभेदजातं तत्तु न प्रोक्तप्रधानसंमतिभंजकमिति दिक् ॥ १०५ ॥

**तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनम् ॥**
**एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ ६ ॥**

**रा० टीका**—ब्रह्माभ्यासश्च कीदृश इत्याकांक्षायामाह—**तच्चिंतनमिति** ॥ ६ ॥

**अ० टीका**—प्रतिज्ञातब्रह्माभ्यासमेव व्युत्पादयति—**तच्चिंतनमिति** । एकांत इत्यार्थिकम् । एवं स्वन्यूनसमानसतीर्थ्यसांनिध्ययोः क्रमात्तत्कथनादि । जाग्रति तदन्याभावार्थमेतदेकेति ॥ १०६ ॥

**रा० टीका**—एतदेकपरत्वं विशदयितुं श्रुतिमाह—

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥**
**नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥ ७ ॥**

**तमेवेति** । धीरो ब्रह्मचर्यादिसाधनसंपन्नो ब्राह्मणो ब्रह्म भवितुमिच्छुर्मुमुक्षुस्तमेव प्रत्यग्रूपं परमात्मानमेव विज्ञाय संशयाद्यभावो यथा भवति तथा ज्ञात्वा प्रज्ञां ब्रह्मात्मैकत्वज्ञानसंततिरूपमैकाग्र्यं कुर्वीत संपादयेत । अनात्मगोचरान्बहूञ्शब्दान्नानुध्यायान्नानुस्मरेत् । ध्यानेनाभिधानमप्युपलक्ष्यते । नाभिदध्याच्चान्यथा शब्दध्यानेन वाग्विग्लापनानुपपत्तेः । कुत इत्यत आह—**वाच इति** । हि यस्मात्तदभिधानम् । अनेन स्मरणमप्युपलक्ष्यते । वाच इति मनसोऽप्युपलक्षणम् । विग्लापनं विग्लापयतीति विग्लापनं श्रमहेतुः । अयमभिप्रायः । इतरशब्दानुसंधाने मनसः श्रमो भवति तदभिधाने तु वाच इति ॥ ७ ॥

**अ० टीका**—उक्तलक्षणब्रह्माभ्यासविधाने श्रुतिं प्रमाणयति—**तमेवेति । धीरो** ब्रह्मचर्यादिमान् । तमेवाद्वैतात्मानमेव विज्ञाय निःसंशयमपरोक्षीकृत्येत्यर्थः । ब्राह्मण इति भविष्यदावश्यकब्रह्मनिष्ठाभिप्रायम् । तथा च काण्वैराम्नायते—"पांडित्यं निर्विद्य बाल्येन तिष्ठासेत्पांडित्यं च बाल्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति । श्रुत्यर्थस्तूक्तोऽनुभूतिप्रकाशे **श्रीमद्विद्यारण्यचरणैः—**

"पांडित्यबाल्यमौनानि श्रवणादीनि तैरयम् । भवति ब्राह्मणस्तत्र ब्राह्मण्यं ब्रह्मरूपता" इति ।

अवयवार्थादिविस्तरस्तु तत्रैव बोध्यः । अत एव प्रज्ञामित्यादि । ब्रह्मात्मैक्यविषयकवृत्तिसंततिमित्यर्थः । एतेन निदिध्यासनं ध्वन्यते । तदकरणे दोषमाह—**नेत्यादिना** । श्रव-

णादिसंस्कारोपस्थितानपीत्यार्थिकम् । प्रणवादियावदात्मानुसंधानोपयोग्यल्पशब्दसंग्रहसूचनाय **बहूनिति** । नानुध्यायान्नानुचिंतयेन्न स्मरेदपीत्यर्थः । तत्र हेतुः–**वाच इत्यादिना** । यदेव मनसा ध्यायति तदेव वाचा वदतीतिश्रुतेः ॥ १०७ ॥

**रा० टीका**—एवमैकाग्र्यप्रतिपादिकां श्रुतिमभिधाय स्मृतिमप्याह—

**अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ॥**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ८ ॥**

**अनन्या इति** । ये जना अनन्या अहं ब्रह्मास्मीति ज्ञानेन मदभिन्नाः संतस्तथैव मां चिंतयंतः पर्युपासते परितः सर्वेष्वपि कालेषूपासते मद्रूपा एव वर्तंते तेषां नित्याभियुक्तानां सदा मच्चित्तानां तेषामहं तदात्मत्वेनानुसंधीयमानोऽहं योगक्षेममलब्धप्रापणलब्धपरिरक्षणरूपौ योगक्षेमौ वहामि संपादयामीत्यर्थः ॥ ८ ॥

**अ० टीका**—स्मृतिमप्युक्तेऽर्थे संवादयति—**अनन्या इति** । ये जना कृतयथोक्तवेदांतश्रवणमननाः परमात्मतत्त्वजिज्ञासव इत्यर्थः । मामद्वैतपरमात्मानम् । अनन्या अहं ब्रह्मास्मीत्यभेदभावनायुक्ता इति यावत् । चिंतयंते ध्यायंतः संत इत्यर्थः । पर्युपासते मदैक्यमिवापन्नास्तिष्ठंतीति यावत् । अहं निरुक्तरीत्या चिंत्यमानः परमात्मा । तेषामुक्तरूपसाधकानाम् । योगक्षेममप्राप्तभूमिकाप्रापणपूर्वकं प्राप्तभूमिकासंरक्षणमित्यर्थः । वहामि निरुक्तध्यानारूढतयैव संपादयामीति संबंधः ॥ १०८ ॥

**रा० टीका**—उदाहृतयोः श्रुतिस्मृत्योस्तात्पर्यमाह—

**इति श्रुतिस्मृती नित्यमात्मन्येकाग्रतां धियः ॥**
**विधत्तो विपरीताया भावनायाः क्षयाय हि ॥ ९ ॥**

**इतीति** । एते श्रुतिस्मृती विपरीतभावनानिवृत्तय आत्मनि सदा चित्तैकाग्र्यं प्रतिपादयत इत्यर्थः ॥ ९ ॥

**अ० टीका**—उक्तश्रुत्यादितात्पर्यमाह—**इतीति** । हिरवधारणे । विपरीतभावनाभंगार्थमेवेति यावत् ॥ १०९ ॥

**यद्यथा वर्तते तस्य तत्त्वं हित्वाऽन्यथात्वधीः ॥**
**विपरीता भावना स्यात्पित्रादावरिधीर्यथा ॥ ११० ॥**

**रा० टीका**—ननु देहाद्यात्मत्वबुद्धेर्जगत्सत्यत्वबुद्धेश्च कुतो विपरीतभावनात्वमित्याशंक्य तल्लक्षणयोगादिति दर्शयितुं तस्या लक्षणमाह—**यद्यथेति** । यद्वस्तु शुक्त्यादि यथा येन शुक्त्यादिरूपेण वर्तते तस्य तत्त्वं शुक्त्यादिरूपत्वं परित्यज्यान्यथात्वधीरन्यथात्वस्य रजतादिरूपत्वस्य धीर्ज्ञानं विपरीतभावना स्यात् । अतस्मिंस्तद्बुद्धिरिति यावत् । तामुदाहरति—**पित्रादाविति** ॥ ११० ॥

**अ० टीका**—अथ किंलक्षणा विपरीतभावनैवेत्यपेक्षायां तां लक्षयति—**यदिति** । तामुदाहरति–**पित्रादावित्यादिना** । मंदांधकाराद्यवच्छेदेनेत्यार्थिकम् । बहुजन्मेत्यादिना तु प्राक्तत्स्वरूपमेव कथितमिति न पौनरुक्त्यम् ॥ ११० ॥

**रा० टीका**—उक्तलक्षणं प्रकृते योजयति—

**आत्मा देहादिभिन्नोऽयं मिथ्या चेदं जगत्तयोः ॥**
**देहाद्यात्मत्वसत्यत्वधीर्विपर्ययभावना ॥ ११ ॥**

**आत्मेति ।** अयमात्मा वस्तुतो देहादिभ्यो भिन्नः । इदं जगच्च मिथ्या । एवं सत्यपि तयोरात्मजगतोर्यथाक्रमं देहादिरूपत्वबुद्धिः सत्यत्वबुद्धिश्च या विपरीतभावनेत्यर्थः ॥ ११ ॥

**अ० टीका**—निरुक्तलक्षणं विपरीतभावनायाः प्रागुक्ते बहुजन्मदृढाभ्यासादित्यादिना तत्स्वरूपेऽपि योजयति—**आत्मेति** ॥ १११ ॥

**रा० टीका**—पूर्वमैकाग्र्यात्सा निवर्तेत इति सामान्येनोक्तमर्थं विशेषाकारेणाऽऽह—

**तत्त्वभावनया नश्येत्साऽतो देहातिरिक्तताम् ॥**
**आत्मनो भावयेत्तद्वन्मिथ्यात्वं जगतोऽनिशम् ॥ १२ ॥**

**तत्त्वभावनयेति ।** सा देहाद्यात्मत्वजगत्सत्यत्वधीरूपा विपरीता भावना । तत्त्वभावनयाऽऽत्मनो देहातिरिक्तत्वस्य जगतो मिथ्यात्वस्य च भावनया निरंतरध्यानेन नश्येत् । अत आत्मनो देहाद्यतिरिक्तत्वं देहादेर्जगतो मिथ्यात्वं च सदा भावयेदित्युक्तम् ॥ १२ ॥

**अ० टीका**—अस्त्वेवमथाप्यसौ कथमुपशाम्येतेति खिद्यमानं प्रति प्रागुक्तब्रह्माभ्याससाध्यचित्तैकाग्र्यलक्षणतदुपाये सामान्यत्वात्तद्विशेषमाह—**तत्त्वभावनयेति ।** तत्रापि विषयविभागापेक्षायां तं संक्षिपति—**अत इत्यादिना** सहेतुकम् । ननु भावनाजं फलं यत्स्याद्यच्च स्यात्कर्मणः फलम् । न तत्स्थास्न्विति विज्ञेयं पण्यस्त्रीसंगतं यथेति वार्तिके भावनाजन्यानां कर्मजन्यानां च फलानां विनश्वरत्वोक्तेः कथं तत्त्वभावनाविनष्टविपरीतभावनायाः पुनरनुदय इति चेन्न । निरुक्तवार्तिकस्य तत्त्वज्ञानप्राक्कालिकभावनाभिप्रायकत्वादुक्तभावनायास्तु तद्दार्ढ्यार्थं तदुत्तरकालिकतत्त्वानुसंधानमात्ररूपत्वेन तत्त्वज्ञानसमानफलकत्वाच्च । स्फुटमेवेदमग्रेऽपि ॥ ११२ ॥

**रा० टीका**—तत्र जपादाविव नियमापेक्षाऽस्ति वा नवेति पृच्छति—

**किं मंत्रजपवन्मूर्तिध्यानवद्वाऽऽत्मभेदधीः ॥**
**जगन्मिथ्यात्वधीश्चात्र व्यावर्त्या स्यादुतान्यथा ॥ १३ ॥**

**किं मंत्रजपवदिति ।** आत्मभेदधीरात्मनो देहादिभ्यो विभिन्नज्ञानं जगतो मिथ्यात्वानुसंधानं च मंत्रजपवद्देवताध्यानादिवत्किं नियमेनानुष्ठातव्यमुत लौकिकव्यवहारवन्नियममंतरेणापि कर्तुं शक्यत इति ॥ १३ ॥

**अ० टीका**—तत्र भावना हि मनसो भाव्याकारवृत्तिपरंपरेति निर्विवादमेव निरुक्तपक्षद्वयेऽपि तथाऽपि सहस्रपरमा देवीत्यादिस्मृतेः किमसौ प्रातःसंध्योपासने प्रत्यहं सहस्रजपवन्नियमेन संख्यया ब्रह्मात्मैक्यविषयकचित्तवृत्तिर्द्वैतमिथ्यात्वविषयकतद्वृत्तिश्चाऽऽवर्तनीया किं वा तत्र प्रत्ययैकतानताध्यानमिति पातंजलसूत्राद्विजातीयवृत्त्यनास्कंदितध्येयाकारसजातीयवृत्तिप्रवाहीकरणं संचिंतयेद्भगवतश्चरणारविंदमित्यादिभागवतादिविहितं विष्ण्वादिध्यानं यत्तद्वद्ब्राह्ममुहूर्तादौ प्रतिदिनं समनुष्ठेयं यद्वा प्रकारांतरेणानियतमेवेति विकल्प्य पृच्छति—**किं मंत्रेति** ॥ ११३ ॥

**रा० टीका**—दृष्टफलकत्वान्नात्र नियमः कश्चिदस्तीत्याह—

**अन्यथेति विजानीहि दृष्टार्थत्वेन भुक्तिवत् ॥**
**बुभुक्षुर्जपवद्भुंक्ते न कश्चिन्नियतः क्वचित् ॥ १४ ॥**

**अन्यथेति** । अन्यथा नियमं विनेत्यर्थः । तत्र हेतुमाह—**दृष्टार्थत्वेनेति** । तत्र दृष्टांतमाह—**भुक्तिवदिति** । दृष्टार्थेऽपि भोजने नियमाः श्रुतिस्मृत्योरुपलभ्यंत इत्याशंक्याऽऽह—**बुभुक्षुरिति** । क्षुदपनयनाय भोक्तुमिच्छन्पुरुषो जपं कुर्वाण इव न नियमेन भुंक्ते । अपि तु यथा क्षुद्बाधोपशांतिः स्यात्तथा भोजनं करोतीत्यर्थः ॥ १४ ॥

**अ० टीका**—तत्र चरमकोट्यवलंबनेन समाधत्ते—**अन्यथेत्यादिद्वाभ्याम्**॥ ११४॥

**रा० टीका**—एतदेव प्रपंचयति—

**अश्नाति वा न वाऽश्नाति भुंक्ते वा स्वेच्छयाऽन्यथा ॥**
**येन केन प्रकारेण क्षुधामपनिनीषति ॥ ११५ ॥**

**अश्नातीति** । अश्नाति वाऽन्ने सति कदाचिद्भुंक्ते न वाऽश्नाति तस्मिन्नसति क्षुद्बाधाविस्मारकद्यूतादिचेष्टयाऽनश्नन्नेव कालं नयति । अन्यथा वा तिष्ठन् गच्छन् शयानो वा स्वेच्छया भुंक्ते । एवं येन केन प्रकारेण तात्कालिकीं क्षुद्बाधामपनेतुमिच्छति। अयमभिसंधिः क्षुद्बाधानिवृत्तिलक्षणदृष्टफलाय भोजनमेव कार्यम् । नियमास्तु परलोकहेतव इति ॥ ११५ ॥

**अ० टीका**—अन्यथा नक्ताद्युक्तप्रकारेणेत्यर्थः ॥ ११५ ॥

**रा० टीका**—जपादौ भोजनाद्वैलक्षण्यं दर्शयति—

**नियमेन जपं कुर्यादकृतौ प्रत्यवायतः ॥**
**अन्यथाकरणेऽनर्थः स्वरवर्णविपर्ययात् ॥ १६ ॥**

**नियमेनेति** । तत्र हेतुमाह—**अकृताविति** । भवत्वेवमकरणे प्रत्यवायश्चान्यथाकरणे तु स नास्तीत्याशंक्याऽऽह—**अन्यथेति** । ' मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधात् ' इत्युक्तत्वादिति भावः ॥ १६ ॥

**अ० टीका**—जपे भोजनाद्वैलक्षण्यं स्पष्टयति—**नियमेनेति** । प्रात्याहिकसहस्रसंख्यादिनिर्बंधेनेत्यर्थः । तत्र हेतुं द्योतयति—**अकृताविति** । ' संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ' इत्यादिस्मृतिषु प्रत्यवायदर्शनादित्यर्थः । न केवलमेतावानेव निर्बंधः किंत्वपरोऽपीत्याह—**अन्यथेति** । तत्र हेतुः—**स्वरेति** ।

" मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधात् "

इति शिक्षायां स्वरादिविपर्यासस्य दोषजनकत्वं प्रसिद्धमेवेति भावः ॥ १६ ॥

**क्षुधेव दृष्टबाधाकृद्विपरीता च भावना ॥**
**जेया केनाप्युपायेन नास्त्यत्रानुष्ठितेः क्रमः ॥ १७ ॥**

**रा० टीका**—ननु क्षुधाया दृष्टबाधाहेतुत्त्वात्तन्निवृत्तयेऽनियमेनापि भोक्तव्यमेव वि-

परीतभावनायास्तु तथात्वाभावात्तन्निवर्तकं ध्यानमदृष्टफलाय नियमेनानुष्ठेयमित्याशंक्याऽऽह—**क्षुधेवेति**। विपरीतभावनाया दुःखहेतुत्वस्यानुभवसिद्धत्वादिति भावः ॥ १७ ॥

**अ० टीका**—नन्वेवमपि विपरीतभावनाभंजकतत्त्वानुसंधाने प्रकृते किमागतमित्यत आह—**क्षुधेवेति** ॥ १७ ॥

**रा० टीका**—तर्हि स उपायः प्रदर्शनीय इत्याशंक्य पूर्वमेव प्रदर्शित इत्याह—

**उपायः पूर्वमेवोक्तस्तच्चिंताकथनादिकः ॥**
**एतदेकपरत्वेऽपि निर्बंधो ध्यानवन्न हि ॥ ११८ ॥**

**उपाय इति**। ननु जपवत्प्राङ्मुखत्वादिनियमो मा भूद्ध्यानवदेतदेकपरत्वलक्षणैकाग्रतानिर्बंधोऽस्तीत्याशंक्याऽऽह—**एतदिति** ॥ ११८ ॥

**अ० टीका**—ननु कोऽसावुपायस्तत्राऽऽह—**उपाय इति**। आदिनाऽन्योन्यतत्प्रबोधनमेव। न चाथाऽप्येतदेकपरत्वाख्ये चतुर्थे तदुपायांशे चित्तवृत्तेः परमात्मेतराविषयकत्वे सति सदा तदेकविषयकत्वेन यमाद्यष्टांगसाध्यत्वान्महानिर्बंध इति वाच्यम्। तस्यानुसंधानत्वेन ध्यानवैलक्षण्यादित्याह—**एतदेकपरत्वेऽपीति** ॥ ११८ ॥

**रा० टीका**—ननु ध्यानस्य ध्येयचिंतामात्रात्मकत्वात्तत्र को निर्बंध इत्याशंक्य ध्याने निर्बंधं दर्शयितुं ध्यानस्वरूपं तावदाह—

**मूर्तिप्रत्ययसांतत्यमन्यानंतरितं धियः ॥**
**ध्यानं तत्रातिनिर्बंधो मनसश्चंचलात्मनः ॥ ११९ ॥**

**मूर्तीति**। धियो बुद्धेः संबंधितां मूर्तिप्रत्ययानां देवतादिमूर्तिगोचराणां प्रत्ययानां यत्सांतत्यमविच्छिन्नतया वर्तमानत्वं तदन्यानंतरितमन्येन विजातीयप्रत्ययेनाव्यवहितं सध्यानमित्युच्यते। एवं ध्यानस्वरूपं निरूप्य तत्र निर्बंधं दर्शयति—**तत्रेति**। सदा पर्यटनशीलस्य करितुरगादेरेकत्र स्तंभादौ बंधने यथोपरोधो भवति तद्वदिति भावः ॥ ११९ ॥

**अ० टीका**—नन्वनुसंधानध्यानयोः को विशेष इत्याशंक्य तल्लक्षणं संक्षिपति—**मूर्तीत्यादिना**। सगुणाभिप्रायं मूर्तिपदम्। धिय इति तत्प्रागेव योज्यम्। अथापि किं तत्राऽऽह—**तत्रेत्यादिशेषेण**। निर्बंधो निरोधः ॥ ११९ ॥

**रा० टीका**—मनसश्चांचल्यादौ गीतावाक्यं प्रमाणयति—

**चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ १२० ॥**

**चंचलं हीति**। प्रमाथि प्रमथनशीलं पुरुषस्य व्याकुलत्वकारणं बलवत्समर्थमनिग्राह्यमित्यर्थः। दृढं सत्यसति वा विषये लग्नं तत उद्धर्तुमशक्यमित्यर्थः। अतस्तस्य मनसो निग्रहो वायोर्निग्रह इव सुदुष्करः ॥ १२० ॥

**अ० टीका**—तत्रार्जुनवाक्यमनुकूलयति—**चंचलं हीति**। चंचलोऽपि मृगादिर्बध्यत इत्यत आह—**प्रमाथीत्यादिना**। कामेन विवेकप्रमथनशीलम्। बलवदाग्रहादनिग्राह्यम्। दृढकांतादिविषयादाक्रष्टुमशक्यमित्यर्थः ॥ १२० ॥

**अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ॥**
**अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः ॥ २१ ॥**

**रा० टीका**—मनसो दुर्निग्रहत्वे वासिष्ठवाक्यमपि प्रमाणयति—**अपीति** ॥२१॥

**अ० टीका**—एवमेव भगवान्वसिष्ठोऽपीत्याह–**अपीति** । महत इत्येकार्णवकालिकत्वार्थम् । सप्ताब्धिपानस्यागस्त्यकृतत्वात् । तस्यापि सृष्टिकाले विधातृकृतत्वात्सुमेर्विति । तस्यापि हरकार्मुकावच्छेदेन रामकृतत्वाद्वह्नीति । तस्यापि कृष्णकृतत्वाद्विषम इति ॥ २१ ॥

**रा० टीका**—प्रकृते ततो वैषम्यं दर्शयति–

**कथनादौ न निर्बंधः शृंखलाबद्धदेहवत् ॥**
**किंत्वनंतेतिहासाद्यैर्विनोदो नाट्यवद्धियः ॥ २२ ॥**

**कथनादाविति** । शृंखलाबद्धदेहस्य यथा निर्बंधो न तथा कथनादावित्यर्थः । आदिशब्देन तच्चिंतनादिकं गृह्यते न केवलं निर्बंधाभावश्च प्रत्युत धियो विनोद इत्याह–**किंत्विति** । इतिहासः पूर्वेषां कथा आद्या येषां लौकिककथानुकूलयुक्तिदृष्टांतप्रदर्शनादीनां तेऽसंख्याता अनंताश्च ते इतिहासाद्याश्चेत्यनंतेतिहासाद्यास्तैर्धियो बुद्धेर्विनोदः क्रीडाविषयो भवति। तत्र दृष्टांतः–**नाट्यवदिति** । नृत्यक्रियानिरीक्षणमिवेत्यर्थः ॥ २२ ॥

**अ० टीका**—ननु भवत्वेवं ध्याने मनसश्चंचलस्वरूपत्वाद्यनेकदोषैरतिनिर्बंधः परं त्वनुसंधाने द्वैतमिथ्यात्वपूर्वकापरोक्षीकृतब्रह्मात्मैक्यविषयकस्मृतिमात्रलक्षणे प्रकृते कथं तदभाव इत्यपेक्षायां तमेव प्रपंचयति–**कथनादावित्यादिना** । आदिनाऽन्योन्यं तत्प्रबोधनम् । **अनंतेति** । **बृहद्वासिष्ठमोक्षधर्मसूतसंहितादि**प्रसिद्धा संख्येतिहासादिभिरित्यर्थः ॥ १२२ ॥

**रा० टीका**—ननु कथादिभिरपि तदेकपरत्वविघातः स्यादित्याशंक्याऽऽह—

**चिदेवाऽऽत्मा जगन्मिथ्येत्यत्र पर्यवसाकृतः ॥**
**निदिध्यासनविक्षेपो नेतिहासादिभिर्भवेत् ॥ २३ ॥**

**चिदेवेति** । इतिहासादीनामात्मा चिन्मात्ररूपो न देहादिरूपो जगच्च मिथ्येत्येतस्मिन्नर्थे पर्यवसानान्न तैरेतदेकपरत्वशब्दाभिधेयस्य निदिध्यासनस्य विक्षेप इत्यर्थः ॥ २३ ॥

**अ० टीका**—ननु कथनादिनाऽपि तच्चिंतनादिनिरुक्तोपायांशविशेषयोस्तच्चिंतनैतदेकपरत्वयोर्विघातः स्यादेवेत्यत आह–**चिदेवेति** ॥ २३ ॥

**कृषिवाणिज्यसेवादौ काव्यतर्कादिकेषु च ॥**
**विक्षिप्यते प्रवृत्त्या धीस्तैस्तत्त्वस्मृत्यसंभवात् ॥ २४ ॥**

**रा० टीका**—नन्वितिहासानामंगीकारे कृष्यादेरपि प्रसक्तिः स्यादित्याशंक्याऽऽह–**कृषीति** ॥ २४ ॥

**अ० टीका**—उक्तमेवार्थं प्रत्युदाहरणकथनेन द्रढयति–**कृषीति** । आदिना काम्यकर्म वैदिकं ग्राह्यम् । एवं कायिकव्यापारेषु बुद्धेर्विक्षेपमुक्त्वा वाचिकेष्वपि ब्रह्मेतरविषयेषु तमाह–**काव्येति** । आदिना यावच्छेदवादिनिबंधाः । तत्र हेतुः—**तैरित्यादि**चरमचरणेन ॥ २४ ॥

**रा० टीका**—ननु कृष्यादीनां तत्त्वानुसंधानविघातित्वेन त्याज्यत्वे भोजनादेरपि तथात्वात्तदपि त्याज्यमेवेत्याशंक्याऽऽह—

**अनुसंदधतैवात्र भोजनादौ प्रवर्तितुम् ॥**
**शक्यतेऽत्यंतविक्षेपाभावादाशु पुनः स्मृतेः ॥ १२५ ॥**

**अनुसंदधतैवेति** । कुत इत्यत आह—**अत्यंतेति** । विक्षेपाभावोऽपि कुत इत्यत आह—**आशु पुनः स्मृतेरिति** ॥ १२५ ॥

**अ० टीका**—ननु कृष्यादिवद्भोजनादेरपि तत्त्वविस्मारकत्वेन त्याज्यत्वापत्तिरित्यत आह—**अनुसंदधतैवेति** । आदिना निखिलमाह्निकम् । तत्र हेतुः—**अत्यंतेति** । तत्रापि हेतुः—**आश्वित्यादिना** । सदाचारप्रकरणे **श्रीमद्भाष्यकृच्चरणैः** सर्वस्याप्याह्निकस्य द्वैतमिथ्यात्वपूर्वकमद्वैतब्रह्मात्मैक्यानुसंधानात्मनैव विहितत्वान्मयाऽपि **तट्टीकायां** तथैव प्रपंचितत्वाच्च तत्पर्यालोचनेन शीघ्रमेव भोजनादौ प्रवृत्तस्य पुनः स्मृतिर्भवतीति भावः ॥ १२५ ॥

**तत्त्वविस्मृतिमात्रान्नानर्थः किंतु विपर्ययात् ॥**
**विपर्येतुं न कालोऽस्ति झटिति स्मरतः क्वचित् ॥ २६ ॥**

**रा० टीका**—ननु तदानीं विक्षेपाभावेऽपि तत्त्वविस्मृतिसद्भावात्पुरुषार्थहानिः स्यादित्याशंक्याऽऽह—**तत्त्वविस्मृतीति** । कुतस्तर्ह्यनर्थ इत्यत आह—**किंतु विपर्ययादिति** । विस्मरणे सति विपर्ययोऽपि स्यादित्याशंक्याऽऽह—**विपर्येतुमिति** ॥ २६ ॥

**अ० टीका**—नन्वथापि भोजनादितत्तद्व्यापारकालावच्छेदेन तत्त्वविस्मृतिस्तु स्यादेवेत्यत्राऽऽह—**तत्त्वेति** ॥ २६ ॥

**रा० टीका**—ननु भोजनादिषु प्रवृत्तस्येव तर्काद्यभ्यासप्रवृत्तस्यापि तत्त्वस्मरणं किं न स्यादित्याशंक्याऽऽह—

**तत्त्वस्मृतेरवसरो नास्त्यन्याभ्यासशालिनः ॥**
**प्रत्युताभ्यासघातित्वाद्बलात्तत्त्वमुपेक्ष्यते ॥ २७ ॥**

**तत्त्वस्मृतेरिति** । न केवलं तत्त्वानुसंधानावसराभाव एव किंतु काव्यतर्काद्यभ्यासस्य तत्त्वाभ्यासविरोधित्वात्तदानीं स्मृतमपि तत्त्वं बलादुपेक्ष्यत इत्याह—**प्रत्युतेति** ॥ २७ ॥

**अ० टीका**—ननु तर्हि भोजनादिवत्तर्काद्यभ्यासिनोऽपि भवतु शीघ्रं तत्त्वस्मृतिरित्याशंक्य समाधत्ते—**तत्त्वस्मृतेरिति** । न केवलं तत्र तदनवकाशः किंतु विरोधित्वमपीत्याह—**प्रत्युतेति** । उपेक्ष्यते त्यज्यते ॥ २७ ॥

**रा० टीका**—तत्त्वानुसंधानविरोधिवाग्व्यवहारस्य त्याज्यत्वे प्रमाणत्वेन तमेवैकं जानीथऽऽत्मानमन्या वाचो विमुंचथ, अमृतस्यैष सेतुरिति श्रुतिवाक्यमर्थतः पठति—

**तमेवैकं विजानीथ ह्यन्या वाचो विमुञ्चथ ॥**
**इति श्रुतं तथाऽन्यत्र वाचो विग्लापनं त्विति ॥ २८ ॥**

**तमेवेति** । 'नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्' इत्येतदपि वाक्यं श्रूयत इत्याह—**तथेति** ॥ २८ ॥

**अ० टीका**—ननु भोजनादिव्यवहारस्तत्त्वानुसंधानाविरोधीत्युपपाद्यांगीक्रियते त-

कादिशास्त्राभ्यासस्तु भेदवादित्वेन तद्विरोधीति नाऽऽद्रियते चेत्सुमंडितमद्वैतिपांडित्यमित्याशंक्य श्रुत्यैव प्राक्तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तदिति समाधाने कृतेऽपि तद्विस्मरणशीलं प्रति समाधातुं तादृक्श्रुत्यंतरमर्थतः पठंस्तामपि स्मारयति—**तमेवैकमिति** । तथाचाऽऽथर्वणिकैराम्नायते—' तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथामृतस्यैष सेतुः ' इति । शिष्टं तु स्पष्टमेव ॥ २८ ॥

**आहारादि त्यजन्नैव जीवेच्छास्त्रांतरं त्यजन् ॥**
**किं न जीवसि येनैवं करोष्यत्र दुराग्रहम् ॥ २९ ॥**

**रा० टीका**—ननु तत्त्वानुसंधानातिरिक्तमाहारादि यथा न त्यज्यत एवमितरशास्त्राद्यभ्यासोऽपि क्रियतामित्याग्रहं कुर्वाणं प्रत्याह—**आहारादिति** ॥ २९ ॥

**अ० टीका**—अथैवं भेदवादाभिनिविष्टं प्रति पुनरपि विस्पष्टं समाक्षिपति—**आहारादीति** । आदिना निद्रादि ॥ २९ ॥

**रा० टीका**—ननु तर्हि जनकादीनां तत्त्वविदामपि कथं राज्यपरिपालनादौ प्रवृत्तिरिति शंकते—

**जनकादेः कथं राज्यमिति चेद्दृढबोधतः ॥**
**तथा तवापि चेत्तर्कं पठ यद्वा कृषिं कुरु ॥ १३० ॥**

**जनकादेरिति** । दृढापरोक्षज्ञानित्वात्तेषां सा न बाधिकेत्यभिप्रायेण परिहरति—तर्हि ममापि दृढबोधोऽस्तीति वदंतं प्रत्याह—**तथेति** ॥ १३० ॥

**अ० टीका**—तत्रापि भेदवादिशास्त्राभिनिविष्टः पुनः सनिदर्शनमाक्षिपति—**जनकादेरिति** । तत्र सिद्धांती समाधत्ते—**दृढेति** । तद्दृढताऽवधिस्तूपदेशसाहस्र्यां **श्रीमद्भाष्यकारैरेव** दर्शितः—

"देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते' इति।

ननु प्रागुदाहृतात् ' अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढी भवेत् । शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्' इति बृहद्वाक्यवृत्तिवाक्यादसंभावनादिनिवृत्तये प्रोक्तरीत्या श्रवणाद्यभ्यासमनुतिष्ठतो ममापीदानीं बोधो दृढ एवेत्याशंक्य भूरिविक्षेपकरावपि शास्त्रीयलौकिकव्यवहाराधमावपि तर्कपठनकृषिकरणव्यवहारावप्यनुमोदते—**तथेति** ॥ १३० ॥

**रा० टीका**—ननु तत्त्वविदः संसारासारतां जानंतः कुतस्तत्र प्रवर्तिष्यंत इत्याशंक्य प्रारब्धस्यावश्यंभाविफलत्वाद्भोगेन तत्तत्क्षयाय प्रवृत्तिरित्याह—

**मिथ्यात्ववासनादार्ढ्ये प्रारब्धक्षयकांक्षया ॥**
**अक्लिश्यंतः प्रवर्तंते स्वस्वकर्मानुसारतः ॥ ३१ ॥**

**मिथ्यात्वेति** ॥ ३१ ॥

**अ० टीका**—ननु यावद्दृश्यस्यासज्जडदुःखात्मकत्वं मिथ्यात्वं चानुभवतां निरुक्तव्यवहारयोः प्रथमं प्रवृत्तिरेव कथं संभवेदित्यत आह—**मिथ्यात्वेति** । तदुक्तं **स्वाराज्यसिद्धावपि**—

" केऽपि वर्णाश्रमाचारनिष्ठापरा मुग्धबालप्रमत्तोपमाश्चापरे ।

रागिणो भोगिनो योगिनश्चेतरे ज्ञानिनां लक्ष्यते नैकरूपा स्थितिः " इति ।

**मुग्धेति । जडभरतचतुःसनदत्तात्रेयादयः ।** रागिणः संतो भोगिनः **सौभर्यादयः ॥ १३१ ॥**

**रा० टीका**—तर्ह्यनाचारेऽपि प्रवृत्तिः स्यादित्याशंक्याऽऽह—

**अतिप्रसंगो मा शंक्यः स्वकर्मवशवर्तिनाम् ॥**
**अस्तु वा केन शक्येत कर्म वारयितुं वद ॥ ३२ ॥**

**अतिप्रसंग इति ।** प्रारब्धवशादेवातिप्रसंगोऽपि स्यादित्याशंक्यांगीकरोति—**अस्त्विति** ॥ ३२ ॥

**अ० टीका**—नन्वेवं तर्हि विकर्मण्यपि प्रवृत्तिप्रसंग इत्यत्राऽऽह—**अतिप्रसंग इति ।** तत्र हेतुः—**स्वेति ।** अयं भावः । ब्रह्मविदां हि लोकदृष्टिसिद्धस्वकाण्ण्यवत्प्रारब्धावस्थापितशरीरेंद्रियादिव्यापारः कारणसामग्र्यभावेऽपि मूलाविद्याविनाशाद्दक्षिणावर्तभ्रामितचक्रन्यायेन संस्कारमात्रप्रयुक्त इत्यवश्यं वाच्यम् । तथा च—'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इत्यादिस्मृतेः 'स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् । साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम्' इत्यपरोक्षानुभूतेश्च स्वकर्मशब्दितयावत्काम्यनिषिद्धशून्यांतर्याम्येकाज्ञापरिपालनानुष्ठिततत्परितुष्ट्येकफलकानंतजन्मसंपादितकर्तृत्वाभिमानफलाभिसंधिहीनत्वविरचितस्वस्ववर्णाश्रमोचिततंत्रगंधरहितश्रौतस्मार्तनित्यनैमित्तिकप्रायश्चित्तकर्मसंस्कारैकवशवर्तित्वं तेषां नियतमेव यतोऽस्ति तस्मादनाचारस्वच्छंदाचारादिप्रवृत्तिलक्षणोऽतिप्रसंगो नैव शंक्य इति । तथैवोक्तमनुभूतिप्रकाशेऽपि—'किंच पुण्यरतः पूर्वं ज्ञानमाप्नोति नान्यथा । पश्चाच्च तद्वासनया पुण्यमेव करोत्यसौ' इति । स्वानुभवादर्शेऽपि—'नैव श्लेषः पुण्यपापक्रियाया यद्यप्येवं शुद्धसंस्कारहेतोः । पुण्ये श्रद्धा पाप्मनो नैव बुद्धिस्तत्त्वज्ञस्य प्रायशोऽयं निसर्गः' इति । प्रपंचितं चैतदद्वैतजलजातादिग्रंथेषु मया तथाऽत्राप्यग्रे तत्तत्प्रकरणे भूरितरमुपपाद्येतापीति दिक् । नन्वेवं चेत्तर्ह्यस्तु वेत्यादिनाऽतिप्रसंगाख्यदुराचाराद्यंगीकारः प्रतीयते । प्रारब्धवशादेवातिप्रसंगोऽपि स्यादित्याशंक्यांगीकरोति— **अस्तु वेतीति ।** प्राचा व्याख्यातश्च कथं संगच्छेतेति चेन्न । यद्वा । यद्येवं तदा ज्ञानोत्तरं पातकेन नैव भाव्यं तथात्वे 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्यधिकरणविरोध इति चेन्न । उपक्रमानुसारेण तस्याज्ञातपातकाभिप्रायकत्वात् । अत एवोक्तं **नैष्कर्म्यसिद्धौ**—

" अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः ।
धर्मकार्ये कथं तत्स्याद्यत्र धर्मोऽपि नेष्यते " इति ।

**आदर्शेऽपि**—" दृष्ट्वा परब्रह्मरसान्निवृत्तिरित्याह गीतासु हरिः कृपालुः ।
अतो यथेष्टाचरणं न तस्य यद्यस्ति चेज्ज्ञानविपाकिता न " ।

इत्यभिप्रेत्याऽऽह—**अस्तु वेति ।** तत्र हेतुः—**केनेत्यादिना** ॥ ३२ ॥

**ज्ञानिनोऽज्ञानिनश्चात्र समे प्रारब्धकर्मणि ॥**
**न क्लेशो ज्ञानिनो धैर्यान्मूढः क्लिश्यत्यधैर्यतः ॥ ३३ ॥**

**रा० टीका**—ननु ज्ञान्यज्ञानिनोः प्रारब्धकर्मण्यवश्यभोक्तव्यतया समाने तयोः कुतो वैलक्षण्यसिद्धिरित्याशंक्याऽऽह—**ज्ञानिन इति** ॥ ३३ ॥

**अ० टीका**—नन्वेवं तर्हि ज्ञानिनः को विशेष इत्यत्राऽऽह—**ज्ञानिन इति ॥ ३३ ॥**

**रा० टीका**—तत्र दृष्टांतमाह—

**मार्गे गंत्रोर्द्वयोः श्रांतौ समायामप्यदूरताम् ॥**
**जानन्धैर्याद्द्रुतं गच्छेदन्यास्तिष्ठति दीनधीः ॥ ३४ ॥**

**मार्ग इति** ॥ ३४ ॥

**अ० टीका**—तत्र दृष्टांतं स्पष्टयति—**मार्ग इति** ॥३४॥

**रा० टीका**—इत्थमुपपादितमात्मानं चेदिति मंत्रस्य पूर्वार्धार्थमनुवदन्फलप्रदर्शनपरमुत्तरार्धमवतारयति—

**साक्षात्कृतात्मधीः सम्यगविपर्ययबाधितः ॥**
**किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ १३५ ॥**

**साक्षादिति** । सम्यक् साक्षात्कृतात्मधीः साक्षात्कृत आत्मा यया सा साक्षात्कृतात्मा तादृशी धीर्यस्य स साक्षात्कृतात्मधीः । अविपर्ययबाधितो विपर्ययेण देहाद्यात्मत्वबुद्ध्या बाधितो न भवतीत्यविपर्ययबाधितः । उभयं हेतुगर्भितं विशेषणम् ॥ १३५ ॥

**अ० टीका**—एवं व्याख्येयत्वेन प्रतिज्ञातश्रुतेर्निर्णीतं पूर्वार्धार्थमनूद्योत्तरार्धमवतारयति—**साक्षादिति** । सम्यगिति मध्यमणिन्यायेनोभयत्राप्यन्वेति । एवं चाबाधित्वेनापरोक्षात्मविषयकप्रमावानित्यर्थः । तद्दार्ढ्यार्थम्—**अविपर्ययेति** । कदाऽपि विपरीतभावनाजनितपीडारहित इत्येतत् । एतादृशः पुमान् । किं प्रयोजनं सुखं दुःखध्वंसनं वा । इच्छन्सन् । शरीरं स्थूलादिदेहत्रयमनुसृत्य । संज्वरेत्सम्यग्दुःखं प्राप्नुयादपि तु भोग्यभोक्त्रोरुभयोरपि मिथ्यात्वान्नैव दुःखी स्यादिति संबंधः ॥ १३५ ॥

**रा० टीका**—अस्य मंत्रार्धस्य तात्पर्यमाह—

**जगन्मिथ्यात्वधीभावादाक्षिप्तौ काम्यकामुकौ ॥**
**तयोरभावे संतापः शाम्येन्निःस्नेहदीपवत् ॥ ३६ ॥**

**जगन्मिथ्येति** । काम्यं च कामुकश्च काम्यकामुकौ तावाक्षिप्तौ निरस्तौ । तन्निराकरणे कारणमाह—**जगन्मिथ्यात्वेति** । ततः किमित्यत आह—**तयोरिति** । तयोः काम्यकामुकयोरभावे संतापः कामनानिमित्तकः कारणाभावान्निःस्नेहदीपवच्छाम्येदित्यर्थः ॥३६॥

**अ० टीका**—अथ व्याख्येयमवशिष्टमंत्रोत्तरार्धं व्याकर्तुं तत्तात्पर्यं सूत्रयति—**जगदिति** । यावद्द्वैतविषयकबाधितबुद्धिसद्भावादित्यर्थः । आक्षिप्तावाक्षेपो भर्त्सनाकृष्टिकाव्यालंकृतिषु स्मृत इति मेदिन्यास्तिरस्कृतावित्यर्थः ॥ ३६ ॥

**रा० टीका**—काम्याभावात्कामनाभावः क्व दृष्ट इत्याशंक्याऽऽह—

**गंधर्वपत्तने किंचिन्नैंद्रजालिकनिर्मितम् ॥**
**जानन्कामयते किंतु जिहासति हसन्निदम् ॥ ३७ ॥**

**गंधर्वेति** । मायाविनिर्मिते पत्तने स्थितं वस्तु किंचिदपीदमैंद्रजालिकनिर्मितमिति जानन्न कामयते न केवलं कामनाभावः प्रत्युतेदमनृतमिति हसञ्जिहासति परित्यक्तुमिच्छति ॥ ३७ ॥

**अ० टीका**—ननु मिथ्याभूतत्वेऽपि रम्यतमं कामिन्यादिचित्रं प्रेम्णा प्रेक्ष्यत एवेत्यत्राऽऽह—**गंधर्वेति** । ऐंद्रजालिकेन गंधर्वदेवताकमंत्रक्षुब्धमायया निर्मिते नगर इत्यर्थः ।

इदं घटादिकं वस्त्वैंद्रजालिकनिर्मितामिति जानन्किंचिदपि न कामयते नैवोपभोक्तुमिच्छति किं तु हसन्सन्प्रत्युत जिहासति हातुं त्यक्तुमेवेच्छतीत्यन्वयः । एवं च निरुक्तचित्रे दिदृक्षायामपि बुभुक्षा नैव भवतीति भावः ॥ ३७ ॥

**रा० टीका**—दार्ष्टांतिके योजयति—

**आपातरमणीयेषु भोगेष्वेवं विचारवान् ॥**
**नानुरज्यति किंत्वेतान्दोषदृष्ट्या जिहासति ॥ ३८ ॥**

**आपातेति** । एवमापातरमणीयेषु प्रतीतिमात्ररम्येषु भोगेषु भुज्यंत इति भोगा विषयाः स्रक्चंदनवनितादयस्तेष्वेवं विचारवानापातरमणीयत्वानुसंधानवान्नानुरज्यति नासक्तिं करोति । किंतु दोषदर्शनेनैतान्परित्यक्तुमिच्छति ॥ ३८ ॥

**अ० टीका**—दार्ष्टांतिके योजयति—**आपातेति** । पातं विनाशं विचारजं बाधं वा मर्यादीकृत्येत्यापातमापातरमणीयाः सुंदरास्तेष्वित्यर्थः ॥ ३८ ॥

**रा० टीका**—के ते विषयदोषा इत्यत आह—

**अर्थानामर्जने क्लेशस्तथैव परिपालने ॥**
**नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः ॥ ३९ ॥**

**अर्थानामिति** ॥ ३९ ॥

**अ० टीका**—ननु के ते विषयदोषा इत्याकांक्षायां ' वेधा द्वेधा भ्रमं चक्रे कांतासु कनकेषु च ' इति प्राचीनवचनादखिलविषयाणां मध्ये कनककामिन्योरेव महान्व्यामोहकत्वात्तद्दोषप्रतिपादकावेवोपलक्षणविधया बृहद्वासिष्ठश्लोकावुदाहरति । अर्थानामित्यादिक्रमाद्धनवनिताविनिंदकौ । व्यये दुःखोदाहरणं नृगः प्रसिद्ध एव ॥ ३९ ॥

**रा० टीका**—एवं विषयाणां दुःखहेतुत्वं प्रदर्श्याशोभनत्वं कचिद्दर्शयति—

**मांसपांचालिकायास्तु यंत्रलोलेऽगपंजरे ॥**
**स्नाय्वस्थिग्रंथिशालिन्याः स्त्रियाः किमिव शोभनम् ॥ १४० ॥**

**मांसेत्यादिश्लोकद्वयेन** । स्नायवः शिराश्चास्थीनि प्रसिद्धानि । ग्रंथयो मांसनिचयरूपनितंबस्तनादयः । एतैश्च सहिते मांसपांचालिकायाः पुत्तलिकाया योषितो यंत्रलोले यंत्रवच्चंचलशीलेऽगपंजरेऽगान्येव पंजरं नीडं तस्मिञ्शरीरे किं शोभनमिव न किमपीत्यर्थः ॥ १४० ॥

**अ० टीका**—**मांसेति** । पांचालिका पुत्तिका स्याद्वस्त्रदंतादिभिः कृतेत्यमरः । **यंत्रेति** । यंत्रवत्कलासूत्रयंत्रवल्लोले चेष्टमान इत्यर्थः । एतादृशे—**अंगेति** । पंजरो यथा कीरादेर्बंधकस्तथाऽयं तरुणीकायः पुंमनोबंधक इति द्योतयितुं पंजरपदं रूपकादिघटकम् । एतादृशे सतीति यावत् । **मांसेति** । मांसादिसप्तधातुनिर्मितपुत्तलिकायाः । अत एव—**स्नाय्विति** । त्वक्चर्ममांसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुद्ध्यंतां ज्योतिरहमित्यादिश्रुतेरथ वस्नसा । स्नायुः स्त्रियामित्यमराच्च स्नायवोऽस्थिनिकटस्थो धातुविशेष एवं तद्विशिष्टानि यान्यस्थीनि तेषां ये ग्रंथयस्तच्छालिन्यास्तद्विशिष्टाया इत्यर्थः । एतादृश्याः स्त्रियाः किमिव शोभनं मुखाद्यवयवजातं रम्यमस्तीत्यन्वयः । एवं च मांसेत्यादिनाऽतिबीभत्सत्वान्न तत्र रम्यत्वलेशोऽपीत्याशयः ॥ १४० ॥

**एवमादिषु शास्त्रेषु दोषाः सम्यक् प्रपंचिताः ॥**
**विमृशन्ननिशं तानि कथं दुःखेषु मज्जति ॥ ४१ ॥**

**रा० टीका**–एवमादिष्वित्यादिशब्देन–'त्वङ्मांसरक्तबाष्पांबु पृथक्कृत्वा विलोचने । समालोकय रम्यं चेत्किं मुधा परिमुह्यसि " । इत्येवमादयो गृह्यंते ॥ ४१ ॥

**अ० टीका**—उपलक्षणमिदमेवंजातीयकानां शास्त्राणामिति सर्वदा तानि परिशीलयन्नैव दुःखाब्धौ निमग्नः स्यादित्याह—**एवमादिष्विति** । आदिनैतन्मूलीभूतानि–' न वै स्त्रैणानि सख्यानि संति सालावृकाणां हृदयान्येताः' इति **शाकलश्रुतिस्तथा**–'तज्जायाऽजाया भवति यदस्यां जायते पुनः ' इति च **तच्छ्रुतिरेव** तथा **यजुषि–**'भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिका विण्मूत्रपित्तकफसंघाते दुर्गंधे निःसारेऽस्मिञ्शरीरे किं कामोपभोगैरित्यादि**मैत्रायणीय**श्रुतिरपीह । तद्वत्–' जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ' इत्यादीनि स्मृत्यादीन्यपि वचनानि द्रष्टव्यानि ॥ ४१ ॥

**रा० टीका**—विषयदोषदर्शने सति भोगेच्छाऽभावे युक्तिसहितं दृष्टांतमाह—

**क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ॥**
***मिष्टान्नध्वस्तनतृट् जानन्नामूढस्तज्जिघत्सति ॥ ४२ ॥**

**क्षुधयेति** । स्वयममूढो विवेकी मिष्टान्नभोजनेन ध्वस्ता विनष्टा तृट् तृष्णाऽऽकांक्षा यस्य स तथोक्त इदं विषमित्येवं जानंस्तद्विषं न जिघत्सति नात्तुमिच्छतीत्यर्थः ॥ ४२ ॥

**अ० टीका**—तत्र हेतुमर्थांतरन्यासेन सूचयति—**क्षुधयेति । मृष्टेति** । मृष्टं कृतसंस्कारं यदन्नमोदनं तेन ध्वस्ता तृड्वांछा बुभुक्षा यस्य स तथेत्यर्थः । तत्राप्यज्ञानत्वव्युदासार्थम्—**जानन्निति** । एवमपि ग्रहादिभ्रांतत्वनिरासाय–**अमूढ इति** । जिघत्सति भोक्तुं नैवेच्छतीत्यन्वयः ॥ ४२ ॥

**प्रारब्धकर्मप्राबल्याद्भोगेष्विच्छा भवेद्यदि ॥**
**क्लिश्यन्नेव तदाऽप्येष भुंक्ते विष्टिगृहीतवत् ॥ ४३ ॥**

**रा० टीका**—ननु प्रारब्धकर्मणः प्रबलत्वाज्ज्ञानिनोऽपीच्छा भवेदित्याशंक्य सत्यामपीच्छायां प्रीतिपुरःसरं न भुंक्त इत्याह—**प्रारब्धेति** ॥ ४३ ॥

**अ० टीका**—ननु सौभर्यादीनां कथं तर्हि भोगेच्छादीत्यत आह—**प्रारब्धेति** । विष्टिपदार्थो हि वेठ इति महाराष्ट्रप्रसिद्धस्तेन गृहीतो धृतस्तद्वदित्यर्थः ॥ ४३ ॥

**भुंजाना वा अपि बुधाः श्रद्धावंतः कुटुंबिनः ॥**
**नाद्यापि कर्म नश्छिन्नमिति क्लिश्यंति संततम् ॥ ४४ ॥**

**रा० टीका**–कथमेतदवगम्यतेत्याशंक्य लोकदर्शनादित्याह–**भुंजाना इति** ॥ ४४ ॥

**अ० टीका**–तदुदाहरति—**भुंजाना इति** । तानपि प्रारब्धप्राबल्यापादितानपि भोगानित्यर्थः । श्रद्धावंतो दूर्वामूलावलंबिनरककूपगपितृवचनास्तिक्यशालिजरत्कार्वादयः ॥ ४४ ॥

**रा० टीका**—ननु तत्त्वविदां संसारनिमित्तकस्तापोऽनुपपन्नो ज्ञानवैयर्थ्यापातादित्याशंक्याऽऽह —

* मृष्टान्नमित्यच्युतरायटीकानुरोधेन पाठः ।

**नायं क्लेशोऽत्र संसारतापः किंतु विरक्तता ॥**
**भ्रांतिज्ञाननिदानो हि तापः सांसारिकः स्मृतः ॥ ४५॥**

**नायमिति** । अयं क्लेशो नाद्यापि कर्म नश्छिन्नमित्येवमनुतापात्मकः संसारतापो न भवति । किंत्वत्र संसारे विरक्तताऽऽसक्तिरहितता । तापकत्वाभावे युक्तिमाह—**भ्रांतीति** । हि यस्मात्कारणात्सांसारिकस्तापो भ्रांतिज्ञाननिदानो भ्रांतिज्ञानकरणकः स्मृतः पूर्वाचार्यैः । अयं तु विवेकज्ञानमूलत्वान्न तथाविध इत्यर्थः ॥ ४५ ॥

**अ० टीका**—एवं चेत्संसारादविशेषस्तत्राऽऽह—**नेति** । तत्र हेतुः—**भ्रांतीति** ॥ १४५॥

**विवेकेन परिक्लिश्यन्नल्पभोगेन तृप्यति ॥**
**अन्यथाऽनंतभोगेऽपि नैव तृप्यति कर्हिचित् ॥ ४६ ॥**

**रा० टीका**—अयं क्लेशो विवेकमूलोऽविवेकमूलो वेति कुतोऽवगम्यत इत्याशंक्य कामनिवर्तकत्वाद्विवेकमूल इत्याह—**विवेकेनेति** ॥ ४६ ॥

**अ० टीका**—ननु निरुक्तक्लेशो विवेकमूलक एवेति कुतोऽध्यवसीयत इति चेत्कार्यलिंगकानुमानादेवेत्याह—**विवेकेनेति** । **अल्पेति** । नगरकावादौ तथैव दृष्टत्वादित्याशयः । विमतः क्लेशो विवेकमूलकः । अल्पभोगतृप्तिनिष्ठत्वात् । व्यतिरेकेऽविवेकिक्लेशवदिति व्यतिरेकदृष्टांतं स्पष्टयति—**अन्यथेति** ॥ ४६ ॥

**न जातु कामः कामानामुपभोगेन शाम्यति ॥**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ४७ ॥**

**रा० टीका**—विवेकिन इवाविवेकिनोऽपि भोगेनैव तृप्तिः स्यादतो विवेकोऽप्रयोजक इत्याशंक्य भोगस्य तृप्तिहेतुत्वाभावप्रतिपादिकां श्रुतिं पठति **न जातु काम इति** ॥ ४७॥

**अ० टीका**—तत्र पुराणं प्रमाणयति **न जात्विति** । जातु कदाचिदपि । कामानां काम्यमानानां विषयाणामुपभोगेन कामो विषयाभिलाषो नैव शाम्यतीत्यन्वयः । तत्र दृष्टांतं स्फुटयति—**हविषेति** । कृष्णवर्त्मेव वह्निः । सूक्ष्मा कृष्णवर्त्मेत्यमरादग्निरित्यर्थः ॥ ४७ ॥

**रा० टीका**—विवेकमूलस्य भोगस्य तृप्तिहेतुत्वमनुभवसिद्धमित्याह—

**परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ॥**
**विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥ ४८ ॥**

**परिज्ञायेति** । अयं भोग एतावानेव प्रयासमसाध्य इत्येवमनुभवपूर्वकश्चेदल्पबुद्धिहेतुर्हि दृश्यत इत्यर्थः । ननु तृष्णाहेतोर्भोगस्य विवेकसाहचर्यमात्रेण कथं तुष्टिकरत्वमित्याशंक्य सहचारिविशेषवशाद्विपरीतकार्यकारित्वं लौकिके दृष्टमित्याह **विज्ञायेति** । अयं चोर इति ज्ञात्वा तेन सह वर्तमानस्य पुरुषस्य न चोरो भवति किंतु मित्रतामेतीत्यर्थः ॥ ४८ ॥

**अ० टीका**—नन्वल्पभोगेन तुष्टिरेव लोके ह्यदृष्टत्वादसिद्धैवेत्याशंक्य विवेकपूर्वकस्याल्पभोगस्यापि सामग्रीमहिम्ना विपरीतकारित्वमपि विषविशेषवत्स्यादेवेति समाधत्ते **परिज्ञायेति** । सर्वामपि भोगसामग्रीं तत्साधनप्रयत्नादिविवेकपूर्वकं ज्ञात्वेत्यर्थः । तत्र निदर्शनमाह—**विज्ञायेति** ॥ ४८ ॥

**रा० टीका**—ननु कामनास्वरसत्वान्मनसः कथं स्वल्पभोगेन तृप्तिः स्यादित्याशंक्य निदिध्यासनेन गृहीतस्यातथात्वाद्भवत्येव तृप्तिरित्याह—

**मनसो निगृहीतस्य लीलाभोगोऽल्पकोऽपि यः॥**
**तमेवालब्धविस्तारं क्लिष्टत्वाद्बहु मन्यते॥ ४९॥**

**मनस** इति। निगृहीतस्य योगाभ्यासेन वशीकृतस्य मनसोऽल्पकोऽपि लीलाभोगो लीलानुभवो योऽस्त्यलब्धविस्तारमप्राप्तबाहुल्यं तमेव भोगं क्लिष्टत्वाद्दोषयुक्तत्वाद्बहु मन्यतेऽधिकत्वेन जानातीत्यर्थः॥ ४९॥

**अ० टीका**—किं च विवेकिनोऽल्पभोगेन संतोषे हेत्वंतरमप्याह—**मनस इति**। प्रागुक्ताद्वैतब्रह्मात्माभेदविषयकापरोक्षप्रमोत्तरं तद्दार्ढ्यायाभ्यस्यमानासंभावनादिनिरासफलकचतुर्लक्षणीश्रवणमननद्वैतमिथ्यात्वपूर्वकोक्तैक्यानुसंधानेनेति शेषः। निगृहीतस्य रुद्धस्य। **लीलेति**। सौभर्यादिवद्यत्किंचिद्यत्नजन्येष्टोपभोग इत्यर्थः। अल्पकोऽपि यो भवति तमेवोक्तलक्षणं मन उक्तनिरोधेनेत्यार्थिकम्। क्लिष्टत्वादलब्धविस्तारमप्राप्तानंतसंकल्पं सद्बहुम्यत (?) इति योजना ४९

**बद्धमुक्तो महीपालो ग्राममात्रेण तुष्यति॥**
**परैर्न बद्धो नाऽऽक्रांतो न राष्ट्रं बहु मन्यते॥ ५०॥**

**रा० टीका**—निगृहीतस्यापि मनसः स्वल्पेनापि भोगेन तृप्तिर्भवतीत्यत्र दृष्टांतमाह—**बद्धमुक्त** इति॥ ५०॥

**अ० टीका**—तत्र दृष्टांतं स्पष्टयति—**बद्धेति**। पूर्वं बद्धः कारायां निरुद्धः पश्चान्मुक्तो मोचित इत्येतत्। आक्रांतो व्याप्तः॥ १५०॥

**विवेके जाग्रति सति दोषदर्शनलक्षणे॥**
**कथमारब्धकर्मापि भोगेच्छां जनयिष्यति॥ ५१॥**

**रा० टीका**—ननु प्रारब्धकर्मप्राबल्याद्भोगेष्विच्छा भवेद्यदीत्यत्र कर्मवशादिच्छा भवेदित्युक्तं तदनुपपन्नम्। इच्छाविघातिनि विवेकज्ञाने सति तदुत्पत्त्यसंभवादिति शंकते—**विवेक इति**॥ ५१॥

**अ० टीका**—तत्रापि शंकते—**विवेक इति**॥ ५१॥

**रा० टीका**—दोषदर्शने सत्यपीच्छाजन्म संभविष्यति प्रारब्धस्य नानाप्रकारकत्वादिति परिहरति—

**नैष दोषो यतोऽनेकविधं प्रारब्धमीक्ष्यते॥**
**इच्छाऽनिच्छा परेच्छा च प्रारब्धं त्रिविधं स्मृतम्॥५२॥**

**नैषेति**। नानाप्रकारत्वमेव दर्शयति—**इच्छेति**। इच्छाजनकमनिच्छया भोगप्रदं परेच्छया भोगप्रदं चेति त्रिविधमित्यर्थः॥ ५२॥

**अ० टीका**—सिद्धांती समाधत्ते—**नैष इति**। तत्र हेतुः—**यत इति**। ता एवं विधाः संक्षिपति—**इच्छेति**। इच्छादिमूलकमित्यर्थः। अत्र विस्तरस्तु मदीयप्रारब्धध्वांतदीधितावेवानुसंध्येयः। ग्रंथगौरवभयान्नेह प्रतन्यते॥ ५२॥

**अपथ्यसेविनश्चोरा राजदाररता अपि ॥**
**जानंत एव स्वानर्थमिच्छंत्यारब्धकर्मतः ॥ ५३ ॥**

**रा० टीका**—इच्छाप्रारब्धं दर्शयति **अपथ्येति** ॥ ५३ ॥

**अ० टीका**—तत्राऽऽदाविच्छाप्रारब्धमेवोदाहरति- **अपथ्येति ।** रोगिणः संत इत्यार्थिकम् । सर्वं बलवतां पथ्यमिति न्यायात् । **आरब्धेति ।** भीमसेनभुक्तविषसंपृक्तशार्करमोदकश्रीकृष्णकृतनवनीतादिप्रमोषणचंद्रकर्तृकगुरुदारगमननिदर्शनैस्तात्कालिकतत्तद्व्यापारप्रवर्तकारब्धफलकर्मवेगत इति यावत् ॥ ५३ ॥

**रा० टीका**—अपथ्यसेवादीच्छायाः प्रारब्धफलत्वं कुतोऽवगम्यते इत्याशंक्यापरिहार्यत्वादित्यभिप्रेत्याह—

**न चात्रैतद्वारयितुमीश्वरेणापि शक्यते ॥**
**यत ईश्वर एवाऽऽह गीतायामर्जुनं प्रति ॥ ५४ ॥**

**न चेति ।** अत्रास्मिँल्लोकेऽपथ्यादीच्छैतदित्येतत्कुत इत्यत आह—**यत इति** ॥ ५४ ॥

**अ० टीका**—ननु प्रस्तुतगविचारेणोक्तनिदर्शनान्यथासिद्धेः प्रकृतापथ्यसेवादिव्यापारेच्छायाः संछेद एव कार्य इत्याशंकां प्रत्याह—**न चात्रेति ।** अत्र लोके । एतदिच्छाप्राबल्यमूलीभूतं प्रारब्धमित्यर्थः । अपिना तदन्यत्र तदभावः कैमुत्यसिद्ध एवेति द्योत्यते—तत्र हेतुः—यत इति ॥ ५४ ॥

**रा० टीका**—गीतावाक्यं पठति—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥**
**प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति ॥ ५५ ॥**

**सदृशमिति ।** विवेकज्ञानवानपि पुरुषः स्वस्याः स्वकीयायाः प्रकृतेः सदृशमनुरूपं चेष्टते । प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तो ज्ञानवानपि किं पुनर्मूर्खस्तस्मात्प्रकृतिं यांति भूतानि निग्रहः प्रवृत्तिनिवृत्त्योर्निरोधो मयाऽन्येन वा कृतः किं करिष्यति न किमपीत्यर्थः ॥ ५५ ॥

**अ० टीका**—तद्वाक्यमेवोदाहरति **सदृशमिति ।** प्रकृतिरत्र तु विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतिप्रसिद्धविवेकानिराकार्यपूर्वप्रज्ञापदवाच्यज्ञानादिसंस्कारविद्याकर्मणोश्चैव देहाद्युपादानत्वादित्यर्थः । अपिनाऽत्रापि प्रागवदेव कैमुत्यम । भूतानि भवनधर्माणि जातजातादिशरीरावच्छिन्नजीवचैतन्यान्येवेति यावत् । शिष्टं तु स्पष्टमेव । अत्र पूर्वप्रज्ञाख्यविद्यादिसंस्कारनिकरस्य विवेकित्वादिविशेषणाद्यैः संस्कारनिरासद्वारा यत्नवादसिद्धेः सकलशास्त्रसाफल्यमित्याकूतम् । उपपादयिष्याम एवेदं षोडशे सावकाशमिति दिक् ॥ १५५ ॥

**रा० टीका**—तीव्रप्रारब्धस्यापरिहार्यत्वे वचनांतरसंमतिमाह—

**अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ॥**
**तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ ५६ ॥**

**अवश्यमिति ।** अवश्यंभाविनां भावानां दुःखादीनामित्यर्थः ॥ ५६ ॥

**अ० टीका**—ननूक्तस्मृतेरभिप्रायांतरमेव भवत्वित्याशंकां प्रतिबंद्या पराकरोति—

**अवश्यमिति** । प्राचा तु तीव्रप्रारब्धस्यापरिहार्यत्वे वचनांतरसंमतिमाह—**अवश्यमिति** । अवश्यंभाविभावानां दुःखादीनामित्यर्थ इति व्याख्यातम् । प्रतीकारो निरासः । **नलेति** । क्रमात्कृतादिष्वित्यर्थः । अत्र नलयुधिष्ठिरयोर्द्यूतस्य धर्मशास्त्रनिंदितत्वलक्षणदोषदर्शनसत्त्वेऽपि तत्र प्रवृत्तिरवश्यप्रारब्धादेव " न चाऽऽहूतो न निवर्तेत द्यूतादपि रणादपि " इति स्मृतेरेव साऽस्त्विति सांप्रतम् । राजा राजसूयेन यजेतेति नित्यस्यापि तस्य द्वादशवार्षिकविपद्ग्रस्तत्वेन त्याज्यत्ववत्प्रकृतेऽपि त्याज्यत्वसंभवात् । एवं रामस्यापि कनकमृगासंभवज्ञाने सत्यपि तद्धनने प्रवृत्तिर्व्याख्येया । प्रपंच्यते चेदं बोधैक्यसिद्धाविति ॥ ९६ ॥

**रा० टीका**—प्रारब्धस्यापरिहार्यत्वे तत्परिहारासमर्थस्येश्वरस्यानीश्वरत्वप्रसंग इत्याशंक्याऽऽह—

**न चेश्वरत्वमीशस्य हीयते तावता यतः ॥**
**अवश्यंभाविताऽप्येषामीश्वरेणैव निर्मिता ॥ ९७ ॥**

**न चेश्वरत्वमिति** । कुत इत्यत आह—**यतः** । **अवश्यमिति** । यतः कारणादेषां दुःखादीनामवश्यंभाविताऽपीश्वरेणैव निर्मिताऽतो नानीश्वरत्वप्रसंग इत्यर्थः ॥ ९७ ॥

**अ० टीका**—ननु नलयुधिष्ठिरयोर्जीवकोटिनिविष्टयोः कर्मपारतंत्र्येण प्रारब्धकर्मावश्यंभाविदुःखप्रतीकाराशक्तत्वसंभवादुदाहरणार्हत्वेऽपि श्रीरामस्य त्वीश्वरत्वाल्लोकवत्तु लीलाकैवल्यमितिपारमर्षसूत्रादिनिर्णीतमायिकमनुष्यनाट्यप्रकटनेन पूर्वोत्तरमीमांसानिश्चितवेदार्थानुभावनतः सकलजीवाननुजिघृक्षोरादौ कर्मपारतंत्र्यस्यैवासंभवात्कुड्यचित्रन्यायेन तज्जन्यदुःखप्रतीकाराशक्तत्वेऽनुदाहरणत्वमेवेति चेत्सत्यम् । यद्यपि श्रीरामस्येश्वरत्वेन कर्मापारतंत्र्यमेव तथापि सत्यसंकल्पत्वान्मायिकस्वेच्छापारतंत्र्यं तु निर्विवादमेवांगीकार्यम् । तथा च सिद्धांतबिंदौ तावदीश्वरं प्रकृत्योक्तम् । वार्तिककारमते त्वीश्वर एव साक्षीति द्वैविध्यमेव जीवेश्वरभेदेन दृशः । तत्रेश्वरोऽपि त्रिविधः । स्वोपाधिभूताविद्यागुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात् । कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता । कारणीभूतरज उपहितो ब्रह्मा स्रष्टा । हिरण्यगर्भस्तु महाभूतकारणत्वाभावान्न ब्रह्मा । तथाऽपि स्थूलभूतस्रष्टृत्वात्क्वचिद्ब्रह्मेत्युपचर्यते । कारणीभूततम उपहितो रुद्रः संहर्ता । एवं चैकस्यैव चतुर्भुजचतुर्मुखपंचमुखाद्याः पुमाकारः श्रीभारतीभवान्याद्याश्च स्त्र्याकाराः । अन्ये च मत्स्यकूर्मादयोऽनंतावतारा लीलयैवाविर्भवंति भक्तानुग्रहार्थमित्यपि च ध्येयमिति । एवं च मायासंबंधिसत्त्वप्रधानत्वावच्छिन्नस्तन्मात्रप्रकटितलीलाविग्रहः पालनमुख्यव्यापारो विष्णुः स्वेच्छयैव । 'तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे । छंदांसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ' इत्यादिश्रुतेः शास्त्रयोनित्वादिति सूत्राद्वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनादित्यादिस्मृतेश्च स्वाविर्भावितस्ववाग्रूपवेदोपलक्षितसकलशब्दब्रह्मगतसंध्योपासनादिविधिसुरापानादिनिषेधानुष्ठानजनितस्वतोषरोषरूपपुण्यापुण्ययोः सुखदुःखदानावश्यंभावित्वशक्तिमनादिसंसारपरंपरारीत्यैव संकल्पितवानित्यपि सर्वास्तिकसंमतमेव । ततः पुण्यैकानुष्ठानप्राधान्यशालिनां स्वभक्तानां तेन शापानुग्रहसामर्थ्यशक्तिमपि निर्विकल्पसमाध्यंते पुण्यकर्माणि स्वेच्छयैव चित्तशुद्धिस्वर्गादिदानदक्षत्वसामर्थ्यवदकल्पयदित्यप्यवश्यमेवोररीकरणीयम् । तेन च सनत्कुमारदत्तशापवशात्स्वस्य सार्वज्ञ्यविलयपूर्वकमज्ञानोपगमः किंचित्कालं तथा भृगौ समाधिस्थे सति सुरभयाच्छरणागतान्स्वाशिष्यानसुरानाश्रमस्था तत्पत्न्येव स्वपाति-

व्रत्यादितपोमहिम्ना तत्पृष्ठागतसुरवैरिनिकरशस्त्रादिभ्यः सततमरक्षदतः सुरपक्षपातिना विष्णुना स्वकीयसुदर्शनाख्यामोघास्त्रेण तच्छिरश्छेद एवाकारि ततः समाधेर्व्युत्थितो भृगुस्तमशपत्त्वयापि पत्नीवियोगो भविष्यतीति पद्मपुराणप्रसिद्धतमशापवशात्पयोष्णीतीरे नृसिंहावतारं दृष्ट्वा देवदत्तशर्मणो ब्राह्मणस्य पत्नी भीरुत्वादेव तत्कालं मृतेति तेनापि तथैव दत्तशापात्प्रसिद्धवृंदाशापाच्च त्रिवारं श्रीरामावतारे जानकीवियोगश्च समभूदिति सर्वमिदं **बृहद्योगवासिष्ठीयप्रथमसर्ग** एवोपाख्यायते । तत्र हि स्वर्गादिविषयसर्वेषु दोषदर्शनेन परमविरक्तमारिष्टनेमिनामानं कंचिद्राजानं देवदूतसंदिष्टेंद्राज्ञावशाद्वसिष्ठरामसंवादकथनच्छलेनाद्वैतब्रह्मविद्यां प्रबोधयंतं वाल्मीकिं प्रत्यसौ—

**राजोवाच**—' को रामः कीदृशः कस्य बद्धो वा मुक्त एव वा । एतन्मे निश्चितं ब्रूहि ज्ञानं तत्त्वविदां वर ' ।

टीका—ज्ञायतेऽनेनेति ज्ञानं निश्चयकारणमित्यर्थ इति ।

**वाल्मीकिरुवाच**—'शापव्याजवशादेव राजवेषधरो हरिः । आहृताज्ञानसंपन्नः किंचिज्ज्ञोऽसौ भवत्प्रभुः ' ।

टीका—भवत् । अभवत् । अडभावश्छांदसः

**राजोवाच**—' चिदानंदस्वरूपे हि रामे चैतन्यविग्रहे । शापस्य कारणं ब्रूहि कः शप्ता चेति मे वद ' । **वाल्मीकिरुवाच**—' सनत्कुमारो निष्कामोऽप्यवसद्ब्रह्मसद्मनि । वैकुंठादागतो विष्णुस्त्रैलोक्याधिपतिः प्रभुः । ब्रह्मणा पूजितस्तत्र सत्यलोकनिवासिभिः । विना कुमारं तं दृष्ट्वा ह्युवाच प्रभुरीश्वरः । सनत्कुमारस्तब्धोऽसि निष्कामो गर्वचेष्टया । अतस्त्वं भव कामार्तः शरजन्मेति नामतः । तेनापि शापितो विष्णुः सर्वज्ञत्वं तवास्ति यत् । किंचित्कालं हि तत्त्यक्त्वा त्वमज्ञानी भविष्यसि । भृगुभार्यां हतां दृष्ट्वा ह्युवाच क्रोधमूर्छितः । विष्णो तवापि भार्याया वियोगो हि भविष्यति । वृंदया शापितो विष्णुश्छलनं यत्त्वया कृतम् । अतस्त्वं स्त्रीवियोगं तु वचनान्मम यास्यसि । भार्या हि देवदत्तस्य पयोष्णीतीरसंस्थिता । नृसिंहवेषधृग्विष्णुं दृष्ट्वा पंचत्वमागता । तेन शप्तो हि नृहरिर्दुःखार्तः स्त्रीवियोगतः ' ।

टीका—दुःखैर्दुःखसमाख्यैः सुकृतैः कृतः साक्षात्कृतोऽपि नृहरिस्तेन शप्तः । भृगुणैवं कुमारेण शापितो देवशर्मणा । वृंदया शापितो विष्णुस्तेन मानुष्यतां गत इति ॥ तदेवं श्रीरामस्येश्वरत्वेन कर्मपारतंत्र्याभावेऽपि निरुक्तरीत्या स्ववाक्त्वेन स्वाज्ञारूपवेदविहितानुष्ठानात्सुखहेतुः स्वर्गापलक्षणसुकृतोत्पत्तिस्तन्निषिद्धानुष्ठानाद्दुःखहेतुः स्वर्गापलक्षणदुष्कृतोत्पत्तिरित्यानादिसंसारे स्वेच्छयैव नियतं तदेवात्र नियत्यवश्यंभावितादिपदैर्व्यवह्रियते । तस्मात्परमसुकृतिचक्रवर्तिसनत्कुमारे भृग्वादिषु च शापादिसामर्थ्यमपि स्वेच्छानियत्यादेव संपन्नमिति तत्परिपालनं स्वस्यावश्यकमेवेति भावशब्दितदुःखतत्प्रयोजकादिपदार्थानामवश्यंभाविताया: सर्वथाऽप्यप्रतीकार्यत्वमात्रसाम्येन महानुभावनलयुधिष्ठिरयोर्मध्ये श्रीरामस्यापि संग्रहः सुघट एव । एतावांस्तु परं विशेषो यत्तयोर्जीवकोटिनिविष्टयोर्दुःखाद्यवश्यंभाविता कर्मजन्या भगवतः श्रीरामस्य त्वीश्वरकोटिनिविष्टत्वेन सत्यसंकल्पत्वादुक्तरीत्या स्वेच्छाजन्यैवेति । अत एवेदं श्रीरामोदाहरणमाचार्यैरिच्छाप्रारब्धविचार एव निवेशितं न त्वनिच्छादिविचारेऽपि । न चैवमपीश्वरेच्छायां कर्मवत्प्रारब्धपदव्यवहार्यत्वं नास्त्येव तथा च तद्विचारप्रकरणे तत्संग्रहस्य पुनरनौचित्यतादवस्थ्यमिति

स्यमेवेति वाच्यम् । रूढ्या योगरूढ्या वा तत्र तद्व्यवहारस्यासंभवेऽपि योगैः प्रकर्षेणावश्यं-भावित्वलक्षणेनाऽऽरब्धं मायिकवृत्तिरूपं दुष्कृतादिजन्यदुःखादिनैयत्यमितीच्छासंपादनं कृतमिति प्रचुरमारब्धं प्रारब्धं प्रगल्भमारब्धं प्रारब्धं चेत्यादिरूपैरीश्वरेच्छायामपि प्रारब्धपदप्रवृत्तिव्यवहारसंभवात् । तस्माल्लोकदृष्ट्या दुःखमहत्त्वसत्त्वेऽप्यनादिपरंपरया स्वनियतमर्यादापरिपालनविषया परमेश्वरस्य तत्प्रतीकाराकरणमात्रेण नैव पारमैश्वर्यक्षतिः प्रत्युत राजादिवत्स्वविहितमर्यादापरिपालनार्थं शक्तत्वसत्त्वेऽपि दुःखसहस्रसहनमपि भगवता कृतमिति महती कीर्तिरेवेत्याशयं विशदयति—**न चेश्वरत्वमिति** । तत्र हेतुः—**यत इत्यादिना** । एषां दुष्कृतादिभ्यस्तत्तद्देशकालवस्त्ववच्छेदेन दुःखादिजन्मनामित्यर्थः ॥ ९७ ॥

**रा० टीका**—एवं सप्रपंचमिच्छाप्रारब्धमभिधायानिच्छाप्रारब्धं वक्तुमारभते—

**प्रश्नोत्तराभ्यामेवैतद्गम्यतेऽर्जुनकृष्णयोः ॥**
**अनिच्छापूर्वकं चास्ति प्रारब्धमिति तच्छृणु ॥ ९८ ॥**

**प्रश्नोत्तराभ्यामिति** । अनिच्छापूर्वकं च प्रारब्धमस्तीत्येतदर्जुनकृष्णयोः प्रश्नोत्तराभ्यामेव गम्यते ज्ञायत इति योजना । तदभिधानाय शिष्यमभिमुखीकरोति—**तच्छृण्विति**॥९८॥

**अ० टीका**—ननूक्तरीत्या कर्मणां फलावश्यंभाविता तावदीश्वरेच्छैकायत्तेति त्वयोन्नीयते न तु तेन कंठतः क्वचित्तथोक्तमिति प्रायेणोपलभ्यत इत्याशंक्य काकाक्षिगोलकन्यायेन पूर्वोत्तरग्रंथयोरपि क्रमेणान्वययोग्यमेकमर्धं पठन्समाधत्ते—**प्रश्नेति** । एतत्कर्मणां फलावश्यंभावनियमस्येश्वरेच्छैकायत्तत्वमिति यावत् । अर्जुनकृष्णयोः । अत्राभ्यर्हितत्वेनाल्पाजुत्तरत्वेन च कृष्णपदस्यैव पूर्वनिपाताभ्यर्हितत्वेऽप्यर्जुनं निमित्तीकृत्येति **गीताभाष्यप्रयोगाद्भगवद्गीताशा**स्त्राविर्भावकारणतायास्तदेकपर्याप्तत्वेन ततोऽप्यभ्यर्हितत्वात्तद्वाचकपदस्यैव पूर्वनिपात इति प्रतिभाति । प्रश्नोत्तराभ्यामेव । **भगवद्गीतायास्तृतीयाध्यायारंभे**—

" **अर्जुन उवाच**—ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन । तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे । तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ **श्रीभगवानुवाच**—लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति " ॥

इत्युपन्यस्ताभ्यामेवेत्यर्थः । अत्र **मधुसूदनाचार्याणां टीका** दिङ्मात्रमेवोदाह्रियते—ननु तर्हि तेजस्तिमिरयोरिव विरोधिनोर्ज्ञानकर्मणोः समुच्चयासंभवाद्भिन्नाधिकारिकत्वमेवास्तु । सत्यमेवं संभवति । एकमर्जुनं प्रति तूभयोपदेशो न युक्तः । न हि कर्माधिकारिणं प्रतिज्ञाननिष्ठोपदेष्टुमुचिता । न वा ज्ञानाधिकारिणं प्रति कर्मनिष्ठा । एकमेव प्रतिविकल्पेनोपदेश इति चेन्न । उत्कृष्टनिकृष्टयोर्विकल्पानुपपत्तेः । अविद्यानिवृत्त्युपलक्षितात्मस्वरूपे मोक्षो तारतम्यासंभवाच्च । तस्माज्ज्ञानकर्मनिष्ठयोर्भिन्नाधिकारिकत्व एकं प्रत्युपदेशायोगादेकाधिकारिकत्वे च विरुद्धयोः समुच्चयासंभवात्कर्मापेक्षया ज्ञानप्राशस्त्यानुपपत्तेश्च विकल्पाभ्युपगमे चोत्कृष्टमनायाससाध्यं ज्ञानं विहाय निकृष्टमनेकायासबहुलं कर्मानुष्ठातुमयोग्यमिति मत्वा पर्याकुलीभूतबुद्धिः । **अर्जु० ज्या० । तत्किम्** । हे जनार्दन सर्वैर्जनैरर्द्यते याच्यते स्वाभिलषितसिद्धय इति त्वं तथाभूतो मयाऽपि श्रेयोनिश्चयार्थं याचस इति नैवानुचितमिति संबोधनाभिप्रायः । कर्मणो निष्कामादपि बुद्धिरात्मतत्त्वविषया ज्यायसी प्रशस्ततरा चेद्यदि ते तव मता ।

तत्तदा किं कर्मणि घोरे हिंसाद्यनेकायासबहुले मामतिभक्तं नियोजयसि कर्मण्येवाधिकारस्त इत्यादिना विशेषेण प्रेरयसि । हे केशव सर्वेश्वर सर्वेश्वरस्य सर्वेष्टदायिनस्तव मां भक्तं शिष्यस्तेऽहं शाधि मामित्यादिना त्वदेकशरणतयोपपन्नं मां प्रति प्रतारणा नोचितेत्यभिप्रायः । ननु नाहं कंचिदपि प्रतारयामि किं पुनस्त्वामतिप्रियम् । त्वं तु किं मे प्रतारणाचिह्नं पश्यसीति चेत्तत्राऽऽह--' **व्यामिश्रेणेव०** ' । तव वचनं व्यामिश्रं न भवत्येव । मम त्वेकाधिकारिकत्वभिन्नाधिकारिकत्वसंदेहाद्व्यामिश्रं संकीर्णार्थमिव ते यद्वाक्यं मां प्रतिज्ञानकर्मनिष्ठाद्वयप्रतिपादकम् । तेन वाक्येन त्वं मे मम मंदबुद्धेर्वाक्यतात्पर्यापरिज्ञानात् । बुद्धिमंतःकरणम् । मोहयसीव भ्रांत्या योजयसीव परमकारुणिकत्वात्त्वं न मोहयस्येव मम तु स्वाशयदोषान्मोहो भवतीतीवशब्दार्थः । एकाधिकारिकत्वे विरुद्धयोः समुच्चयानुपपत्तेरेकार्थत्वाभावेन च विकल्पानुपपत्तेः प्रागुक्ते यद्यधिकारिभेदं मन्यसे तदेकं मां प्रति विरुद्धयोर्निष्ठयोरुपदेशायोगात्तज्ज्ञानं वा कर्म वैकमेव। अधिकारं मे निश्चित्य वद। येनाधिकारनिश्चयपुरःसरमुक्तेन त्वया मया चानुष्ठितेन ज्ञानेन कर्मणा वैकेन श्रेयो मोक्षमहमाप्नुयां प्राप्तुं योग्यः स्याम्। एवं ज्ञानकर्मनिष्ठयोरेकाधिकारिकत्वे विकल्पसमुच्चययोरसंभवादधिकारिभेदज्ञानायार्जुनस्य प्रश्न इति स्थितम् । इहेतरेषां कुमतं समस्तं श्रुतिस्मृतिन्यायबलान्निरस्तम् । पुनः पुनर्भाष्यकृताऽतियत्नादतो न तत्कर्तुमहं प्रवृत्तः ।

" भाष्यकारमतसारदर्शिना ग्रंथमात्रमिह योज्यते मया ।
आशयो भगवतः प्रकाश्यते केवलं स्ववचसो विशुद्धये " ॥

एवमधिकारिभेदेऽर्जुनेन पृष्टे तदनुरूपं प्रतिवचनम् —**श्रीभगवानुवाच—लोके०** ॥ अस्मिन्नधिकारित्वाभिमते लोके शुद्धाशुद्धांतःकरणभेदेन द्विविधे जने । द्विविधा द्विःप्रकारा निष्ठा स्थितिर्ज्ञानपरता कर्मपरता च । पुरा पूर्वाध्याये । मया नवात्यंतहितकारिणा । प्रोक्ता प्रकर्षेण स्पष्टत्वलक्षणेनोक्ता तथा चाधिकार्यैक्यशंकया मा ग्लासीरिति भावः । हे अनघापापेति संबोधयन्नुपदेशयोग्यतामर्जुनस्य सूचयति । एकैव निष्ठा साध्यसाधनावस्थाभेदेन द्विःप्रकारा न तु द्वे एव स्वतंत्रे निष्ठे इति कथयितुं निष्ठेत्येकवचनम् । तथा च वक्ष्यति—" एकं सांख्यं च योगं च यः पश्यति स पश्यति " इति । तामेव निष्ठां द्वैविध्येन दर्शयति । संख्या सम्यगात्मबुद्धिस्तां प्राप्तवतां ब्रह्मचर्यादेव कृतसंन्यासानाम् वेदांतविज्ञानसुनिश्चितार्थानां ज्ञानभूमिमारूढानां शुद्धांतःकरणानां सांख्यानाम्। ज्ञानयोगेन ज्ञानमेव युज्यते ब्रह्मणाऽनेनेति व्युत्पत्त्या योगस्तेन निष्ठोक्ता । तानि सर्वाणि संयम्य युक्त आसीत मत्पर इत्यादिना । अशुद्धांतःकरणानां तु ज्ञानभूमिमनारूढानाम् । योगिनां कर्माधिकारियोगिनाम् । कर्मयोगेन कर्मैव युज्यतेऽनःकरणशुद्ध्याऽनेनेति व्युत्पत्त्या योगस्तेन निष्ठोक्तांतःकरणशुद्धिद्वारा ज्ञानभूमिकाऽऽरोहणार्थं धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यत इत्यादिना। अत एव न ज्ञानकर्मणोः समुच्चयो विकल्पो वा । किंतु निष्कामकर्मणां शुद्धांतःकरणानां सर्वकर्मसंन्यासेनैव ज्ञानमिति । चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैकमेव त्वां प्रति द्विविधा निष्ठोक्ता । 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृण्विति' अतो भूमिकाभेदेनैकमेव प्रत्युभयोपयोगान्नाधिकारभेदेऽप्युपदेशवैयर्थ्यमित्यभिप्राय इत्यादि । तदेवं पूर्वाचार्यैरवधृतभगवद्गीतागतार्जुनकृतप्रश्नभगवत्कृतोत्तरानुसारेणैव कर्मसंबंधिफलावश्यंभावनियमनस्येश्वरेच्छामात्रायत्तत्वं स्पष्टमेव गम्यते ज्ञायत इत्यन्वयः ।

नन्वत्रार्जुनं प्रति पूर्वाध्यायसूत्रितवेदार्थतापन्नयोर्ज्ञानकर्मनिष्ठयोः ममुच्चयादिविषयकसंशयोपशम एव तयोः साध्यसाधनभावेनैकाधिकारिकत्वमात्रकथनाद्भगवता कृत इति प्रतीयते नैतावता कर्मफलावश्यंभावनैयत्यस्येश्वरेच्छामात्रायत्तत्वमनादित्वेन सिद्ध्यतीति चेद्भ्रांतोऽसि । प्रागुदाहृताखिलाचार्यतात्पर्यनिर्णायकसिद्धांतबिंदुना श्रीकृष्णस्येश्वरत्वं तु निर्विवादमेव । तथा च तेनानादिसंसारपरंपरायां सत्यसंकल्पत्वेन स्वेच्छयैवोक्तनिष्ठयोरुभयोरपि संकल्पितफलावश्यंभावनैयत्यस्य प्रकृते कंठत एव प्रकटितत्वान्नैवात्र विवादगंधोऽपीति दिक् । एवं पूर्वग्रंथान्वययोग्यं प्रश्नोत्तराभ्यामेवैतद्गम्यतेऽर्जुनकृष्णयोरित्यर्धं व्याख्यानमिदानीं तदपेक्षितोत्तरार्धेन सह तत्संबंधकथनपूर्वकं प्राच्यरीत्यैव व्याक्रियते । अस्त्वेवमिच्छानिच्छापरेच्छा च प्रारब्धं त्रिविधं स्मृतमिति प्राक्प्रतिज्ञातत्रिविधप्रारब्धमध्ये तावदिच्छाप्रारब्धमथाप्यनिच्छाप्रारब्धे किं प्रमाणमित्यत्राऽऽह—**प्रश्नेत्यादिना** । चोऽप्यर्थः । अनिच्छापूर्वकमपि प्रारब्धमस्तीत्येतदर्जुनकृष्णयोरथ केनेत्यादिना वक्ष्यमाणाभ्यां प्रश्नोत्तराभ्यामेव गम्यत इति संबंधः । कथं तदुक्तप्रश्नादिकमिति पृच्छंतमंतेवासिनमालक्ष्य तमभिमुखीकरोति—**तदित्यादिशेषेण** ॥ १५८ ॥

**रा० टीका**—तत्रार्जुनस्य प्रश्नं तावद्दर्शयति—

**अथ केनप्रयुक्तोऽयं पापं चरति पूरुषः ॥**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ५९ ॥**

**अथ केनेति** । हे वार्ष्णेय वृष्णिसंबंधिन्नयं पुरुषः केन प्रयुक्तः प्रेरितोऽनिच्छन्नपीच्छामकुर्वन्नपि राज्ञा बलान्नियोजित इव पापं चरति आचरतीति ॥ ५९ ॥

**अ० टीका**— तत्र प्रश्नवाक्यं प्रथमं पठति—**अथेति** । अत्रापि **मधुसूदनाचार्याणामेव** व्याख्यानं लिख्यते यथोपयुक्तम् —एवं तावद्भगवन्मतांगीकारिणां श्रेयःप्राप्तिस्तदनंगीकारिणां च श्रेयोमार्गभ्रष्टत्वमुक्तम् । श्रेयोमार्गभ्रंशेन फलाभिसंधिपूर्वककाम्यकर्माचरणे च केवलपापमात्राचरणे च बहूनि कारणानि कथितानि । ये त्वेतदभ्यसूयंत इत्यादिना । तत्रायं संग्रहश्लोकः—

'श्रद्धा हानिस्तथाऽसूया दुष्टचित्तत्वमूढते । प्रकृतेर्वशवर्तित्वं रागद्वेषौ च पुष्कलौ । परधर्मरुचित्वं चेत्युक्ता दुर्मार्गवाहकाः ॥

तत्र काम्यप्रतिषिद्धकर्मप्रवृत्तिकारणमपनुद्य भगवन्मतमनुवर्तितुं तत्कारणावधारणाय—**अर्जुन उवाच । अथ केन०** । ध्यायतो विषयान्पुंस इत्यादिना पूर्वमनर्थमूलमुक्तम् । सांप्रतं च प्रकृतेर्गुणसंमूढा इत्यादिना बहुविस्तरं कथितम् । तत्र किं सर्वाण्यपि समप्राधान्येन कारणान्यथ वैकमेव मुख्यं कारणमितराणि तु तत्सहकारीणि केवलम् । तत्राऽऽद्ये सर्वेषां पृथक्पृथङ्निवारणे महान्प्रयासः स्यात् । अंत्ये त्वेकस्मिन्नेव निराकृते कृतकृत्यता स्यादित्यतो ब्रूहि मे । केन हेतुना प्रयुक्तः प्रेरितोऽयं त्वन्मताननुवर्ती सर्वविज्ञानविमूढपुरुषः पापमनर्थानुबंधि सर्वं फलाभिसंधिपुरःसरं काम्यं चित्रादिशत्रुवधसाधनं च श्येनादिप्रतिषिद्धं च कलंजभक्षणादि बहुविधं कर्माऽऽचरति स्वयं कर्तुमनिच्छन्नपि । न तु निवृत्तिलक्षणं परमपुरुषार्थानुबंधित्वात्समुपदिष्टं कर्मेच्छन्नपि करोति । न च पारतंत्र्यं विनेत्थं संभवति । अतो येन बलादिव नियोजितो राज्ञेव भृत्यस्त्वन्मतविरुद्धं सर्वानर्थानुबंधित्वं जानन्नपि तादृशं कर्माचरति तमनर्थमार्गप्रवर्तकं मां प्रति ब्रूहि ज्ञात्वा समुच्छेदाय यतेयेत्यर्थः । हे वार्ष्णेय वृष्णिवंशे

मन्मातामहकुले कृपयाऽवतीर्णेति संबोधनेन वार्ष्णेयीसुतोऽहं त्वया नोपेक्षणीय इति च सूचयति ॥ १५९ ॥

**रा० टीका**—श्रीकृष्णस्योत्तरमाह—

**काम एष क्रोध एष रजोगुणसमुद्भवः ॥**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ १६० ॥**

**काम इति** । एष पुरुषप्रवर्तको रजोगुणात्समुद्भव उत्पत्तिर्यस्य स रजोगुणसमुद्भवः काम एष प्रसिद्धोऽयं कामः कदाचित्क्रोधरूपेणापि परिणमते । ततः क्रोधः स पुनः कीदृशः महाशनः महदशनं विषयजातं यस्य स महाशनः । महापाप्मा महतः पापस्य हेतुत्वादुपचारान्महापाप्मत्वमस्य । अत इह संसार एनं कामक्रोधरूपिणं वैरिणं विद्धि । अयमभिप्रायः प्रारब्धवशादुद्रिक्तरजोगुणकार्ययोः कामक्रोधयोरन्यतरस्यैव पुरुषप्रवर्तकत्वं न प्रवृत्तिरिच्छाया इति ॥ १६० ॥

**अ० टीका**—एवमर्जुनेन पृष्टे—" **अथो** खल्वाहुः काममय एवायं पुरुषः " इति । " आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्यादि **श्रुतिसिद्धमुत्तरम्**—**श्रीभगवा० । काम एष० ।** यस्त्वया पृष्टो हेतुर्बलादनर्थमार्गे प्रवर्तकः स एष काम एव महाञ्छत्रुः । यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम् । ननु क्रोधोऽप्यभिचारादौ प्रवर्तको दृष्ट इत्यत आह । क्रोध एषः । काम एव केनचिद्धेतुना प्रतिहतः क्रोधत्वेन परिणमतेऽतः क्रोधोऽप्येष एव । एतस्मिन्नेव महावैरिणि निवारिते सर्वपुरुषार्थप्राप्तिरित्यर्थः । तन्निवारणोपायज्ञानाय तत्कारणमाह । रजोगुणसमुद्भवः । दुःखप्रवृत्तिबलात्मको रजोगुण एव समुद्भवः कारणं यस्यातःकारणानुविधायित्वात्कार्यस्य सोऽपि तथा । यद्यपि तमोगुणोऽपि तस्य कारणं तथाऽपि दुःखे प्रवृत्तौ च रजस एव प्राधान्यात्तस्यैव निर्देशः । एतेन सात्त्विक्या वृत्त्या रजसि क्षीणे सोऽपि क्षीयत इत्युक्तम् । अथवा तस्य कथमनर्थमार्गे प्रवर्तकत्वमित्यत आह । रजोगुणस्य प्रवृत्त्यादिलक्षणस्य समुद्भवो यस्मात् । कामो हि विषयाभिलाषात्मकः स्वयमुद्भूतो रजः प्रवर्तयन्पुरुषं दुःखात्मके कर्मणि प्रवर्तयति तेनायमवश्यं हंतव्य इत्यभिप्रायः । ननु सामदानभेददंडाश्चत्वार उपायास्तत्र प्रथमत्रिकस्यासंभवे चतुर्थो दंडः प्रयोक्तव्यो न तु हठादेवेत्याशंक्य त्रयाणामसंभवं वक्तुं विशिनष्टि । महाशनो महापाप्मेति । महदशनमस्येति महाशनः "यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्" इति स्मृतेः । अतो न दानेन संधातुं शक्यः । नापि सामभेदाभ्यां यतो महापाप्माऽत्युग्रः । तेन हि बलात्प्रेरितोऽनिष्टफलमपि जानन्पापं करोति । अतो विद्धि जानीहि । एनं काममिह संसारे वैरिणं तदेतत्सर्वं विवृतं **वार्तिककारैरात्मैवेदमग्र** आसीदिति श्रुतिव्याख्याने—

" प्रवृत्तौ च निवृत्तौ च यथोक्तस्याधिकारिणः । स्वातंत्र्ये सति संसारसृतौ कस्मात्प्रवर्तते । न तु निःशेषविध्वस्तसंसारानर्थवर्त्मनि । निवृत्तिलक्षणे वाच्यं केनायं प्रेर्यतेऽवशः । अनर्थपरिपाकत्वमपि जानन्प्रवर्तते । पारतंत्र्यमृते दृष्टाप्रवृत्तिर्नेदृशी क्वचित् । तस्माच्छ्रेयोर्थिनः पुंसः प्रेरकोऽनिष्टकर्मणि । वक्तव्यस्तन्निरासार्थमित्यर्थो स्यात्परा श्रुतिः । अनाप्तपुरुषार्थोऽयं निःशेषानर्थसंकुलः । इत्थं कामयतेऽनाप्तान्पुमर्थान्साधनैर्जडः । जिहासति तथाऽनर्था-

नविद्वानात्मनिश्चितान् । अविद्योद्भूतकामः सन्नथो खल्विति च श्रुतिः । अकामतः क्रियाः काश्चिद्दृश्यंते नेह कस्यचित् । यद्यद्धि कुरुते जंतुस्तत्तत्कामस्य चेष्टितम् । काम एष क्रोध एष इत्यादिवचनं स्मृतेः । प्रवर्तको नापरोऽतः कामादन्यत्प्रतीयते " इति ।

अकामत इति **मनु**वचनम् । अन्यत्स्पष्टम् ॥ १६० ॥

**रा० टीका**—नन्वत्र कामक्रोधयोरेव पुरुषप्रवर्तकत्वमुपलभ्यते नानिच्छाप्रारब्धस्येत्याशंक्य तस्यैव प्रवर्तकत्वप्रतिपादकं तद्वाक्यं पठति—

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ॥**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६१ ॥**

**स्वभावजेनेति** । कौंतेय स्वेनैवानुष्ठितेनात एव स्वकीयेन प्रारब्धेन कर्मणा निबद्धः सन्यत्कर्तुं नेच्छसि तदपि मोहादविवेकतोऽवशः परवशः करिष्यसीत्यतोऽनिच्छाप्रारब्धमस्तीत्यभ्युपगंतव्यमिति भावः ॥ ६१ ॥

**अ० टीका**—नन्वत्र कामो हि विषयाभिलाषात्मक इति **मधुसूदनाचार्य**वचनादिष्टशब्दादिविषयलालस्यात्मककामस्यैव तत्तद्विषयसंपादनादौ प्रवर्तकता प्रतीयते तथा चोक्तानिच्छापूर्वकप्रारब्धविषयकप्रमाणकथनप्रतिज्ञायां किमायातमिति चेद्बाढम् । अत्रार्जुनप्रश्ने यद्यप्यनिच्छन्निति पदध्वनिनानिच्छापूर्वकप्रवृत्तिकारणीभूतवस्तुन एव पृष्टत्वेन भगवत्कृतोत्तरे तस्यादृष्टस्य दृष्टरूपसंतरा स्पष्टत्वासंभवादुक्तकामरूपेण कथयितुर्भगवतस्तत्रैव तात्पर्यपर्यवसानेऽपि तत्र स्पष्टतरं तत्प्रतिपत्त्यर्थं तदीयमेवाष्टादशाध्यायस्थं वाक्यमस्तीति मनसि निधायाऽऽचार्यस्तत्पठति-**स्वभावजेनेति** । अत्रापि **श्रीमधुसूदनीय**मेव व्याख्यानं लिख्यते—प्रकृतिं विवृणोति । स्वभावजेन पूर्वोक्तक्षत्रियस्वभावजेन शौर्यादिना स्वेनानागंतुकेन कर्मणा निबद्धो वशीकृतः । त्वं हे कौंतेय यद्बंधुवधादिनिमित्तं युद्धम् । मोहात्स्वतंत्रोऽहं यथेच्छामि तथा संपादयिष्यामीति भ्रमात्कर्तुं नेच्छसि । तदवशोऽप्यनिच्छन्नपि स्वाभाविककर्मपरतंत्रः परमेश्वरपरतंत्रश्च करिष्यस्येवेति ॥ १६१ ॥

**रा० टीका**—इदानीं परेच्छाप्रारब्धमस्तीत्याह—

**नानिच्छंतो न चेच्छंतः परदाक्षिण्यसंयुताः ॥**
**सुखदुःखे भजंत्येतत्परेच्छापूर्वकर्म हि ॥ ६२ ॥**

**नानिच्छंत इति** । अनिच्छंतोऽपि न भजंति । इच्छंतोऽपि न भजंति । किंतु परदाक्षिण्यसंयुक्ताः संतस्तत्प्रीत्यर्थमेवसुखदुःखे अनुभवंति । अत एतत्सुखादिभोगहेतुभूतं परेच्छापूर्वकं प्रारब्धं प्रसिद्धमित्यर्थः । अत एव दोषदर्शने सत्यपि प्रारब्धस्यापरिहार्यत्वात्तस्येच्छाजनकत्वं न निवारयितुं शक्नोतीति भावः ॥ ६२ ॥

**अ० टीका**—एवं प्रतिज्ञातत्रिविधप्रारब्धमध्ये तावदिच्छाऽनिच्छात्मके ते प्रतिपाद्य तृतीयं परेच्छाप्रारब्धमपि संक्षिपति—**नानिच्छंत इति । परेति** । दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्चेत्यमरादितरजनसामर्थ्यप्रेरिताः संत इत्यर्थः । जीवा इत्याधिकम् । सुखदुःखे भजंति हरिश्चंद्रवद्वसिष्ठविश्वामित्राभ्यां कृतप्रसिद्धतरानुग्रहनिग्रहद्वाराऽनुभवंतीति संबंधः । हिरवधारणे । एतदेव परेच्छापूर्वकर्मेति योजना ॥ १६२ ॥

**रा० टीका**—ननु तत्त्वविदोऽप्यिच्छांगीकारे किमिच्छन्निति श्रुतिविरोध इति शंकते—

**कथं तर्हि किमिच्छन्नित्येवमिच्छा निषिध्यते ॥**
**नेच्छानिषेधः किन्त्विच्छाबाधो भर्जितबीजवत् ॥ ६३ ॥**

**कथं तर्हीति** । किमिच्छन्नित्यनेन वाक्येन कथमिच्छाभावो वर्णित इत्यर्थः । नानेनेच्छाभावोऽभिधीयते किंतु सत्या अपि तस्याः समर्थप्रवृत्तिजनकत्वं नास्तीति बोध्यत इति परिहरति—**नेच्छानिषेध इति** । स्वरूपेण सत्या अपि तस्याः सामर्थ्यराहित्ये दृष्टांतमाह—**भर्जितेति** ॥ ६३ ॥

**अ० टीका**—नन्वेवं जीवन्मुक्तानामप्युक्तत्रिविधप्रारब्धकर्मसंभवो जीवन्मुक्त्यन्यथानुपपत्त्यैव वाच्यस्तथा चाऽऽत्मानं चेदित्याद्युपक्रांतश्रुतौ किमिच्छन्नित्यादि वाक्यविरोधमाशंक्य समाधत्ते—**कथं तर्हीति** ॥ १६३ ॥

**रा० टीका**—संक्षेपेणोक्तमर्थं प्रपंचयति—

**भर्जितानि तु बीजानि संत्यकार्यकराणि च ॥**
**विद्वदिच्छा तथेष्टव्याऽसत्त्वबोधान्न कार्यकृत् ॥ ६४ ॥**

**भर्जितानीति** । यथा भर्जितानि बीजानि स्वयं स्वरूपेण विद्यमानान्यपि नांकुरादिकार्यकराणि भवंति तथा विद्वदिच्छा स्वयं विद्यमानाऽपीप्स्यमाणपदार्थस्यासत्त्वज्ञानेन बाधितत्वान्न व्यसनादिकार्यक्षमेत्यर्थः ॥ ६४ ॥

**अ० टीका**—उक्तदृष्टांतं स्पष्टयति—**भर्जितानि त्विति** । दार्ष्टांतिके योजयति—**विद्वदिति** । यथा भर्जितानि व्रीह्यादिबीजानि सत्युत्पादकान्यप्यंकुराद्युत्पादकानि नैव भवंति तथा ब्रह्मविदां सौभयादीनामिच्छाऽप्यसत्त्वबोधाद्यावद्द्वैतमिथ्यात्वोपलक्षिता द्वैताद्वैतब्रह्मात्मैक्यसाक्षात्कारात्कार्यकृत्पुण्याद्युत्पादनद्वारा प्रारब्धपरिसमाप्त्युत्तरं द्वैतानुभाविका नैव भवतीत्येवैष्टव्येत्यन्वयः ॥ १६४ ॥

**रा० टीका**—ननु तर्हि विदुष इच्छैव नांगीकर्तव्या फलाभावादित्याशंक्य फलाभावोऽसिद्धो भोगलक्षणफलसद्भावादिति सदृष्टांतमाह—

**दग्धबीजमरोहेऽपि भक्षणायोपयुज्यते ॥**
**विद्वदिच्छाऽप्यल्पभोगं कुर्यान्न व्यसनं बहु ॥ १६५ ॥**

**दग्धबीजमिति** । दग्धं भर्जितमिति यावत् । व्यसनं विपदादिरूपं बहुविधम् । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यभिधानात् ॥ ६५ ॥

**अ० टीका**—ननूक्तदृष्टांतदार्ष्टांतिकयोरुभयोरप्यकार्यकरत्वं क्रमाद्दग्धत्वविद्वत्त्वाभ्यां यदुक्तं तत्किं यत्किंचिदकार्यकरत्वं सर्वथा वा । नाऽऽद्यः । अदग्धबीजानामप्यनुप्तत्वेनोप्तानामप्यनावृष्ट्याद्युपहतत्वेन चांकुरादि यत्किंचित्कार्याजनकत्वस्य प्रायो बीजत्वावच्छेदेनैव सर्वत्रापि दृष्टतया दृष्टांते दग्धत्वस्याप्रयोजकत्वात् । एवमविदुषां रंभासंभोगादीच्छासत्त्वेऽपि मर्त्यलोके तथा स्वर्लोकेऽपि विना तादृशसुकृतमकार्यकरत्वदर्शनेन दार्ष्टांतिकेऽपि विद्वत्त्वस्याप्रयोजकत्वाच्च । नांत्यः । भक्षणादिकार्यस्य प्रारब्धफलोपभोगकार्यस्य च क्रमात्सत्त्वादित्याशंक्य भावानवबोधनिबंधनैवेयं शंकेति समाधित्सुः सिद्धांत्युभयत्रापि स्वाशयं विशदयति—**दग्धे-**

ति । अल्पेति । जरत्कार्वादिवद्यत्किंचिदुपभोगमेव न तु भरतादिवज्जन्मांतरापादकतादात्म्याध्यासाधानमित्यर्थः । व्यसनं विपदि भ्रंशे दोषे कामजकोपज इत्यमरस्तथा व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्ता निष्फलोद्यम इति विश्वश्च ॥ १६९ ॥

रा० टीका—ननु कर्मैव भोगद्वारा व्यसनमपि जनयेदित्याशंक्याऽऽह—

**भोगेन चरितार्थत्वात्प्रारब्धं कर्म हीयते ॥**
**भोक्तृव्यसत्यता भ्रांत्या व्यसनं तत्र जायते ॥ ६६ ॥**

भोगेनेति । प्रारब्धकर्मणो भोगमात्रहेतुत्वान्न व्यसनजनकत्वमित्यर्थः । कुतस्तर्हि व्यसनजन्मेत्यत आह—भोक्तृव्येति । तत्र तस्मिन्विषये ॥ ६६ ॥

अ० टीका—ननु विदुषोऽपीच्छया भोगसत्त्वे तद्वियोगादिनिमित्तकं विपदादिलक्षणं बह्वपि व्यसनं स्यादेवेत्याशंक्य भोगप्रयोजकप्रारब्धस्य जीवाय सुखदुःखतत्प्रयोजकदेहादिप्रदान एव निर्बंधात्तावन्मात्रेणैव तच्चरितार्थं सद्भरतादिवन्नैवोक्तव्यसनं कर्तुं शक्नोतीति समाधत्ते—भोगेनेति । न चैवं तर्हि भरतादेरुक्तव्यसनं कुतः संपन्नमिति वाच्यम् । अज्ञत्वमूलकभोक्तृव्यहरिणतर्णककारुण्यप्रयोजकस्वतच्छरीरादिमत्यत्वभ्रांतेरेवेत्याह—भोक्तृव्येति ॥१६६॥

रा० टीका—व्यसनहेतुं भ्रमं दर्शयति—

**मा विनश्यत्वयं भोगो वर्धतामुत्तरोत्तरम् ॥**
**मा विघ्नाः प्रतिबध्नंतु धन्योऽस्म्यस्मादिति भ्रमः ॥ ६७ ॥**

मा विनश्यत्विति । अयं भोगो मा विनश्यतु । एष उत्तरोत्तरं वर्धतां विघ्नाश्चैनं मा प्रतिबध्नंत्वस्य प्रतिबंधं मा कुर्वंत्वस्मादेव भोगादहं धन्यः कृतार्थोऽस्मीत्येवंरूपो भ्रमो भवति । ततश्च व्यसनमित्यर्थः ॥ ६७ ॥

अ० टीका—ननु देहाद्यात्मकः सर्वोऽपि प्रपंचः सामान्यतः सर्वेऽप्यज्ञाः सत्य इति यथा वदंत्येवं कलिकालेऽद्य वेदांतशास्त्रावलंबेन बहिः प्रायशः सर्वेषां मुखपिधानं कुर्वाणाः पंडितंमन्याः पामराः केवलमंतर्यथेष्टचेष्टैकपराः सर्वदा तन्मिथ्यात्वमपि ब्रुवाणाः सहस्रशोऽप्युपलभ्यंते तत्कथं बुभुत्सुना स्वबोधतद्दार्ढ्याद्यर्थं सुपरीक्ष्य तन्निर्णयः कार्य इत्याशंक्य भ्रमादेवेति वक्तुं भ्रमस्य स्वानुभवादिगोचरं विशिष्टतरं स्वरूपमभिनीय विशदयति—मा विनश्यत्विति ॥ १६७ ॥

रा० टीका—प्रसंगादस्य परिहारोपायमाह—

**यदभावि न तद्भावि भावि चेन्न तदन्यथा ॥**
**इति चिंताविषघ्नोऽयं बोधो भ्रमनिवर्तकः ॥ ६८ ॥**

यदभावीति । यद्भवितुमयोग्यं तन्न भवेदेव । भवितुं योग्यं चेत्तदन्यथा न भवेदेवेत्येवंरूपश्चिंताविषघ्नः । इदं मे श्रेयः कदा भविष्यतीदमनिष्टं कदा निवर्तिष्यत इत्येवमादिचिंतैव विषमिव स्वसंसृष्टपुरुषस्य नाशहेतुत्वाद्विषमिदं चिंताविषं हंतीति चिंताविषघ्नः । एवंभूतो यो बोधः सोऽयं भ्रमनिवर्तकः पूर्वोक्तभ्रमस्य निवर्तक इत्यर्थः ॥ ६८ ॥

अ० टीका—नन्वस्त्वेवं तेषां तत्तव्द्यवहारलिंगगम्योऽयमंतर्भ्रमनिर्णयस्तथाऽपि विदुषामपि प्रारब्धापादितभोगेच्छादिसत्त्वे भोग्येष्टवियोगादिसंभावितविपदादिव्यसनसत्त्वं तदवस्थ-

मेवेति चेन्न । तेषां संभावितसकलदुःखादिसंसारार्णवजन्यकालकूटशामकदृढतमविवेकात्मकमहामंत्रशालित्वादित्यभिप्रायेण तदध्यवसायं प्रकटयति—**यदिति ।** सत्यसंकल्पप्रारब्धफलप्रदेश्वरसंकेतेनेति शेषः । शिष्टं तु स्पष्टमेव ॥ १६८ ॥

**रा० टीका—**ननु विद्वदविदुषोरुभयोरपि भोगित्वाविशेष एकस्य व्यसनमपरस्य तु तन्नेत्येतत्कुत इत्याशंक्य विपरीतज्ञानसत्त्वासत्त्वाभ्यां तत्सिद्धिरित्याह—

**समेऽपि भोगे व्यसनं भ्रांतो गच्छेन्न बुद्धवान् ॥**
**अशक्यार्थस्य संकल्पाद्भ्रांतस्य व्यसनं बहु ॥ ६९ ॥**

**समेऽपीति ।** बुद्धवान् ज्ञानवान् ज्ञानीत्यर्थः । भ्रांतेः कथं व्यसनहेतुत्वमित्यत आह—**अशक्यार्थस्येति** ॥ ६९ ॥

**अ० टीका—**एवं तर्हि विद्वदविदुषोरुभयोरपि प्रारब्धकर्मोपादितसुखादिफलोपभोगसाम्येऽपि क्रमादर्थानर्थौ विवेकाविवेकमूलकावेवेति चेच्चिरं जीवन् भवानित्याशयेन देशिकस्तद्वचनमनूद्य भ्रांतस्य बहुव्यसने हेतुमप्याह समेऽपीत्यादिपूर्वोत्तरार्धाभ्याम् । **बुद्धेति ।** बुद्धं विचारितं तत्त्वमस्यादिमहावाक्यजन्यचरमप्रमाविपर्यीकृतमद्वैतब्रह्मात्मैक्यं द्वैतमिथ्यात्वपूर्वकमनुसंधीयमानत्वेनास्ति सर्वदास्येति तथेति यावत् । **अशक्येति ।** मा विनश्यत्वयं भोगो वर्धतामुत्तरोत्तरमित्याद्यनुपदोदीरितासंभावितवस्तुन इत्यर्थः ॥ १६९ ॥

**मायामयत्वं भोगस्य बुद्ध्वाऽऽस्थामुपसंहरन् ॥**
**भुंजानोऽपि न संकल्पं कुरुते व्यसनं कुतः ॥ १७० ॥**

**रा० टीका**—विवेकिनस्तदभावं दर्शयति —**मायामयत्वमिति** ॥ ७० ॥

**अ० टीका**—ननु तर्हि तत्त्वविदः कथं प्रारब्धभोगेऽनुभव इत्यपेक्षायां तं संक्षिपति—**प्रायेति ।** भोग्यस्य स्रक्चंदनवनितादेः । आस्थां प्रमानिर्धारितामिति यावत् । संकल्पं मा विघ्नाः प्रतिबध्नंतु धन्योऽस्म्यस्मादित्यादिवृत्तिविशेषमित्यर्थः । अपिनोक्तसंकल्पाभावे व्यसनाभावः कैमुत्यसिद्ध इति ध्वन्यते । तदेवाऽऽक्षेपणापि स्फुटयति—**व्यसनं कुत इति** ॥ १७० ॥

**स्वप्नेन्द्रजालसदृशमचिंत्यरचनात्मकम् ॥**
**दृष्टनष्टं जगत्पश्यन्कथं तत्रानुरज्यति ॥ ७१ ॥**

**रा० टीका—**ननु मायामयत्वबोधे सत्यपि भोगस्य तदानीतनसुखहेतुत्वात्कृत आस्थोपसंहार इत्याशंक्य बहुविधदोषदर्शनादित्याह— **स्वप्नेंद्रेति** ॥ ७१ ॥

**अ० टीका**—ननु द्वैतस्य मिथ्यात्वेऽपि चित्रशतपत्रनेत्रन्यायेन चंद्रचंद्राननात्मकस्य तस्य तात्कालिकरम्यतमत्वेन कथं तत्रास्थोपसंहारः सुकर इत्याशंक्योक्तचित्रशतपत्रनेत्रापेक्षयाऽप्यस्य प्रपंचगतेष्टविषयस्य हीनसत्ताकत्वानुभवायुक्त एव तद्विषयकास्थोपसंहार इति सदृष्टांतं साक्षेपं संक्षिपति—**स्वप्नेति ।** अद्वैतशास्त्रे हि दृष्टिसृष्टिवादः सृष्टदृष्टिवादश्चेत्यधिकारिभेदेन मतद्वयं सर्वपूर्वाचार्यसंमतमेव । तत्राऽऽद्ये दृश्यसत्ताप्रातिभासिकी दृक्सत्ता तु पारमार्थिक्येवेति सत्ताद्वैविध्यम् । अंत्ये तु प्रातिभासिकशुक्तिरजतादिसत्तापेक्षया व्यावहारिक्यन्यैवाऽऽकाशादेः सत्ताद्वयेऽपि मिथ्यात्वादिसाम्येऽपीति पारमार्थिकब्रह्मसत्तया सह सत्तात्रैविध्यांगीकारः । ब्रह्मज्ञानेतरबाध्यत्वाबाध्यत्वाभ्यामेव प्रातिभासिकव्यावहारिकसत्तयोर्भेदः । स-

वैमिदं बोधैक्यसिध्यादौ प्रपंचयिष्यामः । एवं चेह प्रथममताधिकारिणं प्रति स्वप्नदृष्टांतोपन्यासश्चरममताधिकारिणं प्रति तु चरमदृष्टांतोपन्याम इत्याशयः । इंद्रजालं हि मंत्रादिक्षुब्धमायाप्रकटितमैंद्रजालिकायत्तसत्ताकं नगरादिकं सुप्रसिद्धमेव । वस्तुतस्तु तस्यापि प्रातिभासिकत्वेऽपि चित्रादिवत्सोपाधिकभ्रमत्वेन स्वप्नाद्यपेक्षया किंचिदधिकसत्ताकत्वाव्यावहारिकजगदृष्टांतत्वमित्याकूतम् । तत्र हेतुः । अचिंत्येति दृष्टेति च व्युत्क्रमेण । क्षणप्रभावदृष्टं सदेव नष्टं क्षणभंगुरमित्यर्थः ॥ १७१ ॥

**रा० टीका**—ननु स्वस्वप्नेंद्रजालमादृश्यादिज्ञाने सत्यामक्तिभावो न भवेत्तदेव कुतो जायत इत्याशंक्य तज्जन्मोपायमाह--

**स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन्स्वजागरम् ॥**
**चिंतयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥ ७२ ॥**

**स्वस्वप्नमिति ।** श्लोकद्वयेन स्वकीयस्वप्नमपरोक्षतया दृष्ट्वा स्वकीयं च जागरमनुभवन्स्वप्नजागरावुभावप्यप्रमत्तः सन्मुहुश्चिंतयेत्स्वप्नतुल्योऽयं जागर इति ॥ ७२ ॥

**अ० टीका**—तत्राऽऽद्याधिकारिणं प्रति तदृष्टांतानुसंधानं विधत्ते—**स्वस्वप्नेति ।** आपरोक्ष्येण साक्षिप्रत्यक्षेण ॥ १७२ ॥

**चिरं तयोः सर्वसाम्यमनुसंधाय जागरे ॥**
**सत्यत्वबुद्धिं संत्यज्य नानुरज्यति पूर्ववत् ॥ ७३ ॥**

**रा० टीका**—एवं तयोः स्वप्नजागरयोः सर्वसाम्यं तात्कालिकभोगहेतुत्वपरिणतिविरसत्वविनाशित्वादिलक्षणं चिरमनुसंधाय जागरेऽपि सत्यत्वबुद्धिं परित्यज्य जाग्रद्वस्तुष्वपि पूर्ववज्जगत्सत्यत्वज्ञानदशायामिव नानुरज्यत्यनुरक्तो न भवतीत्यर्थः ॥ ७३ ॥

**अ० टीका** फलितमाह—**चिरमिति** ॥ १७३ ॥

**रा० टीका**—ननु प्रपंचगोचरस्य मिथ्यात्वज्ञानस्य विषयसत्यत्वोपजीविनो भोगस्य च परस्परविरोधान्मिथ्यात्वज्ञाने सति कथं भोगसिद्धिरित्याशंक्य भोगस्य विषयसत्यत्वापेक्षाभावान्न विरोध इति परिहरति--

**इंद्रजालमिदं द्वैतमचिंत्यरचनात्वतः ॥**
**इत्यविस्मरतो हानिः का वा प्रारब्धभोगतः ॥ ७४ ॥**

**इंद्रजालमिति ।** इदं द्वैतं भोग्यजातमचिंत्यरचनात्वादिंद्रजालवन्मिथ्येति युक्त्याऽनुसंधाया अविस्मरतो विदुषः प्रारब्धभोगतः प्रारब्धकर्मफलयोः सुखदुःखयोरनुभवेन मिथ्यात्वानुसंधानस्य का वा हानिर्वाशब्दान्मिथ्यात्वानुसंधानेन वा भोगस्य का हानिर्विभिन्नविषयत्वादिति भावः ॥ ७४ ॥

**अ० टीका** - एवं चरममताधिकारिणं प्रति तदृष्टांतानुभवनानुसंधानमपि विदधानस्तस्मिन्सति सुखदुःखान्यतरसाक्षात्कारलक्षणः प्रारब्धभोग एव कथं स्याद्वृत्तिद्वयस्य तुल्यकालत्वासंभवादित्याशंकामप्युपशमयति --**इंद्रजालमिति ।** इदं साक्षिप्रत्यक्षोपलक्षितदृश्यत्वावच्छेदकावच्छिन्नं द्वैतं जीवेश्वरभेदादिपंचविधभेदघटितप्रपंचजातम् । इंद्रजालमिंद्रजालनिष्ठसर्वसंमतमिथ्यात्ववन्मिथ्यात्वशालि । **अचिंत्येति ।** अचिंत्यरचनात्वात् । व्यतिरेके ब्रह्मवदिति

यावद्द्वैतस्यैव पक्षत्वात्केवलव्यतिरेक्येवायं प्रयोग इत्यभिप्रायः । ननु भवत्वयं द्वैतमिथ्यात्वानुमानप्रयोगस्तथाऽपि प्रकृते किमायातमित्यत आह—**इतीति** । निरुक्तानुमानजन्यस्मृतिसातत्यायातसंस्कारलोपाभाववत इत्यर्थः । तत्त्वविद इत्यार्थिकम् । एवं चोक्तस्मृतिसंस्कारविरहाहित्ये प्रारब्धकर्मोपादितसुखाद्यन्यतराकारपरिणतांतःकरणवृत्तिविषयकसाक्षिप्रत्यक्षं संभवेदेवेति भावः । तथा च नैव वृत्तिद्वययौगपद्यमपि । वस्तुतस्तु घटपटाविति समूहालंबनात्मकमेकमेव ज्ञानमित्यंगीकुर्वतां तार्किकाणामेव ज्ञानद्वययौगपद्यासंभवः । सूक्ष्मदृशामद्वैतिनां मते तु यथा दीपालोकस्तावदेक एव संनिकृष्टघटपटादिनानापदार्थांस्तुल्यकालमेव प्रकाशयंस्तत्तदवच्छेदकभेदेन भिद्यत एवैवमेकाऽपि चिदिद्धा बुद्धिर्युगपदेव तत्तत्करणद्वारा बहिरागत्य तत्तद्विषयाकारतामापन्नाऽवच्छेदकीभूततद्विषयावच्छिन्नतत्तद्वृत्तिभेदाद्भिद्यत एवेत्यंगीकरणीयमेव । एतेनांतःसुखाद्यात्मना युगपदनेकविधस्तत्परिणामोऽपि व्याख्यातः । तथैवानुभवः पादे मे प्रमदाकरपद्मस्पर्शजं दृशोर्मे सस्मिततदाननेंदुवीक्षणजं च सुखमेवमंतरपि मे श्रीगुरुहरचरणस्मरणसंभवं सुखमिति । तस्मान्नैवात्र विरोधगंधोऽपीति ध्येयं धीरैः ॥ १७४ ॥

**रा० टीका**—विभिन्नविषयत्वमेव दर्शयति—

**निर्बंधस्तत्त्वविद्याया इंद्रजालत्वसंस्मृतौ ॥**
**प्रारब्धस्याऽऽग्रहो भोगे जीवस्य सुखदुःखयोः ॥ १७५ ॥**

**निर्बंध इति** । तत्त्वविद्याया जगत्तत्त्वगोचरस्य ज्ञानस्य इंद्रजालवज्जगतो मिथ्यात्वानुसंधाने निर्बंधो न तु भोगापलापे प्रारब्धकर्मणश्च जीवस्य सुखदुःखयोः प्रदान आग्रहो न तु भोग्यसत्यत्वापादान इति भावः ॥ १७५ ॥

**अ० टीका**—सर्वत्र विरोधो हि प्रायः समानविषययोरेव तेजस्तिमिरयोरिव दृष्टः प्रकृते तु विषयैक्यस्यैवाभावान्नैवासाविति सूचयितुं तत्त्वविद्याप्रारब्धयोः कार्यभेदमेव विशदयति—**निर्बंध इति** । द्वैतविषय इति शेषः ॥ १७५ ॥

**रा० टीका**—एवं विभिन्नविषयत्वं प्रदर्श्य प्रयोगमाह—

**विद्यारब्धे विरुद्ध्येते न भिन्नविषयत्वतः ॥**
**जानद्भिरप्यैन्द्रजालविनोदो दृश्यते खलु ॥ ७६ ॥**

**विद्येति** । विद्याप्रारब्धकर्मणी परस्परं न विरुद्ध्येते विभिन्नविषयत्वात्संप्रतिपन्नरूपरसज्ञानवदित्यर्थः । भोग्यमिथ्यात्वज्ञानं भोगबाधकं न भवतीत्येतत्क दृष्टमित्याशंक्याऽऽह—**जानद्भिरिति** । ऐंद्रजालविनोद इंद्रजालसंबंधिचमत्कारविशेषो जानद्भिरपींद्रजालं जानद्भिरप्यवलोक्यत इति प्रसिद्धमित्यर्थः ॥ ७६ ॥

**अ० टीका**—फलितमाह—**विद्येति** । तत्रानुभवं प्रमाणयति—**जानद्भिरपीति** इदमिंद्रजालकल्पितस्याल्यादिकं मृषैवेति निर्णयद्भिरपि पुरुषैरित्यर्थः ॥ १७६ ॥

**रा० टीका**—किंच विद्याप्रारब्धकर्मणोर्विरोधोऽस्तीति वदन्प्रष्टव्यः । किं प्रारब्धकर्म विद्याविरोधीत्युच्यत उत विद्या प्रारब्धकर्मविरोधिनीति नाऽऽद्य इत्याह—

**जगत्सत्यत्वमापाद्य प्रारब्धं भोजयेद्यदि ॥**
**सदा विरोधि विद्याया भोगमात्रान्न सत्यता ॥ ७७ ॥**

**जगदिति** । प्रारब्धं कर्म जगतो भोग्यजातस्य सत्यत्वमबाध्यत्वमापाद्य संपाद्य यदि भोजयेज्जीवस्य सुखदुःखे दद्यात्तदा विद्याविषयस्य मिथ्यात्वस्यापहाराद्विद्याया विरोधी स्यान्न च तथा करोति किंतु भोगमेव प्रयच्छत्यतो न विद्याविरोधि प्रारब्धमिति भावः । भोगबलादेव भोग्यस्य सत्यत्वमपि स्यादित्याशंक्याऽऽह—**भोगमात्रादिति** । विमतं जगत्सत्यं भोग्यत्वादित्यत्र दृष्टांताभाव इति भावः ॥ ७७ ॥

**अ० टीका—**एवं तर्हि कदाऽनयोर्विरोधः स्यादित्यत्राऽऽह—**जगदिति** ॥ १७७॥

***अनूनो जायते भोगः कल्पितैः स्वप्नवस्तुभिः ॥**
**जाग्रद्वस्तुभिरप्येवमसत्यैर्भोग इष्यताम् ॥ ७८ ॥**

**रा० टीका**—ननु मिथ्यापदार्थैर्भोगो भवतीत्यत्रापि दृष्टांतो नास्तीत्याशंक्याऽऽह—**अनून इति** ॥ ७८ ॥

**अ० टीका**—ननु जगति यथाकथंचित्सत्यत्वापादनमंतरा प्रारब्धं भोगमेव कथं संपादयेत् । न चानुपदमेवोक्तं तत्र निदर्शनं जानद्भिरप्यैंद्रजालो विनोदो दृश्यते खल्विति सांप्रतम् । निरुक्तोदाहरणेऽपि दृशेः प्रयोगेणार्थक्रियारूपस्य भोगस्यासंभवात् । तस्मात्किमत्र तात्पर्यमित्याशंक्यैंद्रजालदर्शने लोके क्वाचित्कतया तदीयफलादिवस्तुभक्षणादिना तृप्त्यनुभवस्य संदिग्धत्वात्प्रतिदिनमपि प्रायः सर्वानुभूतमार्वांशिकानुरूपदृष्टांतस्पष्टीकरेण समाधत्ते—**अन्यून इति** ॥ १७८ ॥

**रा० टीका**—नापि द्वितीय इत्याह—

**यदि विद्याऽपह्नुवीत जगत्प्रारब्धघातिनी ॥**
**तदा स्यान्न तु मायात्वबोधेन तदपह्नवः ॥ ७९ ॥**

**यदि विद्येति** । विद्या यदि जगद्भोग्यजातमपन्हुवीत नेदं रजतमिति निषेधकज्ञानवत्प्रतीयमानस्य भोग्यस्य स्वरूपं विलापयेत्तदा प्रारब्धकर्मभोगस्य सुखदुःखानुभवस्य साधनापहारेण प्रारब्धकर्मविघातिनी स्यान्न च तत्करोति किंतु मिथ्यात्वमेव बोधयति । अतो न प्रारब्धकर्मविरोधिनीति भावः । ननु मिथ्यात्वबोधनादेव स्वरूपमपि विलापयेदित्याशंक्याऽऽह—**न तु मायेति** । इंद्रजालादौ स्वरूपविलापनमंतरेणापि मिथ्यात्वज्ञानदर्शनादिति भावः ॥ ७९ ॥

**अ० टीका—**भवत्वेवं सर्वथाऽपि ब्रह्मविद्या प्रारब्धाऽविरोधिनी तथाऽपि "क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति च **श्रुतिस्मृतिभ्यां** प्रतीयमानकर्मसामान्यविरोधित्वेनार्थापत्तिसिद्धप्रारब्धविरोधित्वं तत्र कदा स्यादित्यत आह—**यदीति** ।

"ब्रह्मज्ञानविभावसुः सकलमेवाज्ञानतत्संभवं सम्यग्वस्तुबलप्रवर्तनमरुद्व्यापारसंदीपितः । निर्लेपेन हि दंदहीति न मनागप्यस्य रूपांतरं संसारस्य शिनष्टि तेन विदुषः सद्योविमुक्तिर्ध्रुवा"

इति **संक्षेपशारीरोक्त**सद्योमुक्तिर्बृहद्वासिष्ठप्रसिद्धोद्दालकमुनेः संजाताऽधुनाऽपि कस्यचित्साधनचतुष्टयपुष्टिपूर्वकं ब्रह्मनिष्ठमाचार्यवरिष्ठमनन्यभावेन शरणीकृत्य वेदांतशास्त्रश्रवणमननाद्यनुतिष्ठतोऽपि प्रतिबंधविशेषवशादसंजाताद्वैतब्रह्मात्मैक्यसाक्षात्कारत्वात्संन्यासपुरःसरं

* अन्यून इत्यच्युतरायपाठः ।

समुपदिष्टया प्रणवोच्चारपूर्वकमहं ब्रह्मास्मीति शोधिततत्त्वंपदार्थयोरैक्यभावनालक्षणया निर्गुणाऽहंग्रहोपासनयांऽतकाले—

" उपासनं पक्कमिह नास्ति यस्य परत्र सः ।
मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते "

इति वचनादुपासनपरिपाके तु मरणसमकालमेव तत्त्वज्ञानोदयेन स प्रारब्धद्वैतध्वस्तिरूपा मुक्तिर्यदि स्यात्तदा तदीया ब्रह्मविषयिणी विद्या जगत्सकलदृश्यमेव तं प्रत्यपह्नुवीत प्रध्वंसयेत्तदा प्रारब्धघातिनी स्यादिति संबंधः ॥ १७९ ॥

**रा० टीका**—एतदेव प्रपंचयति

**अनपह्नुत्य लोकास्तदिंद्रजालमिदं त्विति ॥**
**जानंत्येवानपह्नुत्य भोगं मायात्वधीस्तथा ॥ १८० ॥**

**अनपह्नुत्येति** । लोकाः जनास्तदिंद्रजालस्वरूपमनपह्नुत्यानिरस्येदमिंद्रजालमिति जानंत्येव यथा तथा भोगं भोग्यमनपह्नुत्याविलाप्य मायात्वधीर्जगन्मिथ्यात्वज्ञानं भवतीत्यर्थः ॥ ८० ॥

**अ० टीका**—अथ प्रागुपन्यस्तजीवन्मुक्तिपक्षदृष्टांतमिंद्रजालमिव मायामयमिति श्रुतिसिद्धं तापणीयदार्ष्टांतिकेन सह स्पष्टयति—**अनपह्नुत्येति** । **तथेत्यादि** । तथोक्तेंद्रजालानपह्नववद्भोगं प्रारब्धापादितसुखादिसाक्षात्कारम् । अनपह्नुत्यानपलाप्य भोग्यादौ द्वैते मायात्वधीः सुघटैवेत्यन्वयः । तस्मादनपलापेऽपि मायात्वबोध एवोक्तदृष्टांत इत्याशयः ॥ १८० ॥

**रा० टीका**—यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुतिर्द्रष्टृदर्शनदृश्याभावं बोधयत्यतो विद्योत्पद्यमाना जगद्विलापयेदेवैवं सति विदुषो भोगश्च कथं स्यादिति श्रुत्यवष्टंभेन शंकते श्लोकद्वयेन—

**यत्र त्वस्य जगत्स्वात्मा पश्येत्कस्तत्र केन किम् ॥**
**किं जिघ्रेत् किं वदेद्वेति श्रुतौ तु बहु घोषितम् ॥ ८१ ॥**

**यत्र त्वित्यादिना** । यत्र यस्यां विद्यावस्थायां कृत्स्नं जगदस्य विदुषः स्वात्मैवाभूदिदं सर्वं यदयमात्मेति ज्ञानेन स्वरूपमेव भवति तत्र तस्यां दशायां को द्रष्टा केन साधनेन चक्षुषा किं दृश्यं रूपजातं पश्येदेवं घ्राणलक्षणेन किं कुसुमादिकं जिघ्रेत्किं वाक्यं केन वागिंद्रियेण वा वदेदेवमितरेंद्रियव्यापाराभावद्योतनाय वाशब्दः । इत्येवंप्रकारेण श्रुतौ बहुवारमभिहितमित्यर्थः ॥ ८१ ॥

**अ० टीका**—ननु निरुक्तरीत्या जीवन्मुक्तिपक्षे तत्त्वविद्यया द्वैते मिथ्यात्वमात्रं बोध्यते न तु तन्नाशः संपाद्यते तथा च विदुषः समुपपन्न एव प्रारब्धभोग इति सिद्धांतस्तावद्**यत्र त्वस्य** सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादि**श्रुत्या** सह विरुद्धत्वादयुक्त एवेति शंकते —**यत्र त्वस्येत्यादि**युग्मेन । इदं सर्वं यदयमात्मेत्यादिश्रुति**जन्यप्रमानंतरं** मित्याऽऽधिकम । **यत्र हि द्वैतमिव** भवति तदितर इतरं पश्यतीत्यादिप्राक्तन**श्रुत्यर्थ**वैलक्षण्यार्थस्तुशब्दः । **बहिति** । **तत्केन** कं जिघ्रेत्तत्केन कं रसयेत्तत्केन कमभिवदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं स्पृशेत्तत्केन कं विजानीयादिति बहुप्रकारैरित्यर्थः । वाशब्दः सकलकरणोपरमसूचनार्थेव ॥ १८१ ॥

**रा० टीका**—ततः किमित्यत आह—

**तेन द्वैतमपह्नुत्य विद्योदेति न चान्यथा ॥**

**तथा च विदुषो भोगः कथं स्यादिति चेच्छृणु ॥ ८२ ॥**

**तेन द्वैतमिति** । 'स्वाप्ययसंपत्योरन्यतरापेक्षमाविष्कृतं हि' इत्यस्मिन् सूत्रे यत्र त्वस्येत्युदाहृतायाः श्रुतेः सुप्तिमोक्षयोरन्यतरविषयत्वेन व्याख्यातत्वान्न विद्यया जगदपन्हव इति परिहरति—**शृण्विति** ॥ ८२ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**तेनेत्यादिना** । एवमाक्षेपे सति निरुक्तश्रुत्यथस्यं भगवद्भिर्बादरायणाचार्यचरणैरेवोत्तरमीमांसाचतुर्थाध्यायचतुर्थचरण एव निर्णीतत्वात्तादृक्सांप्रदायिकगूढार्थीकरणेनार्थमेव प्रष्टारमभिमुखीकरोति—**इतीत्यादिशेषेण** ॥ १८२ ॥

**सुषुप्तिविषया मुक्तिविषया वा श्रुतिस्त्विति ॥**

**उक्तं स्वाप्ययसंपत्योरितिसूत्रे ह्यतिस्फुटम् ॥ ८३ ॥**

**रा० टीका**—स्वाप्ययः सुषुप्तिः संपत्तिर्मुक्तिरित्यर्थः ॥ ८३ ॥

**अ० टीका**—तमेवार्थमुक्तसूत्रप्रतीकग्रहणपूर्वकं कथयति—**सुषुप्तीति** । मुमुक्षुं प्रति सुषुप्तिविषया तेन तस्या एव सर्वदा प्रत्यहमनुभूतत्वात् । मुक्तं प्रति तु मुक्तिविषयैवेयं **यत्र** त्वस्य सर्वमात्मैवाभूदित्यादिप्रकृत**श्रुतिः** । मुमुक्ष्ववस्थां **मैत्रेयीं** स्वप्रियां प्रति जीवन्मुक्त्यवस्थापन्नस्य **याज्ञवल्क्यस्य** निर्विकल्पसमाध्यादौ तथाऽनुभवतो वचनत्वाच्चेत्यभिप्रायः । वा शब्दस्तत्तदनुभूतिभेदेन विकल्पसूचक एव ननूक्तश्रुत्यर्थे किं मानमत आह—**उक्तमिति** । **स्वेति** । स्वाप्ययसंपत्योरन्यतरापेक्षमाविष्कृतं हीति चतुर्लक्षणीचरमचरणगत इत्यर्थः । हिरवधारणे । एतादृशसूत्र एवोक्तार्थजातमतिस्फुटं यथा स्यात्तथोक्तमस्तीति योजना । सूत्रार्थस्तु । स्वाप्ययः स्वं ह्यपीतो भवतीति **श्रुतेः** सुप्तिः । संपत्तिर्मुक्तिः । तयोः सुप्तिमुक्त्योरित्यर्थः । **अन्यतरेति** । अन्यतरत्वं व्रीहिभिर्वा यवैर्वा यजेतेत्यादाविवैच्छिकविकल्पविषयत्वं तस्यापेक्षा यत्र तत्तथैव मुमुक्ष्वपेक्षं मुक्तापेक्षं च क्रमादित्येतत् । एतादृशं द्वैताभावरूपमर्थजातम् । हिरवधारणे । यत्र त्वस्येत्यादिश्रुत्यैवाविष्कृतप्रकटितमस्तीति ॥ १८३ ॥

**रा० टीका**—अस्याः श्रुतेः सुषुप्त्यादिविषयत्वानंगीकारे बाधकमाह—

**अन्यथा याज्ञवल्क्यादेराचार्यत्वं न संभवेत् ॥**

**द्वैतदृष्टावविद्वत्ता द्वैतादृष्टौ न वाग्वदेत् ॥ ८४ ॥**

**अन्यथेति** । तत्रोपपत्तिमाह—**द्वैतेति** । याज्ञवल्क्यादिर्यदि द्वैतं पश्येत्तर्हि तदा द्वैतज्ञानाभावान्नाऽऽचार्यो भवेत् । अथ द्वैतं न पश्यति तर्हि बोध्यशिष्याद्यनुपलंभादाचार्यवाक् शिष्यं प्रति बोधनाय न प्रवर्तेत । अतो विद्यासंप्रदायोच्छेदप्रसंग इति भावः ॥ ८४ ॥

**अ० टीका**—नन्वनुभूतिप्रकाश इयं **श्रुतिः**—

"यस्यां तु विद्यावस्थायामात्मैवास्याभवज्जगत् ।
तदा कः केन किं जिघ्रेदद्वैते परवस्तुनि ।"

इति मुक्तमात्रपरत्वेन व्याख्यातेति चेत्सत्यम् । विद्यायाः प्रकृते प्राधान्येन तदवस्था-

यां तथात्वाभिप्रायकत्वात्तस्येत्यन्यथानुपपत्याऽप्याह—**अन्यथेति** । तत्र हेतुः । **द्वैतेति** । त-स्मादुक्तरीतिरेवेज्येति दिक् ॥ १८४ ॥

**रा० टीका**—ननु याज्ञवल्क्यादीनामाचार्यत्वदशायां विद्यमानस्य ज्ञानस्य विद्यात्वमस्त्येव तथाऽपि तस्य नापरोक्षविद्यात्वं द्वैतप्रतीतिसद्भावान्निर्विकल्पकसमाधौ तु द्वैतदर्शनाभावात्सैवापरोक्षविद्येति शंकते—

**निर्विकल्पसमाधौ तु द्वैतादर्शनहेतुतः ॥**
**सैवापरोक्षविद्येति चेत्सुषुप्तिस्तथा न किम् ॥ १८५ ॥**

**निर्विकल्पेति** । द्वैताप्रतीतेरप्यतिप्रसंगापादकत्वान्नैवमिति परिहरति—**सुषुप्तिस्तथा न किमिति** ॥ १८५ ॥

**अ० टीका**—ननु याज्ञवल्क्यादेराचार्यत्वं परोक्षविद्ययैव भवतु द्वैतादर्शनस्य तु निर्विकल्पसमाधावेव संभवाद्यदा पंचावतिष्ठंते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिमिति श्रुतेः

" यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् "

इति स्मृतेस्तदा द्रष्टुः स्वरूपेऽवस्थानम् । ऋतंभरा तत्र प्रज्ञेत्यादि योगसूत्रसंमतेश्चासंप्रज्ञातसमाध्यवस्थैवापरोक्षविद्येत्याशंक्यातिप्रसक्त्या समाधत्ते—**निर्विकल्पेति** ॥ १८५ ॥

**रा० टीका**—अतिप्रसंगपरिहारं शंकते—

**आत्मतत्त्वं न जानाति सुप्तौ यदि तदा त्वया ॥**
**आत्मधीरेव विद्येति वाच्यं न द्वैतविस्मृतिः ॥ ८६ ॥**

**आत्मतत्त्वमिति** । सुप्तौ द्वैतदर्शनाभावेऽप्यात्मगोचरज्ञानाभावान्न विद्यात्वं तस्या इत्यर्थस्तर्हि प्राप्तं विवेकज्ञानस्यैव विद्यात्वं न द्वैतदर्शनाभावस्येत्याह—**तदेति** ॥ ८६ ॥

**अ० टीका**—तद्वारणमाशंक्य परिहरति—**आत्मतत्त्वमिति** ॥ १८६ ॥

**रा० टीका**—ननु द्वैतादर्शनात्मज्ञानयोर्मिलितयोरेव विद्यात्वं नैककस्येति शंकते—

**उभयं मिलितं विद्या यदि तर्हि घटादयः ॥**
**अर्धविद्याभाजिनः स्युः सकलद्वैतविस्मृतेः ॥ ८७ ॥**

**उभयमिति** । द्वैतविस्मृतेरपि विद्यांशत्वांगीकारे जडस्याप्यर्धविद्यात्वप्रसंग इति परिहरति—**तर्हि घटादय इति** । अत्रोपपत्तिमाह—**सकलेति** ॥ ८७ ॥

**अ० टीका**—ननु समुदाहृतश्रुत्यादिभ्यस्तत्त्वज्ञानदशायां दर्शनोभयमेलनस्यैवापरोक्षज्ञानत्वमित्याशंकां सोपहासप्रतिबंद्या विनिंदति—**उभयमित्यादिद्वाभ्याम्** ॥ १८७ ॥

**रा० टीका**—अस्मिन्नेव पक्षे समाधिमतां पुरुषाणां अर्धविद्यावत्त्वमपि न स्यादिति सोपहासमाह—

**मशकध्वनिमुख्यानां विक्षेपाणां बहुत्वतः ॥**
**तव विद्या तथा न स्याद्घटादीनां यथा दृढा ॥ ८८ ॥**

**मशकध्वनीति**। घटादीनां यथा द्वैतविस्मरणं दृढं तथा तव समाधौ द्वैतविस्मरणं न संभवति। मशकध्वन्यादीनामनेकेषां विक्षेपाणां सद्भावादित्यर्थः॥ ८८॥

**अ० टीका—मशकेति**। "त्रिरुन्नतं स्थाप्य समं शरीरं हृदींद्रियाणि मनसा संनिवेश्य। ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि। प्राणान्प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत। दुष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो धारयेताप्रमत्तः। समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः। मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे नियोजयेत्" इत्यादि**श्वेताश्वतरोपनिषद**दुक्तचक्षुःपीडनाख्यमशकध्वनिप्रतिबहुविधविघ्नग्रस्तत्वाद्योगाभ्यासस्येत्यार्थिकम्॥ १८८॥

**रा० टीका**—नन्वात्मज्ञानस्यैव विद्यात्वं न द्वैतविस्मृतेरिति शंकते—

**आत्मधीरेव विद्येति यदि तर्हि सुखी भव॥**
**दुष्टचित्तं निरुंध्याच्चेन्निरुंद्धि त्वं यथासुखम्॥ ८९॥**

**आत्मधीरेवेति**। तदस्माकमिष्टमित्यभिप्रायेण आशीर्वादयति—**तर्हि सुखी भवेति**। नन्वात्मधीरेव विद्या सा न दुष्टचित्ते संभवत्यतश्चित्तदोषपरिहाराय चित्तवृत्तिनिरोधः कार्य इति शंकामनुभाषते—**दुष्टचित्तमिति**। तदंगीकरोति—**निरुंद्धि त्वमिति**॥ ८९॥

**अ० टीका**—एवमुपहसितः प्रतिबंदितश्च प्रतिवादी शिष्यो वा सिद्धांतिमतमंगीकरोति—**आत्मेत्यादिना**। अथ तद्वाक्यमनूद्य सिद्धांती तमाशिषाऽभिनंदयति—**इतीत्यादि**। जीवन्मुक्तिसुखार्थं किं चित्तनिरोधो विवेकवैराग्यादिभिः कार्यो न वेति संदिहानं तमालक्ष्याऽऽह—**दुष्टेति**॥ १८९॥

**तदिष्टमेष्टव्यमायामयत्वस्य समीक्षणात्॥**
**इच्छन्नप्यज्ञवन्नेच्छेत्किमिच्छन्निति हि श्रुतम्॥ १९०॥**

**रा० टीका—तदिष्टमिति**। अस्माकमपीति शेषः। कुत इत्यत आह—**एष्टव्येति**। चित्तदोषापगमे सत्यद्वितीयाऽऽत्मज्ञानादेष्यमाणं जगन्मायामयत्वं सम्यगीक्ष्यते यतोऽत इष्टमित्यर्थः। एवं किमिच्छन्निति मंत्रांशेनाभिप्रेतमर्थमुपपादितमुपसंहरति—

**इच्छन्निति**। इच्छन्नप्ययमज्ञवन्नेच्छेदतः किमिच्छन्निति श्रुतमिति योजना॥१९०॥

**अ० टीका**—तत्र हेतुः—**तदिति**। **एष्टव्येति**। एष्टव्यमभिलषणीयं यद्द्वैते मायामयत्वं तस्येत्यर्थः। न हि स्वकाष्ण्र्येन कश्चित्कांताकुंतलकांतिवत्तृप्यतीत्याकूतम्। फलितमाह—**इच्छन्नपीति**। द्वैतस्यैव बाधितत्वेन विद्वदिच्छातत्कर्तृतत्कर्मतत्करणादेरपि तत्त्वान्नाज्ञतौल्यमित्याशयः। अथ प्रकृतमंत्रसांगत्यमाह—**किमिच्छन्नितीत्यादिना**॥ १९०॥

**रा० टीका**—एवमभिप्रायवर्णने कारणमाह—

**रागो लिंगमबोधस्य सन्तु रागादयो बुधे॥**
**इति शास्त्रद्वयं सार्थमेवं सत्यविरोधतः॥ ९१॥**

**रागो लिंगमिति**। "**रागो** लिंगमबोधस्य चित्तव्यायामभूमिषु। कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः" इति तत्त्वविदो रागनिषेधपरं **शास्त्रम्**—"शास्त्रार्थस्य समाप्तत्वान्मुक्तिः स्यात्तावता मितेः। रागादयः सन्तु कामं न तद्भावोऽपराध्यते"। इति तस्यैव रागांगीकारपरं

च शास्त्रमेवं च सति तत्त्वविदो दृढरागाभावे सति शास्त्रद्वयं सार्थमर्थवद्भवत्यविरोधतो रागनिषेधपरस्य शास्त्रस्य दृढरागविषयत्वात्तदभ्युपगमपरस्य शास्त्रस्य रागाभासविषयत्वादिति भावः ॥ ९१ ॥

**अ० टीका**—न केवलमुक्तरीतिकतत्त्वज्ञेच्छाव्यवस्थया **किमिच्छन्कस्य** कामाय शरीरमनुसंज्वरेदिति **श्रुतेरेवार्थ**सांगत्यसिद्धिरपि तु **वार्तिककारवाक्यद्वय**विरोधोऽपि **परिहृत** इत्याह—**राग इति** ।

" रागो लिंगमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः "

इतीदं **वचनं नैष्कर्म्यसिद्धिस्थ**मेव विद्वद्रागनिषेधकम् । अस्य सारस्यं तु—**चित्ते-ति** । चित्तसंचारस्थलीभूतेष्टशब्दस्पर्शरूपरसगंधाख्यविषयविषयक इत्यर्थः । राग इष्टविषयाभिलाषोऽबोधस्याज्ञानस्य व्यापकस्य लिंगं व्याप्त्याऽनुमापकं व्याप्यमस्तीत्यन्वयः । तस्माद्यत्र यत्रेष्टविषयविषयकोऽभिलाषः पुरुषे दृश्यते तत्राबोध इति व्याप्तिरिति यावत् । तामेवार्थांतरन्यासेन दृढयति—**कुत इत्यादिना** । यस्य तरोः कोटरेऽग्निर्भवति तत्र शाद्वलताशाखापल्लवादिषु **शाद्वलः** स्याद्दहरित इत्य**मराद्धरिद्वर्ण**शालितेत्यर्थः । कुतः स्यान्न कथमपि भवेदिति संबंध इति । अथैतत्प्रातिकूलं **वार्तिककृद्वाक्य**मेव किंचिदंशप्रतीकेन व्यनक्ति—**संत्विति** । इदं हि **बृहदारण्यकभाष्यो**परिवार्तिकामृतगतमेव ।

तद्यथा—" शास्त्रार्थस्य समाप्तत्वान्मुक्तिः स्यात्तावता मितेः ।
रागादयः संतु कामं न तद्भावोऽपराध्यति " इति ।

अस्याप्ययमर्थः—**शास्त्रार्थस्येति** । शास्ति जीवं प्रतिहितमुपदिशतीति शास्त्रं वेदस्तस्य योऽर्थः परब्रह्मात्मैक्यलक्षणः प्रतिपाद्यः कालत्रयाबाधितवस्तुविशेषस्तस्य तद्विषयकोपदेशस्येति यावत् । समाप्तत्वादवशिष्टत्वादित्यर्थः । ततः किं तत्राऽऽह **मुक्तिरित्यादिना** । तावतैवोपदेशार्थावशेषेणैव । मुक्तिरधिकारिणः कैवल्यरूपाऽनाद्यविद्यादिद्वैतध्वस्तिः । मितेः प्रोक्तब्रह्मैक्यप्रमाया हेतोरित्यर्थः । स्याद्भवेदेवेति हेतोस्तत्र ब्रह्मणि दीत्याधिकम् । काममस्त्वं-तम् । रागादय आदिना द्वेषादयः । **पश्वादिभिश्चाविशेषादिति भाष्यवचनात्** । संतु तिष्ठंतु यतस्तद्भवस्तेषां रागादीनां वृद्धेः सद्भावः । नापराध्यति नैवाद्वैतविद्याबाधितस्य द्वैतस्य पुनः सत्यत्वसाधको भवतीति संबंधः । **इतीत्यादि** । इत्युक्तप्रकारकम् । शास्त्रद्वयं वार्तिकयुगम् । एवं सति प्रागुक्तरीत्या विचारितमहावाक्यात्संजातापरामप्यपरोक्षब्रह्मविद्यायामसंभवादि नैवादृढायामननुसंधानसमानाधिकरणरागादीनामज्ञानदार्ढ्यावगमकत्वेनाज्ञानलिंगत्वे श्रवणाद्यभ्यासपरिपाकेन निःशेषासंभावनादिनिरासाद्दृढायां तस्यां तदनुसंधानसमानाधिकरणरागादीनामाभासत्वे च सिद्धे सतीत्यर्थः । अविरोधत उक्तव्यवस्थया परस्परविरुद्धार्थप्रतिपादकत्वाभावात्सार्थं स्वार्थवत्संपन्नमिति शेषः ॥ ९१ ॥

**रा० टीका**—एवं किमिच्छन्नित्यंशस्याभिप्रायमुपवर्ण्य कस्य कामायेत्यंशस्याभिप्रायमाह—

**जगन्मिथ्यात्ववत्स्वात्मासंगत्वस्य समीक्षणात् ॥**
**कस्य कामायेति वचो भोक्त्रभावविवक्षया ॥ ९२ ॥**

**जगदिति।** यथा जगन्मिथ्यात्वबोधेन वास्तवकाम्याभावविवक्षया किमिच्छन्नित्युक्तम्। एवमात्मनोऽसंगत्वबोधेन वास्तवभोक्तृत्वाभावविवक्षया कस्य कामायेति श्रुत्याऽभिहितमित्यर्थः ॥ ९२ ॥

**अ० टीका**—नन्वेवं तत्त्वानुसंधानसमानाधिकरणस्फूर्यमाणरागादीनामेवाभासत्वं चेत्तर्हि भोक्तृभोग्यात्मकस्याखिलद्वैतस्यापि तत्त्वमनुसंध्येयत्वेन प्राप्तं तत्र भोग्यस्य स्रगादेः स्वप्नेंद्रजालादिदृष्टांततः प्राक्साधितेऽपि मिथ्यात्वे भोक्तुर्मिथ्यात्वमप्यवश्यं वाच्यमेवेत्यत्राऽऽह—**जगन्मिथ्यात्ववदिति** ॥ १९२ ॥

**रा० टीका**—नन्वात्मनो भोक्तृत्वप्रतिषेधस्तत्प्रसक्तिपूर्वको वक्तव्यः। सा तु न विद्यतेऽसंगत्वादात्मन इत्याशंक्य तस्याः स्वानुभवसिद्धत्वान्नैवमित्यभिप्रेत्य तदनुवादिकां श्रुतिमर्थतोऽनुक्रामति—

**पतिजायादिकं सर्वं तत्तद्भोगाय नेच्छति ॥**
**किंत्वात्मभोगार्थमिति श्रुतावुद्घोषितं बहु ॥ ९३ ॥**

**पतिजायेति।** 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यारभ्य 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यंतेन वाक्यसंदर्भेण पतिजायादिकस्य प्रपंचस्याऽऽत्मनो भोगसाधनत्वं प्रतिपाद्यते। तत आत्मनो भोक्तृत्वप्रसक्तिरित्यर्थः ॥ ९३ ॥

**अ० टीका**—ननु कथं भोक्त्रभावविवक्षेयं सुघटा स्यादात्मनो ह्यसंगत्वश्रुतिवद्भोक्तृत्वश्रुतेरपि **न वा** अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवतीत्यादिबहुप्रकारायाः सत्त्वादित्यभिप्रेत्य तामर्थतः संक्षिपति—**पतिजायादिकमिति।** आदिना **न वा अरे** सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवतीत्यंतो **ग्रंथो** ग्राह्यः ॥ १९३ ॥

**रा० टीका**—एवमात्मनो भोक्तृत्वं प्रदर्श्य तदपवादाय भोक्तारं विकल्पयति—

**किं कूटस्थश्चिदाभासोऽथ वा किं वोभयात्मकः ॥**
**भोक्ता तत्र न कूटस्थोऽसंगत्वाद्भोक्तृतां व्रजेत् ॥ ९४ ॥**

**किं कूटस्थ इति।** किं कूटस्थस्य भोक्तृत्वमुत चिदाभासस्य किंवोभयात्मकस्येति विकल्पार्थस्तत्र प्रथमं प्रत्याह—**भोक्ता तत्रेति** ॥ ९४ ॥

**अ० टीका**—अथोक्तां शंकां समाधातुं भोक्तृत्वेन संमतमात्मानं विकल्प्य पृच्छति—**किं कूटस्थ इत्यादिना।** एवं निरुक्तविकल्पेषु प्रथमं प्रत्याह—**तत्र नेत्यादिना।** कुत इत्यत आह—**असंगत्वादित्यादिशेषेण।असंगो** ह्ययं पुरुष इति श्रुत्युक्तादित्यर्थः॥१९४॥

**रा० टीका**—असंगत्वमस्तु भोक्तृत्वमप्यस्तु को दोष इत्याशंक्याऽऽह—

***सुखदुःखाभिमानाख्यो विकारो भोग उच्यते ॥**
**कूटस्थश्च विकारी चेत्येतन्न व्याहतं कथम् ॥ ९५ ॥**

**सुखेति।** सुखित्वदुःखित्वाभिमानलक्षणो विकारो भोगः सोऽसंगस्य कूटस्थस्य न युज्यते कूटस्थत्वविकारित्वयोरेकत्र समावेशायोगादित्यर्थः ॥ १९५ ॥

---

* सुखिदुःखीत्यच्युतरायपाठः।

**अ० टीका**—नन्वसंगत्वभोक्तृत्वप्रतिपादकयोरुभयोरपि श्रुत्योः प्रामाण्यादुभयमप्यस्त्वित्याशंक्य व्याघातापत्तेर्नैवमित्याह **सुखिदुःखीत्यादिना** । सुखदुःखाभिमानेति पाठः प्रामादिक एव । अहं सुखमित्यादिधर्मिप्रकारेणाभ्यासादर्शनात् । गर्वोऽभिमानोऽहंकार इत्यमरे धर्मितादात्म्यलक्षणस्याहंकारस्यैवाभिमानपदवाच्यत्वोक्तेश्च । न च सुखं मे जातमित्यादौ सुखादिसाक्षात्कारोऽपि भोग एव वाच्यस्तथा च सुखित्वाद्यन्यतरतादात्म्याभ्यासो भोग इति प्रकृतफलितलक्षणस्य तत्राव्याप्तिरिति सांप्रतम् । विचारनिष्कर्षे तस्याप्यत्रैव पर्यवसानादिति तत्त्वम् ॥ १९५ ॥

**रा० टीका**—ननु तर्हि विकारिणश्चिदाभासस्य भोक्तृत्वं स्यादित्याशंक्य विकारित्वेऽपि निरधिष्ठानस्य तस्यैवासिद्धेर्नैवमिति परिहरति—

**विकारिबुद्ध्यधीनत्वादाभासे विकृतावपि ॥**
**निरधिष्ठानविभ्रांतिः केवला न हि तिष्ठति ॥ १९६ ॥**

**विकारीति** । चिदाभासस्य विकारिबुद्ध्युपाध्यधीनत्वात्तस्मिन्विकारे संभवत्यपि तस्याऽऽरोपितस्याऽऽरोपितस्वरूपत्वेनाधिष्ठानभूतं कूटस्थं विहाय स्वातंत्र्येणावस्थानासंभवात्केवलचिदाभासस्यापि भोक्तृत्वं न संभवतीति भावः ॥ १९६ ॥

**अ० टीका**—एवं तर्ह्याभास एव जलचंद्रवद्विकारिबुद्ध्यधीनत्वेन विकारित्वाद्द्वितीयपक्षोक्त एव भवतु भोक्तेति चेन्न । निरधिष्ठानस्य तस्याऽऽकाशकुसुमत्वादित्याह **विकारीति** ॥ १९६ ॥

**रा० टीका**—तस्मात्तृतीयः पक्षः परिशिष्यत इत्याह—

**उभयात्मक एवातो लोके भोक्ता निगद्यते ॥**
**तादृगात्मानमारभ्य कूटस्थः शेषितः श्रुतौ ॥ १९७ ॥**

**उभयात्मक इति** । यत एवं केवलस्य भोक्तृत्वं न संभवत्यत उभयात्मकः साधिष्ठानचिदाभास एव लोके व्यवहारदशायां भोक्तेत्यभिधीयते । परमार्थतस्तूभयात्मकत्वमेव न घटत इति भावः । नन्वसंगो ह्ययं पुरुष इत्यादावसंगत्वस्येव योऽयं विज्ञानमयः प्राणेष्वित्यादौ बुद्धिसाक्षित्वस्यापि श्रवणादुभयात्मकभोक्तृत्वस्यापि पारमार्थिकमेव स्यान्न लोकव्यवहारमात्रसिद्धमित्याशंक्य श्रुतेरसंगात्मपरत्वमेवेत्याह—**तादृगिति** । तादृगात्मानं बुद्ध्युपाधिकं भोक्तारमात्मानमारभ्यानूद्य कूटस्थो बुद्ध्यादिकल्पनाधिष्ठानभूतश्चिदात्मा शेषितः । बुद्ध्याद्यनात्मनिरसनेन परिशेषितः श्रुतौ बृहदारण्यकादावित्यर्थः ॥ १९७ ॥

**अ० टीका**—तथा च परिशेषात्तृतीयपक्ष एवास्त्विति चेद्व्यवहारदशायां तथात्वेऽपि परमार्थतः कोऽपि न भोक्तेत्याह—**उभयेति** । श्रुतौ स एष नेति नेत्यादावित्यर्थः ॥ १९७ ॥

**रा० टीका**—तत्र बृहदारण्यकवाक्यार्थं तावत्संक्षिप्य दर्शयति—

**आत्मा कतम इत्युक्ते याज्ञवल्क्यो विबोधयन् ॥**
**विज्ञानमयमारभ्यासंगं तं पर्यशेषयत् ॥ १९८ ॥**

**आत्मेति** । जनकेन कतम आत्मेत्येवमात्मनि पृष्टे सति याज्ञवल्क्यस्तं विबोधयन्योऽयं

विज्ञानमयः प्राणेष्वित्यादिना विज्ञानमयमुपक्रम्यासंगो ह्ययं पुरुष इत्यसंगं कूटस्थं परिशेषितवानित्यर्थः ॥ ९८ ॥

**अ० टीका**—तत्राऽऽदौ **जनकयाज्ञवल्क्यसंवादलक्षणां** शबलमुपक्रम्य शुद्धात्मपरिशेषपरां श्रुतिमर्थतः संक्षिप्योदाहरति—**आत्मेति** । **विज्ञानमयमिति** । **योऽयं** विज्ञानमयः प्राणेष्वित्यादिना शबलमुपक्रम्य, **असंगो** ह्ययं पुरुष इति शुद्धात्मानमेव बाधावधित्वेनावबोधितवानित्यर्थः ॥ १९८ ॥

**रा० टीका**—एवं बृहदारण्यकेऽसंगात्मपरिशेषप्रकारं प्रदर्श्यैतरेयादिश्रुत्यंतरेष्वपि तद्दर्शयति—

**कोऽयमात्मेत्येवमादौ सर्वत्राऽऽत्मविचारतः ॥**
**उभयात्मकमारभ्य कूटस्थः शेष्यते श्रुतौ ॥ ९९ ॥**

**कोऽयमात्मेति** । कोऽयमात्मेति वयमुपास्महे कतरः स आत्मेत्येवमादावात्मविचारेणांतःकरणोपाधिकमात्मानमारभ्य प्रज्ञानमात्रात्मकः कूटस्थः परिशेषित एवमन्यत्रापि द्रष्टव्यम् । एवमुक्तश्रुतिपर्यालोचनायामुभयात्मकस्य भोक्तुर्मिथ्यात्वं पारमार्थिकस्यासंगस्य कूटस्थस्याभोक्तृत्वं सिद्धम् ॥ ९९ ॥

**अ० टीका**—एवमैतरेयश्रुतिमपि यावदुपनिषदुपलक्षणविधयोदाहरति—**कोऽयमिति** ॥ १९९ ॥

**रा० टीका**—ननूक्तरीत्या भोक्तुर्मिथ्यात्वे प्राणिनां तस्मिन्सत्यत्वबुद्धिः कुतो जायत इत्याशंक्याऽऽह—

**कूटस्थसत्यतां स्वस्मिन्नध्यस्याऽऽत्माऽविवेकतः ॥**
**तात्त्विकीं भोक्तृतां मत्वा न कदाचिज्जिहासति ॥२००॥**

**कूटस्थेति** । आत्मा लोकप्रसिद्धो भोक्ताऽविवेकतः स्वस्य कूटस्थाद्विवेकज्ञानाभावेन कूटस्थनिष्ठं सत्यत्वमात्मन्यध्यस्य तद्द्वारा स्वनिष्ठस्य भोक्तृत्वस्यापि सत्यतां मत्वा योगं कदाचिदपि न हातुमिच्छति ॥ २०० ॥

**अ० टीका**—नन्वेवं तर्हि सर्वे जीवाः स्वभोक्तृत्वं सत्यं मन्वानाः कुतस्तद्भोगार्थं प्रवर्तेत इत्यत्राऽऽह—**कूटस्थेति** । जिहासति हातुमिच्छति भोगमिति शेषः ॥ २०० ॥

**रा० टीका**—ननु तर्हि 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यात्मशेषत्वं भोग्यस्य कथं प्रतिपाद्यत इत्याशंक्य न कूटस्थात्मशेषत्वं प्रतिपाद्यते । किंतु लोकप्रसिद्धोभयात्मकभोक्तृशेषत्वमेव श्रुत्याऽनूद्यत इत्याह—

**भोक्ता स्वस्यैव भोगाय पतिजायादिमिच्छति ॥**
**एष लौकिकवृत्तांतः श्रुत्या सम्यगनूदितः ॥ १ ॥**

**भोक्तेति** । लोके यो भोक्ता स स्वस्यैव भोगाय पतिजायादिभोगोपकरणमिच्छतीत्ययं लौकिकवृत्तांतः श्रुत्या सम्यगनूदितो नार्थांतरं प्रतिपाद्यत इत्यर्थः ॥ १ ॥

**अ० टीका**—नन्वेवं यदि भोग्यवद्भोक्ताऽपि चिदाभासाख्यो जीवः सर्वथा मिथ्यैव तर्हि श्रुत्या कथमात्मनस्तु कामाय सर्वं प्रियं भवतीत्यखिलस्य भोग्यस्याऽऽत्मशेषत्वमुच्य-

त इत्यत आह—**भोक्त्रेति** । श्रुत्या न वा अरे पत्युः कामायेत्यादिरूपिण्येत्यर्थः ॥ २०१ ॥

**रा० टीका**—अनुवादः किमर्थमित्याशंक्य भोक्तर्येव प्रेम्णो विधानायेत्याह—

**भोग्यानां भोक्तृशेषत्वान्मा भोग्येष्वनुरज्यताम् ॥**
**भोक्तर्येव प्रधानेऽतोऽनुरागं तं विधित्सति ॥ २ ॥**

**भोग्यानामिति** । भोग्यानां पतिजायादीनां भोक्तुः स्वस्य भोगोपकरणत्वाद्भोग्येष्वनुरागो न कर्तव्यः । किंतु प्रधानभूते भोक्तर्येवानुरागः कर्तव्य इति विधानायेत्यर्थः ॥ २ ॥

**अ० टीका**—नन्व**ग्निर्हिमस्य** भेषजमित्याद्यनुवादकश्रुतेरर्थवादत्वेनाऽऽहवनीये जुहोतीत्यादिविधिशेषत्ववत्प्रकृतश्रुतेरपि किंचिद्विधिशेषत्वं वक्तव्यमेवेति चेत्सत्यम् । व्याचक्षाणस्य तु मे निदिध्यासस्वेति जिज्ञासुं **मैत्रेयीं** प्रति ब्रह्मात्मैक्यमुपदिदिक्षोर्भगवतो **याज्ञवल्क्यस्य** वचसैव निदिध्यासनविध्यंगत्वं सिद्धमेवेत्यभिप्रेत्य समाधत्ते—**भोग्यानामिति** । तदुक्त**मनुभूतिप्रकाशे**—

" निदिध्यासस्वेति शब्दात्सर्वत्यागफलं जगौ । न ह्यन्यचिंतामत्यक्त्वा निदिध्यासितुमर्हति । निरंतरविचारो यः श्रुतार्थस्य गुरोर्मुखात् । तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते । अनात्मन्यरुचिश्चित्ते रुचिश्चाऽऽत्मनि चोद्भवेत् । पुण्यं पुंजेन शुद्धं तच्चित्तमैकाग्र्यमर्हति । शुद्धेऽकुरितमैकाग्र्यं विवेकेनाभिवर्धयेत् । प्रियाप्रियविवेकोऽतो मैत्रेय्या उपदिश्यते "

इति । विधित्सति विधातुमिच्छति निरुक्तश्रुतिरिति शेषः ॥ २०२ ॥

**रा० टीका**—भोग्येषु प्रेमत्यागपुरःसरमात्मप्रेमकर्तव्यतायां दृष्टांतत्वेनेश्वरे प्रेमप्रार्थनापुरःसरं पुराणवचनमुदाहरति—

**या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥**
**त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु ॥ ३ ॥**

**या प्रीतिरिति** । अविवेकिनामात्मज्ञानशून्यानां विषयेष्वनपायिनी दृढा या प्रीतिरस्ति हे साप लक्ष्मीपते सा प्रीतिस्त्वामनुस्मरतस्त्वां सदा चिंतयतो मे हृदयान्मनसः सर्पत्वपगच्छतु । मम मनो विषयेष्वासक्तिं परित्यज्य त्वय्येव सदा तिष्ठत्वित्यर्थः । यद्वाऽविवेकिनां विषयेषु दृढा या यादृशी प्रीतिरस्ति सा तादृशी विषयेषु विद्यमाना प्रीतिस्त्वामनुस्मरतो मे हृदयान्माऽपसर्पतु माऽपगच्छतु सदा तिष्ठत्वित्यर्थः ॥ ३ ॥

**अ० टीका**—तदुपबृंहणाय **पुराणम**प्याह—**येति** । हे साप लक्ष्मीपते । अविवेकानामज्ञानां या विषयेष्विष्टशब्दादिष्वनपायिन्यखंडिता प्रीतिरस्ति । सा तत्सजातीया विषयप्रीतिर्मे मम त्वां निर्गुणात्मानम् । अनुस्मरतः श्रवणाद्यनुसारेण चिंतयत एतादृशाद्धृदयान्मनसः । अपसर्पतु गच्छतु निर्विघ्नं ब्रह्मात्मैक्यनिदिध्यासनं भवत्विति यावत् । केचित्तु सापेति संबुद्धिमविधायार्थिकीं तां गृहीत्वा । **येत्यादि** । सा तत्सजातीयानंदप्रीतिस्त्वामनुस्मरतो मे हृदयान्माऽपसर्पतु त्वदेकविषयिणी तादृग्येव सदाऽस्त्विति वदंति ॥ २०३ ॥

**रा० टीका**—भवत्वेवं पुराणे श्रुतौ किमायातमित्यत आह—

**इति न्यायेन सर्वस्माद्भोग्यजाताद्विरक्तधीः ॥**
**उपसंहृत्य तां प्रीतिं भोक्तर्येनं बुभुत्सते ॥ ४ ॥**

**इति न्यायेनेति ।** इत्यनेन पुराणोक्तन्यायेन सर्वस्माद्भोग्यजातात्पतिजायादिलक्षणाद्विरक्तधीर्विरक्ता धीर्यस्यासौ विरक्तधीः पुरुषस्तां भोग्यगोचरां प्रीतिं भोक्तर्यात्मन्युपसंहृत्यैनमात्मानं बुभुत्सते बोद्धुमिच्छति ॥ ४ ॥

**अ० टीका**—फलितमाह—**इतीति ।** भोक्तरि सामान्यतः सिद्धेऽहंप्रत्ययालंबने चिदाभासकूटस्थोभयात्मक इत्यर्थः । एनं भोक्तारं बुभुत्सते वास्तविकत्वेन बोद्धुमिच्छतीति यावत् ॥ २०४ ॥

**रा० टीका**—एवमात्मन्येव प्रेमोपसंहारे फलितं सदृष्टांतमाह—

**स्रक्चंदनवधूवस्त्रसुवर्णादिषु पामरः ॥**
**अप्रमत्तो यथा तद्वन्न प्रमाद्यति भोक्तरि ॥ २०५ ॥**

**स्रक्चंदनेति ।** पामरः पृथक् जनः स्रगादिविषये यथाऽप्रमत्तः सावधानो भवत्येवं मुमुक्षुरप्यात्मविषये न प्रमाद्यत्यनवधानं न करोति किंतु तच्चिंतयैव तिष्ठतीत्यर्थः॥२०५॥

**अ० टीका**—ननु भोग्येभ्यः सकाशाद्भोक्तर्युपसंहृतायाः प्रीतेः किं स्वरूपमत आह—**स्रगिति ।** न प्रमाद्यति तदेकविषयकचिंतयाऽनवरतं सावधानो भवतीत्यर्थः ॥ २०५ ॥

**रा० टीका**—अनवधानाभावमेव बहुभिर्दृष्टांतैः स्पष्टयति—

**काव्यनाटकतर्कादिमभ्यस्यति निरंतरम् ॥**
**विजिगीषुर्यथा तद्वन्मुमुक्षुः स्वं विचारयेत् ॥ ६ ॥**

**काव्येति ।** यथा विजिगीषुः प्रतिवादिजयकाम इह लोके प्रधानः पुरुषो निरंतरं काव्यादीनभ्यस्यत्येवं मुमुक्षुरपि सदा स्वात्मानं विचारयेत् ॥ ६ ॥

**अ० टीका**—तत्प्रकारमेव दृष्टांतैर्विस्पष्टीकृत्य प्रागुक्तब्रह्माभ्यासवदिदानीमात्माभ्यासरूपं तद्विचारं विधत्ते—**काव्येत्यादित्रिभिः ।** आदिना सांख्यादि । स्वमात्मानमात्मन आकाशः संभूत इत्यादिश्रुतिप्रसिद्धमित्यर्थः ॥ २०६ ॥

**जपयागोपासनादि कुरुते श्रद्धया यथा ॥**
**स्वर्गादिवांछया तद्वच्छ्रद्दध्यात्स्वे मुमुक्षया ॥ ७ ॥**

**रा० टीका**—**जपेति ।** यथा वैदिकश्च स्वर्गाद्यर्थी तत्तत्साधनानि जपादीनि श्रद्धापुरःसरमनुतिष्ठति तथा मुमुक्षुरपि मोक्षेच्छया स्वे श्रौत आत्मनि विश्वासं कुर्यात् ॥ ७ ॥

**अ० टीका**—**जपेति ।** जपो गायत्र्यादिमंत्राणां प्रसिद्ध एव । यागश्चातुर्मास्यादिः। उपासना संध्यावंदनादिलक्षणं ध्यानम् । आदिना सत्रादि । **स्वर्गादीति । कर्मणा** पितृलोक इति **तमेतं** वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेनेत्यादि च **श्रुतिभ्यां** पितृलोकचित्तशुद्ध्यादीच्छयेति यावत् । स्वेऽद्वैतात्मनि विषय इत्यर्थः ॥ २०७ ॥

**चित्तैकाग्र्यं यथा योगी महायासेन साधयेत् ॥**
**अणिमादिप्रेप्सयैवं विविच्यात्स्वं मुमुक्षया ॥ ८ ॥**

**रा० टीका—चित्तैकाग्र्यमिति ।** योगी योगाभ्यासवानणिमाद्यैश्वर्यलाभेच्छया महायासेन चित्तैकाग्र्यं यथा संपादयेत्तद्वदयमप्याऽऽत्मानं सदा विविच्याद्देहादिभ्यो विविच्य जानीयादित्यर्थः ॥ ८ ॥

**अ० टीका—चित्तैकाग्र्यमिति** । स्वं साक्षित्वोपलक्षितं कूटस्थाख्यं शोधितत्वंपदार्थमित्यर्थः । अत्र काव्येत्यादिदृष्टांतत्रयेण क्रमाद्वाचिककायिकमानसिकाखिलव्यापाराणामनात्मपराणां निदर्शनेन पाठक्रमादर्थक्रमो बलीयानिति **न्यायेन** कायिकादिनिखिलव्यापारान्विहायाद्वैतात्ममात्रनिरतेन तत्त्वज्ञानदार्ढ्यार्थं मुमुक्षुणा भाव्यमिति द्योत्यते ॥ २०८ ॥

**रा० टीका**—नन्वेवमेतेषां सदाऽभ्यासेन किं फलमित्यत आह—

**कौशलानि विवर्धन्ते तेषामभ्यासपाटवात् ॥**
**यथा तद्वद्विवेकोऽस्याप्यभ्यासाद्विशदायते ॥ ९ ॥**

**कौशलानीति** । यथा तेषां काव्याद्यभ्यासवतामभ्यासपाटवेन तस्मिंस्तस्मिन्विषये कौशलानि विवर्धन्ते । एवमस्यापि मुमुक्षोरभ्यासाद्विवेको देहादिभ्य आत्मनो भेदज्ञानं विशदायते स्पष्टं भवति ॥ ९ ॥

**अ० टीका**—एवं च तत्त्वविद्यादृढत्वं कथं स्यादित्याशंक्य तन्निदर्शनेनैव समाधत्ते—**कौशलानीति** । तेषामुक्तविजिगीषुप्रभृतीनां पुरुषाणामित्यर्थः । विशदायते कालत्रयेऽपि द्वैतसत्यत्वाद्यध्यासेन नीलिम्ना नभ इव नैव मलिनीभवतीत्येतत् ॥ २०९ ॥

**रा० टीका**—विवेकवैशद्यस्य फलमाह—

**विविंचता भोक्तृतत्त्वं जाग्रदादिष्वसंगता ॥**
**अन्वयव्यतिरेकाभ्यां साक्षिण्यध्यवसीयते ॥ २१० ॥**

**विविंचतेति** । अन्वयव्यतिरेकाभ्यां भोक्तृतत्त्वं भोक्तुः पारमार्थिकस्वरूपं विविंचता भोग्येभ्यो जडजातेभ्यो भेदेन जानता पुरुषेण जाग्रदादिषु जाग्रत्स्वप्नसुषुप्तिष्ववस्थासु साक्षिण्यसंगताऽध्यवसीयते निश्चीयत इत्यर्थः ॥ २१० ॥

**अ० टीका**—ननु निरुक्तविवेकाभ्यासेन द्वैताध्यासाभावः कथं परिपक्वत्वेन परिचेय इत्यत्राऽऽह—**विविंचतेति** । जाग्रदादिषु जाग्रत्स्वप्नसुषुप्तिमूर्छामरणसमाधिष्वित्यर्थः । उपलक्षणमिदं सृष्टिस्थितिप्रलयानामपि ॥ २१० ॥

**रा० टीका**—अन्वयव्यतिरेकौ दर्शयति—

**यत्र यद्दृश्यते द्रष्ट्रा जाग्रत्स्वप्नसुषुप्तिषु ॥**
**तत्रैव तन्नेतरत्रेत्यनुभूतिर्हि संमता ॥ ११ ॥**

**यत्रेति** । जाग्रदादिषु मध्ये यत्र यस्मिन्स्थाने जाग्रति स्वप्ने सुषुप्तौ यत्स्थूलं सूक्ष्ममानंदश्चेति त्रिविधं भोग्यं द्रष्ट्रा साक्षिणा दृश्यतेऽनुभूयते । तद्दृश्यं तत्रैव तस्यामेवावस्थायां तिष्ठति । इतरत्र न । इतरस्यामवस्थायां नास्ति द्रष्टा तु सर्वत्रानुगततया वर्तत इत्यनुभवः सर्वसंमतो हि प्रसिद्धमेतदित्यर्थः ॥ ११ ॥

**अ० टीका**—ननु कीदृशावन्वयव्यतिरेकौ साक्षिण्यसंगतासाधकावित्याशंकायां स्वानुभूतिसिद्धावन्वयव्यतिरेकौ निर्वक्ति—**यत्रेति** । द्रष्ट्रा साक्षिणा । **जाग्रदित्यादि** । जाग्रदाद्यवस्थात्रयमध्य इत्यर्थः । यत्र यस्मिञ्जाग्रल्लक्षणे वा स्वप्नलक्षणे वा सुषुप्तिलक्षणे वा । अवस्थाविशेष इत्यार्थिकम् । दृश्यते भास्यते स्थूलदेहघटपटादिकमक्ष्यादींद्रियद्वारा साक्षात्तु स्वप्नादौ विषयीक्रियत इति यावत् । तत्तत्रैव जाग्रत्यनुभूतं स्थूलदेहघटपटादिकं जाग्रत्येव वर्तते न तु स्वप्नादौ ।

एवं स्वप्नाद्यनुभूतं स्थूलेतरप्रपंचकारणाज्ञानादिकम्। तत्तत्रैव स्वप्नादावेव न तु जाग्रत्यस्तीत्यनुभूतिः। हीति प्रसिद्धौ संमता सर्वमान्या भवतीति योजना। एवं च द्रष्टुः साक्षिणः सर्वावस्थास्वप्यनुस्यूतत्वेनानुवृत्तिशब्दवाच्योऽन्वयः। जाग्रदाद्यवच्छेदेन दृश्यस्य सावच्छेदकस्थूलादेस्तत्तदितरावस्थासु तत्तदवस्थाख्यावच्छेदकविशिष्टस्यापि दृश्यस्याभावेन व्यावृत्तिशब्दितो व्यतिरेकः स्फुटित इत्याशयः। ननु यत्सत्त्वे यत्सत्त्वमन्वयः। यदभावे यदभावो व्यतिरेक इति तार्किकादिसंमतौ तंत्वादिसत्त्वे पटादिसत्त्वं तंत्वाद्यभावे पटाद्यभाव इत्याद्यखिलोदाहरणेष्वनुभूतान्वयव्यतिरेकौ प्रकृते कुतो नोक्ताविति चेन्न। तयोरप्याचार्यैः साक्षित्वोपलक्षितस्याऽऽत्मनः कालत्रयेऽप्यसंगत्वसिध्यर्थमत्रैव सूचितत्वेऽपि त्वयैव तत्तात्पर्यानाकलनात्। तथाहि। जाग्रदादितत्तदवस्थावच्छेदेन सावच्छेदकस्थूलदेहादिदृश्यसत्त्व एवाद्वैतात्मनि 'साक्षाद्द्रष्टरि संज्ञायाम्' इति पाणिन्यनुशासनात्तद्द्रष्टृत्वलक्षणसाक्षित्वसत्त्वमित्यन्वयस्तस्य बोधबाधेनाभावे तु निरुक्तलक्षणसाक्षित्वाभाव इति व्यतिरेकोऽपीति संक्षेपः ॥ ११ ॥

**रा० टीका**—न केवलमनुभव आगमोऽपीत्यभिप्रायेण 'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुषः स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवति' इत्यादिवाक्यद्वयमर्थतः पठति—

**स यत्तत्रेक्षते किंचित्तेनानन्वागतो भवेत् ॥**
**दृष्ट्वैव पुण्यं पापं चेत्येवं श्रुतिषु डिंडिमः ॥ १२ ॥**

**स यदिति**। स आत्मा तत्र तस्यामवस्थायां यत्किंचिद्भोग्यमीक्षते पश्यति तेन दृश्येनानन्वागतो भवेदनुसृत्य गतो न भवेत्किंतु स्वयमेवावस्थांतरं गच्छतीत्यर्थः। पुण्यं पुण्यफलं सुखं पापं तत्फलं दुःखं च दृष्ट्वैवानादायैवेत्यर्थः ॥ १२ ॥

**अ० टीका**—उक्तेऽर्थे श्रुतीरपि प्रमाणयन्नादौ **बृहदारण्यकगं स** यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवति **असंगो** ह्ययं पुरुष इति। **स वा एष** एतस्मिन्त्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रति न्यायं प्रति योन्या द्रवति इति च वचनद्वयमर्थतः पठति—**स यदिति**। स सचिदाभासः कूटस्थ आत्मा। तत्र स्वप्नावस्थायाम्। यत्किंचिदीक्षते स्वाप्नं भोग्यं पश्यति तेनानन्वागतो भवेत्संबद्धो नैव भवति। पुण्यं तत्फलं सुखम्। पापं तत्फलं दुःखम्। शिष्टं तु स्पष्टमेव ॥ १२ ॥

**रा० टीका**—भोक्तृतत्त्वविवेचनपराणि श्रुत्यंतराणि दर्शयति—

**जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ॥**
**तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते ॥ १३ ॥**

**जाग्रदिति**। यत्सत्यज्ञानानंदलक्षणं ब्रह्म साक्षिरूपेणावस्थितं तज्जाग्रदादिप्रपंचं प्रकाशते प्रकाशयति। तद्ब्रह्माहमस्मि न बुद्धिचिदाभासाद्यहमस्मीति ज्ञात्वा श्रुत्यनुभवाभ्यां निश्चित्य सर्वबंधैः प्रमातृत्वकर्तृत्वादिभिः प्रमुच्यते प्रकर्षेण सर्वात्मना मुच्यते ॥ १३ ॥

**अ० टीका**—एवमाथर्वणिककैवल्योपनिषच्छ्रुतिमपि पठति—**जाग्रदिति**। आदिना समाधिः। अपरं तु सरलमेव ॥ १३ ॥

**एक एवाऽऽत्मा मंतव्यो जाग्रत्स्वप्नसुषुप्तिषु ॥**
**स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ १४ ॥**

**रा० टीका**—**एक इति**। जाग्रदादिष्ववस्थास्वेक एवाऽऽत्मा मंतव्यः। एवं विवेकज्ञानेन स्थानत्रयव्यतीतस्यावस्थात्रयाद्विविक्तस्याऽऽत्मनः पुनर्जन्म न विद्यते। एतच्छरीरपातानंतरं शरीरांतरप्राप्तिर्नास्तीत्यर्थः॥ १४॥

**अ० टीका**—तद्वदाथर्वणीयामृतबिंदूपनिषन्मंत्रमपि संगृह्णाति—**एक एवेति**। इदं तु निगदव्याख्यातमेवास्ति वाक्यम्॥ १४॥

**त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्॥**
**तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः॥२१५॥**

**रा० टीका**—**त्रिष्विति**। त्रिषु धामसु त्रिष्ववस्थानेषु यद्भोग्यं स्थूलप्रविविक्तानंदस्वरूपम्। यश्च भोक्ता विश्वतैजसप्राज्ञरूपो यश्च भोगस्तदनुभवरूपश्चेति ये विद्यंते तेभ्यः स्थानादिभ्यो विलक्षणो यश्चिन्मात्ररूपः साक्षी सदाशिवो निरतिशयानंदरूपत्वेन सर्वदा शोभमानः परमात्माऽस्ति सोऽहमस्मीत्यर्थः॥ २१५॥

**अ० टीका**—पुनरपि कैवल्यवाक्यमेव लिखति—**त्रिष्विति**। धामसु जाग्रदाद्यवस्थावच्छिन्नस्थूलदेहादिगृहेष्वित्यर्थः। अपरं त्वतिरोहितार्थकमेव। यद्यप्यत्र जाग्रदाद्यवस्थात्रयेऽपि सामान्यतः कंठत एव भोक्तृभोग्यभोगाख्यत्रिपुट्युक्तेः "सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति। पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः" इति पूर्वमंत्रपठितसकलत्रिपुट्यात्मकप्रपंचविलयो विरुद्धः प्रतीयते तथाऽप्यसौ सुखमहमस्वाप्सं दुःखमहमस्वाप्सं गाढमूढोऽहमस्वाप्समिति तदुत्थितपरामर्शोत्सिधांतबिंद्वादिप्रसिद्धसात्त्विकादिसुषुप्तिभेदेन तत्रैविध्यात्तामसतद्भेदाभिप्रायैव पूर्वश्रुतिः सकलविलयवादिनी सात्त्विकादितद्भेदद्वयांगीकृतसुखाद्यभिप्रायिकैव सामान्यतोऽवस्थात्रयेऽपि त्रिपुटीसत्त्ववादिनी सेति तत्परिहारो ध्येयो धीरैः। विस्तरस्तु मामकप्रारब्धध्वांतसंहृतावेव बोध्य इति दिक्॥ २१५॥

**रा० टीका**—एवं विवेकेनाऽऽत्मतत्त्वेऽसंगे निश्चिते सति भोक्तृत्वं कस्येत्यत आह—

**एवं विवेचिते तत्त्वे विज्ञानमयशब्दितः॥**
**चिदाभासो विकारी यो भोक्तृत्वं तस्य शिष्यते॥१६॥**

**एवमिति**। यो विज्ञानशब्देनाभिधीयमानश्चिदाभासस्तस्य विकारित्वाद्भोक्तृत्वमित्यर्थः॥ १६॥

**अ० टीका**—एतद्विवेचनफलमाह—**एवमिति**॥ १६॥

**रा० टीका**—ननु चिदाभासस्य भोक्तृत्वांगीकारे कस्य कामायेति वचो भोक्त्रभावविवक्षयेति पूर्वोक्तं व्याहन्येतेत्याशंक्य तस्य वचनस्य पारमार्थिकभोक्त्रभावपरत्वमभिप्रेत्य भोक्तुश्चिदाभासस्य मिथ्यात्वं साधयति—

**मायिकोऽयं चिदाभासः श्रुतेरनुभवादपि॥**
**इंद्रजालं जगत्प्रोक्तं तदंतःपात्ययं यतः॥ १७॥**

**मायिक इति**। अयं चिदाभासो मायिको मृषात्मकः श्रुतेः। जीवेशावाभासेन करोतीति श्रुतेः। अनुभवादपि द्रष्ट्रादित्रितयमध्यवर्तित्वेनानुभूयमानत्वादपीत्यर्थः। तदेवोपपादयति—

**इंद्रजालमिति** । इंद्रजालवन्मिथ्याभूते जगत्यंतर्भूतत्वादस्यापि मिथ्यात्वं तद्वदनुभूयते विद्वद्भिरिति शेषः । यस्माज्जगदंतःपातीत्यतो मृषेति योजना ॥ ११७ ॥

**अ० टीका**—ननु किमसौ सत्योऽस्ति नेत्याह—**मायिक इति । जीवेशावाभासेन करोतीति** श्रुतेर्ब्रह्मविदनुभूतेश्चेत्यर्थः । **इंद्रजालमिति । इंद्रजालमिव मायामयमिति श्रुतेः** ॥ १७ ॥

**रा० टीका**—अस्य जगत इव विनाशित्वानुभवादपि मृषात्वमित्याह—

**विलयोऽप्यस्य सुप्त्यादौ साक्षिणा ह्यनुभूयते ॥**
**एतादृशं स्वस्वभावं विविनक्ति पुनः पुनः ॥ १८ ॥**

**विलयोऽपीति ।** मूर्छादिरादिशब्दार्थः । भवतु मृषात्वं ततः किमित्यत आह—**एतादृशमिति ।** यदा कूटस्थाद्विवेचितश्चिदाभासो मायिको ज्ञातस्तदा स्वस्वभावं स्वतत्त्वमेतादृशं मृषात्मकं पुनः पुनर्विविनक्ति कूटस्थाद्विविच्य जानाति ॥ १८ ॥

**अ० टीका**—चिदाभासस्य मायिकत्वे हेत्वंतरमपि द्योतयति—**विलयोऽपीति ।** आदिना मूर्छादि । ननु कूटस्थस्यासंगत्वादुक्तविवेकोऽपि चिदाभासकर्तृक एवेति तथा च किमस्य तत्फलमित्यत्राऽऽह—**एतादृशमित्यादि ।** अयं चिदाभास इत्यार्थिकम् । **एतादृशं** प्रागुक्तमायिकत्वादिलक्षणम् । स्वस्वभावं विविनक्ति चेत् ॥ १८ ॥

**रा० टीका**—ततोऽपि किमित्यत आह—

**विविच्य नाशं निश्चित्य पुनर्भोगं न वांछति ॥**
**मुमूर्षुः शायितो भूमौ विवाहं कोऽभिवांछति ॥ १९ ॥**

**विविच्येति ।** स्वविनाशनिश्चये भोगेच्छाऽभावे दृष्टांतमाह–मुमूर्षुरिति ॥ १९ ॥

**अ० टीका**—तर्हि नाशमपि सुषुप्त्यादौ साक्ष्यनुभूतं स्वविलयमपि विविच्य निश्चित्य विवेकपूर्वकमेव निर्णीयेत्यर्थः । पुनरनंतरम् । भोगस्त्रगाद्यनुभवं वांछतीत्युत्तरेणान्वयः । तत्रार्थांतरन्यासमाह—**मुमूर्षुरित्यर्धेन** ॥ १९ ॥

**रा० टीका**—किंच पूर्ववदहं भोक्तेति व्यवहर्तुमपि लज्जत इत्याह—

**जिह्रेति व्यवहर्तुं च भोक्ताऽहमिति पूर्ववत् ॥**
**छिन्ननास इव ह्रीतः क्लिश्यन्नारब्धमश्नुते ॥ २२० ॥**

**जिह्रेतीति** । तर्हि ज्ञानोत्पत्त्यनंतरं प्रारब्धावसानपर्यंतं कथं व्यवहरतीत्यत आह–**छिन्नेति** । ह्रीतो लज्जितः क्लिश्यन्नेदानीमपि कर्म क्षीयत इति क्लेशमनुभवन्प्रारब्धमश्नुते प्रारब्धकर्मफलं भुंक्त इत्यर्थः ॥ २२० ॥

**अ० टीका**—नन्वथापि प्रारब्धकर्मफलभोगस्त्वस्य वाच्यः स कथमुपपद्यत इत्यत आह—**जिह्रेतीति ।** पूर्ववत्साक्षिणः सकाशात्स्वाविवेककाल इवाहं भोक्तेति व्यवहर्तुमपि जिह्रेति लज्जत इति संबंधः । अत एव । **छिन्नेति ।** ह्रीतः लज्जितः । अत एव । क्लिश्यन्दुःखित एव सन्नित्यर्थः । आरब्धं प्रारब्धाप्तवनितादिसुखोपभोगमपीति यावत् । अश्नुते भुङ्क्त इति योजना ॥ २२० ॥

**रा० टीका**—इदानीं ज्ञानानंतरं साक्षिणो भोक्तृत्वाभावः कैमुतिकन्यायसिद्ध इत्याह—

**यदा स्वस्यापि भोक्तृत्वं मंतुं जिह्रेत्ययं तदा ॥**
**साक्षिण्यारोपयेदेनदिति कैव कथा वृथा ॥ २१ ॥**

**यदेति** । अयं चिदाभासः स्वस्यापि भोक्तृत्वं मंतुमहं भोक्तेति ज्ञातुं जिह्रेति विलज्जते यदा तदैतत्स्वगतं भोक्तृत्वं साक्षिण्यसंग आरोपयेदिति वृथाऽर्थशून्या कथा कैव न काऽपीत्यर्थः ॥ २१ ॥

**अ० टीका**—एतेन कूटस्थे प्राग्वद्भोक्तृत्वं नैवाऽऽरोपयतीति कैमुत्यसिद्धमेवेत्याह—**यदेति** ॥ २१ ॥

**इत्यभिप्रेत्य भोक्तारमाक्षिपत्यविशंकया ॥**
**कस्य कामायेति ततः शरीरानुज्वरो न हि ॥ २२ ॥**

**रा० टीका**—उक्तमर्थं श्रुत्यारूढं करोति **इतीति** । 'कस्य कामायेति' श्रुतिरित्यर्थः । कूटस्थस्य चिदाभासस्य वा पारमार्थिकभोक्तृत्वाभावमभिप्रेत्याविशंकया शंकाराहित्येन भोक्तारमाक्षिपति निराकरोति । भवत्वेवं भोक्त्राक्षेपस्ततः किमित्यत आह—**तत इति** । न हि ज्वरो ज्वरणं संतापः ॥ २२ ॥

**अ० टीका**—ततः किं प्रकृतश्रुतिविवृतावित्यत्राऽऽह—**इतीति** । श्रुतिवाक्यमिति शेषः । फलितमाह—**तत इत्यादिना** ॥ २२ ॥

**स्थूलं सूक्ष्मं कारणं च शरीरं त्रिविधं स्मृतम् ॥**
**अवश्यं त्रिविधोऽस्त्येव तत्र तत्रोचितो ज्वरः ॥ २३ ॥**

**रा० टीका**—तत्त्वविदः शरीरानुज्वराभावं दर्शयितुं शरीरभेदं तत्र तत्र ज्वरसद्भावं च दर्शयति—**स्थूलमिति** ॥ २३ ॥

**अ० टीका**—शरीरानुज्वरविरहप्रकारमेव विस्तारयति—**स्थूलमित्यादि** पंचभिः । शीर्यत इति व्युत्पत्तेस्त्रिष्वपि साधारण्यात्त्रिप्रकारमित्यर्थः ॥ २३ ॥

**वातपित्तश्लेष्मजन्यव्याधयः कोटिशस्तनौ ॥**
**दुर्गंधित्वकुरूपत्वदाहभंगादयस्तथा ॥ २४ ॥**

**रा० टीका**—तत्र स्थूलशरीरे ज्वरांस्तावदाह—**वातेति** ॥ २४ ॥

**अ० टीका**—**वातेति** । श्लेष्मा कफः । भंगोऽवयवच्छेदस्तद्भेदो वा ॥ २४ ॥

**रा० टीका**—सूक्ष्मशरीरे ज्वरान्दर्शयति—

**कामक्रोधादयः शांतिदांत्याद्या लिंगदेहगाः ॥**
**ज्वरा द्वयेऽपि बाधंते प्राप्त्याऽप्राप्त्या नरं क्रमात् ॥ २५ ॥**

**कामेति** । कामशांत्यादीनां च ज्वरत्वमुपपादयति—**द्वयेऽपीति** । द्वयेऽपि द्विविधाऽपि क्रमेण प्राप्त्यप्राप्तिभ्यां नरं बाधंतेऽतो ज्वरसाम्याऽज्वरा इत्युच्यंत इत्यर्थः ॥ २५ ॥

**अ० टीका**—**कामेति** । द्वयेऽपि द्विविधाऽपीति प्राञ्चः । अत्र तयपोऽयचि स्थानिवद्भावेन तयबंतत्वात्सर्वनामसंज्ञेति द्वय इति साधु ॥ २२५ ॥

**रा० टीका**—कारणशरीरगतो ज्वरश्छांदोग्यश्रुतावुक्त इत्याह—

**स्वं परं च न वेत्त्यात्मा विनष्ट इव कारणे ॥**
**आगामिदुःखबीजं चेत्येतदिंद्रेण दर्शितम् ॥ २६ ॥**

**स्वं परमिति ।** ' न हि खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि ' । इति वाक्येन स्वपरज्ञानशून्यत्वमज्ञानेन नष्टप्रायत्वं परेद्युरागामिदुःखबीजं चेंद्रेण शिष्येण गुरोः प्रजापतेः पुरतो निवेदितमित्यर्थः ॥ २६ ॥

**अ० टीका—स्वं परं चेति ।** इंद्रेणेति कारणज्वरप्रमाणदर्शनार्थमेव । तथाचाऽऽम्नायते **छांदोग्याष्टमे—नाहं** खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति । नाहमत्र भोग्यं **पश्यामीत्यादि ।** दर्शितमुक्तम् ॥ २६ ॥

**रा० टीका**—एवं त्रिष्वपि देहेषु ज्वरानभिधाय तेषामपरिहार्यत्वमाह—

**एते ज्वराः शरीरेषु त्रिषु स्वाभाविका मताः ॥**
**वियोगे तु ज्वरैस्तानि शरीराण्येव नासते ॥ २७ ॥**

**एत इति ।** त्रिष्वपि शरीरेषु प्रतीयमाना एते ज्वराः शरीरैः सहोत्पन्नत्वेन स्वाभाविकाः संमताः । स्वाभाविकत्वं व्यतिरेकमुखेन द्रढयति—**वियोगे त्विति ।** यतः कारणादेभिर्ज्वरैस्तेषां शरीराणां वियोगे सति तानि शरीराणि नासत एव नैव भवंत्यतः स्वाभाविका इत्यर्थः ॥ २७ ॥

**अ० टीका**—ननु यद्येवं त्रिष्वपि शरीरेषु ज्वराश्चेत्ते तत्तदुपायैः प्रशमनीया एवेत्यत आह—**एत इति** ॥ २७ ॥

***तंतोर्वियुज्येत पटो वालेभ्यः कम्बलो यथा ॥**
**मृदो घटस्तथा देहो ज्वरेभ्योऽपीति दृश्यताम् ॥ २८ ॥**

**रा० टीका**—तत्र दृष्टांतमाह—**तंतोरिति** ॥ २८ ॥

**अ० टीका**—तत्र दृष्टांतोपन्यासैः शरीरत्रयस्यापि ज्वरैकोपादानकत्वं साधयति—**तंतोरिति ।** वियुज्येद्वियोगं लभेदित्यर्थः । वियुज्येतेत्यपपाठ एव ॥ २८ ॥

**रा० टीका—**इदानीं कूटस्थे ज्वराभावं कैमुतिकन्यायेन दिदर्शयिषुश्चिदाभासे तावज्ज्वराभावं दर्शयति—

**चिदाभासे स्वतः कोऽपि ज्वरो नास्ति यतश्चितः ॥**
**प्रकाशैकस्वभावत्वमेव दृष्टं न चेतरत् ॥ २९ ॥**

**चिदाभास इति ।** चिदाभासे स्वतः शरीरत्रयगतज्वरसंबंधमंतरेण न कोऽपि ज्वरो विद्यते कुत इत्यत आह—**यत इति ।** चितः प्रकाशैकस्वभावस्य विद्वदनुभवसिद्धत्वात्प्रतिबिंबस्य चिदाभासस्य तथात्वमेष्टव्यमिति भावः ॥ २९ ॥

**अ० टीका**—नन्वेवं चेत्तर्हि दृश्यत्वात्त्रिविधशरीरवच्चिदाभासेऽपि कश्चिज्ज्वरः संभाव्यत एवेत्यत्राऽऽह—**चिदाभास इति ।** तत्र हेतुः—**यत इत्यादिना** ॥ २९ ॥

**रा० टीका**—यदर्थं चिदाभासे ज्वराभाव उपपादितस्तदिदानीं दर्शयति—

---

* तन्तोर्विंयुज्येत्र पट इत्यच्युतरायपाठः ।

**चिदाभासेऽप्यसंभाव्या ज्वराः साक्षिणि का कथा ॥**
**एवमप्येकतां मेने चिदाभासो ह्यविद्यया ॥ २३० ॥**

**चिदाभासेऽपीति ।** यदा चिदाभासेऽपि ज्वरा न संभाव्यंते तदा न साक्षिणि सं- वंतीति किमु वक्तव्यमिति भावः । ननु तर्हि ज्वरामीत्यनुभवस्य का गतिरित्यत आह—**एः मप्येकतामिति** ॥ २३० ॥

**अ० टीका**—एवं च साक्षिणि सकलज्वरविरहः कैमुत्यसिद्ध एवेत्याह—**चिदा भासेऽपीति ।** नन्वेवं तर्ह्यहं सुखीत्यादिज्वरप्रतीतिः किं निबंधनेत्याशंक्याविवेकमूलिकैवोक्त ज्वरप्रतीतिरिति समाधत्ते—**एवमपीति ।** अनादिभावरूपयेत्यार्थिकम् । अन्यथाऽनवस्था व्याघाताद्यापत्तिर्दुरंतैवेति भावः । तद्यथा । अविद्यायाः कल्पितत्वेन जन्यत्वे त्वविद्यैकमूलकत्व तद्वत्तत्राप्यविद्यांतरैकमूलकत्वमित्यनवस्था । एवं विद्याशब्दितज्ञानाभावो यद्यविद्या तर्हि कि मसौ ज्ञानसामान्यप्रतियोगिकः किं वा तद्विशेषप्रतियोगिकः । आद्ये धर्मिप्रतियोगिविषयकज्ञा नसत्त्वे तत्सामान्याभावासिद्धिस्तदसत्त्वे चाभावाज्ञाने प्रतियोग्यादिज्ञानस्य हेतुत्वात्तदसिद्धि- रिति व्याघातः । अंत्ये यद्विषयकत्वमज्ञानस्येष्टं तद्विषयकज्ञानमेव प्रतियोगित्वेन विवक्षितो ज्ञानविशेषो वाच्यः । नो चेद्घटविषयकाज्ञाने ह्यभावात्मके पटविषयकज्ञानमपि प्रतियोगि स्यात् । तच्चानुपपन्नं प्रतियोगितदभावयोः सामानाधिकरण्यादर्शनात् । देवदत्ते हि पटज्ञानस- मकालमपि घटाज्ञानोपलब्धेः । एवं च प्रतियोगिभूतं यदज्ञानविषयीभूतवस्तुविषयकं ज्ञानं त- द्विषयकं ज्ञानं त्वन्मतेऽनुव्यवसायात्मकमेव । तथा च तद्विनाऽभावसिद्धिर्न स्यात्तत्सत्त्वे चार्था- त्प्रतियोगिनः सिद्धत्वात्तत्सामानाधिकरण्येन सुतरामज्ञानस्य ज्ञानविशेषाभावरूपस्य नैव सि- द्धिरिति तथैव व्याघात इति ॥ २३० ॥

**रा० टीका**—एकतां मेन इति संक्षेपेणोक्तमर्थं प्रपंचयति—

**साक्षिसत्यत्वमध्यस्य स्वेनोपेते वपुस्त्रये ॥**
**तत्सर्वं वास्तवं स्वस्य स्वरूपमिति मन्यते ॥ ३१ ॥**

**साक्षीति ।** चिदाभासः स्वेन सहिते शरीरत्रये साक्षिगतं सत्यत्वमध्यस्य तत्सर्वं ज्व- रवच्छरीरत्रयं स्वस्य वास्तवं रूपमिति मन्यत इत्यर्थः ॥ ३१ ॥

**अ० टीका**—एकताप्रकारमेव प्रपंचयति – **साक्षीति** ॥ ३१ ॥

**रा० टीका**—एवं भ्रांतिज्ञाने सति किं भवतीत्याह—

**एतस्मिन् भ्रांतिकालेऽयं शरीरेषु ज्वरत्स्वथ ॥**
**स्वयमेव ज्वरामीति मन्यते हि कुटुंबिवत् ॥ ३२ ॥**

**एतस्मिन्निति ।** अयं चिदाभासोऽस्यां भ्रांतिवेलायां शरीरनिष्ठं ज्वरं स्वात्मन्यारोप- यतीत्यर्थस्तत्र दृष्टांतमाह—**कुटुंबिवदिति** ॥ ३२ ॥

**अ० टीका**—फलितमाह—**एतस्मिन्निति ।** अयं चिदाभासः । **कुटुंबिवदिति ।** एतद्दृष्टांतेन तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलो वेति मन्यत इ- **त्यध्यासभाष्योक्त**पुत्राद्यध्यासांतरप्रकारोऽपि सूचित इति रहस्यम् ॥ ३२ ॥

**पुत्रदारेषु तप्यत्सु तपामीति वृथा यथा ॥**
**मन्यते पुरुषस्तद्वदाभासोऽप्यभिमन्यते ॥ ३३ ॥**

**रा० टीका**—दृष्टांतं विशदयति—**पुत्रदारेष्विति** ॥ ३३ ॥

**अ० टीका**—उक्तदृष्टांतमेव स्पष्टयति—**पुत्रेति** । पुत्राश्च दाराश्च तेष्वित्यर्थः॥३३॥

**रा० टीका**—एवमविवेकदशायां चिदाभासस्य भ्रांत्या ज्वरं प्रदर्श्य विवेकदशायां तदभावं दर्शयति—

**विविच्य भ्रांतिमुज्झित्वा स्वमप्यगणयन्सदा ॥**
**चिंतयन्साक्षिणं कस्माच्छरीरमनुसंज्वरेत् ॥ ३४ ॥**

**विविच्येति** । चिदाभासः कूटस्थं स्वात्मानं शरीराणि च विविच्य भेदेन ज्ञात्वा तत्सर्वं वास्तवं स्वस्य रूपमिति मन्यत इत्युक्तां भ्रांतिं परित्यज्य स्वस्याभावरूपत्वज्ञानेन स्वस्मिन्नप्यादरमकुर्वन्स्वस्य निजं रूपं ज्वरादिरहितं साक्षिणं सदा चिंतयन्कस्माच्छरीरमनुसंज्वरेज्ज्वरवच्छरीरमनुसृत्य स्वयं कस्मात्संज्वरेन्न संज्वरेदेवेत्यर्थः ॥ ३४ ॥

**अ० टीका**—प्रकृतमाह—**विविच्येति** । प्रागुक्तरीत्या विवेकं विधायेत्यर्थः । अगणयन्कूटस्थेतरवास्तविकत्वेनेति यावत् । उज्झित्वोज्झ उत्सर्ग इति धातोरुत्सृज्येत्यर्थः॥३४॥

**रा० टीका**—भ्रांतिज्ञानतत्त्वज्ञानयोर्ज्वरतदभावकारणत्वं दृष्टांतप्रदर्शनेन स्पष्टयति—

**अयथावस्तुसर्पादिज्ञानं हेतुः पलायने ॥**
**रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति ॥ २३५ ॥**

**अयथेति** । रज्ज्वादौ कल्पितस्य सर्पादेर्ज्ञानं पलायने कारणं भवति । आदिशब्देन स्थाणौ कल्पितश्चोरो गृह्यते । रज्ज्वादिज्ञानेन सर्पादिबुद्धिनिवृत्तौ तदपि पलायनमनुशोचति वृथा कृतं मयेत्यनुतप्यत इत्यर्थः ॥ २३५ ॥

**अ० टीका**—शरीरत्रयानुज्वराभावे हेतुः—**अयथेति** । अहीतिच्छेदः ॥२३५॥

**रा० टीका**—साक्षिणं सदा चिंतयन्नित्युक्तमर्थं दृष्टांतेन स्पष्टयति—

**मिथ्याभियोगदोषस्य प्रायश्चित्तप्रसिद्धये ॥**
**क्षमापयन्निवाऽऽत्मानं साक्षिणं शरणं गतः ॥ ३६ ॥**

**मिथ्येति** । यथा लोके मिथ्याभियोगकर्ता तद्दोषस्य प्रायश्चित्तसिद्ध्यर्थं मिथ्याभियुक्तं पुनः पुनः क्षमापयति । एवमयं चिदाभासोऽपि साक्षिण्यसंगात्मनि भोक्तृत्वाद्यारोपलक्षणमिथ्याभियोगदोषप्रायश्चित्तार्थं साक्षिणमात्मानं क्षमापयन्निव शरणं गतः ॥ ३६ ॥

**अ० टीका**—अथ किं करोतीत्यत आह—**मिथ्येति** । साक्षिणि मिथ्याभूतदेहत्रयविशिष्टस्वाध्यासपूर्वकमिथ्याकर्तृत्वभोक्तृत्वारोपदोषस्येत्यर्थः । भवंतीत्यंते शेषः ॥ ३६ ॥

**रा० टीका**—तत्रैव दृष्टांतांतरमाह—

**आवृत्तपापनुत्त्यर्थं स्नानाद्यावर्त्यते यथा ॥**
**आवर्तयन्निव ध्यानं सदा साक्षिपरायणः ॥ ३७ ॥**

**आवृत्तेति** । यथा पापकारिणा पुरुषेणाऽऽवृत्तपापापनुत्त्यर्थमभ्यस्तपापापनोदाय वि-

हितं स्नानादिकं प्रायश्चित्तमावर्त्यते पुनः पुनरनुष्ठीयते तथाऽयमपि चिरं साक्षिणि संसारित्वाद्यारोपणदोषपरिहाराय ध्यानं पारिवर्तयन्निव सदा साक्षिपरायणो भवति ॥ ३७ ॥

**अ० टीका**—किमियं शरणागतिः क्षणिकेत्यत्राऽऽह—**आवृत्तेति** ॥ ३७ ॥

**उपस्थकुष्ठिनी वेश्या विलासेषु विलज्जते ॥**
**जानतोऽग्रे तथा भासः स्वप्रख्यातौ विलज्जते ॥ ३८ ॥**

**रा० टीका**—एवं साक्षिपरत्वं दृष्टांतैरुपवर्ण्य स्वगुणप्रख्याने लज्जालुत्वं सदृष्टांतमाह—**उपस्थकुष्ठिनीति** ॥ ३८ ॥

**अ० टीका**—नन्वत्र ध्यानं किं स्वेन सह साक्षिणि तादात्म्यभावना किंवा प्राङ्निर्णीतस्वादिसकलदृश्यमिथ्यात्वपूर्वदृङ्मात्रत्वेनापरोक्षनयाऽनुभूताद्वैतब्रह्मानुसंधानमिति चेदंत्यपक्ष एवेति स दृष्टांतं स्पष्टयति—**उपस्थेति** । जानतोऽग्र इति पूर्वान्वयि ॥ ३८ ॥

**गृहीतो ब्राह्मणो म्लेछैः प्रायश्चित्तं चरन् पुनः ॥**
**म्लेछैः संकीर्यते नैव तथा भासः शरीरकैः ॥ ३९ ॥**

**रा० टीका**—इदानीं शरीरत्रयाद्विवेचितस्य चिदाभासस्य पुनस्तैः सह तादात्म्यभ्रमाभावे दृष्टांतमाह—**गृहीत इति** ॥ ३९ ॥

**अ० टीका**—चिदाभासकर्तृकस्वप्रख्यात्यभावमेव दृश्यासंकरदृगैक्यसूचकदृष्टांताभ्यां स्पष्टयति—**गृहीत इत्यादिद्वाभ्याम्** ॥ ३९ ॥

**रा० टीका**—न केवलं स्वापराधानिवृत्तये साक्ष्यनुसरणं किंतु महत्प्रयोजनसिद्ध्यर्थमपीति सिंहावलोकनन्यायेन सदृष्टांतमाह—

**यौवराज्ये स्थितो राजपुत्रः साम्राज्यवांछया ॥**
**राजानुकारी भवति तथा साक्ष्यनुकार्ययम् ॥ २४० ॥**

**यौवराज्य इति** । राजानुकारी भवति राजेव प्रजारंजनादिगुणवान्भवतीत्यर्थः॥२४०॥

**अ० टीका**—**यौवराज्य इति** । अयं प्रकृतश्चिदाभासः ॥ २४० ॥

**रा० टीका**—ननु युवराजस्य राजानुसरणे साम्राज्यफलं दृश्यते नैवं साक्ष्यनुसरणेऽतस्तदनुसरणे कथं प्रवर्तेत इत्याशंक्याऽऽह—

**यो ब्रह्म वेद ब्रह्मैव भवत्येव इति श्रुतिः ॥**
**श्रुत्वा तदेकचित्तः सन्ब्रह्म वेत्ति न चेतरत् ॥ ४१ ॥**

**य इति** । 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रंथिभ्यो विमुक्तोऽमृतो भवति' इति **श्रुतौ** ब्रह्मभावादिरूपस्य फलस्य श्रूयमाणत्वात्तत्फलवांछया साक्ष्यनुसरणे प्रवर्तनं युक्तमित्यर्थः ॥ ४१ ॥

**अ० टीका**—ननु साक्षित्वमपि कल्पितसाक्ष्यप्रयुक्तमत आह—**य इति । स यो** ह वै तत्परमं **ब्रह्म** वेद ब्रह्मैव भवतीति श्रुतिवर्णाः ॥ ४१ ॥

**रा० टीका**—ननु ब्रह्मज्ञानेन ब्रह्मभावप्राप्तौ चिदाभासत्वमेव विनश्येदतः स्वविनाशाय कथं प्रवर्तेत इत्याशंक्याऽऽह—

**देवत्वकामा ह्यग्न्यादौ प्रविशंति यथा तथा ॥**
**साक्षित्वेनावशेषाय स्वविनाशं स वांछति ॥ ४२ ॥**

**देवत्वकामेति** । यथा लोके देवत्वप्राप्तिकामा मनुष्या भृग्वग्निप्रयागगंगाप्रवेशादौ प्रवर्तंत एवं साक्षिरूपेणावस्थानलक्षणस्याधिकफलस्य विद्यमानत्वाच्चिदाभासत्वापगमहेतौ ब्रह्मज्ञानेऽपि प्रवृत्तिर्घटत एवेत्यर्थः ॥ ४२ ॥

**अ० टीका**—नन्वद्वैतब्रह्मभावे स्वनाशस्तत्राऽऽह—**देवत्वेति** । **कुमारिलभट्टाचार्य**कृततुषाग्निप्रवेशः **शंकरविजये** प्रसिद्ध एव ॥ ४२ ॥

**रा० टीका**—ननु तत्त्वज्ञानेनाभासत्वमपगच्छति चेत्कथं तत्त्वविदां जीवत्वव्यवहार इत्याशंक्य प्रारब्धकर्मक्षयपर्यंतं तदुपपत्तिं सदृष्टांतमाह—

**यावत्स्वदेहदाहं स नरत्वं नैव मुञ्चति ॥**
**यावदारब्धदेहं स्यान्नाभासत्वविमोचनम् ॥ ४३ ॥**

**यावदिति** । यथाऽग्न्यादौ प्रविष्टः पुरुषो दाहादिना स्वदेहनाशपर्यंतं नरत्वं नरव्यवहारयोग्यत्वं नैव मुंचत्येवं प्रारब्धकर्मक्षयपर्यंतं चिदाभासत्वव्यवहारो न निवर्तत इत्यर्थः ॥४३॥

**अ० टीका**—तत्र यावत्प्रारब्धभोगं चिदाभासध्वंसाभावाद्दृष्टांतवैषम्यं प्रत्याचष्टे—**यावत्स्वदेहेति** । स कृताग्निप्रवेशः पुरुषः ॥ ४३ ॥

**रज्जुज्ञानेऽपि कंपादिः शनैरेवोपशाम्यति ॥**
**पुनर्मंदांधकारे सा रज्जुः क्षिप्तोरगी भवेत् ॥ ४४ ॥**

**रा० टीका**—ननु भोक्तृत्वादिभ्रमोपादानस्याज्ञानस्य निवृत्तत्वात्कथं पुनर्भोगानुवृत्तिः । कथं वा मर्त्योऽहमिति विपरीतप्रतीतिरित्याशंक्य दृष्टांतप्रदर्शनेनैतत्संभावयति । **रज्जुज्ञान इति** ॥ ४४ ॥

**अ० टीका**—ननु शुक्तिरजतादिनिरुपाधिकभ्रमेऽधिष्ठानसाक्षात्कारक्षण एव तद्विषयकाज्ञानतत्कार्यध्वंसः समनुभूयते तद्वदधिष्ठानविषयकानाद्यज्ञानमात्रविजृंभिते द्वैतभ्रमेऽपि तत्साक्षात्कारतुल्यकालमेव तदज्ञानतद्व्याप्यादिध्वंसेन भाव्यं तत्कथं यावदारब्धदेहं यावत्प्रारब्धकर्मप्रयुक्तदेहादिद्वैतप्रतिभासमाभासत्वविमोचनं चिदाभासत्वप्रध्वंसनं न स्यादित्युच्यत इत्याशंक्य निरुपाधिकभ्रम एव दृष्टांतांतरे किंचित्कालं कायविशेषस्यानुभवसिद्धत्वान्नैवमिति समाधास्यंस्तद्दृष्टांतमेवाऽऽदौ स्पष्टयति—**रज्जुज्ञानेऽपीति** । आदिना भयम् । ननु भवतु कंपादिशमः शनैः सर्पप्रतीतिस्तु पुनर्नैव संपद्यत इत्यत्राऽऽह—**पुनरिति** ॥ ४४ ॥

**एवमारब्धभोगोऽपि शनैः शाम्यति नो हठात् ॥**
**भोगकाले कदाचित्तु मर्त्योऽहमिति भासते ॥ २४५ ॥**

**रा० टीका**—दार्ष्टांतिके योजयति—**एवमिति** ॥ २४५ ॥

**अ० टीका**—ननु किं यस्य सर्पभ्रमोपशमस्तज्ज्ञानेन संपन्नस्तेनैव रज्जुर्लीलया मंदांधकारे क्षिप्ता सत्युरगी भवेदित्युच्यतेऽन्येन वा । नाऽऽद्यः । अलुप्ततत्प्रमासंस्कारस्य तस्य तत्रोक्तभ्रांत्यसंभवात् । नांत्यः । अन्येन मंदांधकारे क्षिप्ता सैव रज्जुः कालांतरे लुप्तरज्जुप्रमासंस्कारमेनं प्रत्येवोरगी मंदांधकारांतरेणावरणाज्जाताऽपि दार्ष्टांतिके स्वरूपावरकाज्ञानां-

तरासंभवेन वैषम्यादित्याशंक्य पूर्वपद्यपूर्वोत्तरार्धलिखितदृष्टांतौ क्रमेण दार्ष्टांतिकयोः प्रकृतपद्यपूर्वोत्तरार्धोक्तयोर्योजयन्समाधत्ते—**एवमिति**। यथा रज्जुज्ञाने सत्यपि कंपादिः शनैरेवोपशाम्यत्येवमारब्धभोगोऽपि शनैरेव शाम्यति। हठात्तत्त्वज्ञानस्य योगादेर्वा बलात्कारात्तत्कालमेव न शाम्यति नैव विनश्यति। यथा पुनर्येन तेनैव दीपादियोगान्मंदांधकारनाशे रज्जुप्रमया तदज्ञानविनाशान्नष्टतदुपादानकसर्पभ्रमवताऽपि पुरुषेण सैव रज्जुर्निष्प्रयोजनत्वान्मंदांधकारे क्षिप्ता सती कालांतरवशाल्लुप्ततत्प्रमासंस्कारं तं प्रत्येवोरगीभवेदेवं भोगकाले प्रारब्धकर्मफलसुखाद्यनुभवसमये तु पुनः कदाचिदेव न तु सर्वदा। एवं च प्रायः सर्वदा ब्रह्मैवाहमस्मि मिथ्यैवेदं द्वैतमाकाशकार्ष्ण्यवदित्येवाऽऽत्मविदः स्वानुसंधानात्प्रतीयते। कदाचित्कस्मिंश्चित्कालेऽहं मर्त्य इति भासत इति संबंधः। यत्तु सिद्धांते ह्यज्ञानक्षयादावरकांतराभावेन प्रध्वस्ताज्ञानानां ब्रह्मविदां पुनर्मंदांधकारे क्षिप्ता सती रज्जुर्यथोरगी भवेदेवं भोगकाले कदाचित्तु मर्त्योऽहमिति भासत इति दृष्टांतवैषम्यमुक्तं तत्सत्यमेव परं त्वस्यत्र किंचिद्रहस्यम्।

तद्यथा—" जीवन्मुक्तिस्तावदस्ति प्रतीतेर्द्वैतच्छाया तत्र चास्तिप्रतीतेः।
द्वैतच्छायारक्षणायास्ति लेशस्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् "

इति **श्रीमत्सर्वज्ञात्ममुनीश्वर**चरणवचनादद्वैतब्रह्मात्मैक्यमात्रविषयकमूलाज्ञानविनाशेऽपि सुषुप्त्याद्यावरणादिप्रयोजकः प्रारब्धकर्मफलोपभोगसिद्ध्यर्थं ब्रह्मास्त्रदग्धपार्थरथन्यायेन सत्यसंकल्पसर्वेश्वरस्थापितस्तदीयलेशः प्रोक्तफलोपभोगपरिसमाप्तिपर्यंतमवश्यं तिष्ठतीत्यंगीकार्यमेव। स एव सुषुप्त्याख्यामावृतिं संपाद्य स्वप्नमिव जीवन्मुक्तानां **याज्ञवल्क्यादी**नामपि तीव्रप्रारब्धभोगकाले " **नमो** वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव स्मः " **इत्यादि** व्यवहारमद्वैतब्रह्मविस्मृतिपूर्वकं क्षणमात्रं साधयेदेवेति नैवात्र कोऽपि वैषम्यलेशोऽपि। स च प्रारब्धक्षयक्षणे स्वयमेव विनंक्ष्यतीति। एवमेवोक्तं मदीय**बोधैक्यसिद्धौ** —

" ब्रह्मास्त्रप्रविदग्धफाल्गुनरथः कृष्णस्य यावत्स्थितं
वांछाख्यप्रतिबंधकैकविरहे स्वध्वंसकोऽभूद्यथा।
ज्ञानेनोद्दलितं तु दृश्यमखिलं प्रारब्धबंधात्स्फुर-
त्तद्ध्वंसक्षण एव संविनतुते स्वध्वंसमेतत्तथा " इति।

विस्तरस्तु मदीयायामद्वैतात्मप्रबोधाख्यायामेतव्द्याख्यायामेव द्रष्टव्य इति दिक् ॥४५॥

**रा॰ टीका**—ननु पुनर्मर्त्यत्वबुद्ध्युदये तेन तत्त्वज्ञानं बाध्येतेत्याशंक्याऽऽह-

**नैतावताऽपराधेन तत्त्वज्ञानं विनश्यति॥**
**जीवन्मुक्तिव्रतं नेदं किं तु वस्तुस्थितिः खलु॥ ४६॥**

**नैतावतेति**। कदाचिदहं मर्त्य इत्येवंविधज्ञानोदयमात्रेणाऽऽगमप्रमाणजनिततत्त्वज्ञानं न बाध्यते कुत इत्यत आह—**जीवन्मुक्तीति**। इदं मर्त्यत्वबुद्ध्यपाकरणलक्षणं जीवन्मुक्तिव्रतं नियमेनानुष्ठेयं न भवति किंतु सम्यग्ज्ञानेन भ्रांतिज्ञाननिवृत्तिरित्ययं वस्तुस्वभावोऽतः कदाचिन्मर्त्यत्वबुद्ध्युदयेऽपि पुनस्तत्त्वज्ञानांतरेण तस्या एव बाध्यत्वमिति भावः॥ ४६॥

**अ॰ टीका**—नन्वेवं भोगकाले कदाचिदद्वैतब्रह्मात्मविस्मृतिपूर्वकं मर्त्योऽहमिति भासते चेत्तत्कालावच्छेदेन कृतस्य संध्यावंदनादेरनृतवादादेश्च कर्मणः सकाशादीशनोपरोपरूपसमुत्पन्नपुण्यपापाभ्यामस्य पुनः संसारापत्तिस्तथा च तत्त्वज्ञानमस्य संजातमपि मोक्षलक्षणफल-

नाशद्वारा नष्टमेव स्यात्तत्त्वनिष्ठमेवेत्यत्राऽऽह—**नैतावतेति।** नन्वत्रैवाधस्तादुक्तं तत्त्वविस्मृतिमात्रान्नानर्थः किं तु विपर्ययादिति तथा च मर्त्योऽहमिति विपर्यये सति कथं न संसारापत्त्या ज्ञाननाश इति चेन्न। विपर्येतुं न कालोऽस्ति झटिति स्मरतः क्वचिदित्युदाहृतवाक्यशेषं भोगकाले कदाचित्तु मर्त्योऽहमिति भासत इति प्रकृतवाक्यगतकदाचित्पदं चाननुसंधायैवोक्तशंकावकाशात्। अत एव। **जीवन्मुक्तीति। वस्त्विति।** बाधितत्वाबाधितत्वाभ्यां द्वैताद्वैतप्रतीतिलक्षणार्थव्यवस्थेत्यर्थः॥ २४६॥

**रा॰ टीका**—भवतु रज्जुसर्पादिस्थले विपरीतज्ञाननिवृत्तावपि तत्कार्यकंपाद्यनुवृत्तिः प्रकृतदृष्टांते दशमे दशमस्त्वमसीतिवाक्यविचारजन्यज्ञानेन भ्रमनिवृत्तौ तत्कार्यानुवृत्तिर्नोपलभ्यत इत्याशंक्याऽऽह—

**दशमोऽपि शिरस्ताडं रुदन्बुद्ध्वा न रोदिति॥**
**शिरोव्रणस्तु मासेन शनैः शाम्यति नो तदा॥ ४७॥**

**दशमोऽपीति।** दशमोऽस्मीति ज्ञानोदये सति शिरस्ताडनपूर्वकं रोदनमात्रं निवर्तते। ताडनजन्यव्रणस्त्वनुवर्तत एवेत्यर्थः॥ ४७॥

**अ॰ टीका**—ननु रज्जुसर्पनिदर्शनेऽधिष्ठानज्ञानेन तदज्ञानतदुपादानकभ्रमो परमेऽपि भयकंपादितत्कार्यविशेषः किंचित्कालमथापि प्रकृते प्रथमतः सप्तावस्थादृष्टांतत्वेनोररीकृते दशमोदाहरणे किं तदित्यत आह—**दशमोऽपीति।** शिरस्ताडमिति क्रियाविशेषणम्। शिरसस्ताडनं ताडो यथा स्यात्तथाऽहमेव दशमोऽस्मीत्यज्ञानजन्यतन्मृतिविभ्रमाद्रुदन्संस्त्वमेव दशमोऽसीति नवगणनपूर्वकमाप्तवाक्यजन्यज्ञानेनाहमेव दशमोऽस्मीति बुद्ध्वा यद्यपि नैव रोदिति तथाऽपि शिरोव्रणस्तु मासेन शनैरेव शाम्यति हठादनुतापरूपबलात्कारान्नो नैव शाम्यतीत्यन्वयः॥ २४७॥

**दशमामृतिलाभेन जातो हर्षो व्रणव्यथाम्॥**
**तिरोधत्ते मुक्तिलाभस्तथा प्रारब्धदुःखिताम्॥ ४८॥**

**रा॰ टीका**—ननु ज्ञानोत्तरकालेऽपि संसारानुवृत्तौ जीवन्मुक्तेः कुतः पुरुषार्थतेत्याशंक्य मुक्तिलाभजन्यहर्षस्य तद्दुःखाच्छादकस्य सत्त्वात्पुरुषार्थतेति दृष्टांतपूर्वकमाह—**दशमेति** ४८

**अ॰ टीका**—नन्वेवं यदि ज्ञानोर्ध्वमपि संसारानुवृत्तौ तन्नैष्फल्यमेवेति चेज्जीवन्मुक्तिलाभान्मैवमिति सोक्तदृष्टांतं स्पष्टयति—**दशमामृतीति**॥ २४८॥

**व्रताभावाद्यदाऽध्यासस्तदा भूयो विविच्यताम्॥**
**रससेवी दिने भुंक्ते भूयो भूयो यथा तथा॥ ४९॥**

**रा॰ टीका**—जीवन्मुक्तिव्रतं नेदमित्युक्तं तत्र व्रतत्वाभावे किमायातमित्यत आह—**व्रताभावादिति।** पुनः पुनर्विचारकरणे दृष्टांतमाह—**रससेवीति।** यथा रससेवी नर एकस्मिन्नेव दिने क्षुद्बाधापरिहाराय पुनः पुनर्भुंक्ते तद्वदध्यासनिवृत्तये पुनः पुनर्विवेकः क्रियतामित्यर्थः॥ ४९॥

**अ॰ टीका**—नन्वेवमपि प्रागुक्तं जीवन्मुक्तिव्रतं नेदमित्यादिना तस्यास्तावद्व्रतत्वाभावेनासातत्यं तथा च कथं लाभसिद्धिः स्यात्। न हि लब्धं कंठचामीकरादिकं भवतीत्यत्राऽऽह—**व्रताभावादिति।** रसः प्रेमा॥ २४९॥

**शमयत्यौषधेनायं दशमः स्वं व्रणं यथा ॥**
**भोगेन शमयित्वैतत्प्रारब्धं मुच्यते तथा ॥ २५० ॥**

**रा० टीका**—ज्ञानेनानिवर्त्यस्य प्रारब्धकर्मफलस्य केन तर्हि निवृत्तिरित्याशंक्य ताडनजन्यव्रणस्य औषधेनेव भोगेनैव निवृत्तिरित्याह—**शमयतीति** २५० ॥

**अ० टीका**—एवं ज्ञानेनाप्यनिवृत्तं प्रारब्धं कदा निवर्तेतेत्यत्राऽऽह—**शमयतीति** ॥ २५० ॥

**रा० टीका**—अपरोक्षज्ञानशोकनिवृत्त्याख्ये उभे इमे अवस्थे जीवगे ब्रूत । 'आत्मानं चेदिति' श्रुतिरित्यनेन श्लोकेन । 'आत्मानं चेद्विजानीयादयमस्मीति पुरुषः । किमिच्छन्कस्य कामायशरीरमनुसंज्वरेत्' इत्यस्मिन्मंत्रे परोक्षज्ञानशोकनिवृत्त्याख्ये जीवावस्थे द्वे अभिहिते इत्युक्तम् । इदानीं तदभिधानसूचनां जीवस्य सप्तमीं तृप्तिलक्षणामवस्थांवृत्तानुकीर्तनपूर्वकं वक्तुमारभते—

**किमिच्छन्निति वाक्योक्तः शोकमोक्ष उदीरितः ॥**
**आभासस्य ह्यवस्थैषा षष्ठी तृप्तिस्तु सप्तमी ॥ ५१ ॥**

**किमिच्छन्निति ।** किमिच्छन्नित्युत्तरार्धेनाभिहितो यः शोकमोक्षः स एतावता ग्रंथसंदर्भेणोदीरितोऽभिहितः । एषाऽज्ञानमावृत्तिस्तद्वद्विक्षेपश्च परोक्षधीरपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरंकुशेत्यनेन श्लोकेनाभिहितासु सप्तसु जीवावस्थासु षष्ठीत्याह—**आभासस्येति ।** सप्तमी व्याख्यायत इति शेषः ॥ ५१ ॥

**अ० टीका**—एवमुक्तं शास्त्रार्थं प्रतिज्ञातमंत्रव्याख्याने नियोज्य निगमयति—**किमिछन्नितीति** । एषा शोकमोक्षाख्या ॥ २५१ ॥

**रा० टीका**—अपरोक्षज्ञानजन्यायास्तृप्तेर्निरंकुशत्वं प्रतियोगिप्रदर्शनपुरःसरं प्रतिजानीते—

**सांकुशा विषयैस्तृप्तिरियं तृप्तिर्निरंकुशा ॥**
**कृतं कृत्यं प्रापणीयं प्राप्तमित्येव तृप्यति ॥ ५२ ॥**

**सांकुशेति ।** विषयलाभजन्यायास्तृप्तेर्विषयांतरकामनया कुंठितत्वात्सांकुशत्वमस्यास्तु तदभावान्निरंकुशत्वम् । तदेव दर्शयति—**कृतमिति** ॥ ५२ ॥

**अ० टीका**—ननु सप्तम्यवस्थात्वेन प्रतिज्ञाता तृप्तिः किं शब्दादीष्टविषयप्राप्तिजन्यालंबुद्धिवत्किं प्राप्तव्यांतरविनश्वरत्वादिना सांकुशेत्यत आह **सांकुशेति** । निरंकुशत्वमेवाभिनीय दर्शयति—**कृतमिति** ॥ २५२ ॥

**रा० टीका**—कृतकृत्यत्वमेवोपपादयति

**ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ॥**
**बहु कृत्यं पुराऽस्याभूत्तत्सर्वमधुना कृतम् ॥ ५३ ॥**

**ऐहिकेति ।** अस्य विदुषस्तत्त्वज्ञानोदयात्पूर्वमिह लोके इष्टप्राप्तयेऽनिष्टनिवृत्तये च कृषिवाणिज्यादिकं स्वर्गादिसिद्धये यागोपासनादिकं मोक्षसाधनज्ञानसिद्धये श्रवणादिकं चेति ब-

हुविधं कर्तव्यमासीत् । इदानीं तु सांसारिकफलेच्छाभावाद्ब्रह्मानंदसाक्षात्कारस्य सिद्धत्वाच्च तत्सर्वं कृषियागश्रवणादिकं कृतं कृतप्रायमभूदतःपरमनुष्ठेयत्वाभावादित्यर्थः ॥ ९३ ॥

**अ० टीका**—कृत्यमेव संक्षिप्य दर्शयति—**ऐहिकेति** । इदानीं तदभावमाह—**तदित्यादिशेषेण** ॥ २९३ ॥

**रा० टीका**—एवं कृतकृत्यत्वमुपपाद्य तत्फलभूतां तृप्तिं दर्शयति—

**तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ॥**
**अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥ ९४ ॥**

**तदेतदिति** । प्रतियोगिपुरःसरं प्रतियोग्यनुसंधानपूर्वकं यथा भवति तथैवं वक्ष्यमाणप्रकारेण सर्वदा तृप्यति ॥ ९४ ॥

**अ० टीका**—एवं कृतकृत्यत्वस्वरूपं निरूप्याग्रे तदनुसंधानप्रकारं प्रतिजानीते—**तदेतदिति** ॥ २९४ ॥

**रा० टीका**—तदेवानुसंधानं प्रपंचयति—

**दुःखिनोऽज्ञाः संसरंतु कामं पुत्राद्यपेक्षया ॥**
**परमानंदपूर्णोऽहं संसरामि किमिच्छया ॥ २९५ ॥**

**दुःखिनोज्ञा इत्यादिना** । कृत्यकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनरित्यतः प्राक्तनेन ग्रंथेन तत्र तावदैहिकमुखार्थिभ्यो वैलक्षण्यं स्वस्य दर्शयति—**दुःखिन इति** ॥ २९५ ॥

**अ० टीका**—एवं प्रतिज्ञातं प्रतियोगिशब्दितवक्ष्यमाणतत्तदभावनिरूपकवस्तुसहितान्यावद्द्वैताभावोपलक्षकान्कांश्चिदभावानात्मनि सप्तभिः प्रदर्शयन्नादौ गौणात्माख्यपुत्रप्राप्त्यर्थसंतानगोपालाराधनप्रवृत्त्यभावं स्वस्मिन्नाह—**दुःखिन इति** । यतोऽज्ञा अत एव पुत्राद्यपेक्षया पुत्रतत्साधनीभूतकलत्रादिवांछयेति यावत् । **परमेति** । पदत्रयेऽपि कर्मधारयः ॥ २९५ ॥

**अनुतिष्ठन्तु कर्माणि परलोकयियासवः ॥**
**सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ ९६ ॥**

**रा० टीका**—स्वर्गाद्यर्थं कर्मानुष्ठातृभ्यो वैलक्षण्यमाह—**अनुतिष्ठंत्विति** ॥ ९६ ॥

**अ० टीका**—एवं कर्मसामान्यप्रवृत्त्यभावमपि स्वस्मिन्प्रकटयति—**अनुतिष्ठंत्विति** । **परलोकेति** । स्वर्गादिगमनेच्छव इत्यर्थः ॥ २९६ ॥

**व्याचक्षतां ते शास्त्राणि वेदानध्यापयंतु वा ॥**
**येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ ९७ ॥**

**रा० टीका**—ननु स्वार्थप्रवृत्त्यभावेऽपि परार्थप्रवृत्तिः किं न स्यादित्याशंक्याधिकाराभावात्साऽपि नास्तीत्याह—**व्याचक्षतामिति** ॥ ९७ ॥

**अ० टीका**—तद्वदध्यापकत्वाभावमपि स्फुटयति—**व्याचक्षतामिति** । व्याकुर्वंत्वित्यर्थः । एतेन स्वार्थप्रवृत्त्यभावेऽपि परोपकारार्थप्रवृत्त्यभावोऽपि स्वस्मिन्सूचितः । वस्तुतस्तु परोपकारस्यापि पुण्यकारणत्वेन स्वार्थत्वमेवेत्याकूतम् ॥ ९७ ॥

**निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ॥**
**द्रष्टारश्चेत्कल्पयंति किं मे स्यादन्यकल्पनात् ॥ ९८ ॥**

**रा० टीका**—ननु स्वदेहभरणार्थं भिक्षाहरणादिकं परलोकार्थस्नानादिकं च भवता क्रियमाणमुपलभ्यतेऽतोऽक्रियत्वमसिद्धमित्याशंक्य तदपि स्वदृष्ट्या नैवास्ति किंत्वन्यैरेव कल्पितमित्याह—**निद्रेति** ॥ ५८ ॥

**अ० टीका**—नन्वक्रियत्वमयुक्तमेव स्वदेहनिर्वाहार्थं निद्राभिक्षाशनक्रियायाः परलोकार्थं स्नानादिक्रियायाश्च कर्तृत्वादित्यत आह—**निद्रेति** ॥ ५८ ॥

**गुंजापुंजादि दह्येत नान्यारोपितवह्निना ॥**
**नान्यारोपितसंसारधर्मानेवमहं भजे ॥ ५९ ॥**

**रा० टीका**—अन्यकल्पनयाऽपि बाधोऽस्तीत्याशंक्य तदभावे दृष्टांतमाह—**गुंजापुंजेति** ॥ ५९ ॥

**अ० टीका**—अन्यकृतेन स्वस्मिन्नारोपविशेषेण स्वक्षत्यभावं सदृष्टांतं स्पष्टयति—**गुंजेति** ॥ ५९ ॥

**रा० टीका**—ननु फलांतरेच्छाभावे कर्मानुष्ठानं मा भूत्तत्त्वसाक्षात्काराय श्रवणादिकं कर्तव्यमेवेत्याशंक्याज्ञानाद्यभावाच्छ्रवणादिकर्तृत्वमपि नास्तीत्याह—

**शृण्वंत्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम् ॥**
**मन्यंतां संशयापन्ना न मन्येऽहमसंशयः ॥ २६० ॥**

शृण्वंत्विति । अज्ञाततत्त्वा अज्ञातं ब्रह्मात्मैकत्वलक्षणं तत्त्वं यैस्ते तथाभूताः श्रवणं कुर्वंतु तत्त्वमित्थमन्यथा वेति संशयवंतो मननं कुर्वंतु । मम तदुभयाभावान्नोभयत्र प्रवृत्तिरित्यर्थः ॥ २६० ॥

**अ० टीका**—नन्वेवमपि श्रवणाद्यंतरंगतरसाधनानि तु यावद्देहं कर्तव्यान्येवेति चेन्निष्प्रयोजनत्वान्नेत्याह—शृण्वंत्वित्यादिद्वाभ्याम् । जानन्नद्वैतात्मानमिति शेषः ॥२६०॥

**विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्ययात् ॥**
**देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥ ६१ ॥**

**रा० टीका**—मा भूतां श्रवणमनने । विपर्ययनिरासार्थं निदिध्यासनं कर्तव्यमित्याशंक्य देहादावात्मत्वबुद्धिलक्षणस्य विपर्ययस्याभावात्तदपि नानुष्ठेयमित्याह—**विपर्यस्त इति** ६१

**अ० टीका**—विपर्यस्त इति । विपरीतभावनावानित्यर्थः ॥ ६१ ॥

**अहं मनुष्य इत्यादिव्यवहारो विनाऽप्यमुम् ॥**
**विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ ६२ ॥**

**रा० टीका**—ननु विपर्ययाभावेऽहं मनुष्य इति व्यवहारः कथं घटत इत्याशंक्य वासनावशाद्भवतीत्याह—**अहमिति** ॥ ६२ ॥

**अ० टीका**—नन्वहं मनुष्योऽयं घट इत्यादिव्यवहारस्तर्हि कथमित्यत आह—**अहमिति** ॥ ६२ ॥

**रा० टीका**—तर्ह्यस्य व्यवहारस्य निवृत्तिसिद्धये ध्यानं संपाद्यमित्याशंक्य प्रारब्धक्षयमंतरेणास्य निवृत्तिर्नास्तीत्याह—

**प्रारब्धकर्मणि क्षीणे व्यवहारो निवर्तते ॥**
**कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ ६३ ॥**

**प्रारब्धेति** ॥ ६३ ॥

**अ० टीका**—एवं तर्हि कदोक्तव्यवहारनिवृत्तिरित्यत्राऽऽह—**प्रारब्धेति** । **ध्यानेति** । देवहूत्यृषभदेवादीनां त्वसंप्रज्ञातसमाधावपि विवरणमते सुप्तौ सुखाद्याकाराविद्यकवृत्तिवद्धनसत्त्वात्मना परिणतांतःकरणीयानामहं ब्रह्मास्मीति सूक्ष्मवृत्तीनां सत्त्वस्य तत्त्वविवेके वृत्तयस्तु तदानीमपीत्यादिनांऽगीकृतेर्न तत्राव्याप्तिरिति दिक् ॥ ६३ ॥

**विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ॥**
**अबाधिकां व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥ ६४ ॥**

**रा० टीका**—ननु प्रारब्धनिमित्तकस्यापि व्यवहारस्य विरलत्वाय ध्यानं कर्तव्यमेवेत्याशंक्य व्यवहारस्याबाधकत्वदर्शनात्तन्निवृत्तये ध्यानमननुष्ठेयमित्याह—**विरलत्वमिति**६४

**अ० टीका**—नन्वेवं सिद्धांते ज्ञानोत्तरमहं मनुष्य इत्यादिव्यवहारवदहं ब्रह्मास्मीति सूक्ष्मतमघनमत्त्वैकमयमनोवृत्तेरपि यद्यपि व्यवहारत्वमेव तथापि प्रथमस्यातिस्थूलत्वादिना दुःखदत्वाद्धेयत्वमंत्यस्यातिसूक्ष्मत्वादिना सुखदत्वाद्दुःखदोक्तव्यवहारविरलताधायकत्वाच्चोपादेयत्वमेवेत्याशंक्य समाधत्ते—**विरलत्वमिति** । ते प्रतिवादिनोंऽतेवासिनो वा तवेत्यर्थः॥६४॥

**विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ॥**
**विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ २६५ ॥**

**रा० टीका**—ध्यानस्याकर्तव्यत्वेऽपि विक्षेपपरिहाराय समाधिः कर्तव्य इत्याशंक्य विक्षेपसमाधानयोर्मनोधर्मत्वान्न विक्षेपनिवारकेऽपि समाधौ ममाधिकार इत्याह—**विक्षेप इति**२६५

**अ० टीका**—तदेवोपपादयति—**विक्षेप इति** ।

" आछाद्य विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव ।
अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयताबलेन "

इति **संक्षेपशारीर**कोक्तेर्विक्षेपमूलीभूतस्य मूलाज्ञानस्यैव नष्टत्वात्तदभावे तद्विरोधिनः समाधेरपि दृश्यत्वाविशेषान्न ममेष्टव्य इत्याशयः । तत्र हेतुः—**विक्षेपो वेति** ॥ २६५ ॥

**रा० टीका**—ननु तथाऽपि समाधिफलमनुभवः संपादनीय इत्याशंक्य तस्य मत्स्वरूपत्वान्न संपाद्यत इत्याह—

**नित्यानुभवरूपस्य को मे वाऽनुभवः पृथक् ॥**
**कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥ ६६ ॥**

**नित्येति** । उपपादितं कृतकृत्यत्वं निगमयति—**कृतं कृत्यमिति** ॥ ६६ ॥

**अ० टीका**—नन्वथापि भगवता **पतंजलिना** निर्विकल्पसमाधिं प्रकृत्य तदा द्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्रेति । ऋतंभरा तत्र प्रज्ञा श्रुतानुमानाभ्यामन्यविषयेति च **योगसूत्रयोः** समाध्येकसाध्यत्वं स्वस्वरूपानुभवस्योक्तमतः सोऽवश्यमनुष्ठेय इत्यत आह—**नित्येति** । सूत्रयोस्तु त्वंपदार्थशोध एव कंचिदधिकारिविशेषं प्रत्येवोपयोगः । नन्वेवं चेत्तर्हि कस्तव निश्चय इत्यपेक्षायां तं संक्षिपति—**कृतमिति** ॥ ६६ ॥

**रा० टीका**—एवं सर्वत्र कर्तृत्वानभ्युपगमेऽनियतवृत्तित्वं प्रसज्येतेत्याशंक्य प्रारब्धवशात्प्राप्तमनियतवृत्तित्वमंगीकरोति—

**व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथाऽपि वा ॥**
**ममाकर्तुरलेपस्य यथाऽऽरब्धं प्रवर्तताम् ॥ ६७ ॥**

**व्यवहार इति ।** लौकिको भिक्षाहारादिः । शास्त्रीयो जपसमाध्यादिरन्यथाऽपि वा प्रतिषिद्धहिंसादिर्वा व्यवहारः कर्तृत्वभोक्तृत्वरहितस्य मम प्रारब्धं कर्मानतिक्रम्य प्रवर्ततामित्यर्थः ॥ ६७ ॥

**अ० टीका**—एवं चेत्तर्हि तव व्यवहारः कथमिति चेद्यथारब्धमेवेत्याह—**व्यवहार इति ।** लौकिको निद्राभिक्षादिः । शास्त्रीयः शास्त्रविहितत्वेनेशतोपलक्षणपुण्यापादकः । अन्यथा तन्निंदितत्वेनेशरोपलक्षणपापापादकः शापद्वारा **याज्ञवल्क्य**कर्तृकविदग्धशाकल्यमूर्धपातरूपः प्रसिद्ध एव **बृहदारण्यक**पंचमप्रपाठके । अपि वेत्यादि विकल्पसमुच्चयवाचकमेव । ननु निद्राभिक्षे स्नानशौच इत्यादिना प्राक्त्वयैव लौकिकादिव्यवहारद्वयमेवोक्तमिदानीमयं तृतीयोऽप्यन्यथा व्यवहारोऽप्युच्यत इति किमत्र भावत्कमाकूतमित्याशंक्य समाधत्ते—**ममेत्यादिना । यथारब्धमिति ।** अयमभिप्रायः । प्रारब्धं हि सुखदुःखदान एवोपक्षीणं न तु व्यवहारलक्षणक्रियमाणसंपादनेऽपि । तत्तु सदसत्संस्कारैकायत्तमिति तु निर्विवादमेव । तथा च दक्षिणावर्तभ्रामितकुलालचक्रन्यायेन ब्रह्मविदो मम वपुरादिसत्संस्कारैकारब्धमिति तथैव तत्प्रवर्ततेति ॥ ६७ ॥

**रा० टीका**—एवं वस्तुतत्त्वमभिधाय प्रौढवादेनाऽऽह—

**अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ॥**
**शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः ॥ ६८ ॥**

**अथवेति ।** लोकानुग्रहकाम्यया प्राण्यनुग्रहेच्छयेत्यर्थः ॥ ६८ ॥

**अ० टीका**—अथ स्वयमेवोक्तगूढाभिसंधिं प्रकटयति—**अथवेति । लोकेति ।**

" सक्ताः कर्मण्यविद्वांसो यथा कुर्वंति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् "

इति **स्मृते**रिति शेषः ॥ ६८ ॥

**रा० टीका**—शास्त्रीय एव मार्गे प्रवर्तनांगीकारे तर्हि तदभिमानप्रयुक्तो विकारः स्यादित्याशंक्याऽऽह—

**देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ॥**
**तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ॥ ६९ ॥**

**देवार्चनेत्यादिना श्लोकद्वयेन**—तारं प्रणवमाम्नायमस्तकं वेदांतशास्त्रम् ॥ ६९ ॥

**अ० टीका**—तमेव संन्यासिनः स्वस्य शास्त्रीयं कायिकादिमार्गं प्रदर्शयन्त्वासंगत्वमनुसंधत्ते—**देवार्चनेत्यादि** द्वाभ्याम् । शालिग्रामबाणलिंगाख्यहरिहरान्यतरप्रतीकावच्छेदेन देवदेवस्य " एको देवः सर्वभूतेषु गूढ इत्यादि **श्रुतिप्रसिद्ध**स्य स्वप्रकाशात्मनो यदर्चनं तंत्रगंधेनापि हीनं प्रणवैकमंत्रं गंगोदकभस्ममात्रोपचारकं पूजनं न त्वन्यत्स्वप्नेऽपीत्यर्थः ।

आदिना निद्रा। शिष्टं तु स्पष्टमेव। तारमोंकारम्। आम्नायेति। उपनिषद्वृंदमिति यावत्। उपलक्षणमिदं प्रस्थानत्रयांतर्गतभगवद्गीताब्रह्मसूत्रयोरपि ॥ ६९ ॥

**विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानंदे विलीयताम् ॥**
**साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ २७० ॥**

**रा० टीका**—॥ २७० ॥

**अ० टीका**— विष्णुमिति। शिव एको ध्येयः शिवशंकर इति श्रुतेरुपलक्षण-मिदं शिवस्यापि। अत्र सगुणात्वाम्वरमाद्यद्वेति। अपरं त्वतिरोहितमेव ॥ २७० ॥

**एवं च कलहः कुत्र संभवेत्कर्मिणो मम ॥**
**विभिन्नविषयत्वेन पूर्वापरसमुद्रवत् ॥ ७१ ॥**

**रा० टीका**—फलितमाह -एवं चेति ॥ ७१ ॥

**अ० टीका**—फलितमाह—एवं चेति। तत्र हेतुः—विभिन्नेत्यादिना सदृ-ष्टांतम् ॥ ७१ ॥

**वपुर्वाग्धीषु निर्बंधः कर्मिणो न तु साक्षिणि ॥**
**ज्ञानिनः साक्ष्यलेपत्वे निर्बंधो नेतरत्र हि ॥ ७२ ॥**

**रा० टीका**—विभिन्नविषयत्वमेव स्पष्टयति—वपुरिति ॥ ७२ ॥

**अ० टीका**—तदेव विभिन्नविषयत्वं विशदयति—वपुरिति ॥ २७२ ॥

**एवं चान्योन्यवृत्तांतानभिज्ञौ बधिराविव ॥**
**विवदेतां बुद्धिमंतो हसंत्येव विलोक्य तौ ॥ ७३ ॥**

**रा० टीका** —अथापि यौ ज्ञानिकर्मिणौ कलहं कुर्वाते तौ विद्वद्भिः परिहसनी यावित्याह—एवं चेति ॥ ७३ ॥

**अ० टीका**—नन्वेवं चेर्त्तर्हि कर्मित्वं ज्ञानित्वं च मन्यमानयोर्बहिर्मुखपूर्वोत्तरमीमां-सकयोः कलहः कुतः संपद्यत इति चेद्बाहिर्मुखत्वेन शास्त्रतात्पर्यानभिज्ञत्वादित्येव जानीहीति स दृष्टांतं समाधत्ते—एवं चान्योन्येति। बुद्धिमंतः "एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत" इति स्मृतेर्ब्रह्मविद इत्यर्थः ॥ २७३ ॥

**रा० टीका**—कुतः परिहास्यत्वमित्याशंक्य निर्विषयकलहकारित्वादित्याह—

**यं कर्मी न विजानाति साक्षिणं तस्य तत्त्ववित् ॥**
**ब्रह्मत्वं बुध्यतां तत्र कर्मिणः किं विहीयते ॥ ७४ ॥**

**यमिति**। कर्मी यं साक्षिणं कर्मानुष्ठानोपयोगिदेहवाग्बुद्ध्यतिरिक्तं प्रत्यगात्मानं न वि-जानाति। तत्त्वविदा तस्य ब्रह्मत्वे बुद्धे कर्मिणः कर्मानुष्ठाने किं हीयते ॥ ७४ ॥

**अ० टी०**—अन्योन्यवृत्तांतानभिज्ञत्वमेव प्रकृते प्रपंचयति—**यं कर्मीत्यादिद्वाभ्याम्** ७४

**देहवाग्बुद्धयस्त्यक्ता ज्ञानिनाऽनृतबुद्धितः ॥**
**कर्मी प्रवर्तयत्वाभिर्ज्ञानिनो हीयतेऽत्र किम् ॥ २७५ ॥**

**रा० टीका**—**देहेति** । ज्ञानिना मिथ्यात्वबुद्ध्या परित्यक्ताभिर्देहवाग्बुद्धिभिः कर्मानुष्ठाने ज्ञानिनो वा किं हीयतेऽतो निर्विषयकलहकारिणोः परिहसनीयत्वमित्यर्थः ॥२७५॥

**अ० टीका**—**देहवागिति** । त्यक्ता अनादृताः । **अनृतेति** । मिथ्यात्वबोधबलेनेत्यर्थः । आभिर्देहवाग्बुद्धिभिः । प्रवर्तयतु जीवमिति शेषः । स्वर्गाद्यर्थं ज्योतिष्टोमाद्यनुष्ठाने वेदपठने तत्तद्देवताध्याने चेत्यार्थिकम् । विषयसप्तमीयम् । विनियोजयत्विति यावत् ॥ २७५ ॥

**रा० टीका**—कर्मानुष्ठानं प्रयोजनशून्यत्वान्न ज्ञानिनाऽभ्युपगम्यत इति शंकते—

**प्रवृत्तिर्नोपयुक्ता चेन्निवृत्तिः क्वोपयुज्यते ॥**
**बोधहेतुर्निवृत्तिश्चेद्बुभुत्सायां तथेतरा ॥ ७६ ॥**

**प्रवृत्तिरिति** । उपभोगाभावो निवृत्तावपि समान इति परिहरति—**निवृत्तिरिति** । निवृत्तेर्बोधहेतुत्वान्नोपयोगाभाव इति शंकते—**बोधहेतुर्निवृत्तिश्चेदिति** । तर्हि प्रवृत्तिरपि बुभुत्साहेतुत्वादुपयोगवतीत्याह—**बुभुत्सेति** ॥ ७६ ॥

**अ० टीका**—ननु कर्मणि प्रवृत्तिर्विक्षेपजनकत्वादयुक्तेत्याशंक्य प्रतिबंद्या समाधत्ते—**प्रवृत्तिरिति** । प्रतिबंदी मोचनमाशंक्य प्रतिबंद्यंतरेण तत्प्रत्याह—**बोधेति** ॥ २७६ ॥

**रा० टीका**—ननु बुद्धस्य बुभुत्साभावात्प्रवृत्तेरनुपयोगित्वमिति पुनः शंकते—

**बुद्धश्चेन्न बुभुत्सेत नाप्यसौ बुध्यते पुनः ॥**
**अबाधादनुवर्तेत बोधो न त्वन्यसाधनात् ॥ ७७ ॥**

**बुद्धश्चेदिति** । तर्हि बुद्धस्य पुनर्बोधाभावात्तद्धेतुनिवृत्तिरपि बुद्धं प्रत्यनुपयोगिनीत्याह—**नापीति** । सकृज्जातस्य बोधस्य स्थिरत्वाय निवृत्तिरपेक्ष्यत इत्याशंक्य स्थिरत्वं बाधकाभावमपेक्षते न साधनांतरमित्याह—**अबाधादिति** । वाक्यप्रमाणजन्यज्ञानस्य बलवता प्रमाणेन बाधाभावादनुवृत्तिः स्यादेवातो न साधनांतरं तदर्थमनुष्ठेयमित्यर्थः ॥ ७७ ॥

**अ० टीका**—ननु पूर्वपद्ये "निवृत्तिर्नोपयुक्ता चेत्प्रवृत्तिः क्वोपयुज्यते । बोधहेतुर्निवृत्तिश्चेद्बुभुत्सायां तथेतरा" इति प्रतिबंद्यंतरेणैव यत्समाहितं तदयुक्तं बुद्धस्य तत्त्वबुभुत्सासंभवादित्याशंक्य तत्रापि प्रतिबंद्यैव समाधत्ते—**बुद्धश्चेदिति** । यदि बुद्धस्तत्त्वबोधवान्वा पुरुषः । न बुभुत्सेत बोद्धुमिच्छां नैव कुर्यात्संजातबोधत्वादिति वदसि चेत्तर्ह्यसौ तत एव पुनर्नैव बुध्यते बोधमपि नैव संपादयतीति संबंधः । एवं च यथा बुभुत्साकारणीभूता भूयः प्रवृत्तिः संजातबोधत्वात्तत्त्वविदोऽनुपयुक्तेऽति त्वयोच्यते तथा बोधकारणीभूता निवृत्तिरपि तत एव तस्य तथेति प्रतिपत्तव्यमिति तत्त्वम् । ततः किं तदाह—**अबाधादिति** ॥ २७७ ॥

**रा० टीका**—ननु प्रमाणांतरेणाबाधेऽप्यविद्यया तत्कार्येण कर्तृत्वाध्यासेन वा बाधः स्यादित्याशंक्याऽऽह—

**नाविद्या नापि तत्कार्यं बोधं बाधितुमर्हति ॥**
**पुरैव तत्त्वबोधेन बाधिते ते उभे यतः ॥ ७८ ॥**

**नाविद्येति** । तत्र हेतुमाह—**पुरैवेति** ॥ ७८ ॥

**अ० टीका**—नन्वबाध एव कुत इति चेत्किं मूलाविद्यालेशरूपा सुषुप्त्यादिप्रयोजिका तद्व्याप्यजीवेश्वरतद्भेदतच्चित्संबंधविशिष्टाऽविद्याबोधबाधिकेति ब्रूषे किं वा तत्कार्यमाका-

शप्रभृति तथेति विकल्प्य नोभयमपीत्याह—**नाविद्येत्यादिना**। तत्र हेतुः—**पुरैवेति**। अयमाशयः। सस्वप्नां सुप्तिं बाधयंत्येव यथा जाग्रदुदेत्येवं समूलं द्वैतं बाधयदेव तत्त्वज्ञानमुदेति प्रतीयते तु स्वप्नादिस्मृतिवदाप्रारब्धं तदिति॥ २७८॥

**रा० टीका**—नन्वविद्याया बाधितत्वेऽपि तत्कार्यस्य प्रतीयमानस्य बाधितत्वासंभवात्तेन बोधस्य बाधो भवेदित्याशंक्योपादाननिवृत्त्यैव तस्यापि बाधितत्वान्न तेनापि बाधः शंकितुं शक्यत इत्याह—

**बाधितं दृश्यतामक्षैस्तेन बाधो न शक्यते॥**
**जीवन्नाखुर्न मार्जारं हंति हन्यात्कथं मृतः॥ ७९॥**

**बाधितमिति**। तत्र दृष्टांतमाह—**जीवन्निति**। आखुर्मूषकः॥ ७९॥

**अ० टीका**—अत एव। **बाधितमिति**। उपलक्षणमिदमन्यप्रमाणानां साक्षिणश्च तेन बाधितदृश्येन। बाधस्तत्त्वबोधस्येत्यार्थिकम्। तत्रार्थांतरन्यासद्वयमाह—**जीवन्नित्यादि** सार्धेन दार्ढ्यार्थम्॥ २७९॥

**रा० टीका**—द्वैतदर्शनेन तत्त्वबोधस्य बाधाभावं कैमुतिकन्यायप्रदर्शनेन द्रढयितुं तदनुकूलं दृष्टांतमाह—

**अपि पाशुपतास्त्रेण विद्धश्चेन्न ममार यः॥**
**निष्फलेषु विनुन्नांगो नंक्ष्यतीत्यत्र का प्रमा॥ २८०॥**

**अपीति**। यः समर्थः पाशुपतास्त्रेण विद्धोऽपि न ममार चेत्किल स निष्फलेषु विनुन्नांगः शल्यरहितेषुणा व्यथितदेहः सन्नंक्ष्यति नाशं प्राप्स्यतीत्यत्र का प्रमा। प्रमाणं नास्तीत्यर्थः॥ २८०॥

**अ० टीका**—**अपीति**। यो जीवः। 'न जीवो म्रियते' इति श्रुतेः॥ २८०॥

**रा० टीका**—दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति—

**आदावविद्यया चित्रैः स्वकार्यैर्जृंभमाणया॥**
**युद्ध्वा बोधोऽजयत्सोऽद्य सुदृढो बाध्यतां कथम्॥८१॥**

**आदाविति**। आदौ विद्याभ्याससमये चित्रैर्बहुविधैस्तत्कार्यैः प्रमातृत्वभोक्तृत्वकर्तृत्वादिभिर्जृंभमाणया विवर्धमानयाऽविद्यया बोधो युद्ध्वा युद्धं कृत्वा तामजयत्। स एवाभ्यासपाटवेन सुदृढोऽद्येदानीमविद्यानिवृत्तौ सत्यं निर्मलेन तत्कार्येणाध्यासेन कथं बाध्यतां न कथमपि बाध्येतेत्यर्थः॥ ८१॥

**अ० टीका**—तदेव रूपकेणापि प्रपंचयति—**आदाविति**। जृंभमाणया विकसमानया॥ २८१॥

**तिष्ठंत्वज्ञानतत्कार्यशवा बोधेन मारिताः॥**
**न भीतिर्बोधसम्राजः कीर्तिः प्रत्युत तस्य तैः॥ ८२॥**

**रा० टीका**—उपपादितमर्थं श्रोतृबुद्ध्यारोहाय रूपकेणाऽऽह—**तिष्ठंत्विति**॥८२॥

**अ० टीका**—एवं बाधितप्रतीतिरपीष्टैवेति रूपकेणैवाऽऽह—**तिष्ठन्त्विति**॥ २८२॥

**रा० टीका**—भवत्वेवं प्रकृते किमायातमित्यत आह—

**य एवमतिशूरेण बोधेन न वियुज्यते ॥**
**प्रवृत्त्या वा निवृत्त्या वा देहादिगतयाऽस्य किम् ॥ ८३ ॥**

**य इति ।** यः पुमानेवमुक्तप्रकारेणातिशूरेणाविद्यातत्कार्यघातकेन बोधेन ब्रह्मात्मैकत्वज्ञानेन न वियुज्यते न कदाऽपि वियुक्तो भवति । अस्य पुंसो देहादिनिष्ठया प्रवृत्त्या वा निवृत्त्या वा किं न किमपीष्टमनिष्टं वेत्यर्थः ॥ ८३ ॥

**अ० टीका**—फलितमाह—**य एवमिति । देहेति ।** आदिनेंद्रियादि ॥ २८३ ॥

**रा० टीका**—तर्हि ज्ञानिवदज्ञानिनोऽपि प्रवृत्तावाग्रहो न युक्त इत्याशंक्याऽऽह—

**प्रवृत्तावाग्रहो न्याय्यो बोधहीनस्य सर्वथा ॥**
**स्वर्गाय वाऽपवर्गाय यतितव्यं यतो नृभिः ॥ ८४ ॥**

**प्रवृत्ताविति ।** तत्रोपपत्तिमाह—**स्वर्गायेति** ॥ ८४ ॥

**अ० टीका**—तर्हि कस्य प्रवृत्तिरिष्टेत्यत आह—**प्रवृत्ताविति ।** मोक्षोऽपवर्ग इत्यमरादपवर्गाय कैवल्यार्थमित्यर्थः ॥ ८४ ॥

**रा० टीका**—विदुष आग्रहो न युक्त इत्युक्तं तर्हि कर्मिणां मध्ये वर्तमानेन तेन किं कर्तव्यमित्याह—

**विद्वांश्चेत्तादृशां मध्ये तिष्ठेत्तदनुरोधतः ॥**
**कायेन मनसा वाचा करोत्येवाखिलाः क्रियाः ॥ २८५ ॥**

**विद्वांश्चेदिति ।** विद्वांस्तादृशां कर्मिणां मध्ये तिष्ठेच्चेत्तदनुरोधतस्तेषामनुसारेण शरीरादिभिः सर्वाः क्रियाः करोत्येव । न तान्कर्मिणो निवारयेदित्यर्थः ॥ २८५ ॥

**अ० टीका**—एवं तर्हि तत्त्वविदा किंकर्तव्यमित्यपेक्षायां तत्तदधिकारिसंनिधाने प्रवृत्तिनिवृत्ती उभे अपि तत्तदनुग्रहार्थमेव स्वस्य तु वस्तुतः कृतार्थत्वान्नैव किमपि कर्तव्यमित्याह—**विद्वांश्चेदि**त्यादिद्वाभ्याम् । तादृशां विषयिणाम् । **लोक**संग्रहमेवापि संपश्यन्कर्तुमर्हसीत्यादि**स्मृते**रखिलाः शास्त्रमात्रविहिताः सकलकाम्यनिषिद्धशून्याः संप्राप्ततत्तत्प्रायश्चित्तसहितास्तंत्रगंधेनाप्यनास्कंदिताः स्वस्ववर्णाश्रमाद्युचिताः संपूर्णनित्यादिरूपाः परमात्मपरितोषैकफलिका इति यावत् । अत्र करोत्येवेत्युक्तं न तु कुर्यादेवेति । तेन तस्य लोकानुग्रहस्वाभाव्यं विध्यकैंकर्यं च सूच्यते ॥ २८५ ॥

**रा० टीका**—अस्यैव तत्त्वबुभुत्सूनां मध्येऽवस्थितस्य कृत्यमाह—

**एष मध्ये बुभुत्सूनां यदा तिष्ठेत्तदा पुनः ॥**
**बोधायैषां क्रियाः सर्वा दूषयंस्त्यजतु स्वयम् ॥ ८६ ॥**

**एष इति ।** एष विद्वान्बुभुत्सूनां मध्ये यदा तिष्ठेत्तदैषां बुभुत्सूनां बोधाय तत्त्वज्ञानजननाय ताः क्रिया दूषयन्स्वयमपि त्यजतु ॥ ८६ ॥

**अ० टीका—एष इति ।** दूषयन्न **कर्मणा** न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरित्यादितैत्तिरीयादिश्रुतिसहस्रैः **सर्वधर्मान्परित्यज्य** मामेकं शरणं व्रजेत्यादिस्मृतिशतैश्चेत्यार्थिकम् ॥ ८६ ॥

**रा० टीका**—कुत एवं कर्तव्यमित्याह—

**अविद्वदनुसारेण वृत्तिर्बुद्धस्य युज्यते ॥**
**स्तनंधयानुसारेण वर्तते तत्पिता यतः ॥ ८७ ॥**

**अविद्वदिति** । अज्ञान्यनुसारेण ज्ञानिनो वर्तनमुचितं कृपालुत्वात्तेषामनुकंपनीयत्वाच्चेति भावः । एवं क्व दृष्टमित्यत आह—**स्तनंधयेति** । स्तनंधयाः स्तनपानकर्तारः **शिशव** इत्यर्थः ॥ ८७ ॥

**अ० टीका**—नतु कृतकृत्ये नापि विदुषा किमित्यज्ञानुसारेण वर्तितव्यमिति चेत्सत्यम् । **मय्येव** सकलं जातमिति **तस्य** पुत्रा दायमुपयंति सुहृदः पुण्यकृत्यां द्विषंतः पापकृत्यामिति च **श्रुतश्च** जीवन्मुक्तत्वोपाधिनैव तस्य जगत्पितृत्वादेवेत्यभिप्रेत्य पितृदृष्टांतेनैव तत्स्पष्टयति —**अविद्वदित्यादिद्वाभ्याम्** ॥ ८७ ॥

**अधिक्षिप्तस्ताडितो वा बालेन स्वपिता तदा ॥**
**न क्लिश्नाति न कुप्येत बालं प्रत्युत लालयेत् ॥ ८८ ॥**

**रा० टीका**—पितुः स्तनंधयानुसारित्वमेव दर्शयति—**अधिक्षिप्त इति** ॥ ८८ ॥

**अ० टीका—अधिक्षिप्त इति** । अनुचितं भाषित इत्यर्थः । अत्र स्तनंधयः संजातवाक्चौलप्राग्वया एव न क्लिश्नाति नैव दुःखी भवति ॥ ८८ ॥

**रा० टीका**—दार्ष्टांतिके योजयति—

**निंदितः स्तूयमानो वा विद्वानज्ञैर्न निंदति ॥**
**न स्तौति किंतु तेषां स्याद्यथा बोधस्तथाऽऽचरेत् ॥ ८९ ॥**

**निंदित इति** । विद्वानज्ञैर्निंदितः स्तूयमानो वा स्वयं न निंदति न स्तौति किंत्वेषामज्ञानां यथा बोध उपजायते तथाऽऽचरेत् ॥ ८९ ॥

**अ० टीका**—ननु बालस्योक्तवयस्कत्वलक्षणकौमारावस्थैकदेशशालित्वाद्भवतु स्वपितरं प्रत्यधिक्षेपादिकमथापि ब्रह्मविदोऽज्ञकर्तृकाधिक्षेपाद्यसंभव एवेति चेन्न । तत्रापि तत्संभवात् । तथा हि । अयं तावद्विषयिणां मध्ये यदा तिष्ठति तदा प्रागुक्तरीत्या सर्वं सत्कर्मैव करोति यदा तु मुमुक्षूणां मध्ये तिष्ठति तदा सदसदात्मकमखिलमपि कर्म दूषयन्स्वयमपि त्यजत्येवेत्यनुपदमेवोक्तं तेन तादृगवस्थं तं दृष्ट्वा विषयिकर्तृकनिंदा संभवत्येव । तथा चोपाख्यायत एव **श्रीमद्भागवते भिक्षुगीतप्रसंगेन वायवीयमाघमाहात्म्येऽपि** पतिव्रताचरितप्रसंगागतमांडव्यशूलारोपादिकथनेन सविस्तरमित्याशयेन तस्य तुल्यनिंदास्तुतिर्मौनीति **स्मृति**प्रसिद्धं प्रेक्षकग्राह्यं लक्षणमपि संक्षिपति—**निंदित इत्यादिना** । स्तूयमानो मुमुक्षुभिरित्यार्थिकम् । तर्हि किं करोतीत्यत्राऽऽह—**किंत्वित्यादिशेषेण** । आचरेदाचरत्येवेत्यर्थः ॥ ८९ ॥

**रा० टीका**—एवमाचरणे निमित्तमाह—

**येनायं नटनेनात्र बुध्यते कार्यमेव तत् ॥**
**अज्ञप्रबोधान्नैवान्यत्कार्यमस्त्यत्र तद्विदः ॥ ९० ॥**

**येनेति** । अयमज्ञान्यत्रास्मिँल्लोके विदुषो येन यादृशेन नटनेनाऽऽचरणेन बुध्यते तत्त्वमवगच्छति तदाचरणं तेन कर्तव्यमेव । तर्हि तद्वदेव कार्यांतरमपि प्रसज्येतेत्यत आह—**अ-**

ज्ञेति । यतस्ताद्विदस्तत्त्वविदोऽत्र लोकेऽज्ञप्रबोधादन्यत्कर्तव्यं नैवास्त्यतस्तदनुसरणेन तत्त्वबोधनं कर्तव्यमित्यर्थः ॥ २९० ॥

**अ० टीका**—ननु कृतकृत्यस्याप्यस्याज्ञबोधने किं प्रयोजनमित्याशंक्य न हि ग्रीष्ममध्याह्ने मरुमरीचिकावारिणि सत्यं तरंगिणीबुद्ध्या पिपासातिशयाद्धावमानाः पांथजनाः प्रागेवमेव धावनक्लिष्टेन वृक्षस्थित्याद्यन्वयव्यतिरेकसहकृतचक्षुः प्रत्यक्षीकृतमध्याह्नकालिकालोकावच्छिन्नोषरधरण्याख्याधिष्ठानतया ततः प्रत्यागतेन पुरुषेणेदं मृगजलं मिथ्यैव मध्याह्नकालिकालोकोषरधरणीसंयोगाज्जलत्वेन प्रतीयतेऽतो यूयं मैत्र धावध्वमिति न प्रबोध्यंते । तस्माद्वास्तविकस्वप्रयोजनाभावेऽपि स्मृतस्वाज्ञतादुःखकृपयाऽन्येषामज्ञानामज्ञानध्वस्तिर्यादृक्कायिकादिव्यापारतः स्यात्तानेव निसर्गात्करोतीति समाधत्ते— **येनायमिति** । अयमज्ञजनः । अत्र नटनपदाद्विद्वत्क्रियास्ववास्तवत्वं व्यज्यते । कार्यमेव कर्तुं योग्यमेव । अत्र क्रियामंगतैवकारान्नीलं सरोजं भवत्येवेत्यादिवद्ब्रह्मविदज्ञजनबोधनप्रवृत्तेरत्यंतायोगव्यवच्छेदो व्यज्यते । एवं करुणया विषयिणां धनाद्यहरणमपि ब्रह्मविदः प्रभुसेवादिना संपाद्यं स्यादित्यत आह—**अज्ञेति** ॥ २९० ॥

**रा० टीका**—वृत्तवर्तिष्यमाणयोर्म्नातपर्यमाह—

**कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ॥**
**तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरंतरम् ॥ ९१ ॥**

**कृतकृत्येति** । असौ विद्वान्पूर्वोक्तप्रकारेण कृतकृत्यतया कृतं कृत्यजातं येनासौ कृतकृत्यस्तस्य भावस्तत्ता तया तृप्तः सन्वक्ष्यमाणप्रकारेण प्राप्तप्राप्यतया प्राप्तं प्राप्यं येन स प्राप्तप्राप्यस्तस्य भावस्तत्ता तया तृप्यंस्तृप्तो भवन्स्वमनसा निरंतरमेवं मन्यते ॥ ९१ ॥

**अ० टीका** – नन्वस्त्वेवमज्ञप्रबोधार्थं स्वधर्मानुष्ठानादिबहिर्नटनमंतस्तु तस्य कथं तृप्तिरित्यपेक्षायां तदनुभवानुवदनप्रकारं प्रतिजानीते—**कृतकृत्यतयेति**। असौ ब्रह्मनिष्ठः ॥ २९१ ॥

**रा० टीका**—किं मन्यत इत्यत आह—

**धन्योऽहं धन्योऽहं नित्यं स्वात्मानमंजसा वेद्मि ॥**
**धन्योऽहं धन्योऽहं ब्रह्मानंदो विभाति मे स्पष्टम् ॥ ९२ ॥**

**धन्योऽहं धन्योऽहमित्यादिना**। धन्यः कृतार्थः आदरार्थे वीप्सा । नित्यमनवरतं स्वात्मानं स्वस्य निजं रूपं देशाद्यनवच्छिन्नं प्रत्यगात्मानमंजसा साक्षाद्यतो वेद्मि जानाम्यतो धन्यः । एवमात्मज्ञानलाभनिमित्तां तुष्टिमभिधाय तत्फललाभनिमित्तां तां दर्शयति —**धन्य इति**। ब्रह्मानंदो ब्रह्मभूतानंदो मे स्पष्टं विभाति । स्पष्टं यथा भवति तथा स्फुरतीत्यर्थः ॥ ९२ ॥

**अ० टीका**—एवं प्रतिज्ञाततत्त्वविदनुभवप्रकारानुवादं प्रपंचयति—**धन्योऽहं धन्योऽहं नित्यमित्याद्युपगीतिचतुष्टयविशिष्टानुष्टुब्द्वयेन** । वीप्सेयमादरातिशयार्थैव। तत्र हेतुः—**नित्यमित्यादिना** । नित्यं सर्वदा न तु क्षणमात्रम् । एतेनाद्वैतप्रमाया अपि वृत्तित्वावच्छेदेन त्रिक्षणावस्थायित्वेऽपि तस्या अविनाशिस्वप्रकाशैकविषयकत्वेन विस्मृत्यसंभवादेव सातत्यं द्योत्यते यद्वा नित्यमिति स्वात्मविशेषणमेव । **नित्यः शुद्ध इत्यादिश्रुतेः** । एतेन कालपरिच्छेदो व्युदस्तः । देशवस्तुपरिच्छेदव्युदासस्तु विशेष्यत एव । तद्यथा । नित्यं त्रिकालाबाध्यमेतादृशमपि । स्वात्मानम् । अत्र कर्मधारय एव । तथा च स्वशब्देन साक्षित्वोपलक्षितं

प्रत्यक्कूटस्थचिन्मात्रमेव शोधितत्वंपदार्थरूपं लक्ष्यते । आत्मशब्देनाऽऽत्मैवेदमग्र आसीदित्याद्यै-तरेयश्रुतेरात्मन आकाशः संभूत इत्यादि तैत्तिरीयश्रुतेश्च ।

" अहमात्मा गुडाकेश सर्वभूताशयस्थितः ' । अहमादिश्च मध्यं च भूतानामंत एव च इति स्मृतेः " यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति भण्यते "

इत्यपि स्मृतेश्च सत्यज्ञानानंतानंदब्रह्माख्यमसज्जडपरिच्छिन्नदुःखद्वैतविरोधिशोधिततत्पदार्थरूपं लक्ष्यते । एतेन देशिकपरिच्छेदव्युदासः सूच्यते द्वयोः कर्मधारयाद्भेदः सार्वांशिकवास्तविकपरिच्छेदव्युदासोऽपि ध्वन्यते । एवमप्यंजसाऽपरोक्षमेव । वेद्मि श्रीगुरूपदिष्टतत्त्वमस्यादिमहावाक्यविचाराज्जानामीत्यर्थः । एवं चार्थाद्वैतमिथ्यात्वं द्योत्यते । एवं ब्रह्मज्ञानलाभजन्यतृप्तावपि तत्फलीभूतजीवन्मुक्तिलाभजन्या सा प्रतिबंधान्न स्यादित्यत्राऽऽह—**धन्योऽहं धन्योऽहं ब्रह्मेत्यादि** सार्धोपगीतित्रयेण ॥ २९२ ॥

**रा० टीका**—एवमिष्टप्राप्तौ तुष्टिमभिधायानिष्टनिवृत्त्याऽपि तुष्यतीत्याह—

**धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ॥**
**धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥ ९३ ॥**

**धन्योऽहमिति** । अद्येदानीं दुःखं दुःखस्वरूपं संसारं न वीक्षे न पश्याम्यतः कृतार्थः। दुःखाप्रतीतौ कारणमाह—**धन्योऽहमिति** । अनेककर्मवासनाजालमज्ञानं क्वापि पलायितं नष्टमित्यर्थः ॥ ९३ ॥

**अ० टीका**—एवं सुखावाप्त्यात्मिकां जीवन्मुक्तिमभिधाय सबीजदुःखध्वस्तिरूपां तामभिधत्ते—**धन्योऽहं धन्योऽहमिति** ॥ २९३ ॥

**रा० टीका**—अज्ञाननिवृत्तिफलं कृतकृत्यत्वं प्राप्तप्राप्यत्वं च दर्शयति—

**धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् ॥**
**धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥ ९४ ॥**

**धन्य इति** ॥ ९४ ॥

**अ० टीका**—एवं कृतकृत्यस्वरूपां प्राप्तप्राप्तव्यरूपां च तां प्रकटयति—**धन्योऽहं धन्योऽहं** कर्तव्यं म इत्यादिना ॥ २९४ ॥

**रा० टीका**—इदानीं कृतकृत्यत्वमित्यादिना जातायास्तृप्तेर्निरतिशयत्वमाह—

**धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ॥**
**धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ॥ २९५ ॥**

**धन्य इति** । इतःपरं वक्तव्यादर्शनात्तुष्टिरेव परिस्फुरतीति दर्शयति—**धन्य इति**॥२९५॥

**अ० टीका**—अतएवोक्ततृप्तेर्निरंकुशत्वेन निरुपमत्वं व्यनक्ति—**धन्योऽहं धन्योऽहं** तृप्तेर्मे इति । अत एव । **धन्योऽहमित्यादि** ॥ २९५ ॥

**रा० टीका**— अस्य सर्वस्य कारणभूतपुण्यपुंजपरिपाकमनुस्मृत्य तुष्यतीत्याह—

**अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ॥**
**अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ९६ ॥**

अहो पुण्यमिति । एवंविधपुण्यसंपादकमात्मानमनुस्मृत्य तुष्यति । अस्येति ॥९६॥

**अ० टीका**—तथा च सर्वमिदं फलमीशतोषरूपपुण्यस्यैवेति तदप्यद्भुतत्वेनानुसंधाय तुष्यतीत्याह—**अहो पुण्यमिति** । सर्वत्र वीप्साऽत्र चमत्कारातिशयार्थैव । तत्र हेतुः-**अस्येत्यादिना** । वयमिति चिदाभासकृतात्मादरातिशयादेव बहुवचनम् । ब्रह्माद्वैतकैवल्यरूपाः संपन्नाः स्मेत्यर्थः । अहो इत्याश्चर्यार्थकमेवाव्ययम् । शिष्टं तु स्पष्टमेव ॥ २९६ ॥

**रा० टीका**—इदानीं सम्यग्ज्ञानसाधनं शास्त्रं तदुपदेष्टारमाचार्यमनुस्मृत्य तुष्यति—

**अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥**
**अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥ ९७ ॥**

अहो शास्त्रमिति । पुनश्च शास्त्रजन्यं ज्ञानं तत्सुखं चानुस्मृत्य संतुष्यति—**अहो ज्ञानमिति** ॥ ९७ ॥

**अ० टीका**—अथांतरंगतरं शास्त्रादिसाधनत्रयमपि संस्मृत्य तदाश्चर्येणापि स परितृप्यतीति तत्तुष्टचनुवादेनाऽऽह—**अहो शास्त्रमिति** । एवं जीवन्मुक्तिसुखमप्यत्याश्चर्यरूपमेवेत्याह—**अहो सुखमित्यादिना** । तथैव श्रूयते स्मर्यते च—“ आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोतीत्यादि ” ॥ ९७ ॥

**तृप्तिदीपमिमं नित्यं येऽनुसंदधते बुधाः ॥**
**ब्रह्मानंदे निमज्जंतस्ते तृप्यंति निरंतरम् ॥ २९८ ॥**

**इति श्रीमद्विद्यारण्यविरचितायां पञ्चदश्यां तृप्तिदीपाख्यं सप्तमं प्रकरणम् ॥ ७ ॥**

ग्रंथाभ्यासफलमाह—तृप्तिदीपमिति ॥ २९८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता पंचदशीयतृप्तिदीपव्याख्या समाप्ता ॥ ७ ॥

**अ० टीका**—एवं भगवान्भारतीतीर्थ आचार्यः प्रतिज्ञातमात्मानं चेदित्यादि-बार्हदारण्यकमंत्रव्याख्यानं तत्प्रसंगागतविचारभूमिसप्तकांतिमनिरंकुशतृप्त्यभिधसप्तभूमिकामप्युपसंहृत्य तत्रास्मिन्नेव प्रकृतग्रथनामपि प्रथयंस्तदभ्यासफलमपि प्रेक्षावन्मुमुक्षुप्रवृत्त्यर्थं संक्षिपति—**तृप्तीति** । ननु भवता **प्रागुपोद्धाते**—

“ प्रत्यक्षाद्यभिगम्ये जीवे गौरादितः कथं शास्त्रम् ।
तद्बोधिमाननाभाक्प्रतिबंधोऽयं द्वितीय इह जीवे ”

**इत्यार्यया** जीवशब्देष्टशुद्धत्वं पदार्थबोधविषयकं प्रमाणासंभावनाख्यं द्वितीयं प्रतिबंधमुपन्यस्य—सप्तम **आत्मानं** चेदिति **श्रुतेर्विवरणात्स्फुटं** भवति । जीवोद्देशेन समन्वयमुख्यत्वं रसज्ञानामित्यार्यांतरेण सप्तमस्यास्य **तृप्तिदीपाख्यप्रकरणस्य** तद्बाधकत्वमुक्तं तत्कथं संभवतीति चेन्न । एतत्प्रकरणतात्पर्यकथनेनोक्तार्थस्यैवोक्तप्रतिबंधबाधध्वननादुपक्रमादितद्विषयकलिंगानामप्यात्मानं चेदिति श्रुतेर्विवरणादिति तया कंठत एवोक्तत्वाच्चेति शिवम् ॥ २९८॥

येन स्वप्नगतेन दत्तमभवन्मह्यं जयंतीदिने शुक्ला लेखनिकाऽतिसुंदरमषीसंपूर्णपात्री तथा । इत्थं वागभिधांगनानतयुगं तच्छ्रद्धनेनद्भुते तं श्रीमन्नरसिंहसद्वयसदानंदं गुरुं नौम्यहम् ॥ इति श्रीमत्परम० श्रीमदद्वैतसच्चिदानंद० पंचदशीव्याख्यायास्तृप्तिदीपप्रकाशः सप्तमः संपूर्णः॥७॥

# अथ पंचदश्या कूटस्थदीपाख्यमष्टमं प्रकरणम्.

**रा० टीका**—नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
कुर्वे कूटस्थदीपस्य व्याख्यां तात्पर्यदीपिकाम् ॥ १ ॥

अत्र मुमुक्षोर्मोक्षसाधनस्य ब्रह्मात्मैकत्वज्ञानस्य त्वंपदार्थशोधनपूर्वकत्वात्त्वंपदार्थशोधनपरं कूटस्थदीपाख्यं ग्रंथमारभमाण आचार्योऽस्य ग्रंथस्य वेदांतप्रकरणत्वेन तदीयैरेव विषयादिभिस्तद्वत्तासिद्धिमभिप्रेत्य त्वंपदलक्ष्यवाच्यौ कूटस्थजीवौ सदृष्टांतं भेदेन निर्दिशति—

**खादित्यदीपिते कुड्ये दर्पणादित्यदीप्तिवत् ॥**
**कूटस्थभासितो देहो धीस्थजीवेन भास्यते ॥ १ ॥**

**खादित्येति** । खादित्यदीपिते ख आदित्यः खादित्यः प्रसिद्धः सूर्य इत्यर्थः । तेन च तत्संबंध्यालोको लक्ष्यते । तेन दीपिते प्रकाशिते कुड्ये दर्पणादित्यदीप्तिवद्दर्पणेषु निपत्य पर्यावृत्तैश्च कुड्यसंबद्धैरादित्यरश्मिभिस्तत्प्रकाशनमिव कूटस्थभासितः कूटस्थेनाविकारिचैतन्येन भासितः प्रकाशितो देहो धीस्थजीवेन बुद्धिस्थचिदाभासेन भास्यते प्रकाश्यतेऽनेन सामान्यतो विशेषतश्च कुड्यावभासकादित्यप्रकाशद्वयमिव देहावभासकचैतन्यद्वयमस्तीति प्रतिज्ञातं भवति ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्द्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वांश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
**श्रीमन्नारायणाख्यं** स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ।
कूटस्थदीपमभिराट्प्रकाशतो द्योतयामि कौमुद्याः ॥ २ ॥

अथ भगवान्भारतीतीर्थाख्य आचार्यस्तृप्तिदीपाख्ये पंचदश्याः सप्तमे पूर्वप्रकरणे तावदज्ञानादिनिरंकुशतृप्त्यंतसप्तावस्थाश्चिदाभासस्यैव संति न कूटस्थस्येत्युक्तमाकर्ण्य कः कूटस्थ इति विशिष्य तद्विषयिणीं तर्कितांतेवासिजिज्ञासामालक्ष्य देहाभिधभास्यप्रतियोगिकसामान्यविशेषभासकत्वाभ्यां कूटस्थचिदाभासयोर्भेदं व्यनक्ति—**खादित्येति** । अंतरिक्षस्थितभानुभासित इति यावत् । एतादृशे कुड्ये । भित्तिः स्त्री कुड्यमित्यमरान्मृदादिभित्ताविल्यर्थः । **दर्पणेति** । आदर्शप्रतिबिंबितसूर्यकांतिवदित्येतत् । उपलक्षणमिदं जलादि प्रतिफलितसूर्यकांतेरपि । एवं दृष्टांतमभिधाय दार्ष्टांतिकमाह—**कूटस्थेति** । अत्रायं प्रयोगः । स्थूलदेहः कूटस्थसाक्षिचैतन्यभासित एव सन्नहंकारांतर्गततत्प्रतिबिंबरूपचिदाभासाख्यजीवभास्यः । यद्वा बिंबप्रतिबिंबोभयभास्यः । विशिष्टभास्यत्वात् । सूर्यभासितभित्तेरादर्शप्रतिबिंबिततद्भासितप्रदेशवदिति । अत्र कूटस्थात्मानुसंधानरूपं प्रसिद्धप्रमाणप्रयोजनं मंगलं तथाऽद्वैतशास्त्रप्रकरणत्वात्तदेकविषयाद्यनुबंधचतुष्टयवैशिष्ट्यमप्युत्तरार्धेन ध्वन्यते ॥ १ ॥

**रा० टीका**—ननु तत्र दर्पणादित्यदीप्तिव्यतिरेकेण खादित्यदीप्तिर्नोपलभ्यत इत्याशंक्य ताभ्यस्तां विभज्य दर्शयति—

**अनेकदर्पणादित्यदीप्तीनां बहुसंधिषु ॥**
**इतरा व्यज्यते तासामभावेऽपि प्रकाशते ॥ २ ॥**

**अनेकेति ।** याऽनेका बहुदर्पणजन्या कुड्ये तत्र तत्र मंडलाकारविशेषप्रभा दृश्यंते तासां संधौ मध्ये इतरा सामान्यप्रकाशरूपा ऽऽदित्यप्रभा व्यज्यतेऽभिव्यक्तोपलभ्यते तासां दर्पणजन्यप्रभाणामभावे दर्पणापगमादिना सत्त्वे च स्वयं सर्वत्र प्रकाशते ॥ २ ॥

**अ० टीका**—एवं सूत्रितस्य शास्त्रार्थस्य विवृतिं कुर्वाणः प्रथमं हेत्वसिद्धिमुद्दिधीर्षुर्दृष्टांते विशिष्टभास्यत्वं स्पष्टयति—**अनेकेति ।** यथा ह्यादर्शगृहादर्शप्रतिबिंबितसूर्यप्रकाशैः पुरःस्थितसूर्यभासिताऽपि भित्तिस्तत्तत्प्रदेशावच्छेदेन विशिष्य भास्यते तत्र तेषां संधिष्वितरा सूर्यभा प्रत्यक्षैव तथोक्तादर्शप्रतिफलितसूर्यकांतीनामभावेऽपि सामान्यतो भित्तिभासकसूर्यकांतिर्भित्तौ प्रत्यक्षैवास्तीत्यर्थः ॥ २ ॥

**रा० टीका**—दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति—

**चिदाभासविशिष्टानां तथाऽनेकधियामसौ ॥**
**संधिं धियामभावं च भासयन्प्रविविच्यताम् ॥ ३ ॥**

**चिदाभासेति ।** तथा तेनैव प्रकारेण चिदाभासविशिष्टानां चित्प्रतिबिंबयुक्तानामनेकधियामनेकासां बुद्धिवृत्तीनां घटज्ञानादिशब्दवाच्यानां संधिमंतरालं जाग्रदादौ धियां तासामेव बुद्धिवृत्तीनामभावं च सुषुप्त्यादौ भासयन्प्रकाशयन्नसौ कूटस्थः प्रविविच्यतां ताभ्यो भेदेन ज्ञायतामित्यर्थः ॥ ३ ॥

**अ० टीका—**उक्तमर्थं दार्ष्टांतिकेऽपि प्रकटयति—**चिदाभासेति । अनेकेति ।** घटपटादिविषयकासंख्यातमतिवृत्तीनामित्यर्थः ।

संधिम्—"**लीने** पूर्वविकल्पे तु यावदन्यस्य नोदयः ।
निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते " ।

इति **लघुवाक्यवृत्त्युक्ते**रंतरालकालमेव जाग्रदाद्यवच्छेदेनेत्यार्थिकम् । एवं धियां निरुक्तवृत्तिकारणीभूतबुद्धीनामेवेत्यर्थः । बहुवचनमिदं सर्वजीवानुभवप्रसिद्ध्यर्थमेव । अभावं च सुप्त्याद्यवच्छेदेन विलयमपीति यावत् । तथा प्रागुक्तदृष्टांतप्रकारेण भासयन्प्रकाशयन्सन्नसौ कूटस्थः प्रविविच्यतां प्रकृष्टविचारविषयीक्रियतामित्यन्वयः । मुमुक्षुभिरिति शेषः । तस्माद्यत्र यत्र विशिष्टभास्यत्वं तत्र बिंबप्रतिबिंबोभयभास्यत्वमिति व्याप्तेः सूर्यभासितभित्तौ बह्वादर्शप्रतिबिंबितसूर्यकांतिभास्यत्ववद्देहाख्यपक्षेऽपि बिंबीभूतकूटस्थभास्यत्वस्य तत्प्रतिबिंबीभूतचिदाभासभास्यत्वस्य च सत्त्वान्न हेतोः स्वरूपासिद्ध्यादिकमित्याशयः ॥ ३ ॥

**रा० टीका**—इदानीं देहांतः कूटस्थचिदाभासयोर्भेदप्रदर्शनाय देहाद्बहिरपि चिदाभासब्रह्मणी विभज्य दर्शयति—

**घटैकाकारधीस्था चिद्घटमेवावभासयेत् ॥**
**घटस्य ज्ञातता ब्रह्मचैतन्येनावभासते ॥ ४ ॥**

**घटेति ।** घटैकाकारधीस्था चिद्घटस्यैकस्याऽऽकार इवाऽऽकारो यस्याः सा घटैकाकारा तथाविधायां बुद्धौ वर्तमानश्चिदाभासो घटमेवावभासयेत् । तस्य घटस्य ज्ञातताख्यो धर्मो घटो

ज्ञात इति व्यवहारहेतुर्यः स घटकल्पनाधिष्ठानेन ब्रह्मचैतन्येन साधनभूतेनावभासते प्रकाशत इत्यर्थः ॥ ४ ॥

**अ० टीका**—एवं त्वंपदार्थपरिशोधार्थं देहांतःकूटस्थचिदाभासौ प्रविविक्तौ प्रदर्श्य तत्पदार्थपरिशोधार्थं देहाद्बहिरपि ब्रह्मचिदाभासौ प्रविविक्तौ प्रदर्शयति—**घटैकाकारेति** । घटस्यैकस्यैव न त्वितरस्याऽऽकार इवाऽऽकारो यस्या एतादृशी या धीस्तत्र प्रतिबिंबत्वेन तिष्ठतीति तथेति यावत् । एतादृशी या चिच्चिदाभासरूपसंविदित्यर्थः । अस्त्वेवं ततः किं तत्राऽऽह—**घटस्येति** । ज्ञातो घट इत्यादिव्यवहारप्रयोजकीभूता घटस्य ज्ञातता तु घटकल्पनाधिष्ठानेनेत्यार्थिकम् । एतादृशेन । ब्रह्मेत्यादि निगदव्याख्यातम् । एवं चायं घट इति ज्ञाने घटचिदाभासभास्य एव ज्ञातो घट इति ज्ञाने त्वसौ घटारोपाधिष्ठानीभूतब्रह्मचैतन्यभास्य इति तयोर्विभागः स्फुट एवेति भावः ॥ ४ ॥

**रा० टीका**—ननु ज्ञाततावभासकचैतन्येनैव घटप्रतीतिसंभवाद्बुद्धिः किमर्थेत्याशंक्य घटस्य ज्ञाततादिभेदसिद्ध्यर्थेत्याह—

**अज्ञातत्वेन ज्ञातोऽयं घटो बुद्ध्युदयात्पुरा ॥**
**ब्रह्मणैवोपरिष्टात्तु ज्ञातत्वेनेत्यसौ भिदा ॥ ५ ॥**

**अज्ञातत्वेनेति** । बुद्ध्युदयात्पुराऽयं घटो ब्रह्मणैवाज्ञातत्वेन प्रकाशितो बुद्ध्युत्पत्तौ सत्यां ज्ञातत्वेन ब्रह्मणैव प्रकाश्यत इतीयानेव भेदो नान्य इत्यर्थः ॥ ५ ॥

**अ० टीका**—नन्वेवं तर्हि घटाकारबुद्ध्युदयात्प्रागपि तदधिष्ठानीभूतब्रह्मचिन्मात्रेणैवास्तु घटभानमिति चेदज्ञातत्वेनास्त्येव तथेत्याह—**अज्ञातत्वेनेति** । एवं चेद्बुद्धेः किं फलमित्यत आह—**उपरिष्टात्त्विति** । भिदा भेदः ॥ ५ ॥

**रा० टीका**—नन्वेकस्यैव घटस्य ज्ञातत्वाज्ञातत्वलक्षणं द्वैरूप्यं कथं संभवतीत्याशंक्य तदवबोधनाय ज्ञातताज्ञातताननिमित्तयोर्ज्ञानाज्ञानयोः स्वरूपं तावद्दर्शयति—

**चिदाभासांतधीवृत्तिर्ज्ञानं लोहांतकुंतवत् ॥**
**जाड्यमज्ञानमेताभ्यां व्याप्तः कुंभो द्विधोच्यते ॥ ६ ॥**

**चिदाभासेति** । चिदाभासांतधीवृत्तिश्चिदाभासश्चित्प्रतिबिंबः सोंऽते पुरोभागे यस्याः सा धीवृत्तिर्ज्ञानमित्युच्यते बोधेद्धा बुद्धिरित्य**आचार्यै**रभिधानात् । तत्र दृष्टांतो **लोहांतकुंतवदिति** । जाड्यं स्वतः स्फूर्तिरहितत्वमज्ञानमित्युच्यते । एताभ्यां पर्यायेण व्याप्तः सर्वतः संबद्धः कुंभो द्विधोच्यते ज्ञात इत्यज्ञात इति चोच्यत इत्यर्थः ॥ ६ ॥

**अ० टीका**—ननु भवत्वेवमज्ञातत्वाद्युपहितो घटो ब्रह्मभास्यस्तथा ज्ञातत्वाज्ञातत्वाभ्यां सर्वमिदं साक्षिभास्यमिति विवरणसिद्धांतेन सह ब्रह्मणोऽज्ञातत्वादिना भासकत्वादेव साक्षित्वविवक्षयाऽविरोधश्च तथाऽपि किं तन्मूलीभूतयोर्ज्ञानाज्ञानयोरेवाऽऽदौ स्वरूपं विवक्षितमित्यपेक्षायां तत्संक्षिपति—**चिदाभासांतेति** । चिदाभासः सर्वात्मना मिथ्याभूतश्चित्प्रतिबिंबः सोंऽतेऽग्रभागे यस्याः सा तथेत्यर्थः । एतादृशी धीवृत्तिरेव । **लोहेति** । लोहं तन्मयं शल्यमन्तेऽग्रभागे यस्य स चासौ कुंतश्चेति तथा तद्वदित्यर्थः । ज्ञानं भवतीत्यन्वयः । यथा काचन वंशयष्टिरेव लोहमयशल्याग्रा संपादिता चेद्गुशुंब्यपराभिधः '**भाला**' इति महाराष्ट्रप्रसिद्धः कुं-

तारव्यायुधविशेषो भवति तद्वच्चिदाभासाग्रवती मतिवृत्तिरेव ज्ञानं भवतीति भावः । एवं ज्ञान-
स्वरूपं निरूप्याज्ञानस्वरूपमप्याह—**जाड्यमिति** । **तदेतज्जडं मोहात्मकमिति श्रुतेर्भानविरो-**
ध्यनादिभावरूपमनिर्वचनीयं वस्त्वित्यर्थः । एतादृशम् । अज्ञानमज्ञानपदवाच्यमस्तीति यावत् ।
फलितमाह—**एताभ्यामित्यादिशेषेण** । विधा ज्ञातोऽज्ञातश्चेत्यर्थः ॥ ६ ॥

**रा० टीका**—नन्वज्ञातस्य कुंभस्य अज्ञानव्याप्तत्वाद्भवतु ब्रह्मावभास्यत्वं ज्ञानव्या-
प्तस्य तु ज्ञातस्य कुंभस्य कुतो ब्रह्मैकैकस्यावभास्यत्वमित्याशंक्याज्ञानस्याज्ञातताजननमात्रेणेव
ज्ञानस्यापि ज्ञातताजननमात्रेणोपक्षीणत्वादज्ञातकुंभवज्ज्ञातस्यापि ब्रह्मावभास्यत्वं भवतीत्याह—

**अज्ञातो ब्रह्मणा भास्यो ज्ञातः कुंभस्तथा न किम् ॥**
**ज्ञातत्वजननेनैव चिदाभासपरिक्षयः ॥ ७ ॥**

**अज्ञात इति** । यथाऽज्ञातकुंभो ब्रह्मणा भास्यस्तथा ज्ञातकुंभो न किं ब्रह्मावभास्यो भ-
वति किंतु भवत्येवेत्यर्थः । कुत इत्यत आह—**ज्ञातत्वेति** ॥ ७ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**अज्ञात इति** । ननु ज्ञातः कुंभः स्पष्टं चि-
दाभासभास्य एव प्रतीयत इति चेत्सत्यम् ।

" बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् "

इतिवचनाज्ज्ञानमात्रोत्पादनेनैव तस्य चारितार्थ्यादित्याह—**ज्ञातत्वेति** । यथा दं-
डित्वं दंड एव तथा ज्ञातत्वं ज्ञानमेव ॥ ७ ॥

**आभासहीनया बुद्ध्या ज्ञातत्वं नैव जन्यते ॥**
**तादृग्बुद्धेर्विशेषः को मृदादेः स्याद्विकारिणः ॥ ८ ॥**

**रा० टीका**—नन्वज्ञाननाजननायाज्ञानमिव ज्ञाननाजननायापि बुद्धिरेवास्तु किमनेन
चिदाभासेनेत्याशंक्य चिदाभासरहिताया बुद्धेर्घटादिवदप्रकाशरूपत्वेन ज्ञाननाजननं न संभवती-
त्याह—**आभासेनि** ॥ ८ ॥

**अ० टीका**—ननु ज्ञातत्वरूपं ज्ञानं बुद्धिरेव जनयतु किं चिदाभासेनेत्यत्राऽऽह—
**आभासेति** । तत्र हेतुः—**तादृगिति** ॥ ८ ॥

**रा० टीका**—चिदाभासरहितबुद्धिव्याप्तस्य घटस्य ज्ञातत्वाभावं दृष्टांतप्रदर्शनेन
स्पष्टयति—

**ज्ञात इत्युच्यते कुंभो मृदा लिप्तो न कुत्रचित् ॥**
**धीमात्रव्याप्तकुंभस्य ज्ञातत्वं नेष्यते तथा ॥ ९ ॥**

**ज्ञात इति** । लोके क्वचिदपि घटो मृदा शुक्लकृष्णरूपया लिप्तो लेपनं प्राप्तो ज्ञात
इति नोच्यते यथा तथा चिदाभासरहितबुद्धिव्याप्तस्यापि कुंभस्य ज्ञातत्वं नाभ्युपगम्यत इति
भावः ॥ ९ ॥

**अ० टीका**—तत्रोपपत्तिमाह— **ज्ञात इतीति** ॥ ९ ॥

**रा० टीका**—फलितमाह—

**ज्ञातत्वं नाम कुंभेऽतश्चिदाभासफलोदयः ॥**
**न फलं ब्रह्मचैतन्यं मानात्प्रागपि सत्त्वतः ॥ १० ॥**

**ज्ञातत्वमिति** । यतः केवलायाः बुद्धेर्ज्ञातत्वजननासमर्थत्वमतः कुंभे चिदाभासलक्षणस्य फलस्योत्पत्तिरेव ज्ञातत्वं नाम प्रसिद्धमित्यर्थः । नन्वथापि चिदाभासो न कल्पनीयो ब्रह्मचैतन्यस्यैव फलस्य सद्भावादित्याशंक्याऽऽह—**न फलमिति** । ब्रह्मचैतन्यं फलं घटादिस्फुरणं न भवतीति । कुत इत्यत आह—**मानादिति** । मानात्प्रागपि प्रमाणप्रवृत्तेः पूर्वमपि विद्यमानत्वात्फलस्य तु तदुत्तरकालीनत्वनियमादिति भावः ॥ १० ॥

**अ० टीका**—निगमयति—**ज्ञातत्वमिति । चिदाभासेति** । चिदाभास एव फलं प्रमाणफलं तस्योदय इत्यर्थः । ननु ब्रह्मचैतन्यमेव घटाधिष्ठानीभूतं भवतु फलमित्यत आह—**नेत्यादिना** । तत्र हेतुः—**मानादित्यादिशेषेण** ॥ १० ॥

**रा० टीका**—नन्विदं परागर्थप्रमेयेष्वित्यादि**सुरेश्वरवार्तिक**विरुद्धमित्याशंक्य तद्विवक्षानभिज्ञस्येदं चोद्यमिति परिहरति—

**परागर्थप्रमेयेषु या फलत्वेन संमता ॥**
**संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणतः ॥ ११ ॥**

**परागर्थेति** । अस्य चायमर्थः । परागर्था बाह्या घटादयः पदार्थास्तेषु प्रमेयेषु प्रमाणविषयेषु सत्सु या प्रमाणफलत्वेनाभ्युपेता संविदस्ति सैवेहास्मिन्वेदांतशास्त्रे वेदांतोक्तिप्रमाणतो वेदांतवाक्यलक्षणप्रमाणेन मेयोऽर्थो ज्ञातव्योऽर्थः ॥ ११ ॥

**अ० टीका**—नन्वेवं यदि प्रमाणजन्यांतःकरणवृत्त्यभिव्यक्तं चिदाभासचैतन्यमेव फलं न तु ब्रह्मचैतन्यं फलमिति चेत्तर्हि **श्रीमत्सुरेश्वरवार्तिकेन** साकं विरोध इति दर्शयितुं तद्वार्तिकं पठति—**परागिति** । परागर्थाः प्रत्यगर्थीभूतात्मभिन्नाः सर्वेऽप्यनात्मपदार्थाः कुंभादयस्तल्लक्षणानि यानि प्रमेयाणि प्रमाविषयतायोग्यान्यज्ञातघटाद्यवच्छिन्नचैतन्यानि तेष्वित्यर्थः । या संविच्चितिः फलत्वेन ज्ञातत्वलक्षणेन प्रमाणफलचैतन्यत्वेन संमता सर्वाभियुक्तमान्याऽस्तीत्यर्थः । सैव संविदिहाद्वैतशास्त्रे । **वेदांतेति । अय**मात्मा ब्रह्मेत्याद्यु**पनिष**न्महावाक्यैकजन्यप्रमाणवृत्तित इति यावत् । मेयः प्रमितिविषयीकरणीयः । अर्थेऽद्वैतब्रह्मलक्षणोऽर्थः । भवतीत्यार्थिकशेषं संपूर्य संबंधः । तदुक्तं **सिद्धांतबिंदौ**—एवमत्र प्रक्रिया । शरीरमध्ये स्थितः सर्वशरीरव्यापकः सत्त्वप्राधान्येन सूक्ष्मपंचभूतारब्धोऽतःकरणाख्योऽविद्याविवर्तो दर्पणादिवदतिस्वच्छो नेत्रादिद्वारा निर्गत्य योग्यान्घटादिविषयान्व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत् । तस्य च सौरालोकादिवज्झटित्येव संकोचविकासावुपपद्येते । स च सावयवत्वात्परिणममाणो देहाभ्यंतरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येऽपि चक्षुर्वदविच्छिन्नो व्यवतिष्ठते । तत्र देहावच्छिन्नोऽतःकरणभागोऽहंकाराख्यः कर्तेत्युच्यते । देहविषयमध्यवर्ती दंडायमानस्तद्भागो वृत्तिज्ञानाख्या क्रियेत्युच्यते । विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसंपादकमभिव्यक्तियोग्यत्वमित्युच्यते । तस्य च त्रिभागस्यांतःकरणस्यातिस्वच्छत्वाच्चैतन्यं तत्राभिव्यज्यते । तस्याभिव्यक्तस्य चैतन्यस्यैकत्वेऽप्यभिव्यंजकांतःकरणभागभेदात्त्रिधा व्यपदेशो भवति । कर्तृभागावच्छिन्नश्चिदंशः प्रमाता । क्रियाभागावच्छिन्नश्चिदंशः प्रमाणम् । विषयगताभिव्यक्तियोग्यत्वभागावच्छिन्नश्चिदंशः प्रमितिरिति । प्रमेयं तु विषयगतं ब्रह्मचैतन्यमेवाज्ञानम् । तदेव

च ज्ञातं सत्फलमिति । एवं चाधिष्ठानत्वाद्विषयगतब्रह्मचैतन्यस्यैव ज्ञातत्वोपहितत्वेन फलत्वमिति तु निर्विवादमेव । तथाच गामानयेति गुरुणाऽऽज्ञप्तः शिष्यः शुक्लां गामानयन्नपि किमिति शुक्ला गौरानीतेति तेनासौ नैव तिरस्क्रियते तस्माद्विशिष्टं शुद्धान्नातिरिच्यत इति **न्यायः** फलति । तेनैवेदं वार्तिकमवाङ्मनसगम्ये शुद्धे ब्रह्मणि बुभुत्सुबुद्ध्यप्रवेशात्तदनुजिघृक्षया प्रवृत्तमित्याकूतम् ॥ ११ ॥

**इति वार्तिककारेण चित्सादृश्यं विवक्षितम् ॥**
**ब्रह्मचित्फलयोर्भेदः सहस्र्यां विश्रुतो यतः ॥ १२ ॥**

**रा० टीका**—इत्यनेन **वार्तिकेन** ब्रह्मचैतन्यसदृशश्चिदाभासः प्रमाणफलत्वेन विवक्षितो न ब्रह्मचैतन्यमिति भावः । वार्तिककाराणामीदृशी विवक्षेति कुतोऽवगम्यत इत्याशंक्य तद्गुरुभिः **श्रीमदाचार्यैरुपदेशसाहस्र्यां** ब्रह्मचैतन्यचिदाभासयोर्भेदस्य प्रतिपादितत्वादित्याह—**ब्रह्मचिदिति ।** ब्रह्मचिच्च फलं च ब्रह्मचित्फले तयोरिति विग्रहः ॥ १२ ॥

**अ० टीका**—एवं **श्रीमद्वार्तिककारचरण**रहस्यानभिज्ञस्य शिष्यादेर्ब्रह्मचैतन्यफलचैतन्ययोः शुद्धत्वकिंचिद्धर्मविशिष्टत्वाभ्यां भेदवादिने सिद्धांतिने तद्विरोधप्रदर्शनार्थं प्रकृतवार्तिकोपन्यासे सति तत्तात्पर्यं सिद्धांत्यभिधत्ते—**इतीत्यर्धेन ।** इति प्रकृतवार्तिक इत्यर्थः । **वार्तिकेति ।** अत्र षष्ठीबहुवचनांतपाठ एव साधीयान् । अन्वयसारल्यात् । बहुवचनं त्वादरातिशयार्थमेव । तृतीयैकवचनांतस्त्वपपाठ एव । अन्वयक्लिष्टत्वाद्यापत्तेः । **चिदित्यादि ।** चित्त्वेनैव ब्रह्मचैतन्यप्रमाणफलचैतन्ययोः सादृश्यं साम्यमिति यावत् । विवक्षितं वक्तुमिष्टमस्तीति योजना । ननु कुत एतदिति चेत्तद्गुरुभिः **श्रीमद्भाष्यकारचरणै**रुपदेशसाहस्र्यां तद्भेदस्यैवोक्तत्वादित्याह—**ब्रह्मचिदिति ।** ब्रह्मचिच्च फलं प्रागुक्तं फलचैतन्यं चेति तथा तयोरित्यर्थः । तदुक्त**मुपदेशसाहस्र्या**श्चतुर्दशप्रकरणे—

" **चिन्मात्र**ज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः । मया यस्मात्प्रकाश्यंते सर्वस्याऽऽत्मा ततो ह्यहम् । करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः । जाग्रत्येवं यतो दृष्टा द्रष्टा तस्मादतोऽन्यथा" इति । अत्र **रामतीर्थटीका**ऽपि यावदुपयुक्तैव संगृह्यते । द्रष्टाऽऽत्मा ततो बुद्धेरन्यथाऽन्यादृशः सत्योऽखंडैकरस इत्यर्थ इति । एवं चेह चिन्मात्रेत्यादिना द्रष्टेत्यादिना च ब्रह्मात्मचैतन्यस्य फलमिति फलचैतन्यभेदः स्पष्ट एवेति भावः । नन्वेवमपि **वेदांतकल्पलतायां श्रीमधुसूदनसरस्वती**भिरेतद्वार्तिकं ब्रह्मचैतन्यपरमेव वर्णितं तथाच पुनरपि विरोधतादवस्थ्यमेवा । तद्यथा । तत्र हि ब्रह्मणि वृत्तिव्याप्तिं प्रकृत्योक्तम् ।

यत्तु—" फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता "

इत्युक्तत्वात्फलव्याप्यत्वमेव जडत्वापादकमित्याहुस्तन्न । प्रमाणजन्यांतःकरणवृत्त्यभिव्यक्तचैतन्यस्यैव शास्त्रे फलत्वव्यपदेशात्तद्व्याप्यत्वस्यैव जडत्वापादकत्वे ब्रह्मण इव साक्षिभास्यानामपि जडत्वं न स्यात् । चैतन्यकर्मता तु चिद्भिन्नत्वावच्छेदेन सर्वत्रैवेति सैव जडत्वप्रयोजिका । उदाहृतकारिकायामपि चैतन्यमात्रपरमेव फलपदमिति द्रष्टव्यम् । ननु वृत्तिविषयत्वेन तदुपरक्तचैतन्यविषयत्वमपि नियतम् । वृत्तेश्चिदाकारगर्भिण्या एवोत्पत्तेः ।

तदुक्तम्—" **वियद्वस्तु** स्वभावानुरोधादेव न कारकात् । वियत्संपूर्णतोत्पत्तौ कुंभ-

स्येव दृशा धियाम्। घटदुःखादिरूपत्वं धियो धर्मादिहेतुतः। स्वतः सिद्धार्थसंबोधव्याप्तिर्वस्त्वनुरोधतः" इति। तथात्र चैतन्यविषयत्वेन जडत्वं दुर्वारमेव। न। वृत्त्युपरक्तचैतन्यस्य स्वयमेव चैतन्यरूपत्वान्न तद्व्याप्तता। फले फलांतरानुपपत्तेः। तद्भिन्नानां तु स्वतो भानरहितानां तद्व्याप्तिरवश्यमाश्रयणीयेति न कोऽपि दोषः। तदुक्तम्—" **परागर्थ**प्रमेयेषु या फलत्वेन संमता। संवित्सैवेह मेयोऽर्थो वेदांतोक्तिप्रमाणतः" इतीति। एवं च मूलकृता**मुपदेशसाहस्र्य**नुसारेणैतद्वार्तिकस्थफलपदं ब्रह्मचैतन्यसदृशपरमभिमतम्। अन्यथोपदेशसाहस्र्युक्तः स्वोक्तश्च ब्रह्मचैतन्यफलचैतन्ययोर्भेदः प्रतिरुद्धः स्यादुदाहृत**कल्पलतिका**ग्रंथे तावत्तयोरभेद एव स्फुटी भवतीति चेत्सत्यम्। उक्त**कल्पलतिकाया**मप्यव्यवहितपूर्वग्रंथे। अथवा चैतन्यविषयतैव सर्वत्र जडत्वापादिका न तु वृत्तिविषयताऽपि। "**यतो** वाचो निवर्तंते" "**न च**क्षुषा गृह्यते नापि वाचा" "**तं त्वौ**पनिषदं पुरुषं पृच्छामि" "नावेदविन्मनुते तं बृहंतम्" "**वेदेनैव** यद्वेदितव्यम्" इत्याद्युभयविधश्रुत्यनुसारेण कल्पनादित्युक्तेः शुद्धब्रह्मविषयक एव वृत्तिविचारेप्यपीति (?) तु निर्विवादमेव। तेन वृत्त्युपरक्तचैतन्यस्येत्यादावत्र सिद्धांतग्रंथे वृत्त्या विचारिततत्त्वमस्यादिवाक्यजन्ययाऽहं ब्रह्मास्मीत्यखंडाकारचरमवृत्त्योपरक्तं मूलाविद्याध्वंसद्वारा संबद्धमिव यद्ब्रह्मात्मचैतन्यं तस्य स्वयमेव चैतन्यरूपत्वान्न तव्द्याप्यतेत्याद्युपपाद्य तत्र संमतित्वेनोदाहृतमिदं **वार्तिकं** परागर्थेत्यादि। तत्र परागर्था अनात्मरूपाः ये घटादयस्तल्लक्षणानि यानि प्रमेयाणि तेषु या संविच्चितिस्तद्विषयकचक्षुरादिजन्यबुद्धिवृत्त्यवच्छिन्ना चित्फलत्वेन प्रमाणजन्यांतःकरणवृत्त्यभिव्यक्तचैतन्यस्यैव शास्त्रे फलत्वव्यपदेशादित्यत्रैव प्राक्फलचैतन्यलक्षणस्योक्तत्वात्तत्त्वे न संमता। " करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः। जाग्रत्येवं यतो दृष्टा " इति **श्रीमद्भाष्यकारचरणा**नां समभिप्रेताऽस्ति। वेदांतोक्तिप्रमाणतस्तु मेयोर्थ एव ब्रह्मात्मैक्यलक्षणः पारमार्थिकः पुरुषार्थः सा भवति नैव तत्र घटादिजडवत्स्फोरणार्थं फलचैतन्याख्यनिरुक्तसंविदंतरापेक्षा। तस्या एव स्वप्रकाशत्वादिति यथामत्यर्थः प्रतिभाति। तथा चैवकारोऽयं मया **कल्पलताकृ**दनुसारेणैव मेयोर्थ एवेति योजितो न तु कपोलकल्पित इति ध्येयम्। एवं च मूले। " **ज्ञातत्वं** नाम कुंभे तच्चिदाभासफलोदयः। न फलं ब्रह्मचैतन्यं मानात्प्रागपि सत्त्वतः " **इत्युक्त्वा** घटाद्याकारप्रमाणवृत्तिविचारे फलचैतन्यब्रह्मचैतन्ययोः स्पष्टभेदमसहमानस्योक्त**वार्तिके** सैवेति यथाश्रुतग्राहिणस्त्वादृशस्य घटादिप्रतिकर्मव्यवस्था व्युत्पादनार्थमुक्त**वार्तिक**मेव पठित्वाऽग्रे " **इति** वार्तिककाराणां चित्सादृश्यं विवक्षित**मित्यादिना** सहेतुकं फलत्वेन या संमतेत्यादेः स्वारस्यं न्यरूपीति कोऽत्र मूलकल्पलतयोरुपजीव्योपजीवकयोर्विरोधगंधोऽपि। चिन्मात्रस्याद्वितीयत्वेऽपि प्रतिकर्मव्यवस्थायां तत्तदवच्छेदेन षोढा भिन्नत्वं सदृष्टांतं मया स्पष्टीकृतं **बोधैक्यसिद्धौ**—

" पर्वाढ्यस्फाटिकोच्चापवरकगलसद्दीपवच्छुद्ध आत्मा
तद्भावत्स्यात्स साक्षी तदुपहितकव(?)त्पर्ववत्स प्रमाता।
मानं मेयं मितिस्तत्फलमपि च बहिः प्रस्फुरंस्तत्प्रकाशः
कुंभाद्यंतं यथैवं सकरणगमतीद्धः स्फुरत्यद्वयोऽपि " इति॥

विस्तरस्त्वेत**ट्टीकाया**मेव मदीयायां विज्ञेय इति शिवम्॥ १२॥

**रा० टीका**—एवं च सति प्रकृते किमायातमित्यत आह—

**आभास उदितस्तस्माज्ज्ञातत्वं जनयेद्घटे ॥**
**तत्पुनर्ब्रह्मणाऽऽभास्यमज्ञातत्ववदेव हि ॥ १३ ॥**

**आभास इति ।** यस्माद्ब्रह्मचित्फलयोर्भेदः प्रसिद्धस्तस्माद्घट उदित उत्पन्न आभासश्चिदाभासस्तत्र घटे ज्ञातत्वं पुनरज्ञातत्ववद्ब्रह्मणैवाऽऽभास्यं भवति हि प्रसिद्धमित्यर्थः॥१३

**अ० टीका**—ननु भवत्वेवं ततः किं प्रकृत इत्यत आह—**आभास इति ।** आलोकसहकृतचक्षुःसंनिकृष्टघटाकारबुद्धिवृत्ताविति शेषः । आभासश्चिदाभासः । उदितस्तत्समकालमेव घटाकाशवदुत्पन्नः सन्नित्यर्थः । अपरं तु सरलमेव ॥ १३ ॥

**रा० टीका**—एवं ब्रह्मचिदाभासयोर्भेदमुपपादितं विषयभेदप्रदर्शनेन स्पष्टयति—

**धीवृत्त्याभासकुंभानां समूहो भास्यते चिता ॥**
**कुंभमात्रफलत्वात्स एक आभासतः स्फुरेत् ॥ १४ ॥**

**धीवृत्त्येति ।** चिता ब्रह्मचैतन्येनेत्यर्थः । चिदाभासस्य कुंभमात्रनिष्ठफलरूपत्वात्तेनाभासेन स घट एक एव स्फुरेद्भासेतेत्यर्थः ॥ १४ ॥

**अ० टीका**—एवं चोपपादित एव ब्रह्मचैतन्यफलचैतन्ययोर्भेदे युक्त्यंतरमप्याह—**धीवृत्तीति ।** धीवृत्तिः प्रमाणजन्या मनोवृत्तिराभासः प्रमाणफलाख्यस्तद्गतश्चिदाभासः कुंभस्तद्विषयो घटश्चेति द्वंद्वः । समूहः संघः । चिता घटाधिष्ठानीभूतब्रह्मचैतन्येनेत्यर्थः । ततः किं तत्राऽऽह—**कुंभमात्रेति** । एवं च विषयविभेदादपि ब्रह्मचैतन्यफलचैतन्ययोर्भेद इति भावः ॥ १४ ॥

**रा० टीका**—कुंभस्य चिदाभासब्रह्मोभयभास्यत्वे लिंगमाह—

**चैतन्यं द्विगुणं कुंभे ज्ञातत्वेन स्फुरत्यतः ॥**
**अन्येऽनुव्यवसायाख्यमाहुरेनयथोदितम् ॥ १५ ॥**

**चैतन्यमिति ।** अतो घटस्य ब्रह्मचिदाभासोभयभास्यत्वात्कुंभे ज्ञातत्वेन द्विगुणं चैतन्यं भाति । इदमेव घटज्ञानतावभासकं चैतन्यं तार्किकैर्नामांतरेण व्यवह्रियत इत्याह—**अन्य इति ।** यथोदितं यथोक्तमेनदेव ब्रह्मचैतन्यमन्ये तार्किका अनुव्यवसायाख्यं ज्ञानांतरं प्राहुरिति योजना ॥ १५ ॥

**अ० टीका**—ननु धीवृत्त्याभासकुंभानां त्रयाणामपि साधारण्येन ब्रह्मचैतन्यभास्यत्वेऽपि पुनः कुंभस्यैकस्यैव फलाख्यचिदाभासभास्यत्वं यदुच्यतेऽत्र किं मानमित्याशंक्य कार्यलिंगकानुमानमेवेतिध्वनयन्समाधत्ते—**चैतन्यमिति** । धीवृत्त्याभासकुंभानां मध्ये यतः कुंभ एक एव ज्ञातत्वेन ज्ञातो मया कुंभ इति कुंभज्ञानवानहमिति वा परिस्फुरत्यतः कुंभे चैतन्यं द्विगुणमयं कुंभ इति ज्ञातो मया कुंभ इति स्फुरणद्वयं भवति न तु धीवृत्तिचिदाभासयोरित्याशयः । तत्रायं कुंभ इति प्राथमिकज्ञाने धीवृत्त्याभासकुंभानां दृश्यत्वसाधारण्येन भानेऽपि प्रमातुश्चक्षुरभिधप्रमाणप्रवृत्तेः कुंभमात्रप्रमित्यर्थत्वात्साक्षिमात्रभास्यधीवृत्त्याभासयोस्तदविषयत्वाच्च । नन्वयं घट इति प्राथमिकज्ञाने यथा साक्षिणा धीवृत्त्यादयस्त्रयोऽपि विषयीक्रियंते तथा द्वितीये ज्ञातो घट इत्यादिरूपे ज्ञानेऽपि ब्रह्मचैतन्याख्यसाक्षिणैव ते विषयीक्रियंतेऽत्रैकस्मिन्कुंभ एव किमिति ज्ञानभानस्फुरणसंविच्चिचितिचैतन्यादिपदानामनर्थांतरत्वेन चैतन्यद्वैगुण्यं

स्वीक्रियत इति चेद्बाढम् । प्राथमिकज्ञानस्यैव प्रमात्वेन कुंभमात्रविषयकत्वात्तदानीं तन्मात्रस्यैव भानात्तन्नांऽऽतरीयकतया बुद्धिवृत्तितदवच्छिन्नचिदाभासयोस्तु साक्षिरूपज्ञानेनैव भानाच्च । ज्ञातो घट इत्याद्याकारके कुंभज्ञानविषयके ज्ञाने तु साक्षिणैव कुंभस्तद्विषयं प्रमावृत्त्यात्मकं ज्ञानं तदवच्छिन्नश्चिदाभासश्च तुल्यकालमेव विषयीक्रियंत इति युक्तमेव घटे चैतन्यस्य द्वैगुण्यकथनम् । अत्रायं प्रयोगः । अयं घट इति ज्ञाने स्फूर्यमाणानां धीवृत्त्याभासकुंभानां मध्ये विमतः कुंभ एव चैतन्यद्वैगुण्यवान् । प्रमितिविषयत्वे सति साक्षिविषयत्वाद्व्यतिरेके प्रमित्यादिवदिति । यावत्प्रमाविषयाणां पक्षसमतयाऽन्वयदृष्टांताभावात्केवलव्यतिरेक्येव । ननु भवत्वेवमथाप्यन्यैः कैश्चिदपि तैर्थिकैः प्रमिते वस्तुनि ज्ञानद्वैगुण्यांगीकरणादर्शनादिदं परिभाषामात्रमेवेति चेन्न । तार्किकैरस्मदुक्तस्य ज्ञानविषयकसाक्षिज्ञानस्यैवानुव्यवसायत्वेनांगीकृतत्वादित्यभिप्रेत्याऽऽह—**अन्य इति ।** अन्ये तार्किकाः । यथोदितं यथावदुपपादितम् । अस्माभिरित्यार्थिकम् । एतत्प्रमिते वस्तुनि ज्ञानत्वेन स्फुरणमित्यर्थः । अनुव्यवसायाख्यमतन्नामकम् । आहुरित्यन्वयः ॥ १५ ॥

**घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः ॥**
**विज्ञातो घट इत्युक्तिर्ब्रह्मानुग्रहतो भवेत् ॥ १६ ॥**

**रा० टीका**—अयं घट इति व्यवहारभेदादपि चिदाभासब्रह्मणोर्भेदोऽवगंतव्य इत्याह—**घटोऽयमिति** ॥ १६ ॥

**अ० टीका**—तदेवमुक्तमेवार्थं सर्वानुभवसाधारण्येन बुद्धावधिरोहयति—**घटोऽयमित्यसाविति** । आभासस्य प्रमित्यवच्छिन्नचिदाभासस्येत्यर्थः । **ब्रह्मेति** । घटाधिष्ठानीभूतब्रह्मचैतन्येनेति यावत् ॥ १६ ॥

**आभासब्रह्मणी देहाद्बहिर्यद्वद्विवेचिते ॥**
**तद्वदाभासकूटस्थौ विविच्येतां वपुष्यपि ॥ १७ ॥**

**रा० टीका**—देहाद्बहिश्चिदाभासब्रह्मणी विविच्येते यथा तथा देहान्तश्चिदाभासकूटस्थौ विवेचनीयावित्याह—**आभासेति** ॥ १७ ॥

**अ० टीका**—एवं तत्पदार्थपरिशोधनार्थं देहाद्बहिर्ब्रह्मचिदाभासौ विविच्य तद्दृष्टांतेन पुनस्त्वंपदार्थपरिशोधनार्थमुपक्रम एवोपन्यस्तं कूटस्थाभासयोर्विवेचनं विधत्ते—**आभासेति ।** न चोपक्रम एव तद्विवेचनस्य कृतत्वादलं पुनस्तद्विवेचनविधानेनेति वाच्यम् । देहादिपंचकोशाध्यासेन तदविवेकस्यैव सर्वोऽर्थप्रयोजकत्वेन तन्निरासार्थं तद्विवेचन एव दार्ढ्याधिक्यापेक्षणार्थत्वादिति संक्षेपः ॥ १७ ॥

**अहंवृत्तौ चिदाभासः कामक्रोधादिकासु च ॥**
**संव्याप्य वर्तते तप्ते लोहे वह्निर्यथा तथा ॥ १८ ॥**

**रा० टीका**—ननु देहाद्बहिश्चिदाभासव्याप्यघटाकारवृत्तिवदांतरविषयगोचरवृत्त्यभावात्कथं तद्व्यापकश्चिदाभासोऽभ्युपगम्यत इत्याशंक्य विषयगोचरवृत्त्यभावेऽप्यहमादिवृत्तिसद्भावात्तद्व्यापकश्चिदाभासोऽभ्युपगंतुं शक्यत इति सदृष्टांतमाह—**अहमिति** ॥ १८ ॥

**अ० टीका**—एवं यदुक्तं वपुष्यपि त्वंपदार्थनिर्णयार्थमाभासकूटस्थौ विवेचनीयावे-

वोपक्रमसूत्रितविवृत्त्येति तत्प्रकारं संक्षिपति—अहंवृत्तावित्यादि चतुर्भिः । कामेति । वृत्तिष्विति शेषः । तत्र दृष्टांतः—तप्त इत्यादि शेषेण ॥ १८ ॥

**स्वमात्रं भासयेत्तप्तं लोहं नान्यत्कदाचन ॥**
**एवमाभाससहिता वृत्तयः स्वस्वभासिकाः ॥ १९ ॥**

**रा० टीका**—अहमादिवृत्तीनामेव चिदाभासभास्यत्वं दृष्टांतप्रपंचनेन स्पष्टयति—**स्वमात्रमिति** ॥ १९ ॥

**अ० टीका**—उक्तदृष्टांतमेव स्पष्टयति—**स्वमात्रमिति** । दार्ष्टांतिके तद्योजयति—**एवमिति** ॥ १९ ॥

**क्रमाद्विच्छिद्य विच्छिद्य जायंते वृत्तयोऽखिलाः ॥**
**सर्वा अपि विलीयंते सुप्तिमूर्छासमाधिषु ॥ २० ॥**

**रा० टीका**—एवं चिदाभासं व्युत्पाद्य कूटस्थस्वरूपं व्युत्पादयितुं तदुपयोगिनं वृत्त्यभावावसरं दर्शयति—**क्रमादिति** ॥ २० ॥

**अ० टीका**—एवं द्वाभ्यां देहाभ्यंतरेऽहंकारादिवृत्तिषु चिदाभासं तद्भिन्नं निरूप्याथ कूटस्थं निरूपयिष्यंस्तद्व्यंजकं वृत्त्याभावाद्यवसरं दर्शयितुं तदुत्पत्तिलयावाह—**क्रमादिति** । एतेन प्राक्सूत्रितं संधिं धियामभावं चेत्यादि यत्तदपि व्याख्यातम् । अत्र समाधौ लयस्तावद्घनसत्त्वाकारपरिणतांतःकरण एव तद्वृत्तीनां न तु सुप्त्यादाविव गाढतमोगुणाकारपरिणतेऽवस्थाज्ञान इति ॥ २० ॥

**रा० टीका**—भवत्वेवं समाध्यादौ वृत्तिविलयोऽनेन कथंकूटस्थोऽवगम्यत इत्याशंक्य वृत्त्यभावसाक्षित्वेनासाववगम्यत इत्याह—

**संधयोऽखिलवृत्तीनामभावाश्चावभासिताः ॥**
**निर्विकारेण येनासौ कूटस्थ इति चोच्यते ॥ २१ ॥**

**संधय** इति । वृत्तिसंधयो वृत्त्यभावाश्च येन चैतन्येनावभास्यंते स कूटस्थोऽवगंतव्य इत्यर्थः ॥ २१ ॥

**अ० टीका**—अथ कूटस्थमेव विविच्य प्रथयति—**संधय इति** । निर्विकारेणेति कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यत इति तत्पदविग्रहप्रदर्शनार्थं परिकरालंकारसूचकं सहेतुकं विशेषणम् । चोऽवधारणे । असावेव कूटस्थ इत्युच्यत इति संबंधः ॥ २१ ॥

**रा० टीका**—एवं च सति किं फलितमित्यत आह—

**घटे द्विगुणचैतन्यं यथा बाह्ये तथांऽऽतरे ॥**
**वृत्तिष्वपि ततस्तत्र वैशद्यं संधितोऽधिकम् ॥ २२ ॥**

**घट इति** । बाह्ये घटे यथा घटमात्रावभासकश्चिदाभासो घटस्य ज्ञाततावभासकं ब्रह्मचैतन्यं चेति चैतन्यद्वैगुण्यं तथांऽऽतरेऽहंकारादिवृत्तिष्वपि कूटस्थचैतन्यं वृत्त्यवभासकश्चिदाभासश्चेति द्विगुणचैतन्यमस्ति तत्रोपपत्तिमाह—**तत इति** । यतो द्विगुणचैतन्यमस्ति ततः संधितः संधिभ्यस्तत्र वृत्तिषु वैशद्यमधिकं दृश्यत इति शेषः ॥ २२ ॥

**अ० टीका**—ननु भवत्वेवमांतरवृत्तितत्संधितदभावभासको यो निर्विकारः स कूट-

स्थपदाभिधेयस्तथाऽपि बाह्यघटवदांतरेऽपि स्वप्नमनोराज्यस्मृत्यादिकालिके घटे द्विगुणचैतन्यमस्ति न वा। आद्ये व्यावहारिकत्वापत्तिः। अंत्ये संध्यादिकवैशद्यानापत्तिरित्याशंक्यैंद्रजालिकघटादौ चैतन्यद्वैगुण्यसत्त्वेऽपि ब्रह्मज्ञानेतराबाध्यत्वलक्षणव्यावहारिकत्वादर्शनादाद्यपक्ष एवेष्ट इति स्पष्टयति—**घट इत्यादि** पूर्वार्धेन। उक्तमर्थमांतरवृत्तिष्वपि वक्ष्यमाणरीत्या प्रमाणत्वेन विवक्षितास्वतिदिशति—**वृत्तिष्वपीति**। नन्वेवमप्यांतराणां बुद्धिवृत्तीनां किं चैतन्यैकगुण्यं तद्द्वैगुण्यं वा। नाऽऽद्यः। तत्संधिवदवैशद्यापत्तेः। नापि द्वितीयः। वृत्तिपदेन वृत्तित्वावच्छेदकावच्छिन्नानामंतःकरणवृत्तीनां ग्रहे ताभिश्चाज्ञाननाशनादित्युत्तरश्लोकीयचरमचरणोक्तप्रमाणवृत्तिमात्रग्रहणविरोधात्। तद्भिया तत्र प्रमाणमात्रवृत्तिग्रहे चक्षुषा घटं पश्याम्यहमित्यादिवृत्तासां बाह्यत्वापातादिति चेच्छृणवत्र रहस्यम्। अत्र वृत्तिपदेनोक्तोपसंहारग्रंथविरोधादज्ञानैकनाशकांतरप्रमाणमात्रवृत्तयो ग्राह्याः। न च तथात्वे निरुक्ततद्बाह्यत्वापत्तिरिति सांप्रतम्। प्रमाणवृत्तित्वसत्त्वेऽप्यांतरत्वसंभवात्। तद्यथा। काशीं स्मरामीत्यादि यथार्थविषयिण्याः स्मृतेरांतरत्वेऽपि प्रमाणवृत्तित्वमबाधादेवावश्यं वाच्यम्। एवं विमतं मिथ्या। दृश्यत्वाच्छुक्तिरजतवदित्यादिरूपा मननकालिक्येकांते मुमुक्षोरांतराऽप्यनुमित्यात्मिका प्रमाणवृत्तिः। तद्वन्निदिध्यासनकालिक्यप्यहं ब्रह्मास्मीति। "**मय्येव** सकलं जातं मयि सर्वं प्रतिष्ठितम्। मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्" इति। श्रुतेस्तत्त्वंपदार्थयोः शोधितयोरैक्यभावनावृत्तेरांतरत्वेऽप्यबाधितत्वादेव धारावाहिकवृत्तिवत्प्रमाणत्वम्। तथा स्वप्नोपलब्धमंत्रादिविषयकश्रवणाद्यात्मकवृत्तेरांतरत्वेऽपि प्रमाणत्वमक्षतमेवेति। तदुक्तं **सिद्धांतबिंदावेव,** एवं स्वप्ने मंत्रादिप्राप्तिः। स्वप्नजाग्रदादिति। एतेन स्वप्न एवाहं मंत्रोपलंभवानित्यादेस्तादृङ्मंत्रोपलब्ध्युत्तरकालावच्छेदेन संभावितवृत्तेरांतरत्वेऽपि प्रमाणवृत्तित्वं व्याख्यातम्। एवं मनोराज्योदाहरणमपि द्रष्टव्यम्। अत्र सर्वत्रांऽऽतरवृत्तित्वेऽपि प्रामाण्यं साधारण्येनाबाधादेव। अज्ञाननिवर्तकत्वेन तु तद्यथासंभवं द्रष्टव्यमिति। फलितमाह—**तत इत्यादिशेषेण** ॥ २२ ॥

**रा० टीका**—नन्वत्रापि घटादिष्विव ज्ञातताज्ञातताभासकत्वेन कूटस्थः किं नेष्यत इत्याशंक्य तत्र ज्ञातताद्यभावादेवेत्याह—

**ज्ञातताज्ञातते न स्तो घटवद्वृत्तिषु क्वचित्॥**
**स्वस्य स्वेनागृहीतत्वात्ताभिश्चाज्ञाननाशनात्॥ २३॥**

**ज्ञाततेति**। तत्रोपपत्तिमाह—**स्वस्येति**। ज्ञानाज्ञानव्याप्तिभ्यां ज्ञातताज्ञातते भवतः वृत्तीनां तु स्वप्रकाशत्वेन ज्ञानव्याप्तिर्नास्ति ताभिर्वृत्तिभिः स्वोत्पत्तिमात्रेण स्वगोचराज्ञानस्य निवर्तितत्वादज्ञानस्य व्याप्तिरपि नास्तीति भावः ॥ २३ ॥

**अ० टीका**—नन्वेवं चेद्यदिबाह्यांतरघटवद्बाह्यांतरवृत्तिष्वपि प्रमाणरूपा साक्षिचैतन्यचिदाभासचैतन्यभास्यत्वेन चैतन्यद्वैगुण्ये घटवदेव तास्वपि ज्ञातताज्ञातते अपि प्रसक्ते स्यातां तथा च घटज्ञानज्ञानं मेऽस्ति नाऽऽसीच्च तदेतावत्कालमित्याद्यनुभूत्यापत्तिरित्याशंक्य समाधत्ते—**ज्ञाततेति**। तत्र क्रमेण हेतू आह—**स्वस्येत्यादि**तृतीयादिपादाभ्याम्। घटविषयकप्रमाणवृत्तिं प्रति ज्ञाततामापादयन्प्रष्टव्यः किमसौ वृत्तिस्तयैव ज्ञायत इत्युच्यते साक्षिणा वा। नांत्यः। विज्ञातो घट इत्युक्तिर्ब्रह्मानुभवतो भवेदिति प्रागेव सिद्धांतितत्त्वेनाधुना तदापादनासंभवात्। स्वस्कंधाधिरोहणापत्त्या नाप्याद्य इत्याह—**स्वस्येत्यादिना**। अत्र संवित्स्वप्रकाश-

वादिप्राभाकरादिखंडनयुक्तयस्त्वाकरत एव ज्ञेयाः । अनतिप्रयोजकत्वाद्विस्तरभयाच्च नेह प्रतन्यंत इति दिक् । एवं तेजस्तिमिरयोरिव ज्ञानाज्ञानयोर्विरोधेन ज्ञानरूपाणां प्रमावृत्तीनामज्ञानावृतत्वलक्षणमज्ञातत्वमपि न घटत इत्याह—**ताभिश्चेत्यादिना** । चोवधारणे । तथाच ताभिः प्रमाणवृत्तिभिरेवाज्ञाननाशनात्तासामज्ञातत्वमनुपपन्नमेवेति भावः । अत्र प्राचा त्वेवं व्याख्यातम्—नन्वत्रापि घटादिष्विव वृत्तिष्वपि ज्ञातताज्ञाततावभासकत्वेन कूटस्थः किं नेष्यत इत्याशंक्य तत्र ज्ञातताद्यभावादेवेत्याह— **ज्ञाततेति** । तत्रोपपत्तिमाह—**स्वस्येति** । ज्ञानाज्ञानव्याप्तिभ्यां ज्ञातताज्ञातते भवतः । वृत्तीनां स्वप्रकाशत्वेन ज्ञानव्याप्तिर्नास्ति । ताभिर्वृत्तिभिः स्वोत्पत्तिमात्रेण स्वगोचराज्ञानस्य निवर्तितत्वादज्ञानस्य व्याप्तिरपि नास्तीति भाव इति । अत्रायं भावः । वृत्तीनां प्रमाणरूपाणामपि स्वप्रकाशत्वं यद्यपि नैवास्त्यात्मभिन्नत्वेनास्वप्रकाशत्वरूपजडत्वस्य यावद्वैते व्याप्तत्वात्तथाऽपि निरुक्तवृत्तिस्तदीयं जडत्वविरोधिस्वप्रकाशत्वं स्वस्मिन्ननेकदर्पणादित्यदीप्तीनामित्युपक्रमोपन्यस्तादर्शदृष्टांतेनैव तदीयप्रतिबिंबनेन गृहीत्वा यथा निरुक्तादर्शाः सर्वे प्रायेण लोकदृष्ट्या सूर्यप्रतिबिंबतादात्म्येन क्षणं स्वप्रकाशा एव संपद्यमानाः सूर्यवद्दृष्टृचक्षूंष्यवमुष्णंतः सर्वतिमिरनिरासं तन्वते तथा तत्तदज्ञानध्वंसं तनोतीति समुचितमेव तत्र स्वप्रकाशत्वं बुभुत्सुदृष्ट्येति । तस्मात्तद्ग्रंथेन सहापि न कोऽपि वैमत्यगंधोपीति सहृदयधुरीणा एव विदां कुर्वंत्वित्यलं पल्लवितेन ॥ २३ ॥

**द्विगुणीकृतचैतन्ये जन्मनाशानुभूतितः ॥**
**अकूटस्थं तदन्यत्तु कूटस्थमविकारतः ॥ २४ ॥**

**रा० टीका**—ननु कूटस्थचिदाभासयोरुभयोरपि चित्त्वे समान एकस्य कूटस्थत्वमपरस्याकूटस्थत्वमित्येतत्कुत इत्याशंक्य चिदाभासनिष्ठयोर्जन्मनाशयोरनुभूयमानत्वादस्याकूटस्थत्वमपरस्य विकारित्वे प्रमाणाभावात्कूटस्थत्वमित्याह—**द्विगुणीति** ॥ २४ ॥

**अ० टीका**—नन्वेवं चिदाभाससाक्षिणो रुभयोरपि चैतन्ययोः स्वप्रकाशत्वसाम्येऽप्येकस्याकूटस्थत्वमपरस्य कूटस्थत्वमित्यत्र किं कारणमित्यत आह—**द्विगुणीकृतेति** । द्विगुणीकृतं प्रागुक्तरीत्या घटाद्यवच्छेदेन चैतन्यं येन स तथा तस्मिंश्चिदाभास इत्यर्थः । सुषुत्प्यवच्छेदेनाहंकाराख्यबुद्धिप्रमाणवृत्त्यभावाच्चिदाभासानुदयेन साक्षिचैतन्यमेकमेवास्ति स्वप्नाद्यवच्छेदेन तु निरुक्ताहंकारादिवृत्तिसत्त्वेन सहैव चिदाभासोदयात्तत्र द्विगुणीकृतचैतन्यत्वं स्पष्टमेवेति भावः । इदं हि परिकरांकुरालंकारसूचकं विशेष्यमेव निरुक्तव्युत्पत्त्या हेतुगर्भमिति ध्येयम् । **जन्मेति** । स्वप्नादौ जन्मानुभवात्सुप्त्यादौ नाशानुभवाच्चेति यावत् । तच्चिदाभासचैतन्यम् । अकूटस्थं विकारीत्यर्थः । एवं चिदाभासस्य विकारित्वे हेतुमुक्त्वा साक्षिणस्तदभावेऽपि तमाह—**तदन्यत्त्विति** । तुशब्दस्तद्वैलक्षण्यार्थः । अविकारितो भावप्रधानोऽयं निर्देशः । अविकारित्वादित्येतत् ॥ २४ ॥

**रा० टीका**—चिदाभासव्यतिरिक्तकूटस्थाभ्युपगमः स्वकपोलकल्पित इत्याशंक्याऽऽचार्यैः कूटस्थस्योपपादितत्वान्मैवमित्याह—

**अंतःकरणतद्वृत्तिसाक्षीत्यादावनेकधा ॥**
**कूटस्थ एव सर्वत्र पूर्वाचार्यैर्विनिश्चितः ॥ २५ ॥**

**अंतःकरणेति** । "अंतःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः । आनंदरूपः सत्यः **सन्** किं नाऽऽत्मानं प्रपद्यसे" इत्यादावित्यर्थः ॥ २५ ॥

**अ० टीका**—ननूक्तचिदाभासभिन्नकूटचैतन्यांगीकारोऽसांप्रदायिक इत्यत्राऽऽह—**अंतःकरणेति** । अंतःकरणं पूर्ववृत्त्युपरमे सति यावद्वृत्त्यंतरानुदयकालिकं निवातदेशगतपात्रस्थितजलवदसंजातपरिणतिकमपंचीकृतपंचमहाभूतसत्त्वांशकदंबकमित्यर्थः । तद्वृत्तयोऽहंकारादयः प्रसिद्धा एव । इदं हि **श्रीमद्भाष्यकारचरणानां बृहद्वाक्यवृत्तावेव** वाक्यम्—" **अंतःकरण**तद्वृत्तिसाक्षी चैतन्यविग्रहः । आनंदरूपः सत्यः सन्किंनाऽऽत्मानं प्रपद्यसे " इति । शिष्टं तु स्पष्टमेव ॥ २५ ॥

**रा० टीका**—कूटस्थातिरिक्तश्चिदाभासोऽपि तैर्वर्णित इत्याह—

**आत्माभासाश्च याश्चैवं मुखाभासाश्रया यथा ॥**
**गम्यंते शास्त्रयुक्तिभ्यामित्याभासश्च वर्णितः ॥ २६ ॥**

**आत्माभासेति** । आत्मा चाऽऽभासश्चाऽऽश्रयश्चाऽऽत्माभासाश्रयाश्चेति द्वंद्वः समासः। मुखाभासाश्रया इत्यत्रापि तथा । मुखं प्रसिद्धमाभासो मुखप्रतिबिंब आश्रयो दर्पणादिश्चेति त्रयं यथा प्रत्यक्षेणावगम्यत एवमात्मा कूटस्थ आभासश्चिदाभास आश्रयोंऽतःकरणादिरिति त्रयोऽपि शास्त्रयुक्तिभ्यामवगम्यंत इत्यर्थः । अत्र चाऽऽभासशब्देन कूटस्थातिरिक्तश्चिदाभासो वर्णित इति भावः । मनसः साक्षी बुद्धेः साक्षीति बुद्धिसाक्षिणः कूटस्थस्य प्रतिपादकं शास्त्रं **रूपं** रूपं प्रतिरूपो बभूवेति चिदाभासप्रतिपादकं विकारित्वाविकारित्वादिरूपा युक्तिः पूर्वमेवोक्तेति भावः ॥ २६ ॥

**अ० टीका**—ननु भवत्वेवं कूटस्थकथनमाचार्यकृतमथापि चिदाभासस्तु पारिभाषिक एवेत्यत आह—**आत्मेति** । आत्मा चाऽऽभासश्चाऽऽश्रय उक्तात्मप्रतिबिंबलक्षणश्चिदाभासाश्रयोंतःकरणादिश्चेति तथेत्यर्थः । **तथोपदेशसाहस्र्यां** तत्त्वमस्याख्येऽष्टादशे प्रकरणेऽयं श्लोकस्तैरेवोक्तः परं चरमचरणस्त्वेवं तत्रत्यः—आभासासत्त्वमेव चेति ॥ २६ ॥

**रा० टीका**—तत्र चिदाभासमाक्षिपति—

**बुद्ध्यवच्छिन्नकूटस्थो लोकांतरगमागमौ ॥**
**कर्तुं शक्तो घटाकाश इवाऽऽभासेन किं वद ॥ २७ ॥**

**बुद्धीति** । स्वस्मिन् कल्प्यमानया बुद्ध्याऽवच्छिन्नकूटस्थ एव घटद्वारा घटाकाश इव बुद्धिद्वारा लोकांतरे गमनागमने कर्तुं शक्नोत्यतश्चिदाभासकल्पनायां गौरवमिति भावः ॥२७॥

**अ० टीका**—एवमाभासस्यापि सांप्रदायिकत्वे सिद्धेऽत्रावच्छिन्नवादी भगव**द्वाचस्पति**मतानुयायी शंकते—**बुद्ध्यवच्छिन्नेति** । न च लोकांतरगमनादिकं केवलबुद्ध्यवच्छेदमात्रेण विना चिदाभासं न स्यादिति सांप्रतम् । उक्तापत्तेः प्रतिबिंबवादे ततः किंचिन्न्यून आभासवादेऽपि तुल्यत्वात्तत्र यद्युपाधिद्वारा तत्संभवस्तर्ह्यस्मिन्नपि पक्षे तस्यादंडाहतत्वाच्चेत्यभिप्रेत्याऽऽह—**लोकांतरेति** । तत्र श्रुतिं प्रमाणयन्दृष्टांतमपि स्पष्टयति—**घटाकाश इवेति**। तथाचाऽऽथर्वणिकाः समामनंति—" घटसंवृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाऽऽकाशस्तद्वज्जीवो नभोपमः " इति । उक्तवादमुपसंहरति—**आभासेनेत्यादिशेषेण** । अत्र विस्तारस्तु मदीयबोधैक्यसिद्ध्यादौ बोध्यः ॥ २७ ॥

**शृण्वसंगः परिच्छेदमात्राज्जीवो भवेन्न हि ॥**
**अन्यथा घटकुड्याद्यैरवच्छिन्नस्य जीवता ॥ २८ ॥**

**रा० टीका**—असंगस्य कूटस्थस्य बुद्ध्यवच्छेदमात्रेण जीवत्वं न घटतेऽन्यथाऽतिप्रसंगादिति परिहरति—**शृण्वसंग इति** ॥ २८ ॥

**अ० टीका**—अथ **श्रीमद्गितरणाचार्य**मतानुसारेण सिद्धांती समाधत्ते—शृण्वित्यादिना सामंत्रणम् । तत्रान्यथानुपपत्तिं प्रथयति—**अन्यथेति** ॥ २८ ॥

**रा० टीका**—बुद्धिकुड्ययोः स्वाच्छयास्वाच्छयाभ्यां वैषम्यं शंकते—

**न कुड्यसदृशी बुद्धिः स्वच्छत्वादिति चेत्तथा ॥**
**अस्तु नाम परिच्छेदे किं स्वाच्छयेन भवेत्तव ॥ २९ ॥**

नेति । उक्तं स्वच्छत्वं परिच्छेदप्रयोजकं न भवतीत्याह—**तथाऽस्त्विति** ॥ २९ ॥

**अ० टीका**—तव बुद्धेः स्वच्छत्वेन घटकुड्यादिवैषम्यं प्रतिवादी शंकते—**न कुड्येत्यादिना** । अथ सिद्धांत्येतदंगीकृत्य प्रकृते तावताऽपि तव नैव किंचित्फलं प्रत्युतानिष्टापत्तिरेवेति मन्यमानस्तं प्रत्याक्षिपति—**तथेत्यादिना** ॥ २९ ॥

**प्रस्थेन दारुजन्येन कांस्यजन्येन वा न हि ॥**
**विक्रेतुस्तंडुलादीनां परिमाणं विशिष्यते ॥ ३० ॥**

**रा० टीका**—उक्तमर्थं दृष्टांतेन स्पष्टयति—**प्रस्थेनेति** । दारुकांस्यजन्ययोः प्रस्थयोः स्थितं स्वच्छत्वास्वच्छत्वे तंडुलपरिमाणे न्यूनाधिकभावहेतू भवत इत्यर्थः ॥ ३० ॥

**अ० टीका**—ननु बुद्धेः स्वच्छत्वेनाऽऽत्मनः परिच्छेदे कुतो न विशेष इत्यत्राऽऽह—**प्रस्थेनेति** ॥ ३० ॥

**परिमाणाविशेषेऽपि प्रतिबिंबो विशिष्यते ॥**
**कांस्ये यदि तदा बुद्धावप्याभासो भवेद्बलात् ॥ ३१ ॥**

**रा० टीका**—कांस्यप्रस्थे तंडुलपरिमाणाधिक्याभावेऽपि प्रतिबिंबलक्षणमाधिक्यमस्तीत्याशंक्य तर्हि बुद्धावपि चिदाभासो भवतेवांगीकृतः स्यादित्याह—**परिमाणाविशेष इति** ॥ ३१ ॥

**अ० टीका**—एवं सिद्धांत्युक्तपरिणामाविशेषं प्रतिवाद्यंगीकृत्य कांस्यप्रस्थे स्वच्छत्वेन प्रतिबिंब एव स्वल्पतंडुलादीनां विशिष्यत इत्याह—**परिमाणेति** । एवं तर्हि सिद्धमाभासवादेनेति । सिद्धांत्यभिधत्ते—**यदीत्यादिशेषेण** । तत्रायं निष्कर्षः—

> " सौराल्लोको यथाऽयं प्रतिफलनवशादेव तत्कांततोऽग्निं
> कुर्यान्नैवेतरत्र प्रमितिकृदपि क्वापि तद्वत्परात्मा ।
> बुद्ध्यादौ बिंबितः सन्भवति मितिकरो नान्यतः सर्वगोऽपि
> त्याज्योऽवच्छेदवादस्तदिति बुधवरैर्ग्राह्य आभासवादः " इति ॥ ३१ ॥

**रा० टीका**—प्रतिबिंबांगीकारे चिदाभासः कथमंगीकृतः स्यादित्याशंक्य प्रतिबिंबाभासशब्दाभ्यामभिधेयस्यार्थस्यैक्यादित्याह—

**ईषद्भासनमाभासः प्रतिबिंबस्तथाविधः ॥**
**बिंबलक्षणहीनः सन् बिंबवद्भासते स हि ॥ ३२ ॥**

**ईषदिति।** प्रतिबिंबस्याऽऽभासत्वं कथमित्याशंक्याऽऽभासलक्षणयोगादित्याह—**बिंबलक्षणेति।** हि यस्मात्कारणात्प्रतिबिंबो बिंबलक्षणरहितो बिंबवदवभासतेऽतो बिंबाभास इति भावः ॥ ३२ ॥

**अ० टीका**—तत्र हेतुं वदन्विवरणवार्तिकयोः संमतप्रतिबिंबाभासवादयोः फलत ऐक्यं वक्तुं तयोः स्वरूपे व्युत्क्रमेण निर्वक्ति—**ईषदिति** ॥ ३२ ॥

**रा० टीका**—आभासलक्षणयोगित्वमेव स्पष्टयति—

**ससंगत्वविकाराभ्यां बिंबलक्षणहीनता ॥**
**स्फूर्तिरूपत्वमेतस्य बिंबवद्भासनं विदुः ॥ ३३ ॥**

**ससंगत्वेति।** एतस्य चिदाभासस्य ससंगत्वविकारित्वाभ्यां बिंबभूतासंगाविकारिचैतन्यलक्षणहीनत्वं स्फुरणरूपत्वं बिंबवदवभासनमित्यर्थः। हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासा इति वदित्यर्थः ॥ ३३ ॥

**अ० टीका**—तदुपपादयन्नुपसंहरति—**ससंगत्वेति।** विदुर्ग्रंथद्वयतात्पर्यैक्यदर्शिनः प्राचीनाचार्या इति शेषः। एतावत्प्रकरणक्रोडीकरणमुक्तं **बोधैक्यसिद्धौ।** नीरूपप्रतिबिंबोपपत्त्युपपादनोत्तरम्—" एवं कूटस्थदीपे गगनरविसमं प्राच्य कूटस्थमग्रे
जीवं स्वादर्शबिंबप्रभमथ किमतः प्राच्य एवास्तु जीवः।
इत्याशंक्योक्तमात्मा यदि भवति परिच्छेदमात्रेण जीवः
कुड्यादेर्जीवना स्याद्भ्रिमल्पमपि मनः कांस्यवत्तुच्छमेव " इति ॥ ३३ ॥

**रा० टीका**—इत्थं चिदाभासस्याप्रयोजकतां निराकृत्येदानीं तस्य बुद्धेः पृथक् सत्त्वं साधयितुं पूर्वपक्षमाह—

**न हि धीभावभावित्वादाभासोऽस्ति धियः पृथक् ॥**
**इति चेदल्पमेवोक्तं धीरप्येवं स्वदेहतः ॥ ३४ ॥**

**न हीति।** यथा मृदि सत्यामेव भवन्घटो न मृदो भिद्यते तद्वदिति भावः। नन्वेवं तर्हि देहातिरिक्ता धीरपि न सिध्येदिति प्रतिबंद्या परिहरति—**अल्पमिति** ॥ ३४ ॥

**अ० टीका**—अथ पुनरप्यवच्छिन्नवादी युक्त्यंतरेण शंकते—**न हीति।** उक्तशंकां सिद्धांती सानुवादमुपहासेनैव दूषयन्प्रतिबंद्या प्रत्याचष्टे—**इति चेदिति। स्वेति।** अहं ब्राह्मण इत्यध्यस्तात् ॥ ३४ ॥

**रा० टीका**—प्रतिबंदीमोचनं शंकते—

**देहे मृतेऽपि बुद्धिश्चेच्छास्त्रादस्ति तथा सति ॥**
**बुद्धेरन्यश्चिदाभासः प्रवेशश्रुतिषु श्रुतः ॥ ३५ ॥**

**देहे मृत इति।** देहव्यतिरिक्ताया बुद्धेः सविज्ञानो भवतीत्यादिश्रुतिसिद्धत्वान्नासत्त्वमिति भावः। ननु श्रुतिवशाद्देहातिरिक्ता बुद्धिरभ्युपगम्यते चेत्तर्हि प्रवेशश्रुतिबलाद्बुद्ध्यतिरिक्तश्चिदाभासोऽप्यभ्युपेय इत्याह—**तथा सतीति** ॥ ३५ ॥

**अ० टीका**—ततः स्वोक्तप्रान्तवदीमोचनं तदभिमतमाशंक्य तन्मोचनोपायेनैव पुनरप्याभासवादं स्थापयति—**देह इति** ॥ ३५ ॥

**रा० टीका**—ननु बुद्ध्युपाधिकस्यैव प्रवेशो युज्यते नेतरस्येति शंकते—

**धीयुक्तस्य प्रवेशश्चेन्नैतरेये धियः पृथक् ॥**
**आत्मा प्रवेशं संकल्प्य प्रविष्ट इति गीयते ॥ ३६ ॥**

**धीयुक्तस्येति ।** ऐतरेयश्रुतौ बुद्ध्यतिरिक्तस्यैव प्रवेशश्रवणान्मैवमिति परिहरति—**ऐतरेय इति** ॥ ३६ ॥

**अ० टीका**—ननु धीविशिष्टस्यैव सर्वप्रवेशश्रुतिष्वात्मनो देहादौ प्रवेशः शुद्धप्रवेशानुपपत्त्या कल्पनीय इति तदभिमतमनूद्य विदलयितुं प्रतिजानीते—**धीयुक्तस्येत्यादिना ।** तत्रैतरेयोपनिषद्गतप्रवेशश्रुत्यर्थं कथयन्हेतुं द्योतयति—**ऐतरेय** इत्यादिशेषेण ॥ ३६ ॥

**रा० टीका**—तां श्रुतिमर्थतः पठति—

**कथं न्विदं साक्षदेहं मद्दते स्यादितीरणात् ॥**
**विदार्य मूर्धसीमानं प्रविष्टः संसरत्ययम् ॥ ३७ ॥**

**कथं न्विति ।** अयं परमात्मा साक्षदेहमक्षाणि च देहाश्चाक्षदेहास्तैः सह वर्तत इति साक्षदेहमिदं जडजातं मद्दते चेतनं मां विहाय कथं नु स्यान्न कथमपि निर्वहेदिति विचार्य मूर्धसीमानं कपालत्रयमध्यदेशं विदार्य स्वसन्निधिमात्रेण भित्त्वा प्रविष्टः सन् संसरति जाग्रदादिकमनुभवतीत्यर्थः ॥ ३७ ॥

**अ० टीका**—ननु धीविधुरस्याऽऽत्मनः प्रवेशसंकल्पासंभवान्नैवं श्रुत्यर्थः संभवतीत्याशंक्य समाधातुं तामेव श्रुतिमर्थतः संग्रथ्य प्रागुक्तेर्थे हेतुं कथयति—**कथं न्विदमित्यर्धेन । स ईक्षत** कथं न्विदं मद्दते स्यादितीत्यैतरेये श्रूयते । **साक्षेति ।** अक्षाणि च देहाश्च तद्विशिष्टमित्यर्थः । एतादृशम् । इदं साक्षिणो मम प्रत्यक्षं सादिदृश्यमिति यावत् । मद्दते मां विना । कथं स्यान्मत्सत्तात्मकप्रकाशविरहे कथं व्यवहरेदित्यर्थः । कथं प्रविष्ट इति तदाह—**विदार्येति ।** एतदपि तत्रैव । स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेति । अत्र पूर्वार्धेन प्रवेशसंकल्पोऽन्येन प्रवेशश्च क्रमादुक्त इत्याशयः ॥ ३७ ॥

**रा० टीका**—नन्वसंगस्याऽऽत्मनः प्रवेशोऽप्ययुक्त इति शंकते—

**कथं प्रविष्टोऽसंगश्चेत्सृष्टिर्वाऽस्य कथं वद ॥**
**मायिकत्वं तयोस्तुल्यं विनाशश्च समस्तयोः ॥ ३८ ॥**

**कथं प्रविष्ट इति ।** इदं चोद्यं सृष्टावपि समानमित्याह—**सृष्टिरिति ।** सृष्टिकर्तुर्मायिकत्वान्न दोष इत्याशंक्यायं परिहारः प्रवेशेऽपि समान इत्याह—**मायिकत्वमिति ।** अनयोर्मायिकत्वे हेतुः समान इत्याह—**विनाश इति** ॥ ३८ ॥

**अ० टीका**—तत्र शंकते—**कथमित्यादिना ।** प्रतिबंद्या समाधत्ते—**सृष्टिर्वेत्यादिना ।** तत्र हेतुः—**मायिकत्वमिति ।** तयोः प्रवेशसृष्ट्योः ॥ ३८ ॥

**रा० टीका**—प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यौपाधिकरूपस्य विनाशित्वप्रतिपादिकां श्रुतिं दर्शयति—

**समुत्थायैष भूतेभ्यस्तान्येवानुविनश्यति ॥**
**विस्पष्टमिति मैत्रेय्यै याज्ञवल्क्य उवाच हि ॥ ३९ ॥**

**समुत्थायेति ।** एष प्रज्ञानघन आत्मा एतेभ्यो देहेंद्रियादिरूपेभ्यः पंचभूतकार्येभ्यो निमित्तभूतेभ्य उपाधिभ्यः समुत्थाय जीवत्वाभिमानं प्राप्य तान्येव देहादीनि विनश्यंत्यनुविनश्यति तेषु विनश्यत्सु तत्कृतं जीवत्वाभिमानं जहाति । एवंप्रकारेण सोपाधिकरूपस्य विनाशित्वं याज्ञवल्क्यो मैत्रेय्यै उवाचोक्तवानित्यर्थः ॥ ३९ ॥

**अ० टीका**—ननु चिदाभासस्य जीवस्य कथंविनाश इत्यत्राऽऽह—**समुत्थायेति ।** उवाच ह । **प्रज्ञानघन** एवैतेभ्यो भूतेभ्यः समुत्थाना(?)न्येवानु विनश्यतीति **श्रु**त्याऽवददित्यर्थः ॥ ३९ ॥

**रा० टीका**—**अविनाशी** वा अरेऽयमात्मानुच्छित्तिधर्मेति **श्रुत्या** कूटस्थस्ततो विभिन्नः प्रदर्शित इत्याह—

**अविनाश्ययमात्मेति कूटस्थः प्रविवेचितः ॥**
**मात्रासंसर्ग इत्येवमसंगत्वस्य कीर्तनात् ॥ ४० ॥**

**अविनाशीति ।** मात्रासंसर्गस्त्वस्य भवतीति श्रुत्याऽविनाशित्वे हेतुमसंगत्वं चोक्तवानित्याह—**मात्रेति ।** मीयंत इति मात्रा देहादयस्ताभिरस्याऽऽत्मनोऽसंसर्गो भवतीत्यर्थः ॥ ४० ॥

**अ० टीका**—एवमाभासे श्रुतिमुक्त्वा कूटस्थेऽप्याह—**अविनाशीति ।** अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेति । मात्रासंसर्गस्त्वस्य भवतीति च **काण्वमाध्यंदिनयोः** क्रमाच्छ्रुतिरेवम् ॥ ४० ॥

**रा० टीका**—ननु **जीवापेतं** वाव किलेदं **म्रियते** न जीवो म्रियत इति **श्रुत्याऽस्यौ**पाधिकस्याप्यविनाशित्वं प्रतिपाद्यत इत्याशंक्य तस्याः श्रुतेर्देहांतरप्राप्तिविषयतया नाऽऽत्यंतिकनाशाभावपरत्वमित्याह—

**जीवापेतं वाव किल शरीरं म्रियते न सः ॥**
**इत्यत्र न विमोक्षोऽर्थः किंतु लोकांतरे गतिः ॥ ४१ ॥**

**जीवापेतमिति ।** जीवापेतं जीवरहितं जीवेन त्यक्तमिति यावत् । वाव एव जीवो न म्रियत इत्यर्थः ॥ ४१ ॥

**अ० टीका**—एवं जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति तदीय**श्रुति**मप्याभासेऽनुकूलयति—**जीवेति** ॥ ४१ ॥

**रा० टीका**—ननु जीवस्य विनाशित्वेऽहं ब्रह्मास्मीत्यविनाशिब्रह्मतादात्म्यज्ञानं न घटत इति शंकते—

**नाहं ब्रह्मेति बुध्येत स विनाशीति चेन्न तत् ॥**
**सामानाधिकरण्यस्य बाधायामपि संभवात् ॥ ४२ ॥**

**नाहमिति ।** विनाशी स जीवोऽहं ब्रह्मेति ब्रह्मरूपेणाऽऽत्मानं न बुध्येत न जानीयाद्विनाश्यविनाशिनोरेकत्वविरोधादिति चेन्मुख्यसामानाधिकरण्याभावेऽपि बाधायां सामानाधिकरण्यसंभवाज्जीवभावबाधेन ब्रह्मभावोऽवगंतुं शक्यत इत्याह—**न तदिति** ॥ ४२ ॥

**अ० टीका**—एवमप्यभेदानु…तिमाशंक्य समाधत्ते—**नेति** ॥ ४२ ॥

**रा० टीका**—बाधासामानाधिकरण्येन वाक्यार्थप्रतिपत्तिप्रकारो **वार्तिककारैः** सदृष्टांतोऽभिहित इतीममर्थं तद्वाक्योदाहरण…र्वकं दर्शयति—

**योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ॥**
**ब्रह्मास्मीतिधिया शेषाऽप्यहंबुद्धिर्निवर्त्यते ॥ ४३ ॥**

**योऽयं स्थाणुरिति** । स्थाणुरेष पुमानित्यस्मिन्वाक्ये पुरुषत्वबोधेन स्थाणुत्वबुद्धिर्निवर्त्यते यथैवमहं ब्रह्मास्मीतिबोधेनाहंबुद्धिः कर्ताऽहमस्मीत्येवमादिरूपा सर्वाऽपि निवर्त्यत इति ॥ ४३ ॥

**अ० टीका**—नन्वस्तु बाधायां सामानाधिकरण्यसंभवः प्रतिज्ञामात्रेण वस्तुतस्त्वेकविभक्तिकत्वे सत्येकार्थप्रतिपादकत्वलक्षणस्य तस्य बाधायां कथं संभवो युक्तिसहः स्याद्यथाकथंचिद्युक्तिसहत्वेऽपि नैतत्सांप्रदायिकम् । सोऽयं देवदत्त इत्यादिनिदर्शनेन तत्त्वमस्यादिवाक्येष्वभेदसामानाधिकरण्यस्यैव सर्वपूर्वाचार्यैरुक्तत्वादित्याशंकां प्रशमयितुं **श्रीमत्सुरेश्वराचार्यचरण**वचनं **नैष्कर्म्यसिद्धि**द्वितीयाध्यायगतमुदाहृत्य तदुपपादयति—**योऽयमित्यादि**द्वाभ्याम् । **ब्रह्मास्मीति धियेति** । योऽयं स्थाणुस्त्वयोच्यत एष पुमानेवास्तीत्याप्तोपदिष्टवाक्यप्रमाणकपुंधिया यथा स्थाणुधीर्बाध्यते तद्वद्ब्रह्मास्मीति धियाऽशेषा समूलाऽप्यहंबुद्धिर्निवर्तत इत्यन्वयः । एवं च स्थाणुः पुरुष इति वाक्यस्थपदयोरुक्तलक्षणसामानाधिकरण्यवदहं ब्रह्मास्मीतिवाक्यस्थपदयोरपि सामानाधिकरण्यं ब्रह्मधिया मविषयकाहंधीबाधायां सत्यामेव पुरुषधिया स्थाणुधियो बाधायां सत्यामिव भवतीति भावः ॥ ४३ ॥

**नैष्कर्म्यसिद्धावप्येवमाचार्यैः स्पष्टमीरितम् ॥**
**सामानाधिकरण्यस्य बाधार्थत्वमतोऽस्तु तत् ॥ ४४ ॥**

**रा० टीका**—**नैष्कर्म्येति** । एवमुक्तेन प्रकारेणाऽऽचार्यैर्वार्तिककारैर्नैष्कर्म्यसिद्धौ सामानाधिकरण्यस्य बाधार्थत्वं स्पष्टमीरितमिति । फलितमाह—**अतोऽस्तु तदिति** । अतः कारणादृब्रह्माहमस्मीति वाक्ये तत्सामानाधिकरण्यस्य बाधार्थत्वमस्त्वित्यर्थः ॥ ४४ ॥

**अ० टीका**—**नैष्कर्म्येति** । आचार्यैरपि—" आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमप्याचरेद्यस्तु स आचार्य इति स्मृतः " इति**वचनो**क्तलक्षणैः श्रीवार्तिककारचरणैरपीत्यर्थः । अपिः स्वोक्तिसंमतिसमुच्चायकः । निगमयति-**अत इत्यादिशेषेण** । तन्मदुक्तं बाधायां सामानाधिकरण्यम् ॥ ४४ ॥

**सर्वं ब्रह्मेति जगता सामानाधिकरण्यवत् ॥**
**अहं ब्रह्मेति जीवेन सामानाधिकृतिर्भवेत् ॥ ४५ ॥**

**रा० टीका**—नन्वेवमपि श्रुतिषु बाधायां सामानाधिकरण्यं न क्वापि दृष्टमित्याशंक्य सर्वं ह्येतद्ब्रह्मेत्यत्र बाधायां सामानाधिकरण्यं दृष्टमतोऽत्रापि तद्भविष्यतीत्याह—**सर्वं ब्रह्मेतीति** ॥ ४५ ॥

**अ० टीका**—ननु भवत्वाभासवादि**वार्तिककार**मते तत्तथा **श्रीभगवत्पादाभिधभाष्यकार**मते तु नैतदिष्टमित्याकांक्षायाम् । **सर्वं** ह्येतद्ब्रह्मेति **मांडूक्यश्रुता**विदं सर्वं यदय-

मात्मेति काण्वश्रुतौ च गत्यंतरराहित्येन तेषामपि तदिष्टेरवश्यवाच्यत्वान्मैवमिति समाधत्ते—**सर्वं ब्रह्मेतीति** । बाधायामिति शेषः ॥ ४५ ॥

**सामानाधिकरण्यस्य बाधार्थत्वं निराकृतम् ॥**
**प्रयत्नतो विवरणे कूटस्थस्य विवक्षया ॥ ४६ ॥**

**रा० टीका**—ननु तर्हि विवरणाचार्यैर्बाधासामानाधिकरण्यं कुतो निराकृतमित्याशंक्य तैरहंशब्देन कूटस्थस्य विवक्षितत्वादित्याह—**सामानाधिकरण्यस्येति** ॥ ४६ ॥

**अ० टीका**—नन्वेवमपि विवरणग्रंथविरोधस्तदवस्थ एव तत्र हि महता प्रबंधेन सामानाधिकरण्यस्य बाधार्थत्वं प्रयत्नत एव निराकृतमिति चेन्न । अहं ब्रह्मास्मीतिवाक्ये विवरणाचार्याणामहंपदार्थे शोधितजीवे साक्षित्वोपलक्षिते प्रतीचि कूटस्थत्वस्यैव विवक्षितत्वात्प्रतिबिंबवादिनां तेषां तथात्वस्यैवोचितत्वादाभासप्रतिबिंबवादयोरविरोधस्य त्रयस्त्रिंशच्छ्लोक एव साधितत्वाच्चेति सूचयन्नाह—**सामानाधिकरण्यस्येति** । अक्षरार्थस्तु स्फुट एव ॥ ४६ ॥

**रा० टीका**—कूटस्थत्वविवक्षयेत्युक्तमर्थं विवृणोति—

**शोधितस्त्वंपदार्थो यः कूटस्थो ब्रह्मरूपताम् ॥**
**तस्य वक्तुं विवरणे तथोक्तमितरत्र च ॥ ४७ ॥**

**शोधित इति** । शोधितो बुद्ध्यादिभ्यो विवेचितस्त्वंपदलक्ष्यो यः कूटस्थो वक्ष्यमाणलक्षणस्तस्य ब्रह्मरूपतां सत्यत्वादिलक्षणब्रह्मरूपतां वक्तुं विवरणादिषु बाधासामानाधिकरण्यनिराकरणपूर्वकं मुख्यसामानाधिकरण्यमुक्तमित्यर्थः ॥ ४७ ॥

**अ० टीका**—तदेव विशदयन्नुक्ताविरोधप्रकारं भामत्यादिग्रंथांतरेऽप्यतिदिशति—**शोधित इति** ॥ ४७ ॥

**रा० टीका**—इदानीं कूटस्थस्य ब्रह्मणैक्यं संभावयितुं कूटस्थशब्देन विवक्षितमर्थमाह—

**देहेंद्रियादियुक्तस्य जीवाभासभ्रमस्य या ॥**
**अधिष्ठानचितिः सैषा कूटस्थाऽत्र विवक्षिता ॥ ४८ ॥**

**देहेति** । आदिशब्देन मनआदयो गृह्यंते । एवं च देहेंद्रियादियुक्तस्य शरीरद्वययुक्तस्य जीवाभासभ्रमस्य चिदाभासरूपभ्रमस्य याऽधिष्ठानचितिर्यदधिष्ठानचैतन्यमस्ति तदत्र वेदांतेषु कूटस्थत्वेन विवक्षितमित्यर्थः ॥ ४८ ॥

**अ० टीका**—ननु भवत्वेवं मताविरोधस्तथाऽपि प्रकृतेऽत्राऽऽभासवादे तु कूटस्थशब्देन ब्रह्मशब्देन च कीदृग्वस्तु विवक्षितमित्यत्राऽऽह—**देहेंद्रियेत्यादि** क्रमाद्द्वाभ्याम् ॥ ४८ ॥

**रा० टीका**—ब्रह्मशब्दस्य चार्थमाह—

**जगद्भ्रमस्य सर्वस्य यदधिष्ठानमीरितम् ॥**
**त्रय्यंतेषु तदत्र स्याद्ब्रह्मशब्दाविवक्षितम् ॥ ४९ ॥**

**जगदिति** । कृत्स्नजगत्कल्पनाधिष्ठानं यच्चैतन्यं वेदांतेषु निरूपितं तदत्र ब्रह्मशब्देन विवक्षितमित्यर्थः ॥ ४९ ॥

**अ० टीका**—जगद्भ्रमस्येति । त्र्यंतेष्वित्युपलक्षणं यावच्छारीरकविचारितोपनिषदामपि । तदविचारितानां तु तासां तदीरितविचारदिशैव चारितार्थ्यमिति दिक् ॥ ४९ ॥

**रा० टीका**—ननु जीवभ्रमाधिष्ठानं चैतन्यं कूटस्थ इत्युक्तमनुपपन्नं जीवस्याऽऽरोपितत्वासिद्धेरित्याशंक्य तस्याऽऽरोपितत्वं कैमुतिकन्यायेन साधयति—

**एतस्मिन्नेव चैतन्ये जगदारोप्यते यदा ॥**
**तदा तदेकदेशस्य जीवाभासस्य का कथा ॥ ५० ॥**

**एतस्मिन्निति ।** जगदेकदेशत्वं चानेन जीवेनानुप्रविश्येत्यादिश्रुतिसिद्धम् ॥ ५० ॥

**अ० टीका**—ननु वस्तुत एवमपि तत्त्वमसीत्यादिनोक्तं चिदैक्यं नोपपद्यते तत्तदारोप्य भेदादित्याशंक्य समाधत्ते—**एतस्मिन्नेवेति ।** प्रागुक्ते ब्रह्मचैतन्य इत्यर्थः ॥ ५० ॥

**रा० टीका**—ननु जगदधिष्ठानचैतन्यस्यैकत्वात्तत्त्वंपदार्थयोर्भेदाभावे तत्त्वंपदार्थयोः पौनरुक्त्यामित्याशंक्य तयोरौपाधिको भेदो वास्तवमैक्यमित्याह—

**जगत्तदेकदेशाख्यं समारोप्यस्य भेदतः ॥**
**तत्त्वंपदार्थौ भिन्नौ स्तो वस्तुतस्त्वेकता चितेः ॥ ५१ ॥**

**जगदिति ।** जगत्तदेकदेश इति चाऽऽख्या यस्य समारोप्यस्य तत्तथा । जातावेकवचनम् ॥ ५१ ॥

**अ० टीका**—फलितमाह—**जगदिति** ॥ ५१ ॥

**रा० टीका**—ननु चिदाभासस्य शुक्तिकारजतादिवदधिष्ठानारोप्योभयधर्मवत्त्वानुपलंभात्कथमारोपितत्वमित्याशंक्याऽऽह—

**कर्तृत्वादीन्बुद्धिधर्मान्स्फूर्त्याख्यां चाऽऽत्मरूपताम् ॥**
**दधद्विभाति पुरत आभासोऽतो भ्रमो भवेत् ॥ ५२ ॥**

**कर्तृत्वादीनिति ।** बुद्ध्युपाधिद्वारा समारोप्यमाणान्कर्तृत्वभोक्तृत्वप्रमातृत्वादीन्स्फुरणलक्षणमात्मरूपत्वं च दधत्पुरतो भाति स्पष्टं प्रतिभासतेऽत आभासः कल्पित इत्यर्थः ॥५२॥

**अ० टीका**—नन्वेवं जगदेकदेशीभूतस्य चिदाभासरूपजीवस्याऽऽरोप्यत्वलक्षणमध्यस्तत्त्वमुक्तमनुपपन्नम् । तत्र सत्यानृतवस्तुसंभेदावभासानुपपत्तेरित्यत्राऽऽह—**कर्तृत्वादीनिति ।** पुरत इत्यनेन तस्य साक्षिप्रत्यक्षत्वं सूच्यते ॥ ५२ ॥

**रा० टीका**—अस्य भ्रमस्य किं कारणमित्याकांक्षायां बुद्ध्यादिस्वरूपापरिज्ञानमेवेत्याह—

**का बुद्धिः कोऽयमाभासः को वाऽऽत्माऽत्र जगत्कथम् ॥**
**इत्यनिर्णयतो मोहः सोऽयं संसार इष्यते ॥ ५३ ॥**

**का बुद्धिरिति ।** तस्य निवर्तनीयत्वायानर्थहेतुतामाह—**सोऽयमिति** ॥ ५३ ॥

**अ० टीका**—नन्वेवमप्यस्यानुभूयमानः संसारः किं मूलक इत्यत आह—**का बुद्धिरिति** ॥ ५३ ॥

**बुद्ध्यादीनां स्वरूपं यो विविनक्ति स तत्त्ववित् ॥**
**स एव मुक्त इत्येवं वेदांतेषु विनिश्चयः ॥ ५४ ॥**

**रा० टी०**—अस्य किं निवर्तकमित्याकांक्षायां बुद्ध्यादिस्वरूपविवेक एव निवर्तक इत्यभिप्रेत्य तद्वानेव ज्ञानी तत एवानर्थनिवृत्तिरित्याह—**बुद्ध्यादीनामिति** ॥ ९४ ॥

**अ०टीका**—एवं तर्हि कथमस्य संसारस्य निरास इत्यपेक्षायां तदुपायं संक्षिपति—**बुद्ध्यादीनामिति** ॥ ९४ ॥

**एवं च सति बंधः स्यात्कस्येत्यादिकुतर्कजाः ॥**
**विडंबना दृढं खंड्याः खंडनोक्तिप्रकारतः ॥ ९५ ॥**

**रा० टी०**—एवं बंधमोक्षयोरविवेकमूलत्वे सत्यद्वैतवादे कस्य बंधः कस्य वा मोक्ष इत्येवमादिरूपास्तार्किकैः क्रियमाणाः कुतर्कमूलाः परिहासविशेषाः खंडनोक्तयुक्तिभिस्तेषां निरुक्तत्वापादनेन परिहरणीया इत्याह—**एवमिति** ॥ ९९ ॥

**अ० टीका**—नन्वेवमप्याभासः सत्यमिथ्यावस्तुद्वयसंमेलनात्मेति तु निर्विवादमेव । तथात्वे तस्य सत्यांशात्मना सत्यत्वान्न साकल्येन मिथ्यात्वं स्यात्ततश्च प्रतिबिंबवादापत्तिस्तत्परिहृत्यर्थम् ।

" अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु ।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्वचंद्रैकताप्रभृतिकानुपलंभनेन "

इति **संक्षेपशारीरको**क्तरीत्या स्वावच्छेदेन भासमानां स्फूर्तिमपि मिथ्याभूतामेवांगीकरोषि चे**दध्यासभाष्ये** सत्यानृते मिथुनीकृत्येति सूचिताध्यासलक्षणविरोधापत्तिश्चेत्यंतेवास्याशंकां शमयिष्यन्न**द्वैतवादे** बंधस्यैवाभावात्कस्य तत्त्वज्ञानद्वारा मोक्षार्थं शास्त्रमारंभणीयं स्यादित्यादि**कुतार्किक**कृतोपहासाः **श्रीहर्षमिश्राख्य**खंडनकारोक्तयुक्तिभिरेव निराकरणीया इत्याह—**एवं चेति** । तत्राद्वैतवाद इत्यादि वदन्प्रतिवाद्येवं पराकरणीयः । यस्त्वं पृच्छसीति । कुत इति चेद्यतस्त्वद्दृष्ट्यैव प्रश्नान्यथानुपपत्त्या द्वैतं भासते । मद्दृष्ट्या तु " न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपंचः । स्वरूपावबोधो विकल्पासहिष्णुस्तदेकोऽवशिष्टः शिवः केवलोऽहम् " इति **दशश्लोक्या**शय एवेति । विस्तरस्तु खंडन एवेति ॥ ९९ ॥

**वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः ॥**
**बुभुत्सायां तथाऽज्ञोऽस्मीत्याभासाज्ञानवस्तुनः ॥ ९६ ॥**

**रा० टी०**—एवं श्रुतियुक्तिभ्यां कूटस्थं बुद्ध्यादिभ्यो विविच्य दर्शयित्वा पुराणेष्वपि तद्विवेकः कृत इत्याह—**वृत्तेरित्यादि**श्लोकत्रयेण । कामादिवृत्त्युत्पत्तौ सत्यां तत्साक्षित्वेन वृत्त्युदयात्पूर्वं तत्प्रागभावसाक्षित्वेन जिज्ञासायां सत्यां तत्साक्षित्वेन ततः पूर्वमज्ञोऽस्मीत्यनुभूयमानाज्ञानसाक्षित्वेन च शिव एव तिष्ठति ॥ ९६ ॥

**अ० टीका**—न केवलमयं कूटस्थः श्रुत्यादिष्वेव सिद्धः किंतु **पुराणे**ष्वपि प्रसिद्ध इति द्योतयितुं **शैवपुराण**गानेव त्रीन्श्लोकान्संगृह्णाति—**वृत्तेरित्यादिना** । **वृत्तीति** । अत्र वृत्तिप्रागभावपदेन तदुपलक्षितं वृत्त्युपादानमंतःकरणमेव । अज्ञोऽस्मीति च्छेदः । इत्यनुभव इत्यर्थः । **आभासेति** । आभासविशिष्टं यदज्ञानाख्यं वस्तु विषयतासंबंधेन भासमानं तस्येत्यर्थः । साक्षितयेति सर्वत्र संबध्यते ॥ ९६ ॥

**असत्यालंबनत्वेन सत्यः सर्वजडस्य तु ॥**
**साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ॥ ५७ ॥**

**रा० टी०**—स चासत्यस्य जगत आलंबनत्वेनाधिष्ठानत्वेन सत्यो जडस्य सर्वस्य साधकत्वेनावभासकत्वाच्चिद्रूपः सर्वदा प्रेमविषयत्वादानंदरूपः ॥ ५७ ॥

**अ० टीका**—असत्येति । सदा प्रेमेत्याद्युत्तरान्वयि ॥ ५७ ॥

**आनंदरूपः सर्वार्थसाधकत्वेन हेतुना ॥**
**सर्वसंबंधवत्त्वेन संपूर्णः शिवसंज्ञितः ॥ ५८ ॥**

**रा० टीका**—सर्वार्थावभासकत्वेन सर्वसंबंधित्वात्संपूर्ण इत्युच्यते । अत्र चेदमभिप्रेतं विमतः शिवो वृत्त्यादिभ्यो भिद्यते । वृत्त्यादिसाक्षित्वाद्यद्यद्वृत्त्यादिभ्यो न भिद्यते तत्तद्वृत्त्यादिसाक्षि न भवति । यथा वृत्त्यादि । विमतः सत्यो भवितुमर्हति मिथ्याधिष्ठानत्वादसत्यरजताधिष्ठानशुक्तिवत् । विमतश्चिद्रूपो जडमात्रावभासकत्वाद्यच्चिद्रूपं न भवति तत्सर्वं जडावभासकमपि न भवति यथा घटादि । विमतः परमानंदरूपः परप्रेमास्पदत्वात् । यत्परमानंदरूपं न भवति तत्परप्रेमास्पदमपि न भवति यथा घटादि । विमतः परिपूर्णः सर्वसंबंधित्वाद्गगनवत् । सर्वसंबंधित्वं च सर्वार्थसाधकत्वेन विमतः । सर्वसंबंधवान्सर्वावभासकत्वात् । यः सर्वसंबंधवान् न भवति स सर्वावभासकोऽपि न भवति यथा दीपादिरिति ॥ ५८ ॥

**अ० टीका**—आनंदेति । अत एवोक्तं संक्षेपशारीरकारंभ एव—" अनृतजडविरोधिरूपमंतत्रयमलबंधनदुःखिताविरुद्धम् " इत्यादि ॥ ५८ ॥

**रा० टीका**—उदाहृतपुराणवाक्यस्य तात्पर्यमाह—

**इति शैवपुराणेषु कूटस्थः प्रविवेचितः ॥**
**जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः ॥ ५९ ॥**

**इतीति** । इत्येवंप्रकारेण सूतसंहितादिषु । पुराणेषु जीवेश्वरत्वादिकल्पनारहितः केवलोऽद्वितीयः स्वप्रभः स्वयंप्रकाशश्चैतन्यरूपः शिवः कूटस्थो विवेचित इत्यन्वयः ॥५९॥

**अ० टीका**—उक्तमर्थं निगमयति—इतीति । शैवेति । शिवस्येमानि तत्प्राधान्यप्रतिपादकत्वादेतादृशानि यानि स्कांदसूतसंहितावायुपुराणादीनि तेषु । इतीत्याद्युपसंहारार्थम् ॥ ५९ ॥

**रा० टीका**—जीवेशत्वादिरहितत्वं कुत इत्याशंक्य श्रुत्या तयोर्मायिकत्वप्रदर्शनादित्याह—

**मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ॥**
**मायिकावेव जीवेशौ स्वच्छौ तौ काचकुंभवत् ॥ ६० ॥**

**मायेति** । जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिर्मायाविद्याधीनयोश्चिदाभासयोर्मायिकत्वं प्रतिपादयतीति भावः । मायिकत्वे तयोर्देहादिभ्यो वैलक्षण्यं न स्यादित्याशंक्य पार्थिवत्वाविशेषेऽपि काचकुंभस्य घटादिभ्यो वैलक्षण्यमिवानयोरपि स्यादित्याह—**स्वच्छाविति** ॥ ६० ॥

**अ० टीका**—जीवेशत्वादिराहित्ये हेतुः—**मायेति** ॥ ६० ॥

**अन्नजन्यं मनो देहात्स्वच्छं यद्वत्तथैव तौ ॥**
**मायिकावपि सर्वस्मादन्यस्मात्स्वच्छतां गतौ ॥ ६१ ॥**

**रा० टीका**—ननु घटकाचकुंभारंभकयोर्मृद्विशेषयोर्भेदात्तद्वैलक्षण्यमुचितं जगज्जीवेश्वरभेदहेतोर्मायाया एकत्वात्तयोर्जगतो वैलक्षण्यमनुचितमित्याशंक्यान्नजन्ययोर्देहमनसोर्यथा वैलक्षण्यं तद्वदित्याह—**अन्येति** ॥ ६१ ॥

**अ० टीका**—ननु मायिकयोस्तयोरनादित्वेन भासमानयोरपि कथं स्वच्छत्वमित्यत आह—**अन्नेति** । "अन्नमयꣳ हि सोम्य मनः" इति **छांदोग्यश्रुते**रन्नान्वयादिपरिपुष्टमित्यर्थः ॥ ६१ ॥

**रा० टीका**—भवतु काचादिवत्स्वच्छत्वं चित्त्वं तु कुत इत्याशंक्यानुभवादित्याह-

**चिद्रूपत्वं च संभाव्यं चित्त्वेनैव प्रकाशनात् ॥**
**सर्वकल्पनशक्ताया मायाया दुष्करं न हि ॥ ६२ ॥**

**चिद्रूपेति** । चिद्रूपत्वेन प्रकाशनमपि मायिकयोरनुपपन्नमित्याशंक्य तस्या दुर्घटकारित्वादुपपन्नमित्याह—**सर्वेति** ॥ ६२ ॥

**अ० टीका**—नन्वेवमपि कथं तयोश्चिद्रूपत्वमित्यत्राऽऽह—**चिद्रूपत्वं त्विति** । तत्रापि हेतुः—**सर्वेति** ॥ ६२ ॥

**अस्मन्निद्राऽपि जीवेशौ चेतनौ स्वप्नगौ सृजेत् ॥**
**महामाया सृजत्येतावित्याश्चर्यं किमत्र ते ॥ ६३ ॥**

**रा० टीका**—उक्तमर्थं कैमुतिकन्यायेन द्रढयति—**अस्मदिति** ॥ ६३ ॥

**अ० टीका**—तदुपपादयति—**अस्मदिति** ॥ ६३ ॥

**रा० टीका**—ईश्वरस्यापि मायिकत्वे तस्य जीववदसर्वज्ञत्वादिकं स्यादित्याशंक्य सर्वज्ञत्वादिकमपि मायैव कल्पयिष्यतीत्याह—

**सर्वज्ञत्वादिकं चेशे कल्पयित्वा प्रदर्शयेत् ॥**
**धर्मिणं कल्पयेद्याऽस्याः को भारो धर्मकल्पने ॥ ६४ ॥**

**सर्वज्ञत्वेति** । तत्रोपपत्तिमाह—**धर्मिणमिति** ॥ ६४ ॥

**अ० टीका**—नन्वेवं यदि मायैवेश्वरकल्पिका तर्ह्यसौ जीववत्तद्व्यामोहिकाऽपि स्यादित्यत आह—**सर्वज्ञत्वादिकं चेति** । आदिना सर्वशक्तित्वम् । चः पूर्वोक्तसमुच्चायकः । ननु माया च तमोरूपेत्यादिश्रुतेरावरणस्वभावायास्तस्या ईशे सर्वज्ञत्वादिकल्पनं कथं घटत इत्यत्राऽऽह—**धर्मिणमिति** ॥ ६४ ॥

**रा० टीका**—ननु जीवेशयोरिव कूटस्थस्यापि मायिकत्वं प्रसज्येतेति शंकते—

**कूटस्थेऽप्यतिशंका स्यादिति चेन्माऽतिशंक्यताम् ॥**
**कूटस्थमायिकत्वे तु प्रमाणं न हि विद्यते ॥ ६५ ॥**

**कूटस्थ इति** । प्रामाणाभावान्मैवमिति परिहरति—**माऽतिशंक्यतामिति** ॥ ६५ ॥

**अ० टीका**—न चैवं तर्हि कूटस्थमपि सैव कल्पयेदिति वाच्यम् । प्रामाणाभावा-

ज्जीवादिकल्पने तु श्रुतेरेवोक्तत्वाच्चेत्याह—कूटस्थेऽपीति । हिरवधारणे । नैव प्रमाणं विद्यत इत्यन्वयः ॥ ६५ ॥

**वस्तुत्वं घोषयंत्यस्य वेदांताः सकला अपि ॥**
**सपत्नरूपं वस्त्वन्यन्न सहंतेऽत्र किंचन ॥ ६६ ॥**

**रा० टीका**—कूटस्थस्य वास्तवत्वेऽपि प्रमाणं नोपलभ्यत इत्याशंक्य श्रुतयः सर्वा अपि प्रमाणमित्याह—**वस्तुत्वमिति ।** अत्र कूटस्थस्य पारमार्थिकत्वे प्रतिपक्षभूतमन्यद्वस्तु किंचन न सहंत इत्यर्थः ॥ ६६ ॥

**अ० टीका**—प्रत्युत सकल वेदांतैस्तस्य पारमार्थिकसत्यत्वमेव तद्भिन्नं यावद्दृश्यबाधपूर्वकमुपपाद्यत इत्याह—**वस्तुत्वमिति । सपत्नेति ।** कूटस्थयाथार्थ्यसमर्थनशत्रुभूतमित्यर्थः ६६

**श्रुत्यर्थं विशदीकुर्मो न तर्काद्वच्मि किंचन ॥**
**तेन तार्किकशंकानामत्र कोऽवसरो वद ॥ ६७ ॥**

**रा० टीका**—ननु कूटस्थस्य जीवेशयोश्च वास्तवत्वावास्तवत्वसाधने श्रुतय एव पठ्यंते न तर्कैः किंचिदपि साध्यत इत्याशंक्य मुमुक्षूणां श्रुत्यर्थविशदीकरणाय प्रवृत्तत्वान्न तर्कोपन्यास इत्याह—**श्रुत्यर्थमिति** ॥ ६७ ॥

**अ० टीका**—नन्वद्वैतकूटस्थबोधनविरोधि किमपि द्वैतमसहंतः संत एव सर्वेऽपि वेदांतास्तं तथा मुमुक्षून्प्रति बोधयन्तीत्युक्तमयुक्तम् । निरुक्तबोधनस्यैव गुरुशिष्यादिद्वैतसापेक्षत्वाद्बोधनोर्ध्वमपि बोध्यं प्रति यावदारब्धं जीवन्मुक्तिपक्षे द्वैतावस्थानाच्छुकादीनां मुक्तावप्यस्मदादीनां सुस्थिरद्वैतोपलंभाच्चेत्याशंक्य समाधत्ते—**श्रुत्यर्थमिति** । तर्कात्किंचन किमपि वस्तु वयं यतो नैव विशदीकुर्म इति संबंधः । अत्र वच्मीत्यपपाठ एव ॥ ६७ ॥

**रा० टीका**—ततः किमित्यत आह—

**तस्मात्कुतर्कं संत्यज्य मुमुक्षुः श्रुतिमाश्रयेत् ॥**
**श्रुतौ तु माया जीवेशौ करोतीति प्रदर्शितम् ॥ ६८ ॥**

**तस्मादिति ।** मुमुक्षूणां श्रुत्यर्थः कीदृशोऽनुसंधेय इत्याह—**श्रुतावित्यादिना ।** श्रुतिषु जीवेशयोर्मायिकत्वम् ॥ ६८ ॥

**अ०टीका**—अस्त्वेवं प्रतिवादिनं प्रति समाधानं मुमुक्षुं प्रति तत्कथं तत्राऽऽह—**तस्मादित्यादिना** ॥ ६८ ॥

**ईक्षणादिप्रवेशांता सृष्टिरीशकृता भवेत् ॥**
**जाग्रदादिविमोक्षांतः संसारो जीवकर्तृकः ॥ ६९ ॥**

**रा० टीका**—ईक्षणादिप्रवेशांतायाः सृष्टेरीश्वरकर्तृत्वं जाग्रत्स्वप्नसुषुप्तिबंधमोक्षलक्षणस्य संसारस्य जीवकर्तृत्वम् ॥ ६९ ॥

**अ० टीका**—**ईक्षणादीति** । उक्तार्थमेवेदं प्राक् ॥ ६९ ॥

**असंग एव कूटस्थः सर्वदा नास्य कश्चन ॥**
**भवत्यतिशयस्तेन मनस्येवं विचार्यताम् ॥ ७० ॥**

---

१ द्वस्त्विवत्यच्युतरायपाठः ।

**रा० टीका**—कूटस्थस्यासंगत्वादिकं मृतिजन्मादिलक्षणस्य व्यवहारजातस्यासत्त्वं च प्रतिपादितमतो मुमुक्षुरिममर्थं सर्वदा विचारयेदित्यभिप्रायः ॥ ७० ॥

**अ० टीका**–**असंग एवेति** । भवत्यतिशय इत्यंतं श्रुतौ तूक्तमिति योजना । फलितमाह–**तेनेत्यादिशेषेण** ॥ ७० ॥

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ७१ ॥**

**रा० टीका**—कूटस्थस्य जन्माद्यतिशयाभावः कुतोऽवगम्यत इत्याशंक्य श्रुतिवाक्यादित्यभिप्रेत्य तद्वाक्यं पठति—**न निरोध इति** ॥ ७१ ॥

**अ० टीका**—किं विचार्यं तदाह–**नेत्यादि श्रुत्यैव** ॥ ७१ ॥

**अवाङ्मनसगम्यं तं श्रुतिर्बोधयितुं सदा ॥**
**जीवमीशं जगद्वाऽपि समाश्रित्य प्रबोधयेत् ॥ ७२ ॥**

**रा० टीका**—ननु तर्हि श्रुतिषु तत्र तत्र जीवेश्वरादिस्वरूपप्रतिपादनं किमर्थमित्याशंक्यावाङ्मनसगोचरस्याऽऽत्मनोऽवबोधनायेत्याह—**अवाङ्मनस इति** ॥ ७२ ॥

**अ० टीका**–एवं चेत्तर्हि तयैव जीवादि किमित्युक्तमित्यत आह–**अवाङ्मनसेति**। तमुक्तरूपं कूटस्थम् । प्रेति प्रबोधयतीत्यर्थः ॥ ७२ ॥

**यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ॥**
**सा सैव प्रक्रियेह स्यात्साध्वीत्याचार्यभाषितम् ॥ ७३ ॥**

**रा० टीका**—ननु तत्त्वस्यैकरूपस्य श्रुतिबोध्यत्वे श्रुतिषु विगानं कुतो दृश्यत इत्याशंक्य न तत्त्वे विगानमस्ति, अपि तु तद्बोधनप्रकारे तदपि बोध्यपुरुषचित्तवैषम्यानुसारेण **सुरेश्वराचार्यै**रुक्तमित्याह—**यया ययेति** ॥ ७३ ॥

**अ० टीका**—ननु श्रुतिर्यद्यवाङ्मनसगम्यं कूटस्थमेव पारमार्थिकत्वेन प्रबोधयितुं जीवादिद्वैतं समाश्रयति चेदस्तु नाम तच्छाखाचंद्रन्यायेन तथा परंतु श्रुत्यैव तदैकरूप्यं कुतो नोच्यते । तथा हि । जीवेशावाभासेन करोतीत्यत्राऽऽभासवादः । यथा हि " अयं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भिन्नरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा " इति । " एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचंद्रवत् " इति । " रूपं रूपं प्रतिरूपो बभूव " इत्यादौ च प्रतिबिंबवादः । " घटसंवृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाऽऽकाशस्तद्वज्जीवो नभोपमः " इत्यत्रावच्छिन्नवादः । इत्याद्यनेकवाक्यात्मना श्रुतिरेवानेकधा विगायति तन्मुमुक्षुणा किं मतमवलंबनीयं किं वा हेयमिति चेन्न । जीवबुद्धीनां विविधसंस्कारावरुद्धत्वेन तत्तन्मुमुक्षुबुद्धिमनुरुध्य तत्तद्वादस्य श्रुत्योक्तत्वादिति श्रुतितात्पर्यं **श्रीमत्सुरेश्वराचार्य**चरणैरेव वर्णितमिति द्योतयितुं **तद्वार्तिकमेव** पठन्समाधत्ते—**यया ययेति** । पुंसां मुमुक्षूणाम् । यया यया प्रक्रिययेति शेषः। **प्रत्यगिति** । प्रतिद्वैतस्य प्रतिरोधेनैवांचति यथावत्प्रकाशत इति प्रत्यक्स चा सावात्मा च

" यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य संततो भावस्तस्मादात्मेति भण्यते "

इति वचनात्साक्षित्वोपलक्षितः कूटस्थस्तस्मिञ्शोधितत्वंपदार्थाभिन्ने शोधिततत्पदार्थरूपाद्वैतब्रह्मणि विषय इत्यर्थः । व्युत्पत्तिर्दृढा परोक्षप्रमया परिचितिरिति यावत् । सा सैव प्रक्रिया । इहाद्वैतशास्त्रे । साध्वी तं तमधिकारिणं प्रत्युपकारिणीत्यर्थः । इति एवम् । आचार्यभाषितं श्रीमद्वार्तिकाचार्यचरणनिर्णीतमस्तीत्यर्थः । तस्मादत्र न कोऽपि प्रक्रियाभेदयुक्तदोषलेशोऽपीत्याशयः ॥ ७३ ॥

**श्रुतितात्पर्यमखिलमबुद्ध्वा भ्राम्यते जडः ॥**
**विवेकी त्वखिलं बुद्ध्वा तिष्ठत्यानन्दवारिधौ ॥ ७४ ॥**

**रा० टीका**—श्रुत्यर्थस्यैकरूपत्वे तत्प्रतिपादकानामेव कुतो विप्रतिपत्तिरित्याशंक्य श्रुतितात्पर्यबोधशून्यानामेव विप्रतिपत्तिर्न तु तद्विदामित्याह—**श्रुतितात्पर्यमिति** ॥ ७४ ॥

**अ० टीका**—नन्वेवं श्रुत्यर्थस्यैकरूप्येऽपि तत्प्रामाण्यवादिनामपि यावद्द्वैतिनां कुतोऽत्र वैमत्यमित्यत आह—**श्रुतीति** । एवं च तेषां जन्मांतरीयदूरदृष्टप्रयुक्तमतिजाड्यमेव संपूर्णश्रुतितात्पर्यानवबोधने ततः संसारचक्रवंभ्रमणे च कारणमित्याकूतम् । तेनानंतजन्मसुकृतेन भगवदनुगृहीतानां शुद्धवैदिकानामाचार्यश्रीभगवत्पादीयमतोपजीविनामद्वैतिनां तु ततो वैलक्षण्यं प्रेक्षावन्मुमुक्षुप्रवृत्त्यै संक्षिपति—**विवेकी त्विति** । वैलक्षण्यावद्योती तुशब्दः । सर्वसाधनमूलं विवेक एवेति सूचकं विवेकिपदम् । एकवचनमधिकारिदौर्लभ्यध्वनकमेव । वारिधिपदेन तस्य श्रीकांतसादृश्यं व्यज्यते ॥ ७४ ॥

**मायामेघो जगन्नीरं वर्षत्वेष यथा तथा ॥**
**चिदाकाशस्य नो हानिर्न वा लाभ इति स्थितिः ॥७५॥**

**रा० टीका**—तर्हि विवेकिनो निश्चयः कीदृश इत्याकांक्षायामाह—**मायेति**॥७५॥

**अ० टीका**—ननु लक्ष्मीरमणसमकक्षसुखस्य जीवन्मुक्तस्योक्तरूपस्य कथं यावत्प्रारब्धं द्वैतावभासे सत्यप्यस्त्यंतर्निश्चय इत्यपेक्षायां तं संक्षिपति—**मायेति रूपकेण** । **इतीति** । इत्युक्तरूपैव । स्थितिर्व्यवस्थितिर्जीवन्मुक्तस्यास्तीत्यार्थिकम् ॥ ७५ ॥

**इमं कूटस्थदीपं योऽनुसंधत्ते निरन्तरम् ॥**
**स्वयं कूटस्थरूपेण दीप्यतेऽसौ निरन्तरम् ॥ ७६ ॥**

**इति श्रीमद्विद्यारण्यविरचितायां पञ्चदश्यां कूटस्थदीपाख्यमष्टमं प्रकरणम् ॥ ८ ॥**

**रा० टीका**—ग्रंथाभ्यासफलमाह—**इममिति** ॥ ७६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्येन विदुषा विरचिता कूटस्थदीपतात्पर्यदीपिका समाप्तिमगमत् ॥ ८ ॥

**अ० टीका**—अथ ग्रंथाभ्यासफलं कथयति—**इममिति** । दीप्यते प्रकाशत इत्यर्थः । अपरं तु सरलमेव । ननु त्वयोपक्रमे—" चिन्मात्रो यद्यात्मा प्रत्यक्षाद्यखिलमानमुच्छिद्येत् । युक्तिरपि नास्ति तादृक्प्रतिबंधोऽयं तृतीय इह जीवे " **इत्यार्यया** शोधितत्वंपदार्थज्ञानविषयकः प्रमेयासंभावनाभिधस्तृतीयः प्रतिबंध उक्तः । एवम्—" शोधितजीवविवेकान्नानायुक्त्याऽविरोध एवोक्तः । मानांतरैरतस्तत्परता स्यादष्टमेऽपि न किम् " **इत्यार्यया** नि-

रुक्तप्रतिबंधप्रध्वंसकत्वमपि **कूटस्थदीपाख्यस्याष्टमप्रकरणस्याप्यस्योक्तं** तत्कथमुपपद्यत इति चेदाकलय। उपक्रमादिलिंगैरस्य प्रकरणस्य शोधितत्वंपदार्थविषयकप्रमेयासंभावनानिरासपरत्वात्। तद्यथा। अत्र—"खादित्यदीपिते कुड्ये दर्पणादित्यदीप्तिवत्। कूटस्थभासितो देवो धीस्थजीवेन भास्यते" इत्युपक्रम्य "माया मेऽद्य" इत्यादिनोपसंहारः कृतः। तत्र कूटस्थनिर्गुणपरमात्मानमेव देहोपलक्षितसकलद्वैतभासकत्वोनोद्दिश्य चिदाकाशपदेन शोधितत्वंपदार्थाभिन्नतया परामृश्य तस्य माया मेऽद्य इत्यादिना मायिकजगत्कारणत्वं ब्रुवाणे**नाऽऽचार्येण** प्रत्यक्षादिप्रमाणांतराविरोधः साधित इति प्रमेयासंभावनानिरासः स्फुट एव संपन्नः। एवम् "आभासब्रह्मणी देहाद्बहिर्यद्वद्विवेचिते। तद्वदाभासकूटस्थौ विविच्येतां वपुष्यपि" इति। "संधयोऽखिलवृत्तीनामभावाश्चावभासिताः। निर्विकारेण येनासौ कूटस्थ इति चोच्यते" इति च तत्र तत्र यावत्प्रकरणे कूटस्थाभ्यासः। एवम् "नाहं ब्रह्म विबुध्येत स विनाशीति चेन्न तत्। सामानाधिकरण्यस्य बाधायामपि संभवात्" इति कूटस्थाख्यशुद्धजीवस्य ब्रह्मत्वेनावशेषार्थं चिदाभासाख्यविशिष्टजीवस्य बाधायां सामानाधिकरण्यं स्थाणुः पुरुष इत्यादिवदित्यपूर्वता। असंग एव कूटस्थ इत्यादिफलम्। "आत्मा प्रवेशं संकल्प्य प्रविष्ट इति गीयते" इत्यादिरर्थवादः। "द्विगुणीकृतचैतन्ये जन्मनाशानुभूतितः। अकूटस्थं तदन्यत्तु कूटस्थमविकारितः" इत्याद्युपपत्तिरिति षोढा लिंगानीति॥ ७६॥

इतिश्रीमत्परमहंसपरि० श्रीमदद्वैतसच्चिदानंद० पंचदशीव्याख्यायाः कूटस्थदीपप्रकाशोऽष्टमः संपूर्णः॥ ८॥

**समाप्तोऽयं कूटस्थ दीपः।**

# अथ श्रीपंचदश्या ध्यानदीपाख्यं नवमं प्रकरणम्.

**रा० टीका**—नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
क्रियते ध्यानदीपस्य व्याख्या संक्षेपतो मया ॥ १ ॥

इह तावद्वेदांतशास्त्रे नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपन्नस्य सम्यक्श्रवणमनननिदिध्यासनानुष्ठानवतस्तत्त्वंपदार्थविवेचनपूर्वक महावाक्यार्थापरोक्षज्ञानेन ब्रह्मभावलक्षणो मोक्षो भवतीति प्रतिपादितं तत्र श्रुतोपनिषत्कस्यापि बुद्धिमांद्यादिना केनचित्प्रतिबंधेन वाक्यार्थविषयापरोक्षप्रमित्यनुत्पत्तौ सत्यां तदुत्पादनद्वारा मोक्षफलकोपासनानि दिदर्शयिषुरादौ तावत्सदृष्टांतं ब्रह्मतत्त्वोपासनयाऽपि मोक्षो भवतीति प्रतिजानीते—

**संवादिभ्रमवद्ब्रह्मतत्त्वोपास्त्याऽपि मुच्यते ॥**
**उत्तरे तापनीयेऽतः श्रुतोपास्तिरनेकधा ॥ १ ॥**

**संवादीति ।** यथा संवादिभ्रमेण प्रवृत्तस्याभिप्रेतार्थलाभो भवति, एवं ब्रह्मतत्त्वोपासनयाऽप्यभिलषितब्रह्मभावलक्षणो मोक्षो भवतीत्यर्थः । तत्र किं प्रमाणमित्यत आह—**उत्तर इति ।** यत उपासनयाऽपि मोक्षोऽस्त्यतस्तापनीयोपनिषद्यनेकप्रकारेण ब्रह्मतत्त्वोपासना श्रुतोक्तेत्यर्थः ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्द्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वाश्राऽऽचार्यवर्योत्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ।
कौमुद्याः स्फुटयाम्यहिप्रकाशतो ध्यानदीपमिमम् ॥ २ ॥

अथ भगवान्**भारतीतीर्थाख्य** आचार्यः कूटस्थदीपाख्ये **पंचदश्या अष्टमे** प्रकरणे प्राक्तनेऽते तावत् "इमं कूटस्थदीपं योऽनुसंधत्ते निरंतरम् । स्वयं कूटस्थरूपेण दीप्यतेऽसौ निरंतरम्" इति**श्लोकेन** निरंतरब्रह्मानुसंधानशालिन एव कैवल्यरूपफलमकथयत्तत्तु नित्यानित्यविवेकादिसाधनचतुष्टयपुष्टिपूर्वकं श्रोत्रियं ब्रह्मनिष्ठमाचार्यमुपसृत्य चतुर्लक्षण्युत्तरमीमांसां **श्रीमद्भगवत्पाद**प्रणीता**द्वैतभाष्यतट्टीका**दिपूर्वकं श्रवणमनननिदिध्यासनैः समभ्यस्य निरस्तपंचविधप्रतिबंधस्य विचारिततत्त्वमस्यादिमहावाक्यात्संजातदृढतमापरोक्षप्रमया सकलद्वैते मूलाविद्याध्वंसद्वारा बाधितेऽपि यावत्प्रारब्धपरिसमाप्तिमृगजलवत्प्रतीयमाने तदुत्तरमेव स्यात्तदपेक्षया वरं यावद्देहपातं सर्वसंगपरित्यागपूर्वकं स्वस्ववर्णाश्रमधर्मानुष्ठानावशिष्टकाले हरिहराद्यन्यतमसगुणब्रह्मध्यानमेवैकांतवासेनेति कस्यचिदंतेवासिनो मनीषामालक्ष्य तदनुजिघृक्षया निर्गुणाहंग्रहोपासनप्रधानं **ध्यानदीपाख्यं** प्रकरणं प्रारिरिप्सुः प्रसिद्धप्रमाणप्रयोजनं ब्रह्मतत्त्वेति ब्रह्मात्मैक्यानुसंधानलक्षणं मंगलमपि सूचयन्नस्याद्वैतशास्त्रीयप्रकरणत्वेऽपि ब्रह्मात्मैक्यलक्षणं विषयमुपास्यत्वेनज्ञातत्वद्वारैव तथा सद्योमुक्तिलक्षणमुक्तोपास्तिपरिपाकेन देहपातसमकालमेव—

" उपासनं पक्वमिह नास्ति यस्य परत्र सः ।
मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते "

इतिवचनात्तदा द्रष्टुः स्वरूपेऽवस्थानमिति ऋतंभरा तत्र प्रज्ञा इति च **योगसूत्राभ्यां** च समुत्पन्नेनाहं ब्रह्मास्मीत्यपरोक्षज्ञानेन सकार्यकाविद्याध्वस्तिरूपां सद्योमुक्तिमपि प्रयोजनतयोपास्त्याऽपि मुच्यत इत्यनेन ध्वनयन्नुपास्यत्वावच्छिन्नब्रह्मात्मतत्त्वप्रकृतप्रकरणयोः प्रतिपाद्यप्रतिपादकभावं संबंधं तथोक्तमुक्तिकाममधिकारिणमपि द्योतयन्नुक्तोपास्त्या मुक्तिं सदृष्टांतं प्रतिजानीते—**संवादीति ।** तत्रान्यथानुपपत्तिं श्रौतीमेव प्रमाणयति—**उत्तर इति । नृसिंहोत्तरतापनी**याख्योपनिषद्भाग इत्यर्थः ॥ १ ॥

**रा० टीका**—संवादिभ्रमवदित्युक्तं प्रपंचयितुं संवादिभ्रमप्रतिपादकवार्तिकं पठति—

**मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ॥**
**मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ २ ॥**

**मणिप्रदीपेति** । मणिश्च प्रदीपश्च मणिप्रदीपौ तयोः प्रभे मणिप्रदीपप्रभे तयोरिति विग्रहः । मणिप्रभायां दीपप्रभायां च या मणिबुद्धिः सा मिथ्याज्ञानमेव तस्मिंस्तद्बुद्धित्वादथापि मणिप्रभायां च या मणिबुद्धिः साऽर्थक्रियाकारिणी मणिबुद्ध्याभिधावतः पुरुषस्य माणिलाभो भवतीतरस्य तु नास्तीत्यर्थक्रियायां वैषम्यमस्तीत्यर्थः ॥ २ ॥

**अ० टीका**—ननु संवादिभ्रमाभिधोक्तदृष्टांत एवाश्रुतपूर्व इत्यतस्तं स्पष्टयति—**मणिप्रदीपेत्यादि**वार्तिकश्लोकेनैव ॥ २ ॥

**रा० टीका**—वार्तिकं व्याचष्टे—

**दीपोऽपवरकस्यांतर्वर्तते तत्प्रभा बहिः ॥**
**दृश्यते द्वार्यथान्यत्र तद्वद्दृष्टा मणेः प्रभा ॥ ३ ॥**

**दीपोऽपवरकस्यांत**रित्यादिना श्लोकत्रयेण । कस्मिंश्चिन्मंदिरेऽपवरकस्यांतर्दीपस्तिष्ठति तस्य प्रभा बहिर्द्वारप्रदेशे रत्नमिव वर्तुलोपलभ्यते तथाऽन्यस्मिन्मंदिरेऽपवरकस्यांतःस्थितस्य रत्नस्य प्रभा बहिर्द्वारप्रदेशे दीपप्रभेव रत्नसमा नोपलभ्यते ॥ ३ ॥

**अ० टीका**—उक्तवार्तिकमेव विवृणोति—**दीप** इत्यादित्रिश्लोक्या । राजमंदिरे द्विदीपाः पतंगाद्युपसर्गशमनार्थं सूक्ष्मजालकमये रजतादिरचिते पनसाकृतावपवृणोतीतिव्युत्पत्त्या [ जाळीदार फाणस जाळीदार कंदील इति महाराष्ट्रभाषाप्रसिद्धे ] पात्रविशेषे शतशः स्थाप्यंत इति राजकीयजनानां प्रसिद्धमेव । तेन तत्प्रभा बहिर्द्वारि द्वारबाह्यप्रदेश इत्यर्थः । दृश्यते, उक्तापवरकवर्तुलजालकच्छिद्रविशेषनिर्गतत्वेन रात्रौ दैववशादनभिज्ञेन केन चित्स्वप्रकाशरत्नाकारैवावलोक्यत इति यावत् । अथानंतरमन्यत्राऽऽकरेऽरण्यादौ । तद्वन्मणेः स्वप्रभरत्नस्यापि प्रभातस्य वल्ल्याद्यावृतिसंभवाद्वर्तुलैव केनचिदारण्यकत्वेऽपि श्रुतस्वप्रभरत्नकथेन पुरुषेण दैवाद्दृष्टा ॥ ३ ॥

**दूरे प्रभाद्वयं दृष्टा मणिबुद्ध्याऽभिधावतोः ॥**
**प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानं द्वयोरपि ॥ ४ ॥**

**रा० टीका**—**दूर इति** । तथाविधं प्रभाद्वयं दूरतो दृष्ट्वाऽयं मणिरयं मणिरिति बुद्ध्या द्वौ पुरुषावभिधावनं कुरुतः तयोर्द्वयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रांतमेव॥४॥

**अ० टीका**—दूर इति । दूरदेवेत्यर्थः ॥ ४ ॥

**न लभ्यते मणिर्दीपप्रभां प्रत्यभिधावता ॥**
**प्रभायां धावताऽवश्यं लभ्यैतैव मणिर्मणेः ॥ ५ ॥**

**रा० टीका**—अथापि दीपप्रभायां मणिबुद्धिं कृत्वा धावता पुरुषेण मणिर्नोपलभ्यते मणेः प्रभायां मणिबुद्ध्या धावता मणिर्लभ्येतैव ॥ ५ ॥

**अ० टीका**—नेति । मणेः प्रभायामिति योज्यम् ॥ ५ ॥

**रा० टीका**—भवत्वेवं वार्तिकार्थः प्रकृते किमायतमित्यत आह—

**दीपप्रभामणिभ्रांतिर्विसंवादिभ्रमः स्मृतः ॥**
**मणिप्रभामणिभ्रांतिः संवादिभ्रम उच्यते ॥ ६ ॥**

**दीपप्रभेति** । या दीपप्रभायां मणिभ्रांतिरस्ति स विसंवादिभ्रम इति स्मृतो विद्वद्भिः। मणिलाभलक्षणार्थक्रियारहितत्वाद्या मणिप्रभायां मणिबुद्धिरस्ति सा तु मणिलाभलक्षणार्थक्रियावत्त्वात्संवादिभ्रम इत्युच्यत इत्यर्थः ॥ ६ ॥

**अ० टीका**—अथ विसंवादिसंवादिभ्रमयोः फलितं स्वरूपमाह—**दीपेति** । दीपप्रभायां मणिभ्रांतिरित्यादि विग्रहः ॥ ६ ॥

**रा० टीका**—एवं प्रत्यक्षविषये संवादिभ्रमं दर्शयित्वाऽनुमानविषयेऽपि तं दर्शयति—

**बाष्पं धूमतया बुद्ध्वा तत्रांगारानुमानतः ॥**
**वह्निर्यदृच्छया लब्धः स संवादिभ्रमो मतः ॥ ७ ॥**

**बाष्पमिति** । क्वचित्प्रदेशे स्थितं बाष्पं धूमत्वेन निश्चित्य तन्मूलप्रदेशेऽयं प्रदेशोऽग्निमान्धूमत्वादित्यनुमाय प्रवृत्तेन पुरुषेण दैवगत्या यद्यग्निस्तत्रोपलभ्येत तदा बाष्पविषयं धूमज्ञानं संवादिभ्रमो मतः ॥ ७ ॥

**अ० टीका**—एवं प्रत्यक्ष उक्त संवादिभ्रममनुमानागमयोरप्याह—**बाष्पमित्यादित्रिभिः** । हेमंतादौ जलाशये प्रातः प्रतीयमानं **वाफ** इति भाषासिद्धं बाष्पं प्रसिद्धमेव । उपलक्षणमिदं धूमभ्रमप्रयोजकस्य धूलिपटलस्यापि । यदृच्छयाऽकस्मात् ॥ ७ ॥

**रा० टीका**—आगमविषयेऽपि तं दर्शयति—

**गोदावर्युदकं गंगोदकं मत्वा विशुद्धये ॥**
**संप्रोक्ष्य शुद्धिमाप्नोति स संवादिभ्रमो मतः ॥ ८ ॥**

**गोदावर्युदकमिति** । गोदावर्युदकस्यापि विशुद्धिहेतुत्वमागमसिद्धमतस्तत्प्रोक्षणादपि विशुद्धिरस्त्येवाथापि गोदावर्युदके या गंगोदकबुद्धिः सा भ्रांतिरेव ॥ ८ ॥

**अ० टीका—गोदावरीति** । मत्वा पुराणादिति शेषः ॥ ८ ॥

**रा० टीका**—उदाहरणांतरमाह—

**ज्वरेणाऽऽप्तः संनिपातं भ्रांत्या नारायणं स्मरन् ॥**
**मृतः स्वर्गमवाप्नोति स संवादिभ्रमो मतः ॥ ९ ॥**

**ज्वरेणाऽऽप्त इति।** ज्वरेण संनिपातं प्राप्तः पुरुष इदं नारायणस्मरणं मम स्वर्गसाधनमिति ज्ञानमंतरेणापि सन्निपातप्रयुक्तभ्रमवशात्साधारणपुरुषतया चैद्यादिवन्नारायणं स्मरन्मृतः स्वर्गमवाप्नोत्येव "हरिर्हरतिपापानि दुष्टचित्तैरपि स्मृतः" "आक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम्" इत्यादि**पुराण**वचनेभ्यः। अत्रापि नारायणनाम्नः पुत्रनामत्वज्ञानं भ्रांतिरेव ॥ ९ ॥

**अ० टीका**—**ज्वरेणेति।** यतः संनिपातमाप्तोऽत एव भ्रांत्येति संबंधः। स्मरन्नुच्चारयन्। अत एव स्वर्गं न तु वैकुंठम्। एतेन सावधानतया सगुणमपि नारायणमंतकाले चेत्यादि**स्मृतेः** स्मरन्वैकुंठमेत्येवेति द्योत्यते। इदमपि शास्त्रैकगम्यत्वात्तदुदाहरणमेव ॥ ९ ॥

**प्रत्यक्षस्यानुमानस्य तथा शास्त्रस्य गोचरे ॥**
**उक्तन्यायेन संवादिभ्रमाः संति हि कोटिशः ॥ १० ॥**

**रा० टीका**—एवं त्रिविधसंवादिभ्रमोदाहरणेन सिद्धमर्थमाह—**प्रत्यक्षस्येति** ॥ १० ॥

**अ० टीका**—एवमुदाहरणांतरेष्वप्यतिदिशति—**प्रत्यक्षस्येति** ॥ १० ॥

**रा० टीका**—विपक्षे बाधकप्रदर्शनेनोक्तमर्थं द्रढयति—

**अन्यथा मृत्तिकादारुशिलाः स्युर्देवताः कथम् ॥**
**अग्नित्वादिधियोपास्याः कथं वा योषिदादयः ॥ ११ ॥**

**अन्यथेति।** अन्यथा संवादिभ्रमाभावे मृदादयः फलसिद्धये देवतात्वेन पूज्या न भवेयुः स्वतो देवतात्वाभावादित्यर्थः। बाधकांतरमाह—**अग्नित्वादिति।** पंचाग्निविद्यायां "**योषा** वाव गोतमाग्निः पुरुषो वाव गोतमाग्निः पृथिवी वाव गोतमाग्निः पर्जन्यो वाव गोतमाग्निरसौ वाव द्युलोको गोतमाग्निः" इत्यादिवाक्यैर्योषित्पुरुषपृथिवीपर्जन्यद्युलोकानामग्नित्वेनोपासनब्रह्मलोकावाप्तिफलकं न भवेदित्यर्थः। आदिपदेन "मनो ब्रह्मेत्युपासीत" "आदित्यो ब्रह्मेत्यादेशः" इत्येवमादयो गृह्यंते ॥ ११ ॥

**अ० टीका**—तत्रार्थापत्तिं प्रमाणयति—**अन्यथेति। मृत्तिकेति।** देवताः पार्थिवलिंगजगन्नाथशालग्रामाद्यवच्छेदने देवाः। "योषा वाव गौतमाग्निः" इत्यादि **च्छांदोग्ये** प्रसिद्धम् ॥ ११ ॥

**रा० टीका**—इदानीं बहुभिर्ग्रंथैरुपपादितं संवादिभ्रमं बुद्धिसौकर्याय संक्षिप्य दर्शयति—

**अयथावस्तुविज्ञानात्फलं लभ्यत ईप्सितम् ॥**
**काकतालीयतः सोऽयं संवादिभ्रम उच्यते ॥ १२ ॥**

**अयथावस्त्विति।** विहितादविहिताद्वा यस्मादयथावस्तुविज्ञानाद्विपरीतज्ञानादीप्सितमभिलषितं फलं काकतालीयन्यायतो दैवगत्या लभ्यते सोऽयं संवादिभ्रम इत्यर्थः ॥ १२ ॥

**अ० टीका**—अथैवमुपपादितं संवादिभ्रमं निगमयन्बुद्धिसौकर्याय संक्षिप्य लक्षयति—**अयथेति।** भ्रमात्मकज्ञानादपीत्यर्थः। लभ्येत ईप्सितमिति संध्यभावो विवक्षयैव ॥ १२ ॥

---

१ लभ्येतेत्यच्युतरायपाठः।

**स्वयंभ्रमोऽपि संवादी यथा सम्यक्फलप्रदः ॥**
**ब्रह्मतत्त्वोपासनाऽपि तथा मुक्तिफलप्रदा ॥ १३ ॥**

**रा० टीका**—ननु ब्रह्मोपासनस्यायथावस्तुविषयस्य कथं सम्यग्ज्ञानसाध्यमुक्तिफलप्रदत्वमित्याशंक्य संवादिभ्रमवदेवेत्याह—**स्वयं भ्रम** इति ॥ १३ ॥

**अ० टीका**—एवं दृष्टांतमुपपाद्य प्रतिज्ञाते दार्ष्टांतिके योजयति—**स्वयमिति** । ननु "तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" इत्याद्यनेकश्रुत्यादिभिर्मुक्तेरद्वैतात्मज्ञानमात्रसाध्यत्वात्तदंतराऽत्र कथमुपासनासाध्यत्वमुक्तानिदर्शनेऽप्युच्यत इति चेन्न । तत्तात्पर्यानवबोधादुक्तदृष्टांतेनैव तत्र ज्ञानद्वारैवेष्टसाधकत्वस्य स्पष्टीकरणाच्च । नहि मणिप्रभायां मणिबुद्ध्या धावमानस्तत्र मण्यभावेऽपि तन्निकटगं मणिमनवेक्ष्य तं लभते । तस्मान्निर्गुणाहंब्रह्मोपासनयाऽप्यहं ब्रह्मास्मीति सदा भावनारूपया निरस्ताखिलप्रतिबंधस्तत एव महावाक्यात्संजाताद्वैतात्मापरोक्षबोधोऽसौ सद्य एव सव्याप्यसकार्यकज्ञानध्वस्तिरूपां मुक्तिमाप्नोतीति युक्तमेवेति भावः ॥ १३ ॥

**रा० टीका**—ननु ब्रह्मतत्त्वं ज्ञात्वोपासनं क्रियतेऽज्ञात्वा वाऽऽद्य उपासनावैयर्थ्यं मोक्षसाधनस्य ज्ञानस्यैव विद्यमानत्वाद्द्वितीये विषयापरिज्ञानादुपासनमेव न घटत इत्याशंक्याऽऽह—

**वेदांतेभ्यो ब्रह्मतत्त्वमखंडैकरसात्मकम् ॥**
**परोक्षमवगम्यैतदहमस्मीत्युपासते ॥ १४ ॥**

**वेदांतेभ्य इति** । अयमभिप्रायः । ब्रह्मात्मैकत्वापरोक्षज्ञानस्य मोक्षसाधनस्यानुत्पन्नत्वान्नोपासनावैयर्थ्यं शास्त्रात्परोक्षतयाऽवगतत्वाद्ब्रह्मण उपासनाविषयत्वमिति ॥ १४ ॥

**अ० टीका**—एतदेव प्रपंचयति—**वेदांतेभ्य** इत्यादिना । उपासते सद्यो मुमुक्षवश्चितयंतीत्यर्थः ॥ १४ ॥

**रा० टीका**—उपास्यब्रह्मतत्त्वगोचरस्य परोक्षज्ञानस्य किं रूपमित्याकांक्षायामाह—

**प्रत्यग्व्यक्तिमनुल्लिख्य शास्त्राद्विष्ण्वादिमूर्तिवत् ॥**
**अस्ति ब्रह्मेतिसामान्यज्ञानमत्र परोक्षधीः ॥ १५ ॥**

**प्रत्यगिति** । प्रत्यग्व्यक्तिं बुद्ध्यादिसाक्षिणमानंदात्मानमनुल्लिख्याविषयीकृत्य शास्त्रात्सत्यज्ञानादिवाक्यजाताद्ब्रह्मास्तीत्येवं सामान्याकारेण जायमानं ज्ञानमत्रास्यामुपासनायां परोक्षधीः परोक्षज्ञानं विवक्षितमित्यर्थः । तत्र दृष्टांतः—**विष्ण्वादीति** । विष्ण्वादिमूर्तिप्रतिपादकशास्त्रजन्यज्ञानवदित्यर्थः ॥ १५ ॥

**अ० टीका**—नन्वेतदपेक्षितं परोक्षज्ञानमेवाऽऽदौ कथमित्यपेक्षायाम् "अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुः" इति **तैत्तिरीयक**श्रुतिप्रसिद्धमेव तल्लक्षणं संक्षिपति—**प्रत्यगिति** । प्रत्यक्साक्षी ॥ १५ ॥

**रा० टीका**—ननु शास्त्रेण विष्ण्वादिमूर्तेश्चतुर्भुजत्वादिविशेषप्रतीतेस्तज्ज्ञानस्यापि कुतः परोक्षत्वमित्याशंक्याऽऽह—

**चतुर्भुजाद्यवगतावपि मूर्तिमनुल्लिखन् ॥**
**अक्षैः परोक्षज्ञान्येव न तदा विष्णुमीक्षते ॥ १६ ॥**

**चतुर्भुजादीति** । शास्त्रेण चतुर्भुजत्वादिविशेषप्रतीतावपि चक्षुरादिभिर्विष्ण्वादिमूर्तिम-विषयीकुर्वन्पुरुषः परोक्षज्ञान्येव । तत्रोपपत्तिमाह—**न तदेति** । तदोपासनाकाले विष्णुमुपास्यं नेक्षते नेंद्रियैर्विषयीकरोतीत्यर्थः ॥ १६ ॥

**अ० टीका**—निरुक्तपरोक्षज्ञाने दृष्टांतीकृतविष्णुप्रभृतिमूर्तिविषयकज्ञानस्यैवाऽऽदौ परोक्षत्वं विशदयति—**चतुर्भुजादीति** । शास्त्रादिति शेषः । विष्णोरित्यार्थिकम् । चतुर्भुजाद्यवगतौ सत्यामपि । मूर्ति व्यक्तिम् । अनुल्लिखन्देवदत्तः परोक्षज्ञान्येवातस्तदा ध्यानकालेऽक्षैश्चक्षुरादींद्रियैर्विष्णुं नेक्षते नैव प्रत्यक्षीकुरुत इत्यन्वयः ॥ १६ ॥

**रा० टीका**—ननु विष्ण्वादिगोचरस्य ज्ञानस्य व्यक्त्युल्लेखित्वाभावाद्भ्रमत्वमित्याशंक्य प्रमाणेन जनितत्वान्न भ्रमत्वमित्याह—

**परोक्षत्वापराधेन भवेन्नातत्त्ववेदनम् ॥**
**प्रमाणेनैव शास्त्रेण सत्त्वमूर्तेर्विभासनात् ॥ १७ ॥**

**परोक्षत्वेति** । परोक्षज्ञानत्वं भ्रांतिज्ञानत्वे कारणं न भवति किं तु विषयासत्यत्वमिह तु प्रमाणभूतेन शास्त्रेणैव यथार्थभूताया विष्ण्वादिमूर्तेरवभासनान्न भ्रमत्वमित्यर्थः ॥ १७ ॥

**अ० टीका**—नन्वेवं चेत्परोक्षज्ञाने प्रमात्वं कथमित्यत आह—**परोक्षत्वेति** ॥ १७

**रा० टीका**—ननु सच्चिदानंदव्यक्त्युल्लेखिनो ब्रह्मतत्त्वज्ञानस्य शास्त्रजन्यस्यापि कुतः परोक्षतेत्याशंक्यापरोक्षत्वप्रयोजकप्रत्यक्त्वोल्लिखाभावादित्याह—

**सच्चिदानंदरूपस्य शास्त्राद्भानेऽप्यनुल्लिखन् ॥**
**प्रत्यंचं साक्षिणं तत्तु ब्रह्म साक्षान्न वीक्षते ॥ १८ ॥**

**सच्चिदानंदेति** । सत्यं ज्ञानमनंतं ब्रह्म, **नित्यः** शुद्धो बुद्धः सत्यो मुक्तो निरंजनः, **सद्धीदं** सर्वं तत्सदिति, इत्यादिशास्त्रात्सच्चिदानंदरूपस्य ब्रह्मणो भानेऽपि प्रत्यञ्चसाक्षिणमनुल्लिखन्तस्य ब्रह्मणः प्रत्यगात्मरूपत्वमजानानस्तद्ब्रह्मसाक्षान्न वीक्षते नैव पश्यति ॥ १८ ॥

**अ० टीका**—दार्ष्टांतिकपरोक्षज्ञाने तद्योजयति—**सच्चिदानंदेति** । तत्सच्चिदानंदरूपत्वमित्यर्थः । प्रत्यंचमात्मानं साक्षिणं प्रत्यनुल्लिखन्नत एव ब्रह्म साक्षात्प्रत्यक्षं न वीक्षत इति संबंधः ॥ १८ ॥

**रा० टीका**—कथं तर्हि तथाविधब्रह्मगोचरस्य ज्ञानस्य तत्त्वज्ञानत्वमित्याशंक्याऽऽगमप्रमाणजन्यत्वादित्याह—

**शास्त्रोक्तेनैव मार्गेण सच्चिदानंदनिश्चयात् ॥**
**परोक्षमपि तज्ज्ञानं तत्त्वज्ञानं न तु भ्रमः ॥ १९ ॥**

**शास्त्रेति** । तज्ज्ञानं परोक्षमपि शास्त्रोक्तेनैव प्रकारेण ब्रह्मणः सच्चिदानंदरूपनिश्चायकत्वात्सम्यग्ज्ञानमेव न भ्रम इत्यर्थः ॥ १९ ॥

**अ० टीका**—एवमस्यापि प्राग्वदेव प्रमात्वमित्याह—**शास्त्रेति** ॥ १९ ॥

**रा० टीका**—ननु सत्यज्ञानादिवाक्यैर्ब्रह्मणः सच्चिदानंदरूपत्वमिव तत्त्वमस्यादिवाक्यैः प्रत्यग्रूपत्वमपि तस्य बोध्यत एवातः शास्त्रजन्यस्यापि ज्ञानस्य प्रत्यग्व्यक्त्युल्लेखित्वादपरोक्षमेवेत्याशंक्याऽऽह—

**ब्रह्म यद्यपि शास्त्रेषु प्रत्यक्त्वेनैव वर्णितम् ॥**
**महावाक्यैस्तथाऽप्येतद्दुर्बोधमविचारिणः ॥ २० ॥**

**ब्रह्मेति ।** यद्यपि वेदांतेषु महावाक्यैर्ब्रह्मप्रत्यगात्मत्वेनैवोपदिष्टं तथाऽप्येतत्प्रत्यग्रूपमन्वयव्यतिरेकाभ्यां तत्त्वंपदार्थविवेकशून्यस्य दुर्बोधं बोद्धुमशक्यमतः केवलाद्वाक्यान्नापरोक्षज्ञानमुत्पद्यत इत्यर्थः ॥ २० ॥

**अ० टीका**—ननु " अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते । ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि " इति **वार्तिकाद्**ब्रह्मणः परोक्षज्ञानमेवानुपपन्नमत आह—**ब्रह्मेति** ॥ २० ॥

**रा० टीका**—ननु सम्यग्ज्ञानस्य प्रमाणवस्तुपरतंत्रत्वात्प्रमाणस्य च तत्त्वमस्यादिवाक्यरूपस्य सद्भावाद्वस्तुनश्च ब्रह्मात्मैक्यलक्षणस्य विद्यमानत्वात्कुतो विचारमंतरेण दुर्बोधत्वमित्याशंक्याऽऽह—

**देहाद्यात्मत्वविभ्रांतौ जाग्रत्यां न हठात्पुमान् ॥**
**ब्रह्मात्मत्वेन विज्ञातुं क्षमते मंदधीत्वतः ॥ २१ ॥**

**देहादीति ।** ब्रह्मात्मैकत्वापरोक्षज्ञानविरोधिनो देहेंद्रियादिष्वात्मत्वभ्रमस्य विचारनिवर्त्यस्य सद्भावात्तन्निवृत्तये विचारोऽपेक्ष्यत इत्यर्थः ॥ २१ ॥

**अ० टीका**—तत्र हेतुं विवृणोति—**देहादीति** ॥ २१ ॥

**रा० टीका**—ननु तर्हि देहेंद्रियादिगोचरस्य द्वैतभ्रमस्य सद्भावादद्वितीयब्रह्मगोचरं परोक्षज्ञानमपि नोदीयादित्याशंक्य परोक्षद्वैतभ्रमस्य परोक्षाद्वैतज्ञानाविरोधित्वाच्छ्रद्धावतः पुंसः शास्त्रात्परोक्षज्ञानमुत्पद्यत एवेत्याह—

**ब्रह्ममात्रं सुविज्ञेयं श्रद्धालोः शास्त्रदर्शिनः ॥**
**अपरोक्षद्वैतबुद्धिः परोक्षाद्वैतबुद्ध्यनुत् ॥ २२ ॥**

**ब्रह्ममात्रमिति ।** अपरोक्षद्वैतबुद्धिर्यतः परोक्षाद्वैतबुद्ध्यनुदतो ब्रह्ममात्रं सुविज्ञेयमिति योजना ॥ २२ ॥

**अ० टीका**—ननु यथा मंदधीत्वेन पंचकोशविवेचनक्षमकुशाग्रबुद्धित्वाभावादपरोक्षज्ञानमद्वैतब्रह्मात्मैक्यविषयकं नोदेति तथाऽत्रापरोक्षद्वैतबुद्धावपि देहाद्यात्मत्वबुद्धिवज्जाग्रत्यां परोक्षब्रह्मज्ञानमपि कथं स्यादित्यत्राऽऽह—**ब्रह्ममात्रमिति** । तत्र हेतुः—**अपरोक्षेति ।** न ह्यपरोक्षनवज्ञानमपि परोक्षं दशमोऽस्तीत्याप्तवाक्यजन्यज्ञानं प्रतिविरुणद्धि । तस्माद्युक्तमेव प्रकृतोक्तमित्याशयः ॥ २२ ॥

**रा० टीका**—अपरोक्षभ्रमस्य परोक्षसम्यग्ज्ञानाविरोधित्वे दृष्टांतमाह—

**अपरोक्षशिलाबुद्धिर्न परोक्षेशतां नुदेत् ॥**
**प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते ॥ २३ ॥**

**अपरोक्षेति ।** विरोधाभावमेवोदाहृत्य दर्शयति—**प्रतिमादिष्विति** । २३ ॥

**अ० टीका**—तदेवोपपादयति—**अपरोक्षेति ।** सा(शा)लग्रामबाणलिंगादाविति शेषः । तत्रापि विशेषमाह—**प्रतिमादिष्विति** ॥ २३ ॥

**रा० टीका**—केचन विप्रतिपद्यमाना उपलभ्यंत इत्याशंक्याऽऽह—

**अश्रद्धालोरविश्वासो नोदाहरणमर्हति ॥**
**श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारतः ॥ २४ ॥**

**अश्रद्धालोरिति** । कुत इत्यत आह—**श्रद्धालोरेवेति** । सर्वेषु वेदोक्तानुष्ठानेषु श्रद्धालोरेव श्रद्धावत एवाधिकारित्वादित्यर्थः ॥ २४ ॥

**अ० टीका**—ननु तत्रापि केषांचिदश्रद्धोपलभ्यत एवेत्यत आह—**अश्रद्धालोरिति** । आप्तवाक्य आस्तिक्यबुद्धिः श्रद्धा तत्कार्यं हि फलावश्यंभावनिश्चयो विश्वास इति तयोर्भेदः ॥ २४ ॥

**रा० टीका**—एतावता परोक्षज्ञाने किमायातमित्यत आह—

**सकृदाप्तोपदेशेन परोक्षज्ञानमुद्भवेत् ॥**
**विष्णुमूर्त्युपदेशो हि न मीमांसामपेक्षते ॥ २५ ॥**

**सकृदाप्त इति** । उक्तमर्थं लोकानुभवेन द्रढयति—**विष्णुमूर्तीति** ॥ २५ ॥

**अ० टीका**—अस्त्वेवं ततः किं प्रकृत इत्यतआऽऽह—**सकृदिति** । तदेवार्थांतरन्यासेन समर्थयति—**विष्णुमूर्तीति** ॥ २५ ॥

**रा० टीका**—ननु तर्हि शास्त्रेषु कुतो विचाराः क्रियंत इत्याशंक्यानुष्ठेययोः कर्मोपासनयोः संदेहसंभवात्तन्निर्णयाय विचाराः क्रियंत इत्याह—

**कर्मोपास्ती विचार्येते अनुष्ठेयाविनिर्णयात् ॥**
**बहुशाखाविप्रकीर्णं निर्णेतुं कः प्रभुर्नरः ॥ २६ ॥**

**कर्मोपास्तीति** । संदेहसंभवमेवोपपादयति—**बहुशाखेति** । अनेकासु शाखासु तत्र तत्र चोदितं कर्म उपासनं वैकत्र समाहृत्य निर्णेतुमस्मदादिर्नरः कः प्रभुः समर्थः ? न कोऽपीत्यर्थः ॥ २६ ॥

**अ० टीका**—एवं तर्हि द्वादशलक्षणीप्रभृतिकर्मादिविचारशास्त्रं व्यर्थमित्यत आह—**कर्मेति** ॥ २६ ॥

**रा० टीका**—ननु तर्ह्यननुष्ठेयत्वमेव कर्मोपासनयोः प्राप्तमित्याशंक्याऽऽह—

**निर्णीतोऽर्थः कल्पसूत्रैर्ग्रथितस्तावताऽस्ति कः ॥**
**विचारमंतरेणापि शक्तोऽनुष्ठातुमंजसा ॥ २७ ॥**

**निर्णीत इति** । जैमिन्यादिभिः पूर्वाचार्यैर्निश्चितोऽर्थः । अनुष्ठानप्रकारः कल्पसूत्रैः संगृहीतोऽस्ति तावता तैर्ग्रथितत्वेनैव तेषु विश्वासवान् पुरुषो विचारं विनाऽपि कर्म सम्यगनुष्ठातुं शक्नोत्येव ॥ २७ ॥

**अ० टीका**—एवं तर्हि कर्मोपास्त्योरस्मदादेः कथमनिर्णयादनुष्ठेयत्वं तत्राऽऽह—**निर्णीत इति** । अंजसा शीघ्रम् ॥ २७ ॥

**रा० टीका**—ननु तत्रोपासनाविचाराभावात्तदनुष्ठानं न संभवेदित्याशंक्याऽऽह—

**उपास्तीनामनुष्ठानमार्षग्रंथेषु वर्णितम् ॥**
**विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोः ॥ २८ ॥**

**उपास्तीनामिति ।** आर्षग्रंथेषु ब्रह्मवासिष्ठादिमंत्रकल्पेषूपासनाप्रकारो वर्णितः । ततो विचारासमर्था मनुष्याः कल्पेषूक्तं तदुपासनं गुरुमुखादवगत्यानुतिष्ठंतीति भावः ॥ २८ ॥

**अ० टीका**—ननूपास्तीनामनुष्ठाननिर्णयः क्वेत्यत आह—**उपास्तीनामिति ।** आर्षग्रंथेषु **ब्राह्मवासिष्ठा**दिमंत्रकल्पेष्विति प्रांचः पुराणादिष्विति तु सम्यक्—"इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत् " इतिस्मृतेः ॥ २८ ॥

**वेदवाक्यानि निर्णेतुमिच्छन्मीमांसतां जनः ॥**
**आप्तोपदेशमात्रेण ह्यनुष्ठानं हि संभवेत् ॥ २९ ॥**

**रा० टीका**—ननु तर्हीदानींतनैरपि ग्रंथकर्तृभिर्वेदवाक्यविचारः कुतः क्रियत इत्याशंक्य स्वस्वबुद्धिपरितोषायैव क्रियते नानुष्ठानसिद्धय इत्याह—**वेदेति** ॥ २९ ॥

**अ० टीका**—तर्हि पूर्वमीमांसायां कस्याधिकारस्तदर्थानुष्ठाने च कस्येति तत्राऽऽह—**वेदेति** ॥ २९ ॥

**ब्रह्मसाक्षात्कृतिस्त्वेवं विचारेण विना नृणाम् ॥**
**आप्तोपदेशमात्रेण न संभवति कुत्रचित् ॥ ३० ॥**

**रा० टीका**—ननु ब्रह्मोपासनवद्ब्रह्मसाक्षात्कारस्याप्युपदेशमात्रादेव सिद्धिः किं न स्यादित्याशंक्याऽऽह—**ब्रह्मेति** ॥ ३० ॥

**अ० टीका**—ब्रह्मज्ञाने तु नैवमित्याह—**ब्रह्मेति** ॥ ३० ॥

**रा० टीका**—आप्तोपदेशमात्रेणोपासनानुष्ठानोपयोगि परोक्षज्ञानमुत्पद्यतेऽपरोक्षज्ञानं तु विचारमंतरेण न जायत इत्युक्तं तत्र कारणमाह—

**परोक्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत् ॥**
**अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबंधकः ॥ ३१ ॥**

**परोक्षेति ।** यतोऽविश्वास एव परोक्षज्ञानं प्रतिबध्नाति नाविचारोऽतस्तन्निवृत्तौ सकृदुपदेशादेव परोक्षज्ञानजन्मोपपद्यते । अविचारप्रतिबंधस्यापरोक्षज्ञानस्य तु विचारद्वारा तन्निवृत्तिमंतरेणोत्पत्तिर्न संभवति । अतो विचारः कर्तव्य इति भावः ॥ ३१ ॥

**अ० टीका**—एवं तर्हि परोक्षापरोक्षज्ञानयोः के प्रतिबंधके तत्राऽऽह—**परोक्षेति** ॥ ३१ ॥

**रा० टीका**—ननु विचारे कृतेऽपि यदाऽपरोक्षज्ञानं न जायते तदा किं कर्तव्यमित्यत आह—

**विचार्याप्यापरोक्ष्येण ब्रह्मात्मानं न वेत्ति चेत् ॥**
**आपरोक्ष्यावसानत्वाद्भूयो भूयो विचारयेत् ॥ ३२ ॥**

**विचार्यापीति ।** तत्त्वंपदार्थौ सम्यग्विचार्यापि वाक्यार्थं ब्रह्मात्मैकत्वमपरोक्षतया न जानातीति चेत्तदापि पुनः पुनर्विचार एव कर्तव्योऽपरोक्षज्ञानहेतोरन्यस्याभावादिति भावः ३२

**अ० टीका**—नन्वपरोक्षज्ञानप्रतिबंधकीभूताविचारनिराकरणार्थं विचारोऽप्यद्वैतशास्त्रस्य किं सकृदसकृद्वा कार्य इत्याशंक्य यावत्फलं स एव कार्यः सकृदादिनियमस्तु तत्र नैवापेक्षित इति समाधत्ते—**विचार्यापीति । आपरोक्ष्येति ।** विचारस्येति शेषः ॥ ३२ ॥

**विचारयन्ना मरणं नैवाऽऽत्मानं लभेत चेत् ॥**
**जन्मांतरे लभेतैव प्रतिबंधक्षये सति ॥ ३३ ॥**

**रा० टीका**—ननु भूयो भूयो विचारेणापीह साक्षात्कारानुदये सति विचारो व्यर्थः स्यादित्याशंक्याऽऽह—**विचारयन्निति** ॥ ३३ ॥

**अ० टीका**—ननु यावद्देहमपि ब्रह्मविचारे कृतेऽपि तदपरोक्षप्रमानुदये किं व्यर्थमेवाऽऽयुःक्षय इति भीतं सांत्वयति—**विचारयन्निति** ॥ ३३ ॥

**इह वाऽमुत्र वा विद्येत्येवं सूत्रकृतोदितम् ॥**
**शृण्वंऽतोऽप्यत्र बहवो यन्न विद्युरिति श्रुतिः ॥ ३४ ॥**

**रा० टीका**—नन्विदं कुतोऽवगतमित्याशंक्य ब्रह्मसूत्रकृता **व्यासेनैहिकमप्यप्र**स्तुतप्रतिबंधे तद्दर्शनादित्यस्मिन् **सूत्रे**ऽभिधानादित्याह—**इह वाऽमुत्रेति** । सति प्रतिबंध इह जन्मनि ज्ञानानुत्पत्तौ श्रुतिं दर्शयति—**शृण्वंत इति** ॥ ३४ ॥

**अ० टीका**—ननु किमत्र मानमिति चेत्सप्रमाणं समाधत्ते—**इह वेति** । तथाच **शारीरकसूत्र**मिदम्—" ऐहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनात् " इति । अस्यायमर्थः—"आवृत्तिरसकृदुपदेशात् " इति पूर्वतनसूत्रेण **श्वेतकेतुं** प्रति **छांदोग्यषष्ठे ह्युद्दालक**कर्तृकनवारोपदेशवशाद्विहितविचारावृत्त्या तावदद्वैतब्रह्मात्मैक्यापरोक्षज्ञानमप्रस्तुतप्रतिबंधे वर्तमानादिवक्ष्यमाणप्रतिबंधाभावे सत्यैहिकमपीहास्मिञ्शरीरे भवं तथाऽपिना जन्मांतरेऽव्यवहित एव भविष्यति । तत्र हेतुः—तद्दर्शनात् । तथात्वस्य श्रुतावुक्तश्वे**तके**त्वादावैहिकज्ञानस्य **स्मृता**वर्जुनादौ च । पारत्रिकज्ञानस्य तु **श्रुतौ** गर्भ एव वामदेवे स्मृतौ मदालसापत्यादौ च दर्शनादिति । तत्र श्रुतिमप्याह—**शृण्वंतोऽपीति** । श्रुतिपाठस्तु—" श्रवणायापि बहुभिर्यो न लभ्यः शृण्वंतोऽपि बहवो यन्न विद्युः " इति ॥ ३४ ॥

**रा० टीका**—इह जन्मनि श्रवणादिकर्तुर्जन्मांतरेऽपरोक्षज्ञानं भवतीत्यत्रापि **गर्भे नु** सन्नन्वेषाम वेदमहं देवानां जनिमानि विश्वेत्यादिकां **श्रुति**मर्थतः पठति—

**गर्भ एव शयानः सन्वामदेवोऽवबुद्धवान् ॥**
**पूर्वाभ्यस्तविचारेण यद्वदध्ययनादिषु ॥ ३५ ॥**

**गर्भेति** । इह जन्मन्युत्पन्नस्य ज्ञानस्य कालांतरोत्पत्तौ दृष्टांतमाह—**यद्वदिति**॥३५॥

**अ० टीका**—एवं गर्भ एवैतच्छयानवामदेव एवमुवाच । अहं मनुरभवं सूर्यश्चेति श्रुत्यंतरमप्यत्राऽऽह—**गर्भ एवेति** । तत्र दृष्टांतं स्पष्टयति—**यद्वदिति** ॥ ३५ ॥

**बहुवारमधीतेऽपि तदा नाऽऽयाति चेत्पुनः ॥**
**दिनांतरेऽनधीत्यैव पूर्वाधीतं स्मरेत्पुमान् ॥ ३६ ॥**

**रा० टीका**—दृष्टांतं विवृणोति **बहुवारमिति** ॥ ३६ ॥

**अ० टीका**—तं विवृणोति—**बहुवारमिति** ॥ ३६ ॥

**रा० टीका**—आदिशब्देन परिगृहीतानि दृष्टांतांतराण्याह—

**कालेन परिपच्यंते कृषिगर्भादयो यथा ॥**
**तद्वदात्मविचारोऽपि शनैः कालेन पच्यते ॥ ३७ ॥**

**कालेनेति ।** दार्ष्टांतिके योजयति—**तद्वदिति** ॥ ३७ ॥

**अ० टीका—**तत्र दृष्टांतांतरपूर्वकं फलितमाह—**कालेनेति** ॥ ३७ ॥

**पुनः पुनर्विचारेऽपि त्रिविधप्रतिबंधतः ॥**
**न वेत्ति तत्त्वमित्येतद्वार्तिके सम्यगीरितम् ॥ ३८ ॥**

**रा० टीका**—बहुवारं विचारितेऽपि तत्त्वे प्रतिबंधबलात्साक्षात्कारो न जायत इत्येतद्वार्तिककारैरपि निरूपितमित्याह—**पुनः पुनरिति** ॥ ३८ ॥

**अ० टीका**—तत्र भूतादयस्त्रयः प्रतिबंधा वार्तिके एवोक्ता इत्याह—**पुनः पुनरिति** ॥ ३८ ॥

**रा० टीका**—तान्येव वार्तिकान्युदाहरति—**कुतस्तज्ज्ञानमित्यादिना भरतस्य त्रिजन्मभिरित्यंतेन** । तत्र तावत्पूर्वमनुत्पन्नस्य ज्ञानस्येदानीमुत्पत्तौ कारणं पृच्छति—

**कुतस्तज्ज्ञानमिति चेत्तद्धि बंधपरिक्षयात् ॥**
**असावपि च भूतो वा भावी वा वर्ततेऽथ वा ॥ ३९ ॥**

**कुत इति ।** उत्तरमाह—**तद्धि बंधेति ।** बंधः प्रतिबंधस्तस्य परिक्षयादित्यर्थः । सोऽपि प्रतिबंधो भूतो भावी वर्तमानश्चेति त्रिविध इत्याह—**असाविति** ॥ ३९ ॥

**अ० टीका**—तानि वार्तिकान्येव पठति—**कुत इत्यादिना ।** बंधः प्रतिबंधः॥३९॥

**रा० टीका**—भवत्वेवं त्रिविधप्रतिबंधस्ततः किमित्यत आह—

**अधीतवेदवेदार्थोऽप्यत एव न मुच्यते ॥**
**हिरण्यनिधिदृष्टांतादिदमेव हि दर्शितम् ॥ ४० ॥**

**अधीतेति ।** अत एव प्रतिबंधसद्भावादेवेत्यर्थः । सति प्रतिबंधे ज्ञानं नोदेतीत्येतत्, तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरंतो न विंदेयुः " एवमेवेमाः सर्वाः प्रजा अहरहर्ब्रह्मलोकं गच्छंत्य एतं ब्रह्मलोकं न विंदंत्यनृतेन हि प्रत्यूढाः " इत्यनया **श्रुत्या** प्रदर्शितमित्याह—**हिरण्येति** ॥ ४० ॥

**अ० टीका**—**अधीतेति । हिरण्यनिधीति** । तद्यथा हिरण्यनिधिमित्यादि**छांदोग्याष्टम**प्रसिद्धादित्यर्थः ॥ ४० ॥

**रा० टीका**—नन्वतीतस्य प्रतिबंधकत्वं न दृष्टमित्याशंक्याऽऽह—

**अतीतेनापि महिषीस्नेहेन प्रतिबंधनः ॥**
**भिक्षुस्तत्त्वं न वेदेति गाथा लोके प्रगीयते ॥ ४१ ॥**

**अतीतेनेति ।** अयमर्थः । कश्चिद्यतिः पूर्वं गार्हस्थ्यदशायां कस्यां चिन्महिष्यां स्नेहं कृत्वा पश्चात्संन्यासानंतरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहेन जनितात्प्रतिबंधात्तत्त्वं गुरुणोपदिष्टमपि न ज्ञातवानित्येवंविधा गाथा लोके प्रगीयते न पुराणादिषु पठ्यत इत्यर्थः ॥ ४१ ॥

**अ० टीका**—तत्र भूतं तमाह—**अतीतेनापीति** । कृताभिषेका महिषीत्य**मरः** ॥४१॥

**रा० टीका**—तर्हि तथाविधस्य तस्य कथं ज्ञानोत्पत्तिरित्यत आह—

**अनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान् ॥**
**ततो यथावद्वेदैष प्रतिबंधस्य संक्षयात् ॥ ४२ ॥**

**अनुसृत्येति ।** गुरुस्तस्य तत्त्वोपदेष्टा तदीयमहिषीस्नेहमनुसृत्य तस्यामेव महिष्यां तत्त्वं तन्महिष्युपाधिकं ब्रह्मोक्तवान् । ततः सोऽपि महिषीस्नेहलक्षणप्रतिबंधकापगमेन गुरूपदिष्टं तत्त्वं यथावच्छास्त्रोक्तप्रकारेणैव ज्ञातवानित्यर्थः ॥ ४२ ॥

**अ० टीका**—एवं तर्हि किं नैव तस्मिञ्जन्मनि ज्ञानोत्पत्तिरित्यत आह —**अनुसृत्येति ।** तस्येत्यार्थिकम् । महिष्यां प्रागुपभुक्तराजपत्न्यामित्यर्थः । स्नेहं यथा हृदयवर्तित्वात्तेन संन्यासिना रहसि निवेदितं निजप्रमाणमिति यावत् । अनुसृत्य यथार्थकथकत्वेन सुप्रसन्नो गुरुः परमकारुणिकः । महिष्यामेव निरुक्तराजरमण्यामेव पंचकोशादिविवेककथनेन तत्त्वमुक्तवानित्यन्वयः ॥ ४२ ॥

**रा० टीका**—एवमतीतप्रतिबंधं प्रदर्श्य वर्तमानं दर्शयति—

**प्रतिबंधो वर्तमानो विषयासक्तिलक्षणः ॥**
**प्रज्ञामांद्यं कुतर्कश्च विपर्ययदुराग्रहः ॥ ४३ ॥**

**प्रतिबंध इति ।** वर्तमानः प्रतिबंधश्चित्तस्य विषयासक्तिरूप एकः, प्रज्ञामांद्यं बुद्धेस्तैक्ष्ण्याभावः, कुतर्कश्च शुष्कतार्किकत्वेन श्रुत्यर्थस्यान्यथोहनं, विपर्ययदुराग्रहो विपर्यय आत्मनः कर्तृत्वादिधर्मयुक्तत्वज्ञानलक्षणे दुराग्रहो युक्तिरहितोऽभिनिवेशः, एतेषामन्यतमस्यापि सत्त्वे ज्ञानं नोदेतीत्यर्थः ॥ ४३ ॥

**अ० टीका**—एवं भूतप्रतिबंधं निरूप्य वर्तमानं तं कथयति—**प्रतिबंध इति**॥४३॥

**रा० टीका**—अस्यापि प्रतिबंधस्य केन निवृत्तिरित्यत आह —

**शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ॥**
**नीतेऽस्मिन्प्रतिबंधेऽतः स्वस्य ब्रह्मत्वमश्नुते ॥ ४४ ॥**

**शमाद्यैरिति ।** शमादयः—शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वेतिश्रुत्युक्ताः । श्रवणादयः—श्रोतव्यो मंतव्यो निदिध्यासितव्य इति श्रुत्याऽभिहिताः । एतैः साधनैस्तत्र तत्र तस्य तस्य प्रतिबंधस्य निवर्तन उचितैर्योग्यैस्तस्मिंस्तस्मिन्प्रतिबंधे क्षयं नीते सति विनाशिते सति । अतः प्रतिबंधापगमादेव स्वस्य प्रत्यगात्मनो ब्रह्मत्वं प्राप्नोतीत्यर्थः ॥ ४४ ॥

**अ० टीका**— ननु चतुर्विधस्यास्य कः प्रशमोपाय इत्यत्राऽऽह—**शमाद्यैरित्यादि** क्रमेण । एवं च विषयासक्तेः शमाद्यैः श्रवणेन प्रज्ञामांद्यस्य मननेन कुतर्कस्य निदिध्यासनेन विपर्ययरूपात्मकर्तृत्वजगत्सत्यत्वविषयकदुराग्रहलक्षणानिर्युक्तिकाभिमानस्य क्षय इत्याशयः । ननु त्वया तूपक्रमेऽसौ पंचविधः प्रपंचित इति चेत्सत्यम् । प्रकृत**वार्तिक**स्थविपर्ययदुराग्रहपदस्वारस्यतः **श्रीमधुसूदनाचार्यै**रेव विपर्ययपदेन साधनविपरीतभावनां दुराग्रहपदेन फलविपरीतभावनामभिप्रेत्य **संक्षेपशारीरक**टीकायां तथोक्तत्वादत्र तु **प्राचीनटीकानुसारे**णैव चातुर्विध्योक्तेश्च ॥ ४४ ॥

**रा० टीका**—इदानीं भाविप्रतिबंधं दर्शयति—

**आगामिप्रतिबंधश्च वामदेवे समीरितः ॥**
**एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः ॥ ४५ ॥**

**आगामीति ।** आगामिप्रतिबंधो जन्मांतरहेतुः प्रारब्धशेष इत्यर्थः । तस्य च भोगमं-

तरेण निवृत्त्यभावात्तन्निवृत्तौ कालनियमो नास्तीत्याह—**एकेनेति** । स चैकेन जन्मना क्षीणो वामदेवस्येति शेषः । भरतस्य त्रिजन्मभि क्षीण इत्यनुषज्यते ॥ ४५ ॥

**अ० टीका**—एवमागामिनमपि तं सोदाहरणं विवृणोति—**आगामीत्यादिनवभिः** ॥ ४५ ॥

**रा० टीका**—नन्वेकेन त्रिजन्मभिर्वेतिनियतकालत्वं भवतैवोच्यत इत्याशंक्याऽऽह—

**योगभ्रष्टस्य गीतायामतीते बहुजन्मनि ॥**
**प्रतिबंधक्षयः प्रोक्तो न विचारोऽप्यनर्थकः ॥ ४६ ॥**

**योगेति** । योगभ्रष्टस्तत्त्वसाक्षात्कारपर्यंतं विचाररहित इत्यर्थः । तर्हि तत्त्वविचारो निष्फलः स्यादित्याशंक्याऽऽह—**न विचारोऽपीति** । प्रतिबंधनिवृत्त्यनंतरमेवापरोक्षज्ञानलक्षणफलसद्भावादिति भावः ॥ ४६ ॥

**अ० टीका**—नन्वेकजन्मादिनैयत्यं प्रतिबंधक्षये चेद्वरमित्यत आह—**योगेति**॥४६॥

**प्राप्य पुण्यकृतां लोकानात्मतत्त्वविचारतः ॥**
**शुचीनां श्रीमतां गेहे साभिलाषोऽभिजायते ॥ ४७ ॥**

**रा० टीका**—**गीतायां** प्रतिपादितमर्थं दर्शयति—**प्राप्येत्यादिना ततो याति परां गतिमित्यंतेन** । **प्राप्येति** । योगभ्रष्ट आत्मतत्त्वविचारबलादेव पुण्यकारिणां लोकान्स्वर्गविशेषान्प्राप्य तत्र बहुकालं सुखमनुभूय तद्भोगावसाने साभिलापश्चेदस्मिँल्लोके शुचीनां मातृतः पितृतः शुद्धानां श्रीतमां कुलेऽभिजायते ॥ ४७ ॥

**अ० टीका**—ननु कथं न विचारानर्थक्यमत आह—**प्राप्येत्यादि**गीतावाक्यार्थकथनेन ॥ ४७ ॥

**रा० टीका**—पक्षांतरमाह—

**अथवा योगिनामेव कुले भवति धीमताम् ॥**
**निस्पृहो ब्रह्मतत्त्वस्य विचारात्तद्धि दुर्लभम् ॥ ४८ ॥**

**अथ वेति** । निस्पृहः स्वयमतिविरक्तश्चेद्ब्रह्मतत्त्वविचारादेव धीमतामात्मतत्त्वनिश्चयविचारवतां योगिनां चित्तैकाग्र्यवतां कुले भवति जायत इत्यर्थः । पूर्वस्मात्पक्षात्को विशेष इत्याह—**तद्धीति** । हि यस्मात्कारणात्तद्योगिकुले जन्म दुर्लभमल्पपुण्येनालभ्यमित्यर्थः ॥ ४८ ॥

**अ० टीका**—निरभिलापे वैलक्षण्यं संक्षिपति—**अथवेति** ॥ ४८ ॥

**रा० टीका**—तस्य दुर्लभत्वमुपपादयति—

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥**
**यतते च ततो भूयस्तस्मादेतद्धि दुर्लभम् ॥ ४९ ॥**

**तत्रेति** । हि यस्मात्कारणात्तत्र तस्मिञ्जन्मनि पौर्वदेहिकं पूर्वदेहभवं तं बुद्धिसंयोगं तत्त्वविचारगोचरबुद्धिसंबंधं शीघ्रं लभते प्राप्नोति न केवलं बुद्धिसंबंधमात्रलाभः किंतु ततः पूर्वस्मात्प्रयत्नाद्भूयो यतते चाधिकं प्रयत्नं करोति तस्मादेतज्जन्म दुर्लभमित्यर्थः ॥ ४९ ॥

**अ० टीका**—ततः किं तदाह—**तत्रेति** ॥ ४९ ॥

**रा० टी०**—भूयोऽभ्यासे कारणमाह—

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ५० ॥**

**पूर्वेति** । योगभ्रष्टस्तेन पूर्वाभ्यासेनैवावशोऽप्यस्वाधीनोऽपि ह्रियत आकृष्यत एवमनेकेषु जन्मसुकृतेन प्रयत्नेन संसिद्धस्तत्त्वज्ञानसंपन्नस्ततस्तस्मात्तत्त्वज्ञानात्परां गतिं मुक्तिं याति प्राप्नोतीत्यर्थः ॥ ५० ॥

**अ० टीका**—अत एव—**पूर्वेति** ॥ ५० ॥

**रा० टीका**—आगामि प्रतिबंधांतरं दर्शयति—

**ब्रह्मलोकाभिवांछायां सम्यक्सत्यां निरुद्ध्य ताम् ॥**
**विचारयेद्य आत्मानं न तु साक्षात्करोत्ययम् ॥ ५१ ॥**

**ब्रह्मलोकेति** । ब्रह्मलोकप्राप्तीच्छायां दृढायां सत्यां तां निरुध्य य आत्मानं विचारयेत्तस्य साक्षात्कारो नैव जायत इत्यर्थः ॥ ५१ ॥

**अ० टीका**—एवं चतुर्थमपि तमाह—**ब्रह्मेति** । उपलक्षणमिदं वैकुंठादेरपि॥५१॥

**रा० टीका**—ननु तर्हि तस्य कदाऽपि मुक्तिर्न स्यादित्याशंक्याऽऽह—

**वेदांतविज्ञानसुनिश्चितार्था इति शास्त्रतः ॥**
**ब्रह्मलोके स कल्पांते ब्रह्मणा सह मुच्यते ॥ ५२ ॥**

**वेदांतेति** । " वेदांतविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परांतकाले परामृताः परिमुच्यंति सर्वे " " ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यांते कृतात्मानः प्रविशंति परं पदम् " इत्या**दिशास्त्र**वशाद्ब्रह्मलोकप्राप्त्यनंतरं तत्त्वं साक्षात्कृत्य ब्रह्मणा सह मुक्तिर्भविष्यतीत्यर्थः ॥ ५२ ॥

**अ० टीका**—ननु तर्हि तस्य का गतिरित्यत आह—**वेदांतेति** । " **वेदांतवि**ज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परांतकाले परामृतात्परिमुच्यंति सर्वे " इति **तैत्तिरीयश्रुतेः** । " ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यांते कृतात्मानः प्रविशंति परं पदम् " इति **स्मृते**श्चेत्यर्थः ॥ ५२ ॥

**रा० टीका**—एवं तत्त्वविचारे क्रियमाणे प्रतिबंधवशादत्र साक्षात्कारो न जायत इत्यभिधाय तीव्रपापिनां तु सोऽपि विचारो दुर्लभ इत्याह—

**केषांचित्स विचारोऽपि कर्मणा प्रतिबद्ध्यते ॥**
**श्रवणायापि बहुभिर्यो न लभ्य इति श्रुतेः ॥ ५३ ॥**

**केषांचिदिति** । तत्र प्रमाणमाह—**श्रवणायेति** । यः परमात्मा बहुभिः पुरुषैः श्रवणायापि श्रोतुमपि न लभ्यो दुर्लभ इत्यर्थः ॥ ५३ ॥

**अ० टीका**—न केवलमेते ज्ञान एव प्रतिबंधाः संति किं तु तत्साधके विचारेऽपि दूरदृष्टविशेषलक्षणोऽसौ विद्यत एवेत्याह—**केषांचिदिति** । तत्र प्रमाणमाह—**श्रवणायापीति** । उपलक्षणमिदं जीवन्मुक्त्याख्ये ज्ञानफले प्रतिबंधस्यापि तत्प्रपंचनं तु **जीवन्मुक्तिविवेकप्रकाश** एव करिष्याम इति दिक् ॥ ५३ ॥

**रा० टीका**—एतावता सति प्रतिबंधे तत्त्वसाक्षात्कारस्तत्साधनभूतो विचारश्च न संभवतीत्यभिधायेदानीं विचारासमर्थेन पुरुषार्थिना किं कर्तव्यमित्यपेक्षायां " विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोः " इति यत्प्राक्प्रतिज्ञातं तदुपपादयति—

**अत्यंतबुद्धिमांद्याद्वा सामग्र्या वाऽप्यसंभवात् ॥**
**यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥ ५४ ॥**

**अत्यंतेति** । सामग्र्यसंभवो नाम तदुपदेष्टुर्गुरोरध्यात्मशास्त्रस्य देशकालादेर्वाऽसंभवस्तस्मादित्यर्थ ॥ ५४ ॥

**अ० टीका**—एवं वार्तिकोक्तं सर्वं प्रतिबंधविधिमभिधायाधुना—" विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोः " इति यत्प्राक्प्रतिज्ञातं तत्संगतिं प्रतिपादयति—**अत्यंतेति**। सामग्र्या गुरुशास्त्रात्मिकाया इत्यर्थः ॥ ५४ ॥

**निर्गुणब्रह्मतत्त्वस्य न ह्युपास्तेरसंभवः ॥**
**सगुणब्रह्मणीवात्र प्रत्ययावृत्तिसंभवात् ॥ ५५ ॥**

**रा० टीका**—ननु निर्गुणब्रह्मतत्त्वस्य गुणरहितत्वात्तदुपासनं न घटत इत्याशंक्योपासनस्य प्रत्ययावृत्तिरूपत्वात्सगुणब्रह्मणीव निर्गुणेऽपि तत्संभवतीत्याह— **निर्गुणेति** ॥ ५५॥

**अ० टीका**—निर्गुणे कथमुपासनमित्यत्राऽऽह—**निर्गुणेति** ॥ ५५ ॥

**अवाङ्मनसगम्यं तन्नोपास्यमिति चेत्तदा ॥**
**अवाङ्मनसगम्यस्य वेदनं न च संभवेत् ॥ ५६ ॥**

**रा० टीका**—ननु निर्गुणस्य ब्रह्मणो वाङ्मनसगोचरत्वाभावान्नोपास्यत्वमित्याशंक्य वेदनपक्षेऽप्ययं दोषः समान इत्याह—**अवाङ्मनसेति** ॥ ५६ ॥

**अ० टीका**—नन्ववाङ्मनसगम्ये तत्र प्रत्ययावृत्तिलक्षणं नैवोपासनं संभवतीत्याशंक्य प्रतिबंद्या समाधत्ते—**अवागिति** ॥ ५६ ॥

**वागाद्यगोचराकारमित्येवं यदि वेत्त्यसौ ॥**
**वागाद्यगोचराकारमित्युपासीत नो कुतः ॥ ५७ ॥**

**रा० टीका**—ननु ब्रह्मावाङ्मनसगोचरमित्येवं ज्ञातुं शक्यमित्याशंक्यैवमेवोपासितुमपि शक्यमित्याह—**वागादीति** ॥ ५७ ॥

**अ० टीका**—अथ प्रतिबंदीमोचनमपि साम्येन प्रत्याह—**वागादीति** ॥५७॥

**रा० टीका**—ब्रह्मण उपास्यत्वे सगुणत्वं प्रसज्येतेत्याशंक्य वेद्यत्वेऽपि तत्सगुणत्वं स्यादित्याह—

**सगुणत्वमुपास्यत्वाद्यदि वेद्यत्वतोऽपि तत् ॥**
**वेद्यं चेल्लक्षणावृत्त्या लक्षितं समुपास्यताम् ॥ ५८ ॥**

**सगुणत्वमिति** । तत्सगुणत्वमित्यर्थः । ननु लक्षणावृत्त्याश्रयणान्न वेद्यत्वे सगुणत्वप्रसंग इत्याशंक्य उपासनमपि तथैव क्रियतामित्याह—**वेद्यं चेदिति** ॥ ५८ ॥

**अ० टीका**—एवमुपास्यत्वात्सगुणत्वमाशंक्य प्रतिबंद्यैव समाधत्ते—**सगुणत्वमिति**। प्रकृतेऽपि प्रतिबंदीमोचनमाशंक्य साम्येनैव शमयति—**वेद्यं चेदिति** ॥ ५८ ॥

**रा० टीका**—ननु ब्रह्मण उपास्यत्वं श्रुत्या निषिध्यत इति शंकते—

**ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥**
**इति श्रुतेरुपास्यत्वं निषिद्धं ब्रह्मणो यदि ॥ ५९ ॥**

**ब्रह्म विद्धीति।** "यन्मनसा न मनुते येनाहुर्मनोमतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति **श्रुतिरुपास्यस्य** ब्रह्मत्वं निषेधयतीत्यर्थः। त्वं यदवाङ्मनसगम्यं तदेव ब्रह्म विद्धीदमिति यत्तूपासते पुरुषास्तन्न विद्धीति योजना ॥ ५९ ॥

**अ० टीका**—उपास्यत्वं श्रुत्या ब्रह्मणि निषिद्धमिति शंकते—**ब्रह्मेति।** "तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते" इति **तवल्का(लवका)रोपनिषत्?** ॥ ५९ ॥

**रा० टीका**—उपास्यत्ववद्वेद्यत्वस्यापि तन्निषेधः समान इत्याह—

**विदितादन्यदेवेति श्रुतेर्वेद्यत्वमस्य न ॥**
**यथा श्रुत्यैव वेद्यं चेत्तथा श्रुत्याऽप्युपास्यताम् ॥ ६० ॥**

**विदितादिति।** अन्यदेव तद्विदितादथोऽविदितादधीति ब्रह्मणो वेद्यत्वमपि निवारयतीत्यर्थः। विदिताज्ज्ञानादित्यर्थः। अविदितादज्ञातादित्यर्थः। विदिताविदिताभ्यामन्यद्ब्रह्मेति **श्रुतिः** प्रतिपादयतीति चेत्तर्हि तथैव तज्जानीयादित्याशंक्योपासनेऽप्येतत्समानमित्याह—**यथेति** ॥ ६० ॥

**अ० टीका**—अन्यदेव तद्विदितादथो अविदितादधीतितच्छ्रुत्यैव तत्र वेद्यत्वमपि निषिद्धमिति प्रतिबंद्यैव समाधत्ते—**विदितादिति।** फलितमाह-**यथेति।** **दृश्यते** त्वग्र्यया बुद्ध्येत्यादिरूपयेत्यर्थः। **तथेति। प्रज्ञां** कुर्वीतेति श्रुत्येत्यर्थः ॥ ६० ॥

**रा० टीका**—ननु वेद्यत्वं ब्रह्मणो वास्तवं न भवतीत्याशंक्योपास्यत्वमपि तथेत्याह—

**अवास्तवी वेद्यता चेदुपास्यत्वं तथा न किम् ॥**
**वृत्तिव्याप्तिर्वेद्यता चेदुपास्यत्वेऽपि तत्समम् ॥ ६१ ॥**

**अवास्तवीति।** ननु वेदनपक्षे वृत्तेर्ब्रह्माकारत्वमस्ति नोपासन इत्याशंक्य शब्दबलात्तदाकारत्वमुभयत्र समानमित्याह—**वृत्तीति** ॥ ६१ ॥

**अ० टीका**—उपासनेऽवास्तवत्वादिकं वेदनसममेवेत्याह—**अवास्तवीति** ॥ ६१ ॥

**रा० टीका**—युक्तिशून्य उपालंभस्तु त्वत्पक्षेऽपि समान इत्याह—

**का ते भक्तिरुपास्तौ चेत्कस्ते द्वेषस्तदीरय ॥**
**मानाभावो न वाच्योऽस्यां बहुश्रुतिषु दर्शनात् ॥ ६२ ॥**

**का त इति।** ननु निर्गुणोपासने प्रमाणं नास्तीत्याशंक्यानेकासु श्रुतिषूपलभ्यमानत्वान्नैवमित्याह—**मानाभाव इति** ॥ ६२ ॥

**अ० टीका**—ननु निर्गुणाहंग्रहोपासन एव तवेदं किमिति प्रेमेति चेत्त्वदीयोऽत्र द्वेषोऽपि किंमूलकस्तत्कथयेत्याह—**का ते भक्तिरिति।** प्रमाणाभावं तत्राऽऽशंक्य प्रत्याह—**मानेति** ॥ ६२ ॥

**रा० टीका**—बहुश्रुतिषु दर्शनादित्युक्तमर्थं विवृणोति—

**उत्तरस्मिंस्तापनीये शैब्यप्रश्नेऽथ काठके ॥**
**मांडूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥ ६३ ॥**

**उत्तरस्मिन्निति । तापनीयोपनिषदि** तावत् " देवा ह वै प्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्व " इत्यादिना बहुधा निर्गुणोपासनमभिधीयते **शैब्यप्रश्ने प्रश्नोपनिषदि** पंचमे प्रश्ने " यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत " इति । **काठके कठवल्ल्यां** " सर्वे वेदा यत्पदमामनंति " इत्युपक्रम्य " एतद्ध्येवाक्षरं ब्रह्म एतदालंबनं श्रेष्ठम् " इत्यादिना प्रणवोपासनमुच्यते । **मांडूक्योपनिषदि** " ओमित्येतदक्षरमिदं सर्वमित्यादिनाऽवस्थायातीततुरीयोपासनमेवाभिधीयत इत्यर्थः । आदिशब्देन **तैत्तिरीयमुंडकादयो** गृह्यंते ॥ ६३ ॥

**अ० टीका**—तत्र कासांचिच्छ्रुतीनां नामान्याह—**उत्तरस्मिन्निति । नृसिंहोत्तरतापनीये** यथा " देवा ह वै प्रजापतिमब्रुवन्नणोरणीयांसमिममात्मानमोंकारं व्याचक्ष्व " इत्यादिना । एवं **प्रश्नोपनिषदि** शैब्यप्रश्ने—" यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायते " इति । तद्वत्**कठवल्ल्याम्**—" सर्वे वेदा यत्पदमामनंति " इत्युपक्रम्य " तत्तेपदं संग्रहेण ब्रवीम्योम् " इत्येतदिति । तथा **मांडुक्योपनिषद्यपि**—" ओमित्येतदक्षरमिदं सर्वम् " इत्यादिना । आदिना—" ओमिति ब्रह्म । ओमितीदꣳ सर्वम् " इत्यादि **तैत्तिरीयकादि** ॥६३॥

**रा० टीका**—ननु निर्गुणोपासनं कथमनुष्ठेयमित्यत आह—

**अनुष्ठानप्रकारोऽस्याः पंचीकरण ईरितः ॥**
**ज्ञानसाधनमेतच्चेन्नेति केनात्र वारितम् ॥ ६४ ॥**

**अनुष्ठानेति ।** नन्वेतदुपासनं ज्ञानसाधनमेव न मुक्तिसाधनमित्याशंक्य ब्रह्मतत्त्वोपास्त्याऽपि मुच्यत इतिवदतामस्माकमनुकूलमित्याह—**ज्ञानसाधनमिति** ॥ ६४ ॥

**अ० टीका**—ननु भवत्वेवमत्र प्रामाणिकत्वमथाप्यनुष्ठानप्रकारोऽस्याः क्वोक्त इत्यत आह—**अनुष्ठानेति** । ननु ज्ञानसाधनमेवोक्तोपासनमिति चेन्नेति को ब्रूत इत्याह—**ज्ञानेति** ॥ ६४ ॥

**नानुतिष्ठति कोऽप्येतदिति चेन्माऽनुतिष्ठतु ॥**
**पुरुषस्यापराधेन किमुपास्तिः प्रदुष्यति ॥ ६५ ॥**

**रा० टीका**—ननु सगुणोपासनमेव सर्वैरनुष्ठीयते न निर्गुणोपासनमित्याशंक्य तस्य प्रमाणसिद्धस्यापलापो न युक्त इत्याह—**नानुतिष्ठतीति** ॥ ६५ ॥

**अ० टीका**—नन्वेतदनुष्ठानं लोके प्रायः कोऽपि न करोतीत्यत्राऽऽह—**नानुतिष्ठतीति** ॥ ६५ ॥

**रा० टीका**—प्रमाणसिद्धस्यानुष्ठानाभावेनापरित्याज्यत्वे दृष्टांतमाह—

**इतोऽप्यतिशयं मत्वा मंत्रान्वश्यादिकारिणः ॥**
**मूढा जपंतु तेभ्योऽतिमूढाः कृषिमुपासताम् ॥ ६६ ॥**

**इतोऽपीति ।** अयमभिप्रायः । यथा सगुणोपासनेभ्यः कालांतरभाविफलेभ्यो वश्यादिकारिमंत्रेष्वैहिकफलप्रदत्वमतिशयं बुद्ध्वा मूढानां तन्मंत्रजपादौ प्रवृत्तावपि विवेकिभिः सगु-

णोपासनं न परित्यज्यते । यथा वा नियमानुष्ठानापेक्षेभ्यस्तेभ्योऽपि मंत्रेभ्यः कृष्यादावतिशयं नियमनैरपेक्ष्यं मत्वा मूढतराणां तत्र प्रवृत्तावपि तन्मंत्रानुष्ठानं न परित्यज्यते तथा सांसारिकफलेप्सूनां निर्गुणोपासनानुष्ठानाभावेऽपि न मुमुक्षुभिर्निर्गुणोपासनं त्यज्यत इति ॥ ६६ ॥

**अ० टीका**—ननूक्तोपासनाननुष्ठाने कः पुरुषस्यापराध इत्याशंक्याविवेक एवेत्याशयेन तादृशाविवेकिनः सोदाहरणमुपेक्ष्या निंदति—**इतोऽपीति** । ज्ञानद्वारा मोक्षप्रदनिर्गुणाहंग्रहोपासनतोऽपीत्यर्थः । मत्वा बालाविलासादिविषयसुखशून्येन किं मोक्षेणेति स्वमनीषिकयैव संकल्प्येति यावत् । मंत्राञ्श्रीविद्यादिमंत्रान् । स तावत्पंचदशाक्षर एव कूटत्रयात्मकः **शाक्तैः** पंचदशीति बीजांतरनिक्षेपेण षोडशीति व्यवह्रियते । तदनादरेण साक्षान्मोक्षप्रदतत्त्वविचारार्थमेव परमकारुणिकाभ्यामेताभ्यामाचार्याभ्यामियं पंचदशी जीवन्मुक्तिविवेकेन सह षोडशी च मुमुक्ष्वेकानुजिघृक्षयाऽकारीति रहस्यम् ॥ ६६ ॥

**रा० टीका**—एवं प्रासंगिकं परिसमाप्य प्रकृतमनुसरति—

**तिष्ठंतु मूढाः प्रकृता निर्गुणोपास्तिरीर्यते ॥**
**विद्यैक्यात्सर्वशाखास्थान्गुणानत्रोपसंहरेत् ॥ ६७ ॥**

**तिष्ठंत्विति** । सर्ववेदांतप्रत्ययं चोदनाद्यविशेषादित्युक्तन्यायेन निर्गुणोपासनस्यैकत्वात्तासु तासु शाखासु श्रुतानुपास्यगुणानेकत्रोपसंहृत्योपासनं कर्तव्यमित्याह—**विद्येति** ॥६७॥

**अ० टीका**—एवं मूर्खाननादृत्य प्रकृतमनुसरति—**तिष्ठंत्विति** । तत्प्रकारमाह—**विद्येति** ॥ ६७ ॥

**आनंदादेर्विधेयस्य गुणसंघस्य संहृतिः ॥**
**आनंदादय इत्यस्मिन्सूत्रे व्यासेन वर्णिता ॥ ६८ ॥**

**रा० टीका**—ते च गुणा द्विप्रकाराः । विधेया निषेध्याश्चेति । तत्राऽऽनंदो ब्रह्म विज्ञानमानंदं ब्रह्म नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरंजनो विभुरद्वय आनंदः परः प्रत्यगेकरसः इत्यादयो ये विधेयगुणास्तेषामुपसंहार "आनंदादयः प्रधानस्य" इत्यस्मिन्नधिकरणेऽभिहित इत्याह—**आनंदादेरिति** ॥ ६८ ॥

**अ० टीका**—इदमसांप्रदायिकमिति के ते गुणा इति च शंकां शमयन्सप्रमाणं विधिनिषेधमुखांस्तानाह—**आनंदादेरित्यादिद्वाभ्याम्** । सूत्रे " आनंदादयः प्रधानस्य " इत्यधिकरणे ॥ ६८ ॥

**अस्थूलादेर्निषेध्यस्य गुणसंघस्य संहृतिः ॥**
**तथा व्यासेन सूत्रेऽस्मिन्नुक्ताऽक्षरधियां त्विति ॥ ६९ ॥**

**रा० टीका**—ये चास्थूलमनण्वह्रस्वं यत्तदद्रेश्यमग्राह्यमशब्दमस्पर्शमरूपमव्ययमित्यादयो निषेध्यगुणास्तत्र तत्र श्रुतास्तेषामुपसंहारोऽक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदनवत्तदुक्तमित्यस्मिन्नधिकरणेऽभिहित इत्याह—**अस्थूलादेरिति** ॥ ६९ ॥

**अ० टीका—अस्थूलादेरिति** । सूत्रे—" अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् " इत्यधिकरण इत्यर्थः । अक्षरार्थस्तु **ब्रह्मामृतवर्षिण्यां** तद्वृत्तावेव ज्ञेयः॥६९॥

**निर्गुणब्रह्मतत्त्वस्य विद्यायां गुणसंहृतिः ॥**
**न युज्येतेत्युपालंभो व्यासं प्रत्येव मां न तु ॥ ७० ॥**

**रा० टीका**—ननु निर्गुणब्रह्मविद्यायां न गुणोपसंहार एव युज्यते निर्गुणविद्यात्वविरोधादित्याशंक्य सूत्रकारेणैवमभिहितस्योपसंहारस्यास्माभिरभिधीयमानत्वान्नास्मान्प्रतीदं चोद्यमुचितमित्याह—**निर्गुणेति** ॥ ७० ॥

**अ० टीका**—तत्राप्याक्षिप्य मन्यमानातुमुपहसति—**निर्गुणेति** ॥ ७० ॥

**हिरण्यश्मश्रुसूर्यादिमूर्तीनामनुदाहृतेः ॥**
**अविरुद्धं निर्गुणत्वमिति चेत्तुष्यतां त्वया ॥ ७१ ॥**

**रा० टीका**—हिरण्यश्मश्रुत्वादिगुणविशिष्टमूर्तीनामनभिधानादिदं निर्गुणोपासनमेवेति चेत्तर्हि न विरोध इत्याह—**हिरण्येति** । हिरण्यश्मश्रुसूर्यादिमूर्तीनां हिरण्यमयानि श्मश्रूणि यस्यासौ हिरण्यश्मश्रु तथाविधः सूर्यो हिरण्यश्मश्रुः सूर्य आदिर्येषां ते हिरण्यश्मश्रुसूर्यादयस्तेषां मूर्तयो हिरण्यश्मश्रुसूर्यादिमूर्तयस्तासामिति विग्रहः ॥ ७१ ॥

**अ० टीका**—उपहासाभिसंधिं बुद्ध्वाऽनुकूलं प्रत्यनुमोदते—**हिरण्येति** ॥ ७१ ॥

**गुणानां लक्षकत्वेन न तत्त्वेऽतःप्रवेशनम् ॥**
**इति चेदस्त्वेवमेव ब्रह्मतत्त्वमुपास्यताम् ॥ ७२ ॥**

**रा० टी०**—ननु आनंदादीनामस्थूलादीनां च गुणानामुपास्यतत्त्वेऽतःप्रवेशाभावात्तद्गुणविशिष्टत्वेन कथमुपास्यत्वमित्याशंक्य तेषां तत्त्वांतःप्रवेशाभावेऽपि तेषां लक्षकत्वसंभवात्तैर्लक्षितं ब्रह्मोपास्यमित्याह—**गुणानामिति** ॥ ७२ ॥

**अ० टीका**—ननूक्तसूत्रोक्तानामानंदादीनां विधेयगुणानामस्थूलादीनां निषेध्यगुणानां च तत्त्वलक्षकत्वान्न तत्र तेषां प्रवेश इत्ययुक्तमेव तद्विशिष्टब्रह्मोपासनं प्रकृतं तैर्विना कथं सिध्यतीति चेत्सत्यम् । निरुक्तगुणैर्लक्ष्यमेवास्तु ब्रह्मोपास्यमित्याह—**गुणानामिति** ॥ ७२ ॥

**रा० टीका**—तथोपासनप्रकारमेव दर्शयति—

**आनंदादिभिरस्थूलादिभिश्चाऽऽत्माऽत्र लक्षितः ॥**
**अखंडैकरसः सोऽहमस्मीत्येवमुपासते ॥ ७३ ॥**

**आनंदादिभिरिति** । अत्राऽऽसु श्रुतिषु योऽखंडैकरस आत्माऽऽनंदादिभिरस्थूलादिभिश्च गुणैर्लक्षितः सोऽहमस्मीत्येवमुपासते मुमुक्षव इति शेषः ॥ ७३ ॥

**अ० टीका**—एवं च कथमुपासनाकारः पर्यवसन्न इत्यत आह—**आनंदादिभिरिति** । उपासते ध्यायंति निरंतरं मुमुक्षव इति शेषः ॥ ७३ ॥

**बोधोपास्त्योर्विशेषः क इति चेदुच्यते शृणु ॥**
**वस्तुतंत्रो भवेद्बोधः कर्तृतंत्रमुपासनम् ॥ ७४ ॥**

**रा० टीका**—नन्वेवं सति विद्योपासनयोः कुतो भेद इत्याशंक्य वस्तुतंत्रकर्तृतंत्रत्वाभ्यां भेद इत्याह—**बोधोपास्त्योरिति** ॥ ७४ ॥

**अ० टीका**—नन्वेवं तर्हि बोधोपासनयोः कियान्विशेष इत्याशंकां व्युद्भाव्य समाधत्ते—**बोधोपास्त्योरिति** ॥ ७४ ॥

**रा० टीका**—वैलक्षण्यांतरसिद्धये बोधस्य हेत्वादिकं दर्शयति—

**विचाराज्जायते बोधोऽनिच्छा यं न निवर्तयेत् ॥**
**स्वोत्पत्तिमात्रात्संसारे दहत्यखिलसत्यताम् ॥ ७५ ॥**

**विचाराज्जायत** इत्यादिना श्लोकद्वयेन। **विचारादिति**। विचाराद्वस्तुतत्त्वविचाराद्बोधो जायते किं च विचाराज्जायमानं यं बोधमनिच्छाबोधो मा भूदित्येवंरूपा न निवर्तयन्न निवारयेदुत्पद्यमानश्च बोधः स्वजन्ममात्रात्संसारेऽखिलस्य प्रपंचस्य सत्यतां दहति नाशयति॥७५॥

**अ० टीका**—एवं सूत्रितं बोधोपास्त्योर्विशेषं विवृणोति—**विचारादिति**। अनिच्छाऽनादरः। अनिच्छतोऽपि विरहिणश्चंद्रादिज्ञानदर्शनाद्बोधस्य प्रमाणविषयीकृतवस्तुपरतंत्रत्वमेवेति भावः। ब्रह्मबोधे लौकिकबोधाद्वैलक्षण्यमाह—**स्वेति**। स्वविषयकमूलाज्ञानध्वंसनद्वारेत्यार्थिकम् ॥ ७५ ॥

**तावता कृतकृत्यः सन्नित्यतृप्तिमुपागतः ॥**
**जीवन्मुक्तिमनुप्राप्य प्रारब्धक्षयमीक्षते ॥ ७६ ॥**

**रा० टीका**—तावता तत्त्वज्ञानोत्पत्तिमात्रेण निरतिशयं सुखं प्राप्नोतीत्यर्थः॥७६॥

**अ० टीका**—तत्फलं साद्यस्कमेवेत्याह—**तावतेति**। ईक्षते प्रतिक्षणमुपभोगेन क्षीयमाणं साक्षित्वेन पश्यतीत्यर्थः ॥ ७६ ॥

**रा० टीका**—उपासनायाश्च बोधाद्वैलक्षण्यांतरसिद्धये तद्दर्शयति—

**आप्तोपदेशं विश्वस्य श्रद्धालुरविचारयन् ॥**
**चिंतयेत्प्रत्ययैरन्यैरनंतरितवृत्तिभिः ॥ ७७ ॥**

**आप्त इति**। आप्तस्य गुरोरुपदेशमुपास्य स्वरूपप्रतिपादकवाक्यजातं विश्वस्य विश्वासं कृत्वा विचारयन्नुपास्य तत्त्वंप्रत्ययैरन्यैर्विजातीयघटादिविपयैरनंतरितवृत्तिभिरव्यवहितवृत्तिभिश्चिंतयेदिति ॥ ७७ ॥

**अ० टीका**—एवं बोधस्य हेतुकार्ये निरूप्योपास्तेस्ते निरूपयति—**आप्तेति**। अन्यैर्विजातीयैः। **अनंतरितेति**। निरुक्तप्रत्ययकृतव्यवधानहीनवृत्तिभिरहं ब्रह्मास्मीति चिंतयेदित्यन्वयः ॥ ७७ ॥

**यावच्चिंत्यस्वरूपत्वाभिमानः स्वस्य जायते ॥**
**तावद्विचिंत्य पश्चाच्च तथैवाऽऽमृति धारयेत् ॥ ७८ ॥**

**रा० टीका**—कियंतं कालं चिंतयेदित्याशंक्याऽऽह—**यावदिति** ॥ ७८ ॥

**अ० टीका**—नन्वेवं कियत्कालं चिंतनीयमित्यत आह—**यावदिति** ॥ ७८ ॥

**रा० टीका**—उपासकस्य तद्रूपत्वाभिमानमुदाहरणप्रदर्शनेन स्पष्टीकरोति—

**ब्रह्मचारी भिक्षमाणो युतः संवर्गविद्यया ॥**
**संवर्गरूपतां चित्ते धारयित्वा ह्यभिक्षत ॥ ७९ ॥**

**ब्रह्मचारीति**। कश्चित्संवर्गत्वगुणविशिष्टप्राणोपासकब्रह्मचारी भिक्षाहरणार्थमागत्याभिप्रतारिनाम्नो राज्ञः पुरतः "महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापे-

य नाभिपश्यंति मर्त्या अभिप्रतारिन्बहुधा वसंतः" इतिमंत्रेण स्वात्मनः संवर्गरूपत्वं चित्ते धृतं प्रकटीकृतवानिति **छांदोग्ये** श्रूयत इत्यर्थः ॥ ७९ ॥

**अ० टीका**—क्षणमात्रमुपास्यवस्तुस्वरूपाभिमाने स्वस्य जातेऽपि तथैवाऽऽस्मृतिधारणमुदाहरणेन विवृणोति—**ब्रह्मचारीति** । कश्चित्संवर्गत्वगुणविशिष्टप्राणाहंग्रहोपासको ब्रह्मचारी भिक्षमाणः प्राक्तनसंस्कारात्स्नानशौचादिवद्भिक्षाटनमपि कुर्वाणः सन्संवर्गविद्यया **छांदोग्यप्रसिद्धयोक्तरूपप्राणोपासनयुतः** । अत एव । **संवर्गेत्यादि** योज्यम् । स कदाचिदभि**प्रतारिनाम्नो** राज्ञः सद्मनि भिक्षार्थं गतः सन् । " महात्मनश्चतुरो देव एकः सो जगार भुवनस्य गोपाः । तं कापेय नाभिपश्यंति मर्त्या अभिप्रतारिन्बहुधा वसंतम् " इतिमंत्रेण **छांदोग्यपठितेन** तं प्रति स्वमनसि धृतं स्वस्योक्तरूपप्राणतादात्म्यं प्रकटीचकारेति तत्रैवाऽऽम्नायते जगार जागर्ति । गोपाः गोप्ता । कापेय हे कपिगोत्रोत्पन्नेत्यर्थः ॥ ७९ ॥

**रा० टीका**—आमृतिधारणे निमित्तं दर्शयन्ननिच्छा यं न निवर्तयेदित्युक्ताद्बोधधर्माद्वैलक्षण्यमाह—

**पुरुषस्येच्छया कर्तुमकर्तुं कर्तुमन्यथा ॥**
**शक्योपास्तिरतो नित्यं कुर्यात्प्रत्ययसंततिम् ॥ ८० ॥**

**पुरुषस्येति** । उपास्तिः पुरुषस्योपासकस्येच्छया कर्तुमकर्तुमन्यथा प्रकारांतरेण वा कर्तुं शक्याऽतः पुरुषस्येच्छाधीनत्वादुपासनं सर्वदा कुर्यादित्यर्थः ॥ ८० ॥

**अ० टीका**—ततः किं तत्राऽऽह—**पुरुषस्येति** ॥ ८० ॥

**रा० टीका**—एवं सदा चिंतने किं भवतीत्यत आह—

**वेदाध्यायी ह्यप्रमत्तोऽधीते स्वप्नेऽधिवासनः ॥**
**जपिता तु जपत्येव तथा ध्यानाऽपि वासयेत् ॥ ८१ ॥**

**वेदाध्यायीति** । अप्रमत्तो वेदाध्यायी सदाऽध्ययनशीलो जपिता सदा जपशीलोऽधिवासतो दृढवासनया स्वप्नादिष्वध्ययनं जपं वा करोत्येवमुपासकोऽपि वासनादार्ढ्यात्स्वप्नादावपि ध्यायीतेत्यर्थः ॥ ८१ ॥

**अ० टीका**—तत्र लौकिकोदाहरणद्वयमप्याह—**वेदाध्यायीति** । वासितः संस्कृतः । ततः फलितं विधत्ते—**तथेत्यादिशेषेण** ॥ ८१ ॥

**रा० टीका**—स्वप्नादावपि ध्यानानुवर्तने कारणमाह—

**विरोधिप्रत्ययं त्यक्त्वा नैरंतर्येण भावयन् ॥**
**लभते वासनावेशात्स्वप्नादावपि भावनाम् ॥ ८२ ॥**

**विरोधीति** । वासनावेशात्संस्कारपाटवाद्भावनां ध्यानम् ॥ ८२ ॥

**अ० टीका**—ननु स्वप्नादावप्यध्येत्रादिदृष्टांतैर्ध्यातृत्वपर्यंतभावनादार्ढ्यसंपादनमतिदुःशकमिति चिंतातुरं सांत्वयति—**विरोधीति** ॥ ८२ ॥

**भुंजानोऽपि निजारब्धमास्थातिशयतोऽनिशम् ॥**
**ध्यातुं शक्तो न संदेहो विषयव्यसनी यथा ॥ ८३ ॥**

**रा० टीका**—ननु प्रारब्धकर्मवशाद्विषयाननुभवतः कथं नैरंतर्येण भावनासिद्धिरि-

त्याशंक्याऽऽस्थातिशये सति विषयव्यसनिवद्भावनासिद्धिः स्यादित्याह—**भुंजान इति**॥८३॥

**अ० टीका**—ननु प्रारब्धकर्मोपादितसुखदुःखशतं विषयसंनिकर्षैरनुभवतः कथं नैरंतर्येण ध्यानं स्यादित्यत्राऽऽह—**भुंजानोऽपीति** । तत्र दृष्टांतं स्पष्टयति—**विषयेति** ॥८३॥

**परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ॥**
**तदेवाऽऽस्वादयत्यंतः परसंगरसायनम् ॥ ८४ ॥**

**रा० टीका**—दृष्टांतं विवृणोति—**परव्यसनिनीति** ॥ ८४ ॥

**अ० टीका**—तमुदाहरति—**परेति** ॥ ८४ ॥

**परसंगं स्वादयंत्या अपि नो गृहकर्म तत् ॥**
**कुंठीभवेदपि त्वेतदापातेनैव वर्तते ॥ ८५ ॥**

**रा० टीका**—परसंगास्वादने गृहकृत्यविच्छेदः स्यादित्याशंक्याऽऽह—**परसंगमिति** ॥ ८५ ॥

**अ० टीका**—नन्वेवं परसंगरसायनास्वादने तस्या गृहकर्म कथं स्यादित्यत आह—**परसंगमिति** ॥ ८५ ॥

**गृहकृत्यव्यसनिनी यथा सम्यक्करोति तत् ॥**
**परव्यसनिनी तद्वन्न करोत्येव सर्वथा ॥ ८६ ॥**

**रा० टीका**—आपातेनैव वर्तत इत्युक्तमर्थं विवृणोति—**गृहकृत्येति** ॥ ८६ ॥

**अ० टीका**—आपातवर्तनमेव गृहकर्मणस्तस्या व्यतिरेकदृष्टांतेन व्याचष्टे—**गृहकृत्येति** ॥ ८६ ॥

**एवं ध्यानैकनिष्ठोऽपि लेशाल्लौकिकमारभेत् ॥**
**तत्त्ववित्त्वविरोधित्वाल्लौकिकं सम्यगाचरेत् ॥ ८७ ॥**

**रा० टीका**—दार्ष्टांतिके योजयति—**एवं ध्यानेति** । ननु तत्त्वविदपि लौकिकव्यवहारं किं लेशेनाऽऽचरति किं वा सम्यगिति विषयव्यवहारस्य तत्त्वज्ञानाविरोधित्वात्सम्यगेवाऽऽचरतीत्याह—**तत्त्वविदिति** ॥ ८७ ॥

**अ० टीका**—उक्तमर्थं दार्ष्टांतिके स्पष्टयति—**एवमित्यर्धेनैव** । ब्रह्मनिष्ठे तु तद्वैलक्षण्यं संक्षिपति—**तत्त्वविच्विति** ॥ ८७ ॥

**मायामयः प्रपंचोऽयमात्मा चैतन्यरूपधृक् ॥**
**इति बोधे विरोधः को लौकिकव्यवहारिणः ॥ ८८ ॥**

अविरुद्धत्वमेव दर्शयति—**मायामय इति** ॥ ८८ ॥

**अ० टीका**—अविरोधप्रकारमेव प्रबोधयति—**मायेति** ॥ ८८ ॥

**अपेक्षते व्यवहृतिर्न प्रपंचस्य वस्तुताम् ॥**
**नाप्यात्मजाड्यं किं त्वेषा साधनान्येव कांक्षति ॥ ८९ ॥**

**रा० टीका**—विरोधाभावमेव प्रपंचयति—**अपेक्षत इति** ॥ ८९ ॥

**अ० टीका**—तमेवाविरोधमुपपादयति—**अपेक्षत इति** ॥ ८९ ॥

**रा० टीका**—कानि तानि व्यवहारसाधनानीत्यत आह—

**मनोवाक्कायतद्बाह्यपदार्थाः साधनानि तान् ॥**
**तत्त्वविन्नोपमृद्नाति व्यवहारोऽस्य नो कुतः ॥ ९० ॥**

**मनोवागिति ।** तद्बाह्याः पदार्था गृहक्षेत्रादयस्तान्मनआदींस्तत्त्वज्ञानी न निवारयत्यतोऽस्य ज्ञानिनो व्यवहारः कुतो न भवति भवत्येवेत्यर्थः ॥ ९० ॥

**अ० टीका**—ननु जगत्सत्यत्वमंतरा कान्यन्यानि व्यवहृतेः साधनानि तत्राऽऽह—**मन इत्यादिना ।** नन्वेवमपि तत्त्वविदस्ते मनआदि सर्वेऽपि मिथ्याभूता एवातः कथं तैस्तस्य व्यवहार इत्यत आह—**तानित्यादिशेषेण ।** उपमर्दनमत्र ध्वंस एव न तु बाधस्तथा च बाधितैस्तैर्बाधित एव तस्य व्यवहारः कुमारीकर्तृकशिलापुत्रकादिव्यवहारवत्स्यादेवेति भावः ॥९०॥

**रा० टीका**—ननु विषयानुपमर्दनेऽपि तत्त्वविदा चित्तोपमर्दनं कार्यमित्याशंक्य तथाकरणे तत्त्वविदेव न स्यादित्याह—

**उपमृद्नाति चित्तं चेद्ध्याताऽसौ न तु तत्त्ववित् ॥**
**न बुद्धिमर्दयन् दृष्टो घटतत्त्वस्य वेदिता ॥ ९१ ॥**

**उपमृद्नातीति ।** ननु तत्त्वविदा चित्तं नोपमृद्यत इत्येतत्क्व दृष्टमित्याशंक्याऽऽह—**न बुद्धिमिति ।** घटतत्त्वस्य वेदिता ज्ञाता बुद्धिमर्दयन्पीडयन्नैकाग्र्यं कुर्वन्पुरुषो न दृष्टो नोपलब्ध इत्यर्थः ॥ ९१ ॥

**अ० टीका**—ननु " मन एव मनुष्याणां कारणं बंधमोक्षयोः । बंधाय विषयासक्तं मोक्षे निर्विषयं स्मृतम् " इति श्रुतेश्चित्तस्य निर्विषयत्वं ध्वंसमंतरा कथं स्यादित्यत्राऽऽह—**उपमृद्नातीति ।** तत्रार्थांतरन्यासं कथयति—**न बुद्धिमिति** ॥ ९१ ॥

**सकृत्प्रत्ययमात्रेण घटश्चेद्भासते सदा ॥**
**स्वप्रकाशोऽयमात्मा किं घटवच्च न भासते ॥ ९२ ॥**

**रा० टीका**—घटस्य स्थूलत्वेन स्पष्टत्वात्तद्दर्शने चित्तपीडनं नापेक्ष्यते ब्रह्मणस्त्वतथात्वात्तज्ज्ञाने तदपेक्ष्यत इत्याशंक्य तस्य स्वप्रकाशत्वेन घटादपि स्पष्टतरत्वाच्चित्तनिरोधनं नैवापेक्ष्यत इत्याह—**सकृदिति** ॥ ९२ ॥

**अ० टीका**—ननु घटदृष्टांतोऽत्र विषम एव । तस्य सकृत्प्रत्ययवेद्यत्वादित्याशंक्य समाधत्ते—**सकृदिति** ॥ ९२ ॥

**स्वप्रकाशतया किं ते तद्बुद्धिस्तत्त्ववेदनम् ॥**
**बुद्धिश्च क्षणनाश्येति चोद्यं तुल्यं घटादिषु ॥ ९३ ॥**

**रा० टीका**—ननु ब्रह्मणः स्वप्रकाशत्वेऽपि तद्गोचराया बुद्धिवृत्तेरेव तत्त्वज्ञानत्वात्तस्याश्च क्षणिकत्वेन ब्रह्मणि पुनः पुनरवस्थानमपेक्ष्यत इत्याशंक्येदं चोद्यं घटादिष्वपि समानमित्याह—**स्वप्रकाशतयेति** ॥ ९३ ॥

**अ० टीका**—ननु ब्रह्मणः स्वप्रकाशत्वमप्रयोजकं तत्सत्त्वेऽपि ब्रह्मणि भावरूपानाद्यविद्यासत्त्वानुभवात्किंतु विचारितमहावाक्यजन्यात्माभिन्नतद्विषयकबुद्धिरेवाविद्याध्वस्तिरूपमुक्तिदात्रीति यौष्माकीणः सिद्धांतः । सा च त्रिक्षणावस्थायिनीति सर्वास्तिकसंमतं तथाच तद्विलये

दीपापगमे तमोंतरेण तेनैव वा पुनरुपसृतेन तमसा घटस्येव तस्याद्वैतब्रह्मात्मवस्तुनः प्रतिक्षणमावरणसंभवात्तद्वारणाय यावत्प्रारब्धविध्वंसं बुद्धेस्तदाकारतासंपादनमावश्यकमेवेत्याशंक्य प्रतिबंद्यैव समाधत्ते—**स्वप्रकाशतयेति** ॥ ९३ ॥

**घटादौ निश्चिते बुद्धिर्नश्यत्येव यदा घटः ॥**
**इष्टो नेतुं तदा शक्य इति चेत्सममात्मनि ॥ ९४ ॥**

**रा० टीका**—घटादिज्ञानस्य क्षणिकत्वेऽपि सकृन्निश्चितस्य घटस्य सर्वदा व्यवहर्तुं शक्यत्वात्तत्र चित्तस्थैर्यसंपादनमप्रयोजकमित्याशंक्येदमात्मन्यपि समानमित्याह—**घटादाविति** ॥ ९४ ॥

**अ० टीका**—अथ प्रतिबंदीमोचनमाशंक्य तदपि प्रतिबंदी साम्येनैव शमयति—**घटादाविति** ॥ ९४ ॥

**निश्चित्य सकृदात्मानं यदापेक्षा तदैव तम् ॥**
**वक्तुं मंतुं तथा ध्यातुं शक्नोत्येव हि तत्त्ववित् ॥ ९५ ॥**

**रा० टीका**—सममात्मनीत्युक्तमर्थं विवृणोति—**निश्चित्येति** ॥ ९५ ॥

**अ० टीका**—ननु सकृन्निश्चितघटस्य तद्विषयकबुद्धिनाशेऽपि यदा गंगाजलानयनाद्यर्थं तदपेक्षा तथाऽऽत्मनि बुद्धिनाशोर्ध्वं नैव संभवति संप्रतिपादितरीत्या पुनः पुनरावृतत्वसंभवादिति चेन्न । एकाज्ञानपक्षे स्वबुद्ध्यवच्छेदेन तदावरणशक्तिनाशेनानेकाज्ञानस्वमूलाज्ञाननाशेन पल्लवाज्ञानानां च ब्रह्मात्मैक्यावरकत्वानंगीकारेण च पुनरात्मावरणासंभवात्तमसः प्रकाशदेशावच्छेदेनापसरणमात्रांगीकारेण वैषम्यादित्याशयेनाऽऽह—**निश्चित्येति** । एवं च घटप्रमासाम्यमेव ब्रह्मप्रमायामपीति ध्येयम् ॥ ९५ ॥

**उपासक इव ध्यायँल्लौकिकं विस्मरेद्यदि ॥**
**विस्मरत्वेव सा ध्यानाद्विस्मृतिर्न तु वेदनात् ॥ ९६ ॥**

**रा० टीका**—ननु तत्त्वविदप्युपासकवदात्मानुसंधानवशाज्जगदनुसंधानरहितो दृश्यत इत्याशंक्य सोऽनुसंधानाभावो ध्यानप्रयुक्तो न वेदनप्रयुक्त इत्याह—**उपासक इति**॥९६॥

**अ० टीका**—ननूपासकवद्ध्यानाल्लौकिकविस्मृतिरपि क्वचिदृषभादितत्त्वविदि दृष्टेति चेदस्तु नाम। तस्या ध्यानकार्यत्वेन ज्ञानजन्यत्वाभावादित्यभिप्रेत्याऽऽह—**उपासक इवेति**॥९६॥

**ध्यानं त्वैच्छिकमेतस्य वेदनान्मुक्तिसिद्धितः ॥**
**ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिंडिमः ॥ ९७ ॥**

**रा० टीका**—ननु तत्त्वविदाऽपि मुक्तिसिद्धये ब्रह्मध्यानं कर्तव्यमित्याशंक्य "ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते " ' तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय ' ' ज्ञात्वा देवं मुच्यते सर्वपापैः ' त्यादिशास्त्रसद्भावान्न मोक्षाय ध्यानं कर्तव्यमित्याह—**ध्यानमिति** ॥ ९७ ॥

**अ० टीका**—फलितमाह—ध्यानं त्विति ॥ ९७ ॥

**तत्त्वविद्यदि न ध्यायेत्प्रवर्तेत तदा बहिः ॥**
**प्रवर्ततां सुखेनायं को बाधोऽस्य प्रवर्तने ॥ ९८ ॥**

**रा० टीका**—ननु तत्त्वविदो ध्यानानभ्युपगमे तस्य सदा बहिः प्रवृत्तिः स्यादित्याशंक्य बाधकत्वात्प्रवृत्तेः साऽभ्युपेयत इत्याह—**तत्त्वविदिति** ॥ ९८ ॥

**अ० टीका**—तस्य ध्यानाभावे दोषमाशंक्येष्टापत्त्या प्रत्याह—**तत्त्वविद्यदीति** ॥९८॥

**अतिप्रसंग इति चेत् प्रसंगं तावदीरय ॥**
**प्रसंगो विधिशास्त्रं चेन्न तत्त्वविदं प्रति ॥ ९९ ॥**

**रा० टीका**—बहिःप्रवृत्त्यभ्युपगमेऽतिप्रसंगः स्यादित्याशंक्य प्रसंगस्य दुर्निरूप्यत्वान्नैवमिति परिहरति—**अतिप्रसंग इति** । न प्रसंगो दुर्निरूप्यो विधिशास्त्रस्य प्रसंगशब्देन विवक्षितत्वादिति चेन्न तस्याज्ञानिविषयत्वेन तत्त्वविद्विषयत्वाभावादित्याह—**प्रसंग इति**। विधिशास्त्रमित्युपलक्षणं निषेधशास्त्रस्यापि ॥ ९९ ॥

**अ० टीका**—अतिप्रसंगमाशंक्य प्रसंगं पृष्ट्वा निराचष्टे—**अतीति** ॥ ९९ ॥

**वर्णाश्रमवयोवस्थाभिमानो यस्य विद्यते ॥**
**तस्यैव च निषेधाश्च विधयः सकला अपि ॥ १०० ॥**

**रा० टीका**—विधिशास्त्रस्याविद्वद्विषयत्वमेव दर्शयति—**वर्णेति** ॥ १०० ॥

**वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥**
**नाऽऽत्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः ॥ १ ॥**

**रा० टीका**—ननु तत्त्वविदोऽपि देहधारित्वेन वर्णाश्रमाद्यभिमानित्वमस्तीत्याशंक्याऽऽह—**वर्णाश्रमेति** ॥ १ ॥

**अ० टीका**—तत्र हेतुः–**वर्णेत्यादिद्वाभ्याम्** ॥ १०० ॥ १०१ ॥

**समाधिमथ कर्माणि मा करोतु करोतु वा ॥**
**हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ २ ॥**

**रा० टीका**—ननु तत्त्वविनिश्चयस्तावत्तिष्ठतु शास्त्रं तु तस्य कर्तव्यं प्रतिपादयतीत्याशंक्य तदपि तस्य कर्तव्याभावमेव बोधयतीत्याह **समाधिमिति** । यो हृदयेन बुद्ध्याऽस्तसर्वास्थेऽस्ताः परित्यक्ता अशेषा आसक्तिविशेषा यस्य तथाविधः । अत एवोत्तमाशय उत्तम आशयोऽभिप्रायो निर्मलं ज्ञानं यस्य स तथोक्तः । स मुक्त एवातः समाधिमथ कर्माणीत्यन्वयः ॥ २ ॥

**अ० टीका**—तत्र मानमाह—**समाधिमिति । वासिष्ठसार** इदम् ॥ १०२ ॥

**नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ॥**
**न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥ ३ ॥**

**रा० टीका**—विदुषः कर्तव्यं नास्तीत्यत्र वचनांतरमुदाहरति **नैष्कर्म्येणेति** नैष्कर्म्यं कर्मराहित्यं तेन कर्मत्यागेनेत्यर्थः । समाधानं समाधिः । जप्यं जपः ॥ ३ ॥

**अ० टीका**—एवं तदीयमेवान्यदपि वाक्यद्वयमत्र प्रमाणयति **नैष्कर्म्येणेति** भूति । नैष्कर्म्यं संन्यासः । समाधानं समाधिः । जप्यं प्रणवादिमंत्रजातम् । निर्वासनं वासनारहितसंस्कारम् ॥ १०३ ॥

**आत्मासंगस्ततोऽन्यत्स्यादिंद्रजालं हि मायिकम् ॥**
**इत्यचंचलनिर्णीते कुतो मनसि वासना ॥ ४ ॥**

**रा० टीका**—ननु विदुषाऽपि वासनानिवृत्तये ध्यानं कर्तव्यमित्याशंक्य सम्यग्ज्ञानिनो वासनैव नास्तीत्याह—**आत्मेति** ॥ ४ ॥

**अ० टीका**—**आत्माऽसंग इति ।** मायिकं यावन्माया तत्कार्याद्यात्मकं दृश्यम् । इंद्रजालं हि मिथ्यात्वेनेंद्रजालमेवेत्यर्थः ॥ १०४ ॥

**रा० टीका**—भवत्वेवं प्रकृते किमायातमित्यत आह—

**एवं नास्ति प्रसंगोऽपि कुतोऽस्यातिप्रसंजनम् ॥**
**प्रसंगो यस्य तस्यैव शंक्येनातिप्रसंजनम् ॥ १०५ ॥**

**एवमिति ।** कस्य तर्ह्यतिप्रसंग इत्यत आह—**प्रसंग इति** ॥ १०५ ॥

**अ० टीका**—फलितं कथयन्प्रकृते योजयति—**एवमिति** ॥ १०५ ॥

**रा० टीका**—एवं क्व दृष्टमित्यत आह—

**विध्यभावान्न बालस्य दृश्यतेऽतिप्रसंजनम् ॥**
**स्यात्कुतोऽतिप्रसंगोऽस्य विध्यभावे समे सति ॥ ६ ॥**

**विध्यभावादिति ।** दार्ष्टांतिके योजयति—**स्यादिति** ॥ ६ ॥

**अ० टीका**—तदेवं सदृष्टांतं स्पष्टयति—**विध्यभावादिति** ॥ १०६ ॥

**रा० टीका**—बालस्य विध्यभावे प्रयोजकमज्ञत्वमस्ति न विदुष इत्याशंक्य **तस्या**-ज्ञत्वाभावेऽपि विध्यभावप्रयोजकं सर्वज्ञमस्तीत्याह—

**न किंचिद्वेत्ति बालश्चेत्सर्वं वेत्त्येव तत्त्ववित् ॥**
**अल्पज्ञस्यैव विधयः सर्वे स्युर्नान्ययोर्द्वयोः ॥ ७ ॥**

**न किं चिदिति ।** तर्हि विध्यधिकारः कस्येत्याशंक्याऽऽह—**अल्पज्ञस्येति** ॥७॥

**अ० टीका**—तत्र दृष्टांतं विघटयन्शंकते—**न किंचिदिति ।** विधिकिंकरो हि सनामयोऽल्पज्ञः । न तु सर्वथाऽज्ञः परमेश्वरः । नापि सर्वथाऽप्यज्ञो बालादिरित्यतोऽस्य ब्रह्मविदः सर्वं दृश्यमारोपितत्वादधिष्ठानैकायत्तसत्ताकमिति ततः पृथक्कारे तुच्छमेवेदमिति । मिथ्यात्वेन सर्वविषयकं ज्ञानमस्त्येव । अत एव **छांदोग्यश्रुतौ** "येनाश्रुतं श्रुतं भवति" इत्यादिनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञापीति ज्ञानिनो विधिकैंकर्याभावोऽस्त्येवेत्याह—**सर्वमित्यादि ।** फलितमाह—**अल्पेति** ॥ १०७ ॥

**रा० टी०**—ननु व्यासादिवच्छापानुग्रहसामर्थ्यं यस्य स एव तत्त्वविन्नान्य इति शंकते—

**शापानुग्रहसामर्थ्यं यस्यासौ तत्त्वविद्यदि ॥**
**तन्न शापादिसामर्थ्यं फलं स्यात्तपसो यतः ॥ ८ ॥**

**शापेति ।** परिहरति—**तन्नेति ।** तत्र हेतुमाह—**शापादिसामर्थ्यमिति** ॥ ८ ॥

**अ० टीका**—एवमपि निग्रहानुग्रहसामर्थ्याभावात्कथं तत्त्ववित्त्वं श्रद्धेयमित्याशंक्य समाधत्ते—**शापेति** ॥ १०८ ॥

**रा० टीका**—ननु व्यासादीनां तत्त्वविदामपि शापादिसामर्थ्यं दृश्यत इत्याशंक्य तेषां न तत्त्वज्ञानफलमपि तु तपःफलमित्याह —

**व्यासादेरपि सामर्थ्यं दृश्यते तपसो बलात् ॥**
**शापादिकारणादन्यत्तपो ज्ञानस्य कारणम् ॥ ९ ॥**

**व्यासादेरिति ।** ननु तर्हि " तपसा ब्रह्म विजिज्ञासस्व " इति **श्रुतेस्तपोरहितस्य** तत्त्वज्ञानमपि न घटेतेत्याशंक्य शापादिकारणादन्यस्य तपसः सत्त्वान्नैवमित्याह—**शापेति** ॥९॥

**अ० टीका**—एवं तर्हि व्यासादेः कथं **तज्ज्ञाचार्यस्य** निग्रहादिसामर्थ्यमपि दृश्यत इत्यत आह—**व्यासादेरपीति** । बलादेवेत्यर्थः । ननु तर्हि " तपसा ब्रह्म विजिज्ञासस्व " इति **तैत्तिरीयकश्रुतेर्ज्ञा**नस्यापि कारणं तप एवेत्यत्राऽऽह—**शापादीति** । तप आलोचने तप संतापे इति हि धातुद्वयं तेन तत्क्रमाज्ज्ञानशापाद्योर्विभिन्नमेव कारणमित्याकूतम् ॥ १०९ ॥

**द्वयं यस्यास्ति तस्यैव सामर्थ्यज्ञानयोर्जनिः ॥**
**एकैकं तु ततः कुर्वन्नेकैकं लभते फलम् ॥ १० ॥**

**रा० टीका**—तर्हि तेषां व्यासादीनां तत्त्वज्ञानित्वं शापादिकारणत्वं च कथं दृश्यत इत्याशंक्योभयविधतपसः सद्भावादित्याह—**द्वयमिति** ॥ १० ॥

**अ० टीका**—अत एव—**द्वयमिति** । एवं च न कोऽपि विरोधः ॥ ११० ॥

**सामर्थ्यहीनो निंद्यश्चेद्यतिभिर्विधिवर्जितः ॥**
**निंद्यंते यततोऽप्यन्यैरनिशं भोगलंपटैः ॥ ११ ॥**

**रा० टीका**—ननु यः शापादिसामर्थ्यरहितस्तस्य विध्यभावेऽपि विहितानुष्ठातृभिर्निंद्यत्वं स्यादित्याशंक्य तेषामपि विषयलंपटैर्निंद्यत्वं स्यादित्याह—**सामर्थ्यहीन इति**॥११॥

**अ० टीका**—ननु ब्रह्मविदः शापाद्यसामर्थ्ये कर्मठनिंद्यत्वं तत्राऽऽह—**सामर्थ्येति** ॥ ११ ॥

**भिक्षावस्त्रादि रक्षेयुर्यद्येते भोगतुष्टये ॥**
**अहो यतित्वमेतेषां वैराग्यभरमंथरम् ॥ १२ ॥**

**रा० टीका**—एतेऽपि भोगतुष्ट्यर्थं विषयान्संपादयेयुरित्याशंक्य तदा तेषां यतित्वमेव हीयेतेत्यभिप्रायेणोपहसति—**भिक्षेति** ॥ १२ ॥

**अ० टीका**—ननु यतिभिर्भोगिकृतनिंदाभिक्षादिना वार्यतेत्यत्रोपहासेनैव समाधत्ते-**भिक्षेति** ॥ १२ ॥

**वर्णाश्रमपरान्मूढा निंदंत्वित्युच्यते यदि ॥**
**देहात्ममतयो बुद्धं निंदंत्वाश्रममानिनः ॥ १३ ॥**

**रा० टीका**—विषयलंपटैः पामरैश्च क्रियमाणया निंदया क्रियापराणां शिष्टानां हानिर्नास्तीत्युच्यते चेत्तर्हि देहाभिमानिभिः क्रियापरैः क्रियमाणया निंदया तत्त्वविदोऽपि न हानिरित्याह—**वर्णाश्रमेति** ॥ १३ ॥

**अ० टीका**—विषयिकृतनिंदया वर्णाश्रमपराणां का हानिरितिचेत्कर्मठकृतनिंदया ब्रह्मविदोऽपि हान्यभावः सम एवेत्याह—**वर्णेति** ॥ १३ ॥

**तदित्थं तत्त्वविज्ञाने साधनानुपमर्दनात् ॥**
**ज्ञानिनाऽऽचरितुं शक्यं सम्यग्राज्यादि लौकिकम् ॥१४॥**

**रा० टीका**—प्रासंगिकं परिसमाप्य प्रकृतमनुसरति—**तदित्थमिति** । तत्तस्मात्कारणादित्थमुक्तेन प्रकारेण तत्त्वविज्ञाने सति साधनानुपमर्दनाल्लौकिकव्यवहारसाधनानां मनआदीनामविलापनाल्लौकिकं राज्यादि राज्यपरिपालनादि कर्म वा ज्ञानिना सम्यगाचरितुं शक्यमित्यर्थः ॥ १४ ॥

**अ० टीका**—एवं **सप्ताशीतितमश्लोकोत्तरार्धेन** "तत्त्ववित्त्वविरोधित्वाल्लौकिकं सम्यगाचरेत्" इति यदुक्तं तन्निगमयति—**तदित्थमिति** । आचरितुमिति च्छेदः । जनकादिवदित्यार्थिकम् ॥ १४ ॥

**मिथ्यात्वबुद्ध्या तत्रेच्छा नास्ति चेत्तर्हि माऽस्तु तत् ॥**
**ध्यायन्वाऽथ व्यवहरन्यथाऽरब्धं वसत्वयम् ॥ १५ ॥**

**रा० टीका**—ननु तत्त्वविदः प्रपंचमिथ्यात्वज्ञानेन तत्रेच्छैव नोदीयादिति चेत्तर्हि स्वकर्मानुसारेण वर्ततामित्याह—**मिथ्यात्वेति** ॥ १५ ॥

**अ० टीका**—ननु **मैत्रायणीयोपनिषत्प्रसिद्धबृहद्रथवद्राज्ये** ज्ञानिनः प्रायो मिथ्यात्वबुद्ध्येच्छैव न स्यादित्याशंक्यांगीकरोति—**मिथ्यात्वेति** । यथाऽऽरब्धं तीव्रवेगादिप्रारब्धमनतिक्रम्य यथा स्यात्तथेत्यर्थः ॥ ११५ ॥

**रा० टीका**—इदानीमुपासकस्यातो वैषम्यं दर्शयति—

**उपासकस्तु सततं ध्यायन्नेव वसेद्यतः ॥**
**ध्यानेनैव कृतं तस्य ब्रह्मत्वं विष्णुतादिवत् ॥ १६ ॥**

**उपासक इति** । तत्रोपपत्तिमाह—**यत इति** । यतः कारणात्तस्य ब्रह्मत्वं ध्यानेनैव कृतं न प्रमाणेन प्रमितमतो ध्यायिना सदा ध्यानं कर्तव्यमित्यर्थः । तत्र दृष्टांतः—**विष्णुतादिवदिति** । यथा स्वस्मिन् ध्यानेन संपादितस्य विष्णुत्वादेः पारमार्थिकत्वं नास्ति तद्वदित्यर्थः ॥ १६ ॥

**अ० टीका**—अथोपासकप्रकृते तद्वैलक्षण्यं वदन्ध्यानसातत्यं विधत्ते—**उपासकस्त्वित्यादिना** । तत्र सदृष्टांतं हेतुं स्पष्टयति—**यत इत्यादिशेषेण** ॥ १६ ॥

**रा० टीका**—ध्यानसंपादितस्यापि तस्य पारमार्थिकत्वं किं न स्यादित्याशंक्य ध्यानसंपादितस्य वाग्धेनुत्वादेर्ध्यानापायेऽपगमदर्शनान्नैवमित्याह—

**ध्यानोपादानकं यत्तद्ध्यानाभावे विलीयते ॥**
**वास्तवी ब्रह्मता नैव ज्ञानाभावे विलीयते ॥ १७ ॥**

**ध्यानेनेति** । ज्ञानेन प्रकाशितस्य ब्रह्मत्वस्य ततो वैलक्षण्यमाह—**वास्तवीति** । हेतुगर्भितं विशेषणं यतो ब्रह्मत्वं वास्तवमतो ज्ञापकज्ञानाभावे सति नैव विलीयते ॥ १७ ॥

**अ० टीका**—तत्रान्वयादिघटितां युक्तिं वक्ति–**ध्यानेति**। ज्ञानफलेतु तद्वैलक्षण्य-मकृतकत्वान्नियमयति–**वास्तयीति** ॥ १७ ॥

**रा० टीका**—वास्तवत्वादेव ज्ञानेन नैव जन्यत इत्याह—

**ततोऽभिज्ञापकं ज्ञानं न नित्यं जनयत्यदः ॥**
**ज्ञापकाभावमात्रेण न हि सत्यं विलीयते ॥ १८ ॥**

**तत इति**। यतोऽदो ब्रह्मत्वं नित्यं ततो ज्ञानं तस्याभिज्ञापकमवबोधकमेव न जनक-मित्यर्थः। तत्रोपपत्तिं व्यतिरेकमुखेनाऽऽह–**ज्ञापकेति**। अयमभिप्रायः ब्रह्मत्वं यदि ज्ञानजन्यं स्यात्तर्हि ज्ञाननाशे स्वयं विलीयेत। न च विलीयते। अतो न जन्यत इत्यर्थः ॥ १८ ॥

**अ० टीका**—तत्र हेतुः–**तत इति**। यतोऽद इदं प्रकृतं ज्ञानम्। स्वविषयीभूत-मद्वैतं ब्रह्मनित्यमेवेति न जनयति ततोऽभिज्ञापकं बोधकमेवास्ति न तु कारकमिति संबंधः। तदेवार्थांतरन्यासेन समर्थयति—**ज्ञापकेति**। स्फुटमेवेदमादर्शसौंदर्यादाविति भावः ॥ १८ ॥

**रा० टीका**—ननु ज्ञानिवदुपासकस्यापि ब्रह्मत्वं वास्तवमस्त्येवेति शंकते—

**अस्त्येवोपासकस्यापि वास्तवी ब्रह्मतेति चेत् ॥**
**पामराणां तिरश्चां च वास्तवी ब्रह्मता न किम् ॥ १९ ॥**

**अस्त्येवेति**। अत्यल्पमिदमुच्यत इत्यभिप्रायेणाऽऽह–**पामराणामिति** ॥ १९ ॥

**अ० टीका**—ननु सिद्धांते किमुपासकस्यापि वास्तवी ब्रह्मता नास्तीत्याक्षिपति—**अस्त्येवेति**। तत्र प्रतिबंद्यैव समाधत्ते—**पामराणामित्यादिना** ॥ १९ ॥

**रा० टीका**—पामरादीनां विद्यमानमपि तद्ब्रह्मत्वमज्ञातत्वान्न पुरुषार्थोपयोगीत्या-शंक्याज्ञातत्वेनापुरुषार्थोपयोगित्वमुपासकस्यापि समानमित्याह—

**अज्ञानादपुमर्थत्वमुभयत्रापि तत्समम् ॥**
**उपवासाद्यथा भिक्षा वरं ध्यानं तथाऽन्यतः ॥ २० ॥**

**अज्ञानादिति**। ननु तर्ह्युपासनं किमर्थमभिधीयत इत्याशंक्येतरानुष्ठानेभ्यः श्रेष्ठत्वा-भिप्रायेणोक्तमिति दृष्टांतपूर्वकमाह—**उपवासादिति** ॥ २० ॥

**अ० टीका**—ननु पामरादिष्ववज्ञत्वमत आह—**अज्ञानादिति**। एवं तर्हि कर्मि-भ्य उपासकस्य शास्त्रे कुत औत्कट्यमित्यत्राऽऽह—**उपवासादिति** ॥ १२० ॥

**पामराणां व्यवहृतेर्वरं कर्माद्यनुष्ठितिः ॥**
**ततोऽपि सगुणोपास्तिर्निर्गुणोपासना ततः ॥ २१ ॥**

**रा० टीका**—इतरानुष्ठानाच्छ्रैष्ठ्यमेव दर्शयति–**पामराणामिति** ॥ २१ ॥

**अ० टीका**—तत्राप्यवांतरतारतम्यक्रममाह—**पामराणामिति**। व्यवहृतेः कृषि-वाणिज्यसेवादेः। **कर्मादीति**। आदिना हरिहरान्यतरनामसमुच्चारणादि। **सगुणेति**। सा हि द्विविधा। प्रतीकाहंग्रहभेदात्। साऽपि यत्किंचित्प्रतीका सर्वप्रतीकेति च भेदाद्द्वेधा। तत्राऽऽ-द्या यथा—नामब्रह्मेत्युपासीतेति। अंत्याऽपि यथा—सर्वं खल्विदं ब्रह्मेति। एवमहंग्रहोऽपि सगुणे द्वेधा। अहं विष्णुरिति सकलमिदमहं च वासुदेव इति च। **निर्गुणेति**। सोक्तैवा-धस्तात् ॥ २१ ॥

**रा० टीका**—उत्तरोत्तरश्रैष्ठ्ये कारणमाह—

**यावद्विज्ञानसामीप्यं तावच्छ्रैष्ठ्यं विवर्धते ॥**
**ब्रह्मज्ञानाय ते साक्षान्निर्गुणोपासनं शनैः ॥ २२ ॥**

यावदिति । निर्गुणोपानस्य सर्वश्रैष्ठ्ये कारणमाह–**ब्रह्मज्ञानाय त इति** ॥ २२ ॥

**अ० टीका**—तत्र हेतुः—**यावदिति** ॥ २२ ॥

**यथा संवादिविभ्रांतिः फलकाले प्रमायते ॥**
**विद्यायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः ॥ २३ ॥**

**रा० टीका**—उक्तमर्थं दृष्टांतप्रदर्शनपूर्वकं द्रढयति–**यथेति** ॥ २३ ॥

**अ० टीका**—निर्गुणोपास्तेः शनैर्ब्रह्मज्ञानत्वे दृष्टांतं स्मारयति—**यथेति** ॥ २३ ॥

**रा० टीका**—ननु संवादिविभ्रांतिः स्वयमेव न प्रमा भवति किं तु तया प्रवृत्तस्येंद्रियार्थसन्निकर्षात्प्रमा जायत इति शंकते–

**संवादिभ्रमतः पुंसः प्रवृत्तस्यान्यमानतः ॥**
**प्रमेति चेत्तथोपास्तिर्मांतरे कारणायताम् ॥ २४ ॥**

**संवादिति** । अस्तु तर्हि निर्गुणोपासनमपि निदिध्यासनरूपं सद्वाक्यजन्यापरोक्षज्ञाने कारणं भविष्यतीत्याह–**तथेति** ॥ २४ ॥

**अ० टीका**—ननूपास्तेर्निर्गुणाहंग्रहरूपायाः कालेनाद्वैतब्रह्मात्मना परिणमने संवादिभ्रमदृष्टांतो विषम एव । तत्र यथार्थवस्तुसामीप्येन तद्विषयकप्रत्यक्षं प्रत्येव प्रयोजकत्वादुक्तभ्रांतेः प्रकृतसत्यवस्तुविषयकप्रत्यक्षात्मना परिणत्यभावाच्चेत्याशंक्येष्टापत्त्या समाधत्ते—**संवादीति** ॥ २४ ॥

**रा० टीका**—नन्वेवं सति मूर्तिध्यानादेरपि चित्तैकाग्र्यसंपादनद्वाराऽपरोक्षज्ञानसाधनत्वं स्यादिति चेत्तदप्यंगीक्रियत इत्याह–

**मूर्तिध्यानस्य मंत्रादेरपि कारणता यदि ॥**
**अस्तु नाम तथाऽप्यत्र प्रत्यासत्तिर्विशिष्यते ॥ २५ ॥**

**मूर्तीति** । तर्हि निर्गुणोपासने कोऽतिशयस्तत्राऽऽह–**तथाऽपीति** । प्रत्यासत्तिः सामीप्यं ज्ञानं प्रतीति शेषः ॥ २५ ॥

**अ० टीका**—नन्वेवं यदि ब्रह्मज्ञानप्रयोजकत्वेन निर्गुणोपासनायामादरस्तर्हि चतुर्भुजादिमूर्तिध्यानस्य तथा गायत्रीमंत्रषडक्षरमंत्रयोरपि तथा हरिहरान्यतरनामोच्चारणस्यापि परंपरासंबंधेन ब्रह्मज्ञानं प्रति कारणत्वं चेदस्तु नाम तथा । सर्वापेक्षा च यज्ञादिश्रुतेरित्याद्यधिकरणेन वेदाविरुद्धसकलकर्मणोऽपि तथांऽगीकृतत्वादित्याह—**मूर्तिध्यानस्येति** ॥ १२५ ॥

**रा० टीका**—प्रत्यासत्तिप्रकारमेव दर्शयति–

**निर्गुणोपासनं पक्वं समाधिः स्याच्छनैस्ततः ॥**
**यः समाधिर्निरोधाख्यः सोऽनायासेन लभ्यते ॥ २६ ॥**

**निर्गुणेति** । निर्गुणोपासनं यदा पक्वं भवति तदा सविकल्पकसमाधिः स्यात्ततः सवि-

कल्पकसमाधेर्निरोधाख्यो यस्तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति सूत्रोक्तलक्षणो निर्विकल्पकः समाधिः सोऽनायासेन लभ्यते ॥ २६ ॥

**अ० टीका**—किंच निर्गुणोपासनस्यासंप्रज्ञातसमाधिहेतुत्वादप्यवश्यानुष्ठेयत्वमित्याह—**निर्गुणोपासनमिति** ॥ २६ ॥

**रा० टीका**—भवत्वेवं निर्विकल्पकलाभस्ततः किमित्यत आह—

**निरोधलाभे पुंसोऽन्तरसंगं वस्तु शिष्यते ॥**
**पुनः पुनर्वासितेऽस्मिन्वाक्याज्जायेत तत्त्वधीः ॥ २७ ॥**

**निरोधेति** । ततोऽपि किमित्यत आह—**पुनः पुनरिति** । अस्मिन्नसंगे वस्तुनि पुनः पुनर्वासिते भाविते सति वाक्यात्तत्त्वमस्यादिलक्षणात्तत्त्वधीस्तत्त्वज्ञानमहं ब्रह्मास्मीत्येवमाकारं जायत उत्पद्येत ॥ २७ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**निरोधेति** । असंगं शोधितत्वंपदार्थाख्यं कूटस्थचैतन्यमित्यर्थः । ततोऽपि किं तदाह—**पुनः पुनरिति** । वासिते निरुक्तासंगवस्तुपरिशेषे समभ्यस्ते सतीत्यर्थः । वाक्यादप्रतिबद्धान्महावाक्यात् ॥ २७ ॥

**निर्विकारासंगनित्यस्वप्रकाशैकपूर्णताः ॥**
**बुद्धौ झटिति शास्त्रोक्ता आरोहन्त्यविवादतः ॥ २८ ॥**

**रा० टीका**—तत्त्वज्ञानस्वरूपमेव विशदयति—**निर्विकारेति** ॥ २८ ॥

**अ० टीका**—तत्र हेतुः—**निर्विकारेति** । आत्मन इत्यार्थिकम् ॥ २८ ॥

**रा० टीका**—ननु निर्विकल्पकसमाधिवशादपरोक्षज्ञानमुदेतीत्यत्र किं प्रमाणमित्याशंक्यामृतबिंद्वादिश्रुतयः सर्वा अपि प्रमाणमित्याह—

**योगाभ्यासस्त्वेतदर्थोऽमृतबिंद्वादिषु श्रुतः ॥**
**एवं च दृष्टद्वाराऽपि हेतुत्वादन्यतो वरम् ॥ २९ ॥**

**योगाभ्यासेति** । फलितमाह—**एवमिति** । एवं च सति निर्गुणोपासनस्याप्यपरोक्षज्ञानप्रत्यासत्तिसंभवे सति दृष्टद्वाराऽपि निर्विकल्पकसमाधिलाभद्वारेणापि शब्दाददृष्टद्वाराऽपि हेतुत्वाज्ज्ञानसाधनत्वादन्यतः सगुणोपासनादिभ्यो वरं श्रेष्ठमित्यर्थः ॥ २९ ॥

**अ० टीका**—अत एव—**योगेति** । **अमृतेति** । आदिना **कैवल्यकठवल्याद्याः**। फलितमाह—**एवं चेति** । अन्यतः कर्मतः । अपिना कर्मवददृष्टद्वारा हेतुत्वं सिद्धमेवेति द्योत्यते । निर्गुणोपासनमिति शेषः ॥ २९ ॥

**उपेक्ष्य तत्तीर्थयात्राजपादीनेव कुर्वताम् ॥**
**पिंडं समुत्सृज्य करं लेढीति न्याय आपतेत् ॥ ३० ॥**

**रा० टीका**—एवं निर्गुणोपासनस्यापरोक्षज्ञानसाधनत्वे सिद्धे सति तत्परित्यज्यान्यत्र प्रवृत्तानां वृथा श्रमः स्यादिति लौकिकन्यायदर्शनेनाऽऽह—**उपेक्ष्येति** ॥ ३० ॥

**अ० टीका**—एवं दृष्टाद्युभयद्वाराऽपि ब्रह्मज्ञानजनकमहावाक्यप्रतिबंधवारकं निर्गुणोपासनं त्यक्त्वा तीर्थयात्रादिपरान्निंदति—**उपेक्ष्येति** । पिंडं नवनीतगोलकम् ॥ १३० ॥

**रा० टीका**—नन्वात्मतत्त्वविचारं परित्यज्य निर्गुणोपासनं कुर्वतामप्ययं न्यायः समान इत्याशंक्यांगीकरोति—

**उपासकानामप्येवं विचारत्यागतो यदि ॥**
**बाढं तस्माद्विचारस्यासंभवे योग ईरितः ॥ ३१ ॥**

**उपासकानामिति** । तर्हि निर्गुणोपासनं कुतः प्रतिपाद्यत इत्यत आह—**तस्मादिति** । यस्मादुक्तन्यायप्रसंगस्तस्माद्विचारासंभवे योग उपासनमुक्तमित्यर्थः ॥ ३१ ॥

**अ० टीका**—उपासकेष्वपि तन्न्यायापत्तिमंगीकरोति—**उपासकानामपीति**॥३१॥

**रा० टीका**—विचारासंभवे कारणमाह—

**बहुव्याकुलचित्तानां विचारात्तत्त्वधीर्न हि ॥**
**यो यो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति ॥ ३२ ॥**

**बह्विति** । यतो विचारो न संभवत्यतो योगः कर्तव्य इत्याह—**योग इति** । मुख्यत्वे कारणमाह—**धीदर्प इति** । तेन योगेन यतो धीदर्पो नश्यत्यतो मुख्य इत्यर्थः ॥ ३२ ॥

**अ० टीका**—तत्र युक्तिं वक्ति—**बह्विति** । धीदर्पः बुद्धिप्रमादः ॥ ३२ ॥

**रा० टीका**—एवं व्याकुलचित्तानां योगस्य मुख्यत्वमभिधाय तद्रहितानां विचार एव मुख्य इत्याह—

**अव्याकुलधियां मोहमात्रेणाऽऽच्छादितात्मनाम् ॥**
**सांख्यनामा विचारः स्यान्मुख्यो झटिति सिद्धिदः ॥३३**

**अव्याकुलेति** । सांख्यनामा विचारः सांख्यशब्दवाच्यस्तत्त्वविचारो मुख्यः । कुत इत्यत आह—**झटितीति** ॥ ३३ ॥

**अ० टीका**—धीदर्पहीनानामुत्तमाधिकारिणां तु विचार एवाधिकार इत्याह—**अव्याकुलेति** । सांख्यनामा सांख्यसंज्ञकः ॥ ३३ ॥

**रा० टीका**—योगसांख्ययोरुभयोरपि तत्त्वज्ञानद्वारा मुक्तिसाधनत्वे **गीतावाक्यं** प्रमाणयति—

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ३४ ॥**

**यत्सांख्यैरिति** । यः सांख्यं च योगं च फलत एकं पश्यति स शास्त्रार्थं सम्यक् पश्यतीत्यर्थः ॥ ३४ ॥

**अ० टीका**—ननु सांख्ययोगशास्त्रयोर्ज्ञानसाधनत्वे किं प्रमाणमित्यत आह—**यदिति** । **भगवद्गीतावाक्य**मेव तत्र मानशिरोरत्नमिदमस्तीत्याकूतम् । अपिना सांख्यापेक्षया योगे जघन्यत्वं ध्वन्यते । एवं च सांख्ययोगशब्दाभ्यां **कापिलपातंजल**शास्त्रशीलपुरुषग्रहो यदि तर्हि तदुक्ततत्त्वसंग्रहाद्द्वैतापत्तिरित्यत्राऽऽह—**एकमिति** । यो मुमुक्षुः **सांख्यं** सांख्यनामकं **कापिलं** शास्त्रं योगं **पातंजलं** शास्त्रमपि एकं त्वंपदार्थशोधने तत्रैव चित्तवृत्तिरोधनाच्च तत्त्वमस्यादिवाक्यप्रतिबंधनिरासद्वारा ब्रह्मात्मैक्यबोधोदयफलकमित्यर्थः ॥ ३४ ॥

**रा० टी०**—न केवलं **गीतावाक्यं** किं तु तन्मूलभूता **श्रुति**रप्यस्तीत्याह—

**तत्कारणं सांख्ययोगाधिगम्यमिति हि श्रुतिः ॥**
**यस्तु श्रुतेर्विरुद्धः स आभासः सांख्ययोगयोः ॥ ३५ ॥**

**तत्कारणमिति** । ननु सांख्ययोगयोरुभयोरपि तत्त्वज्ञानद्वारा मुक्तिसाधनत्वेनांगीकारे तच्छास्त्रे प्रतिपादितानां तत्त्वानामपि स्वीकार्यत्वं स्यादित्याशंक्याऽऽह—**यस्त्विति** । आभासो बाध्यत इत्यर्थः ॥ ३५ ॥

**अ० टीका**—तत्र श्वेताश्वतरश्रुतिमपि संवादयति-**तदिति** । नन्वेवं तर्हि "स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात्" "एतेन योगः प्रत्युक्तः" **इत्यधिकरणाभ्यां** किमिति **श्रीमद्बादरायणाद्याचार्यैः** तत्खंडनमेव कृतमित्यत आह—**यस्त्विति** । यस्तु सांख्ययोगयोः श्रुतेर्विरुद्धोंऽश इत्यार्थिकम् । स आभासः । सम्यक् ख्यायते ख्या प्रकथन इतिस्मरणादद्वैतब्रह्मत्वरूपप्रकर्षेण ज्ञाप्यत आत्मा येन तत्तथेति व्युत्पत्तेः ।

तथा—"वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते"

इतिस्मृतेश्च सांख्ययोगशब्दाभ्यामद्वैतात्मैक्यविषयकप्रमैकपरत्वाद्बाधितत्वात्सांख्याद्याभास इत्यर्थः ॥ १३५ ॥

**उपासनं नातिपक्वमिह यस्य परत्र सः ॥**
**मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते ॥ ३६ ॥**

**रा० टीका**—ननूपासनं कुर्वाणस्य तत्त्वज्ञानात्प्राङ्मरणे सति मोक्षो न सिद्ध्येदित्याशंक्याऽऽह—**उपासनमिति** ॥ ३६ ॥

**अ० टीका**—ननु निर्गुणाहंग्रहोपासनपरिपाकजन्यात्मज्ञानात्प्रागेवाऽऽयुर्दायसमाप्तौ का गतिरित्याशंक्य समाधत्ते—**उपासनमिति** । यस्येह जन्मन्युपासनं निर्गुणोपासनमतिपक्वं न तत्त्वज्ञानफलकं न जातं स तावत् "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" इत्यादि**स्मृतेः** परत्र जन्मांतरे त्वं विज्ञाय मुच्यते पाके तु मरणे ब्रह्मलोकवासनकावशेषे तु वा ब्रह्मलोके तत्त्वं विज्ञाय मुच्यत इत्यन्वयः ॥ १३६ ॥

**रा० टीका**—मरणवासरे ज्ञानान्मुक्तिलाभे प्रमाणमाह—

**यं यं वाऽपि स्मरन् भावं त्यजत्यंते कलेवरम् ॥**
**तं तमेवैति यच्चित्तस्तेन यातीति शास्त्रतः ॥ ३७ ॥**

**यं यं वापीति** । यच्चित्तस्तेनैव प्राणमायाति प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासंकल्पितं लोकं नयतीति **वाक्याच्चेत्यर्थः** ॥ ३७ ॥

**अ० टीका**—मरणे निर्गुणोपासनात्तत्त्वज्ञाने प्रमाणमाह—**यं यमित्यादि गीतावाक्यम्** । तन्मूलीभूतां श्रुतिमप्याह—**यदित्यादिना** । "यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासंकल्पितं लोकं नयति" इति **काण्वश्रुतेरिति** । मुच्यत इति पूर्वेण संबंधः ॥ ३७ ॥

**रा० टीका**—ननूदाहृताभ्यां श्रुतिस्मृतिवाक्याभ्यामंत्यप्रत्ययतो भाविजन्माभिधीयते ज्ञानान्मुक्तिरित्याशंक्य मुखतस्तथाऽभिधानमंगीकरोति—

**अंत्यप्रत्ययतो नूनं भाविजन्म तथा सति ॥**
**निर्गुणप्रत्ययोऽपि स्यात्सगुणोपासने यथा ॥ ३८ ॥**

**अंत्यप्रत्ययत इति** । कथं तर्हि मरणकाले ज्ञानान्मोक्षो भवतीत्यत्रेदं **वाक्यद्वयं प्र**-माणत्वेनोपन्यस्तमित्याशंक्याऽऽह—**तथा सतीति** । तथा सत्यंत्यप्रत्ययाद्भाविजन्मविनिश्चये सति सगुणोपासकस्य यथा मरणावसरे पूर्वाभ्यासवशात्सगुणब्रह्माकारः प्रत्ययो जायत एवं निर्गुणो पासकस्यापि निर्गुणब्रह्मगोचरः प्रत्ययो जायते जनिष्यत इत्यर्थः ॥ ३८ ॥

**अ० टीका**—ततः किं प्रकृत इत्यत्राऽऽह—**अंत्येति** ॥ ३८ ॥

**रा० टीका**—ननु निर्गुणप्रत्ययाभ्यासवशान्निर्गुणब्रह्मप्राप्तिरेव भवेन्न मुक्तिरित्याशंक्य ब्रह्मप्राप्तिमुक्त्योः शब्दमात्रेण भेदो नार्थत इत्याह—

**नित्यनिर्गुणरूपं तन्नाममात्रेण गीयताम् ॥**
**अर्थतो मोक्ष एवैष संवादिभ्रमवन्मतः ॥ ३९ ॥**

**नित्यनिर्गुणेति** । तद्ब्रह्म नित्यमिति नाममात्रेणोच्यतामर्थतस्त्वेष मोक्ष एव स्वरूपावस्थितिर्मुक्तिरित्यभिधानादिति भावः । तत्र दृष्टांतमाह—**संवादीति** । यथा संवादिभ्रमो नाममात्रेण भ्रम इत्युच्यते वस्तुतस्तत्त्वज्ञानमेव तद्वदित्यर्थः ॥ ३९ ॥

**अ० टीका**—निर्गुणब्रह्मत्वमेव मुक्तिरित्याह—**नित्यमिति** । तत्र दृष्टांतमाह—**संवादीति** । स यथा नाम्नैव भ्रमो वस्तुतस्तु प्रमैव तद्वदित्यर्थः ॥ ३९ ॥

**रा० टीका**—ननु निर्गुणोपासनस्य मानसक्रियारूपस्य मुक्तिसाधनत्वाभिधानं विरुद्धमित्याशंक्य तज्जन्यज्ञानस्य मोक्षसाधनत्वाभिधानान्न विरोध इत्याह—

**तत्सामर्थ्याज्जायते धीर्मूलाविद्यानिवर्तिका ॥**
**अविमुक्तोपासनेन तारकब्रह्मबुद्धिवत् ॥ ४० ॥**

**तदिति** । तत्र दृष्टांतमाह—**अविमुक्त इति** । यथाऽविमुक्तसगुणब्रह्मोपासनसामर्थ्यात्तारकब्रह्मविद्या जायत एवं निर्गुणोपासनान्निर्गुणब्रह्मज्ञानं जायत इत्यर्थः ॥ ४० ॥

**अ० टीका**—ननु ज्ञानमंतरा कथं मोक्षस्तत्राऽऽह—**तदिति** । तत्र दृष्टांतमाह—**अविमुक्तेति** । प्रसिद्धमिदं लघुजाबालोपनिषदि ॥ १४० ॥

**रा० टीका**—ननु निर्गुणोपासनस्य मोक्षः फलमित्यत्र किं प्रमाणमित्याशंक्याऽऽह—

**सोऽकामो निष्काम इति ह्यशरीरो निरिंद्रियः ॥**
**अभयं हीति मुक्तत्वं तापनीये फलं श्रुतम् ॥ ४१ ॥**

**सोऽकाम इति** । **सोऽकामो** निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामंत्यत्रैव समवलीयंते ब्रह्मैव सन्ब्रह्माप्येति, अशरीरो निरिंद्रियोऽप्राणो ह्यमनाः सच्चिदानंदमात्रः स्वस्वराट् भवति य एवं वेद चिन्मयो ह्ययमोंकारश्चिन्मयमिदं सर्व तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्म भवति य एवं वेदेति रहस्यमित्यादिवाक्यै**स्तापनीयोपनिषदि** निर्गुणोपासनस्य मोक्षः फलत्वेन श्रूयत इत्यर्थः ॥ ४१ ॥

**अ० टीका**—तत्र हि भ्रुवोर्घ्राणस्य संधानविमुक्तावच्छिन्नेश्वरध्यानेनांते तारकब्रह्मबुद्धिर्भवतीत्युक्तं तद्वत्प्रकृते निर्गुणोपासने ह्यद्वैतज्ञानद्वारा मोक्षफलजनने प्रमाणान्याह—

**सोऽकाम** इति प्रभृतिषड्भिः । सोऽकामो निष्काम आत्मकाम आप्तकामः । न तस्य प्राणा उत्क्रामंत्यत्रैव समवलीयंते ब्रह्मै … न्ब्रह्माप्येतीति **बृहदारण्यके** । अशरीरो निरिंद्रियोऽप्राणो ह्यमनाः सच्चिदानंदमात्रः … भवति य एवं वेद चिन्मयो ह्ययमोंकारश्चिन्मयमिदं सर्वं तस्मात्परमेश्वर एकैकमेतद्भवति । … मृतमभयमेतद्ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमित्यादिनृसिंहोत्तरतापनीयोपनिषद्यपि ॥ ४१ ॥

**उपासनस्य सामर्थ्याद्विद्योत्पत्तिर्भवेत्ततः ॥**
**नान्यः पंथा इति ह्येतच्छास्त्रं नैव विरुध्यते ॥ ४२ ॥**

**रा० टीका**—ननूपासनया मुक्तिः स्याच्चेत् "नान्यः पंथा विद्यतेऽयनाय" इति श्रुतिविरोध इत्याशंक्य विद्याव्यवधानेन मोक्षप्रदत्वाभिधानान्न विरोध इत्याह—**उपासनस्येति** ॥ ४२ ॥

**अ० टीका**—**उपासनस्येति** । **नान्य इति** । "तमेवं विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" इति हि **श्रुत्या** सहाप्येवं सति विरोधो न भवतीति भावः ॥ ४२ ॥

**रा० टीका**—मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यत इत्युक्तार्थे **श्रुतिं** प्रमाणयति—

**निष्कामोपासनान्मुक्तिस्तापनीये समीरिता ॥**
**ब्रह्मलोकः सकामस्य शैब्यप्रश्ने समीरितः ॥ ४३ ॥**

**निष्काम इति** । तत्र सोऽकाम इत्यादि **तापनीयवाक्यं** पूर्वमेवोदाहृतम् ॥ ४३ ॥

**अ० टीका**—**निष्कामेति** । सोऽकामो निष्काम इत्यादि**तापनीयश्रुति**स्तूक्तैव । सकामस्य निर्गुणोपासकस्य तु ब्रह्मलोकः । **प्रश्नोपनिषदि** शैब्यप्रश्न उक्त इत्याह—**ब्रह्मलोक इति** ॥ ४३ ॥

**रा० टीका**—इदानीं शैब्य**प्रश्नोपनिषद्वाक्य**मर्थतः पठति—

**य उपास्ते त्रिमात्रेण ब्रह्मलोके स नीयते ॥**
**स एतस्माज्जीवघनात्परं पुरुषमीक्षते ॥ ४४ ॥**

**य उपास्त इति** । "यः पुनरेतत्त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परं पुरिशयं पुरुषमीक्षते" इति सकामस्य ब्रह्मलोकप्राप्तिः श्रूयत इत्यर्थः । ननु **शैब्यप्रश्ने** सकामस्य ब्रह्मलोकगतिरेव प्रतीयत इत्याशंक्य तत्र तत्त्वसाक्षात्कारश्च श्रूयत इत्याह—**स एतस्मादिति** । ब्रह्मलोकं गतः स उपासक एतस्माज्जीवघनाज्जीवसमष्टिरूपाद्धिरण्यगर्भात्परमुत्कृष्टं पुरुषं निरुपाधिकचैतन्यरूपं परमात्मानमीक्षते साक्षात्करोति ॥ ४४ ॥

**अ० टीका**—तामेव श्रुतिमर्थतः पठति—**य उपास्त इति** । "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति ह्येतन्मूलीभूता **प्रश्नोपनिषदि शैब्यप्रश्ने श्रुतिः । स**

**इति।** स उपासकः। एतस्माद्व्यष्टिलिंगशरीरसाजात्येन साक्षिप्रत्यक्षात्। **जीवेति।** जीवसमष्टिरूपहिरण्यगर्भादित्यर्थः। शिष्टं तु स्पष्टमेव॥ ४४॥

**अप्रतीकाधिकरणे तत्क्रतुन्याय ईरितः॥**
**ब्रह्मलोकफलं तस्मात्सकामस्येति वर्णितम्॥ १४५॥**

**रा० टीका**—किं च "अप्रतीकालंबनान्नयतीति बादरायणः" "उभयथादोषात्तत्क्रतुश्च" इत्यत्र कामानुसारेण फलप्राप्तिर्भवतीति प्रतिपादितं तस्मादपि सकामस्य ब्रह्मलोकगतिरित्युक्तेत्याह—**अप्रतीकेति**॥ ४५॥

**अ० टीका**—एवं सकामस्य निर्गुणोपासकस्य ब्रह्मलोकप्राप्तौ सूत्रसंमतिं वक्ति—**अप्रतीकेति।** "अप्रतीकालंबनान्नयतीति बादरायणः" इत्यस्मिन्न**धिकरण** इति यावत्। **तत्क्रतुन्याय इति।** उभयथाऽपि दोषात्तत्क्रतुश्चेतिन्याय इत्यर्थः। ईरित उक्तः। कोऽत्र सूत्रार्थ इत्यत्राऽऽह। **ब्रह्मेति।** अक्षरार्थस्तु **ब्रह्मामृतवर्षिण्यामेव** ज्ञेयः॥ १४५॥

**रा० टीका**—तर्हि सकामस्य तत्त्वज्ञानं कुतो जायत इत्याशंक्याऽऽह—

**निर्गुणोपास्तिसामर्थ्यात्तत्र तत्त्वमवेक्षते॥**
**पुनरावर्तते नायं कल्पांते च विमुच्यते॥ ४६॥**

**निर्गुणेति।** "इमं मानवमावर्तं नावर्तते न स पुनरावर्तते न स पुनरावर्तते" इति "ब्रह्मणा सह ते सर्वे" इत्यादिश्रुतिस्मृतिसद्भावान्न तस्य पुनः संसारप्राप्तिः किं तु मुक्तिरेवेत्याह—**पुनरावर्तत इति**॥ ४६॥

**अ० टीका**—एवं तर्हि सकामस्य कथं तत्र ज्ञानमित्यत आह—**निर्गुणेति**॥४६॥

**प्रणवोपास्तयः प्रायो निर्गुणा एव वेदगाः॥**
**क्वचित्सगुणताऽप्युक्ता प्रणवोपासनस्य हि॥ ४७॥**

**रा० टीका**—इदानीं प्रणवोपासनप्रसंगाद्बुद्धिस्थं तद्वैविध्यं दर्शयति—**प्रणवेति**॥४७॥

**अ० टीका**—एवं च प्रणवोपास्तीनां द्वैविध्यमित्याह—**प्रणवेति**॥ ४७॥

**रा० टीका**—द्वैविध्ये प्रमाणमाह—

**परापरब्रह्मरूप ओंकार उपवर्णितः॥**
**पिप्पलादेन मुनिना सत्यकामाय पृच्छते॥ ४८॥**

**परापरेति।** "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति" इति उभयरूपत्वं प्रतिपादितमित्यर्थः॥ ४८॥

**अ० टीका**—तत्र मानमाह—**परेति।** "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" इति **प्रश्नोपनिषदि** श्रूयते॥ ४८॥

**एतदालंबनं ज्ञात्वा यो यदिच्छति तस्य तत्॥**
**इति प्रोक्तं यमेनापि पृच्छते नचिकेतसे॥ ४९॥**

**रा० टीका—कठवल्ल्यां** यमेनाप्येतदालंबनं ज्ञात्वेत्यादिना द्वैविध्यमुक्तमित्याह—**एतदालंबनमिति**॥ ४९॥

**अ० टीका**—निर्गुणोपासनस्य प्रणवावच्छेदेन तथा सगुणोपासनस्यापि **कठवल्यां** यमेन नाचिकेतसं प्रत्यनुष्ठानमुक्तमस्तीत्याह—**एतदिति** ॥ ४९ ॥

**इह वा मरणे वाऽस्य ब्रह्मलोकेऽथवा भवेत् ॥**
**ब्रह्मसाक्षात्कृतिः सम्यगुपासीनस्य निर्गुणम् ॥ १५० ॥**

**रा० टीका**—उक्तमर्थमुपसंहरति—इह वेति ॥ १५० ॥

**अ० टीका**—भवत्वेवमथापि तु निर्गुणोपासनस्य परिपाकतारतम्येन ब्रह्मज्ञानद्वारा कैवल्यमेव फलमित्युपसंहरति—इह वेति ॥ १५० ॥

**अर्थोऽयमात्मगीतायामपि स्पष्टमुदीरितः ॥**
**विचाराक्षम आत्मानमुपासीतेति संततम् ॥ ५१ ॥**

**रा० टीका**—विचारात्तत्त्वज्ञानसंपादनासमर्थस्य निर्गुणब्रह्मध्यानेऽधिकार इत्ययमर्थ **आत्मगीतायां** सम्यगभिहित इत्याह—**अर्थोऽयमिति** ॥ ५१ ॥

**अ० टीका**—ननु निर्गुणोपासनस्य श्रुतिवत्स्मृत्यादौ प्रायेण न प्रसिद्धिरित्यत आह—**अर्थोऽयमिति** ॥ ५१ ॥

**साक्षात्कर्तुमशक्तोऽपि चिंतयेन्मामशंकितः ॥**
**कालेनानुभवारूढो भवेयं फलितो ध्रुवम् ॥ ५२ ॥**

**रा० टीका**—आत्मगीतावाक्यान्येवोदाहरति—**साक्षादिति** ॥ ५२ ॥

**अ० टीका**—तद्वाक्यान्येव पठति—**साक्षात्कर्तुमित्यादित्रिभिः** ॥ ५२ ॥

**रा० टीका**—ध्यानस्य सम्यग्ज्ञानोपायत्वे दृष्टांतमाह—

**यथाऽगाधनिधेर्लब्धौ नोपायः खननं विना ॥**
**मल्लाभेऽपि तथा स्वात्मचिंतां मुक्त्वा न चापरः ॥ ५३ ॥**

**यथेति** । दार्ष्टांतिके योजयति—**मल्लाभ इति** ॥ ५३ ॥

**अ० टीका**—ध्यानस्याद्वैतात्मसाक्षात्कारोपायत्वे दृष्टांतं स्पष्टयति—**यथेति** । **अगाधेति** । अतिनिम्ननिक्षिप्तविपुलसुवर्णादिसंचयस्येत्यर्थः ॥ ५३ ॥

**देहोपलमपाकृत्य बुद्धिकुद्दालकात्पुनः ॥**
**खात्वा मनोभुवं भूयो गृह्णीयान्मां निधिं पुमान् ॥ ५४ ॥**

**रा० टिका**—व्यतिरेकेणोक्तमर्थमन्वयमुखेनाऽऽह—**देहोपलमिति** ॥ ५४ ॥

**अ० टीका**—तत्र रूपकेण प्रतिबंधसाधनस्थलफलान्याह—**देहेति** । उपलक्षणमिदं पंचकोशानामपि ॥ ५४ ॥

**रा० टीका**—ज्ञानेऽसमर्थस्य ध्यानेऽधिकार इत्यत्र वाक्यांतरं पठति—

**अनुभूतेरभावेऽपि ब्रह्मास्मीत्येव चिंत्यताम् ॥**
**अप्यसत्प्राप्यते ध्यानान्नित्याप्तं ब्रह्म किं पुनः ॥ १५५ ॥**

**अनुभूतेरिति** । ध्यानाद्धि ब्रह्मप्राप्तौ कैमुतिकन्यायमाह—**अपीति** । उपासकस्य

पूर्वमविद्यमानमपि देवत्वादिकं ध्यानात्प्राप्यते किल स्वरूपत्वेन नित्यप्राप्तं सर्वात्मकं ब्रह्म ध्यानात्प्राप्यत इति किमु वक्तव्यमित्यर्थः ॥ १५५ ॥

**अ० टीका**—तत्र ज्ञानमेव ज्ञानाशक्तेन कार्यमित्यत्र वाक्यांतरमपि **प्रमाणयति—अनुभूतेरिति** । तत्र कैमुतिकन्यायमाह—**अप्यसदिति** । देवो भूत्वा देवानप्येतीति **श्रुतेर**सदविद्यमानमपि देवत्वादि ॥ १५५ ॥

**अनात्मबुद्धिशैथिल्यं फलं ध्यानाद्दिने दिने ॥**
**पश्यन्नपि न चेद्ध्यायेत्कोऽपरोऽस्मात्पशुर्वद ॥ ५६ ॥**

**रा० टीका**—ब्रह्मध्यानफलस्य प्रत्यक्षसिद्धत्वादपि ध्यानं कर्तव्यमित्याह—**अनात्मेति** ॥ ५६ ॥

**अ० टीका**—ब्रह्मध्यानफलं प्रतिदिनं दृष्टमपीति स्पष्टयंस्तद्विमुखान्निंदति—**अनात्मेति** । तस्माद्विचाराचतुरेण मुमुक्षुणा निर्गुणब्रह्मध्यानमेव सर्वदा विधेयमित्याशयः ॥ ५६ ॥

**रा० टीका**—इदानीमुपपादितमर्थं संक्षिप्य दर्शयति—

**देहाभिमानं विध्वस्य ध्यानादात्मानमद्वयम् ॥**
**पश्यन्मर्त्योऽमृतो भूत्वा ह्यत्र ब्रह्म समश्नुते ॥ ५७ ॥**

**देहाभिमानमिति** । मरणशीले देहेऽहमित्यभिमानपरित्यागात्स्वयममृतो भूत्वाऽत्रास्मिन्नेव शरीरे स्वस्य निजं रूपं सच्चिदानंदरूपं ब्रह्म प्राप्नोति ॥ ५७ ॥

**अ० टीका**—तत्फलमिह वा मरणे वाऽपि ब्रह्मलोकेऽथवेत्यादिनोपासनपरिपाकतारतम्यात्त्रिधोक्तमप्यधुना तदादरातिशयार्थं पुनः सांक्षिपति—**देहेति** । तीव्रसंवेगानामसन्नः प्रज्ञालाभ इति ॥ ५७ ॥

**ध्यानदीपमिमं सम्यक्परामृशति यो नरः ॥**
**मुक्तसंशय एवायं ध्यायति ब्रह्म संततम् ॥ ५८ ॥**

**इति श्रीविद्यारण्यमुनिविरचितपञ्चदश्यां नवमो ध्यानदीपः समाप्तः ॥ ९ ॥**

**रा० टीका**—ध्यानदीपानुसंधानफलमाह—**ध्यानदीपमिति** ॥ ५८ ॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचितं ध्यानदीपव्याख्यानं समाप्तम् ॥ ९ ॥

**अ० टीका**—तत्रास्य प्रकरणस्य सम्यग्विचारणमेवोक्तनिर्गुणध्यानप्रावण्ये कारणमित्याह—**ध्यानदीपमिति** । ननूपक्रमे भवताऽस्य प्रकरणस्य नवमस्य—" सद्ध्यानकर्मबोधैर्मोक्षो ध्यानेन बोधजातेन । शुद्धेन वेति शुद्धिः प्रतिबंधोऽयं चतुर्थ इह जीवे " इत्यार्यया शोधितत्वंपदार्थाख्यजीवस्वरूपनिर्णयविषयकसाधनविपरीतभावनाभिधोक्तचतुर्थप्रतिबंधबाधकत्वं ध्यानदीपस्य—" ध्यानविचारान्यतरध्वस्तप्रतिबंध एव बुद्धः स्यात् । इत्युक्तेस्तत्परता नवमे निर्णीयते स्पष्टा " इत्यार्ययाऽभ्यधायि तत्कथमिति चेच्छृणु । अत्र हि संवादिभ्रमवद्ब्रह्मतत्त्वोपास्त्याऽपि मुच्यत इत्युपक्रम्य देहाभिमानं विध्वंस्येत्याद्युपसंहृतम् । तेन ब्रह्मतत्त्वोपास्त्याऽपीत्यपिशब्दध्वनितविचारेणैव ज्ञानद्वारा मुच्यते तदशक्तौ ब्रह्मतत्त्वोपास्तिश-

ब्दितनिर्गुणब्रह्मज्ञानेनापि ज्ञानप्रतिबंधमपनीय ज्ञानेन मुच्यत इत्येवमेवोपसंहाराशयं निर्णी
तयोरैकरूप्यं बोध्यम् । तथा तत्राभ्यासादीन्यपि लिंगानि यथा—" वेदांतेभ्यो ब्रह्मतत्त्वम
खंडैकरसात्मकम् । परोक्षमवगत्यैनदहमस्मीत्युपासते " इत्यादौ स्पष्टान्येव । उक्तं हि वासि
ष्ठे—" द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव । योगस्तद्वृत्तिरोधः स्याज्ज्ञानं सम्य
गवेक्षणम् । असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः । प्रकारौ द्वौ ततो देवो जगाद प
रमः शिवः " इति । तस्मान्नैवात्र साधनवैपरीत्यलेशावकाशोऽपीति शिवम् ॥ ९८ ॥

इति श्रीमत्परमहंसपरि० श्रीमदद्वैतसच्चिदानंद० पंचदशीव्याख्यायाः संपूर्णोऽयं ध्या
नदीपप्रकाशः ॥ ९ ॥

श्रीमदद्वैतसच्चिदानंदगुरुवर[1]श्रीमत्स्वरूपानंदगुरुवर[2]श्रीमन्नारायणगुरुवर[3]चरणसरोरुहार्पणम
स्तु संततम् ॥

---

१ ब्रह्मविद्यामननसहायीभूतश्रीरघुनाथभट्टाख्याः । २ शिवपञ्चाक्षरीमहामन्त्रोपदेशकर्तारः स्वरूपा
नन्दाश्रमयोगपट्टा महादेवबुवासंज्ञकाः । ३ चतुःशास्त्राध्यापकाचार्याः साठे इत्युपनामकाः ।

# अथ पंचदश्यां नाटकदीपाख्यं दशमं प्रकरणम्.

**रा० टीका**—नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
अर्थो नाटकदीपस्य मया संक्षिप्य वक्ष्यते ॥ १ ॥

चिकीर्षितस्य ग्रंथस्य निष्प्रत्यूहपरिपूरणायाभिमतदेवतातत्त्वानुस्मरणलक्षणं मंगलमाचरन्मंदाधिकारिणामनायासेन निष्प्रपंचब्रह्मात्मतत्त्वप्रतिपत्तिसिद्धये “ अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते । शिष्याणां बोधसिद्ध्यर्थं तत्त्वज्ञैः कल्पितः क्रमः” इति न्यायमनुसृत्याऽऽत्मन्यध्यारोपं तावदाह—

**परमात्माऽद्वयानंदपूर्णः पूर्वं स्वमायया ॥**
**स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः ॥ १ ॥**

**परमात्मेति** । पूर्वं सृष्टेः प्रागद्वयानंदपूर्णः सदेव सौम्येदमग्र असीदेकमेवाद्वितीयं विज्ञानमानंदं ब्रह्म पूर्णमदः पूर्णमित्यादिश्रुतिप्रसिद्धः स्वगतादिभेदशून्यः परमानंदरूपः परिपूर्णः परमात्मा स्वमायया मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमितिश्रुत्युक्त्या स्वनिष्ठया मायाशक्त्या स्वयमेव जगद्भूत्वा तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवदितिश्रुतेः स्वयमेव जगदाकारतां प्राप्य जीवस्वरूपतः प्राविशत् “ तत्सृष्ट्वा तदेवानुप्राविशत् ” “ अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य ” इत्यादिश्रुतेर्जीवरूपेण प्रविष्टवानित्यर्थः ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभु विमलपरब्रह्मकूटस्थरूपं
मोहाद्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वांश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ॥
नाटकदीपं स्फुटयाम्यथ कौमुद्यास्तु दिक्प्रकाशेन ॥ २ ॥

अथ भगवान्**भारतीतीर्थाचार्यः** स्वकृते पूर्वस्मिन्**ध्यानदीपाख्ये** पंचदश्याः प्रकरणेऽन्ते तदनुसंधानफलकथनावसरे “ मुक्तसंशय एवायं ध्यायति ब्रह्म संततम् ” इत्युक्त्या कस्यचिदंतेवासिनः स्वल्पग्रंथेनानायासादतिविषयलालसोऽहमतिमंदश्च मुक्तसंशय एव सन्कथं संततं ब्रह्म ध्यातुं शक्तः स्यामिति मुखम्लान्यादिनाऽतिचिंतां निश्चित्य तदनुजिघृक्षया **नाटकदीपाख्यं** स्वल्पं पंचदश्यां दशमं प्रकरणमारभमाणः परमात्मानुसंधानलक्षणं मंगलं प्रथितप्रमाणप्रयोजनं कुर्वंस्तेनास्य विषयप्रयोजनाद्यनुबंधानपि ध्वनितो निबध्नाति—**परमात्मेति** । **अद्वयेति** । न विद्यते द्वयं द्वैतरूपं दृश्यं यत्र स चासावानंदश्चेति तथा । एवं परमात्मेत्यत्रापि विग्रहः । परान्दृश्यपदार्थान्मिमीते साक्षित्वेन प्रकाशयतीति परमः स चासावात्मा चेति प्राग्वदेव कर्मधारयः । एतेन शुद्धत्वंपदार्थः साक्षित्वोपलक्षितः प्रत्यक्सूचितः । एवमद्वयेत्यादिना शुद्धस्तत्पदार्थः सत्यज्ञानानंतानंदाद्वैतब्रह्मलक्षणो द्योत्यते । पूर्ण इत्यनेन तयोरभेदोऽखंडैकरसोऽसिपदार्थश्चेति त्रिपद्या सर्वोऽप्यद्वैतशास्त्रार्थः सूत्रितो भवति । स एवा-

ज्ञातत्वाज्ञातत्वाभ्यां क्रमेण शास्त्रवत्तत्प्रकरणस्यास्य विषयः प्रयोजनं च । सिद्धांतेऽत्र जहद-जहत्स्वार्थरूपभागत्यागलक्षणाया एवांगीकृतत्वाच्छास्त्रस्य विषयेण सह लक्ष्यलक्षकभाव एव संबंधः प्रसिद्ध एव । अधिकारी त्वधस्ताद्ध्वनित एव यादृग्जिज्ञासुमुद्दिश्यैतत्प्रकरणारंभोऽवतारितः । अथोक्तार्थबोधसिद्धये—

" अध्यारोपापवादाभ्यां निष्प्रपंचः प्रपंच्यते ।
शिष्याणां बोधसिद्ध्यर्थं तत्त्वज्ञैः कल्पितः क्रमः "

इति **प्राचां** वचनात्प्रथममध्यारोपमाह—**पूर्वमित्यादिना** । पूर्वं सृष्टयचनारंभदशायामनादिभावरूपाविद्यात्मसंबंधलक्षणक्षणादिकालावच्छेदेनेत्यर्थः । **स्वेति** । स्वैकायत्तसत्ताकत्वेन कल्पितस्वैकसंबंधशाल्यनादिभावरूपशुद्धसत्त्वप्रधाना विद्ययेत्यर्थः (?) । **स्वयमेवेति** । एतेन स्वतादात्म्यापन्नोक्तरूपमायेतरसामग्रीव्युदासो व्यज्यते । तेन विवर्तवादांगीकारादारंभादिवादनिरासः सूचितः । जगत्सादिद्वैतमिति यावत् । भूत्वा । **जीवेति** । " **अजामेकां** लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः " इति **तैत्तिरीय**श्रुतेस्तथा । " प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि " इति **स्मृतेः** " जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्यातच्चितोर्योगः षडस्माकमनादयः " इत्यभियुक्तोक्तेश्चानादिसिद्धसमष्टिजीवात्मनेत्यर्थः । उपहितत्वेनावच्छिन्नत्वेन प्रतिबिंबत्वेनाऽऽभासत्वेन वा मरुदेशावच्छिन्नः सौरालोकः स्वाभिन्नत्वेन स्वकल्पितमृगजल इव प्राविशादित्यन्वयः । तथाच श्रुतयः—" आत्मा वा इदमेक एवाग्र आसीत् " " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " " सत्यं ज्ञानमनंतं ब्रह्म " " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् " " सत्यं चानृतं च सत्यमभवत् । यदिदं किंच " " तत्सृष्ट्वा तदेवानुप्राविशत् " " अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति च ॥ १ ॥

**रा० टीका**—ननु परमात्मन एवैकस्य सर्व शरीरेषु प्रविष्टत्वे पूज्यपूजकादिभावेन प्रतीयमान उत्तमाधमभावो विरुध्येतेत्याशंक्याऽऽह—

**विष्ण्वाद्युत्तमदेहेषु प्रविष्टो देवता भवेत् ॥**
**मर्त्याद्यधमदेहेषु स्थितो भजति मर्त्यताम् ॥२॥**

**विष्ण्विति** । नायं स्वाभाविक उत्तमाधमभावः किं तु शरीरोपाधिनिबंधनोऽतो न विरोध इति भावः ॥ २ ॥

**अ० टीका**—नन्वेवमद्वैतात्मैव यदि मायावशान्निरुक्तरूपे जगति प्रविष्टस्तर्हि प्रतिबिंबाद्यात्मकजीवरूपेण साधारण्यात्प्रविष्टत्वे दृश्यत्वदृक्त्वाभ्यां चिज्जडविभागसंभवेऽपि सेव्यसेवकादिभावविभागः कथं स्यादित्यत आह—**विष्ण्वादीति** । न चैवं विष्ण्वादेर्जीवत्वापत्तिः । इष्टापत्तेः । तथा **ह्यद्वैतसिद्धौ** तावन्मंगल एव—

" मायाकल्पितमातृतामुखमृषाद्वैतप्रपंचाश्रयः
सत्यज्ञानसुखात्मकः श्रुतिशिखोत्थाखंडधीगोचरः ।
मिथ्याबंधविधूननेन परमानंदैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः "

इति स्वाभिमतमनेकशरीरैकजीववादानुसारेण विष्णोरेव मुख्यजीवत्वं संसूच्याग्रे तावदेकजीववादे भूयसा ग्रंथेन जीवैक्यं प्रतिपाद्य । न चैवं सर्वज्ञत्वसर्वकर्तृत्वादिबोधकश्रुतीनां निर्विषयत्वम् । शुद्धचैतन्येऽज्ञत्वस्यैवाभावात् । ईश्वरस्य च जीवभिन्नस्याभावाज्जीवसार्वज्ञस्यानुभवबाधितत्वादिति वाच्यम् । समष्ट्यभिमानिनो जीवस्य सर्वज्ञत्वसर्वकर्तृत्वादिस्वीकारात् । न चानुभवविरोधः । अंतःकरणाभेदाध्यासबलात्तदनुभवताद्विपरीतानुभवयोरुपपत्तेः । सर्वाभिमानिनस्तु सार्वज्ञाभिमानोऽस्त्येव । अत एव " तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप " इत्याद्युपपत्तेरिति **भगवदनुभव** एवोदाहृतः । तस्मात्समुचितमेव विष्णोर्जीवत्वमिति । अत्रोच्यते । किमिदं विष्णोर्जीवत्वं मूलग्रंथान्यथानुपपत्त्योच्यते समुदाहृताद्वैतसिद्धिग्रंथाभिप्रायाद्वा । नाऽऽद्यः । तत्तात्पर्यस्य त्वयैवाज्ञातत्वात् । तद्यथा । तत्र हि मायिब्रह्मणस्तद्वशाज्जगद्रूपेण भवनमनादिसिद्धसमष्टिजीवरूपेण तत्र प्रतिबिंबाद्यात्मना प्रवेशनं च पूर्वपद्येऽभिहितमिति तु स्फुटमेव । यदि साधारण्येनोक्तप्रवेशस्तर्हि प्रतीयमानः शास्त्रादौ पूज्यपूजकभावः कथमित्याकांक्षायामेव विष्ण्वादीति पद्यं प्रवृत्तम् । तथाच विष्ण्वादयः श्रुत्यादिप्रसिद्धाः सर्वेऽपि परमेश्वरलीलाविग्रहा उत्तमाः सर्वोत्कटा येषामिंद्रादीनां जीवानां व्यष्ट्यात्मकत्वेन प्रसिद्धानां तेषां ये देहा वज्रहस्तः पुरंदर इत्यादिश्रुत्यादिप्रसिद्धाः कायास्तेष्विति विग्रहस्यैव स्वारसिकत्वेनाऽऽचार्यविवक्षितत्वमवश्यं वाच्यम् । अन्यथा । प्रविष्टः सन्देवता अभवदित्यग्रे वृंदारका दैवतानि पुंसि वा देवताः स्त्रियामित्यभिधानकोशप्रसिद्धसुरसाधारणवाचकदेवताशब्दप्रयोगानौचित्यात्प्रविष्टस्त्वीश्वरोऽभवदित्यपि वक्तुं शक्यत्वाच्च । न चैवं विग्रहेऽस्मदादीनां किं विष्ण्वादयः पारमेश्वराः सर्वेऽपि लीलाविग्रहाः सर्वोत्कृष्टाः शास्त्रान्नैव संमताः संति येनेंद्रादय एव ग्राह्या इति सांप्रतम् । मनुष्याद्यपेक्षया देवानां प्रायेण ज्ञानाधिक्यस्य शास्त्रादौ सुप्रसिद्धत्वात् । ज्ञानाधिकारतारतम्यविवक्षयैव । " तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् " इति श्रुतौ क्रमोक्तेश्च । एवं तर्हि मर्त्यादीत्यत्रापि बहुव्रीहिपूर्वकषष्ठीतत्पुरुषघटित एष विग्रहो वाच्यः । अन्यथा वैरूप्यापत्तेरिति चेन्न । मर्त्यादयः, आदिना तिर्यञ्चोऽधमाः प्रचुरदुःखत्वादत्यंतं तुच्छा येषां पूर्वसुकृतपरिपक्त्या भक्त्याधिकारिणां विचारिणां तेषां ये देहास्तेष्वित्येवेष्टत्वात् । अन्यथा स्थितो भजति देवतामित्युत्तरग्रंथासांगत्यापत्तेः । न हि सर्वेऽपि मनुष्यादयः स्वस्ववर्णाश्रमधर्मोचितश्रौतस्मार्तकर्मानुष्ठानतः परमेश्वरबुद्ध्येंद्रादीन्देवान्भजंत इति सुप्रसिद्धमेव । एवं चानंतजीवसमष्टिरूपेण मायिकस्वाध्यस्तनिखिलजडजगति स्वदत्तसत्ताप्रकाशत्वात्स्वाभिन्ने प्रविष्टो माययेत्युपचर्यते । तत्र व्यष्ट्याख्यानंतजीवानां मध्येऽपि केचिदेव पूज्यतां तत्पूजकतां चापन्नाः संततं सुकृततारतम्येनैव न तु सर्वेऽपीति बोध्यम् । नाप्यंत्यः । तस्य भुबुत्सुविशेषप्रतिबोधनैकफलकप्रतिक्रियाविशेषत्वात् । **श्रीमधुसूदनाचार्याणां** च तत्र तात्पर्याभावाच्च । अन्यथा विष्णोर्जीवसमष्टित्वे—

" वंशीविभूषितकरान्नवनीरदाभात्पीतांबरादरुणबिंबफलाधरोष्ठात् ।
पूर्णेंदुसुंदरमुखादरविंदनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने " ।

इत्युक्तग्रंथस्थमेव तेषां वाक्यं विरुध्येत । न च तत्समष्टिजीवाभिप्रायकमेवेति वाच्यम् । किमपीत्यादिपदस्वारस्यभंगात् । अद्वैतब्रह्मण एव भक्त्युद्रेकेण तथा वर्णनाच्च । एवमेव तैः स्वाशयः सूचितः **संक्षेपशारीरकटीकामंगलश्लोके**—

" सत्यं ज्ञानमनन्तमद्वयसुखं यद्ब्रह्म गत्वा गुरुं
नत्वा लब्धसमाधिभिर्मुनिवरैर्मोक्षाय साक्षात्कृतम् ।
जातं नंदतपोबलात्तदखिलानंदाय वृंदावने
वेणुं वादयदिंदुसुंदरमुखं वंदेऽरविंदेक्षणम् " इति ।

नन्वेवं तर्हि कथमेतैरेव **सिद्धांतबिंदौ वार्तिकादि**मतान्युपन्यस्य । अज्ञानोपहितं बिंबचैतन्यमीश्वरः । अज्ञानप्रतिबिंबितं चैतन्यं जीव इति वा । अज्ञानानुपहितं शुद्धं चैतन्यमीश्वरः । अज्ञानोपहितं जीव इति वा मुख्यो वेदांतसिद्धांत एकजीववादाख्यः । इममेव च दृष्टिसृष्टिवादमाचक्षत इति । तथा चात्र मुख्यपदाशयादेतेषामयमेव वादः संमत इति वाच्यम् । तथा च तदीयग्रंथद्वयैक्यस्वारस्याद्विष्णोरेवोक्तसमष्टिजीवत्वं तत्संमतमिति चेन्न **सिद्धान्तबिंदौ** मुख्यपदं दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहुमन्यत इत्यनु**भूतिप्रकाशो**क्तेस्तत्त्वेन स्वसंमतत्वाभिप्रायमेव । तेनात्रैकशरीरैकजीववाद एव तत्संमतो न त्वनेकशरीरैकजीववादोऽप्यद्वैतसिद्ध्युक्तोऽधिकारिविशेषबुबोधयिषया प्रवृत्तः। अत एवात्र समष्टिजीवपदप्रयोगाभाव इति सर्वमवदातं ध्येयं धीरैः ॥ २ ॥

**रा० टीका**—इत्थमात्मन्यध्यारोपं संक्षेपेण प्रदर्श्य ससाधनं तदपवादं संक्षिप्य दर्शयति—

**अनेकजन्मभजनात्स्वविचारं चिकीर्षति ॥**
**विचारेण विनष्टायां मायायां शिष्यते स्वयम् ॥ ३ ॥**

**अनेकेति** । अनेकजन्मभजनादनेकेषु जन्मस्वनुष्ठितानां कर्मणां ब्रह्मणि समर्पणरूपाद्भजनात्स्वविचारं स्वस्याऽऽत्मनो ब्रह्मरूपस्य ज्ञानसाधनं श्रवणादिकं चिकीर्षति कर्तुमिच्छति ततः स्वविचारेण विचारजनितज्ञानेन मायायां स्वस्याद्वयानंदत्वादिरूपाच्छादिकायामज्ञानाविद्यादिशब्दवाच्यायां विनष्टायां निवृत्तायां स्वयमद्वयानंदपूर्णः परमात्मैवावशिष्यते ॥ ३ ॥

**अ० टीका**—एवमद्वैतात्मन्यध्यारोपं निरूप्य ससाधनं तदपवादं व्युत्पादयति—**अनेकेति** । भजनं तूक्तमेवाधस्तात् "मर्त्याद्यधमदेहेषु स्थितो भजति देवताम्" इत्यत्र ॥३॥

**रा० टीका**—ननु " तद्ब्रह्माहमिति ज्ञात्वा सर्वबंधः प्रमुच्यते " इत्यादि **श्रुति**भिर्बंधनिवृत्तिलक्षणस्य मोक्षस्य ज्ञानफलत्वाभिधानात्परमात्मावशेषणस्य तत्फलताभिधानमनुपपन्नमित्याशंक्याऽऽह—

**अद्वयानंदरूपस्य सद्वयत्वं च दुःखिता ॥**
**बंधः प्रोक्तः स्वरूपेण स्थितिर्मुक्तिरितीर्यते ॥ ४ ॥**

**अद्वयानंदेति** । अद्वितीये ब्रह्मणि वास्तवस्य बंधस्य मोक्षस्य वा दुर्निरूपत्वाद्दुःखित्वादिभ्रम एव बंधः स्वरूपावस्थितिलक्षणा तन्निवृत्तिरेव मोक्षः । अतो न श्रुतिविरोध इति भावः ॥ ४ ॥

**अ० टीका**—ननु विचारेण मूलाज्ञानलक्षणा माया विनश्यतु नाम तथाऽपि तया बंधः कः कृतोभूत्तन्नाशेन मोक्षश्च कीदृक्संपद्यत इत्यपेक्षायां तयोर्लक्षणे संक्षिपति—**अद्वयेति**॥४॥

**रा० टीका**—ननु " कर्मणैव हि संसिद्धिमास्थिता जनकादयः " इति **स्मृते**र्मोक्षस्य कर्मसाधनत्वावगमात्किमनेन विचारजनितज्ञानेनेत्यत आह—

**अविचारकृतो बंधो विचारेण निवर्तते ॥**
**तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥ ५ ॥**

**अविचारेति** । विचारप्रागभावोपलक्षिताज्ञानकृतस्य बंधस्य न विचारजन्यज्ञानादन्यतो निवृत्तिरुपपद्यते । उदाहृतस्मृतौ च संसिद्धिशब्देन चित्तशुद्धिरेवाभिधीयते न मोक्ष इति भावः । विचारेण बंधनिवृत्तिरुक्ता किं विषयेण विचारेणेत्यत आह—**तस्मादिति** । तत्त्वसाक्षात्कारपर्यंतं सर्वदा विचारं कुर्यादित्यर्थः ॥ ५ ॥

**अ० टीका**—ननु विचारेण प्रागुक्तरीत्या मायानाशेऽपि बंधः कथं नश्यतीत्यत आह—**अविचारेति** ॥ ५ ॥

**रा० टीका**—तत्र जीवस्वरूपं तावन्निरूपयति—

**अहमित्यभिमंता यः कर्ताऽसौ तस्य साधनम् ॥**
**मनस्तस्य क्रिये अंतर्बहिर्वृत्ती क्रमोत्थिते ॥ ६ ॥**

**अहमिति** । यच्चिदाभासविशिष्टोऽहंकारो व्यवहारदशायां देहादावहमित्यभिमन्यतेऽसौ कर्ता कर्तृत्वादिधर्मविशिष्टो जीव इत्यर्थः । तस्य किं करणमित्यपेक्षायामाह—**तस्येति** । कामादिवृत्तिमानंतःकरणभागो मनः करणस्य क्रियाव्याप्तत्वात्तत्क्रियां दर्शयति—**तस्य क्रियेति** ॥ ६ ॥

**अ० टीका**—एवमप्युक्तविचारः कथं कर्तव्य इत्यपेक्षायामहं ब्राह्मण इति ब्राह्मणत्वादिजातिविशिष्टे देहे तादात्म्याध्यासेनाभिमंता यश्चिदाभासः स एव जीवो देहाद्भिन्न इति जीवस्वरूपविचारं प्रथमं सामान्येनाऽऽह—**अहमितीति** । ननु यद्युक्ताभिमंतुरेव कर्तृत्वं तर्हि तस्य करणं किंचिद्वाच्यमित्यत्राऽऽह—**तस्येत्यादिना** । यथा दंडस्य चक्रभ्रामणं क्रिया तद्वदस्यापि क्रिया वाच्येत्यत आह—**तस्येति** । **क्रमेति** । क्रमेणोत्पन्ने इत्यर्थः ॥ ६ ॥

**रा० टीका**—अनयोः स्वरूपं विषयं च विविच्य दर्शयति—

**अंतर्मुखाऽहमित्येषा वृत्तिः कर्तारमुल्लिखेत् ॥**
**बहिर्मुखेदमित्येषा बाह्यं वस्त्विदमुल्लिखेत् ॥ ७ ॥**

**अंतर्मुखेति** । इदमित्येषेति बहिर्वृत्तेः स्वरूपाभिनयः । अवशिष्टेन विषयप्रदर्शनं बाह्यं देहाद्बहिर्वर्तमानमिदंतया निर्दिश्यमानं वस्तूल्लिखेद्विषयीकुर्यादित्यर्थः ॥ ७ ॥

**अ० टीका**—निरुक्तक्रियारूपयोरंतर्बाह्यः क्रमोत्पन्नवृत्त्योराकारं व्यापारं चाऽऽह—**अंतरिति** । कर्तारं बुद्धिप्रतिबिंबितं साक्षित्वोपलक्षितायाः कूटस्थचित आभासमिति यावत् । उल्लिखेद्विषयीकुर्यादित्यर्थः । **बहिरिति** । अत्रांतस्त्वं बहिष्ट्वं च देहापेक्षमेव । बाह्यं देहाद्बहिर्वर्तमानं वस्तु घटादिपदार्थजातं इदं इदंत्वेनोल्लिखेत्तन्निष्ठेदमंशं विषयीकुर्यादित्येतत् ॥ ७ ॥

**रा० टीका**—ननु मनसैव सर्वव्यवहारसिद्धौ चक्षुरादिवैयर्थ्यं प्रसज्येतेत्याशंक्याऽऽह—

**इदमो ये विशेषाः स्युर्गंधरूपरसादयः ॥**
**असांकर्येण तान् भिद्याद्घ्राणादींद्रियपंचकम् ॥ ८ ॥**

**इदम इति** । मनसेदमिति सामान्यमात्रं गृह्यते न तु तद्विशेषो गंधादिरतस्तद्ग्रहणे घ्राणादिकमुपयुज्यत इत्यर्थः ॥ ८ ॥

**अ० टीका**—ननु सामान्येनेदमंशोऽस्तु मनोवृत्तिविषयः शब्दादयस्तु तद्विशेषाः किं केवलया तयैव गृह्यंत इत्यत आह—**इदम इति** । आदिना शब्दस्पर्शौ । आदिना चक्षुर्जिव्हाकर्णत्वचः ॥ ८ ॥

**रा० टीका**—एवं सोपकरणं जीवस्वरूपं निरूप्य परमात्मानं निरूपयति—

**कर्तारं च क्रियां तद्वद्व्यावृत्तविषयानपि ॥**
**स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः ॥ ९ ॥**

**कर्तारमिति** । कर्तारं पूर्वोक्तमहंकाररूपं क्रियामहमिदमात्मकमनोवृत्तिरूपां व्यावृत्तविषयानपि व्यावृत्तानन्योन्यविलक्षणान्घ्राणादिग्राह्यान्गंधादीन्विषयांश्चैकयत्नेन युगपदेव यश्चिद्वपुश्चिद्रूप एव सन्स्फोरयेत्प्रकाशयेदसावत्र **वेदांतशास्त्रे** साक्षीत्युच्यत इत्यर्थः ॥ ९ ॥

**अ० टीका**—एवं जीवस्वरूपं सपरिवारं निरूप्योपक्रमोक्तपरमात्मस्वरूपं निरूपयति—**कर्तारमिति । व्यावृत्तेति ।** परस्परविभिन्नविषयानपीत्यर्थः । उपलक्षणमिदमंतर्बहिःकरणानामपि । स्फोरयेत्प्रकाशयेदित्यर्थः ॥ ९ ॥

**रा० टीका**—साक्षिण एकयत्नेन सर्वस्फोरकत्वमभिनीय दर्शयति—

**ईक्षे शृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहम् ॥**
**इति भासयते सर्वं नृत्यशालास्थदीपवत् ॥ १० ॥**

**ईक्षे शृणोमीति** । ईक्षे रूपमहं पश्यामीत्येवंद्रष्टादर्शनदृश्यलक्षणां त्रिपुटीमेकयत्नेन भासयेदेवं शृणोमीत्यादावपि योज्यं युगपदविकारित्वेऽनेकावभासकत्वे दृष्टांतमाह—**नृत्यशालास्थदीपवदिति** ॥ १० ॥

**अ० टीका**—तदेवाभिनयति—**ईक्ष इति** । इक्षेऽवलोकयामीत्यर्थः । तत्र निदर्शनमाह—**नृत्येति** ॥ १० ॥

**रा० टीका**—दृष्टांतं स्पष्टयति—

**नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम् ॥**
**दीपयेदविशेषेण तदभावेऽपि दीप्यते ॥ ११ ॥**

**नृत्येति** । अविशेषेण प्रभ्वादिविषयविशेषावभासनाय वृद्ध्यादिविकारमंतरेणेति यावत् ॥ ११ ॥

**अ० टीका**—तदेव विशदयति—**नृत्यशालेति** ॥ ११ ॥

**रा० टीका**—दार्ष्टांतिके योजयति—

**अहंकारं धियं साक्षी विषयानपि भासयेत् ॥**
**अहंकाराद्यभावेऽपि स्वयं भात्येव पूर्ववत् ॥ १२ ॥**

**अहंकारमिति** । सुषुप्त्यादावहंकाराद्यभावेऽपि तत्साक्षितया भात्येवेत्यर्थः ॥१२॥

**अ० टीका**—दार्ष्टांतिकेऽपि स्पष्टयति—**अहंकारमिति** । नन्वहंकारधियोः प्रभुनर्तकीस्थानीययोर्दीपस्थानीयेन साक्षिणाऽस्तु साक्षाद्भानं विषयाणां तु श्रोत्रादिकरणद्वारा प्रमातुरहंकारावच्छिन्नचिदाभासस्य भासमानानां कथं साक्षात्साक्षिभानमुपपद्यत इति चेत्सत्यम् । अनयैवानुपपत्त्याऽत्राऽऽचार्यस्यैकशरीरैकजीववादाख्यप्रागुदाहृतसिद्धांतबिंदूक्तदृष्टिसृष्टिपक्षस्यै-

वाभिमतत्वं गम्यते । तत्रैव सकलदृश्यस्यापि स्वप्नवत्प्रातिभासिकत्वमिति विषयाणामपि साक्षात्साक्षिभास्यत्वमुचितमेवेति भावः ॥ १२ ॥

**रा० टीका**—ननु प्रकाशरूपाया बुद्धेरेवाहंकारादिसर्ववस्त्ववभासकत्वसंभवात्किं तदतिरिक्तसाक्षिकल्पनयेत्याशंक्याऽऽह—

**निरंतरं भासमाने कूटस्थे ज्ञप्तिरूपतः ॥**
**तद्भासा भास्यमानेयं बुद्धिर्नृत्यत्यनेकधा ॥ १३ ॥**

**निरंतरमिति** । कूटस्थे निर्विकारे साक्षिणि ज्ञप्तिरूपतः स्वप्रकाशचैतन्यतया निरंतरं भासमाने सदा स्फुरति सतीयं बुद्धिस्तद्भासा तस्य साक्षिणः स्वरूपचैतन्येन भासमाना प्रकाश्यमानैवानेकधा घटोऽयं पटोऽयमित्यादिज्ञानाकारेण नृत्यति विक्रियते । अयं भावः । यतो बुद्धेर्विकारितया जडत्वात्स्वतःस्फूर्तिराहित्यमतस्तदतिरिक्तः सर्वावभासकः साक्ष्यभ्युपगंतव्य इति ॥ १३ ॥

**अ० टीका**—ननु सत्त्वगुणप्रधानाया बुद्धेरेव "सत्त्वात्संजायते ज्ञानम्" इति- **स्मृत्या** सर्वभासकत्वसंभवे किं साक्षिणेत्यत्राऽऽह—**निरंतरमिति । ज्ञप्तीति** । चिद्रूपत्वादित्यर्थः । **तदिति** । एवं च बुद्धेर्जडत्वात्स्वप्रकाशत्वाभावाच्च न सर्वभासकत्वं साक्षात्संभवतीति भावः ॥ १३ ॥

**रा० टीका**—उक्तमर्थं श्रोतृबुद्धिसौकर्याय नाटकत्वेन निरूपयति—

**अहंकारः प्रभुः सभ्या विषया नर्तकी मतिः ॥**
**तालादिधारिण्यक्षाणि दीपः साक्ष्यवभासकः ॥ १४ ॥**

**अहंकार इति** । विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वान्नृत्याभिमानिप्रभुतुल्यत्वमहंकारस्य । परिसरवर्तित्वेऽपि विषयाणां तद्राहित्यात्सभ्यपुरुषसाम्यम् । नानाविधविकारवत्त्वान्नर्तकीसाम्यं धियः । धीविक्रियाणामनुकूलव्यापारवत्त्वात्तालादिधारिसमानत्वमिंद्रियाणाम् । एतत्सर्वावभासकत्वात्साक्षिणो दीपसादृश्यमस्तीति द्रष्टव्यम् ॥ १४ ॥

**अ० टीका**—एवं चोक्तमर्थं सर्वं संपिंडीकृत्य रूपकेण निरूपयति—**अहंकार इति** । अक्षाणींद्रियाणि—**तालेति** । तालादिवाद्यवादकानां नर्तक्यनुचरत्वेन क्लीबत्वं युक्तमेवेति भावः ॥ १४ ॥

**स्वस्थानसंस्थितो दीपः सर्वतो भासयेद्यथा ॥**
**स्थिरस्थायी तथा साक्षी बहिरंतः प्रकाशयेत् ॥ १५ ॥**

**रा० टीका**—ननु साक्षिणोऽप्यहंकाराद्यवभासकत्वे तेन तेन संबंधापगमागमरूपविकारवत्त्वं स्यादित्याशंक्याऽऽह—**स्वस्थानेति** । दीपो यथा गमनादिविकारशून्यः स्वदेशेऽवस्थित एव सन्स्वसन्निहिताखिलपदार्थानवभासयत्येवं साक्ष्यपीति भावः ॥ १५ ॥

**अ० टीका**—ननु दीपदृष्टांतो विषमः साक्षिणो निर्विकारत्वाद्दीपस्य तु तैलवर्तिह्रासान्यथानुपपत्त्या प्रतिक्षणनूतनज्वालापरिणामित्वात्सेयं दीपज्वालेति प्रत्यभिज्ञायाश्चातिसादृश्यप्रयुक्तत्वाच्चेति चेद्बाढम् । व्यावहारिकस्वप्रकाशत्वेनैव तस्य दृष्टांतत्वादित्यभिसंधाय समाधत्ते—**स्वस्थानेति** । गमनाद्यकुर्वन्नेवेत्यर्थः । स्थिरेत्यादिना दार्ष्टांतिकयोजनम् । तत्र स्थिर-

श्चासौ स्थायीति कर्मधारये पौनरुक्त्यापत्तिरतः स्थिरेण " द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते " इति **गीताभाष्ये** कूटस्थपदेनाज्ञानस्योक्तिवदत्राप्यगत्या स्थिरपदेन नाज्ञानमंतराऽविचलत्वगुणेनाज्ञानमेव गृह्यते । तथाचाज्ञानेन स्थायी तत्प्रयुक्तदृश्यनिरूपितत्वलक्षणसाक्षित्ववांस्तदभावे तु शुद्धचिन्मात्र एवेत्यर्थः । देहापेक्षयैव बहिरंतरिति ॥ १५ ॥

**रा० टीका**—ननु साक्षिणो बहिरंतरवभासकत्वाभिधानमनुपपन्नम् " अपूर्वमनपरमनंतरमबाह्यम् " इति **श्रुत्या** तस्य बाह्यांतरविभागाभावाभिधानादित्याशंक्याऽऽह—

**बहिरंतर्विभागोऽयं देहापेक्षो न साक्षिणि ॥**
**विषया बाह्यदेशस्था देहस्यांतरहंकृतिः ॥ १६ ॥**

**बहिरिति** । कस्य बाह्यत्वं कस्य चांऽऽतरत्वमित्यत आह—**विषया इति** ॥ १६ ॥

**अ० टीका**—तदेवाऽऽह—**बहिरंतरिति** ॥ १६ ॥

**रा० टीका**—ननु " स्थिरस्थायी तथा साक्षी बहिरंतः प्रकाशयेत् " इत्यविकारिणः सतो बहिरंतरवभासकोक्तिरयुक्ताऽहं घटं पश्यामीत्यत्राहमित्यंतरहंकारसाक्षितया प्रथमतो भासकस्यानंतरं घटं पश्यामीति घटाकारवृत्तिस्फुरणरूपेण बहिर्निर्गमानुभवादित्याशंक्याऽऽह—

**अंतस्था धीः सहैवाक्षैर्बहिर्याति पुनः पुनः ॥**
**भास्यबुद्धिस्थचांचल्यं साक्षिण्यारोप्यते तथा ॥ १७ ॥**

**अंतस्थेति** । दृष्टग्राहकत्वेन देहांतरावस्थिता बुद्धी रूपादिग्रहणाय चक्षुरादिद्वारा भूयो भूयो निर्गच्छति तथा च तन्निष्ठं चांचल्यं तद्भासके साक्षिण्यारोप्यतेऽतो न वास्तवं साक्षिणश्चांचल्यमिति भावः ॥ १७ ॥

**अ० टीका**—ननु देहस्यांतरपि साक्ष्यप्यहंकारभासकत्वेन भासमानस्तस्था बहिरपि घटादिविषयभासकत्वेन भासमानः स्फुरत्येव तेन किमसावपि चिदाभासवद्बुद्ध्या सह गमागमौ करोतीत्याशंकां शमयति—**अंतःस्थेति** । अक्षैरिंद्रियैः ॥ १७ ॥

**गृहांतरगतः स्वल्पो गवाक्षादातपोऽचलः ॥**
**तत्र हस्ते नर्त्यमाने नृत्यतीवाऽऽतपो यथा ॥ १८ ॥**

**रा० टीका**—भासके भास्यचांचल्यारोपः क दृष्ट इत्याशंक्याऽऽह—**गृहांतरगत इति** । गवाक्षाद्गृहांतरगतः स्वल्पातपोऽचल एव वर्तते तत्र तस्मिन्नातपे पुरुषेण हस्ते नर्त्यमाने इतस्ततश्चाल्यमाने यथाऽऽतपो नृत्यतीव चलतीव लक्ष्यते न तु चलतीत्यर्थः ॥ १८ ॥

**अ० टीका**—तदेव दृष्टांतेन स्पष्टयति—**गृहेति** ॥ १८ ॥

**निजस्थानस्थितः साक्षी बहिरंतर्गमागमौ ॥**
**अकुर्वन्बुद्धिचांचल्यात्करोतीव तथा तथा ॥ १९ ॥**

**रा० टीका**—दार्ष्टांतिकमाह—**निजस्थानेति** ॥ १९ ॥

**अ० टीका**—दार्ष्टांतिके योजयति—**निजेति** । निजस्य स्वसाक्षित्वप्रयोजकमूलाज्ञानस्य यत्स्थानमधिष्ठानं ब्रह्म तत्र स्थित इत्यर्थः ॥ १९ ॥

**रा० टीका**—निजस्थानस्थित इत्यनेन किं बाह्यादिदेशस्थत्वमेवोच्यते नेत्याह—

**न बाह्यो नांतरः साक्षी बुद्धेर्देशौ हि तावुभौ ॥**
**बुद्ध्याद्यशेषसंशांतौ यत्र भात्यस्ति तत्र सः ॥ २० ॥**

**न बाह्य इति** । तत्र हेतुमाह—**बुद्धेरिति** । तर्हि किं विवक्षितमित्यत आह—**बुद्ध्यादीति** । आदिशब्देनेंद्रियादयो गृह्यंते संशांतिशब्देन तत्प्रतीत्युपरतिर्विवक्षिता ॥ २० ॥

**अ० टीका**—फलितमाह—**नेति** । तत्र हेतुः—**बुद्धेरित्यादिना** । एवं तर्हि साक्षी कुत्रास्तीत्यत आह—**बुद्ध्यादीति** । अवाङ्मनसगम्ये ब्रह्मण्येव साक्ष्यनिरूपितसाक्षित्वप्रयोजकाज्ञानेन साक्षीति व्यवहारो जायतेऽतस्तत्रैव सोऽस्तीत्यर्थः ॥ २० ॥

**रा० टीका**—ननु सर्वव्यवहारोपरतौ देश एव नोपलभ्यते कुतस्तन्निष्ठत्वमुच्यत इत्याशंक्य स्वाभिप्रायमाविष्करोति—

**देशः कोऽपि न भासेत यदि तर्ह्यस्त्वदेशभाक् ॥**
**सर्वदेशप्रक्लृप्त्यैव सर्वगत्वं न तु स्वतः ॥ २१ ॥**

**देश इति** । देशादिकल्पनाधिष्ठानस्य स्वातिरिक्तदेशापेक्षा नास्तीति भावः । ननु देशाद्यभावे शास्त्रे सर्वगतसर्वसाक्षित्वाद्युक्तिर्विरुध्येतेत्यत आह—**सर्वदेशेति** । स्वाभाविकमेव किं न स्यादित्यत आह—**न तु स्वत इति** । अद्वितीयत्वादसंगत्वाच्चेति भावः ॥ २१ ॥

**अ० टीका**—नन्वेवं चेत्तर्हि तस्य साक्षिणः कोऽपि देशो नैव भासतेत्याशंक्येष्टापत्त्या प्रत्याचष्टे—**देश इति** । ननु तर्ह्याकाशवत्सर्वगतश्च नित्य इतिश्रुत्या कथं तस्य सर्वगतत्वमुक्तमित्यत आह—**सर्वदेशेति** । सर्वदेशानां तत्राज्ञानेन सौरालोके मृगजलकल्लोलानामिव प्रक्लृप्त्या कल्पनयैवेत्यर्थः ॥ २१ ॥

**अंतर्बहिर्वा सर्वं वा यं देशं परिकल्पयेत् ॥**
**बुद्धिस्तद्देशगः साक्षी तथा वस्तुषु योजयेत् ॥ २२ ॥**

**रा० टीका**—सर्वगतत्ववत्सर्वसाक्षित्वमपि न वास्तवमित्याह—**अंतर्बहिरिति**॥२२

**अ० टीका**—यथाऽऽत्मनः सर्वदेशकल्पनयैव सर्वगत्वं तथा सर्वसाक्ष्यकल्पनयैव सर्वसाक्षित्वमपीत्याह—**अंतरिति** । बुद्धिरंतर्वा बहिर्वा सर्वं वांऽतर्देशं वा बहिर्देशं वा सर्वदेशं वेत्यर्थः । एतादृशं यं देशं परिकल्पयेदज्ञानेनाद्वैतात्मन्यारोपयेदिति यावत् । साक्ष्यधिष्ठानत्वेन । स्वाध्यस्तवह्नेः स्वप्रकाशरत्नवत्प्रकाशकः सन्नद्वैत आत्मा तद्देशगः सन्वस्तुषु तथा योजयेदिदमंतर्वस्त्वहंकारादिकमिदं बहिर्वस्तु घटादिकमिदं सर्वं वस्तु दृश्यपदशक्यत्वावच्छिन्नादिकमिति प्रकाशयेदित्यन्वयः ॥ २२ ॥

**रा० टीका**—तथा वस्तुषु योजयेदित्येतत्प्रपंचयति—

**यद्यद्रूपादि कल्प्येत बुद्ध्या तत्तत्प्रकाशयन् ॥**
**तस्य तस्य भवेत्साक्षी स्वतो वाग्बुद्ध्यगोचरः ॥ २३ ॥**

**यद्यदिति** । तर्हि किं तस्य निजं रूपमित्यत आह—**स्वत इति** ॥ २३ ॥

**अ० टीका**—फलितमाह—**यद्यदिति** । आदिना नामादि । स्वतो वाग्बुद्ध्यगोचरोऽप्यात्मा तस्य तस्य साक्षी भवेदिति संबंधः ॥ २३ ॥

**रा० टीका**—अवाङ्मनसगोचरत्वे मुमुक्षुणा न गृह्येतेति शंकते—

**कथं तादृङ्मया ग्राह्य इति चेन्मैव गृह्यताम् ॥**
**सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते ॥ २४ ॥**

**कथमिति** । अग्राह्यत्वमिष्टमेवेत्याह—**मैवेति** । नन्वात्मनो ग्राह्यत्वाभावे विचारेण विनष्टायां मायायां शिष्यते स्वयमित्युक्त परमात्मावशेषणं न सिध्येदित्यत आह—**सर्वग्रहेति** । स्वात्मातिरिक्तस्य द्वैतस्य मिथ्यात्वनिश्चयेन तत्प्रतीत्युपशान्तौ स्वात्मैव सत्यतयाऽवशिष्यत इति भावः ॥ २४ ॥

**अ० टीका**—नन्वेवमवाङ्मनसगम्य आत्मा मुमुक्षुणा मया कथं ग्राह्य इत्याशंकामिष्टापत्त्या प्रत्याह—**कथमिति** । नन्वेवमात्मनोऽग्राह्यत्वेऽविचारकृतो बंधो विचारेण निवर्तत इति प्राग्विहितपरात्मविचारो निर्विषयः स्यादिति चेन्न । विचारेण विनष्टायां मायायां शिष्यते स्वयमिति प्रागुक्तरीत्यैव विहितपरमात्मविचारस्य राजहंसकृतक्षीरभक्षणेनामृतावशेषवन्मायाविनाशेन स्वप्रकाशाद्वैतपरमात्मावशेषैकपरत्वादित्याह—**सर्वेति** । नामरूपात्मकस्य सर्वस्यापि द्वैतस्य ग्रहशब्दिततज्ज्ञानबाधने सतीत्यर्थः ॥ २४ ॥

**रा० टीका**—यद्यप्युक्तन्यायेन स्वात्मा परिशिष्यते तथाऽपि तदापरोक्ष्याय किंचित्प्रमाणमपेक्षितमित्यत आह—

**न तत्र मानापेक्षाऽस्ति स्वप्रकाशस्वरूपतः ॥**
**तादृग्व्युत्पत्त्यपेक्षा चेच्छ्रुतिं पठ गुरोर्मुखात् ॥ २५ ॥**

**न तत्रेति** । तत्र हेतुमाह—**स्वप्रकाशेति** । नन्वात्मनः स्वप्रकाशतया स्वतः स्फूर्तौ मानं नापेक्ष्यत इति व्युत्पत्तिसिद्धये मानमपेक्षितमित्याशंक्य श्रुतिरेवात्र प्रमाणमित्याह—**तादृगिति** ॥ २५ ॥

**अ० टीका**—नन्वेवं विचारेण द्वैतबाधे सति भवत्वद्वैतात्मावशेषस्तथाऽप्येतदापरोक्ष्यार्थं मानमपेक्षितमित्यत्राऽऽह—**न तत्रेति** । ननु स्वप्रकाश एवाऽऽत्मेति व्युत्पत्त्यर्थं मानं त्वपेक्षितमेवेत्यत आह—**तादृगिति** ॥ २५ ॥

**रा० टीका**—एवमुत्तमाधिकारिण आत्मानुभवोपायमभिधाय मंदाधिकारिणस्तं दर्शयति—

**यदि सर्वग्रहत्यागोऽशक्यस्तर्हि धियं व्रज ॥**
**शरणं तदधीनोऽन्तर्बहिर्वैषोऽनुभूयताम् ॥ २६ ॥**

**इति श्रीमद्विद्यारण्यमुनिविरचितायां पञ्चदश्यां नाटकदीपाख्यं दशमं प्रकरणं समाप्तम् ॥ १० ॥**

**यदीति** । बुद्धिशरणत्वे किं फलमित्यत आह—**तदधीन इति** । बुद्ध्या यद्यत्परिकल्पते बाह्यमांतरं वा तस्य तस्य साक्षित्वेन तदधीनः परमात्मा तथैवानुभूयतामित्यर्थः ॥२६॥

श्रीमद्विद्यारण्यमुनिवर्यकिङ्करेण रामकृष्णाख्यविदुषा विरचिता पंचदशीप्रकरणगतदशमनाटकदीपव्याख्या समाप्ता ॥ १० ॥

**अ० टीका**—एवमुत्तमाधिकारिणः स एष नेति नेत्यात्मेत्यादिश्रुतिप्रसिद्धदृश्यबाधानुग्राहकखंडनयुक्त्युपबृंहितमननलक्षणविचारेण द्वैतबाधनेनाद्वैतस्वप्रकाशात्मावशेषेण लक्षणमोक्षोपायोपदेशमभिधाय ततोऽप्यतिमंदाधिकारिणः प्रति तमाह—**यदीति । तदधीन इति ।** बुद्ध्यवभासकत्वेनेत्यार्थिकम् । एष उक्तरूपः साक्षित्वोपलक्षितः स्वप्रकाशाद्वैतसच्चिदानंदः परमात्मेत्यर्थः । अंतर्देहाभ्यंतरेऽहंवृत्त्यात्मकबुद्धिभासकत्वेनेति यावत् । देहाद्बहिर्वा चक्षुरादींद्रियद्वारा घटाद्याकारकबुद्धिवृत्तिभासकत्वेनेत्येतत् । अनुभूयतां स्वप्रकाशात्मत्वेनेति शेषः । ननु भवतोपक्रमे तावत्—

" मुक्तावद्वैतत्वाद्ब्रह्मानंदानुभूतिरपि न स्यात् ।
शिव शिव कथमथ भूयात्प्रतिबंधः पंचमोऽयमिह जीवे " ।

इत्यार्यया शोधितत्वंपदार्थरूपजीवस्वरूपप्रबोधविषयकं फलविपरीतभावनाभिधं पंचमं प्रतिबंधमभिधायाग्रे—"दशमे दीपवदात्मा सर्वस्याऽऽभासकोऽपि चैकरसः । स्वप्रभसुखैकवारिधिरिति फलकथनेन तत्परता" इत्यार्यांतरेण **नाटकदीपाख्य**स्यास्य पंचदश्या दशमप्रकरणस्य मुक्तावद्वैतात्मरूपायामपि तु स्वयं प्रकाशमानाद्वैतसच्चिदानंदाखंडैकरसामृतनिधित्वलक्षणफलकथनद्वारोक्तप्रतिबंधबाधनपरत्वं यदुक्तं तत्कथमुपपद्यत इति चेदुच्यते । अत्रोपक्रमे तावत्परमात्माऽद्वयानंदः पूर्ण इत्युक्त्वांऽत एषोपक्रांतस्वप्रकाशानंतानंद आत्माऽनुभूयतामित्युपक्रमोपसंहारैकरूप्यं निरुक्तफलविषयकमेकं लिंगम् । एवमग्रेऽद्वयानंदरूपस्येति चतुर्थश्लोके साक्ष्यत्र चिद्वपुरिति नवमश्लोके निरंतरं भासमाने कूटस्थे ज्ञप्तिरूपत इति त्रयोदश इत्यादिरभ्यासः । न तत्र मानापेक्षाऽस्ति स्वप्रकाशस्वरूपत इत्यपूर्वता पंचविंशे । "सर्वग्रहोपसंशांतौ स्वयमेवावशिष्यते " इति चतुर्विंशे फलम् । नृत्यशालास्थितो दीप इत्याद्येकादशेऽर्थवादः । गृहांतरागतः स्वल्पो गवाक्षादातपोऽचल इत्याद्यष्टादशादावुपपत्तिरिति षोढा लिंगानि । तस्मान्नैवात्र मुक्तिलक्षणफले निरुक्तरूपे वैमत्यलेशोऽपीति शिवम् ॥ २६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमणपष्ठ्युपनामकश्रीनारायणशास्त्रिचरणसरोजराजहंसायमानमानसमोडकोपनामकाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानंदेंदुकौमुद्यभिधायां पंचदशीटीकायां नाटकदीपप्रकाशो दशमः संपूर्णः ॥ १० ॥

# अथ पञ्चदश्यामेकादशं प्रकरणम् ।

## तत्र ब्रह्मानन्दे योगानन्दाख्यः प्रथमोऽध्यायः ।

**रा० टीका**—नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ॥
ब्रह्मानंदाभिधं ग्रंथं व्याकुर्वे बोधसिद्धये ॥ १ ॥

चिकीर्षितग्रंथस्य निष्प्रत्यूहपरिपूरणाय परिपंथिकल्मषनिवृत्तयेऽभिमतदेवतातत्त्वानुसंधानलक्षणमंगलमाचरञ्श्रोतृप्रवृत्तिसिद्धिये सप्रयोजनमभिधेयमाविष्कुर्वन् ग्रंथारंभं प्रतिजानीते—

**ब्रह्मानंदं प्रवक्ष्यामि ज्ञाते तस्मिन्नशेषतः ॥**
**ऐहिकामुष्मिकानर्थव्रातं हित्वा सुखायते ॥ १ ॥**

**ब्रह्मानंदमिति ।**

" निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः
ये मंदास्तेऽनुकंप्यंते सविशेषनिरूपणैः "

इति सविशेषब्रह्मरूपाणां देवतानां तत्त्वस्य निर्विशेषब्रह्मरूपत्वाभिधानाद्ब्रह्मणश्च "आनंदो ब्रह्म " इत्यादिश्रुतिभिरानंदरूपताभिधानाद्ब्रह्मानंदमित्यानंदरूपस्य ब्रह्मणो वाचकशब्दप्रयोगेण यद्धि मनसा ध्यायति तद्वाचा वदतीति श्रुतिप्रोक्तन्यायेन ब्रह्मानुसंधानलक्षणं मंगलाचरणं सिद्धम् । ब्रह्मणश्च सर्ववेदांतप्रतिपाद्यत्वात्तत्प्रकरणरूपस्यास्य ग्रंथस्यापि तदेव विषय इति ब्रह्मशब्दप्रयोगेण विषयश्चापि सूचितः । **ऐहिकेत्युत्तरार्धेन ।** अनिष्टनिवृत्तीष्टप्राप्तिरूपं प्रयोजनद्वयं मुखत एवोक्तम् । ब्रह्मानंदं ब्रह्म चासावानंदश्चेति ब्रह्मानंदः । वाच्यवाचकयोरभेदोपचारात्तत्प्रतिपादको ग्रंथोऽपि ब्रह्मानंदस्तं प्रवक्ष्यामीति तस्मिन्प्रतिपाद्यप्रतिपादकरूपे ब्रह्मानंदे ज्ञातेऽवगते सत्यैहिकामुष्मिकानर्थव्रातमैहिकानामिह लोके भवानां देहपुत्रादिष्वहंममाभिमानप्रयुक्तानाम् । आध्यात्मिकादितापानाम् । आमुष्मिकाणाममुष्मिन्परलोके भवानां च तेषामनर्थानां व्रातः समूहः तमशेषतो निःशेषं यथा भवति तथा हित्वा परित्यज्य सुखायते सुखरूपं ब्रह्मैव भवति ॥ १ ॥

**अ० टीका**—अद्वैतानंदसाचिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्द्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वांश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥

मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ।
योगानंदं स्फुटयाम्यथ कौमुद्याः शिवप्रकाशेन ॥ २ ॥

अथ **भगवान्भारतीतीर्थाचार्यः** स्वकृते पंचदश्याः पूर्वस्मि**न्नाटकदीपाख्ये** दशमे प्रकरणेऽते—

" **यदि** सर्वग्रहत्यागः शक्यस्तर्हि धियं व्रज ।
**शरणं** तदधीनोऽतर्बहिर्वैषोऽनुभूयताम् "

इति स्वोक्तिश्रवणबुद्धिवृत्त्यन्वेषणपरायणं कंचिदंतेवासिनमालक्ष्य तदनुजिघृक्षयाऽत्र **ब्रह्मानंदाख्ये** पंचदश्यास्तृतीयांशात्मके **पंचाध्यायेषु** प्रथमं पंचदश्यास्त्वेकादशं **योगानंदाख्यं** प्रकरणमारभमाणः प्रथितप्रमाणप्रयोजनं मंगलं प्रकृतप्रकरणप्रतिपाद्याद्वैतब्रह्मात्मानुसंधानलक्षणं कुर्वन्पंचाध्यायात्मकस्योपक्रांतपंचदश्याः पंचभिः पंचभिः प्रकरणैः क्रमात्तत्त्वंपदार्थौ प्राधान्यात्प्रतिपादयद्भिर्भागद्वये भेदघटिते संपन्ने सत्यसिपदार्थमभेदघटितं प्राधान्यादेव प्रतिपादयत्प्रकरणपंचकस्यापि ब्रह्मानंदमिति समष्ट्यैकमेव नामाभिदधानस्तेनास्य प्रधानं विषयमपि व्यंजयंस्तद्वचनं प्रेक्षावन्मुमुक्षुप्रवृत्त्यर्थं प्रतिजानीते—**ब्रह्मानंदमिति** । अत्र प्रकर्षस्तु वक्ष्यमाणयोगिप्रत्यक्षलक्षण एव भवत्वेवमथापि किं तत्प्रयोजनमिति चिंतायां तत्प्रपंचयति—**ज्ञात इत्यादि**त्रिपाद्या । अशेषत इति मध्यमणिन्यायेन पूर्वोत्तरान्वय्येव । तेनाऽऽपातिकश्रवणजन्यतात्कालिकसुखादिव्युदासौ व्यज्यंते । ऐहिकास्त्वनर्था आधिव्याध्यादयः प्रसिद्ध एव । आमुष्मिकास्तु यमेंद्रभैरवविरचिताः शासनात्मकयातना विशेषा अपि तत्तदधिकार्यवच्छेदेन शास्त्रैकगम्या एव । एतत्कामुकोऽत्राधिकारी । विषयग्रंथयोः प्रतिपाद्यप्रतिपादकभावः संबंधोऽपि॥१॥

**रा० टीका** – ब्रह्मज्ञानस्यानिष्टनिवृत्तीष्टप्राप्तिहेतुत्वे बहूनि **श्रुतिस्मृतिवाक्यानि** प्रमाणानि संतीति प्रदर्शयितुकामस्तावत् " ब्रह्मविदाप्नोति परम् श्रुतं ह्येवमेव भगवदृशेभ्यः " " तरति शोकमात्मवित् " इति " सोऽहं भगवः शोचामि तं मा भगवाञ्शोकस्य पारं तारयतु " इति वाक्यद्वयमर्थतः पठति—

**ब्रह्मवित्परमाप्नोति शोकं तरति चाऽऽत्मवित् ॥**
**रसो ब्रह्मरसं लब्ध्वाऽऽनंदी भवति नान्यथा ॥ २ ॥**

**ब्रह्मविदिति** । ब्रह्म वेत्तीति ब्रह्मवित्परमुत्कृष्टमानंदरूपं ब्रह्म प्राप्नोति । आत्मविद्ब्रूमशब्दवाच्यं देशकालवस्तुपरिच्छेदशून्यम् । आत्मानं वेत्तीत्यात्मवित् । शोकं स्वसंसृष्टं पुरुषं शोचयतीति शोकस्तमोमूलः संसारस्तं तरति अतिक्रामति । ननूदाहृत**तैत्तिरीयकश्रुति**वाक्ये ब्रह्मज्ञानस्य परप्राप्तिहेतुतैवावभासते नानंदप्राप्तिहेतुतेत्याशंक्य आनंदप्राप्तिहेतुत्वप्रतिपादनपरं " रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनंदी भवति " इति तदीयमेव वाक्यमर्थतः पठति—**रस इति** । " सत्यं ज्ञानमनंतं ब्रह्म " " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इति प्रकरणादौ ब्रह्मात्मशब्दाभ्यामभिहितो य आत्माऽसौ रसः सार आनंदरूप इत्यर्थः । रसमानंदरूपं ब्रह्म लब्ध्वा ब्रह्माहमस्मीति ज्ञानेन प्राप्यानंदी भवतीत्यपरिच्छिन्ननिरतिशयसुखवान्भवति । उक्तमर्थं व्यतिरेकप्रदर्शनेन द्रढयति—**नान्यथेति** । अन्यथा ब्रह्मात्मैकत्वज्ञानं विहाय साधनांतरानुष्ठानेन नानंदी भवतीत्यर्थः ॥ २ ॥

**अ० टीका**—अथैवं सूचितं निखिलदुःखनिवृत्तिपूर्वकनिरतिशयसुखाप्तिलक्षणं प्रकृतप्रकरणविचारजन्याद्वैतब्रह्मात्मैक्यविषयकाप्रतिबद्धसाक्षात्कारद्वारा प्रयोजनं प्रतिपादयदनेकवेदांतवाक्यवृंदं संगृह्णन्नादौ क्रमा**त्तैत्तिरीयछांदोग्योप**निषदोः प्रसिद्धं '**ब्रह्मविदाप्नोति परम्**' इति '**तरति शोक**मात्मवित्' इति वाक्यद्वयमर्थतः पठति—**ब्रह्मविदिति । ननु सत्यं ज्ञानमनंतं** ब्रह्मेति स्वरूपलक्षणवाक्यात्सत्यादिलक्षणब्रह्मविदः परशब्दितोत्कटवस्तुप्राप्तिरेवोक्तवाक्यात्प्रतीयते न तूक्तसुखावाप्तिरपीत्यतस्तैत्तिरीयकमेव '**रसो वै सः । रस**ꣳ**ह्येवायं** लब्ध्वानंदी भवतीति वाक्यांतरमप्यर्थतो निबध्नाति—**रस इति** ॥ २ ॥

**रा० टीका**—एवमन्वयमुखेनेष्टप्राप्त्यनिष्टनिवृत्तिप्रतिपादनपराणि वाक्यानि प्रद-र्श्यान्वयव्यतिरेकाभ्यामनर्थनिवृत्तिप्रदर्शनपरं " यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विंदतेऽथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुतेऽथ तस्य भयं भवति " इति वाक्यद्वयमर्थतोऽनुक्रामति—

**प्रतिष्ठां विंदते स्वस्मिन्यदा स्यादथ सोऽभयः ॥**
**कुरुतेऽस्मिन्नंतरं चेदथ तस्य भयं भवेत् ॥ ३ ॥**

**प्रतिष्ठामिति** । अस्यायमर्थः । यदा यस्मिन्काले। हीति विद्वत्प्रसिद्धिप्रदर्शनपरो निपात एवेत्ययमेवानर्थनिवृत्त्युपायो नान्य इति नियमनार्थः । एष मुमुक्षुरेतस्मिन्विद्वदनुभवगम्येऽदृश्य इंद्रियागोचरेऽनात्म्येऽनात्मीये स्वरूपतया स्वकीयत्वरहिते । अनिरुक्ते निरुक्तं निर्वचनं शब्देनाभिधानं यत्र नास्ति तदनिरुक्तं तस्मिन्ननिलयने निलीयतेऽस्मिन्निति निलयनमाधारः स न विद्यते यस्य तस्मिन्स्वमहिम्नि स्थित इत्यर्थः । अभयमद्वितीयं " द्वितीयाद्वै भयं भवति " इति श्रुतेर्भयशब्देनात्र भयहेतुर्भेदो लक्ष्यते न विद्यते भयं भेदो यथा भवति तथा प्रतिष्ठां प्रकर्षेण संशयविपर्ययराहित्येन स्थितिर्ब्रह्माहमस्मीत्यवस्थानं प्रतिष्ठा तां विंदते गुरूपसत्त्यादिना श्रवणादिकं कृत्वा लभतेऽथ तदानीमेव स एवं विद्वानभयं भयरहितं मोक्षरूपमद्वितीयं ब्रह्म गतः प्राप्तो भवति " ब्रह्म वेद ब्रह्मैव भवति " इति श्रुतेः । यदा यस्मिन्नेव काल एष पूर्वोक्त एतस्मिन्नदृश्यत्वादिगुणके प्रत्यगभिन्ने ब्रह्मणि। उदितिनिपातोऽपिशब्दार्थः। अरमुदल्पमप्यंतरं भेदमुपास्योपासकादिलक्षणं कुरुते पश्यति धातूनामनेकार्थत्वादथ तदानीमेव तस्य भेददर्शिनो भयं संसारप्रयुक्तं दुःखं भवति ॥ ३ ॥

**अ० टीका**—एवं निरुक्तदुःखनिवर्तकमपि तदीयमेवान्वयव्यतिरेकघटितं वाक्यद्वयम्—" **यदा ह्येवैष** एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विंदते अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते अथ तस्य भयं **भवति** " इत्यर्थतोऽनुसंगृह्णाति—**प्रतिष्ठामिति** ॥ ३ ॥

**रा० टीका**—भेददर्शिनां भयं भवतीत्येतद्दृढीकर्तुं ब्रह्मात्मैकत्वज्ञानरहितानां वाय्वादीनां भयप्रदर्शनपरं भीषाऽस्माद्वातः पवत इत्यादिमंत्रमर्थतः पठति—

**वायुः सूर्यो वह्निरिंद्रो मृत्युर्जन्मांतरेंतरम् ॥**
**कृत्वा धर्मं विजानंतोऽप्यस्माद्भीत्या चरंति हि ॥ ४ ॥**

**वायुरिति** । वाय्वादयो जगन्नियामकत्वेन प्रसिद्धाः पंचापि देवता अतीते जन्मनि धर्ममिष्टापूर्तादिलक्षणं विजानंतोऽपि ज्ञानपूर्वकमनुष्ठितवंतोऽप्यंतरं प्रत्यग्ब्रह्मणोर्भेदं कृत्वाऽस्माद्ब्रह्मणो भीत्याऽस्मिन्वाय्वादिजन्मनि चरंति स्वस्वव्यापारेषु सदा प्रवर्तंते । हिशब्देन " भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचमः " इति**कठश्रुतौ** यमेनोक्तां प्रसिद्धिं दर्शयति ॥ ४ ॥

**अ० टीका**—एवं भेददर्शिनो भयं क्व दृष्टमित्यपेक्षायाम् । " **भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचमः** " इतीति तदीयवाक्यैनैवार्थद्वारा समाधत्ते—**वायुरिति** । विजानंतोऽपि विशेषेण सध्यानानुष्ठानलक्षणेन

जानंतोऽपि कार्यकारणस्वरूपैः प्रमिण्वाना अपीत्यर्थः । अस्मादंतर्यामिणः सकाशात् । चरंति हि स्वस्वकार्येषु प्रवर्तंत एवेति यावत् ॥ ४ ॥

**रा० टीका**—नन्‌ु तरति शोकमात्मविदित्यादिपूर्वाहृतवाक्येषु ब्रह्मानंदज्ञानस्यानर्थनिवृत्तिहेतुत्वं स्पष्टं नावभासत इत्याशंक्य तथा प्रतिपादनपरं वाक्यमुदाहरति—

**आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ॥**
**एतमेव तपेन्नैषा चिंता कर्माग्निसंभृता ॥ ५ ॥**

**आनंदमिति** । राहोः शिर इत्यादिवद्भेदव्यपदेश औपचारिकः । ब्रह्मणः स्वरूपभूतमानंदं विद्वानपरोक्षतया जानन्पुरुषः कुतश्चन कस्मादप्यैहिकभयहेतोर्व्याघ्रादेः पारलौकिकभयहेतोः पापादेर्वा न बिभेति भयं न प्राप्नोति । ननु तत्त्वविदः पापादेर्भयं नास्तीत्येतत्कुतोऽवगम्यत इत्याशंक्य तत्प्रतिपादकम्—" एतꣳ ह वाव न तपति किमहꣳ साधु नाकरवं किमहं पापमकरवम् " इति वाक्यमर्थतः पठति—**एतमिति** । कर्माग्निसंभृता पुण्यपापरूपकं कर्मैवाग्निः । अकरणकरणाभ्यामग्निवत्संतापहेतुत्वात् । तेन संभृता संपादिता एषा पुण्यं नाकरवं कस्मात्पापं तु कृतवान्कुत इत्येवंरूपा चिंता । एतमेव तत्त्वविदमेव न तपेन्न संतापयेन्नान्यमविद्वांसं स तु तया चिंतया सदा संतप्यत इत्यर्थः ॥ ५ ॥

**अ० टीका**—एवं '**आनंदं** ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति' इति तदीयमेव वाक्यमभयप्राप्तौ पठति—**आनंदमिति** । ब्रह्मण इति षष्ठी **राहोः** शिर इत्यादिवदौपचारिक्येव । कुतश्चनैहिकाद्देहनिर्वाहादेः पारत्रिकादकृतात्पुण्यात्कृतात्पापाच्चेत्यर्थः । अत एव । "**एतꣳ ह वाव न तपति । किमहꣳ साधु** ना करवम् । **किमहं** पापमकरवमिति" इति । तद्वाक्यार्थमाह—**एतमेवेति** । एषा वक्ष्यमाणा । **कर्मेति** । कर्मैवाग्निः पुण्यपापरूपं कर्मैवाकृतत्वाकृतत्वाभ्यां संतापकत्वाद्वह्निस्तेन संभृता परिपुष्टा । न तपेन्न दहेत् ॥ ५ ॥

**एवं विद्वान्कर्मणी द्वे हित्वाऽऽत्मानं स्मरेत्सदा ॥**
**कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥ ६ ॥**

**रा० टीका**—पुण्यपापयोरतापकत्वे हेतुप्रदर्शनपरं " स य एवं विद्वानेते आत्मानꣳ स्पृणुते" " उभे ह्येवैष एते आत्मानꣳ स्पृणुते" इति वाक्यद्वयमर्थतः पठति—**एवमिति** । स यः कश्चित्पुमानेवमुक्तेन प्रकारेण स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यनेन प्रकारेण विद्वाञ्ज्ञानन्प्रवर्तते स एते पुण्यपापे हित्वेत्यध्याहारः । आत्मानं ब्रह्माभिन्नं प्रत्यञ्चं स्पृणुते प्रीणयति सदा स्मरेदित्यर्थः । यतः पुण्यपापयोर्मिथ्यात्वानुसंधानेन हानं कृतमतस्तद्विषया चिंतैव नास्ति । कुतस्तन्निमित्तकस्ताप इत्यभिप्रायः किंच ' एष विद्वानेते पूर्वोक्ते उभे पुण्यपापरूपे कर्मणी देहेंद्रियादिप्रवृत्त्या जनिते स्वात्मानुरूपेणैवेदं सर्वं यदयमात्मा' इत्यादिवाक्योक्तप्रकारेण पश्यति जानातीत्यर्थः । अतः स्वात्माभिन्नत्वादप्यतापकत्वमिति भावः ॥६॥

**अ० टीका**—ननु कर्माग्निसंभृतचिंतयाऽऽदौ सामान्यतस्ताप एव कस्माद्धेतोर्ब्रह्मविदो न भवतीत्युच्यत इत्याशंक्य " स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳ स्पृणुते " इति प्रागुक्तश्रुतिवाक्यशेषमर्थतः पठन्समाधत्ते—**एवं विद्वानिति** । द्वे पुण्यादिरूपत्वेन द्विप्रकारे । हित्वा संन्यस्य मिथ्यात्वेन वा त्यक्त्वेत्यर्थः । नन्वात्मज्ञानोत्तरका-

लयोस्तयोरस्त्वेवं व्यवस्था क्रियमाणाख्योरथापि तत्प्राक्कालिकत्वेन संचिताख्ययोस्तयोः का गतिरित्यत आह—**कृते चेति** ॥ ६ ॥

**रा० टीका**—ननु " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि " इत्यादिशास्त्रसद्भावादनादौ संसारे बहुजन्मोपार्जितेषु पुण्यापुण्यलक्षणेषु कर्मस्वसंख्यातेष्वप्रसिद्धत्वेनाऽऽत्मतयाऽनुसंधानायोग्येषु सत्सु कथं तद्विषया चिंता न भवेदित्याशंक्य सनिदानानां तेषां तत्त्वज्ञानेन विनाशित्वान्न चिंताजनकत्वमित्यभिप्रायेण हृदयग्रंथ्यादिनिवृत्तिपरं **मुंडकादि**श्रुतिषु स्थितं वाक्यं पठति—

**भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥**
**क्षीयंते चास्यकर्माणि तस्मिन्दृष्टे परावरे ॥ ७ ॥**

**भिद्यत इति** । परावरे परमपि हिरण्यगर्भादिकं पदमवरं निकृष्टं यस्मात्तस्मात्परात्मनि दृष्टे साक्षात्कृते । अस्य साक्षात्कारवतो हृदयस्य बुद्धेश्चिदात्मनश्च ग्रंथिवद्दृढसंश्लेषरूपत्वाद्ग्रंथिरन्योन्याध्यासो भिद्यते विदीर्यते विनश्यतीत्यर्थः । सर्वसंशया आत्मा देहादिव्यतिरिक्तो न वा, व्यतिरिक्तोऽपि कर्तृत्वादिधर्मयोगी न वा, अकर्तृत्वेऽपि तस्य ब्रह्मणो भेदोऽस्ति न वा, अभेदेऽपि तज्ज्ञानं कर्मादिसहितं मुक्तिसाधनं केवलं वेत्यादयः । च्छिद्यंते द्वैधीक्रियंते । तत्त्वतः साक्षात्कृतस्य वस्तुनः संशयविपर्ययविषयत्वादर्शनादिति भावः । कर्माणि संचितानि पुण्यापुण्यलक्षणानि । क्षीयंते स्वनिदानाज्ञानविनाशेन विनश्यंतीति ॥ ७ ॥

**अ० टीका**—नन्वनंतसंचितकर्मणां परोक्षाणामात्मत्वेनानुसंधानं कथं समुचितमित्यस्वरसात्तत्त्वज्ञानोत्तरक्षण एव स्वप्नकृतब्रह्महत्याश्वमेधयोर्जागरइव तद्ध्वंसप्रतिपादिकां **मुंडक**श्रुतिमेव पठति—**भिद्यत इति** । एतदर्थस्तूक्तोऽ**नुभूतिप्रकाश** एव—" परमव्याकृतं यस्मादवरं स्याच्चिदात्मनः । दृष्टे तस्मिन्नहंकारचितोर्ग्रंथिर्विभिद्यते । अहंकारस्य कर्तृत्वं चित्यध्यस्य तथा चितः । स्फूर्तिं चाहंकृतौ ग्रंथिं कुर्यान्माया तयोर्दृढम् । भिन्ने ग्रंथौ विवेकेन संशया ब्रह्मतत्त्वगाः । छिद्यंते स्याद्भाविजन्महेतुकर्मक्षयस्तथा " इति । एवमेव **भगवद्गीताऽपि**—" यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा " इति । अत्र टीका **मधुसूदनी**—यथैधांसि काष्ठानि । समृद्धः प्रज्वलितः । अग्निर्भस्मसात्कुरुते भस्मीभावं नयति । हेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि पापानि पुण्यानि च विशेषेण प्रारब्धफलभिन्नानि भस्मसात्कुरुते तथा तत्कारणाज्ञानविनाशेन विनाशयतीत्यर्थः । तथा च **श्रुतिः**—" **भिद्यते** हृदयग्रंथिच्छिद्यंते सर्वसंशयाः । क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे " इति। " **तदधिगम उत्तर**पूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् " " इतरस्याप्येवमसंश्लेपः पाते तु " इति च **सूत्रे** । अनारब्धे पुण्यपापे नश्यत एवेत्यत्र सूत्रम्—'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इति । ज्ञानोत्पादकदेहारंभकाणां तु तद्देहांत एव विनाशः "**तस्य तावदेव चिरं यावन्न** विमोक्ष्ये अथ संपत्स्ये " इति **श्रुतेः** । " भोगेन त्वितरे क्षपयित्वा संपद्यते " इति सूत्राच्च । आधिकारिकाणां तु यान्येव ज्ञानोत्पादकदेहारंभकाणि तान्येव देहांतरारंभकाण्यपि । यथा **वसिष्ठा**वांतरतमःप्रभृतीनाम् । तथा च सूत्रं—" यावदधिकारमवस्थितिराधिकारिकाणाम् " इति । अधिकारोऽनेकदेहारंभकं बलवत्प्रारब्धफलं कर्म । तच्चोपासकानामेव नान्येषाम् । अनारब्धफलानि नश्यंति प्रारब्धफलानि तु यावद्भोगसमाप्ति तिष्ठंति । भोगश्चैकेन देहेना-

नेकेन वेति न विशेषः । विस्तरस्त्वाकरे द्रष्टव्य इति । अत्राऽऽचार्यसरस्वतीचरणैः प्रारब्धफलभिन्नानीति सर्वकर्मणां विशेषणं यद्न्यवेशि तदस्मदाद्यर्वाग्दर्शिदृष्ट्यनुसारेणैव । अत एवानुभूतिप्रकाशे भाविजन्महेतुकर्मक्षयस्तथेत्येवोक्तम् । प्रारब्धफलानां हि कर्मत्वस्यैव फलत्वेनाभावात् । न ह्यंकुरादिदशायां व्रीहिपरिणामेऽप्यंकुरादौ व्रीहित्वं दृश्यते । न वा तंतुत्वमापन्नः कार्पासोऽपि कार्पासत्वेन व्यवह्रियते । अन्यथा स्थंडिलार्थं मृदमाहरेति नियुक्तो देवदत्तः कपालादिकमप्यानयेत् । तस्मादुक्तविशेषणं नैव तेषां स्वाभिमतत्वेनेत्यस्मद्गुरुपुत्राः पूर्णायुषः **पांडुरंगशास्त्रिणः** । एवंतच्चोपासकानामेव नान्येषामित्यपि स्थूलबुद्ध्यभिप्रायेणैवोक्तम् । अन्यथा—" कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् । सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः " इति **स्मृतेः** पुरा केनचित्पुरुषेण तादृग्योगे **श्रीशैले** भगवतः **स्कंदस्य** दर्शनमकारि तेन पुण्येन दैवान्मरणोत्तरमिह धनाढ्यो वेदशब्दलक्षितस्वशाखाध्ययनपूर्वकं प्राक्तनानंतजन्मसंचितांतर्याम्येकार्पणीकृतयथावत्तंत्रगंधविधुरसकलकाम्यनिषिद्धशून्यस्वस्ववर्णाश्रमोचितयावच्छ्रौतस्मार्तनित्यादिकर्मभिश्चित्तशुद्धौ नित्यादिविवित्सया यावदुपयोगं व्याकरणतर्कमीमांसाः समभ्यस्य संजातनित्यानित्यविवेकजनितैहिकादिनिखिलविषयवैरस्य प्रोद्भूतशमादिसाधनषट्कात्तीव्रतमब्रह्मजिज्ञासया यथोक्तलक्षणं श्रोत्रियं ब्रह्मनिष्ठमाचार्यवरिष्ठं शरणीकृत्य विचारितचतुर्लक्षण्याऽपगतप्रमाणाद्यसंभावनालक्षणचतुर्विधप्रतिबंधादद्वैताचार्यभगवत्पादपादविवृतरीत्यैव स्वशाखीयाद्विचारितान्महावाक्यात्संजाताद्वैतब्रह्मात्मैक्यसाक्षात्कारः प्रध्वस्तमूलाविद्यानांतरीयकसिद्धनिखिलद्वैतबाधः संन्यासवत्प्रारब्धफलोपभोगं जीवन्मुक्त एवासौ विहरति चेत्तस्य धनाढ्यत्वादिविशिष्टसप्तजन्मपदनिरुक्तस्वामिदर्शनजन्येश्वरपरितोषरूपधर्मापराभिधपुण्यापूर्वफलोपभोगमध्येयमेकजन्मोपभोगः संपन्नस्तेनावशिष्टजन्मषट्कं **वसिष्ठा**दिवदनुपासकस्यापि तस्य जीवन्मुक्ततयैव भवेदित्यवश्यमेवेति तत्र का गतिः । न चैवं तर्हीदानींतनानामपि दैवात्केषांचिद्ब्रह्मविदां ब्राह्मणानां निरुक्तरीत्या स्वामिदर्शनजब्राह्मण्यसंभावनयाऽग्रे द्वित्रादिजन्मसंभवानिर्णयादतिदुःखापत्तिरिति सांप्रतम् । यथोक्तधनाढ्यत्वादिगुणशालित्वसत्त्वे त्विष्टापत्तेः संभावितद्वित्रादिसप्तावधिकजन्मादिदुःखस्य तु जीवन्मुक्त्यानंदेनैव तृणीकारात्प्रत्युतोपासनां विनैव च **वसिष्ठा**दिवदेव बहुजन्मस्वपि निर्णीतजीवन्मुक्तिविलासानंदाधिक्यसंतोषविशेषस्यैव संभावितत्वाच्च । परंत्वतिदुरंतकलिकालेऽद्य तावद्विप्राणां धनाढ्यत्वमेव सुदुर्लभं क्वचित्तत्सत्त्वेऽपि वेदपारगत्वं तु सुदुर्लभतरं क्वचित्तदुभयसत्त्वेऽपि निरुक्तरीतिकवास्तविकब्रह्मवित्त्वं तु सुदुर्लभतममेव । नन्वथापि द्वित्रिवर्षोत्तरं निरुक्तयोगः समायात्येव तत्र च सहस्रशः पुरुषाः **श्रीशैले श्रीस्कंद**दर्शनं कुर्वंत्येव ते च मृताः सर्वेऽपि **सप्तजन्मपर्यंतं भरतवर्ष** एवास्मिन्धनाढ्या वेदपारगाः कुतो नोपलभ्यंते वेदपारगत्वान्यथानुपपत्तिसिद्धब्रह्मविद्याशालिनश्च शतश इति चेन्न । उक्तस्मृतावेतज्जन्माव्यवहितोत्तरमेव सप्तजन्म भवेद्विप्र इत्यादिनियमानुक्तेः स्वर्गकामो यजेतेत्यादिवत्तत्कल्पनेऽपि कर्मप्राबल्यदौर्बल्यस्यासर्वज्ञदुर्ज्ञेयत्वात्स्वामिदर्शनोत्तरं हि काशीमरण एव जाते ब्रह्मवधसुरापानाद्यन्यतममहापातके वा संजाते क्रमात्तद्ध्वंसतत्प्रतिबंधयोरपि संभवाच्च । तस्माद्युक्तमेवोपासकब्रह्मविदामिवानुपासकब्रह्मविदामपि धनाढ्यत्ववेदपारगत्वविशिष्टब्रह्मवित्त्वसत्त्व एवानेकजन्मोपभोग्यकर्मफलकल्पनसंभव इति । उपासनमत्र वैदिकमेवेति सकलमप्यनाविलम् ॥ ७ ॥

**रा० टीका**—ननु " कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे । विद्यां चाविद्यां च यस्तद्वेदोभय९ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते " इत्यादिश्रुतेः "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" "यथाऽन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् । एवं तपश्च विद्या च संयुक्तं भेषजं महत् " इत्यादिस्मृतेश्च केवलस्य वा ज्ञानसमुच्चितस्य वा कर्मणो मुक्तिहेतुत्वं स्यादित्याशंक्योदाहृतवाक्यस्थलेऽपि तपःशब्दस्य पापनिवृत्तिपरत्वादाद्यशब्दस्य च पापेऽनिवृत्तिपरत्वात्संसिद्धिशब्देन च ज्ञानसाधनचित्तशुद्ध्यभिधानाद्विद्याशब्देन चोपासनाया विवक्षितत्वान्न कर्मणां मुक्तिसाधनत्वमित्यभिप्रायेण साधनांतरनिषेधपरं " तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" इति **श्वेताश्वतरवाक्यम**र्थतः पठति—

**तमेव विद्वानत्येति मृत्युं पंथा न चेतरः ॥**
**ज्ञात्वा देवं पाशहानिः क्षीणैः क्लेशैर्न जन्मभाक् ॥ ८ ॥**

**तमेवेति ।** तं पूर्वोक्तं परमात्मानं विद्वानेव मृत्युं संसारमत्येत्यतिक्रामति । इतरः समुच्चयरूपः केवलः कर्मरूपो वा पंथा मार्गो मोक्षोपायो न च नैव विद्यते । ननूदाहृतासु श्रुतिष्वन्वयव्यतिरेकाभ्यामैहिकानिष्टनिवृत्तिरेव प्राधान्येनावभासते नामुष्मिकीत्याशंक्यामुष्मिकस्यानिष्टस्य भाविजन्मपूर्वकत्वात्तस्य सनिदानस्याभावप्रतिपादकं " ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः " इति **श्वेताश्वतरवाक्यम**र्थतः पठति—**ज्ञात्वेति ।** देवं स्वप्रकाशं प्रत्यगभिन्नं ब्रह्म ज्ञात्वा परोक्षतयाऽनुभूय स्थितस्य कामक्रोधादीनां सर्वेषां पाशानां हानिर्भवति तैः पाशशब्दाभिधेयै रागादिभिः क्लेशैः क्षीणैर्नष्टैर्भाविजन्महेतुकर्मारंभायोगाच्च तत्र प्राप्नोतीत्यर्थः ॥ ८ ॥

**अ० टीका**—ननु " कुर्वन्नेवेह कर्माणि जिजीविषेच्छत९ समाः " इति **श्रुतेः** । " कर्मणैव हि संसिद्धिमास्थिता जनकादयः " इति**स्मृतेश्च** कर्मणैव सकलदुःखोपशमपूर्वकसंपूर्णसुखावाप्तिसंभवादुक्तश्रुतीनां ज्ञानसंस्तावकत्वात् " विद्यां चाविद्यां च यस्तद्वेदोभय९ सह " इत्यादि**श्रुतेः** " उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः " इति**स्मृतेश्च** ज्ञानकर्मसमुच्चयानुष्ठानत एववोक्तपुरुषार्थसंभवोऽस्त्वित्याशंक्य ' तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय ' इति **श्रुतित** एव समाधातुं **श्वेताश्वतरीयां** तामर्थतः पठति—**तमेवेति** । तमेवाद्वैतब्रह्मरूपमात्मानमेव विद्वानेव मृत्युं तत्कारणीभूतामविद्यां तद्व्याप्य तत्कार्यात्मकमखिलदृश्यजालं, अत्येत्यहं ब्रह्मास्मीत्यबाधितापरोक्षज्ञानेन बाधित्वोक्तरूपात्मतत्त्वलक्षणं मोक्षं प्राप्नोतीत्यन्वयः । विदित्वैवेत्येवकारान्वये मानमाह—**पंथा इत्यादिना ।** तत्र तदीयमैवैहिकामुष्मिकानिखिलदुःखनिवृत्तिप्रतिपादनपरं " ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः " इति**वाक्यम**र्थतः संग्रथयति—**ज्ञात्वेति ।** देवं स्वप्रकाशमद्वैतात्मानमित्यर्थः । " घृणा शंका भयं लज्जा जुगुप्सा चैव पंचमी । कुलं जातिश्च शीलं चेत्यष्टौ पाशाः प्रकीर्तिताः " इति **वचना**त्कारुण्यं **करुणा-घृणेत्यमरोक्त्या** घृणाशब्दितकरुणादीनामपि भरतादौ बंधप्रसिद्धेः पाशत्वं युक्तमेवेति भावः । क्लेशास्तूक्ताः **पतंजलिनैव**—" अविद्यास्मितारागद्वेषाभिनिवेशाः पंच क्लेशाः " इति । **अस्मिता** सूक्ष्मोऽहंकारस्तदेव महत्तत्त्वमित्युच्यते ॥ ८ ॥

**रा० टीका**—ननु शोकतरणादिफलं श्रूयत एव नानुभूयते ज्ञानिनामपीष्टानिष्टप्राप्तिपरिहारार्थं प्रवृत्तिदर्शनादित्याशंक्य दृढापरोक्षज्ञानिनां तदभावप्रतिपादनपरम् " अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति " इति **कठश्रुति**वाक्यमर्थतः पठति—

**देवं मत्वा हर्षशोकौ जहात्यत्रैव धैर्यवान् ॥**
**नैनं कृताकृते पुण्यपापे तापयतः क्वचित् ॥ ९ ॥**

**देवमिति।** धैर्यवान्ब्रह्मचर्यादिसाधनसंपन्नो देवं चिदानंदादिलक्षणं मत्वाऽवगम्याऽत्रैवास्मिन्नेव जन्मनि हर्षशोकौ जहाति " एतमेव तपेन्नैषा चिंता कर्माग्निसंभृता " इत्युक्तार्थे विशेषप्रदर्शनपरं " नैनं कृताकृते तपतः " इति **याज्ञवल्क्यब्राह्मण**वाक्यमर्थतः पठति— **नैनमिति।** पूर्वमकृतं पुण्यं कृतं च पापं तत्त्वविदस्तापहेतुर्न भवतीत्युक्तमिह तु कृतमकृतं वा पुण्यं पापं वा तथाविधं तापकं न भवतीत्युच्यत इति विशेषः। तथा हि तापो नाम चित्तविकारविशेषः। पुण्यं कृतं सद्धर्षलक्षणं विकारमुत्पादयत्यकृतं विषादं पापं पुनस्तद्वैपरीत्येनाकृतं हर्षमुत्पादयति कृतं विषादं तत्त्वविदस्तूभे अप्युभयविधविकारहेतू न कदाचिद्भवतः अविक्रियब्रह्मरूपत्वज्ञानादित्यभिप्रायः ॥ ९ ॥

**अ० टीका**—ननु शोकतरणादिश्रुत्योक्तमपि नानुभूयत इत्यतः **कठवल्लीस्थं**— " अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति " इति वाक्यमर्थतः पठति—**देवमिति।** एवं प्रागुक्तमपि पुण्यादेरतापकत्वं **नैनं** कृताकृते तपत इति **काण्वश्रुत्या** विशेषेणाऽऽह—**नैनमिति।** कृतं पुण्यं हर्षदं पापं शोकदम्। अकृतं पुण्यं शोकदं पापं हर्षदमित्युभे अपि तत्त्वविद उभयविधविकाररूपतापप्रदे न भवत इति भावः ॥ ९ ॥

**रा० टीका**—नन्वियंत्येव वाक्यानि प्रमाणानि नेत्याह—

**इत्यादिश्रुतयो बह्व्यः पुराणैः स्मृतिभिः सह ॥**
**ब्रह्मज्ञानेऽनर्थहानिमानंदं चाप्यघोषयन् ॥ १० ॥**

**इत्यादिश्रुतय इति।** आदिशब्देन " इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः " " य एतद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवापियंति " " तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् " " निचाय्य तं मृत्युमुखात्प्रमुच्यते " इत्याद्याः श्रुतयो गृह्यंते "सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि। संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति। क्षेत्रज्ञस्याऽऽत्मविज्ञानाद्विशुद्धिः परमा मता " इत्यादि**पुराणस्मृति**वचनैः सह प्रमाणानीत्यर्थः। उदाहृतानां श्रुतिस्मृतिपुराणवाक्यानां सर्वेषां तात्पर्यमाह—**ब्रह्मज्ञान इति** ॥ १० ॥

**अ० टीका**—उपसंहरति—**इत्यादीति।** आदिना ब्रह्मवेद ब्रह्मैव भवतीति ॥ १० ॥

**रा० टीका**—ननु ब्रह्मानंद इत्यानंदपदस्य ब्रह्मपदेन विशेषणादानंदांतरमस्तीत्यवगम्यते स कतिविधः कीदृशश्चाऽऽनंद इत्याकांक्षायां तद्भेददर्शनपूर्वकं ब्रह्मानंदविवेचनं प्रतिजानीते—

**आनंदस्त्रिविधो ब्रह्मानंदो विद्यासुखं तथा ॥**
**विषयानंद इत्यादौ ब्रह्मानंदो विविच्यते ॥ ११ ॥**

**आनंद इति।** ब्रह्मानंदो विद्यानंदो विषयानंद इत्यनेन प्रकारेणाऽऽनंदस्य त्रैविध्यम-

वगंतव्यं तत्रेतरयोरानंदयोर्ब्रह्मा[illegible]भूतत्वादादावध्यायत्रयेण ब्रह्मानंदो विभज्य प्रदर्श्यत इत्यर्थः ॥ ११ ॥

**अ० टीका**—एवं प्रतिज्ञातब्रह्मानंदाभिध**पंचदशी** चरमांशरूपपंचाध्यायात्मके ग्रंथेऽत्र निरतिशयसुखावाप्तिपूर्व[illegible]खिलदुःखनिवृत्तिलक्षणं प्रयोजनं प्रमाणैः प्रमेयीभूतब्रह्मात्मैक्यविषयकप्रमया प्रतिपाद्यब्रह्मा[illegible]मित्यत्राऽऽनंदस्य ब्रह्मपदेन विशेषणादानं पदांतरसद्भाव(?)संभावनायां सत्यां स क[illegible] इत्याकांक्षां क्षपयितुं तत्रैविध्यं विधत्ते—**आनंद इति**। एतेन विषयानंद एवान्येषां वासना[illegible]दीनामप्यंतर्भाव इति द्योत्यते। भवत्वेवं ततः किं प्रकृत इत्यत आह—**ब्रह्मेति**। एवं च पंचस्वप्यध्यायेष्वत्र **योगानंदात्मानंदाद्वैतानंदविद्यानंदविषयानंदेषु** क्रमात्तत्पदार्थत्वंपदार्थवि[illegible]चनतदैक्यबोधनतज्जन्यसुखसार्विदिकतदनुसंधानसाधनान्येव प्राधान्येन प्रतिपाद्यानि संतीति [illegible]न्यते ॥ ११ ॥

**रा० टीका**—तत्राऽऽदौ तावत्तैत्तिरीयश्रुतिपर्यालोचनायामानंदरूपं ब्रह्मावगम्यत इत्यभिप्रायेण **भृगुवल्ल्या** अर्थं संक्षेपेण दर्शयति—

**भृगुः पुत्रः पितुः श्रुत्वा वरुणाद्ब्रह्मलक्षणम् ॥**
**अन्नप्राणमनोबुद्धीस्त्यक्त्वाऽऽनंदं विजज्ञिवान् ॥ १२ ॥**

**भृगुरिति**। भृगुनामकः पुत्रः पितुर्वरुणाख्याद्ब्रह्मलक्षणं "यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंति तद्विजिज्ञासस्व तद्ब्रह्म" इत्येवंरूपं श्रुत्वाऽन्नमयादिकोशेषु तल्लक्षणासंभवेन तेषामब्रह्मत्वं निश्चित्याऽऽनंदमानंदमयकोशे पंचमावयवत्वेन 'ब्रह्मपुच्छं प्रतिष्ठा' इति श्रुतं बिंबभूतमानंदं ब्रह्मलक्षणयोजनया ब्रह्मत्वेन ज्ञातवानित्यर्थः ॥ १२ ॥

**अ० टीका**—तत्र प्रतिज्ञाते ब्रह्मानंदविवेचने ब्रह्मण एव मुख्यानंदरूपत्वे भृगुवल्लीं प्रमाणयति—**भृगुरिति** ॥ १२ ॥

**रा० टीका**—कथमानंदे तल्लक्षणं योजितवानित्याशंक्य तद्योजनाप्रकारदर्शनपरम् "आनंदाद्ध्येव खल्विमानि भूतानि जायंते, आनंदेन जातानि जीवंति, आनंदं प्रयंत्यभिसंविशंति" इतिवाक्यमर्थतः पठति—

**आनंदादेव भूतानि जायंते तेन जीवनम् ॥**
**तेषां लयश्च तत्रातो ब्रह्मानंदो न संशयः ॥ १३ ॥**

**आनंदादिति**। ग्राम्यधर्मनिमित्तकानंदादेव भूतानि प्राणिनो जायंते उत्पद्यंते तेन विषयभोगादिनिमित्तकेनाऽऽनंदेन जीवनं प्राप्नुवंति तेषां प्राणिनां लयश्च तत्र तस्मिन्सुषुप्तिकालिके स्वस्वरूपभूत आनंद एव भवति सुषुप्तावानंदातिरेकेण कस्याप्यनुभवाभावादत आनंदो ब्रह्मैव सर्वानुभवसिद्धत्वान्नात्र संशयः कर्तव्य इति भावः ॥ १३ ॥

**अ० टीका**—तत्र हेतुः—**आनंदादेवेति** ॥ १३ ॥

**रा० टीका**—एवं तैत्तिरीयश्रुतिपर्यालोचनया ब्रह्मण आनंदरूपतां प्रदर्श्य छांदोग्यश्रुतिपर्यालोचनयाऽपि तां दिदर्शयिषुः **सनत्कुमारनारद**संवादरूपे **सप्तमाध्याये** स्थितस्य भूमरूपब्रह्मप्रतिपादकस्य "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यादिवाक्यस्यार्थं संक्षेपेणाऽऽह—

**भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात् ॥**
**ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो ॥ १४ ॥**

**भूतोत्पत्तेरिति ।** भूतानामाकाशादीनां तत्कार्याणां जरायुजांडजादीनां चोत्पत्तेः पूर्वं त्रिपुटीद्वैतवर्जनात्त्रयाणां ज्ञातृज्ञानज्ञेयरूपाणां पुटानामाकाराणां समाहारस्त्रिपुटी सैव द्वैतं तस्य वर्जनमभावस्तस्माद्भूमा देशतः कालतो वस्तुतो वा परिच्छेदशून्यः परमात्मा ' भावानयने द्रव्यानयनम् ' इति न्यायाद्भूमैवाऽऽसीदित्यध्याहारः । तदेव द्वैतवर्जनमुपपादयति—**ज्ञातृज्ञानेति ।** वक्ष्यमाणज्ञात्रादिरूपा त्रिपुटी प्रलयकाले नास्तीत्येतत्सर्ववेदांतसंमतमिति हिशब्दं प्रयुंजानस्यायमभिप्रायः ॥ १४ ॥

**अ० टीका**—पंचमहाभूताविर्भावात्प्रागित्यर्थः । तत्र हेतुः—**ज्ञात्रिति** ॥ १४ ॥

**रा० टीका**—इदानीं ज्ञात्रादिस्वरूपं दर्शयति—

**विज्ञानमय उत्पन्नो ज्ञाता ज्ञानं मनोमयः ॥**
**ज्ञेयाः शब्दादयो नैतत्त्रयमुत्पत्तितः पुरा ॥ १५ ॥**

**विज्ञानमय इति ।** परमात्मन उत्पन्नो बुद्ध्युपाधिको जीवो विज्ञानमयो ज्ञाता मनोमयो मनसि प्रतिबिंबितं मनोमयशब्दवाच्यं चैतन्यं ज्ञानं शब्दस्पर्शादयो ज्ञेयाः प्रसिद्धाः, इदं त्रयं कार्यत्वादुत्पत्तेः पुरा कारणव्यतिरेकेण नास्तीत्यर्थः ॥ १५ ॥

**अ० टीका**—तदुपपादयति—**विज्ञानेति** । कोश इति शेषः । **शब्देति ।** आदिना स्पर्शरूपरसगंधाः ॥ १५ ॥

**रा० टीका**—फलितमाह—

**त्रयाभावे तु निर्द्वैतः पूर्ण एवानुभूयते ॥**
**समाधिसुप्तिमूर्छासु पूर्णः सृष्टेः पुरा तथा ॥ १६ ॥**

**त्रयेति ।** ज्ञात्रादित्रयाभावे निर्द्वैतो द्वैतरहितः पूर्ण एवाऽऽत्माऽनुभूयते । कुत्रानुभूयत इत्यत आह—**समाधीति ।** विद्वदनुभवप्रदर्शनाय समाधिग्रहणं सर्वानुभवद्योतनाय सुषुप्तिमूर्छयोरुदाहरणं सुषुप्त्याद्युत्थितस्य द्वैतादर्शनस्मरणान्यथानुपपत्त्या निर्द्वैतस्य तदनुभवितुः सिद्धिरिति भावः । भवतु सुषुप्त्यादावद्वैतसिद्धिः प्रकृते किमायातमित्यत आह—**पूर्ण इति ।** यथा सुषुप्त्यादौ परिच्छेदकाभावात्पूर्णस्तथा सृष्टेः पुराऽपि तदभावात्पूर्ण इत्यर्थः ॥ १६ ॥

**अ० टीका**—फलितमाह—**त्रयेति । समाधीति** । साक्षिणेत्यार्थिकम् ॥ १६ ॥

**रा० टीका**—अस्तु ब्रह्मणः पूर्णत्वमानंदरूपत्वे किमायातमित्याशंक्यान्वयव्यतिरेकाभ्यां भूम्नः सुखरूपत्वप्रदर्शनपरं " यो वै भूमा तत्सुखं नाल्पे सुखमस्ति " इति वाक्यमर्थतोऽनुक्रामति—

**यो भूमा स सुखं नाल्पे सुखं त्रेधा विभेदिनि ॥**
**सनत्कुमारः प्राहैवं नारदायातिशोकिने ॥ १७ ॥**

**यो भूमेति ।** यः पूर्वोक्तो भूमा स सुखरूप एव । अद्वितीये दुःखहेतोरभावात् । अल्पे परिच्छिन्ने तस्यैव विवरणं त्रेधा विभेदिनीति हेतुगर्भं विशेषणं सुखं तत्र न विद्यत इत्यर्थः । एवं कस्मै केनाभिहितमित्यत आह—**सनत्कुमार इति ।** नारदस्य शिष्यत्वे कार-

णमाह—**अतिशोकिन इति ।** अतिशयितोऽधिकः शोकोऽस्यास्तीत्यतिशोकी तस्मै ॥ १७ ॥

**अ० टीका**—अस्त्वेवं प्रलयादौ निर्द्वैत आत्मा ततः किं प्रकृत इत्यतो **यो वै भूमा** तत्सुखं नाल्पे सुखमस्तीति **श्रुतिमर्थत** आह—**य इति ।** एवं तत्र **छांदोग्यसप्तमाध्यायगतां सनत्कुमारविद्यामपि** प्रमाणयति—**भूमेति** । त्रेधा देशकालवस्तुपरिच्छेदैस्त्रिप्रकारमित्यर्थः । विभेदिनि भेदवत्यल्पे द्वैत इत्येतत् ॥ १७ ॥

**सपुराणान्पंच वेदाञ्शास्त्राणि विविधानि च ॥**
**ज्ञात्वाऽप्यनात्मवित्त्वेन नारदोऽतिशुशोच ह ॥१८॥**

**रा० टीका**—तस्यातिशोकित्वे हेतुमाह–**सपुराणानिति** । नारदः पुराणैः सह वर्तत इति सपुराणाः पंच वेदास्तान्विविधानि च शास्त्राणि विदित्वाऽप्यात्मज्ञानरहितत्वेनातिशयेन शोकं प्राप्तः ॥ १८ ॥

**अ० टीका**—**नारदस्य** किमध्ययनाभावाच्छोक इत्याशंक्य नेत्याह—**सपुराणानिति ।** प्रसिद्धमेव सर्वमिदं तत्रैव विस्तरभयान्नेवेह प्रपंच्यत इति दिक् ॥ १८ ॥

**रा० टीका**—ननु वेदशास्त्रविषयकज्ञानस्य शोकनिवर्तकत्वेन प्रसिद्धस्य कथमतिशोकहेतुत्वमित्यत आह—

**वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता ॥**
**पश्चात्त्वभ्यासविस्मारभंगगर्वैश्च शोकिता ॥ १९ ॥**

**वेदाभ्यासादिति ।** तापत्रयेणाऽऽध्यात्मिकादिलक्षणेनैव शोकिता शोकोऽस्यास्तीति शोकी तस्य भावस्तत्ताऽऽसीदित्यध्याहारः । पश्चात्त्विति तुशब्दो विशेषद्योतनार्थः । अभ्यासः पाठाद्यावर्तनम् । विस्मारः पठितस्य विस्मरणम् । भंगः स्वतोऽधिकेन तिरस्कारः । गर्वो न्यूनदर्शनेन स्वाधिक्यबुद्धिः । एतैः कारणैः शोकित्वम् ॥ १९ ॥

**अ० टीका**—तत्र हेतुमाह—**वेदेति** । तापत्रयं त्वाधिभौतिकादिकं प्रसिद्धमेव ॥ १९ ॥

**सोऽहं विद्वन्प्रशोचामि शोकपारं नयात्र माम् ॥**
**इत्युक्तः सुखमेवास्य पारमित्यभ्यधादृषिः ॥ २० ॥**

**रा० टीका**—नन्वेवं सर्वज्ञस्यापि नारदस्यातिशोकित्वं जातमिति कुतोऽवगम्यत इत्याशंक्य "सोऽहं भगवः शोचामि" इति तदीयादेव वाक्यादवगतमित्यभिप्रेत्य तं मा भगवाञ्शोकस्य पारं तारयत्विति तन्निवृत्त्युपाये तेन पृष्टे सति **सनत्कुमारो** भूमशब्दवाच्यं सुखरूपं ब्रह्मैव ज्ञायमानं शोकनिवृत्त्युपाय इति सुखं त्वेव जिज्ञासितव्यमित्यारभ्योत्तरग्रंथसंदर्भेणोक्तवानित्याह–**सोऽहमिति** ॥ २० ॥

**अ० टीका**—एवं शाब्दिकविद्वत्तायामपि शोकाकुलो **नारदः** किमकरोदित्यत आह—**सोहऽमिति** । ऋषिः **सनत्कुमारः** ॥ २० ॥

**सुखं वैषयिकं शोकसहस्रेणावृतत्वतः ॥**
**दुःखमेवेति मत्वाऽऽह नाल्पेऽस्ति सुखमित्यसौ ॥२१॥**

**रा० टीका**—ननु स्रगादिजन्येषु सुखेषु बहुषु सत्सु नाल्पे सुखमस्तीत्युक्तिरनुपप-

न्नेति चेन्न तेषां स्रगादीनां दुःखानुषंगेण विषसंपृक्तान्नवद्धृद्दुःखरूपत्वस्य मुनिनाऽभिप्रेतत्वादित्याह—**सुखमिति** ॥ २१ ॥

**अ० टीका**—किं तद्विषयिकं नेत्याह—**सुखमिति** ॥ २१ ॥

**रा० टीका**—द्वैते सुखाभावमंगीकृत्याद्वैतेऽपि तमाशंकते—

**ननु द्वैते सुखं मा भूदद्वैतेऽप्यास्ति नो सुखम् ॥**
**अस्ति चेदुपलभ्येत तथा च त्रिपुटी भवेत् ॥ २२ ॥**

**नन्विति ।** तत्रानुपलब्धिं प्रमाणयति—**अस्ति चेदिति ।** अद्वैते यदि सुखं विद्यते तर्हि विषयसुखादिवदुपलभ्येत यतो नोपलभ्यतेऽतो नास्तीत्यर्थः । ननूपलभ्यत इत्याशंकमानं प्रत्याह—**तथेति ।** अनुभवस्यानुभवित्रनुभाव्यसापेक्षत्वादद्वैतहानिरिति भावः ॥ २२ ॥

**अ० टीका**—तत्र शंकते—**नन्विति ।** तत्रानुपलब्धिं प्रमाणयति—**अस्ति चेदिति ।** इष्टापत्तिमन्यथानुपपत्त्या प्रत्याह—**तथा चेति** ॥ २२ ॥

**रा० टीका**—अद्वैतस्य सुखाधिकरणत्वनिषेधमंगीकरोति सिद्धांती—

**माऽस्त्वद्वैते सुखं किं तु सुखमद्वैतमेव हि ॥**
**किं मानमिति चेन्नास्ति मानाकांक्षा स्वयंप्रभे ॥ २३ ॥**

**माऽस्त्विति ।** तत्र हेतुमाह—**किं त्विति ।** हि यस्मात्कारणादद्वैतमेव सुखमतः सुखादिकरणं न भवतीत्यर्थः । अद्वैतं सुखमित्यत्र किं प्रमाणमित्याशंकानुवादपूर्वकं तस्य स्वप्रकाशत्वात्प्रमाणप्रश्न एवानुपपन्न इत्याह किं मानमिति ॥ २३ ॥

**अ० टीका**—अथ सिद्धांत्युक्तशंकामंगीकृत्य समाधत्ते—**माऽस्त्विति ।** हीति श्रुतिप्रसिद्ध्यर्थम् । साऽपि शक्त्यादिवृत्त्या स्वजन्यप्रमितिविषयतापत्त्या चाद्वैतत्वक्षतेर्न तत्र संचरतीत्यस्याप्रामाणिकत्वं मन्वानः शंकते—**किमिति ।** स्वप्रकाशत्वादद्वैतात्मसुखस्य सकलमानानपेक्षत्वमेवेति समाधत्ते—**नास्तीत्यादिशेषेण** ॥ २३ ॥

**रा० टीका**—ननु स्वप्रकाशत्वेऽपि किं प्रमाणमित्याशंक्य त्वदीयमेव वचनं प्रमाणमित्याह—

**स्वप्रभत्वे भवद्वाक्यं मानं यस्माद्भवानिदम् ॥**
**अद्वैतमभ्युपेत्यास्मिन्सुखं नास्तीति भाषते ॥ २४ ॥**

**स्वप्रभत्व इति ।** तदुपपादयति—**यस्मादिति ।** यतः कारणाद्भवता प्रमाणनैरपेक्ष्येणाद्वैतमभ्युपेत्य सुखमेवाक्षिप्यतेऽतः स्वप्रभत्वमित्यर्थः ॥ २४ ॥

**अ० टीका**—तत्रापि शंकेत चेत्त्वं स्वात्मानमेव पृच्छेत्याशयेनाऽऽह—**स्वप्रभत्व इति ।** तत्र हेतुः—**यस्मादित्यादिशेषेण** ॥ २४ ॥

**रा० टीका**—न मया द्वैतमभ्युपगम्यते किं तु त्वदुक्तमद्वैतमनूद्य दूष्यतेऽतो नोक्तसिद्धिरिति शंकते—

**नाभ्युपैम्यहमद्वैतं तद्वचोनूद्य दूषणम् ॥**
**वच्मीति चेत्तदा ब्रूहि किमासीद्द्वैततः पुरा ॥ २५ ॥**

**नाभ्युपैमीति ।** विक[ल्पास]महत्वादद्वैतानभ्युपगमोऽनुपपन्न इति मन्वानः पृच्छति—**तदेति** ॥ २९ ॥

**अ० टीका**—तत्रापि तदभिप्रायविशेषं सिद्धांत्याशंक्याऽऽक्षिपति—**नेति** ॥ २५ ॥

**रा० टीका**—किंशब्दसूचितं विकल्पं दर्शयति—

**किमद्वैतमुत द्वैतमन्यो वा कोटिरंतिमः ॥**
**अप्रसिद्धो न द्वितीयोऽनुत्पत्तेः शिष्यतेऽग्रिमः ॥ २६ ॥**

**किमद्वैतामिति ।** तृतीयं पक्षं निराकरोति—**अंतिम इति ।** द्वैताद्वैतविलक्षणस्य रूपस्य लोकेऽदर्शनादिति भावः । द्वितीयं [प]क्षं निराकरोति—**न द्वितीय इति ।** तत्र हेतुमाह—**अनुत्पत्तेरिति ।** द्वैतस्य तदानीमनुत्पन्न[त्]वादिति भावः । अतः प्रथमः पक्षः परिशिष्यत इत्याह—**शिष्यत इति** ॥ २६ ॥

**अ० टीका**—एवं सामान्यतः कृतं स्वकृतं प्रश्नमजानानं प्रतिवादिनं स्वाभिसंधिमुद्घाटयंस्तद्विकल्पत्रयं विधाय व्युत्क्रमेण पक्षद्वयं संदूष्य परिशेषादाद्यमेव सिद्धांतयति—**किमद्वैतमिति ।** एतेन "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति **श्रुति**रप्यनुगृहीता भवतीति द्योत्यते । एवं बाधावधित्वेन परिशिष्टमद्वैतमेव पारमार्थिकं द्वैतं तु बाधितत्वान्मिथ्येत्यपि ॥ २६ ॥

**रा० टीका**—ननूक्तेन प्रकारेणाद्वैतं युक्त्यैव सिध्यति नानुभवेनेति चोदयति—

**अद्वैतसिद्धिर्युक्त्यैव नानुभूत्याति चेद्वद ॥**
**निर्दृष्टांता सदृष्टांता वा कोऽप्यंतरमत्र नो ॥ २७ ॥**

**अद्वैतेति ।** अद्वैतसिद्धिर्युक्त्यैवेत्युक्तं विकल्पासहत्वादनुपपन्नमिति मन्वानो युक्तिं विकल्पयति सिद्धांती—**वदेति ।** विकल्पस्य न्यूनतां निराकरोति—**कोऽप्यंतरमिति** ॥ २७ ॥

**अ० टीका**—तत्रापि पूर्ववादी शंकते—**अद्वैतेति ।** सिद्धांती तत्र विकल्प्य पृच्छति—**इति चेदित्यादि**शेषेण । सा युक्तिरद्वैतसिद्धिकारिण्यस्मदुपन्यस्तापरार्थानुमितिलक्षणा किं निर्दृष्टांता सकलद्वैतपक्षका विमतं मिथ्याभिन्नत्वादेवंरूपा सर्वद्वैतस्यैव पक्षत्वेन दृष्टांतविरहिताऽनुपसंहारिहेत्वाभासवती । किंवा व्यावहारिकं द्वैतं मिथ्यैतदुपाध्युपरमे त्वप्रतीयमानत्वादैंद्रजालिकसहकारवदिति सदृष्टांतावेति प्रश्नविकल्पाशयः । अत्र मदुपन्यस्तयुक्तिविषय इत्यर्थः । कोऽप्यंतरं तृतीयकोटिः ॥ २७ ॥

**रा० टीका**—प्रथमं पक्षं सोपहासं निराकरोति—

**नानुभूतिर्न दृष्टांत इति युक्तिस्तु शोभते ॥**
**सदृष्टांतत्वपक्षे तु दृष्टांतं वद मे मतम् ॥ २८ ॥**

**नानुभूतिरिति ।** अद्वैतसिद्धिर्युक्त्यैवेति वदताऽनुभूतिस्तावन्नाभ्युपेयते युक्तिस्तु दृष्टांतप्रदर्शनमंतरेण न किंचित्साधयति, अतो न दृष्टांत इत्युक्तिरयुक्तेति भावः । द्वितीये विकल्प उभयवादिसंप्रतिपन्नो दृष्टांतो वक्तव्य इत्याह—**सदृष्टांतेति** ॥ २८ ॥

**अ० टीका**—एवमुक्तविकल्पयोराद्यमुपहासेनैव दूषयति—**नानुभूतिरिति ।** स्वप्ने स्वशिरश्छेदाद्यवेक्षणं दृष्टांताभावेऽपि नालीकमनुभूतेः किंतु भ्रामिकमेव न तु प्रामिकमित्य-

स्वरसादाह—**न दृष्टांत इति**। एवं च दृष्टांताभावेऽपि तत्त्वमेव । तद्बीजं तूक्तहेत्वाभासत्रटितत्वमेव । न च व्यतिरेकेब्रह्मवदिति व्यतिरेकिदृष्टांतसत्त्वान्नानुपसंहारित्वमिति वाच्यम् । नाभ्युपेम्यहमद्वैतमिति त्वयैवोक्तत्वादिति तत्त्वम् । अथांत्यपक्ष एवावशिष्टस्तत्र स्वसंमतं दृष्टांतं पृच्छति—**सदृष्टांतत्वेति** ॥ २८ ॥

**रा० टीका**—तर्हि दृष्टांतेनैवाद्वैतं साधयामीति शंकते पूर्ववादी—

**अद्वैतः प्रलयो द्वैतानुपलंभेन सुप्तिवत् ॥**
**इति चेत्सुप्तिरद्वैतेत्यत्र दृष्टांतमीरय ॥ २९ ॥**

**अद्वैत इति** । प्रलयो द्वैतरहितो भवितुमर्हति द्वैतानुपलब्धिमत्त्वाद्यो यो द्वैतानुपलब्धिमान्स स द्वैतरहितो यथा स्वाप इति । नन्वेवं साधयतस्तव स्वसुप्तिर्दृष्टांतः परसुप्तिर्वा । आद्ये तस्याः परं प्रत्यसिद्धत्वेन तत्सिद्धये दृष्टांतांतरं वक्तव्यमित्याह—**सुप्तिरिति** ॥ २९ ॥

**अ० टीका**—अथ सृष्टेः प्राक्कालिकाद्वैतसाधने सिद्धांतिना पृष्टं दृष्टांतं प्रतिवादी स्पष्टयति—**अद्वैत इति** । तत्रापि सिद्धांती दृष्टांतं पृच्छति—**सुप्तिरिति** ॥ २९ ॥

**रा० टीका**—ननु तस्याः परसुप्तिरेव दृष्टांत इति द्वितीयं विकल्पमाशंकते—

**दृष्टांतः परसुप्तिश्चेदहो ते कौशलं महत् ॥**
**यः स्वसुप्तिं न वेत्त्यस्य परसुप्तौ तु का कथा ॥ ३० ॥**

**दृष्टांत इति** । परसुप्तेस्तवाप्रसिद्धत्वेन त्वया दृष्टांतीकरणमनुपपन्नमिति सोपहासमाह सिद्धांती—**अहो इति** । यो भवान् सुप्तेरनुभवगम्यत्वानंगीकारेण स्वसुप्तिमपि न वेत्त्यस्य तव परसुप्तौ का कथा परसुप्तिज्ञानं न भवतीति किमु वक्तव्यमिति भावः ॥ ३० ॥

**अ० टीका**—तत्र परसुप्तिं दृष्टांतीकृतामाशंक्योपहसति—**दृष्टांत इति** ॥ ३० ॥

**रा० टीका**—नन्वनुमानात्परसुप्तिसिद्धिरिति शंकते—

**निश्चेष्टत्वात्परः सुप्तौ यथाऽहमिति चेत्तदा ॥**
**उदाहर्तुः सुषुप्तेस्ते स्वप्रभत्वं बलाद्भवेत् ॥ ३१ ॥**

**निश्चेष्टेति** । विमतः परः सुप्तो भवितुमर्हति प्राणादिमत्त्वे सति निश्चेष्टत्वान्मद्वदित्यनुमानादित्यर्थः । एवं तर्हि तव सुप्तेः स्वप्रकाशत्वं परिशिष्यत इत्याह सिद्धांती—**तदेति** । तदा तर्हि मां प्रति सुषुप्तिमुदाहर्तुर्दृष्टांतीकर्तुस्ते तव सुप्तेः स्वप्रभत्वं स्वप्रकाशत्वं बलात्सुप्त्युदाहरणसामर्थ्यादेव भवेत् ॥ ३१ ॥

**अ० टीका**—अनुमानेन परसुप्तिं साधयितुं स्वसुप्तिमेव दृष्टांतीकरिष्यसि चेत्तवैव तत्साक्षिणो बलादेव स्वप्रकाशत्वं स्यादित्याह—**निश्चेष्टत्वादिति** ॥ ३१ ॥

**रा० टीका**—कथं बलाद्भवतीत्याशंक्याऽऽह—

**नेंद्रियाणि न दृष्टांतस्तथाऽप्यंगी करोषि ताम् ॥**
**इदमेव स्वप्रभत्वं यद्भानं साधनैर्विना ॥ ३२ ॥**

**नेंद्रियाणीति** । सुप्तिग्राहकाणींद्रियाणि न संति तेषां स्वकारणे विलीनत्वाद्दृष्टांतश्च संप्रतिपन्नो नास्ति परसुप्तेरप्रसिद्धत्वस्योक्तत्वात्तथाऽपि तां सुप्तिमंगीकरोषि । एवं च सति साधनैर्विना ज्ञानसाधनमंतरेणापि भानं प्रकाशनमिति यदिदमेव स्वप्रभत्वं सुषुप्त्या इत्यर्थः । अ-

त्रायं प्रयोगः । विमता सुप्तिः स्वप्रकाशाऽसत्स्वपि ज्ञानसाधनेषु प्रकाशमानत्वात् । सांख्याभिमतात्मवत्प्राभाकराभिमतसंवेदनवच्छाक्याभिमतस्वात्मवदित्यर्थः ॥ ३२ ॥

**अ० टीका**—तत्र हेतुः—**नेति** ॥ ३२ ॥

**रा० टीका**—इत्थं प्रलयस्य दृष्टांतत्वेनोदाहृतायाः सुषुप्तेरद्वैतत्वं स्वप्रभत्वं च प्रसाध्य तत्र सुखप्रसाधनाय पूर्वपक्षिण आकांक्षामुत्थापयति–

**स्तामद्वैतस्वप्रभत्वे वद सुप्तौ सुखं कथम् ॥**
**शृणु दुःखं तदा नास्ति ततस्ते शिष्यते सुखम् ॥ ३३ ॥**

**स्तामिति** । सुखप्रतियोगिनो दुःखस्य तदानीमसत्त्वात्सुखमेव परिशिष्यत इत्याह—**शृण्विति** । सुखदुःखयोः प्रकाशतमसोरिव परस्परविरोधित्वाद्दुःखाभावे सुखमेवाभ्युपेयमिति भावः ॥ ३३ ॥

**अ० टीका**—अथ प्रतिवादी सुप्तावद्वैतत्वाद्यंगीकृत्य सुखं पृच्छति—**स्तामिति** । स्यातामित्यर्थः । सुप्तौ दुःखाभावेन परिशेषादेव तदिति समाधत्ते—**शृण्विति** ॥ ३३ ॥

**रा० टीका**—सुप्तौ दुःखाभावे किं मानमित्याकांक्षायां श्रुत्यनुभवावित्याह—

**अंधः सन्नप्यनंधः स्याद्विद्धोऽविद्धोथ रोग्यपि ॥**
**अरोगीति श्रुतिः प्राह तच्च सर्वे जना विदुः ॥ ३४ ॥**

**अंध इति** । तस्माद्वा एतं सेतुं तीर्त्वाऽधः सन्ननंधो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवति तद्यद्यपीदं भगवः शरीरमंधं भवत्यनंधः स भवतीत्यादिश्रुतिर्देहाभिमानप्रयुक्तानंधत्वादीन्दोषान्सुप्तौ निवारयति व्याध्यादिना पीड्यमानस्यापि सुप्तौ तद्दुःखानुभवो नास्तीत्येतत्सर्वजनप्रसिद्धं चेत्यर्थः ॥ ३४ ॥

**अ० टीका**—" तत्रांधः सन्ननंधो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति " इति **च्छांदोग्य**वचस्तथाऽनुभवं च प्रमाणयति—**अंध इति** ॥ ३४ ॥

**रा० टीका**—ननु यत्र दुःखाभावस्तत्र सुखमित्यस्याव्याप्तेर्लोष्टादौ व्यभिचार इति शंकते—

**न दुःखाभावमात्रेण सुखं लोष्टशिलादिषु ॥**
**द्वयाभावस्य दृष्टत्वादिति चेद्विषमं वचः ॥ ३५ ॥**

**न दुःखेति** । दुःखाभावमात्रेण सुखं कल्पयितुं न शक्यते लोष्टशिलादिषु द्वयाभावस्य सुखदुःखयोरभावस्य दर्शनादित्यर्थः । दृष्टांतदार्ष्टांतिकयोर्वैषम्यान्मैवमिति परिहरति—**विषममिति** । वचो दृष्टांतवचनं विषमं दार्ष्टांतिकाऽननुसारीत्यर्थः ॥ ३५ ॥

**अ० टीका**—तत्रातिप्रसंगमाशंक्य प्रशमयति—**न दुःखेति** ॥ १३५ ॥

**रा० टीका**—दृष्टांतस्याननुकूलत्वमेवोपपादयति—

**सुखदैन्यविकासाभ्यां परदुःखसुखोहनम् ॥**
**दैन्याद्यभावतो लोष्टे दुःखाद्यूहो न संभवेत् ॥ ३६ ॥**

**सुखेति** । अन्यनिष्ठयोः सुखदुःखयोरूहनं यथाक्रमं सुखदैन्यविकासाभ्यां लिंगाभ्यां कर्तव्यमयं दुःखी विषण्णवदनत्वात्संप्रतिपन्नवदयं सुखी प्रसन्नवदनत्वात्संप्रतिपन्नवदित्यर्थः ।

भवत्वेवं लोके प्रकृते किमायातमित्यत आह—दैन्येति । लोष्टादौ मुखदैन्यादिलिंगाभावात्सुखदुःखयोरूहनमेव न संभवति । अतस्तत्र दुःखाभावोऽपि न निश्चेतुं शक्यत इत्यर्थः ॥ ३६ ॥

**अ० टीका**—तत्र हेतुः—**मुखेति** ॥ ३६ ॥

**रा० टीका**—इदानीं परकीयसुखदुःखाभ्यां स्वकीयसुखदुःखयोर्वैषम्यं दर्शयति—

**स्वकीये सुखदुःखे तु नोहनीये ततस्तयोः ॥**
**भावो वेद्योनुभूत्यैव तदभावोऽपि नान्यतः ॥ ३७ ॥**

**स्वकीये इति** । स्वनिष्ठयोस्तु सुखदुःखयोरनुभवसिद्धत्वान्नानुमेयत्वं यतस्ततस्तयोः सुखदुःखयोर्भावः सद्भावो यथानुभूत्यैव वेद्यः प्रत्यक्षेणावगम्यते तथा तदभावोऽपि तयोः सुखदुःखयोरभावोऽपि । अन्यतः अन्यस्मादनुमानादेर्नावगम्यते किं तु प्रत्यक्षेणैवेत्यर्थः ॥ ३७ ॥

**अ० टीका**—एवं परकीयदुःखसुखोहनप्रकारं प्रदर्श्य स्वकीयदुःखादिभावाभावौ तु स्वप्रकाशसाक्षिलक्षणानुभवैकवेद्यावित्याह—**स्वकीये इति** ॥ ३७ ॥

**रा० टीका**—फलितमाह—

**तथा सति स्वसुप्तौ च दुःखाभावोऽनुभूतितः ॥**
**विरोधिदुःखराहित्यात्सुखं निर्विघ्नमिष्यताम् ॥ ३८ ॥**

**तथेति** । तथा सति स्वकीयस्य सुखादेरनुभवगम्यत्वे सति स्वसुप्तौ स्वकीयसुषुप्तावपि विद्यमानो दुःखाभावोऽनुभवेनैव सिद्धः । ततोऽपि किं तत्राऽऽह—**विरोधीति** । सुप्तौ सुखविरोधिनो दुःखस्याभावान्निर्विघ्नं बाधरहितं सुखमिष्यतामभ्युपेयताम् ॥ ३८ ॥

**अ० टीका**—अथ फलितं कथयति—**तथा सतीति** ॥ ३८ ॥

**रा० टीका**—शय्यादिसुखसाधनसंपादनान्यथानुपपत्त्याऽपि सुप्तौ सुखमस्तीत्यवगम्यत इत्याह—

**महत्तरप्रयासेन मृदुशय्यादिसाधनम् ॥**
**कुतः संपाद्यते सुप्तौ सुखं चेत्तत्र नो भवेत् ॥ ३९ ॥**

**महत्तरेति** । तत्र तस्यां सुप्तौ सुखं न भवेच्चेन्महत्तरप्रयासेन बहुविधवित्तव्ययशरीरपीडनादिना मृदुलं शय्यादि कशिपुमंचादि साधनं सुखसाधनं कुतः कस्मात्कारणात्संपाद्यते न कुतोऽपीत्यर्थः ॥ ३९ ॥

**अ० टीका**—तत्र हेतुः—**महत्तरेति** । एतेनान्यथानुपपत्त्यैव सुखं सुप्तौ सिद्धं बोध्यम् ॥ ३९ ॥

**रा० टीका**—अर्थापत्तेरन्यथोपपत्तिं शंकते—

**दुःखनाशार्थमेवैतदिति चेद्रोगिणस्तथा ॥**
**भवत्वरोगिणस्त्वेतत्सुखायैवेति निश्चिनु ॥ ४० ॥**

**दुःखेति** । एतच्छय्यादिसाधनसंपादनं दुःखनिवृत्तिफलकं न नियतमिति परिहरति—**रोगिण इति** । रोगादिदुःखे सति तन्निवृत्तये तद्भवतु तदभावे तु निवर्त्यदुःखाभावात्तत्संपादनं सुखायैवेत्यवगम्यत इत्यर्थः ॥ ४० ॥

**अ० टीका**—तद्विषयत्वमाशंक्यावच्छेदकविशेषणतदंगीकृत्य सामान्यतस्तत्खंडयति—दुःखेति १४० ॥

**रा० टीका**—ननु सौषुप्तसुखस्य शय्यादिसाधनजन्यत्व आत्मस्वरूपत्वं व्याहन्येतेति शंकते—

**तर्हि साधनजन्यत्वात्सुखं वैषयिकं भवेत् ॥**
**भवत्वेवात्र निद्रायाः पूर्वं शय्यामनादिजम् ॥ ४१ ॥**

**तर्हीति** । किं निद्रागमनात्पूर्वकालीनस्य विषयजन्यत्वमुच्यते उत निद्राकालीनस्येति विकल्प्याऽऽद्यमंगी करोति—**भवत्विति** ॥ ४१ ॥

**अ० टीका**—तत्राप्याशंक्य समाधत्ते—**तर्हीतिप्रभृतिद्वाभ्याम्** ॥ ४१ ॥

**रा० टीका**—द्वितीयं निराकरोति—

**निद्रायां तु सुखं यत्तज्जन्यते केन हेतुना ॥**
**सुखाभिमुखधीरादौ पश्चान्मज्जेत्परे सुखे ॥ ४२ ॥**

**निद्रायामिति** । सुषुप्तौ शय्याद्यनुसंधानाभावात्तज्जन्यत्वं तस्य न संभवतीति भावः ननु निद्रायामजन्यं सुखं यद्यस्ति तर्हि तद्विषयसुखवत्कुतो नानुभूयत इत्याशंक्यानुभविनुस्तदा तस्मिन्निमग्नत्वान्न विषयसुखवत्तदनुभव इत्यभिप्रायेणाऽऽह **सुखेति** । आदौ निद्राया पूर्वस्मिन्काले जीवः सुखाभिमुखधीः शय्यादिजन्यसुखाभिमुखा धीर्बुद्धिर्यस्य स तथोक्तस्तथाविधो भवति पश्चान्निद्राकाले परे उत्कृष्टे सुखे स्वरूपसुखे मज्जेद्विलीनो भवेत् ॥ ४२ ॥

**अ० टीका**—एवं निद्रापूर्वकालिकस्य सम्यक्शय्यादिविषयसुखस्य साधनजन्यत्वादपारमार्थिकत्वं स्वनिमर्यादयाऽङ्गीकृत्य निद्राकालिकसुखस्याऽऽत्मत्वेन पारमार्थिकत्वमभिसंधाय सिद्धांती तज्जनकसामग्रीं पृच्छति **निद्रायां त्विति** । तत्र प्रतिवाद्यनुत्तरे स्वयं मुमुक्ष्वनुजिघृक्षया सर्वव्यवस्थां संक्षिपति—**सुखेति** । सुखं शय्यादिजन्यसुखं प्रत्यभिमुखं कतानां धीर्यस्य । एतादृश आदौ सन्पश्चात्परे सुखे ब्रह्मानंदाख्ये स सज्जेदिति योजना । तं इत्यार्थिकम् ॥ ४२ ॥

**रा० टीका**—संक्षेपेणोक्तमर्थं श्लोकत्रयेण प्रपंचयति—

**जाग्रद्व्यापृतिभिः श्रांतो विश्रम्याथ विरोधिनि ॥**
**अपनीते स्वस्थचित्तोऽनुभवेद्विषये सुखम् ॥ ४३ ॥**

**जाग्रद्व्यापृतिभिरित्यादिना** । जीवो जाग्रद्व्यापृतिभिर्जागरणावस्थायां क्रियमाणव्यापारविशेषैः श्रांतो विश्रम्य मृदुशय्यादौ शयनं कृत्वाऽथानंतरं विरोधिनि व्यापारजनितदुःखेऽपनीते निवारिते सति स्वस्थचित्तोऽव्याकुलमना भूत्वा शय्यादौ विषये जायमानं सुखमनुभूयात्साक्षात्कुर्यात् ॥ ४३ ॥

**अ० टीका**—एवं शय्यादिजन्यं विषयानंदं निद्राप्राक्कालिकतानर्थावृत्तिजं च विनाशित्वे तथा सौषुप्तिकानंदं नित्यत्वे च क्रमाद्धेतुनाह **जाग्रदित्यादित्रिभिः** ॥ ४३

**रा० टीका**—विषयसुखं च कीदृशमित्याकांक्षायां तत्स्वरूपं दर्शयन्परे सुखे । ज्जननिमित्तत्वेन तदनुभवेऽपि श्रमं दर्शयति—

**आत्माभिमुखधीवृत्तौ स्वानंदः प्रतिबिंबति ॥**
**अनुभूयैनमत्रापि त्रिपुट्या श्रांतिमाप्नुयात् ॥ ४४ ॥**

**आत्मेति** । अनागतविषयसंपादनादिना दुःखमनुभूय तन्निवृत्तये मृदुशय्यादौ शयानस्य बुद्धिरंतर्मुखा भवति तस्यां च बुद्धिवृत्तौ स्वरूपभूत आनंदः स्वाभिमुखे दर्पणे मुखमिव प्रतिबिंबति । एष हि विषयानंदः । अत्राप्यस्यामपि वेलायामेनं विषयानंदमनुभूयानुभवित्रनुभवानुभाव्यलक्षणया त्रिपुट्या श्रमं प्राप्नुयात् ॥ ४४ ॥

**अ० टीका** - आत्मेति । प्रतिबिंबति मुखाभिमुखमुकुरे मुखवदित्यर्थः ॥ ४४ ॥

**रा० टीका**—ततः किं तत्राऽऽह—

**तच्छ्रमस्यापनुत्त्यर्थं जीवो धावेत्परात्मनि ॥**
**तेनैक्यं प्राप्य तत्रत्यो ब्रह्मानंदः स्वयं भवेत् ॥ ४५ ॥**

**तच्छ्रमस्येति** । तस्य त्रिपुटीदर्शनजनितस्य श्रमस्यापनोदाय स एव जीवः परमात्मन्यानंदरूपे ब्रह्मणि धावेच्छीघ्रं गच्छेद्गत्वा च तेन ब्रह्मणैक्यं तादात्म्यं गत्वा ' सता सोम्य तदा संपन्नो भवति ' इति श्रुतेः स्वयमपि तत्रत्यस्तस्यां सुषुप्तौ स्थितो ब्रह्मानंदो भवेत्॥४५॥

**अ० टीका**—तच्छ्रमस्येति । तत्रत्य इति व्युत्थाने हेतुः ॥ १४५ ॥

**रा० टीका**—अस्मिन्नुपपादिते सौषुप्त आनंदे शकुन्यादयो बहवो दृष्टांताः श्रुत्युक्ता विद्यंत इत्याह—

**दृष्टांताः शकुनिः श्येनः कुमारश्च महानृपः ॥**
**महाब्राह्मण इत्येते सुप्त्यानंदे श्रुतीरिताः ॥ ४६ ॥**

**दृष्टांता इति** । शकुन्यादिभिः पंचभिर्दृष्टांतैः सुप्तावानंदोपपादनेन तत्र सुखं नास्तीति मतं निराकृतम् ॥ ४६ ॥

**अ० टीका**—ननु भवत्वेवं स्वाप्रक्रियाप्रकारस्तथाऽपि तत्र वृत्त्यभावान्निर्विशेषब्रह्मानंदानुभवसत्त्वे किं प्रमाणमित्याशंक्य त्वादृशकुतार्किककरुणया श्रुत्यैव पंचभिरपि दृष्टांतैरनुमानस्यैवोपन्यस्तत्वान्मैवमिति मन्वानस्तानुद्दिशति—**दृष्टांता इति** ॥ ४६ ॥

**रा० टीका**—तत्र तावत्स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बंधनमेवोपाश्रयते, एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपाश्रयते ' प्राणबंधनं हि सोम्य मनः ' इत्यस्य दृष्टांतदार्ष्टांतिकप्रतिपादनपरस्य **छांदोग्यश्रुति**वाक्यस्यार्थं संक्षेपेण दर्शयति श्लोकद्वयेन—

**शकुनिः सूत्रबद्धः सन् दिक्षु व्यापृत्य विश्रमम् ॥**
**अलब्ध्वा बंधनस्थानं हस्तस्तंभाद्युपाश्रयेत् ॥ ४७ ॥**

**शकुनिरिति** । हस्तादौ कश्चिदाधारसूत्रेण बद्धः शकुनिः पक्ष्याहारादिग्रहणाय दिक्षु प्राच्यादिषु व्यापारं कृत्वा तत्र विश्रमं विश्रम्यतेऽस्मिन्निति विश्रम आधारस्तमलब्ध्वा बंधनस्थानं हस्तादिकमेव यथाऽऽश्रयेत् ॥ ४७ ॥

**अ० टीका**—तत्राऽऽदौ "स यथा शकुनिः सूत्रेण बद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बंधनमेवोपाश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽय-

तनमलब्ध्वा प्राणमेवोपाश्रयते "प्राणबंधनं हि सोम्य मनः" इति शकुनिदृष्टांतादिप्रतिपादकं **छांदोग्य**वाक्यमर्थतः पठति—**शकुनिरितिप्रभृतिद्वाभ्याम्** । आदिना यष्टिका ॥ ४७ ॥

**जीवोपाधिमनस्तद्वद्धर्माधर्मफलाप्तये ॥**
**स्वप्ने जाग्रति च भ्रांत्वा क्षीणे कर्मणि लीयते ॥ ४८ ॥**

**रा० टीका**—तथा जीवोपाधिभूतं मनोऽपि पुण्यापुण्यफलयोः सुखदुःखयोरनुभवाय स्वप्नजाग्रदवस्थयोस्तत्र तत्र भ्रांत्वा भोगप्रदे कर्मणि क्षीणे सति स्वोपादानेऽज्ञाने विलीयते तल्लये च तदुपहितो जीवः परमात्मैव भवतीत्यर्थः ॥ ४८ ॥

**अ० टीका**—**जीवोपाधिरिति** । लीयते मौपुप्ताज्ञानावच्छिन्नब्रह्मणीत्यर्थात् ॥४८॥

**रा० टीका**—इदानीं श्येनदृष्टांतप्रपंचनपरस्य तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रांतः संहत्य पक्षौ स्वालयायैव ध्रियत एवमेवायं पुरुष एतस्मा आनंदाय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति, इत्यस्य **बृहदारण्यक**वाक्यस्यार्थं संक्षिप्याऽऽह—

**श्येनो वेगेन नीडैकलंपटः शयितुं व्रजेत् ॥**
**जीवः सुप्त्यै तथा धावेद्ब्रह्मानंदैकलंपटः ॥ ४९ ॥**

**श्येन इति** । यथाऽऽकाशे सर्वतः प्रचरञ्श्येन एतन्नामा पक्षी गगने संचारनिमित्तश्रमपरिहाराय शयितुं शयनं कर्तुं नीडैकलंपटः कुलायैकाभिलापवान्व्रजेच्छीघ्रं गच्छेत्तद्वदेव जीवो मनउपाधिकश्चिदाभासोऽपि ब्रह्मानंदैकाभिलापवान्स्वापाय शीघ्रं गच्छेद्धृदयाकाशमिति शेषः ॥ ४९ ॥

**अ० टीका**—एवं " **तद्यथाऽस्मिन्नाकाशे** श्येनो वा सुपर्णो वा विपरिपत्यश्रांतः संहृत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अंताय(?) धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति " इति **काण्वश्रुति**मेव श्येनदृष्टांतादौ निबध्नाति—**श्येन इति** । शयितुं निद्रातुम् ॥ ४९ ॥

**रा० टीका**—" स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानंदस्य गत्वा शयीतैवमेवैष एतच्छेते " इति कुमारादिदृष्टांतत्रयप्रदर्शनपरं **बालाकिब्राह्मणगत**वाक्यं श्लोकत्रयेण व्याचष्टे—

**अतिबालः स्तनं पीत्वा मृदुशय्यागतो हसन् ॥**
**रागद्वेषाद्यनुत्पत्तेरानंदैकस्वभावभाक् ॥ ५० ॥**

**अतिबाल इत्यादिना** । यथा स्तनंधयः शिशुरागलं स्तनं पाययित्वा मृदुत्वादिगुणयोगिनी तल्पे शायितः स्वकीयादिज्ञानशून्यत्वेन रागादिरहितः सन् सुखमूर्तिरेवावतिष्ठते ॥५०॥

**अ० टीका**—एवं " **स यथा** कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानंदस्य गत्वा शयीतैवमेवैष एतच्छेते" इत्यवशिष्टदृष्टांतत्रयपरां **काण्वश्रुति**मेवार्थतः संग्रथयति—**अतिबाल इत्यादित्रिभिः** ॥ १९० ॥

**महाराजः सार्वभौमः संतृप्तः सर्वभोगतः ॥**
**मानुषानंदसीमानं प्राप्याऽऽनंदैकमूर्तिभाक् ॥ ५१ ॥**

**रा० टीका**—यथा वा सार्वभौमो राजाऽविशदबुद्धित्वेऽपि सर्वैर्मानुषानंदैर्युक्तत्वात्प्रार्थनीयाभावेन रागादिरहित आनंदमूर्तिरेवावतिष्ठते ॥ ९१ ॥

**अ० टीका**—**महाराज इति । मानुषेति ।** " स एको मानुष आनंदः " इति **तैत्तिरीयश्रुति**प्रसिद्धमनुष्यानंदकाष्ठामित्यर्थः ॥ ९१ ॥

**महाविप्रो ब्रह्मवेदी कृतकृत्यत्वलक्षणाम् ॥**
**विद्यानंदस्य परमां काष्ठां प्राप्यावतिष्ठते ॥ ९२ ॥**

**रा० टीका**—यथा वा महाविप्रो महाब्राह्मणः प्रत्यगभिन्नब्रह्मसाक्षात्कारवानहं कृतकृत्य इत्येवंरूपां विद्यानंदस्य परमां सीमां जीवन्मुक्ततां प्राप्तः परमानंदस्वरूप एवावतिष्ठते तथा सुप्तोऽप्यानंदरूपस्तिष्ठतीति शेषः ॥ ९२ ॥

**अ० टीका**—**महाविप्र इति ।** ब्रह्मवेदी ब्रह्मापरोक्षवान् ॥ ९२ ॥

**रा० टीका**—नन्वेते कुमारादयस्त्रय एव किमिति दृष्टांतीकृता नान्य इत्याशंक्य दृष्टांतत्रयोदाहरणतात्पर्यमाह—

**मुग्धबुद्धातिबुद्धानां लोके सिद्धा सुखात्मता ॥**
**उदाहृतानामन्ये तु दुःखिनो न सुखात्मकाः ॥ ९३ ॥**

**मुग्धेति ।** विवेकशून्यानां मध्येऽतिबालः सुखी, विवेकिषु सार्वभौमः, अतिविवेकिष्वानंदात्मसाक्षात्कारवानेव, इतरे तु सर्वदा रागादिमत्त्वादसुखिन इति दृष्टांतीकृता इत्यर्थः ॥ ९३ ॥

**अ०टीका**—फलितमाह—**मुग्धेति ।** बालचक्रवर्तिब्रह्मविदामित्यर्थः ॥ ९३ ॥

**रा० टीका**—भवंत्वेते सुखिनः प्रकृते किमायातमित्याशंक्य दार्ष्टांतिकश्रुतिवाक्यस्य तात्पर्यमाह—

**कुमारादिवदेवायं ब्रह्मानंदैकतत्परः ॥**
**स्त्रीपरिष्वक्तवद्वेद न बाह्यं नापि चांऽऽतरम् ॥ ९४ ॥**

**कुमारादीति ।** कुमारादिवत्कुमारादयो यथाऽऽनंदभाज एवमयमपि सुषुप्ते ब्रह्मानंदैकतत्परो ब्रह्मानंदैकभागित्यर्थः । ब्रह्मानंदैकपरत्वे युक्तिप्रदर्शनपरं " तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नांऽऽतरमेवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांऽऽतरम्" इति ज्योतिर्ब्राह्मणगतं वाक्यमर्थतोऽनुक्रामति-**स्त्रीपरिष्वक्तेति ।** यथा लोके प्रियया स्त्रियाऽऽलिंगितः कामी बाह्याभ्यंतरविषयज्ञानशून्यत्वात्सुखमूर्तिर्भवति तथा सुषुप्तौ प्राज्ञेन परमात्मनैक्यं गतो जीवो बाह्यादिविषयज्ञानाभावादानंदरूप एव भवति ॥ ९४ ॥

**अ० टीका**—एवं **तद्यथा** प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नांऽऽतरमेवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांऽऽतरम् " इति**काण्वश्रुत्यर्थे**नैव निगमयति-**कुमारेत्यादि**द्वाभ्याम् ॥ ९४ ॥

**रा० टीका**—अत्र दृष्टांतदार्ष्टांतिकवाक्यस्थयोर्बाह्याभ्यंतरशब्दयोर्विवक्षितमर्थं क्रमेण दर्शयति—

**बाह्यं रथ्यादिकं वृत्तं गृहकृत्यं यथाऽऽतरम् ॥**
**तथा जागरणं बाह्यं नाडीस्थः स्वप्न आंतरः ॥ ९५ ॥**

**बाह्यमिति ।** वृत्तं वृत्तांतः । नाडीस्थो जाग्रद्वासनया नाडीमध्ये प्रतीयमानः प्रपंचः स्वप्न इत्युच्यते ॥ ९५ ॥

**अ० टीका—बाह्यमिति ।** दार्ष्टांतिकमाह—**तथेति ।** देहापेक्षयैवात्र बाह्यादिभावः ॥ १९५ ॥

**रा० टीका**—जीवः सुप्तौ ब्रह्मानंदरूपेणैवावतिष्ठत इत्यत्र युक्तिप्रदर्शनपरायाः "अत्र पिताऽपिता भवति" इत्यादिकायाः श्रुतेस्तात्पर्यमाह—

**पिताऽपि सुप्तावपितेत्यादौ जीवत्ववारणात् ॥**
**सुप्तौ ब्रह्मैव नो जीवः संसारित्वासमीक्षणात् ॥ ९६ ॥**

**पितेति ।** अत्र सुप्तावाध्यासिकानां पितृत्वादिजीवधर्माणां श्रुत्यैव निवारितत्वाज्जीवत्वाप्रतीतौ ब्रह्मतैवावशिष्यत इत्यर्थः ॥ ९६ ॥

**अ० टीका**—एवं दृष्टांत(प)ट्के प्रसुप्तो जीवः स्वरूपभूततदुपहितब्रह्मानंदरूपेणैवावतिष्ठत इति स्वसिद्धांते **कुतार्किक**कृतनमानाभावाशंकोपशांत्यर्थं पिशाचः पिशाचभाषयैव बोधनीय इति न्यायेनानुमानप्रधानं तं प्रत्यनुमानमेव प्रमाणत्वेन संसूच्य मीमांसकं प्रति श्रुतार्थापत्तिमपि तत्र तथात्वेन द्योतयितुम्—" अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चांडालोऽचांडालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति " इतिश्रुतिमर्थतः संक्षेपेण संग्रथयति—**पिताऽपीत्यादि**द्वाभ्याम् ॥ ९६ ॥

**पितृत्वाद्यभिमानो यः सुखदुःखाकरः स हि ॥**
**तस्मिन्नपगते तीर्णः सर्वाञ्शोकान्भवत्ययम् ॥ ९७ ॥**

**रा० टीका**—ननु पितृत्वाद्यभिमानाभावेऽपि सुखित्वादिसंसारः किं न स्यादित्याशंक्य संसारस्य देहाभिमानमूलत्वात्तदभावेऽभाव इति मन्वानस्तत्प्रतिपादकं " तीर्णो हि तदा सर्वाञ्शोकान् हृदयस्य भवति " इति समनंतरवाक्यं तात्पर्यतो व्याचष्टे —**पितृत्वादीति** ॥ ९७ ॥

**अ० टीका—पितृत्वादीति ।** शोकानंतःकरणसंबंधिदुःखानीति शेषः ॥ ९७ ॥

**रा० टीका**—ननूदाहृताभिः श्रुतिभिर्न सुखप्राप्तिर्मुखतोऽभिधीयमानोपलभ्य इत्याशंक्य तत्राभिधानपरं **कैवल्यश्रुति**वाक्यमर्थतः पठति—

**सुषुप्तिकाले सकले विलीने तमसाऽऽवृतः ॥**
**सुखरूपमुपैतीति ब्रूते ह्याथर्वणी श्रुतिः ॥ ९८ ॥**

**सुषुप्तीति ।** सकले जाग्रदादिलक्षणे प्रपञ्चे विलीने स्वोपादानभूतायां तमःप्रधानायां प्रकृतौ विलयं गते सति तमसा तया प्रकृत्याऽऽवृत आच्छादितो जीवः सुखरूपं ब्रह्मोपैतीति तस्याः श्रुतेरर्थः ॥ ९८ ॥

**अ० टीका**—ननु त्वयाऽत्र तदुपहितब्रह्मरूपेणैवावतिष्ठत इति किमित्युच्यते निरुक्तश्रुतिषु सुषुप्त्युपहितत्वानुपलंभादित्यत आह—**सुषुप्तीति** । तथाच **कैवल्योपनिषद्याम्नायते**—"सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति" इति । सकले जाग्रदादिलक्षणे प्रपंच इति **प्राञ्चः** । तत्तु दृष्टिसृष्ट्यभिप्रायम् । सृष्टिदृष्टिपक्षे तु सकले सर्वांशे मनसीत्यर्थः ॥ ५८ ॥

**रा० टीका**—न केवलमयं श्रुतिप्रसिद्धोऽर्थः किं तु सर्वानुभवसिद्धोऽपीत्याह—

**सुखमस्वाप्समत्राहं न वै किंचिद्वेदिषम् ॥**
**इति सुप्ते सुखाज्ञाने परामृशति चोत्थितः ॥ ५९ ॥**

**सुखमिति** । सुषुप्तादुत्थितः पुरुष एतावंतं कालं सुखमहमस्वाप्सं न किंचिद्वेदिषमित्येवं निद्राकालीने सुखाज्ञाने परामृशति स्मरति । अतोऽपि सुप्तौ सुखमस्तीत्यवगम्यते ॥५९॥

**अं० टीका**—तत्र व्युत्थितपरामर्शान्यथानुपपत्तिमपि प्रमाणयति—**सुखमिति** । ते श्रुत्युक्ते ॥ ५९ ॥

**रा० टीका**—ननु परामर्शस्याप्रमाणत्वात्कथं तद्बलात्सुखसिद्धिरित्याशंक्य तस्याप्रामाण्येऽपि तन्मूलभूतानुभवबलात्तत्सिद्धिरित्यभिप्रायेणाऽऽह—

**परामर्शोऽनुभूतेऽस्तीत्यासीदनुभवस्तदा ॥**
**चिदात्मत्वात्स्वतो भाति सुखमज्ञानधीस्ततः ॥ ६० ॥**

**परामर्श इति** । परामर्शः स्मरणज्ञानमनुभूत एवविषयं भवति नाननुभूतविषय इत्यस्माद्धेतोस्तदा सुप्तावनुभव आसीदित्यवगम्यते ननु सुप्तौ मनःसहितानां ज्ञानकरणानां विलीनत्वात्कथमनुभवसिद्धिरित्याशंक्य किं सुखानुभवसाधनं नास्तीत्युच्यतेऽज्ञानानुभवसाधनं वा । नाऽऽद्यः । स्वप्रकाशचिद्रूपत्वे सुखस्य करणानपेक्षत्वात् । न द्वितीयः । स्वप्रकाशसुखबलादेव तदावरकाज्ञानप्रतीतिसिद्धिरित्यभिप्रायेणाऽऽह—**चिदात्मेति** । ततः स्वप्रकाशसुखादज्ञानधीरज्ञानस्य प्रतीतिर्भवतीति ॥ ६० ॥

**अं० टीका**—ततः किं तदाह—**परामर्श इति** ॥ ६० ॥

**ब्रह्म विज्ञानमानंदमिति वाजसनेयिनः ॥**
**पठंत्यतः स्वप्रकाशं सुखं ब्रह्मैव नेतरत् ॥ ६१ ॥**

**रा० टीका**—ननु सौषुप्तसुखस्य स्वप्रकाशसुखत्वेऽपि ब्रह्मानंदः स्वयं संवेदित्यत्रोक्तं ब्रह्मरूपत्वं न संभवति मानाभावादित्याशंक्य विज्ञानमानंदमित्यादि **बृहदारण्यकवाक्यस्य** सद्भावान्मैवमित्याह—**ब्रह्म विज्ञानमिति** ॥ ६१ ॥

**अं० टीका**—तत्र विज्ञानमानंदं ब्रह्मेति श्रुतिं प्रमाणयति—**ब्रह्मेति** ॥ ६१ ॥

**रा० टीका**—नन्वनुभवस्मरणयोरेकाधिकरणत्वनियमात्सुखमहमस्वाप्सं न किंचिद्वेदिषमिति च सौषुप्तसुखाज्ञानयोर्विज्ञानमयशब्दवाच्येन जीवेन स्मर्यमाणत्वात्तस्यैव सुखाद्यनुभवितृत्वं वक्तव्यमित्याशंक्य तदुपाधेर्विज्ञानस्याज्ञानकार्यस्याज्ञाने विलीनत्वान्मैवमित्यभिप्रायेणाऽऽह—

**यदज्ञानं तत्र लीनौ तौ विज्ञानमनोमयौ ॥**
**तयोर्हि विलयावस्था निद्राऽज्ञानं च सैव हि ॥ ६२ ॥**

**यदज्ञानमिति** । न किं चिद्वेदिषमितिस्मरणान्यथानुपपत्त्या गम्यमानं यदज्ञानमस्ति तत्र तस्मिन्नज्ञाने तौ प्रमातृप्रमाणत्वेन प्रसिद्धौ विज्ञानमनोमयौ विलीनौ विज्ञानत्वाद्याकारं परित्यज्य कारणरूपेणावस्थितावतस्तदुपाधिकस्य नानुभवितृत्वमिति भावः । तत्रोपपत्तिमाह— **तयोरिति** । हि यस्मात्तयोर्विज्ञानमनोमययोर्विलयावस्था निद्रेत्युच्यते विज्ञानविरतिः सुप्तिरित्यभिधानात् । तर्हि निद्रायामेव विलीनाविति वक्तव्यमित्याशंक्याऽऽह— **अज्ञानमिति** । सैव निद्रा विद्वद्भिरज्ञानमिति व्यवह्रियत इत्यर्थः ॥ ६२ ॥

**अ० टीका**—नन्वेवं चेत्सुप्त्यैव मुक्त्यापत्तिरत आह—**यदज्ञानमिति** ॥ ६२ ॥

**रा० टीका**—ननु तर्हि सौषुप्तसुखाद्यनुभवकालेऽसतो विज्ञानमयस्य प्रबोधे कथं तत्स्मर्तृत्वमित्याशंक्य विलयावस्थायामपि तत्स्वरूपनाशाभावाद्विलयावस्थोपाधिमदानंदमयरूपेणानुभवितृत्वं विज्ञानशब्दवाच्यघनीभावोपाधिमत्त्वेन स्मर्तृत्वं चैकस्य घटत इत्यभिप्रायेणाऽऽह—

**विलीनघृतवत्पश्चात्स्याद्विज्ञानमयो घनः ॥**
**विलीनावस्थ आनंदमयशब्देन कथ्यते ॥ ६३ ॥**

**विलीनेति** । यथाऽग्निसंयोगादिना विलीनं घृतं पश्चाद्धाय्वादिसंबंधवशाद्घनीभवत्येवं जाग्रदादिषु भोगप्रदस्य कर्मणः क्षयवशान्निद्रारूपेण विलीनमंतःकरणं पुनर्भोगप्रदकर्मवशात्प्रबोधे विज्ञानाकारेण घनीभवति । अतस्तदुपाधिक आत्माऽपि विज्ञानमयो घनः स्यात्स एव पूर्वं विलयावस्थोपाधिकः सन्नानंदमय इत्युच्यते ॥ ६३ ॥

**अ० टीका**—तत्रोपपत्तिमाह—**विलीनेति** । एवमानंदमयं व्युत्पादयति—**विलीनावस्थ इति** ॥ ६३ ॥

**रा० टीका**—विलीनावस्थ आनंदमय इत्युक्तमेवार्थं स्पष्टीकरोति—

**सुप्तिपूर्वक्षणे बुद्धिवृत्तिर्या सुखबिंबिता ॥**
**सैव तद्बिंबसहिता लीनानंदमयस्ततः ॥ ६४ ॥**

**सुप्तीति** । सुप्तेः पूर्वस्मिन्नव्यवहिते क्षणे याऽन्तर्मुखा बुद्धिवृत्तिः स्वरूपभूतसुखप्रतिबिंबयुक्ता भवति ततोऽनंतरं तत्प्रतिबिंबसहिता सैव वृत्तिर्निद्रारूपेण विलीनानंदमय इत्यभिधीयते ॥ ६४ ॥

**अ० टीका**—तत्र हेतुः—**सुप्तीति** । **सुखेति** । सुखस्य बिंबं प्रतिबिंबं संजातं यस्यां सा तथेत्यर्थः । ततो हेतोः ॥ ६४ ॥

**रा० टीका**—एवमानंदमयस्वरूपं प्रदर्श्य तस्यैव प्रबोधकाले विज्ञानमयरूपेण स्मर्तृत्वसिद्धये तदानीं सुखानुभवमुपपादयति—

**अंतर्मुखो य आनंदमयो ब्रह्मसुखं तदा ॥**
**भुंक्ते चिद्बिंबयुक्ताभिरज्ञानोत्पन्नवृत्तिभिः ॥ ६५ ॥**

**अंतर्मुख इति** । सुखप्रतिबिंबसहितांतर्मुखधीवृत्तिजनितसंस्कारसहिताज्ञानोपाधिको य आनंदमयस्तदा सुषुप्तौ ब्रह्मसुखं स्वरूपभूतं सुखं चिदाभाससहिताभिरज्ञानादुत्पन्नाभिः सुखादिगोचराभिर्वृत्तिभिः सत्त्वपरिणामविशेषैर्भुंक्तेऽनुभवति ॥ ६५ ॥

**अ० टीका**—अथ सुप्तौ ब्रह्मसुखानुभवं सुखसाक्ष्यज्ञानाकाराज्ञानवृत्तिभिरेव **विवरणोक्ता**भिरानंदमयस्य सूक्ष्मावस्थजीवस्याऽऽह—**अंतर्मुख इति** ॥ ६५ ॥

**रा० टीका**—ननु तर्हि जागरण इवेदानीं सुखमनुभवामीत्यभिमानः कुतो न स्यादित्याशंक्याविद्यावृत्तीनां बुद्धिवृत्तिवत्स्पष्टत्वाभावादित्यभिप्रायेणाऽऽह—

**अज्ञानवृत्तयः सूक्ष्मा विस्पष्टा बुद्धिवृत्तयः ॥**
**इति वेदांतसिद्धांतपारगाः प्रवदंति हि ॥ ६६ ॥**

**अज्ञानवृत्तय इति** । इदं कुतोऽवगतमित्यत आह—**इतीति** ॥ ६६ ॥

**अ० टीका**—नन्वेवं यदि सुषुप्तौ जीवस्य सूक्ष्मावस्थस्याज्ञानवृत्तिभिर्ब्रह्मसुखानुभवस्तर्हि तस्य तत्र जाग्रदादिवदहं सुखीत्युल्लेखः कुतो न संपद्यत इत्यत आह—**अज्ञानवृत्तय इति** । ननु किमत्र मानमित्याशंक्य **विवरणाचार्य**वचनमेवेत्याशयेन समाधत्ते—**इतीति** । तदुक्तं **सिद्धांतबिंदौ** टीकायां **न्यायरत्नावल्यां ब्रह्मानंदसरस्वतीभिः**—"साक्षिस्वरूपसुखस्वरूपाज्ञानस्वरूपाकारा निर्विकल्पास्तिस्रोऽविद्यावृत्तयः सुषुप्तौ जायंते" इति **विवरणेऽ**गीकृतमिति ॥ ६६ ॥

**रा० टीका**—नन्वानंदमयो ब्रह्मानंदं सूक्ष्माभिरविद्यावृत्तिभिर्भुंक्त इत्यत्र किं प्रमाणमित्यत आह—

**मांडूक्यतापनीयादिश्रुतिष्वेतदतिस्फुटम् ॥**
**आनंदमयभोक्तृत्वं ब्रह्मानंदे च भोग्यता ॥ ६७ ॥**

**मांडूक्येति** । एतच्छब्दार्थमेवाऽऽह—**आनंदेति** ॥ ६७ ॥

**अ० टीका**—तत्र तन्मूलीभूता काचिच्छ्रुतिर्वाच्येत्यत्राऽऽह—**मांडूक्येति** । आदिना " त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् " इति कैवल्यम् । एतत्किं तदाह—**आनंदमयेति** ॥ ६७ ॥

**रा० टीका**—इदानीं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानंदमयो ह्यानंदभुक्चेतोमुख इति मांडूक्यादिश्रुतिगतं वाक्यमर्थतः पठति—

**एकीभूतः सुषुप्तस्थः प्रज्ञानघनतां गतः ॥**
**आनंदमय आनंदभुक्चेतोमयवृत्तिभिः ॥ ६८ ॥**

**एकीभूत इति** । सुषुप्तं सुषुप्तिस्तत्र तिष्ठतीति सुषुप्तस्थः सुषुप्त्यभिमानीत्यर्थः । आनंदमय आनंदप्रचुर आनंदभुक् स्वरूपभूतमानंदं भुंक्त इत्यानंदभुक् चेतोमयवृत्तिभिरिति चेतश्चैतन्यं तन्मय्यस्तत्प्रचुराश्चित्प्रतिबिंबसहिता इत्यर्थः । ताश्च ता वृत्तयश्च चेतोमयवृत्तयः ताभिरानंदभुगिति योजना ॥ ६८ ॥

**अ० टीका**—तत्र सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽऽनंदमयो ह्यानंदभुक्चेतोमुख इतिमांडूक्यवाक्यमर्थतः पठति—**एकीभूत इति** । **चेत इति** । चित्प्रतिबिंबप्रचुराज्ञानवृत्तिभिरित्यर्थः ॥ ६८ ॥

**रा० टीका**—तद्वाक्यगतस्यैकीभूत इति पदस्यार्थमाह—

**विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराऽधुना ॥**
**स लयेनैकतां प्राप्तो बहुतंडुलपिष्टवत् ॥ ६९ ॥**

**विज्ञानेति** । य आत्मा पुरा जागरणावस्थायां विज्ञानमयमुख्यैः " स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयः " इत्यादिश्रुत्युक्तै रूपैराकारविशेषैर्युक्तोऽभूत्स एवाधुना लयेन विज्ञानमनआद्युपाधिविलयेनैकतामेकाकारतां प्राप्तो गतो भवति । तत्र दृष्टांतमाह—**बहिति** । बहुतंडुलजनितपिष्टवदित्यर्थः ॥ ६९ ॥

**अ० टीका**—अथोक्तश्रुतिगतमेकीभूतपदं विशदयति—**विज्ञानमयेति** । " स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः " इत्यादिकाण्वश्रुत्युक्तानेकविधै रूपैरित्यर्थः ॥६९॥

**प्रज्ञानानि पुरा बुद्धिवृत्तयोथ घनोऽभवत् ॥**
**घनत्वं हिमबिंदूनामुदग्देशे यथा तथा ॥ ७० ॥**

**रा० टीका**—अथ प्रज्ञानघनशब्दार्थमाह—**प्रज्ञानानीति** । पुरा पूर्वं जाग्रदादौ प्रज्ञानशब्दवाच्या घटादिगोचरा या बुद्धिवृत्तयोऽभवन्नथ सुषुप्तिकाले घटादिविषयाभावे सति घनोऽभवच्चिद्रूपेणैकरूपोऽभूत्तत्र दृष्टांतमाह—**घनत्वमिति** ॥ ७० ॥

**अ० टीका**—एवं तत्रत्यमेव प्रज्ञानघनपदमपि विशदयति—**प्रज्ञानानीति**॥१७०॥

**रा० टीका**—इदानीं प्रज्ञानघनशब्दार्थनिरूपणप्रसंगादागतं किंचिदाह—

**तद्घनत्वं साक्षिभावं दुःखाभावं प्रचक्षते ॥**
**लौकिकास्तार्किका यावद्दुःखवृत्तिविलोपनात् ॥ ७१ ॥**

**तद्घनत्वमिति** । यदिदं वेदांतेषु साक्षित्वेनाभिधीयमानं प्रज्ञानघनत्वमस्ति तदेव लौकिकाः शास्त्रसंस्काररहितास्तार्किका वैशेषिकादयः शास्त्रिणश्च दुःखाभावं प्रचक्षते दुःखाभाव इत्याहुः । कुत इत्यत आह—**यावदिति** । यावत्यो दुःखवृत्तयस्तासां सर्वासां विलयादित्यर्थः ॥ ७१ ॥

**अ० टीका**—तथा च जाग्रदवस्थायां तत्तद्धीवृत्त्यवच्छिन्नचिदाभासाः सर्वेऽपि स्वोपाधिमूलीभूतधिय एव सुप्तौ लीनत्वाद्धिमकणवद्घनिविडतां प्राप्नुवंति साक्षिणि तत्तदीयं साक्षित्वमेवाज्ञानप्रयुक्तं लोकास्तार्किकाश्च दुःखानुपलब्धेस्तदभावमेव वदंतीत्याह—**तद्घनत्वमिति** ॥ ७१ ॥

**रा० टीका**—पूर्वोदाहृतश्रुतिवाक्यगतचेतोमुखशब्दार्थमाह—

**अज्ञानबिंबिता चित्स्यान्मुखमानंदभोजने ॥**
**भुक्त्वा ब्रह्मसुखं त्यक्त्वा बहिर्यात्यथकर्मणा ॥ ७२ ॥**

**अज्ञानेति** । आनंदभोजने सौषुप्तब्रह्मानंदास्वादने मुखं साधनमज्ञानबिंबिता चित् स्यादज्ञानवृत्तौ प्रतिबिंबितं चैतन्यमेव भवेत् । ननु सुषुप्तावानंदमयरूपेण जीवेन ब्रह्मसुखं चेद्भुज्यते तर्हि तत्परित्यज्याथ बहिः कुतो जागरणं दुःखालयमागच्छेदित्यत आह—**भुक्त्वेति** । पुण्यापुण्यकर्मपाशबद्धत्वात्तेन प्रेरितो जीवः साक्षात्कृतमपि ब्रह्मानंदं परित्यज्याथ बहिर्याति जागरणादिकं गच्छतीत्यर्थः ॥ ७२ ॥

**अ० टीका**—अथ चेतोमुखपदार्थमाह—**अज्ञानेति** । नन्वेवं ब्रह्मानंदास्वादे जीवस्य ततो व्युत्थानमनुचितं तत्राऽऽह—**भुक्त्वेति** ॥ ७२ ॥

**कर्म जन्मांतरेऽभूद्यत्तद्योगाद्बुद्ध्यते पुनः ॥**
**इति कैवल्यशाखायां कर्मजो बोध ईरितः ॥ ७३ ॥**

**रा० टीका**—एतत्कुतोऽवगम्यत इत्याशंक्य " पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः " इति कैवल्यश्रुतिवाक्यादितिमन्वानस्तद्वाक्यमर्थतः पठंस्तदभिप्रायमाह—**कर्मेति** ॥ ७३ ॥

**अ० टीका—**तत्र मानमाह—**कर्मेति** । " पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः " इति **नच्छ्रुतिः** ॥ ७३ ॥

**रा० टीका**—सुप्तौ ब्रह्मानंदोऽनुभूत इत्यत्र लिंगं चाऽऽह—

**कंचित्कालं प्रबुद्धस्य ब्रह्मानंदस्य वासना ॥**
**अनुगच्छेद्यतस्तूष्णीमास्ते निर्विषयः सुखी ॥ ७४ ॥**

**कंचिदिति ।** प्रबुद्धस्य जागरणं प्राप्तस्यापि कंचित्कालं स्वल्पकालपर्यंतं सुप्तावनुभूतस्य ब्रह्मानंदस्य वासनासंस्कारोऽनुगच्छेदनुगच्छति । कुत एतदवगम्यत इत्यत आह—**यत इति ।** यतः कारणात्प्रबोधादौ निर्विषयो विषयानुभवरहितोऽपि सुखी संस्तूष्णीमास्तेऽतोऽवगम्यत इत्यर्थः ॥ ७४ ॥

**अ० टीका**—तत्र युक्तिमप्याह—**किंचिदिति** । तत्र हेतुः—**यत इति** ॥७४॥

**रा० टीका**—तर्हि तूष्णीं कुतो नावतिष्ठत इत्यत आह—

**कर्मभिः प्रेरितः पश्चान्नानादुःखानि भावयन् ॥**
**शनैर्विस्मरति ब्रह्मानंदमेषोऽखिलो जनः ॥ ७५ ॥**

**कर्मभिरिति ।** कर्मभिः पूर्वोक्तैर्नोदितः सर्वोऽपि प्राणी पश्चान्नानाविधानि दुःखान्यनुसंदधानः शनैर्ब्रह्मानंदं विस्मरति ॥ ७५ ॥

**अ० टीका**—तर्हि तथैव कुतो न तिष्ठतीत्यत्राऽऽह—**कर्मभिरिति** ॥ १७५ ॥

**प्रागूर्ध्वमपि निद्रायाः पक्षपातो दिने दिने ॥**
**ब्रह्मानंदे नृणां तेन प्राज्ञोऽस्मिन्विवदेत कः ॥ ७६ ॥**

**रा० टीका—**इतोऽपि ब्रह्मानंदेन विप्रतिपत्तिः कार्येत्याह—**प्रागिति** । प्रत्यहं मनुष्याणां निद्रायाः प्रागूर्ध्वमपि निद्रारंभे निद्रावसाने च ब्रह्मानंदे स्नेहोऽस्ति यतो निद्रादौ मृदुशय्यादि संपादयंति तदवसाने च तं परित्यक्तुमशक्तास्तूष्णीमासते तेन कारणेनास्मिन्नानंदे को बुद्धिमान्विवदेत न कोऽपीत्यर्थः ॥ ७६ ॥

**अ० टीका**—एवं सुप्तौ निरुक्तब्रह्मानुभवसत्त्वे युक्त्यंतरमप्याह—**प्रागिति ।** निद्रायाः प्रागंतर्मुखवृत्त्यनुभवेनोर्ध्वं वासनानंदानुभवेन चेत्यर्थः ॥ ७६ ॥

**रा० टीका**—चोदयति—

**ननु तूष्णीं स्थितौ ब्रह्मानंदश्चेद्भाति लौकिकाः ॥**
**अलसाश्चरितार्थाः स्युः शास्त्रेण गुरुणाऽत्र किम् ॥ ७७ ॥**

**नन्विति ।** गुरुशुश्रूषादिलभ्यस्य ब्रह्मानंदानुभवस्य तूष्णीं स्थितिमात्रलभ्यत्वे गुरुशुश्रूषादिपूर्वकं श्रवणादिकं वृथा स्यादित्यर्थः ॥ ७७ ॥

**अ० टीका**—नन्वेवं चेत्तर्हि लौकिकाः शास्त्रसंस्कारहीना अलसा अपि कृतार्थी भविष्यंतीत्याक्षिपति—**नन्विति** ॥ ७७ ॥

**रा० टीका**—अयं ब्रह्मानंद इति ज्ञाते सति कृतार्थता भवत्येव तदेव गुरुशुश्रूषादिकमंतरेण न संभवतीत्याह—

**बाढं ब्रह्मेति विद्युश्चेत्कृतार्थास्तावतैव ते ॥**
**गुरुशास्त्रे विनाऽत्यंतं गंभीरं ब्रह्म वेत्ति कः ॥ ७८ ॥**

**बाढमिति ।** अत्यंतं गंभीरं दुरवगाहमवाङ्मनसगम्यं सर्वज्ञं सर्वांतरं सर्वात्मरूपं ब्रह्म गुरुशास्त्रे विहायान्येन केनाप्युपायेन को जानीयान्न कोऽपीत्यर्थः ॥ ७८ ॥

**अ० टीका**—अथ सिद्धांती निरुक्ताशंकां किंचिदंगीकृत्याऽऽपादितं गुर्वादिवैयर्थ्यं प्रत्याह--**बाढमिति ।** विद्युश्चेद्यदि जानीयुश्चेत्तर्हि तावतैव ते कृतार्थाः संतीत्यन्वयः॥७८॥

**जानाम्यहं त्वदुक्त्याऽद्य कुतो मे न कृतार्थता ॥**
**शृण्वत्र त्वादृशो वृत्तं प्राज्ञंमन्यस्य कस्य चित् ॥ ७९ ॥**

**रा० टीका**—ननु त्वद्वाक्यादेव ब्रह्मानंदं जानतो मम न कृतार्थता लभ्यत इत्याशंकानुवादपूर्वकं सोपहासमुत्तरमाह—**जानामीति** ॥ ७९ ॥

**अ० टीका**--तत्राप्याक्षिपंतं प्रति लौकिकवृत्तांतकथनेनोपहसति–**जानामीति**७९

**रा० टीका**—तमेव वृत्तांतं दर्शयति—

**चतुर्वेदविदे देयमिति शृण्वन्नवोचत ॥**
**वेदाश्चत्वार इत्येवं वेद्मि मे दीयतां धनम् ॥ ८० ॥**

**चतुर्वेदेति ।** कश्चिच्चतुर्वेदविदे कस्मैचिदिदं बहुधनं दातव्यमित्येवंविधं वाक्यं श्रुत्वा वेदाश्चत्वार इत्यस्मादेव वाक्यादहं वेद्म्यतो मे दीयतामिति वक्ति तद्वद्भवानपीत्यर्थः ॥८०॥

**अ० टीका**—कोऽसौ वृत्तांत इत्यतस्तमाह—**चतुर्वेदेति** ॥ ?८० ॥

**रा० टीका**—ननु वेदाश्चत्वार इति यो वेद स वेदगतां संख्यामेव वेत्ति न तु वेदानां स्वरूपमिति चोदयति—

**संख्यामेवैष जानाति न तु वेदानशेषतः ॥**
**यदि तर्हि त्वमप्येवं नाशेषं ब्रह्म वेत्सि हि ॥ ८१ ॥**

**संख्यामिति ।** साम्येत समाधत्ते—**तर्हीति** । एवं चतुर्वेदाभिज्ञंमन्य इव त्वमप्यशेषं संपूर्णं यथा भवति तथा ब्रह्म न वेत्सि नैव जानासि ॥ ८१ ॥

**अ० टीका**--तत्राप्यमौ चोदयति–**संख्यामेवेति** । अथ सिद्धांती तां तदीयशंकामनूद्य प्रतिबंद्या प्रत्याचष्टे–**यदीति** इति यदीति शेषपूरणम् ॥ ८१ ॥

**अखंडैकरसानंदे मायातत्कार्यवर्जिते ॥**
**अशेषत्वमशेषत्वंवार्तावसर एव कः ॥ ८२ ॥**

**रा० टीका**—ननु संख्यातिरिक्तवेदस्वरूपभेद इव स्वगतादिभेदशून्य आनंदरूपे ब्रह्मण्यज्ञायमानस्यांशस्याभावादसंपूर्णज्ञानित्वोपालंभो न घटत इति चोदयति–**अखंडैकेति**८२

**अ० टीका**—तत्रापि पूर्ववादी शंकते—**अखंडेति** ॥ ८२ ॥

**रा० टीका**—ब्रह्मज्ञानेऽप्यशेषत्वादिकं दर्शयितुं ब्रह्म जानामीति वदंतं विकल्प्य पृच्छति—

**शब्दानेव पठस्याहो तेषामर्थं च पश्यसि ॥**
**शब्दपाठेऽर्थबोधस्ते संपाद्यत्वेन शिष्यते ॥ ८३ ॥**

**शब्दानिति** । किमखंडैकरसमद्वितीयसच्चिदानंदरूपमित्यादिशब्दानेव पठस्याहोऽथ वा तेषां शब्दानामर्थं स्वगतादिभेदशून्यत्वादिकं च पश्यसि । जानासीति विकल्पार्थः । आद्ये पक्षे सावशेषत्वं दर्शयति—**शब्दपाठ इति** ॥ ८३ ॥

**अ० टीका**—तत्रापि सिद्धांत्युपहसति—**शब्दानेवेति** ॥ ८३ ॥

**रा० टीका**—द्वितीयेऽपि तद्दर्शयति—

**अर्थे व्याकरणाद्बुद्धे साक्षात्कारोऽवशिष्यते ॥**
**स्यात्कृतार्थत्वधीर्यावत्तावद्गुरुमुपास्व भोः ॥ ८४ ॥**

**अर्थ इति** । व्याकरणादित्युपलक्षणं निगमादेः । व्याकरणादिना परोक्षज्ञाने संपादितेऽपि संशयादिनिरासेनापरोक्षीकरणमवशिष्यते । तर्हि कदा संपूर्णत्वं ज्ञानस्येत्याशंक्य तदवधिं दर्शयति—**स्यादिति** । यदा कृतार्थत्वबुद्धिरुत्पद्यते तदा ज्ञानस्य संपूर्णताऽवगंतव्येत्यर्थः ८४

**अ० टीका**—अर्थस्तु व्याकरणतोऽवगम्यत एवेत्यत्राऽऽह—**अर्थ इति** । एवं तर्हि स साक्षात्कारः कथं स्यात्तत्राऽऽह—**स्यादिति** ॥ ८४ ॥

**रा० टीका**—एवं प्रासंगिकं परिसमाप्य प्रकृतमेवानुसरति—

**आस्तामेतद्यत्र यत्र सुखं स्याद्विषयैर्विना ॥**
**तत्र सर्वत्र विद्ध्येतां ब्रह्मानंदस्य वासनाम् ॥ ८५ ॥**

**आस्तामिति** । यत्र यत्र यस्मिन्यस्मिन्काले तूष्णींभावादौ विषयानुभवमंतरेण सुखं भवति तत्र तत्र सुखस्य विषयजन्यत्वाभावात्सामान्याहंकारावृतत्वाच्च वासनानंदत्वमवगंतव्यमित्यर्थः ॥ ८५ ॥

**अ० टीका**—तर्हि त्वमेव मे गुरुरित्यंतः शरणागतमिव तमिंगितैरालक्ष्यानुजिघृक्षया तं प्रति ब्रह्मानंदवासनां सामान्यतो व्युत्पादयति । **आस्तामिति** ॥ ८५ ॥

**रा० टीका**—एवं ब्रह्मानंदवासनानंदौ दर्शयित्वेदानीमानंदत्रैविध्यनियमनायाऽऽत्माभिमुखधीवृत्तावित्यत्रोक्तमेव विषयानंदं पुनरनुवदति—

**विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ॥**
**अंतर्मुखमनोवृत्तावानंदः प्रतिबिंबति ॥ ८६ ॥**

**विषयेष्वपीति** । यदा यदा स्रगादिविषयलाभात्तत्तदिच्छोपरमो भवति तदा तदा मनस्यंतर्मुखे सति तस्मिन्यः स्वात्मानंदः प्रतिबिंबितो भवत्ययं विषयानंद इत्यर्थः ॥ ८६ ॥

**अ० टीका**—एवं ब्रह्मानंदवासनानंदौ व्युत्पाद्य प्रागुक्तमप्यात्माभिमुखधीवृत्तावानंदः प्रतिबिंबतीत्यादिना विषयानंदं संख्याकरणार्थं तं पुनरनुवदति—**विषयेष्विति** । अभिलब्धेषु यथेच्छं मिलितेषु सत्स्वित्यर्थः ॥ ८६ ॥

**रा० टीका**—फलितमाह—

**ब्रह्मानंदो वासना च प्रतिबिंब इति त्रयम् ॥**
**अंतरेण जगत्यस्मिन्नानंदो नास्ति कश्चन ॥ ८७ ॥**

**ब्रह्मानंद इति** । उक्तप्रकारेण स्वप्रकाशतया सुषुप्तौ प्रतिभासमानो यो ब्रह्मानंदो यश्च तूष्णींस्थितौ विषयानुभवमंतरेण प्रतीयमानो वासनानंदो योऽप्यभीष्टविषयलाभादंतर्मुखे मनसि प्रतिबिंबितो विषयानंद एतत्त्रितयातिरेकेणास्मिञ्जगति न कश्चिदानंदोऽस्ति नन्वानंदस्त्रिविधो ब्रह्मानंदो विद्यासुखं तथा विषयानंदः । इत्यनेन प्रकारेणाऽऽनंदत्रैविध्यमुक्तमिदानीं तु ब्रह्मानंदो वासना च प्रतिबिंब इति त्रयमिति तद्विलक्षणमानंदस्य त्रैविध्यमुच्यते । अतः पूर्वोत्तरविरोधः । किं च—" यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः । तावत्तावत्सूक्ष्मदृष्टेर्निजानंदोऽनुमीयते " इति तादृक्पुमानुदासीनकालेऽप्यानंदवासनामुपेक्ष्य मुख्यमानंदं भावयत्येव तत्पर इति चोक्तप्रकारद्वयातिरिक्तौ निजानंदमुख्यानंदावभिधीयेते । तथा **द्वितीयाध्याये**—मंदप्रज्ञं तु जिज्ञासुमात्मानंदेन बोधयेदिति । आत्मानंदस्ततोऽन्योऽभिधीयते । योगानंदः पुरोक्तो य इत्यत्र योगानंदोऽपि कश्चिदवभासते । ब्रह्मानंदाभिधे ग्रंथे तृतीयाध्याय ईरितः । अद्वैतानंद एव स्यादित्यत्राद्वैतानंदं चान्यमवगच्छामः । अतः, अंतरेण जगत्यस्मिन्नानंदो नास्ति कश्चनेत्युक्तिर्विरुध्येतेति चेन्मैवम् । विद्यानंदस्य विषयानंदवदंतःकरणवृत्तिविशेषत्वेन विषयानंदेऽतर्भावस्य विषयानंदवद्विद्यानंदो धीवृत्तिरूपक इत्युत्तरत्र धीवृत्तिरूपत्वाभिधानेन विवक्षितत्वान्निजानंदमुख्यानंदात्मानंदयोगानंदाद्वैतानंदानां तु ब्रह्मानंदादनतिरिक्तत्वाच्च । तथा हि यावद्यावदहंकार इत्युदाहृतश्लोके योगलक्षणोपायगम्यतया योगानंदत्वेन विवक्षितस्य निजानंदस्यैव " न द्वैतं भासते नापि निद्रा तत्रास्ति यत्सुखम् । स ब्रह्मानंद इत्याह भगवानर्जुनं प्रति " इत्यस्मिन्नुत्तरश्लोक एव ब्रह्मानंदत्वाभिधानान्निजानंदो ब्रह्मानंदान्न भिद्यते तथा मुख्यानंदोऽपि ब्रह्मानंद एव । तथा च विषयानंदो वासनानंद इत्यमू आनंदौ जनयन्नास्ते ब्रह्मानंदः स्वयंप्रभ इत्यत्र जन्यत्वेनामुख्यभूतयोर्विषयानंदवासनानंदयोर्जनकत्वेनाभिहितस्य ब्रह्मानंदस्यैव तादृक्पुमानुदासीनकालेऽपीत्युदाहृत एव श्लोक आनंदवासनामुपेक्ष्य मुख्यमानंदं भावयत्येव । तत्पर इति मुख्यानंदत्वाभिधानादात्मानंदाद्वैतानन्दयोस्तु ब्रह्मानंदत्वम्, योगानंदः पुरोक्तो यः स आत्मानंद इष्यतामिति **तृतीयाध्यायादौ, प्रथमाध्याये** योगानंदतया विवक्षितस्य ब्रह्मानंदस्यैव योगानंदशब्देनानुवादपूर्वकमात्मानंदतामभिधाय कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेदिति प्रश्नपूर्वकमाकाशादिशरीरांतमित्यादिनाऽद्वितीयस्य ब्रह्मत्वप्रतिपादनादवगंतव्यम् । तस्माद्ब्रह्मानंदो वासना च प्रतिबिंब इत्युक्तं त्रैविध्यं सुस्थम् । ननु तर्हि—नन्वेवं वासनानंदाद्ब्रह्मानंदादपीतरम् । वेत्तु योगी निजानंदमित्यत्र निजानंदस्य ब्रह्मानंदवासनानंदाभ्यां भेदेन निर्देशो न युज्यत इति न शंकनीयम् । एकस्यैव ब्रह्मानंदस्य जगत्कारणत्वोपाधिसाहित्यराहित्यभेदेन भेदव्यपदेशोपपत्तेः । तथा हि ब्रह्मानंदनिरूपणावसरे " आनंदाद्ध्येवेमानि भूतानि जायंते " इत्यादिना जगत्कारणत्वाभिधानेन ब्रह्मानंदस्य समायत्वमवगम्यते । निर्मायस्य जगत्कारणत्वानुपपत्तेः । निजानंदनिरूपणकालेऽपि यावद्यावदहंकार इत्यादिना सकारणस्याहंकारस्य विलयप्रतिपादनान्निजानंदस्य निर्मायत्वमिति सर्वमनवद्यम् ॥ ८७ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**ब्रह्मानंद इति** । प्रतिबिंबो विषयानंद इ-

र्थः । ननु पुरा—आनंदस्त्रिविधो ब्रह्मानंदो विद्या सुखं तथा । विषयानंद इति त्रैविध्यम-यधायि । तथा " यावद्यावदहंकारो विस्मृतोभ्यासयोगतः । तावत्तावत्सूक्ष्मदृष्टेर्निजानंदो-मीयते " इति "तादृक्पुमानुदासीनकालेऽप्यानंदवासनाम् । उपेक्ष्य मुख्यमानंदं भावयत्येव त्परः " इति निजानंदमुख्यानंदद्वयमपि । एवं द्वितीयाध्याये—" मंदप्रज्ञं तु जिज्ञासुमा-मानंदेन बोधयेत् " इत्यात्मानंदश्च । योगानंदः पुरोक्तो य इति योगानंदोऽपि । "ब्रह्मानंदा-भिधे ग्रंथे तृतीयाध्याय ईरितः । अद्वैतानंद एव स्यात्" इत्यद्वैतानंदोऽपि । एवं चाद्वैता-नंदांतोऽष्टमूर्तिरानंदो निरुक्तवासनानंदेन सह दुवितारोऽपि(?) प्रतीयते तत्कथमुच्यते ब्रह्मानंदो वासना च प्रतिबिंब इति त्रयम् । अंतरेण जगत्यस्मिन्नानंदो नास्ति कश्चनेति चेन्न । तात्पर्या-नवबोधात् । तथाहि—विषयानंदवद्विद्यानंदो धीवृत्तिरूपक इत्युत्तरग्रंथाद्विषयानंदविद्यानंदयोः संस्कारविशेषात्मकस्य वासनानंदस्य च कार्यत्वं निर्विवादमेव । निजानंदमुख्यानंदात्मानंदयो-गानंदाद्वैतानंदानां तु पंचानामपि विषयानंदादित्रितयनिरूपितकारणत्वोपलक्षिताद्ब्रह्मानंदादभि-न्नत्वमेव । यावद्यावदहंकार इत्युदाहृतश्लोके हि निजानंद एव योगोपायगम्यत्वेन योगानंद-स्तस्य च तदुत्तरश्लोके—" न द्वैतं भासते नापि निद्रा तत्रास्ति यत्सुखम् । स ब्रह्मानंद इ-त्याह भगवानर्जुनं प्रति " इत्यत्र योगानंदनिजानंदयोर्ब्रह्मानंदत्वोक्तेः । " तथा च विषयानंदो वासनानंद इत्ययम् । आनंदौ जनयन्नास्ते ब्रह्मानंदः स्वयंप्रभः" इत्यग्र एव जन्यत्वेनामुख्यी-भूतविषयानंदवासनानंदापेक्षया " तादृक्पुमानुदासीनकालेऽप्यानंदवासनाम् । उपेक्ष्य मुख्यमा-नंदं भावयत्येव तत्परः" इत्यत्रोक्तस्य कारणत्वेन मुख्यस्याऽऽनंदस्यापि ब्रह्मानंदत्वसिद्धेः । एवं योगानंदः पुरोक्तो यः स आत्मानंद इष्यतामिति तृतीयाध्याये प्रथमाध्यायोक्तयोगानं-दस्यैवाऽऽत्मानंदत्वमुक्त्वा कथं ब्रह्मत्वमेतस्य सद्वयस्येति प्रश्नपूर्वकमाकाशादिशरीरांतमि-त्यादिना द्वैतस्य सत्तानतिरेकेण सन्मात्रत्वेनाऽऽत्मानंदाद्वैतानंदयोरप्यर्थाद्ब्रह्मानंदत्वलब्धेश्च । न चाथापि नन्वेवं वासनानंदाद्ब्रह्मानंदादपीतरम् । वेत्ति योगी निजानंदमिति निजानंदस्य ब्र-ह्मानंदाद्भिन्नत्वमुक्तं विरुध्येतेति सांप्रतम् । ब्रह्मानंदस्य कारणत्वेन समायत्वान्निजानंदस्य तु निर्मायत्वाच्च । तदेवं कार्यकारणादिभावभेदेनोक्तमानंदत्रैविध्यं व्यावहारिकम् । वस्तुतस्त्वद्वय एव ब्रह्मानंदः पारमार्थिक इति दिक् ॥ ८७ ॥

**रा० टीका**—नन्वस्मिन्नध्याये ब्रह्मानंदविवेचनस्यैव प्रस्तुतत्वादितरानंदद्वयप्रतिपा-दनं प्रकृतासंगतमित्याशंक्य तयोर्ब्रह्मानंदजन्यत्वेन तद्बोधोपयोगित्वान्न प्रकृतासंगतमित्यभि-प्रायेणाऽऽह—

**तथा च विषयानंदो वासनानंद इत्ययम् ॥**
**आनंदौ जनयन्नास्ते ब्रह्मानंदः स्वयंप्रभः ॥ ८८ ॥**

**तथेति** । तथा चैवमानंदत्रैविध्ये सति यः स्वयंप्रकाश आनंदो विषयानंदवासनानंदौ जनयति स ब्रह्मानंदो वेदितव्य इत्यर्थः ॥ ८८ ॥

**अ० टीका**—अत एव—**तथा चेति** ॥ ८८ ॥

**रा० टीका**—वृत्तानुसंकीर्तनपूर्वकमुत्तरग्रंथमवतारयति—

**श्रुतियुक्त्यनुभूतिभ्यः स्वप्रकाशचिदात्मके ॥**
**ब्रह्मानंदे सुप्तिकाले सिद्धे सत्यन्यदा शृणु ॥ ८९ ॥**

श्रुतीति । श्रुतिभिः " सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति " इत्यादिभिरुदाहृताभिर्युक्तिभिः सुखमहमस्वाप्समित्यादिपरामर्शान्यथानुपपत्त्यादिभिरनुभूत्या चार्थापत्तिकल्पितेन सुषुप्त्यनुभवेन च सुषुप्तिकाले स्वप्रकाशो ब्रह्मानंदः साधितः । इतःपरमन्यदा जागरणावस्थायामपि यो ब्रह्मानंदावगमोपायो वक्ष्यते तं शृण्वित्यर्थः ॥ ८९ ॥

**अ० टीका**—अथोक्तानुवादपूर्वकमवस्थांतरेऽपि ब्रह्मानंदकथनं प्रतिजानीते—श्रुतीति ॥ ८९ ॥

**रा० टीका**—प्रतिज्ञातमेव ब्रह्मानंदावगमोपायं दर्शयितुं तदुपोद्घातत्वेन सनिमित्तां जीवस्यावस्थाद्वयप्राप्तिं दर्शयति—

**य आनंदमयः सुप्तौ सविज्ञानमयात्मताम् ॥**
**गत्वा स्वप्नं प्रबोधं वा प्राप्नोति स्थानभेदतः ॥ ९० ॥**

य इति । सुप्तौ सुषुप्तिकाले विलीनावस्थ आनंदमयशब्देन कथ्यत इत्युक्तो य आनंदमयः स विज्ञानशब्दाभिधेयबुद्ध्युपाधिमत्त्वेन विज्ञानमयतां प्राप्य स्थानभेदतो वक्ष्यमाणस्थानविशेषयोगेन स्वप्नं जागरणं वा कर्मानुसारेण गच्छति ॥ ९० ॥

**अ० टीका**—तदेवाह—य इति ॥ ९० ॥

**रा० टीका**—इदानीं जाग्रदाद्यवस्थोपयोगीनि स्थानानि दर्शयति—

**नेत्रे जागरणं कंठे स्वप्नः सुप्तिर्हृदंबुजे ॥**
**आपादमस्तकं देहं व्याप्य जागर्ति चेतनः ॥ ९१ ॥**

नेत्र इति । नेत्रशब्दस्य कृत्स्नदेहोपलक्षणपरतामभिप्रेत्य नेत्रे जागरणमित्यंशस्यार्थमाह—आपादेति । चेतनो जीवः ॥ ९१ ॥

**अ० टीका**—स्थानान्याह—नेत्रे इति ॥ ९१ ॥

**रा० टीका**—देहं व्याप्येत्यनेन विवक्षितमर्थं दृष्टांतप्रदर्शनेन स्पष्टयति—

**देहतादात्म्यमापन्नस्तप्तायःपिंडवत्ततः ॥**
**अहं मनुष्य इत्येवं निश्चित्यैवावतिष्ठते ॥ ९२ ॥**

देहतादात्म्यमिति । तत्र प्रमाणमाह—तत इति । यतो मनुष्यत्वादिजातिमता देहेन तादात्म्यं प्राप्तस्ततोऽहं मनुष्य इत्येवं निश्चित्य संशयादिरहितज्ञानेन गृहीत्वैवावतिष्ठते॥९२॥

**अ० टीका**—तत्प्रकारमाह—देहेति ॥ ९२ ॥

**रा० टीका**—देहतादात्म्याभिमानहेतुकान्येवावस्थांतराणि दर्शयति—

**उदासीनः सुखी दुःखीत्यवस्थात्रयमेत्यसौ ॥**
**सुखदुःखे कर्मकार्ये त्वौदासीन्यं स्वभावतः ॥ ९३ ॥**

उदासीन इति । तत्र सुखित्वदुःखित्वयोः कर्मजन्यत्वज्ञानाय विशेषणभूतयोः सुखदुःखयोस्तद्धेतुकत्वं दर्शयति—सुखेति ॥ ९३ ॥

**अ० टीका**—अथस्वप्नजागरयोरपि प्रातिभासिकव्यावहारिकदेहतादात्म्यादवांतरमवस्थात्रयं कथयति—उदासीन इति । तत्फलमाह—सुखेति ॥ ९३ ॥

**रा० टीका**—तयोश्च सुखदुःखयोर्निमित्तभेदाद्द्वैविध्यमाह—

**बाह्यभोगान्मनोराज्यात्सुखदुःखे द्विधा मते ॥**
**सुखदुःखांतरालेषु भवेत्तूष्णीमवस्थितिः ॥ ९४ ॥**

**बाह्येति** । तर्ह्यौदासीन्यं कदा स्यादित्यत आह—**सुखेति** । व्यक्तिभेदविवक्षया बहुवचनम् ॥ ९४ ॥

**अ० टीका—**निरुक्तसुखाद्योरपि पुनर्द्वैविध्यमाह—**बाह्येति** । तत्प्रयोजनमाह—**सुखेति** ॥ ९४ ॥

**रा० टीका**—यदर्थं जाग्रदाद्युपन्यस्तं तदिदानीं दर्शयति—

**न काऽपि चिंता मेऽस्त्यद्य सुखमास इति ब्रुवन् ॥**
**औदासीन्ये निजानंदभानं वक्त्यखिलो जनः ॥ ९५ ॥**

**न काऽपीति** । सर्वोऽपि जन इदानीं मम काऽपि चिंता गृहादिविषया नास्ति, अतः सुखं यथा भवति तथा तिष्ठामीति वदन्नौदासीन्यकाले स्वरूपानंदस्फूर्तिं ब्रूतेऽतो जागरणावस्थायामपि निजानंदभानमस्तीत्यवगंतव्यमित्यभिप्रायः ॥ ९५ ॥

**अ० टीका**—ततः किं तदाह—**न काऽपीति** । अखिलपदेन नैवात्र विवादावसर इति सूचितम् ॥ ९५ ॥

**रा० टीका**—नन्वौदासीन्येऽवभासमानस्य निजानंदत्वे तस्य ब्रह्मानंदत्वात्पूर्वोक्ता वासनानंदता न स्यादित्याशंक्याहंकारसामान्यावृतत्वान्न ब्रह्मानंदतेति परिहरति—

**अहमस्मीत्यहंकारसामान्याच्छादितत्वतः ॥**
**निजानंदो न मुख्योऽयं किं त्वसौ तस्य वासना ॥ ९६ ॥**

**अहमस्मीति** । देवदत्तोऽहमित्यादिविशेषशून्येनाहमस्मीत्येवंरूपेणाहंकारसामान्येनावृतत्वान्नायं मुख्य इत्यर्थः । तर्हि तस्य किंरूपतेत्यत आह—**किं त्वसाविति** ॥ ९६ ॥

**अ० टीका**—नन्वेवमौदासीन्यकाले यदि निजानंदः स्फुरति चेत्तर्हि स तु प्रागुक्तरीत्या ब्रह्मानंद एव । तथा च—" किंचित्कालं प्रबुद्धस्य ब्रह्मानंदस्य वासना । अनुगच्छेद्यतस्तूष्णीमास्ते निर्विषयः सुखी " इति प्रागुक्तोदासीनकालावच्छेदेनावभासमानसुखरूपस्य तस्य वासनानंदता न स्यादित्यत्राऽऽह—**अहमस्मीति** ॥ ९६ ॥

**रा० टीका**—मुख्यानंदातिरिक्तवासनानंदसद्भावे दृष्टांतः—

**नीरपूरितभांडस्य बाह्ये शैत्यं न तज्जलम् ॥**
**किं तु नीरगुणस्तेन नीरसत्ताऽनुमीयते ॥ ९७ ॥**

**नीरेति** । जलपूर्णकुंभस्य बहिर्भागस्पर्शेनेनोपलभ्यमानं यच्छैत्यमस्ति तत्तावज्जलं न भवति द्रवत्वानुपलंभात् । किं तर्हि तदित्यत आह—**किं त्विति** । नीरगुणत्वं कथमवगम्यत इत्यत आह—**तेनेति** । विमतं घट उपलभ्यमानं शैत्यं जलजन्यं भवितुमर्हति शैत्यत्वाज्जल उपलभ्यमानशैत्यवदिति ॥ ९७ ॥

**अ० टीका**—तत्र दृष्टांतमाह—**नीरेति** ॥ ९७ ॥

**रा० टीका**—भवत्वेवं नीरानुमापकत्वं शैत्यस्य प्रकृते किमायातमित्याशंक्य तद्वद्वासनानंदस्यापि मुख्यानंदानुमापकत्वमायातमित्याह—

**यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः ॥**
**तावत्तावत्सूक्ष्मदृष्टेर्निजानंदोऽनुमीयते ॥ ९८ ॥**

**यावदिति ।** अभ्यासयोगतो ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छांत आत्मनीति **श्रुत्य**भिहितनिरोधसमाध्यभ्यासयोगेन यावद्यावदहमादिवृत्तिविलयवशाच्चित्तस्य सूक्ष्मता जायते तावत्तावन्निजानंदाभिव्यक्तिर्भवतीत्यनुमीयते । अयमत्र प्रयोगः । अहंकारसंकोचविशेषविशिष्टक्षणेषु द्वितीयादिक्षणः पक्षः स पूर्वस्मात्क्षणादधिकनिजानंदाविर्भाववानहंकारसंकोचविशेषयुक्तकालत्वादहंकारसंकोचयुक्ताद्यक्षणवदिति ॥ ९८ ॥

**अ० टीका**—दार्ष्टांतिकमाह—**यावद्यावदिति** । **अभ्यासेति** । " लीने पूर्वविकल्पे तु यावदन्यस्य नोदयः । निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते । एवं द्वित्रिक्षणेष्वेव विकल्पस्य निरोधनम् । क्रमेणाभ्यस्यतां नित्यं ब्रह्मानुभवकांक्षिभिः " इति **लघुवाक्यवृत्ति**विहितास्यासयोगाद्धेतोरित्यर्थः । अत्रायं प्रयोगः । अहंकारलयविशिष्टक्षणेषु मध्ये द्वितीयादिक्षणः पक्षः । पूर्वाधिकसुखवान् । अहंकारलयविशिष्टकालत्वात् । तद्विशिष्टाद्यक्षणवदिति।९८।

**रा० टीका**—बुद्धिसौक्ष्म्यस्य कोऽवधिरित्याकांक्षायां साक्षात्कारोऽवधिरित्याह—

**सर्वात्मना विस्मृतः सन्सूक्ष्मतां परमां व्रजेत् ॥**
**अलीनत्वान्न निद्रैषा ततो देहोऽपि नो पतेत् ॥ ९९ ॥**

**सर्वेति ।** तर्हि सा निद्रैव स्यादित्यत आह—**अलीनेति** । सर्ववृत्तिविलयेऽप्यंतःकरणस्वरूपविलयाभावान्नेयं निद्रा बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिरित्याचार्यैरुक्तत्वादित्यर्थः । अंतःकरणस्वरूपविलयाभावे लिंगमाह—**तत इति ।** यत्र सुषुप्त्यादावहंकारविलयस्तत्र देहपातो दृष्ट इह तु तदभावादविलीन इति गम्यते ॥ ९९ ॥

**अ० टीका**—ततः किं तदाह—**सर्वेति** । ननु तथा चेन्निद्रा स्यान्नेत्याह—**अलीनत्वादिति** । मनस इति शेषः । अत एवाऽऽहुः—"लीयते हि सुषुप्तौ तन्निगृहीतं न लीयते " इति । तत्र लिंगमप्याह—**तत इति** ॥ ९९ ॥

**रा० टीका**—फलितमाह—

**न द्वैतं भासते वाऽपि निद्रा तत्रास्ति यत्सुखम् ॥**
**स ब्रह्मानंद इत्याह भगवानर्जुनं प्रति ॥ १०० ॥**

**न द्वैतमिति ।** यस्मिन्काले द्वैतभानं नास्ति निद्राऽपि नाऽऽगच्छति तस्मिन्काल उपलभ्यमानं यत्सुखमस्ति स ब्रह्मानंद इत्यर्थः । अयं ब्रह्मानंद इति कुतोऽवगतमित्याशंक्य कृष्णवाक्यादित्याह—**इतीति । गीतायां षष्ठाध्याय** इति शेषः ॥ १०० ॥

**अ० टी०**—किमेतावता प्रकृते ब्रह्मानंदविचार इत्यत आह—**न द्वैतमिति**॥१००॥

**रा० टीका**—तत्र कैः श्लोकैरुक्तवानित्याशंक्य ताञ्श्लोकान्पठत्यर्थक्रमानुसारेण—

**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ॥**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥ १०१ ॥**

**शनैरिति ।** अयमर्थः । धृतिगृहीतया धैर्ययुक्तया बुद्ध्या साधनभूतया शनैर्नै सहसोपरमेन्मन उपरतिं कुर्यात् । कियत्पर्यंतमित्यत आह—**आत्मेति ।** मन आत्मसंस्थ-

ात्मनि संस्था सम्यक्स्थितिरात्मैवेदं सर्वं न ततोऽन्यत्किंचिदस्तीत्येवंरूपा यस्य तदात्मसंस्थं थाविधं कृत्वा किंचिदपि न चिंतयेदेष योगस्य परमोऽवधिः ॥ १ ॥

**अ० टीका**—कैर्वाक्यैरित्यपेक्षायां तान्येव पठति—**शनैः शनैरित्यादिना**। एतेन यमनियमासनप्राणायामाः क्रमात्प्रोच्यंते ॥ १०१ ॥

**रा० टीका**—एतत्संपादने प्रवृत्तो योगी प्रथमं किं कुर्यादित्यत आह—

**यतो यतो निश्चरति मनश्चंचलमस्थिरम् ॥**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २ ॥**

**यत इति**। चंचलं स्वभावदोषादत एवास्थिरमेकत्र विषयेऽनियतमेवंविधं मनो यदा यदा यतो यतो यस्माद्यस्माच्छब्दादेर्निमित्तान्निश्चरति निर्गच्छति ततस्ततस्तस्मात्तस्माच्छब्दादेः सकाशान्नियम्य तेषां शब्दादीनां मिथ्यात्वादिदोषदर्शनेनाभासीकृत्य वैराग्यभावनापूर्वकं निरुद्ध्यैतन्मन आत्मन्येव वशं नयेदात्मवश्यतामापादयेत्। एवं योगमभ्यसतोऽभ्यासबलादात्मन्येव मनः प्रशाम्यति ॥ २ ॥

**अ० टीका**—अथ प्रत्याहारमाह—**यतो यत इति**। सरलमेवापरम् ॥ १०२ ॥

**रा० टीका**—मनःप्रशांतौ किं भवतीत्यत आह—

**प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ॥**
**उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥ ३ ॥**

**प्रशांतेति**। शांतरजसं प्रक्षीणमोहादिक्लेशरजसमत एव प्रशांतमनसं प्रकर्षेणात्यर्थं शांतं विक्षेपशून्यं मनो यस्य तं ब्रह्मभूतं ब्रह्मैवेदं सर्वमिति निश्चयवत्तया जीवन्मुक्तमकल्मषमधर्मादिवर्जितमेनं योगिन उत्तमं क्षयित्वसातिशयित्वादिदोषरहितं सुखमुपैति, उपगच्छति ॥३॥

**अ० टीका**—अथ संयमाख्यं क्रमप्राप्तमंतरंगं धारणाध्यानसमाध्याख्यं योगांगत्रयं तत्फलं प्रकृतप्रकरणे **शतश्लोक्यंतोक्तेन भगवद्गीतायामु**क्तश्लोकावधिनिरूपितेन ब्रह्मात्मैक्यविचारेण साकमेवानुष्ठितत्वादखिलप्रतिबंधक्षयाद्धारणादित्रयानुष्ठानकाले चिंतितादहं ब्रह्मास्मि ब्रह्माहमस्मीति च **महावाक्यादेव** संजातापरोक्षज्ञानेनैवाज्ञानध्वस्तौ सत्यां जीवन्मुक्तिलक्षणमसंप्रज्ञातापराभिधनिर्विकल्पसमाधिसंज्ञमप्यभिधत्ते—**प्रशांतेति**। एवं प्रत्याहारांतयोगांगपंचकानुष्ठानेन प्रकृष्टशमशालिमानसमित्यर्थः। एतादृशमत एव **शांतेति**। शांतं रजो रजोगुणकार्यीभूतब्रह्मलोकांतयावद्दिष्टशब्दादिविषयविषयलोभवृंदं ब्रह्मरंध्रादिदेशावच्छेदेनोक्तवाक्यार्थचिंतनलक्षणधारणया यस्य स तथा तमित्यर्थः। अत एव " अकल्मषं प्राणायामैर्देहेदेनो धारणाभिश्च किल्बिषम्" इति**वचनादु**क्तरूपधारणया निरस्तकलुषत्वादेव ब्रह्मात्मैक्यभावनसातत्यशालिनमिति यावत्। एतेन ध्यानं ध्वन्यते। हिरवधारणे। निरुक्तविशेषणद्वयविशिष्टं योगिनमेव युंजसमाधाविति स्मरणात्समाहितं ब्रह्मात्मैक्यविषयकचित्तैकाग्र्यवंतमेव। एनं साधकं प्रति। उत्तमं " उत्तमः पुरुषस्त्वन्यः " इति **स्मृते**र्विषयादिसुखविलक्षणत्वेन निरतिशयम्। अत एव ब्रह्मभूतं ब्रह्मरूपम्। एतादृशं सुखमद्वैतात्मसुखमित्यर्थः। **एतेनोन्मन्यवस्था** व्यज्यते। उपैत्याविर्भवतीति संबंधः ॥ १०३ ॥

**रा० टीका**—संगृहीतार्थप्रपंचनपरान्तदीयानेव श्लोकान्पठति—

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥**
**यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ ४ ॥**

**यत्रेति ।** चित्तं यत्र यस्मिन्काले योगसेवया योगानुष्ठानेन सर्वस्माद्विषयान्निवारितं सदुपरमत उपरतिं गच्छति । किं च यत्र यस्मिन्काल आत्मना समाधिपरिशुद्धेनांतःकरणेनाऽऽत्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन्नुपलभ्यमानः स्वस्मिन्नेव तुष्यति तुष्टिं भजते न विषयेष्वित्यर्थः ॥ ४ ॥

**अ० टीका**—अत एवायं योगस्तत्र प्रागेव **भगवता** महाफलत्वेनोपन्यस्त इति द्योतयितुं तच्छ्लोकचतुष्टयं पठति—**यत्रोपरमत इत्यादिना ।** अत्र कालापकं चतुर्भिः स्यादितिवचनाद्यत्रेत्यादित्रिश्लोकीगतषण्णामपि यच्छब्दानां चतुर्थश्लोकगतेन तं विद्यादितितच्छब्देनान्वयः । योगसेवया योगाभ्यासेन । उपरमते शाम्यति । आत्मनैवोपरतेन चित्तेनैव । आत्मानमद्वैतपरमात्मानमेव । पश्यन्नहं ब्रह्मास्मीति साक्षात्कुर्वन्कूटस्थ इत्यार्थिकम् । आत्मनि निरुक्तस्वस्वरूपविषये ॥ १०४ ॥

**सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ॥**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ १०५ ॥**

**रा० टीका**—किं च यत्र यस्मिन्काल आत्मनि स्थितोऽयं योगी, आत्यंतिकमत्यंतमेव भवतीत्यात्यंतिकमनंतं बुद्धिग्राह्यमिन्द्रियनिरपेक्षया बुद्ध्या गृह्यमाणमतींद्रियमिन्द्रियगोचरातीतमविषयजनितं यत्तदीदृशं सुखं वेत्त्यनुभवति । किं च । आत्मनि स्थितोऽयं तत्त्वतस्तस्मादात्मस्वरूपान्न चलति न प्रच्यवते ॥ १०५ ॥

**अ० टीका**—**सुखमिति । तदिति ।** तद्बुद्ध्या शोधिततत्पदार्थविषयकप्रमयैव ग्रहीतुं शक्यत इति । यत्र च स्थितोऽयमधिकारी तत्त्वतो नैव चलतीति संबंधः ॥ १०५ ॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ॥**
**यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ ६ ॥**

**रा० टीका**—किं च यमात्मानं लब्ध्वा प्राप्य परं लाभं लाभांतरं ततोऽधिकं न मन्यते "आत्मलाभान्न परं विद्यते" इति **स्मृतेः ।** किं च यस्मिन्नात्मतत्त्वे स्थितो गुरुणा महताऽपि दुःखेन शस्त्राभिघातादिलक्षणेन प्रन्हाद इव न विचाल्यते ॥ ६ ॥

**अ० टीका**—**यं लब्ध्वेति ।** गुरुणाऽपि दुःखेन मांडव्यादिवच्छूलारोपणजन्यप्राणांतदुःखेनापीत्यर्थः ॥ १०६ ॥

**रा० टीका**—इदानीमुपपादितं योगं निगमयति—

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ ७ ॥**

**तं विद्यादिति ।** शनैः शनैरित्यादिना यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो **यो योग** उक्तस्तं दुःखसंयोगवियोगं दुःखैः संयोगो दुःखसंयोगस्तेन वियोगस्तं विपरीतलक्षणया योगसंज्ञितं योग इत्येवं संज्ञा यस्येति तं योगसंज्ञितं विद्याज्जानीयात् । एवंविधयोगानुष्ठाने किंचित्कर्तव्यताविशेषमाह—**स निश्चयेनेति ।** स पूर्वोक्तो योगो निश्चयेनाध्यवसायेनानिर्विण्णचेतसा निर्वेदरहितेन चित्तेन योक्तव्योऽनुष्ठेयः ॥ ७ ॥

**अ० टीका**—**तमिति । दुःखेति** । दुःखसंबंधविधुरमिति यावत् । अनिर्विण्णेति च्छेदः । आदरातिशयवतेत्यर्थः ॥ १०७ ॥

**रा० टीका**—इदानीमुक्तमर्थमुपसंहरति—

**युंजन्नेवं सदात्मानं योगी विगतकल्मषः ॥**
**सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥ ८ ॥**

**युंजन्निति ।** विगतकल्मषो विगतपापो योगांतरायवर्जितो योगी सदात्मानमेवं यथोक्तेन प्रकारेण युंजन्ननुसंदधानः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा संस्पर्शो यस्य सुखस्य तद्ब्रह्मसंस्पर्शं ब्रह्मस्वरूपभूतमिति यावत् । अत्यंतमविनश्वरं निरतिशयं सुखमश्नुते प्राप्नोतीत्यर्थः ॥८

**अ० टीका**—उपसंहरति—**युंजन्निति** । तत्फलमाह—**सुखेनेति । ब्रह्मेति ।** अद्वैतैक्यविषयरूपम् ॥ १०८ ॥

**रा० टीका**—अनिर्वेदेन क्रियमाणो योगाभ्यासः फलपर्यंतो भवतीत्येतत्सदृष्टांतमाह—

**उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिंदुना ॥**
**मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ९ ॥**

**उत्सेक इति ।** कुशाग्रेणोद्धृतेनैकेन बिंदुना क्रियमाण उदधेरुत्सेकः । उद्धृत्य बहिः सेचनं परिखेदाभावे सति यद्वत्कालांतरे भवेदेव तद्वन्मनसो निग्रहोऽपि श्रमराहित्येन क्रियमाणः कालांतरे सिद्ध्येत । इदं च **टिट्टिभोपाख्यानं** मनसि निधायोक्तम् ॥ ९ ॥

**अ० टीका**—नन्वेवमपि सनिश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसेत्यत्र त्वया यथा श्रुते विरक्तचेतसेति प्रकृतानुकूलेऽर्थे संभवति सत्यप्यनिर्विण्णचेतसाऽऽदरातिशयवतेत्यर्थोऽयं किमिति क्रियते ह्यकारप्रश्लेषं विधायेति चेत्सांप्रदायिकसंमतत्वाद्दीर्घकालनैरंतर्यसत्कारसेवितो दृढभूमिरिति सूत्राशयाच्च सूचयन्**गौडपादाचार्य**वचनमेवाऽऽदरातिशयांशे समुदाहरति—**उत्सेक इति** । उदधेः समुद्रस्य । कुशाग्रेणैकबिंदुना यद्वत्कालेन लोकप्रसिद्ध**टिट्टिभोपाख्यान**न्यायेन नैहिक एव । **अपरीति** । तदसिद्धिखेदाभावेनैवाभूदेव तद्वन्मनसोऽपि निग्रहो भवेदेवेत्यन्वयः ॥ १०९ ॥

**रा० टीका**—न केवलमयमर्थो **गीतायामभिहितः** किं तु मैत्रायणीयशाखायामपीत्याह—

**बृहद्रथस्य राजर्षेः शाकायन्यो मुनिः सुखम् ॥**
**प्राह मैत्राख्यशाखायां समाध्युक्तिपुरःसरम् ॥ ११० ॥**

**बृहद्रथस्येति ।** मैत्रायणीयनामके यजुःशाखाभेदे शाकायन्यनामा कश्चिदृषिः स्वशिष्यत्वेनोपपन्नस्य बृहद्रथाख्यस्य राजर्षेर्ब्रह्मसुखं समाध्यभिधानपूर्वकं यथा भवति तथोक्तवान् ॥ ११० ॥

**अ० टीका**—अथोक्तयोगे **मैत्रायणीय**श्रुतीरप्युदाहरिष्यंस्तत्रत्यं संवादमवतारयति—**बृहद्रथस्येति** ॥ ११० ॥

**रा० टीका**—केन प्रकारेणोक्तवानित्याशंक्य तत्प्रतिपादकांस्तदीयान्मंत्रान्पठति—

**यथा निरिंधनो वह्निः स्वयोनावुपशाम्यति ॥**
**तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ ११ ॥**

**यथेति ।** निरिंधनो दग्धकाष्ठो वह्निः स्वयोनौ स्वकारणे तेजोमात्र उपशाम्यति ज्वालादिरूपं विशेषाकारं परित्यज्य तेजोमात्ररूपे यथाऽवतिष्ठते तथा तेनैव प्रकारेण चित्तमंतःकरणमपि वृत्तिक्षयान्निरोधसमाध्यभ्यासेन राजसादिसकलवृत्तिनाशात्स्वकारणे सत्त्वमात्र उपशाम्यति सत्त्वमात्रावशेषं भवतीत्यर्थः । ११ ॥

**अ० टीका**—ता एव पठति—**यथेति ।** स्वयोनौ स्वकारणे सूक्ष्मतेजसि । स्वयोनौ स्वकारणेऽपंचीकृतपंचमहाभूतसत्त्वप्रधानांशपंचक इत्यर्थः ॥ ११ ॥

**रा० टीका—**ततः किमत आह—

**स्वयोनावुपशांतस्य मनसः सत्यकामिनः ॥**
**इंद्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥ १२ ॥**

**स्वयोनाविति ।** सत्य आत्मनि विषये कामोऽस्यास्तीति सत्यकामी तस्यात एव स्वयोनावुपशांतस्योपशांतत्वादेवेंद्रियार्थविमूढस्येंद्रियार्थेषु विषयेषु शब्दादिषु विमूढस्य विमुखस्य ज्ञानशून्यस्य मनसः कर्मवशमनुगच्छंतीति कर्मवशानुगाः ससाधनाः सुखादयोऽनृता मायिकत्वज्ञानेन मिथ्याभूताः स्युरित्यर्थः ॥ १२ ॥

**अ० टीका**—ततः किं तदाह—**स्वेति । सत्येति ।** कालत्रयाबाध्यब्रह्मात्मप्राप्तिविषयकोत्कंठाशालिन इत्यर्थः । एतादृशस्य मनसः स्वयोनावुपशांतस्य सत इति यावत् । अत एव । **इंद्रियेति ।** इंद्रियैरर्थ्यमानशब्दादिज्ञानहीनस्येत्येतत् । अत एव । संस्कारतः कदाचिद्व्युत्थितस्यापि सतः । **कर्मेति ।** कर्मवशं जीवमनुगच्छंत्येतादृशाः समाधानसुखादय इत्यर्थः । अनृताः स्वाविद्याकल्पितत्वेन मिथ्या भवंतीति योजना ॥ १२ ॥

**रा० टीका—**ननु चित्तोपशान्तौ जगन्मिथ्या भवतीत्येतदनुपपन्नं तदुपादानकत्वाभावात्तस्येत्याशंक्याऽऽह—

**चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ॥**
**यच्चित्तस्तन्मयो मर्त्यो गुह्यमेतत्सनातनम् ॥ १३ ॥**

**चित्तमेवेति ।** यद्यपि स्वरूपेण चित्तोपादानकं जगन्न भवति तथाऽपि तस्य योग्यत्वं चित्तकारणमेव हि शब्देनात्र सर्वानुभवं प्रमाणयति सुषुप्त्यादौ चित्तविलये भोगादर्शनादिति भावः । यतश्चित्तात्मकः संसारोऽतस्तच्चित्तमेव प्रयत्नेनाभ्यासवैराग्यादिलक्षणेन शोधयेद्रजस्तमोराहित्येनैकाग्रं कुर्यात् । नन्वात्मनो विमुक्तय आत्मैव शोधनीयो न चित्तमित्याशंक्याऽऽह—**यच्चित्त इति** । मर्त्य इत्युपलक्षणं देहिमात्रस्य । यो देही यच्चित्तो यस्मिन्पुत्रादौ विषये चित्तवान्भवति स तन्मयस्तदात्मक एव तत्साकल्यवैकल्ययोरात्मन्येव समारोपणादेतत्सनातनमिदमनादिसिद्धं गुह्यं रहस्यम् । एतदुक्तं भवति । स्वभावतः शुद्धस्याऽऽत्मनो यतश्चित्तसंपर्कादेव संसारित्वं " ध्यायतीव लेलायतीव " इतिश्रुतेः । अतश्चित्तस्य शोधनेनाऽऽत्मनः संसारनिवृत्तिरिति ॥ १३ ॥

**अ० टीका**—तत्र हेतुः—**चित्तमेवेति ।** दृष्टिसृष्ट्यभिप्रायेणैवेदम् ॥ १३ ॥

**रा० टीका**—नन्वनादिभवपरंपरोपार्जितसुखदुःखप्रदपुण्यपापकर्मणोः सतोश्चित्तशोधनेनापि कथमात्मनः संसारनिवृत्तिर्भविष्यतीत्याशंक्य चित्तप्रसादोपलक्षितब्रह्मानुसंधानेन सकलकर्मक्षयोपपत्तेर्मैवमिति परिहरति—

**चित्तस्य हि प्रसादेन हंति कर्म शुभाशुभम् ॥**
**प्रसन्नात्मात्मनि स्थित्वा सुखमक्षय्यमश्नुते ॥ ११४ ॥**

**चित्तस्येति** । हिशब्देन " तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयंते " " उपपातकेषु सर्वेषु पातकेषु महत्सु च प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् " इत्यादिश्रुतिस्मृतिप्रसिद्धिं द्योतयति । ततः किमित्यत आह—**प्रसन्नेति** । प्रसन्न आत्मा चेतो यस्य स तथोक्तः । आत्मनि स्वस्वरूपभूतेऽद्वितीयानंदलक्षणे ब्रह्मणि स्थित्वा तदेवाहमिति निश्चयेन दृश्यजातं परिहृत्य चिन्मात्ररूपेणावस्थायाक्षय्यमविनाशि यत्सुखं स्वरूपभूतं तदश्नुते ॥ १४ ॥

**अ० टीका**—अत एव । **चित्तस्य हीति** । हिरवधारणे । प्रसादेन तत्त्वज्ञानरूपपरमविमलपरिणामेनेत्यर्थः ॥ १४ ॥

**रा० टीका**—प्रसन्नात्माऽऽत्मनि स्थित्वेत्युक्तमेवार्थं दृष्टांतोक्तिपुरःसरं द्रढयति—

**समासक्तं यथा चित्तं जंतोर्विषयगोचरे ॥**
**यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बंधनात् ॥ ११५ ॥**

**समासक्तमिति** । प्राणिनश्चित्तं विषय एव गोचर इंद्रियप्रचारभूमिस्तस्मिन्यथा स्वभावतः सम्यगासक्तं भवति तदेव चित्तं ब्रह्मणि प्रत्यगभिन्ने परमात्मनि यद्येवमासक्तं स्यात्तर्हि कः संसारान्न मुच्येत सर्वोऽपि मुच्येतैवेत्यर्थः ॥ ११५ ॥

**अ० टीका**—को वाऽत्र प्रसादेऽस्त्युपाय इत्यत आह—**समासक्तमिति** । **विषयेति** । बंधके विषये ॥ ११५ ॥

**रा० टीका**—उक्तार्थदार्ढ्याय मनसोऽवांतरभेदमाह—

**मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ॥**
**अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम् ॥ ११६ ॥**

**मन इति** । तत्र कारणमाह—**अशुद्धमिति** । काम इत्युपलक्षणं क्रोधादेरपि ॥ ११६ ॥

**अ० टीका**—तत्रापि हेतुः—**मनो हीति** ॥ १६ ॥

**मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥**
**बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ ११७ ॥**

**रा० टीका**—द्विविधस्य तस्यैव क्रमेण संसारमोक्षयोर्हेतुतां दर्शयति—**मन एवेति** ॥ १७ ॥

**अ० टीका**—फलितमाह—**मन एवेति** । निर्विषयं तत्त्वज्ञानान्मिथ्याभूतत्वेन निरस्तविषयमित्यर्थः ॥ १७ ॥

**रा० टीका**—" प्रसन्नात्माऽत्मनि स्थित्वा सुखमक्षय्यमश्नुते " इत्युक्तमेवार्थं श्रुतिः स्वयमेव प्रपंचयति—

**समाधिनिर्धूतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं भवेत् ॥**
**न शक्यते वर्णयितुं गिरा तदा स्वयं तदंतःकरणेन गृह्यते ॥ ११८ ॥**

**समाधीति** । आत्मनि प्रत्यक्स्वरूपे निवेशितस्य समाधिनिर्धूतमलस्य समाधिना प्र-

त्यग्ब्रह्मणोरैक्यगोचरप्रत्ययावृत्त्या निर्धूतमलस्य निःशेषेण निवारितरजस्तमोमलस्य चेतसस्त-स्मिन्समाधौ यत्सुखमुत्पद्यते तदा समाधावुत्पन्नं तत्सुखं गिरा वाचा वर्णयितुं न शक्यतेऽ-लौकिकसुखत्वादित्यर्थः । किं तु स्वयं तत्स्वरूपभूतं सुखमंतःकरणेनैव गृह्यते ॥ १८ ॥

**अ० टीका**—अत एव । **समाधीति** । आत्मन्यद्वैतत्वेन ब्रह्मरूपे प्रतीचीत्यर्थः ॥१८॥

**रा० टीका**—नन्वस्यैव समाधेर्दुर्लभत्वात्कथमनेन ब्रह्मानंदनिश्चयसंभव इत्याशं-क्याऽऽह—

**यद्यप्यसौ चिरं कालं समाधिर्दुर्लभो नृणाम् ॥**
**तथाऽपि क्षणिको ब्रह्मानंदं निश्चाययत्यसौ ॥ १९ ॥**

**यद्यपीति** । अस्य समाधेः संततस्यासंभवेऽपि क्षणिकस्य तस्य संभवात्तेनैवायमानंदो निश्चेतुं शक्यत इत्यर्थः ॥ १९ ॥

**अ० टीका**—ननूदाहृतयोगसूत्रे दीर्घकालस्य समाधिसाधने विनिवेशात्कलावत्रा-ल्पायुषामस्माकं तु सोऽतिदुर्लभ एवेत्यत आऽऽह — **यद्यपीति** । क्षणिकोऽप्यसौ समाधिर्ब्रह्मा-नंदं ब्रह्माद्वैतस्वरूपमतिप्रेमास्पदं प्रत्यंचमित्यर्थः । निश्चाययति निर्णाययत्येवेत्यन्वयः ॥१९॥

**रा० टीका**—नन्वात्मदर्शनाय श्रवणादौ प्रवृत्ता अपि केचिदानंदनिश्चयशून्या ब-हिर्मुखा एव वर्तंत इत्याशंक्य श्रद्धादिरहितानां तथात्वेऽपि श्रद्धादिमतां तन्निश्चयो भवत्ये-वेत्याह—

**श्रद्धालुर्व्यसनी योऽत्रनिश्चिनोत्येव सर्वथा ॥**
**निश्चिते तु सकृत्तस्मिन् विश्वसित्यन्यदाऽप्ययम् ॥१२०॥**

श्रद्धालुरिति । व्यसनं सर्वथा संपादयिष्यामीत्याग्रहः, तद्वान्व्यसनी, अत्र समाधौ स-र्वथाऽवश्यम् । ततः किमित्यत आह—**निश्चिते त्विति** । अस्मिन्ब्रह्मानंदे सकृदेकदा क्षणिक-समाधौ निश्चिते सत्ययं सकृन्निश्चयवानन्यदाऽपीतरस्मिन्नपि काले विश्वसित्यानंदोऽस्तीति वि-श्वासं करोति ॥ २० ॥

**अ० टीका**—नन्वेवं चेत्तर्हि किमिति न सर्वे कृतश्रवणा अपि बहिर्मुखा एवेत्यत आह—**श्रद्धालुरिति** । श्रद्धा गुरुशास्त्रातिविश्वासस्तदुक्तफलावश्यंभावनिर्णयरूपस्तच्छील इत्यर्थः । येन विना जाग्रति यदनवस्थितिस्तत्तस्य व्यसनं तद्वाऽन्यमादियोगांगाभ्यासस्वभा-व इति यावत् । अयं सकृद्ब्रह्मानंदनिश्चयवान्मुमुक्षुर्योगतत्पर इत्यर्थः । अन्यदा सर्वकालम-पि । विश्वसिति विश्वासं प्राप्नोत्येव । ब्रह्मानंदानुभवं प्रतीति शेषः ॥ २० ॥

**रा० टीका**—ततोऽपि किं तत्राऽऽह—

**तादृक् पुमानुदासीनकालेऽप्यानंदवासनाम् ॥**
**उपेक्ष्य मुख्यमानंदं भावयत्येव तत्परः ॥ २१ ॥**

**तादृगिति** । तादृक्पुमाञ्श्रद्धादिपुरःसरं सकृन्निश्चयवान्पुरुष औदासीन्यदशायामप्यु-पलभ्यमानां पूर्वोक्तामानंदवासनामुपेक्ष्य तत्परो मुख्यानंदे तात्पर्यवान्भूत्वा तमेव भावयति २१

**अ० टीका**—अत एव । **तादृगिति** । निरुक्तविश्वासशाली ॥ २१ ॥

**परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ॥**
**तदेवाऽऽस्वादयत्यंतः परसंगरसायनम् ॥ २२ ॥**

**रा० टीका**—एवं व्यवहारकालेऽपि निजानंदं भावयतीत्यत्र दृष्टांतमाह—**परेति** २२

**अ० टीका**—तत्परतया तद्भावने दृष्टांतं प्रकटयति—**परेति** ॥ २२ ॥

**एवं तत्त्वे परे शुद्धे धीरो विश्रांतिमागतः ॥**
**तदेवाऽऽस्वादयत्यंतर्बहिर्व्यवहरन्नपि ॥ २३ ॥**

**रा० टीका**—दार्ष्टांतिके योजयति—**एवमिति** ॥ २३ ॥

**अ० टीका**—दार्ष्टांतिकं स्पष्टयति—**एवमिति** । परेऽविद्यातत्कार्यादिहीने । **शुद्धे** परोक्षत्वमलविकल इत्यर्थः । धीरः—" धीरत्वं बुद्धतत्त्वस्य तत्त्वानुस्मृतिसंततिः " इत्युक्तलक्षणधैर्यवान् । विश्रांतिं सुखम् ॥ २३ ॥

**रा० टीका**—धीरशब्दार्थमाह—

**धीरत्वमक्षप्राबल्येऽप्यानंदास्वादवांछया ॥**
**तिरस्कृत्याखिलाक्षाणि तच्चिंतायां प्रवर्तनम् ॥ २४ ॥**

**धीरत्वमिति** । इंद्रियाणां विषयाभिमुख्येन पुरुषाकर्षणसामर्थ्येऽपि स्वरूपसुखानुसंधानेच्छया सर्वाणींद्रियाणि तिरस्कृत्याऽऽनंदानुसंधान एव प्रवर्तमानत्वं धीरत्वमित्यर्थः॥२४॥

**अ० टीका**—धीरपदार्थं स्वेष्टं स्फुटयति—**धीरत्वमिति** । स्वस्येत्यार्थिकम्॥२४॥

**रा० टीका**—विश्रांतिशब्दस्य विवक्षितमर्थं सदृष्टांतमाह—

**भारवाही शिरोभारं मुक्त्वाऽऽस्ते विश्रमं गतः ॥**
**संसारव्यापृतित्यागे तादृग्बुद्धिस्तु विश्रमः ॥ १२५ ॥**

**भारवाहीति** । यथा लोके भारं वहन्पुरुषः श्रमहेतुं शिरसि स्थितं भारं परित्यज्य श्रमरहितो वर्तते तथा संसारव्यापारत्यागे सति श्रमरहित आसमिति जायमाना या बुद्धिः सा विश्रमशब्देनोच्यत इत्यर्थः ॥ १२५ ॥

**अ० टीका**—एवं विश्रांतिपदार्थमपि कथयति—**भारवाहीति । संसारेति** । मिथ्यात्वेनेत्यार्थिकम् ॥ १२५ ॥

**रा० टीका**— इदानीं फलितमर्थमाह—

**विश्रांतिं परमां प्राप्तस्त्वौदासीन्ये यथा तथा ॥**
**सुखदुःखदशायां च तदानंदैकतत्परः ॥ २६ ॥**

**विश्रांतिमिति** । परमां निरतिशयां विश्रांतिमुक्तलक्षणां प्राप्तः पुरुषः स्वस्यौदासीन्यदशायां यथा परमानंदास्वादने तात्पर्यवान्भवति, एवं सुखदुःखहेतुप्राप्तिकालेऽपि तदनुसंधानं परित्यज्य निजानंदास्वादन एव तात्पर्यवान्भवतीत्यर्थः ॥ २६ ॥

**अ० टीका**—ततः किं तत्राऽऽह—**विश्रांतिमिति । सुखेति** । चोऽप्यर्थे । **तदिति** । औदासीन्यकालिकोक्तवासनानंदोपेक्षणपूर्वकानुसंधितब्रह्मात्मैक्यानंदमात्रास्वादपर इत्यर्थः ॥ २६ ॥

**रा० टीका**—ननु दुःखस्य प्रतिकूलत्वेन तदनुसंधानेच्छाभावेऽपि वैषयिकसुखस्यानुकूलत्वेन पुरुषैरर्थ्यमानत्वात्तदनुसंधानेच्छा कुतो न भवेदित्याशंक्य तस्य विषयसंपादनादि-

द्वाराऽतीव बहिर्मुखत्वापादनेन निजानंदानुसंधानविरोधित्वात्तदिच्छाऽपि विवेकिनो न जायत इति दृष्टांतप्रदर्शनपूर्वकमाह—

**अग्निप्रवेशहेतौ धीः शृंगारे यादृशी तथा ॥**
**धीरस्योदेति विषयेऽनुसंधानविरोधिनि ॥ २७ ॥**

**अग्नीति** । शीघ्रं देहविमोचनेच्छायां दृढतरायां सत्यां तद्विलंबकारणेऽलंकारादौ यथाऽग्निप्रवेष्टुर्वैरस्य बुद्धिरुत्पद्यत एवं वैराग्यादिसाधनसंपन्नस्य विवेकिनो ब्रह्मानुसंधानविरोधिनि विषयसुखेऽपीत्यर्थः ॥ २७ ॥

**अ० टीका**—ननु सुखादिदशायामप्यात्मानुसंधाने किं सुखादिभानं तस्य नेत्यत्राऽऽह—**अग्नीति** । मृतस्वपतिमनुदेहं दहंत्या इति शेषः । **अनुसंधानेति** । अद्वैतात्मानुसंधानप्रतिकूल इत्यर्थः ॥ २७ ॥

**अविरोधिसुखे बुद्धिः स्वानंदे च गमागमौ ॥**
**कुर्वत्यास्ते क्रमादेषा काकाक्षिवदितस्ततः ॥ २८ ॥**

**रा० टीका**—मा भूद्विरोधिविषये सुखेच्छाऽप्रयत्नसौलभ्येनाबहिर्मुखत्वहेतौ विषये किं न भवतीत्यत आह—**अविरोधीति** ॥ २८ ॥

**अ० टीका**—नन्वास्तामनुसंधानविरोधिनि सुखे स्रक्चंदनवनितादिजन्ये निरुक्तदृष्टांतसिद्धतुच्छत्वबुद्धिः परंतु तदविरोधिनि भोजनादिजे कथं सा तत्र तस्येत्यत आह—**अविरोधीति** ॥ २८ ॥

**रा० टीका**—दृष्टांतं विवृणोति—

**एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः ॥**
**यात्यायात्येवमानंदद्वये तत्त्वविदो मतिः ॥ २९ ॥**

**एकैव दृष्टिरिति** । यथा काकस्य दृष्टिर्दृश्यतेनयेति दर्शनसाधनं चक्षुरिंद्रियमेकमेव वामदक्षिणनेत्रयोर्गोलकयोः पर्यायेण गमनागमने करोति. एवं विवेकिनो बुद्धिरप्यानंदद्वय इत्यर्थः ॥ २९ ॥

**अ० टीका**—अद्वैत ब्रह्मानंदानुसंधानाविरोधिनि विषयानंदे ब्रह्मानंदे च योगिनो वृत्तिः कालभेदेनैकाऽपि गमागमौ करोतीत्यत्रोक्तं काकाक्षिदृष्टांतं स्पष्टयति—**एकैवेति** ॥२९॥

**रा० टीका**—दार्ष्टांतिकं प्रपंचयति—

**भुंजानो विषयानंदं ब्रह्मानंदं च तत्त्ववित् ॥**
**द्विभाषाभिज्ञवद्विद्यादुभौ लौकिकवैदिकौ ॥ १३० ॥**

**भुंजान इति** । तत्त्वविद्धि विषयान्भुंजानस्तज्जन्यं विषयानंदमुपनिषद्वाक्यादवगतं ब्रह्मानंदं च लौकिकवैदिकावुभौ विषयानंदब्रह्मानंदौ भाषाद्वयवेदिवज्जानीयादित्यर्थः॥१३०॥

**अ० टीका**—दार्ष्टांतिकं स्फुटयति—**भुंजान इति** । आनंदाविति शेषः । अत्र-लौकिकस्य विषयानंदस्य वैदिकेन ब्रह्मानंदेन सहाविरोधस्तु स्वाश्रमादिधर्मत्वादेवेति तत्त्वम् ॥ १३० ॥

**रा० टीका**—ननु दुःखानुभवदशायामुद्वेगे सति कथं निजानंदानुभव इत्याशंक्याऽऽह—

**दुःखप्राप्तौ न चोद्वेगो यथापूर्वं यतो द्विदृक् ॥**
**गंगामग्नार्धकायस्य पुंसः शीतोष्णधीर्यथा ॥ ३१ ॥**

**दुःखेति** । यतो यस्मात्कारणाद्विवेकी द्विदृग्लौकिकवैदिकव्यवहारयोरुभयोरपि वेत्ता, अतो दुःखप्राप्तावपि पूर्ववदज्ञानदशायामिव न तस्योद्वेगः । विवेकेन तदा तदा बोध्यमानत्वादतो दुःखानुभवकालेऽपि निजानंदानुसंधानं न विरुध्यत इत्यर्थः । युगपदुभयानुसंधाने दृष्टांतमाह—**गंगेति** ॥ ३१ ॥

**अ० टीका**—नन्वेवमपि दुःखप्राप्तौ कथं तत्राऽऽह—**दुःखेति** । यथापूर्वं तस्योद्वेगः कुतो नेत्यत आह—**यत इति** । तत्र निदर्शनमाह—**गंगेति** ॥ ३१ ॥

**रा० टीका**—फलितमाह—

**इत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा ॥**
**भाति तद्वासनाजन्ये स्वप्ने तद्भासते तथा ॥ ३२ ॥**

**इत्थमिति** । सदा सुखदुःखानुभवदशायां तूष्णींस्थितौ चेत्यर्थः । न केवलं जागरण एव तद्भानं किं तु स्वप्नावस्थायामपीत्याह—**तद्वासनेति** । हेतुगर्भं विशेषणं जाग्रद्वासनाजन्यत्वात्स्वप्नस्य । तत्रापि तद्ब्रह्मसुखं तथा जाग्रदवस्थायामिव भासत इत्यर्थः ॥ ३२ ॥

**अ० टीका**—ततः किं तदाह—**इत्थमिति** ॥ ३२ ॥

**रा० टीका**—ननु स्वप्नस्याऽऽनंदानुभववासनाजन्यत्वे सत्यानंद एव भासत इत्याशंक्याऽऽह—

**अविद्यावासनाऽप्यस्तीत्यतस्तद्वासनोत्थिते ॥**
**स्वप्ने मूर्खवदेवैष सुखं दुःखं च वीक्षते ॥ ३३ ॥**

**अविद्येति** । न केवलमानंदवासनाबलादेव जायते किं त्वविद्यावासनाबलादपि । अतस्तद्वासनाजन्यत्वात्तत्राज्ञस्येव सुखाद्यनुभवो भवतीत्यर्थः ॥ ३३ ॥

**अ० टीका**—नन्वविद्यावासनया हर्षशोकाद्यपि स्यादित्याशंकां प्रत्याह—**अविद्येति** ॥ ३३ ॥

**रा० टीका**—एतावता ग्रंथसंदर्भेणोक्तमर्थं निगमयति—

**ब्रह्मानंदाभिधे ग्रंथे ब्रह्मानंदप्रकाशकम् ॥**
**योगिप्रत्यक्षमध्याये प्रथमेऽस्मिन्नुदीरितम् ॥ १३४ ॥**

**इति ब्रह्मानंदे योगानंदो नाम प्रथमोऽध्यायः ॥ १ ॥**

**इति श्रीमद्विद्यारण्यमुनिविरचितायां पञ्चदश्यामेकादशं प्रकरणं समाप्तम् ॥ ११ ॥**

**ब्रह्मानंदेति** । ब्रह्मानंदनामकेऽध्यायपंचात्मके ग्रंथेऽस्मिन्प्रथमेऽध्याये सुषुप्त्यवस्थायामौदासीन्यकालेऽपि समाध्यवस्थायां सुखदुःखदशायां च स्वप्रकाशचिद्रूपब्रह्मानंदस्य प्रकाशकं योग्यनुभवरूपं प्रत्यक्षमुक्तमित्यर्थः । इदं चोपलक्षणमागमादीनां तेषामप्यत्र दर्शितत्वात् ॥ १३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचिते ब्रह्मानंदे योगानंदो नाम प्रथमोऽध्यायः ॥ १ ॥

**अ० टीका**—उपसंहरन्प्रथमाध्यायस्यास्य स्वारस्यमाह—**ब्रह्मानंदेति**। ननु ग्रंथस्यास्य पंचदश्याख्यस्य व्याख्योपक्रमे—"कैवल्ये क्व नु विषया गुरुशास्त्रारामगांगतीराद्याः। इति विह्वलता चित्ते प्रतिबंधः प्रथम एव ऐक्येऽपि" **इत्यार्यया** ब्रह्मात्मैक्ये विषयवासनाख्यं प्रथमं प्रतिबंधमुक्त्वा, **एकादशे** तु यौगिकसुखस्य बोधेन निरतिशयतोक्त्या। निर्विषयेऽपि पुमर्थात्तत्परता तस्य निर्णेयेत्यार्यांतरेणास्य प्रकरणस्योक्तप्रतिबंधबाधकत्वं यदुक्तं तत्कथमिति चेदुच्यते। अत्र तावद्ब्रह्मानंदं प्रवक्ष्यामीत्युपक्रम्य ब्रह्मानंदप्रकाशं योगिप्रत्यक्षमित्युपसंहृतं तेनाद्वैतानंदानुभवे निरतिशयसुखपरत्वेनास्य दृश्यसुखाभासबाधकत्वमाद्यं लिंगम्। एवं ब्रह्मवित्परमाप्नोतीत्यादि **द्वितीयादिश्लोकनवकेनोक्तार्थविषयकस्तदग्रेऽपि** तत्र तत्र तथाऽभ्यासः स्पष्ट एव। एतेनैवापूर्वता फलार्थवादोपपत्त्याख्यलिंगचतुष्टयमपि व्याख्यातम्। तेषां तत्र कंठत एव स्फुटितत्वादिति दिक् ॥ १३४ ॥

इति श्रीमत्परमहंस० श्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाण० पट्टचुपनामकश्रीनारायणशास्त्रिचरण० मोडकोपनामकाच्युतशर्मणा विद्यार्थिना० योगानंदप्रकाशः ॥ ११ ॥

# अथ पंचदश्यां द्वादशं प्रकरणम् ।

## तत्र ब्रह्मानन्द आत्मानंदाख्यो द्वितीयोऽध्यायः ।

**नन्वेवं वासनानंदाद्ब्रह्मानंदादपीतरम् ॥**
**वेत्तु योगी निजानंदं मूढस्यात्रास्ति का गतिः ॥ १ ॥**

**रा० टीका**—अथ ब्रह्मानंदांतर्गतमात्मानंदनामकद्वितीयाध्यायमारभते, तदेवं **प्रथमाध्याये** विवेकिनो योगेन निजानंदानुभवप्रकारं प्रदर्श्य मूढस्य जिज्ञासोरात्मानंदशब्दवाच्यत्वं पदार्थविवेचनमुखेन ब्रह्मानंदानुभवप्रकारप्रदर्शनाय शिष्यप्रश्नमवतारयति—**नन्वेवमिति** ॥ १ ॥

**अ० टीका**—अद्वैतानंदसाक्षिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वांश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ।
आत्मानंदं स्फुटयाम्यथ कौमुद्या रविप्रकाशेन ॥ २ ॥

अथ **भगवान्भारतीतीर्थाचार्यः** पंचदश्याः पूर्वस्मिन्स्वकृते तावदेकादशे तत्तृतीयांशत्वेनाध्यायपंचकात्मकब्रह्मानंदीये **योगानंदाख्यप्रथमाध्यायात्मके** प्रकरणेऽते यदुक्तम्—
" ब्रह्मानंदाभिधे ग्रंथे ब्रह्मानंदप्रकाशकम् ।
योगिप्रत्यक्षमध्याये प्रथमेऽस्मिन्निरूपितम् " ।

इति तदाश्रित्य मंदानुजिघृक्षयाऽऽत्मानंदाभिधं द्वादशं द्वितीयाध्यायाह्वयं प्रकरणमारभमाणः प्रथितप्रमाणप्रयोजनं ब्रह्मानंदपदेन ब्रह्मात्मैक्यलक्षणं मंगलमाचरंस्तेनैव प्रकृतप्रकरणीयविषयाद्यनुबंधचतुष्टयमपि सूचयन्स्वयमेव शिष्यशंकामनुवदति—**नन्विति । वासनानंदः** संस्कारात्सुप्तोत्थितस्य किंचित्कालमनुभूयमानः सुखविशेषः । **ब्रह्मानंदः** सुषुप्तिकालिकोऽसावपि प्राक्तनप्रकरणे प्रपंचितः । एवं **निजानंदोऽपि**—" यावद्यावदहंकारो विस्मृतोऽभ्यासयोगतः । तावत्तावत्सूक्ष्मदृष्टेर्निजानंदोऽनुमीयते " इत्यादिना योगिप्रत्यक्षप्रक्रियया ॥ १ ॥

**रा० टीका**—शिष्येणैवं पृष्टो गुरुरतिमूढस्य विद्याधिकार एव नास्तीत्याह—

**धर्माधर्मवशादेष जायतां म्रियतामपि ॥**
**पुनः पुनर्देहलक्षैः किं नो दाक्षिण्यतो वद ॥ २ ॥**

**धर्मेति ।** एषोऽतिमूढोऽनादौ संसारेऽतीतेषु जन्मस्वनुष्ठितसुकृतदुष्कृतवशान्नानाविधदेहस्वीकारेण पुनः पुनर्जायतां म्रियतां चेत्यर्थः ॥ २ ॥

**अ० टीका**—एवमुक्तप्रश्ने सिद्धांत्युदासीनतयैव समाधत्ते—**धर्मेति । दाक्षिण्यतः** सकलाज्ञबोधनसामर्थ्याभिनिवेशेनेत्यर्थः ॥ २ ॥

**रा० टीका**—सर्वानुग्राहकत्वादाचार्येण तस्याऽपि काचन गतिर्वक्तव्येति शिष्य आह—

**अस्ति वोऽनुजिघृक्षुत्वाद्दाक्षिण्येन प्रयोजनम् ॥**
**तर्हि ब्रूहि स मूढः किं जिज्ञासुर्वा पराङ्मुखः ॥ ३ ॥**

**अस्तीति** । वो युष्माकमनुजिघृक्षुत्वादनुगृहीतुमिच्छवोऽनुजिघृक्षवस्तेषां भावस्तत्त्वं तस्माच्छिष्योद्धरणेच्छायुक्तत्वाद्दाक्षिण्यतस्तदुद्धरणलक्षणं प्रयोजनमस्तीत्यर्थः । एवं शिष्यवचनमाकर्ण्य गुरुस्तं विकल्प्य पृच्छति—**तर्हीति** । यदि मूढस्य काचन गतिर्वक्तव्या तर्हि मूढः किं रागी विरक्तो वा वदेति ॥ ३ ॥

**अ० टीका**—अथ पुनरपि शिष्यस्तत्प्रयोजनमाह—**अस्तीति** । तत्राप्याचार्यः पृच्छति—**तर्हीत्यादिना** विकल्प्य ॥ ३ ॥

**रा० टीका**—रागी चेत्तद्रागानुसारेण कर्म वोपासनं वा वक्तव्यमिति प्रथमे परिहारमाह—

**उपास्तिं कर्म वा ब्रूयाद्विमुखाय यथोचितम् ॥**
**मंदप्रज्ञं तु जिज्ञासुमात्मानंदेन बोधयेत् ॥ ४ ॥**

**उपास्तिमिति** । विमुखाय तत्त्वज्ञानविमुखाय बहिर्मुखायेत्यर्थः । यथोचितं यथायोग्यं ब्रह्मलोकादिकामश्चेदुपास्तिं ब्रूयात्स्वर्गादिकामश्चेत्कर्म ब्रूयादित्यर्थः । जिज्ञासुत्वेऽपि सोऽतिविवेकी मंदप्रज्ञो वेति विकल्प्यातिविवेकिनः पूर्वाध्यायोक्तप्रकारेण योगेन ब्रह्मसाक्षात्कारमभिप्रेत्य मंदप्रज्ञस्य तद्दर्शनोपायमाह—**मंदेति** । यो मंदप्रज्ञः, मंदा जडा प्रज्ञा बुद्धिर्यस्य स मंदप्रज्ञः तं मंदप्रज्ञं ज्ञातुमिच्छुर्जिज्ञासुस्तमात्मानंदेनाऽऽत्मानंदविवेचनमुखेन बोधयेत् ॥ ४ ॥

**अ० टीका**—अंत्यं प्रत्यधिकारतारतम्येनोपायमाह—**उपास्तिमिति** । किंचिद्धीसौक्ष्म्ये ध्यानदीपोक्तनिर्गुणाहंब्रह्माद्युपासनामित्यर्थः । तदभावे तु कर्मकाम्यादिहीनमीशतोषबुद्ध्या नित्यादि । आद्यं प्रत्याह—**मंदेति** ॥ ४ ॥

**रा० टीका**—एवं केन को बोधित इत्यत आह—

**बोधयामास मैत्रेयीं याज्ञवल्क्यो निजप्रियाम् ॥**
**न वा अरे पत्युरर्थे पतिः प्रिय इतीरयन् ॥ ५ ॥**

**बोधयामासेति** । **याज्ञवल्क्य** एतन्नामको यजुःशाखाविशेषप्रवर्तकः कश्चिदृषिः, **मैत्रेयी**मेतन्नामिकां निजप्रियां स्वभार्यां 'न वा अरे पत्युरर्थे पतिः प्रियः' इति 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यादिप्रकारेण, ईरयन् ब्रुवन्, बोधयामास बोधितवानित्यर्थः॥५॥

**अ० टीका**—को वा लाघवादात्माभिन्न आनंदः कथं तद्बोधनप्रक्रिया प्रमाणसंप्रदाया इत्यत आह—**बोधयामासेत्यादिना** ॥ ५ ॥

**रा० टीका**—इतरत्र परप्रेमास्पदत्वेन परमानंद इष्यतामितिवाक्येन परप्रेमास्पदत्वेन हेतुनाऽऽत्मनः परमानंदरूपतां सिसाधयिषुरादौ परप्रेमास्पदत्वहेतुसमर्थनाय तावदुदाहृतवाक्यस्योपलक्षणपरतामभिप्रेत्य तत्प्रकरणस्थसकलपर्यायवाक्यतात्पर्यमाह—

**पतिर्जाया पुत्रवित्ते पशुब्राह्मणबाहुजाः ॥**
**लोका देवा वेदभूते सर्वं चाऽऽत्मार्थतः प्रियम् ॥ ६ ॥**

**पतिरिति**। पतिजायादिकं भोग्यजातं भोक्तुः शेषत्वाद्भोक्तुं संबंधेनैव प्रियं न स्वरूपेणेत्यभिप्रायः ॥ ६ ॥

**अ० टीका**—तन्निर्दिष्टपदार्थान्संक्षिपति—**पतिरिति** ॥ ६ ॥

**रा० टीका**—इदानीं पूर्वोदाहृतस्य 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति' इत्यस्य वाक्यस्य तात्पर्यार्थं विभज्य दर्शयति—

**पत्याविच्छा यदा पत्न्यास्तदा प्रीतिं करोति सा ॥**
**क्षुदनुष्ठानरोगाद्यैस्तदा नेच्छति तत्पतिः ॥ ७ ॥**

**पत्याविति**। यदा यस्मिन्काले पत्न्या जायायाः पत्यौ भर्तरि विषये, इच्छा कामो भवति तदा सा पत्नी पत्यौ प्रीतिं स्नेहं करोति यदा तत्पतिः क्षुधादिनेच्छाभावहेतुना युक्तो भवति चेत्तदा तं नेच्छति न कामयते ॥ ७ ॥

**अ० टीका**—क्रमेण तान्विवृणोति—**पत्यावित्यादिना**। **क्षुदिति**। तदा जाया प्रीतिकाले ॥ ७ ॥

**रा० टीका**—एवं च सति किं फलितमित्यत आह—

**न पत्युरर्थे सा प्रीतिः स्वार्थ एव करोति ताम् ॥**
**पतिश्चाऽऽत्मन एवार्थे न जायार्थे कदाचन ॥ ८ ॥**

**न पत्युरिति**। जायया क्रियमाणा या प्रीतिः सा पत्युरर्थे पत्युः प्रयोजनाय न किं तु जाया तां पत्यौ प्रीतिं स्वार्थ एव स्वप्रयोजनायैव करोति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवतीत्यादि न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यंतानां **वाक्यानां** तात्पर्यं क्रमेण विभज्य दर्शयति—**पतिश्चेत्यादिना**। पतिश्च भर्ताऽपि स्वप्रयोजनायैव जायायां प्रीतिं करोति न जायाप्रीतय इत्यर्थः ॥ ८ ॥

**अ० टीका—नेति**। अर्थे प्रयोजनविषये। एतत्पत्यादावप्यातिदिशति—**पतिश्चेति**८

**रा० टीका**—नन्वेकैककामनया प्रवृत्तौ प्रीतिः स्वार्था भवतु युगपदुभयेच्छया प्रवृत्तौ तु प्रीतेरुभयार्थता स्यादित्याशंक्याऽऽह—

**अन्योन्यप्रेरणेऽप्येवं स्वेच्छयैव प्रवर्तनम् ॥ ९ ॥**

**अन्योन्येति**। एवमुक्तेन प्रकारेण स्वेच्छयैव स्वकामनापूरणेच्छयैव प्रवर्तनमुभयोरपीति शेषः ॥ ९ ॥

**अ० टीका**—ननु दैवात्किंचित्कालावच्छेदेनोभयानुकूल्यमपि दृश्यत इत्यत आह—**अन्योन्येति** केवलार्थेनैव ॥ ९ ॥

**रा० टीका**—स्वेच्छया प्रवर्तनमेव दर्शयति—

**श्मश्रुकंटकवेधेन बाले रुदति तत्पिता ॥**
**चुंबत्येव न सा प्रीतिर्बालार्थे स्वार्थ एव सा ॥ १० ॥**

**श्मश्रुकंटकेति**। पित्रा क्रियमाणं पुत्रमुखादिचुंबनं न पुत्रप्रीत्यर्थं तस्य श्मश्रुकंटकवेधेन रोदनकर्तृत्वादतस्तात्पितुः स्वतुष्ट्यर्थमेवेत्यवगंतव्यमित्यर्थः ॥ १० ॥

**अ० टीका**—एवं पुत्रेऽप्याह–श्मश्रुकंटकेत्यादि ॥ १० ॥

**निरिच्छमपि रत्नादिवित्तं यत्नेन पालयन् ॥**
**प्रीतिं करोति स स्वार्थे वित्तार्थत्वं न शंकितम् ॥ ११ ॥**

**रा० टीका**—चेतनेषु पतिजायापुत्रेषु क्रियमाणायाः प्रीतेः स्वार्थत्वपरार्थत्वसंदेहसंभवादचेतनत्वेनेच्छामात्ररहितस्य वित्तविषयस्य तच्छंकैव नास्तीत्यभिप्रेत्य **न वा** अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवतीत्यस्य **वाक्यस्य** तात्पर्यमाह—**निरिच्छमपीति** ॥ ११ ॥

**अ० टीका**—एवं वित्तेऽप्याह–**निरिच्छमपीति । प्रीतिमिति ।** देवदत्त इत्यार्थिकम् । तत्र यां प्रीतिं करोति सा स्वार्थे स्वस्य कंठादौ तद्धारणादिप्रयोजनविषयिण्येव भवति यतस्तस्यां रत्नार्थत्वं केनचिदद्यापि शंकितमपि नैवास्तीत्यध्याहृत्यान्वयः ॥ ११ ॥

**रा० टीका**—चेतनत्वेऽपि वहनादीच्छारहितपशुविषयस्य **न वा अरे** पशूनामित्यस्य **वाक्यस्य** तात्पर्यमाह—

**अनिच्छति बलीवर्दे विवाहयिषते बलात् ॥**
**प्रीतिः सा वणिगर्थैव बलीवर्दार्थता कुतः ॥ १२ ॥**

**अनिच्छतीति ।** बलीवर्देऽनडुहि, अनिच्छति भारं वोढुमिच्छामकुर्वत्यपि बलाद्विवाहयिषते वाहयितुं कामयते तत्र वहनादिविषयायाः प्रीतेर्वणिगर्थतैव न बलीवर्दार्थतेत्यर्थः॥ १२॥

**अ० टीका**—एवं पशावपि विशदयति—**अनिच्छतीति।** एवं बलीवर्दे वृषभेऽप्यनिच्छति भारमुद्वोढुमनभिलषति सतीत्यर्थः । अथापि वणिक्कर्म्म तृणान्नपानादिना बलाद्बलं संपाद्येति यावत् । ल्यब्लोपे पंचमीयम् । विवाहयिषते विशेषेण तद्द्वारा स्वीयधान्यादिभारं वाहयितुमिच्छतीत्यर्थः । शिष्टं तु स्पष्टमेव ॥ १२ ॥

**रा० टीका**—न वा अरे ब्रह्मणः कामायेतिवाक्यस्य तात्पर्यमाह—

**ब्राह्मण्यं मेऽस्ति पूज्योऽहमिति तुष्यति पूजया ॥**
**अचेतनाया जातेर्नो संतुष्टिः पुंस एव सा ॥ १३ ॥**

**ब्राह्मण्यमिति ।** ब्राह्मण्यनिमित्तया पूजया ब्राह्मणोऽहमस्मीत्यभिमानवानेव तुष्यति न जडा जातिरित्यर्थः ॥ १३ ॥

**अ० टीका**—एवं ब्राह्मणत्वजातावप्याह–**ब्राह्मण्यमिति** ॥ १३ ॥

**रा० टीका**—न वा अरे क्षत्रस्येत्यादिवाक्यस्य तात्पर्यमाह—

**क्षत्रियोऽहं तेन राज्यं करोमीत्यत्र राजना ॥**
**न जातेर्वैश्यजात्यादौ योजनीयेदमीरितम् ॥ १४ ॥**

**क्षत्रिय इति ।** राज्योपभोगनिमित्तं सुखं क्षत्रियत्वजातिमत एव न क्षत्रियत्वजातेरित्यर्थः । इदं क्षत्रियोदाहरणं वैश्याद्युपलक्षणार्थमित्याह—**वैश्यजात्यादाविति** ॥ १४ ॥

**अ० टीका** एवं क्षत्रियत्वजातावप्युपलक्षणत्वेन विवृणोति–**क्षत्रियोऽहमिति**॥ १४॥

**रा० टीका**—न वा अरे लोकानां कामायेत्यादिवाक्यस्य तात्पर्यमाह—

**स्वर्गलोकब्रह्मलोकौ स्तां ममेत्यभिवांछनम् ॥**
**लोकयोर्नोपकाराय स्वभोगायैव केवलम् ॥ १५ ॥**

**स्वर्गलोक इति ।** लोकद्वयोपादानं कर्मोपासनालक्षणसाधनद्वयसंपाद्यसकललोकोपलक्षणार्थम् ॥ १५ ॥

**अ० टीका**--एतत्स्वर्गादिलोकेऽप्याह--**स्वर्गेति** । स्तां भवेताम् ॥ १५ ॥

**ईशविष्ण्वादयो देवाः पूज्यंते पापनष्टये ॥**
**न तन्निष्पापदेवार्थं तत्तु स्वार्थं प्रयुज्यते ॥ १६ ॥**

**रा० टीका**—किं च—**ईशविष्ण्वादय इति** । पापनष्टये पापनिवृत्तय इत्यर्थः । तत्पूजनं न निष्पापदेवार्थं स्वतः पापरहितानां देवानां प्रयोजनाय किं तु स्वार्थं पूजाकर्तुः प्रयोजनाय ॥ १६ ॥

**अ० टीका**—एवं देवेष्वप्याह—**ईशेति** । आदिना गणेशाद्याः ॥ १६ ॥

**ऋगादयो ह्यधीयंते दुर्ब्राह्मण्यानवाप्तये ॥**
**न तत्प्रसक्तं वेदेषु मनुष्येषु प्रसज्जते ॥ १७ ॥**

**रा० टीका**—किं च । **ऋगादय इति** । दुर्ब्राह्मण्यं व्रात्यत्वं तच्च दुर्ब्राह्मण्यं मनुष्येषु मनुष्यत्वावांतरजातिरूपं तद्रहितेषु वेदेषु न प्रसज्जत इत्यर्थः ॥ १७ ॥

**अ० टीका**--एतद्वेदेष्वपि कथयति--**ऋगादयो हीति । दुर्ब्राह्मण्येति ।** दुष्टब्राह्मणत्वानाप्त्यै । मनुष्येषु कलौ क्षत्रियवैश्ययोरुक्तलक्षणयोरद्यानुपलब्धेर्मनुष्यब्राह्मणेष्वित्यर्थः । एवं च वेदपदविवक्षितस्वशाखाध्ययनाभावे दुर्ब्राह्मणत्वपरिहारार्थं तदध्ययनवंत एव मनुष्यब्राह्मणास्तद्भिन्नास्तु तिर्यग्ब्राह्मणा एवेति भावः ॥ १७ ॥

**भूम्यादिपंचभूतानि स्थानतृट्पाकशोषणैः ॥**
**हेतुभिश्चावकाशेन वांछंत्येषां न हेतवः ॥ १८ ॥**

**रा० टीका**—किं च । **भूम्यादीति** । सर्वे प्राणिनः स्थानप्रदानतृण्निवारणपाककरणार्द्रशोषणावप्रकाशप्रदानाख्यैर्हेतुभिर्निमित्तैः पृथिव्यादीनि पंचभूतानि वांछत्यपेक्षंते । एषां पृथिव्यादीनां तु हेतवः स्थानवांछनादीनि निमित्तानि न संति, अतो न स्वयमाकांक्षंत इत्यर्थः ॥ १८ ॥

**अ० टीका**—एवं भूतपंचकेऽप्याह—**भूम्यादीति** ॥ १८ ॥

**रा० टीका**—इदानीं न वा अरे सर्वस्य कामायेत्यस्य वाक्यस्य तात्पर्यमाह—

**स्वामिभृत्यादिकं सर्वं स्वोपकाराय वांछति ॥**
**तत्तत्कृतोपकारस्तु तस्य तस्य न विद्यते ॥ १९ ॥**

**स्वामीति** । भृत्यादिसर्वो जनः स्वाम्यादिकं सर्वं स्वोपकाराय स्वप्रयोजनाय वांछति । एवं स्वाम्यादिरपि ॥ १९ ॥

**अ० टीका**--स्वाम्यादावपि मूले सर्वपदेष्ट एवमाह—**स्वामीति** । आदिना गृहादि ॥ १९ ॥

**रा० टीका**—ननु श्रुतावेवं बहूदाहरणदर्शनं किमर्थं कृतमित्याशंक्याऽऽह—

**सर्वव्यवहृतिष्वेवमनुसंधातुमीदृशम् ॥**
**उदाहरणबाहुल्यं तेन स्वां वासयेन्मतिम् ॥ २० ॥**

**सर्वव्यवहृतिष्विति ।** इच्छापूर्वकेषु सर्वेष्वपि भोजनादिव्यवहारेषु । एवमात्मनस्तु कामाय सर्वं प्रियं भवतीत्युक्तेन प्रकारेणानुसंधातुमनुसंधानायेदृशं पतिजायादिषु प्रीतिदर्शनरूपमुदाहरणबाहुल्यमुक्तमिति शेषः । तेन कारणेन स्वां स्वसंबंधिनीं मतिं बुद्धिं वासयेत्सर्वस्यापि स्वशेषत्वावगमेन स्वात्मनः प्रियतमत्वानुसंधानवतीं कुर्यादित्यर्थः ॥ २० ॥

**अ० टीका**—फलितमाह—**सर्वेति ।** वासयेद्विवेकसंस्कृतां कुर्यादित्यर्थः ॥ २० ॥

**रा० टीका**—नन्वात्मशेषत्वेन सर्वस्य प्रियत्वोक्तेरात्मनः प्रियतमत्वमुक्तमनुपपन्नं प्रीतिविकल्पे क्रियमाणे प्रीतेरेव दुर्निरूपत्वादित्यभिप्रायेण प्रीतिस्वरूपं पृच्छति—

**अथ केयं भवेत्प्रीतिः श्रूयते या निजात्मनि ॥**
**रागो वध्वादिविषये श्रद्धा यागादिकर्मणि ॥**
**भक्तिः स्याद्गुरुदेवादाविच्छा त्वप्राप्तवस्तुनि ॥ २१ ॥**

**अथेति ।** अथशब्दः प्रश्नार्थः या निजात्मनि प्रीतिः श्रूयत इयं का ? किं रागरूपा किं वा श्रद्धारूपा ? उत भक्तिरूपा ? यद्वेच्छारूपेति ? । किंशब्दार्थश्चतुर्ष्वपि पक्षेषु प्रीतेः सर्वविषयत्वं न संभवतीत्याह—**राग इति ।** रागश्चेद्वध्वादिष्वेव स्यान्न यागादिषु श्रद्धाचेद्यागादिष्वेव स्यान्न वध्वादिषु भक्तिश्चेद्गुर्वादिष्वेव स्यान्नेतरेषु । इच्छाचेदप्राप्तवस्तुविषयैव स्यान्नेतरविषयाऽतो न सर्वविषयत्वं प्रीतेरित्यर्थः ॥ २१ ॥

**अ० टीका**—अथ प्रीतिस्वरूपनिर्णयार्थं विकल्प्य पृच्छति—**अथेत्यादि** सार्धेन ॥ २१ ॥

**रा० टीका**—उक्तप्रकारचतुष्टयातिरिक्तं पक्षमादायोत्तरमाह—

**तर्ह्यस्तु सात्त्विकी वृत्तिः सुखमात्रानुवर्तिनी ॥**
**प्राप्ते नष्टेऽपि सद्भावादिच्छातो व्यतिरिच्यते ॥ २२ ॥**

**तर्ह्यस्त्विति ।** तर्हि प्रीते रागादिरूपत्वासंभवे सति सुखमात्रानुवर्तिनी सुखमेव सुखमात्रमनुसृत्य वर्तत इति सुखमात्रानुवर्तिनी सुखैकगोचरेत्यर्थः । सात्त्विकी सत्त्वगुणपरिणामरूपा वृत्तिरंतःकरणवृत्तिः प्रीतिरस्तु । ननु तर्हि सा प्रीतिरिच्छैवेत्याशंक्य परिहरति—**प्राप्त इति ।** इच्छा तावदप्राप्तसुखादिमात्रविषया । इयं तु सर्वविषया प्राप्ते लब्धे सुखादौ **नष्टे**ऽपि तस्मिन्विषये विद्यमानत्वात् । अत इच्छात इच्छाया व्यतिरिच्यते भिद्यते ॥२२॥

**अ० टीका—भक्तिरिति ।** एवं च रागश्रद्धाभक्तीच्छास्वन्यतमोऽपि प्रीतिपदशक्यो नैव दृश्यते तत्राऽऽह—**तर्हीति** । रागेच्छयोर्व्युदासाय **सात्त्विकीति ।** सिद्धांते मोक्षस्याविद्यास्तमयो मोक्ष इति **वार्तिकादना**दित्वेनाध्यस्ताविद्याध्वंसनिरूपस्य तस्याधिष्ठानीभूतब्रह्मात्मानतिरेकात्तदिच्छा त्वात्मेच्छैव तस्य सर्वात्मनैवाप्राप्तत्वाभावान्न तदिच्छायां व्यभिचारः । प्रमायामतिव्याप्तिव्यावृत्तये—**सुखेति** । मात्रचा कांतालिंगनादिजन्यसुखनिरासः । एवं च सुखमात्रविषयकत्वे सति सात्त्विकचित्तवृत्तित्वं प्रीतित्वमिति तल्लक्षणं फलति । तत्रापि सौषुप्तिका विद्यावृत्तिव्यावृत्त्यर्थं चित्तेत्याकूतम् ॥ २२ ॥

**रा०. टीका**—इदानीं सुखसाधनभूतेष्वन्नादिष्विवाऽऽत्मन्यपि प्रीतिदर्शनादात्मनोऽप्यन्नादिवत्सुखसाधनत्वं स्यादिति शंकते–

**सुखसाधनतोपाधेरन्नपानादयः प्रियाः ॥ २३ ॥**

**सुखेति** । अन्नपानादयः सुखसाधनत्वोपाधिना यथा प्रिया दृष्टा आत्माऽप्यानुकूल्यात्प्रियत्वादन्नादिसमोऽन्नपानादिवत्सुखसाधनं स्यादित्यर्थः ॥ २३ ॥

**अ० टीका**—एवमपि सुखेच्छानिराकरणाय स्वयमेवाऽऽह—**प्राप्त इति** । नन्वेवमन्नादीनामपि प्रीतिविषयत्वमस्त्येवेत्यत्राऽऽह—**सुखेति** ॥ २३ ॥

**आत्माऽऽनुकूल्यादन्नादिसमश्चेदमुनाऽत्र कः ॥**
**अनुकूलयितव्यः स्यान्नैकस्मिन्कर्मकर्तृता ॥ २४ ॥**

**रा० टीका**—अत्रेदमनुमानं सूचितम् । विमत आत्मा सुखसाधनं भवितुमर्हति प्रियत्वादन्नादिवदिति । अन्नपानादिषु भोग्यत्वमुपाधिरित्यभिप्रायेण परिहरति—**अमुनेति** । अत्र लोकेऽमुना सुखसाधनतयाऽनुकूलेनानुकूलयितव्यः कः स्यान्न कोऽपि स्यादात्मातिरिक्तस्य भोक्तुरभावादित्यर्थः । ननु स्वयमेवानुकूलयितव्यः स्यादित्यत आह—**नैकस्मिन्निति** । एकस्यैवाऽऽत्मनो युगपदुपकार्यत्वमुपकारकत्वं चेति धर्मद्वयं विरुध्यत इत्यर्थः ॥ २४ ॥

**अ० टीका**—आत्माऽन्नादिसम आनुकूल्याद्व्यतिरेके व्याघ्रादिवदित्यनुमानेन तत्रापि शंकते—**आत्मेति** । अथ सिद्धांती तत्रापि समाधातुं पृच्छति—**अमुनेत्यादिना** । अमुना सुखसाधनतयाऽन्नादिवदनुकूले नाऽऽत्मनेति यावत् । कोऽन्यो भोक्ताऽनुकूलयितव्यः संतर्पणीयः स्यान्न कोऽपीत्यर्थः । ननु भोक्ताऽप्यात्मैव सूर्यतत्प्रभावत्तत्राऽऽह—**नेति**॥२४॥

**सुखे वैषयिके प्रीतिमात्रमात्मा त्वतिप्रियः ॥**
**सुखे व्यभिचरत्येषा नाऽऽत्मनि व्यभिचारिणी ॥ २५ ॥**

**रा० टीका**—नन्वन्नादिवत्सुखसाधनत्वाभावेऽपि सुखवद्भोक्तृशेषता स्यादित्याशंक्याऽऽत्मनो निरतिशयप्रेमास्पदत्वान्मैवमिति परिहरति-**सुख इति** । वैषयिके विषयजन्ये सुखे प्रीतिमात्रं प्रीतिरेव न निरतिशया । आत्मा त्वतिप्रियो निरतिशयप्रेमविषयः । अतो न विषयजन्यसुखतुल्य इत्यर्थः । तत्रोभयत्रोपपत्तिमाह-**सुखे व्यभिचरतीति** । सुखे वैषयिके सुखे जायमाना एषा प्रीतिर्व्यभिचरति कदाचित्सुखांतरं गच्छति न तस्मिन्नेव नियताऽवतिष्ठते । आत्मनि तु विद्यमाना प्रीतिर्न व्यभिचारिणी विषयांतरगामिनी न भवति । अतो निरतिशया सेत्यर्थः ॥ २५ ॥

**अ० टीका**—किंच विषयसुखात्मप्रीत्योर्वैषम्यमपीत्याह—**सुख इति** । तत्र हेतुः—**सुखे व्यभिचरतीति** ॥ २५ ॥

**एकं त्यक्त्वाऽन्यदादत्ते सुखं वैषयिकं सदा ॥**
**नाऽऽत्मा त्याज्यो न चाऽऽदेयस्तस्मिन्व्यभिचरेत्कथम् ॥२६॥**

**रा० टीका**—सुखगोचरायाः प्रीतेर्व्यभिचारं दर्शयति-**एकमिति** । आत्मनि तु तदभावं दर्शयति—**नाऽऽत्मेति** । अयोग्यत्वादित्यर्थः । फलितमाह—**तस्मिन्निति** ॥ २६ ॥

**अ० टीका**—तदुभयमपि विवृणोति—**एकमिति** क्रमेण । देवदत्तप्रीतिरित्यार्थिकम् ॥ २६ ॥

**रा० टीका**—हानादिविषयत्वाभावेऽप्यात्मनस्तृणादिवदुपेक्षाविषयत्वं किं न स्यादिति शंकते—

**हानादानविहीनेऽस्मिन्नुपेक्षा चेत्तृणादिवत् ॥**
**उपेक्षितुः स्वरूपत्वान्नोपेक्ष्यत्वं निजात्मनः ॥ २७ ॥**

**हानेति** । हानं परित्यागः । आदानं स्वीकारः । उपेक्षा औदासीन्यम् । आत्मनो हानाद्यविषयत्ववदुपेक्षाविषयत्वमपि न संभवत्ययोग्यत्वादित्यभिप्रायेण परिहरति—**उपेक्षितुरिति** । उपेक्षितुरुपेक्षाकर्तुर्यो निजात्माऽविनाशिस्वरूपमस्ति तस्य स्वस्वरूपत्वादेव स्वव्यतिरिक्ततृणादिवदुपेक्ष्यत्वमुपेक्षाविषयत्वं न विद्यत इति शेषः ॥ २७ ॥

**अ० टीका**—तत्रापि शंकते—**हानेति** । समाधत्ते—**उपेक्षितुरिति** ॥ २७ ॥

**रा० टीका**—ननु हानविषयत्वमात्मनो नास्तीत्युक्तमनुपपन्नं द्वेषात्त्याज्यत्वदर्शनादिति शंकते—

**रोगक्रोधाभिभूतानां मुमूर्षा वीक्ष्यते क्वचित् ॥**
**ततो द्वेषाद्भवेत्त्याज्य आत्मेति यदि तन्न हि ॥ २८ ॥**

**रोगेति** । यतो मुमूर्षा दृश्यते तत आत्मनि द्वेषसंभवाद्वृश्चिकादिवदात्माऽपि त्याज्य इति यद्युच्येतेति शेषः । तत्त्यागस्याऽऽत्मव्यतिरिक्तदेहविषयत्वान्नैवमिति परिहरति—**तन्न हीति** ॥ २८ ॥

**अ० टीका**—तत्रापि शंकते—**रोगेति** । मुमूर्षा मर्तुमिच्छा । तत्खंडनं सिद्धांती सानुवादं प्रतिजानीते—**इतीत्यादिशेषेण** ॥ २८ ॥

**रा० टीका**—त्यक्तुमिति त्यक्तुमुत्स्रष्टुं योग्यस्योचितस्य देहस्याऽऽत्मता नास्ति कस्य तर्हि सेत्यत आह—

**त्यक्तुं योग्यस्य देहस्य नाऽऽत्मता त्यक्तुरेव सा ॥**
**न त्यक्तर्यस्ति स द्वेषस्त्याज्ये द्वेषे तु का क्षतिः ॥ २९ ॥**

**त्यक्तुरिति** । त्यक्तुर्देहत्यागकारिणो देहातिरिक्तस्य जीवस्य साऽऽत्मतेत्यर्थः । भवतु त्यक्तुरात्मत्वं प्रकृतमायातमित्यत आह—**न त्यक्तरीति** । अतो नाऽऽत्मनस्त्याज्यत्वमित्यभिप्रायः । मा भूदात्मनि विद्वेषो देहे तूपलभ्यत एवेत्याशंक्याऽऽह—**त्याज्येति** । त्याज्ये देहगोचरे द्वेषे सत्यपि का क्षतिरात्मनस्त्यागाभाववादिनो ममेति शेषः ॥ २९ ॥

**अ० टीका**—तदुपपादयति—**त्यक्तुमिति** ॥ २९ ॥

**रा० टीका**—तदेवं न वा अरे पत्युः कामायेत्यारभ्याऽऽत्मनस्तु कामाय सर्वं प्रियं भवतीत्यंतायाः श्रुतेस्तात्पर्यपर्यालोचनयाऽऽत्मनः प्रियतमत्वं प्रदर्श्य युक्तितोऽपि तद्दर्शयति—

**आत्मार्थत्वेन सर्वस्य प्रीतेश्चाऽऽत्मा ह्यतिप्रियः ॥**
**सिद्धो यथा पुत्रमित्रात्पुत्रः प्रियतरस्तथा ॥ ३० ॥**

**आत्मेति** । सर्वस्य सुखसहितस्य तत्साधनजातस्य पतिजायादेरात्मार्थत्वेन स्वस्योप-

कारकत्वेन प्रीतेश्च प्रियत्वादप्यात्मा उपकार्यः स्वयमतिशयेन प्रियः सिद्धो हि । एतदेव दृष्टांतप्रदर्शनेन स्पष्टयति—**यथेति** । लोके यथा पुत्रमित्रात्पुत्रस्य मित्रभूतात्पुत्रद्वारा प्रीतिविषयाद्यज्ञदत्तादेः सकाशात्पुत्रो देवदत्तादिरव्यवधानेन प्रीतिविषयत्वात्तस्मादातिशयेन प्रियो भवति पितुर्विष्णुदत्तादेस्तथा तद्वत्स्वसंबंधित्वेन प्रीतिविषयात्सर्वस्मात्स्वयमतिशयेन प्रियो भवतीत्यर्थः ॥ ३० ॥

**अ० टीका**—फलितं निगमयति—**आत्मेति** । तत्र दृष्टांतं स्पष्टयति—**यथेत्यादिशेषेण** ॥ ३० ॥

**रा० टीका**—एवमात्मनि श्रुतियुक्तिभ्यामुपपादितां निरतिशयां प्रीतिं स्वानुभवप्रदर्शनेन द्रढयति—

**मा न भूवमहं किं तु भूयासं सर्वदेत्यसौ ॥**
**आशीः सर्वस्य दृष्टेति प्रत्यक्षा प्रीतिरात्मनि ॥ ३१ ॥**

**मा न भूवमिति** । अहं मा भूवमिति न, न क्वापि ममाऽऽत्मसत्त्वमस्तु किंतु सर्वदा भूयासं सदा मम सत्ताऽस्तु, इत्येवंरूपाऽऽशीः प्रार्थना सर्वस्य प्राणिजातस्य संबंधिनी दृष्टा । सर्वोऽप्येवमेव प्रार्थयत इत्यर्थः । फलितमाह—**प्रत्यक्षेति** । यत एवं सर्वैः प्रार्थ्यतेऽत आत्मनि निरतिशया प्रीतिः प्रत्यक्षसिद्धेत्यर्थः ॥ ३१ ॥

**अ० टीका**—तदेवातिप्रियत्वं साभिनयमनुभावयति—**मा न भूवमिति** । आशीर्मनोरथः । उपसंहरति—**इतीत्यादिना** ॥ ३१ ॥

**रा० टीका**—वृत्तानुकीर्तनपुरःसरं मतांतरं दूषयितुमनुभाषते—

**इत्यादिभिस्त्रिभिः प्रीतौ सिद्धायामेवमात्मनि ॥**
**पुत्रभार्यादिशेषत्वमात्मनः कैश्चिदीरितम् ॥ ३२ ॥**

**इत्यादिभिरिति** । इतिशब्देनानुभवः परामृश्यते । आदिशब्देन युक्तिश्रुती इत्यादिभिरनुभवयुक्तिश्रुतिलक्षणैस्त्रिभिः प्रमाणैरेवमुक्तेन प्रकारेणाऽऽत्मनि प्रीतौ सिद्धायामपि कैश्चिच्छ्रुत्यादितात्पर्यानभिज्ञैरात्मनः पुत्रभार्यादिशेषत्वं पुत्रादीन्प्रति स्वस्योपसर्जनत्वमीरितमभिहितम् ॥ ३२ ॥

**अ० टीका**—ततः किं तदाह—**इत्यादिभिरिति** त्रिभिः । न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवतीत्यादिश्रुतेर्युक्तिघटितत्वात्प्रयागतीर्थराजे गंगायमुनोभयांभोवच्छ्रुतियुक्तिलक्षणं प्रमाणद्वयं तथा पूर्वपद्योक्तानुभूत्याख्यं तृतीयामिलितैः प्रमाणैरित्यर्थः ॥ ३२ ॥

**रा० टीका**—इदं कुतोऽवगतमित्यत आह—

**एतद्विवक्षया पुत्रे मुख्यात्मत्वं श्रुतीरितम् ॥**
**आत्मा वै पुत्रनामेति तच्चोपनिषदि स्फुटम् ॥ ३३ ॥**

**एतदिति** । एतद्विवक्षयैवं कैश्चिदीर्यत इत्येतदभिव्यक्तीकरणाभिप्रायेणाऽऽत्मा वै पुत्रनामासीदित्यादिकया—**श्रुत्या** पुत्रस्य मुख्यात्मत्वमीरितमित्यर्थः । किं च तत्पुत्रस्य मुख्यात्मत्वमुपनिषदि, **ऐतरेयोपनिषदादौ** स्फुटं व्यक्तमभिहितमिति शेषः ॥ ३३ ॥

**अ० टीका**—ननूक्तप्रमाणत्रयविरुद्धं पुत्राद्युपसर्जनत्वमात्मनस्तैः कथमुच्यत इत्यत आह—**एतदिति**। प्रतिज्ञातकेचिन्मतानुवादेच्छयेत्यर्थः श्रुतीरितं "आत्मा वै पुत्रनामासीत्" इत्यादिश्रुत्या कथितमस्तीति शेषः। उपनिषदि स्फुटं, **ऐतरेयोपनिषदि** प्रपंचितं भवतीत्यर्थः॥ ३३॥

**रा० टीका**—केन वाक्येनेत्याकांक्षायां तद्वाक्यमर्थतः पठति—

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते॥**
**अथास्येतर आत्माऽयं कृतकृत्यः प्रमीयते॥ ३४॥**

**सोऽस्येति**। अस्य पितुः स पुरुषे ह वाऽयमादितो गर्भो भवतीतिप्रकरणादौ पुरुषे देहे गर्भत्वेनोक्तः। अयं सोग्र एव कुमारं जन्मनोऽग्रेऽधिभावयतीत्यत्रातिशयेन पालनीयतयोक्तः पुत्ररूप आत्मा पुण्येभ्यः कर्मभ्यः पुण्यकर्मानुष्ठानाय प्रतिधीयते प्रतिनिधित्वेनावस्थाप्यते पित्रेति शेषः। अथानंतरमस्य पितुरयं प्रत्यक्षेण परिदृश्यमान इतरः पुत्रादन्यो जरसा ग्रस्तः पितृरूप आत्मा स्वयं कृतकृत्योऽनुष्ठितकृत्यजातः सन्प्रमीयते म्रियत इत्यर्थः॥३४॥

**अ० टीका**—अथोक्तोपनिषद्वाक्यमेव किंचिदर्थतः संग्रथयति—**सोऽस्यायमिति**। अस्य पितुः स पुरुषे ह वा अयमादितो गर्भो भवतीति प्रागुपन्यस्त इत्यर्थः। अयं प्रत्यक्षः पुत्ररूपः। पुण्येभ्यः कर्मभ्यः सत्कर्मार्थम्। प्रतिधीयते तदनुष्ठानविषये पिता प्रतिनिधित्वेन विधीयत इति यावत्। अथानंतरमयं प्रत्यक्षोऽस्य पितुरितरो देहरूप आत्मा कृतकृत्यः संभुक्तारब्धकर्मफलः सन्प्रमीयते म्रियत इत्यर्थः॥ ३४॥

**रा० टीका**—उक्तार्थस्य दृढीकरणाय पुत्ररहितस्य परलोकाभावप्रदर्शनपरस्य नापुत्रस्य लोकोऽस्तीतिवाक्यस्यार्थमाह—

**सत्यप्यात्मनि लोकोऽस्ति नापुत्रस्यात एव हि॥**
**अनुशिष्टं पुत्रमेव लोक्यमाहुर्मनीषिणः॥ ३५॥**

**सत्यपीति**। यतः पुत्रस्य मुख्यमात्मत्वमस्त्यत एवाऽऽत्मनि स्वामिन्सत्यपि स्थितेऽप्यपुत्रस्य पुत्ररहितस्य पितुर्लोकः परलोको नास्ति हि, इदं पुराणादिषु प्रसिद्धमित्यर्थः। व्यतिरेकमुखेनोक्तस्यार्थस्यान्वयमुखेन प्रतिपादकस्यानुशिष्टं पुत्रं लोक्यमाहुरितिवाक्यस्यार्थमाह—**अनुशिष्टमिति**। मनीषिणः शास्त्रार्थाभिज्ञा अनुशिष्टं वक्ष्यमाणैस्त्वं ब्रह्मेत्यादिभिर्मंत्रैः शिक्षितमेव पुत्रं लोक्यं लोकाय हितं परलोकसाधनमाहुरित्यर्थः॥ ३५॥

**अ० टीका**—उक्तानुग्राहिकामेव नापुत्रस्य लोकोऽस्तीतिश्रुतिमप्यर्थतोऽनुबध्नाति—**सत्यपीति**। नापुत्रस्य लोकोऽस्तीत्यैतरेयवचः। एवमनुशिष्टं पुत्रं लोक्यमाहुरिति वाक्यमप्यत्र संवादयति—**अनुशिष्टमिति**॥ ३५॥

**रा० टीका**—इदानीमैहिकसुखस्यापि पुत्रहेतुकत्वप्रतिपादनपरं **सोऽयं** मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणेतिश्रुतिवाक्यमर्थतः पठति—

**मनुष्यलोको जय्यः स्यात्पुत्रेणैवेतरेण नो॥**
**मुमूर्षुर्मंत्रयेत्पुत्रं त्वं ब्रह्मेत्यादिमंत्रकैः॥ ३६॥**

**मनुष्यलोक इति**। मनुष्यलोकसुखं पुत्रेणैव जय्यं स्यात्संपाद्यं स्यादितरेण कर्मादिना साधनांतरेण नो नैव भवति पुत्रशून्यस्य सुखसाधनमपि धनादिकं निर्वेदजनकं भवतीति भावः।

अनुशिष्टं पुत्रं लोक्यमित्यत्र पुत्रानुशासनमुक्तमिदानीं तस्यावसरं तन्मंत्रांश्च दर्शयति—**मुमूर्षुरिति** । आदिशब्देन ' त्वं यज्ञस्त्वं लोकः ' इतिमंत्रौ गृह्येते । एभिस्त्वं ब्रह्मेत्यादिभिस्त्रिभिर्मंत्रैर्मुमूर्षुः पिता मरणावसरे पुत्रं मंत्रयेत्पुत्रस्यानुशासनं कुर्यादित्यर्थः ॥ ३६ ॥

**अ० टीका**—तद्वत्सोऽयं मनुष्यलोकः पुत्रेणैव जय्य इति **काण्वश्रुतिमप्याह-मनुष्येति** । पूर्वपद्ये पुत्रस्यानुशासनमुक्तं तत्प्रकारं विधत्ते—**मुमूर्षुरिति** । आदिना त्वं यज्ञस्त्वं लोक इति **मंत्रौ** ॥ ३६ ॥

**रा० टीका**—उक्तमर्थं निगमयति—

**इत्यादिश्रुतयः प्राहुः पुत्रभार्यादिशेषताम् ॥**
**लौकिका अपि पुत्रस्य प्राधान्यमनुमन्वते ॥ ३७ ॥**

**इत्यादीति** । न केवलमयं श्रुतिसिद्धोऽर्थः किं तु लोकप्रसिद्धोऽपीत्याह—**लौकिका इति** ॥ ३७ ॥

**अ० टीका**—उपसंहरति—**इत्यादीति** । आदिना प्रजया पितृभ्य इत्यादि । **भार्यादीति** । अर्धो वा एष आत्मनो यत्पत्नीतिश्रुतिसिद्धमेव । अत्राप्यादिना प्राणादि ॥३७॥

**रा० टीका**—तदेवोपपादयति—

**स्वस्मिन्मृतेऽपि पुत्रादिर्जीवेद्वित्तादिना यथा ॥**
**तथैव यत्नं कुरुते मुख्याः पुत्रादयस्ततः ॥ ३८ ॥**

**स्वस्मिन्निति** । स्वस्मिन्पित्रादावेकेनाऽऽदिशब्देन गृह्यंते द्वितीयेन क्षेत्रादयः । ललितमाह—**मुख्या इति** । यस्मात्स्वप्रयासं सोढ्वाऽपि पुत्रादिजीवनोपायं संपादयति । ततस्तस्मात्पुत्रादयो मुख्याः प्रधानभूता इत्यर्थः ॥ ३८ ॥

**अ० टीका**—अत एव—**स्वस्मिन्निति** । कुरुते देवदत्त इति शेषः । पूर्ववादी फलितमाह—**मुख्या** इत्यादिना ॥ ३८ ॥

**रा० टीका**—एवं लोकप्रसिद्धिभ्यां प्रदर्शितं पुत्रादिप्राधान्यमंगीकरोति—

**बाढमेतावता नाऽऽत्मा शेषो भवति कस्यचित् ॥**
**गौणमिथ्यामुख्यभेदैरात्माऽयं भवति त्रिधा ॥ ३९ ॥**

**बाढमिति** । तर्ह्यात्मनः शेषित्वोपपादनं व्याकुप्येदित्याशंक्याऽऽह—**एतावतेति** । एतावता पुत्रादेः क्वचित्प्राधान्यमस्तीत्येतावता न हि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशंक्य यत्र यत्र व्यवहारे यस्य यस्याऽऽत्मत्वं विवक्ष्यते तस्य तस्याऽऽत्मनस्तत्र तत्र प्राधान्यदर्शनायोपोद्घाततत्वेनाऽऽत्मत्रैविध्यमाह—**गौणेति** । गौणात्मा मिथ्यात्मा मुख्यात्मा चेत्ययमात्मा त्रिधा भवति ॥ ३९ ॥

**अ० टीका**—अथ सिद्धांती समाधातुमर्धमंगीकरोति—**बाढमिति** । शेष उपसर्जनम् । तत्प्रकारमाह—**गौणेत्यादिना** ॥ ३९ ॥

**रा० टीका**—तत्र पुत्रादेर्गौणात्मत्वप्रदर्शनाय लोके गौणप्रयोगमुदाहरति—

**देवदत्तस्तु सिंहोऽयमित्यैक्यं गौणमेतयोः ॥**
**भेदस्य भासमानत्वात्पुत्रादेरात्मता तथा ॥ ४० ॥**

**देवदत्त इति ।** अयं देवदत्तः सिंह इति यद्देवदत्तसिंहयोरैक्यं तद्गौणमौपचारिकं तत्र हेतुमाह—**एतयोरिति ।** दार्ष्टांतिके योजयति—**पुत्रादेरिति** ॥ ४० ॥

**अ० टीका**—ननु भवत्वेवमात्मनो गौणत्वादिना त्रैविध्यं ततः किं प्रकृत इत्यत आह—**देवदत्तस्त्विति ।** गौणं क्रौर्यादिगुणजन्यम् । एतयोः प्रकृतवाक्योक्तदेवदत्तसिंहयोरित्यर्थः । मुख्यं कुतो नेत्यत्राऽऽह—**भेदस्येत्यादिना ।** प्रकृते योजयति—**पुत्रादेरिति ।** आदिना पत्नी ॥ ४० ॥

**रा० टीका**—अनंतरं मिथ्यात्मानं दर्शयति—

**भेदोऽस्ति पंचकोशेषु साक्षिणो न तु भात्यसौ ॥**
**मिथ्यात्मताऽतः कोशानां स्थाणोश्चोरात्मता यथा ॥४१॥**

**भेद इति ।** पंचकोशेष्वानंदमयाद्यन्नमयांतेषु पंचसु कोशेषु साक्षिणः सकाशाद्विद्यमानोऽपि भेदो नावभासतेऽतस्तेषां मिथ्यात्मत्वमित्यर्थः । मिथ्यात्मत्वे दृष्टांतमाह—**स्थाणोरिति ।** वस्तुतश्चोराद्भिन्नस्य स्थाणोश्चोररूपत्वं यथा मिथ्या तद्वदित्यर्थः ॥ ४१ ॥

**अ० टीका**—अथ मिथ्यात्मानं क्रमागतं कथयति—**भेद इति ।** कोशानां ब्राह्मणः प्राणायामं कृत्वा कृत्वाऽहं सुख्यस्मीत्यध्यासगृहीतानां देहादिपंचानामप्युक्तहेतोर्मिथ्यात्मतैवास्तीत्यन्वयः । तत्र निदर्शनमाह—**स्थाणोरित्यादिशेषेण** ॥ ४१ ॥

**रा० टीका**—एवं गौणमिथ्यात्मानावुपपाद्येदानीं साक्षिणो मुख्यात्मत्वमुपपादयति—

**न भाति भेदो नाप्यस्ति साक्षिणोऽप्रतियोगिनः ॥**
**सर्वांतरत्वात्तस्यैव मुख्यमात्मत्वमिष्यते ॥ ४२ ॥**

**न भातीति ।** साक्षिणः साक्षिरूपस्याऽऽत्मनो गौणात्मनः पुत्रादेरिव कस्मादपि भेदो न भाति मिथ्यात्मनो देहादेरिव भेदो नास्त्यपि, तत्रोभयत्र हेतुः—**अप्रतियोगिन इति ।** हेतुगर्भितं विशेषणमप्रतियोगित्वाद्यथा पुत्रादेर्देहादेरपि स्वयं प्रतियोगी विद्यते नैवं स्वस्य वस्तुभूतः कश्चित्प्रतियोग्यस्ति, देहादेः सर्वस्याऽऽरोपितत्वादिति भावः । ननु भेदाभावेन साक्षिणो गौणमिथ्यात्वे मा भूतां, मुख्यात्मत्वं तु कुत इत्यत आह—**सर्वेति ।** सर्वस्माद्देहपुत्रादेरांतरत्वात्सर्वसाक्षिणः प्रतीचः सर्वांतरत्वेन प्रतीयमानत्वात्तस्यैव साक्षिण एवाऽऽत्मत्वं मुख्यमनौपचारिकमिष्यतेऽभ्युपगम्यत इत्यर्थः । अत्रेदमनुमानं सूचितं विमतः साक्षी मुख्यात्मा भवितुमर्हति सर्वांतरत्वात् । यो मुख्यात्मा न भवति स सर्वांतरोऽपि न भवति यथाऽहंकारादिरिति केवलव्यतिरेकी ॥ ४२ ॥

**अ० टीका**—नन्वेवं मुख्यात्माऽपि वक्तव्य इति चेत्सोऽनुपदं सूचितोऽपि मूढैर्न ज्ञायत इति कंठत एव तदुपपादयति—**न भातीति ।** देवदत्ते सिंहस्येव साक्षिणि कस्यचिद्वस्तुनो व्यावहारिकोऽपि भेदो न भाति नापि पंचकोशानामिवास्ति चेति संबंधः । तत्र हेतुं वदंस्तं विशिनष्टि—**अप्रतीति ।** उपलक्षणमिदमनुयोगित्वस्यापि । एवं सर्वमपि घटाद्यविद्यांतं द्वैतं स्वप्रकाशात्साक्षिणः पृथग्भासेत चेत्तत्प्रतियोगिकः साक्षिण्यनुयोगिनि भेदो भासेतापि तथा साक्षिप्रतियोगिकोऽसौ तत्रानुयोगिनि दृश्येऽपि परंतु तस्य रजतादिवत्कल्पितत्वाच्छुक्त्यादेरिव साक्षिणोऽधिष्ठानभूतात्पार्थक्येव स्फूर्त्यादिकमेव नास्तीत्ययमप्रतियोग्येवेति भावः ।

फलितमाह—**सर्वेति** । तथा चायं प्रयोगः । विमतः साक्ष्येव मुख्यात्मा । अखिलांतरत्वात् । व्यतिरेके सर्वदृश्यवदिति केवलव्यतिरेकीत्याशयः ॥ ४२ ॥

**रा० टीका**—भवत्वात्मत्रैविध्यं पुत्रादेः शेषित्वाभिधाने किमायातमित्यत आह—

**सत्येवं व्यवहारेषु येषु यस्याऽऽत्मतोचिता ॥**

**तेषु तस्यैव शेषित्वं सर्वस्यान्यस्य शेषता ॥ ४३ ॥**

**सत्येवमिति** । एवमात्मत्रैविध्ये सत्यपि येषु लौकिकवैदिकलक्षणेषु पालनपोषणब्रह्मात्मत्वानुसंधानादिषु व्यवहारविशेषेषु यस्य पुत्रादेर्देहादेः साक्षिणो वाऽऽत्मत्वमुचितं भवति तेषु तस्य पुत्रादेर्देहादेः साक्षिणो वा शेषित्वं प्रधानत्वमन्यस्य तद्व्यतिरिक्तस्य सर्वस्य शेषता उपसर्जनत्वं भवतीति शेषः ॥ ४३ ॥

**अ० टी०**—ततः किं तदाह—**सत्येवमिति**।शेषित्वमंगित्वम् ।शेषत्वमंगत्वम् ॥४३॥

**रा० टीका**—एतदेव प्रपंचयति—

**मुमूर्षोर्गृहरक्षादौ गौणात्मैवोपयुज्यते ॥**

**न मुख्यात्मा न मिथ्यात्मा पुत्रः शेषी भवत्यतः॥ ४४ ॥**

**मुमूर्षोरित्यादिना** श्लोकपंचकेन । गृहरक्षादौ कर्मविशेषे गौणात्मैव पुत्रभार्यादिरूप एवोपयुज्यत उपयुक्तो भवति । उत्तरत्र जिजीविषुत्वादित्यर्थः । मुख्यात्मा साक्षी नोपयुज्यतेऽविकारित्वान्नापि मिथ्यात्मा तस्य मरणोन्मुखत्वादिति भावः। फलितमाह—**पुत्र इति** । स्पष्टम् ॥ ४४ ॥

**अ० टीका**—तद्व्यवस्थामेवाऽऽह—**मुमूर्षोरित्यादिना** ॥ ४४ ॥

**रा० टीका**—उक्ते गृहरक्षादिव्यवहारे सत्यपि स्वस्मिन्पुत्रादिस्वीकारे दृष्टांतमाह—

**अध्येता वह्निरित्यत्र सन्नप्यग्निर्न गृह्यते ॥**

**अयोग्यत्वेन योग्यत्वाद्वटुरेवात्र गृह्यते ॥ ४५ ॥**

**अध्येतेति** । अयमध्येता वह्निरित्यस्मिन्प्रयोगे स्वरूपेण विद्यमानोऽप्यग्निर्नाग्निशब्दार्थत्वेन गृह्यते तस्याध्येतृत्वायोगात् । किं तु । अध्येतृत्वे योग्यो बटुर्माणवक एवात्रास्मिन्प्रयोगेऽग्निशब्दार्थत्वेन गृह्यते योग्यत्वादित्यर्थः ॥ ४५ ॥

**अ० टीका**—**अध्येतेति** । एवं चेदं निरुक्तगौणात्माख्यपुत्रग्रहणे निदर्शनमित्याशयः ॥ ४५ ॥

**रा० टीका**—एवं गौणात्मप्राधान्यस्थलमुदाहृत्य मिथ्यात्मप्राधान्यस्थलमुदाहरति—

**कृशोऽहं पुष्टिमाप्स्यामीत्यादौ देहात्मतोचिता ॥**

**न पुत्रं विनियुंक्तेऽत्र पुष्टिहेत्वन्नभक्षणे ॥ ४६ ॥**

**कृश इति** । अहं कृशो जातोऽतोऽन्नभक्षणादिना पुष्टिं संपादयिष्यामीत्यादौ लोकव्यवहारेऽन्नभक्षणयोग्यस्य देहस्यैवाऽऽत्मत्वं ग्रहीतुमुचितम्। उक्तमर्थं लोकव्यवहारप्रदर्शनेन द्रढयति—**न पुत्रमिति** ॥ ४६ ॥

**अ० टीका**—**कृशोऽहमिति** ॥ ४६ ॥

**तपसा स्वर्गमेष्यामीत्यादौ कर्त्रात्मतोचिता ॥**
**अनपेक्ष्य वपुर्भोगं चरेत्कृच्छ्रादिकं ततः ॥ ४७ ॥**

**रा० टीका**—किं च । तपसेति । यदा तु तपः कृत्वा स्वर्गं संपादयिष्यामीत्यादिव्यवहारं करोति तदा कर्तृशब्दवाच्यविज्ञानमयस्यैवाऽऽत्मत्वमुचितं न देहादेरित्यर्थः । तदेवोपपादयति—**अनपेक्ष्येति** । यतो न देहस्याऽऽत्मत्वमुचितं ततो देहभोगपरित्यागपूर्वकं कर्तुरुपकारकं कृच्छ्रचांद्रायणादिकं चरतीत्यर्थः ॥ ४७ ॥

**अ० टी०**—तपसेति । वपुरिति । स्रक्चंदनवनितादिशरीरोपभोगमित्यर्थः ॥४७॥

**मोक्ष्येऽहमित्यत्र युक्तं चिदात्मत्वं तदा पुमान् ॥**
**तद्वेत्ति गुरुशास्त्राभ्यां न तु किंचिच्चिकीर्षति ॥ ४८ ॥**

**रा० टीका**—किं च । **मोक्ष्येऽहमिति** । यदा पुमाञ्शमादीन्संपाद्य मुक्तिं प्राप्स्यामीति मतिं करोति तदा गुरुशास्त्राभ्यामाचार्योपदेशवाक्यार्थविचारजन्यापरोक्षज्ञानेन नाहं कर्त्राद्यात्मा सच्चिदानंदब्रह्माहमस्मीति चिदात्मानमवगच्छति तस्य चिदात्मत्वमेवोचितं न तु तत्र कर्त्राद्यात्मत्वमित्यर्थः । **सत्यं** ज्ञानमनंतं ब्रह्म विज्ञानमानंदं ब्रह्म अनंतरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव इत्यादिश्रुतेः ॥ ४८ ॥

**अ० टी०** मोक्ष्येऽहमिति । चिदिति । स्वप्रकाशमाक्ष्याख्यमुख्यात्मत्वमित्यर्थः ४८

**रा० टीका**—उदाहृतानां त्रिविधानामात्मनां व्यवहारविशेषेषु व्यवस्थया प्राधान्ये दृष्टांतमाह—

**विप्रक्षत्रादयो यद्वद्बृहस्पतिसवादिषु ॥**
**अवस्थितास्तथा गौणमिथ्यामुख्या यथोचितम् ॥ ४९ ॥**

**विप्रेति** । यथा ब्राह्मणो बृहस्पतिसवेन यजेतेत्यत्र ब्राह्मणस्यैवाधिकारो न क्षत्रियवैश्ययो राजा राजसूयेन यजेतेत्यत्र राज्ञ एवाधिकारो न ब्राह्मणवैश्ययोः, वैश्यो वैश्यस्तोमेन यजेतेत्यत्र वैश्यस्यैवाधिकारो नेतरयोः । एवं गौणमिथ्यामुख्यभेदानामात्मनां यथायोग्यं स्वोचितव्यवहारेषु प्राधान्यमिति भावः ॥ ४९ ॥

**अ० टीका**—पर्यवसितमाह—**विप्रेति** । **ब्राह्मणो** बृहस्पतिसवेन यजेत । राजा राजसूयेन यजेतेत्यादिश्रुतेरित्यर्थः । आत्मान इति शेषः ॥ ४९ ॥

**रा० टीका**—फलितमाह—

**तत्र तत्रोचिते प्रीतिरात्मन्येवातिशायिनी ॥**
**अनात्मनि तु तच्छेषे प्रीतिरन्यत्र नोभयम् ॥ ५० ॥**

**तत्र तत्रेति** । यस्मिन्व्यवहारे यो य आत्मा उचितो भवति तत्र तत्र तस्मिंस्तस्मिन्व्यवहार उचित उपयोगितया प्रधानभूत आत्मन्येव प्रीतिरतिशायिन्यतिशयवती । **तच्छेषे** तस्याऽऽत्मनः शेषे शेषभूतेऽनात्मन्यात्मव्यतिरिक्ते वस्तुनि प्रीतिमात्रं न निरतिशयं प्रेमेत्यर्थः । अन्यत्राऽऽत्मतच्छेषाभ्यामन्यस्मिन्वस्तुनि नोभयमुभयविधमपि प्रेम नास्तीत्यर्थः ॥ ५० ॥

**अ० टीका**—अथैवं प्रीतिमपि यथोचितां व्यवस्थापयति—**तत्र तत्रेति** । आत्मनि मुख्यात्मन्येव तच्छेषे तत्र तथोक्तगृहरक्षादिव्यवहारे तदंग इत्यर्थः । उभयमतिप्रीत्यादिद्वयमपि । अन्यत्रांगित्वादिशून्ये तु न नवास्तीति योजना ॥ ५० ॥

**रा० टीका**—अन्यत्र नोभयमित्यत्राभिहितस्यान्यशब्दार्थस्यावांतरभेदमाह—

**उपेक्ष्यं द्वेष्यमित्यन्यद्द्वेधा मार्गतृणादिकम् ॥**
**उपेक्ष्यं व्याघ्रसर्पादि द्वेष्यमेवं चतुर्विधम् ॥ ५१ ॥**

**उपेक्ष्यमिति** । अन्यदन्यादि च्युतमानं वस्तूपेक्ष्यमुमेक्षाविषयो द्वेष्यं द्वेषविषयश्चेति द्विधा द्विप्रकारं भवति तदुभयमुदाहरति—**मार्गेति** । मार्गगतं तृणलोष्टादिकमुपेक्ष्यं स्वस्योपद्रवहेतुर्व्याघ्रादिकं द्वेष्यमित्यर्थः । फलितमाह—**एवमिति** ॥ ५१ ॥

**अ० टीका**—ननु किं तदन्यदंगित्वादिशून्यमनात्मवस्त्वित्यत आह—**उपेक्ष्यमिति** । निगमयति—**एवमित्यादिशेषेण** । पदार्थजातमित्यर्थः ॥ ५१ ॥

**रा० टीका**—चातुर्विध्यमेव दर्शयति—

**आत्मा शेष उपेक्ष्यं च द्वेष्यं चेति चतुर्ष्वपि ॥**
**न व्यक्तिनियमः किंतु तत्तत्कार्यात्तथा तथा ॥ ५२ ॥**

**आत्मेति** । नन्वात्मादीनां चतुर्णामपि प्रियतमत्वादिकं किं नियतं नेत्याह—**चतुर्ष्वपीति** । अयमेव प्रियतमोऽयमेव प्रिय इदमेवोपेक्ष्यमिदमेव द्वेष्यं नान्यदिति नियमो नास्तीत्यर्थः । किं तर्हीत्यत आह—**किं त्विति** । तस्मात्तस्मात्कार्यविशेषादुपकारादिरूपात्तथा तथा प्रियादिरूपतेत्यर्थः ॥ ५२ ॥

**अ० टीका**—तद्विशदयति—**आत्मेति** । ननु भवत्वेवमथापि साक्षी तु सर्वांतरत्वान्मुख्यात्मैव प्रियतमः परंतु शेषादीनां त्रयाणां किमंगत्वादिव्यक्तिनियमोऽस्त्ययमेवांगमयमेवोपेक्ष्योऽयमेवद्वेष्य इति व्यक्तिविशेषावच्छेदेनेत्यत आह—**इतीत्यादिशेषेण** ॥ ५२ ॥

**रा० टीका**—सर्वत्राप्यनियमयोजनाय प्रसिद्धे द्वेष्यव्याघ्रे तदभावं दर्शयति—

**स्याद्व्याघ्रः संमुखो द्वेष्यो ह्युपेक्ष्यस्तु पराङ्मुखः ॥**
**लालनादनुकूलश्चेद्विनोदायेति शेषताम् ॥ ५३ ॥**

**स्यादिति** । यदा व्याघ्रः स्वभक्षणाय संमुख आगच्छति तदा द्वेष्यो भवति स एव पराङ्मुखो गच्छति चेदुपेक्ष्यो भवति स एव यदि लालनात् स्वानुकूलो भवति तदा विनोदायेति विनोदसाधनं भवतीतिशेषतां स्वस्योपकारत्वेन प्रियत्वं भजत इत्यभिप्रायः ॥ ५३ ॥

**अ० टीका**—तदुदाहरति—**स्यादिति** । शेषतामंगताम् ॥ ५३ ॥

**रा० टीका**—नन्वेकस्यैव वस्तुनः प्रियत्वादिधर्मत्रयांगीकारे व्यवहारव्यवस्था न स्यादित्याशंक्याऽऽह—

**व्यक्तीनां नियमो मा भूल्लक्षणात्तु व्यवस्थितिः ॥**
**आनुकूल्यं प्रातिकूल्यं द्वयाभावश्च लक्षणम् ॥ ५४ ॥**

**व्यक्तीनामिति** । व्यक्तिनियमाभावेऽपि लक्षणवशाद्व्यवस्था भविष्यतीत्यर्थः । किंलक्षणमित्याकांक्षायां तल्लक्षणमाह—**आनुकूल्यमिति** । अनुकूलत्वं प्रियस्य लक्षणं व्यावर्तको धर्मः प्रतिकूलत्वं द्वेष्यस्य लक्षणमुपक्ष्यस्याऽऽनुकूल्यप्रातिकूल्यरूपद्वयाभावश्च लक्षणमित्यर्थः ॥ ५४ ॥

**अ० टीका**—एतदंगीकृत्य शेषादिलक्षणं पृच्छति—**व्यक्तीनामिति**। तत्संक्षिपति—**आनुकूल्यमिति**। क्रमाच्छेषद्वेष्योपेक्ष्याणामित्यार्थिकम् ॥ ९४ ॥

**रा० टीका**—एतावता ग्रंथसंदर्भेणोपपादितमर्थं बुद्धिसौकर्याय संक्षिप्य कथयति—

**आत्मा प्रेयान् प्रियः शेषो द्वेषोपेक्षे तदन्ययोः ॥**
**इति व्यवस्थितो लोको याज्ञवल्क्यमतं च तत् ॥ ९५ ॥**

**आत्मेति**। आत्मा प्रत्यगानंदः। प्रेयानतिशयेन प्रियः। शेषः स्वोपसर्जनभूतः पदार्थः प्रियः। तदन्ययोस्ताभ्यामात्मनस्तच्छेषाच्चान्ययोः, व्याघ्रपथिगततृणादिरूपयोर्द्वेषोपेक्षे यथाक्रमं भवत इति। एवं चातुर्विध्येन लोको व्यवस्थितो व्यवस्थां प्राप्तः। उक्तप्रकारचतुष्टयातिरिक्तं न किंचिद्विद्यत इत्यभिप्रायः। अयमर्थः। श्रुत्यभिमतोऽपीत्याह—**याज्ञवल्क्येति**। आत्मादीनां प्रियतमत्वादिकं यत्तद्याज्ञवल्क्यमतं च याज्ञवल्क्यस्यापि संमतमित्यर्थः ॥ ९५ ॥

**अ० टीका**—फलितमाह—**आत्मेति** ॥ ९५ ॥

**रा० टीका**—न केवलं **मैत्रेयीब्राह्मण** एवाऽऽत्मनः प्रियतमत्वमुक्तं किं तु पुरुषविधब्राह्मणेऽपीत्यभिप्रायेण तद्वाक्यार्थं संगृह्णाति—

**अन्यत्रापि श्रुतिः प्राह पुत्राद्वित्तात्तथान्यतः ॥**
**सर्वस्मादांतरं तत्त्वं तदेतत्प्रेय इष्यताम् ॥ ९६ ॥**

**अन्यत्रापीति**। " तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरं यदयमात्मा " इत्यनेन **वाक्येन** पुत्रवित्तादेः सर्वस्मादांतरस्याऽऽत्मतत्त्वस्य प्रियतमत्वमीरितमित्यर्थः ॥ ९६ ॥

**अ० टीका**—एवं " तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरं यदयमात्मा " इति **बृहदारण्यक** एवाऽऽत्मनः परमप्रीतिविषयत्वमुक्तमिति वक्तुं तद्वाक्यमेवार्थतः संग्रथयति—**अन्यत्रापीति** ॥ ९६ ॥

**रा० टीका**—भवत्वेवं श्रुतावभिधानं प्रकृते किमायातमित्यत आह—

**श्रौत्या विचारदृष्ट्याऽयं साक्ष्येवाऽऽत्मा न चेतरः ॥**
**कोशान्पंच विविच्यांतर्वस्तुदृष्टिर्विचारणा ॥ ९७ ॥**

**श्रौत्येति**। श्रुत्यर्थपर्यालोचनरूपया विचारदृष्ट्या साक्षिण एव मुख्यमात्मत्वं नेतरस्य पुत्रादेरित्यर्थः। विचारदृष्ट्येत्याभिहितस्य स्वरूपमाह—**कोशानिति**। अन्नमयादीन्पंचकोशांस्तैत्तिरीयश्रुत्युक्तप्रकारेणाऽऽत्मनः पृथक्कृत्यांतःस्थितस्याऽऽत्मनोऽनुभवो विचारणेत्यर्थः ॥ ९७ ॥

**अ० टीका**—ततः किं तदाह—**श्रौत्येति** ॥ ९७ ॥

**रा० टीका**—अंतःस्थितस्य वस्तुनो दर्शनप्रकारमेवाऽऽह—

**जागरणस्वप्नसुप्तीनामागमापायभासनम् ॥**
**यतो भवत्यसावात्मा स्वप्रकाशचिदात्मकः ॥ ९८ ॥**

**जागरेत्यादिना**। जाग्रदाद्यवस्थानां मध्य उत्तरोत्तरावस्थागमस्य पूर्वपूर्वावस्थानिवृत्तेश्चावभासनं यतो नित्यचैतन्यरूपात्साक्षिणो भवति स स्वप्रकाशचिद्रूप आत्मेत्यर्थः ॥ ९८ ॥

**अ० टीका**—नन्वस्त्वेवं पंचकोशविवेके नांतर्वस्तुदर्शनलक्षणश्रुतिजन्यविचारदृष्ट्या साक्ष्यात्मन्येवातिप्रीतिनिर्णीतिरथाप्यसावेव क इत्यत आह—**जागरेति** ॥ ५८ ॥

**रा० टीका**—संग्रहेणोक्तं श्रुत्यर्थं प्रपंचयति—

**शेषाः प्राणादिवित्तांता आसन्नास्तारतम्यतः ॥**
**प्रीतिस्तथा तारतम्यात्तेषु सर्वेषु वीक्ष्यते ॥ ५९ ॥**

**शेषा इति** । साक्षिण्यतिरिक्ताः प्राणादिवित्तांता वक्ष्यमाणाः पदार्थास्तारतम्येनाऽऽत्मन आसन्नाः समीपवर्तिनो भवंति तत्रोपपत्तिमाह—**प्रीतिरिति** । यथा तारतम्येनांऽऽतरत्वं तद्वदेव तेषु प्राणादिषु तारतम्यात्प्रीतिर्वीक्ष्यते सर्वैरपीति शेषः ॥ ५९ ॥

**अ० टीका**—एवमपि के तच्छेषास्तत्राऽऽह—**शेषा इति** । आसन्ना निकटाः॥५९॥

**रा० टीका**—प्रीतेस्तारतम्येनानुभवमेव विशदयति—

**वित्तात्पुत्रः प्रियः पुत्रात्पिंडः पिंडात्तथेंद्रियम् ॥**
**इंद्रियाच्च प्रियः प्राणः प्राणादात्मा प्रियः परः ॥ ६० ॥**

**वित्तादिति** । पिंडोऽन्नमयो देहः । अयं भावः । सर्वः प्राणिभिः पुत्रादिविपत्परिहाराय वित्तव्ययः क्रियते स्वदेहरक्षणाय कदाचित्पुत्रादिरपि दीयते, इंद्रियनाशपरिहाराय ताडनादिना देहपीडाऽप्यंगीक्रियते, मरणप्रसक्तौ तत्परिहारायेंद्रियवैकल्यमप्यंगीक्रियतेऽत एवोत्तरोत्तरमतिशयेन प्रियत्वं सर्वानुभवसिद्धम् । आत्मनस्तु निरतिशयप्रेमास्पदत्वं विद्वदनुभवसिद्धमिति ॥ ६० ॥

**अ० टीका**—तदेवाऽऽह—**वित्तादिति** ॥ ६० ॥

**रा० टीका**—एवमात्मनः प्रियतमत्वे प्रमाणासिद्धेऽपि ज्ञान्यज्ञानिनोर्विप्रतिपत्तिनिरसनाय श्रुत्या तद्विप्रतिपत्तिर्दर्शितेत्याह—

**एवं स्थिते विवादोऽत्र प्रतिबुद्धविमूढयोः ॥**
**श्रुत्योदाहारि तत्राऽऽत्मा प्रेयानित्येव निर्णयः ॥ ६१ ॥**

**एवं स्थित इति** । तत्र निर्णयमाह—**तत्राऽऽत्मेति** । आत्मनः प्रियतमत्वस्योपपादितत्वादित्यर्थः ॥ ६१ ॥

**अ० टीका**—एवं श्रुत्यैवज्ञान्यज्ञानिनोर्विवादमुपन्यस्य प्रियतमत्वमात्मन एव दर्शितमित्याह—**एवमिति** ॥ ६१ ॥

**साक्ष्येव दृश्यादन्यस्मात्प्रेयानित्याह तत्त्ववित् ॥**
**प्रेयान्पुत्रादिरेवेमं भोक्तुं साक्षीति मूढधीः ॥ ६२ ॥**

**रा० टीका**—तामेव विप्रतिपत्तिमाह—**साक्षीति** ॥ ६२ ॥

**अ० टीका**—तत्र कः पक्षस्तत्त्वविदो निरुक्तबृहदारण्यकश्रुतावित्यत आह—**साक्ष्येवेति** । कोऽत्र प्रतिवादिनोऽज्ञस्य पक्ष इत्यतस्तमप्याह—**प्रेयानिति**॥ ६२ ॥

**रा० टीका**—आत्मातिरिक्तस्य प्रियत्ववादिनो विभज्योत्तराभिधानाय तमेव वादिनं विभज्य कथयति—

**आत्मनोऽन्यं प्रियं ब्रूते शिष्यश्च प्रतिवाद्यपि ॥**
**तस्योत्तरं वचो बोधशापौ कुर्यात्तयोः क्रमात् ॥ ६३ ॥**

**आत्मन इति ।** उत्तराभिधानप्रकारमाह–**तस्योत्तरमिति** । तयोः शिष्यप्रतिवादिनोः संबंधिनस्तस्य वचनस्योत्तरं वचः प्रत्युत्तररूपं वाक्यं क्रमेण बोधशापौ बोधरूपं शापरूपं च कुर्यादित्यर्थः ॥ ६३ ॥

**अ० टीका**—अत एव । **आत्मन इति** । तत्रोत्तरं किं सिद्धांतिना तत्त्वविदा विधेयमित्यत आह–तस्येति ॥ ६३ ॥

**रा० टीका**–प्रतिवचनप्रदानरूपं स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीति समनंतरश्रुतिवाक्यमर्थतः पठति—

**प्रियं त्वां रोत्स्यतीत्येवमुत्तरं वक्ति तत्त्ववित् ॥**
**स्वोक्तप्रियस्य दुष्टत्वं शिष्यो वेत्ति विवेकतः ॥ ६४ ॥**

**प्रियं त्वामिति ।** तत्त्वविच्छिष्यप्रतिवादिनावुभावपि प्रति हे शिष्य हे प्रतिवादिन् प्रियं त्वदभिप्रेतं पुत्रादिरूपं स्वनाशेन त्वां शिष्यं प्रतिवादिनं वा रोत्स्यति रोदयिष्यति । इत्येवमुक्तप्रकारेणोत्तरं प्रतिवचनं वक्ति ब्रवीति । इदमेकमेव वचनं शिष्यप्रतिवादिनोरुभयोः कथमुत्तरं जातमित्याशंक्य शिष्यं प्रत्युत्तरं तावद्द्योतयति—**स्वोक्तप्रियस्येत्यादिना वीक्षते तमहर्निशमित्यंतेन** सार्धश्लोकचतुष्टयेन—**स्वोक्तप्रियस्येति** । शिष्यः स्वोक्तप्रियस्य स्वेनाभिहितस्य पुत्रादिरूपस्य प्रीतिविषयस्य विवेकतो वक्ष्यमाणदोषविचारेण दुष्टत्वं वेत्त्यवगच्छति ॥ ६४ ॥

**अ० टीका**—अथ तामेव श्रुतिं **स यो**ऽन्यमात्मनः प्रियं ब्रुवाणं प्रति ब्रूयात्प्रियं त्वां **रोत्स्यती**त्येवमर्थतः पठति–**प्रियमिति** । ततः शिष्ये किं भवति तदाह–**स्वोक्तेति**॥६४॥

**अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ॥**
**लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥ ६५ ॥**
**जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता ॥**
**उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पंडिते ॥ ६६ ॥**
**यूनश्च परदारादि दारिद्र्यं च कुटुंबिनः ॥**
**पित्रोर्दुःखस्य नास्त्यंतो धनी चेन्म्रियते तदा ॥ ६७ ॥**

**रा० टीका**—दोषविचारप्रकारमत्र दर्शयति—**अलभ्यमान इति** । श्लोकत्रयेण ॥ ६५ ॥ ६६ ॥ ६७ ॥

**अ० टीका**—तदेव दौष्ट्यं प्रपंचयति—**अलभ्यमान** इत्यादित्रिभिः ॥ **जातस्येति** । ग्रहो बालग्रहादिः प्रसिद्ध एव ॥ **यूनश्चेति** । सपुत्र इत्यार्थिकम् ॥६५॥६६॥६७॥

**एवं विविच्य पुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि ॥**
**निश्चित्य परमां प्रीतिं वीक्षते तमहर्निशम् ॥ ६८ ॥**

**रा० टीका**—एवं पुत्रगतदोषकीर्तनं दारादिसर्वविषयदोषोपलक्षणार्थम् । **एवं विविच्येति** । एवमुक्तेन प्रकारेण पुत्रादौ विषयजाते विविच्य विद्यमानान्दोषान्विभज्य ज्ञात्वा त-

स्मिन्प्रीतिं परित्यज्य निजात्मनि प्रत्यग्रूपे साक्षिणि परमां निरतिशयां प्रीतिं निश्चित्य तं प्रत्यगात्मानमहर्निशं सर्वदा वीक्षतेऽनुसंधत्त इत्यर्थः ॥ ६८ ॥

**अ० टीका**—ततः किं तदाह—**एवमिति** । आदिना पत्न्यपि । तद्दुःखविवेचनमुक्तं दिङ्मात्रेण **प्रबोधसुधाकरे**—भार्या रूपविहीना मनसः खेदाय जायते पुंसाम् । दैवाद्रूपवती चेत्सा परपुरुषैर्वशीक्रियते " इति । वीक्षतेऽनुसंधत्त इत्यर्थः ॥ ६८ ॥

**रा० टीका**—प्रियं त्वां रोत्स्यतीत्यस्यैव **वाक्यस्य** प्रतिवादिनं प्रति **शापरूपत्वं** प्रकटयति—

**आग्रहाद्ब्रह्मविद्वेषादपि पक्षममुंचतः ॥**
**वादिनो नरकः प्रोक्तो दोषश्च बहुयोनिषु ॥ ६९ ॥**

**आग्रहादिति** । आग्रहादुक्तं पुत्रादिप्रियत्वं सर्वथा न त्यजामीत्येवंरूपाद्ब्रह्मविद्वेषादनेनोक्तं विघटयिष्यामीत्येवंरूपाच्च पक्षं पुत्रादीनामेव प्रियत्वाभिधानरूपमपरित्यजतः प्रतिवादिनो नरकप्राप्तिस्तथा बहुयोनिषु तिर्यगादिष्वनेकेषु जन्मसु दोषः पुत्रभार्यादीष्टवियोगानिष्टप्राप्तिरूपः प्रोक्तः प्रियं त्वां रोत्स्यतीति वदता ज्ञानिनेति शेषः ॥ ६९ ॥

**अ० टीका**—ननु भवत्वेवं शिष्यस्याथापि प्रतिवादिनः किं स्यादिति **तदाह**—**आग्रहादिति** । अमुंचतोऽत्यजत इत्यर्थः ॥ ६९ ॥

**ब्रह्मविद्ब्रह्मरूपत्वादीश्वरस्तेन वर्णितम् ॥**
**यद्यत्तत्तथैव स्यात्तच्छिष्यप्रतिवादिनोः ॥ ७० ॥**

**रा० टीका**—ननु ज्ञानिनोक्तस्यैकवाक्यस्य शिष्यं प्रत्युपदेशरूपत्वं वादिनं प्रति शापरूपत्वं चेति विरुद्धं रूपद्वयं कथं घटत इत्याशंक्योत्तरप्रदातुरीश्वररूपत्वात्तस्याभिप्रायानुसारेणोभयं भविष्यतीति मत्वा तदुपपादकस्येश्वरो ह तथैव स्यादिति समनंतरवाक्यस्य तात्पर्यमाह—**ब्रह्मविदिति** । यतो ब्रह्मविदः स्वस्य ब्रह्मत्वानुभवादीश्वरत्वमस्त्यतस्तेन यं शिष्यादिकं प्रति यद्यदिष्टमनिष्टं वाऽभिधीयते तत्तत्तच्छिष्यप्रतिवादिनोस्तस्य ज्ञानिनो यः शिष्यो यश्च प्रतिवादी तयोस्तथैव स्यादिष्टमनिष्टं वाऽवश्यं भवेदित्यर्थः ॥ ७० ॥

**अ० टीका**—तत्र हेतुः—**ब्रह्मविदिति** । ननु प्रियं त्वां रोत्स्यतीत्येकमेव वचः कथं शिष्यप्रतिवादिनोः क्रमाद्विवेकनरकयोः प्रयोजकं भवतीति चेन्न । अधिकारभेदेन फलभेदात् । यथैकमेव जलं द्राक्षायां मधुरतरं मरीचिकायां कटुतरं च तद्वदिति तत्त्वम् ॥ ७० ॥

**रा० टीका**—व्यतिरेकमुखेनोक्तस्यार्थस्यान्वयमुखेन प्रतिपादकमात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते नेहास्य प्रियं प्रमायुकं **भवतीति**समनंतरवाक्यमर्थतः पठति—

**यस्तु साक्षिणमात्मानं सेवते प्रियमुत्तमम् ॥**
**तस्य प्रेयानसावात्मा न नश्यति कदाचन ॥ ७१ ॥**

**यस्त्विति** । तु शब्द उक्तवैलक्षण्यद्योतनार्थः । अनात्मप्रियत्ववादिनोऽन्यो यः शिष्य आत्मानमेवोत्तमं प्रियं निरतिशयं प्रेमगोचरं सेवते सदाऽऽत्मानं स्मरति तस्य शिष्यादेः प्रेयान्प्रियतमत्वेनाभिमतोऽसावात्मा प्रतिवाद्यभिमतं प्रियमिव न कदा चिद्विनश्यति किं तु सदानंदरूपः सन्नवभासत इत्यर्थः ॥ ७१ ॥

**अ० टीका**—ततः पर्य[illegible]नमाह—**यस्त्विति** ॥ ७१ ॥

**रा० टीका**—इत्थमात्मनः परप्रेमास्पदत्वहेतुं प्रसाध्येदानीं फलितमाह—

**परप्रेमास्पदत्वेन परमानंदरूपता ॥**
**सुखवृद्धिः प्रीतिवृद्धौ सार्वभौमादिषु श्रुता ॥ ७२ ॥**

**परप्रेमेति** । अत्रायं प्रयोग । आत्मा परमानंदरूपः । निरतिशयप्रेमविषयत्वाद्यः परमानंदरूपो न भवति स निरतिशयप्रेमविषयो न भवति यथा घटादिरिति केवलव्यतिरेकी परप्रेमास्पदत्वहेतोरात्मनः परमानंदरूपतासाधने सामर्थ्यद्योतनाय प्रीतिवृद्धौ सुखवृद्धिमुदाहरति—**सुखवृद्धिरिति** । यतः सार्वभौमादिहिरण्यगर्भांतेषु पदविशेषेषु यत्र यत्र प्रीतिर्वर्धते तत्र तत्र सुखाभिवृद्धिरस्तीति तैत्तिरीयबृहदारण्यकश्रुत्योरभिहितमतः प्रीतेर्निरतिशयत्वे सत्यानंदस्यापि निरतिशयत्वमवगंतुं शक्यत इति भावः ॥ ७२ ॥

**अ० टीका**—तत्र हेतुः—**परेति** । एवं च जीवन्मुक्तिसुखातिशय एव तस्य भवतीति भावः ॥ ७२ ॥

**चैतन्यवत्सुखं चास्य स्वभावश्चेच्चिदात्मनः ॥**
**धीवृत्तिष्वनुवर्तेत सर्वास्वपि चितिर्यथा ॥ ७३ ॥**

**रा० टीका**—नन्वात्मनः परमानंदरूपत्वमनुपपन्नं तथात्वे चैतन्यस्येव तत्स्वरूपभूतस्याऽऽनंदस्यापि सर्वासु धीवृत्तिष्वनुवृत्तिः प्रसज्येतेति शंकते—**चैतन्यवदिति** ॥ ७३ ॥

**अ० टीका**—अत्र शंकते—**चैतन्यवदिति** ॥ ७३ ॥

**रा० टीका**—चिदानंदयोरुभयोरप्यात्मस्वरूपत्वेऽपि वृत्तिषु चित एवानुवृत्तिर्नानंदस्येति दृष्टांतावष्टंभेन परिहरति—

**मैवमुष्णप्रकाशात्मा दीपस्तस्य प्रभा गृहे ॥**
**व्याप्नोति नोष्णता तद्वच्चितेरेवानुवर्तनम् ॥ ७४ ॥**

**मैवमिति** । यथोष्णप्रकाशात्मकस्य दीपस्य प्रकाश एव गृहादावनुगच्छति नोष्णता, एवं चैतन्यस्यैवानुवृत्तिर्नाऽऽनंदस्येत्यर्थः ॥ ७४ ॥

**अ० टीका**—तत्र सदृष्टांतं समाधत्ते—**मैवमिति** ॥ ७४ ॥

**रा० टीका**—ननु चिदानंदयोरभेदे चिदभिव्यंजकधीवृत्तावेवानंदाभिव्यक्तिरपि स्यादित्याशंक्य तथा नियमाभावे दृष्टांतमाह—

**गंधरूपरसस्पर्शेष्वपि सत्सु यथा पृथक् ॥**
**एकाक्षेणैक एवार्थो गृह्यते नेतरस्तथा ॥ ७५ ॥**

**गंधेति** । यथैकद्रव्यवर्तिनां गंधादीनां चतुर्णां मध्ये घ्राणादिनैकेनेंद्रियेण गंधादिरेक एव गुणो गृह्यते नेतरस्तथा चिदानंदयोर्मध्ये चित एवावभासनमित्यर्थः ॥ ७५ ॥

**अ० टीका**—नन्वस्त्वेवं चितेरेवानुवर्तनमथापि तदभिन्नस्याऽऽनंदस्य कुतो न चित्तवृत्तिष्वनुवर्तनमित्याशंकां दृष्टांतेनैव निराचष्टे—**गंधेति** । आम्रफलादिद्रव्य इति शेषः । एकाक्षेण घ्राणाद्येकैकेंद्रियेणेत्यर्थः । एक एव गंधादिरेकैक एव । तथा तद्वत्सामान्यतश्चित्तवृत्त्या चितिरेव । रम्यादिस्वेष्टविषयकज्ञानादिवृत्त्या त्वानंदोऽपि व्यज्यत इति भावः ॥ ७५ ॥

**रा० टीका**—दृष्टांतदार्ष्टांतिकयोर्वैषम्यं शंकते—

**चिदानंदौ नैव भिन्नौ गंधाद्यास्तु विलक्षणाः ॥**
**इति चेत्तद्भेदोऽपि साक्षिण्यन्यत्र वा वद ॥ ७६ ॥**

**चिदानंदाविति** । विलक्षणा भिन्नेत्यर्थः । उक्तवैषम्यं परिहर्तुं दार्ष्टांतिके चिदानंदयोरभेदः किं स्वाभाविक उत औपाधिक इति विकल्पयति—**तद्भेद इति** । तदभेदस्तयोश्चिदानंदयोरभेद ऐक्यं साक्षिण्यात्मस्वरूपे वाऽन्यत्न तदुपाधिभूतासु वृत्तिषु वेत्यर्थः ॥७६॥

**अ० टीका**—उक्तदृष्टांते वैषम्यं शंकते—**चिदानंदाविति** । तत्रापि सिद्धांती विकल्प्य पृच्छति—**इति चेदित्यादिना** तच्छंकानुवादपूर्वकम् ॥ ७६ ॥

**रा० टीका**—प्रथमे पक्षे दृष्टांतदार्ष्टांतिकयोः साम्यमाह—

**आद्ये गंधादयोऽप्येवमभिन्नाः पुष्पवर्तिनः ॥**
**अक्षभेदेन तद्भेदे वृत्तिभेदात्तयोर्भिदा ॥ ७७ ॥**

**आद्य इति** । आद्ये चिदानंदयोः साक्षिणि भेदाभावपक्षे पुष्पवर्तिनो गंधादयोऽप्येवं चिदानंदवदेवाभिन्नाः परस्परं भेदरहिता इतरपरिहारेणैकस्यानेतुमशक्यत्वादिति भावः । द्वितीये पक्षेऽपि साम्यमाह—**अक्षेति** । अक्षाणां गंधादिग्राहकाणां घ्राणादींद्रियाणां भेदेन तद्भेदे तेषां गंधादीनां भेदाभ्युपगमे तद्वदेव वृत्तिभेदाच्चिदानंदाभिव्यक्तिहेतूनां राजससात्त्विकवृत्तीनां भेदात्तयोश्चिदानंदयोर्भिदा भेदो भविष्यतीत्यर्थः ॥ ७७ ॥

**अ० टीका**—आद्यं प्रति साम्येन समाधत्ते—**पुष्पेति** । मालत्यादिकुसुमनिष्ठा गंधरूपरसस्पर्शा अप्यभिन्ना एव भेदेन नैव प्रतीयंत इत्यर्थः। इंद्रियभेदेन तद्विषयकज्ञानभेदात्तद्भेदमाशंक्य तत्रापि तौल्येनैव समाधानमभिधत्ते—**अक्षेति** । अक्षभेदेनेंद्रियभेदेन । तद्भेदे तेषां गंधादीनां भेदेऽवश्यं वाच्ये सति प्रकृतेऽपि वृत्तिभेदान्निरुक्तसामान्यविशेषभावावच्छिन्नोदाहृतचित्तवृत्तिभेदादेव तयोश्चिदानंदवस्तुनोरपि भिदा भेदो भवतीत्यन्वयः ॥ ७७ ॥

**रा० टीका**—ननु तर्हि चिदानंदयोरैक्यं कुत्रोपलभ्यत इत्याशंक्याऽऽह—

**सत्त्ववृत्तौ चित्सुखैक्यं तद्वृत्तेर्निर्मलत्वतः ॥**
**रजोवृत्तेस्तु मालिन्यात्सुखांशोऽत्र तिरस्कृतः ॥ ७८ ॥**

**सत्त्ववृत्ताविति** । सत्त्ववृत्तौ शुभकर्मोपस्थापितायां सत्त्वगुणपरिणामरूपायां बुद्धिवृत्तौ चित्सुखैक्यं चिदानंदयोरैक्यं भासत इति शेषः । तत्रोपपत्तिमाह—**तद्वृत्तेरिति** । कुतस्तर्हि भेदोऽवभासत इत्यत आह—**रजोवृत्तेरिति** ॥ ७८ ॥

**अ० टीका**—ननु कथमसौ वृत्तिभेदश्चिदानंदादिव्यंजननियामक इत्यत आह—**सत्त्वेति** ॥ ७८ ॥

**रा० टीका**—विद्यमानस्यापि सुखांशस्य तिरस्कारे दृष्टांतमाह—

**तिंतिणीफलमित्यम्लं लवणेन युतं यदा ॥**
**तदाऽम्लस्य तिरस्कारादीषदम्लं यथा तथा ॥ ७९ ॥**

**तिंतिणीति** । यथा तिंतिणीफले लवणयोगादत्यम्लत्वं तिरोहितं तद्वद्रजोवृत्तावानंदस्य तिरोभाव इत्यर्थः ॥ ७९ ॥

**अ० टीका**—तत्र दृष्टांतमाह—**तिंतिणीति** ॥ ७९ ॥

**रा० टीका**—गूढाभिसंधिं शंकते—

**ननु प्रियतमत्वेन परमानंदताऽऽत्मनि ॥**
**विवेक्तुं शक्यतामेवं विना योगेन किं भवेत् ॥ ८० ॥**

**नन्विति ।** ननूक्तेन प्रकारेणाऽऽत्मनः परमानंदरूपत्वं परप्रेमास्पदत्वहेतुना गौणमिथ्यात्मरूपेभ्यः प्रियोपेक्ष्यद्वेष्येभ्यो विवेक्तुं विविच्य ज्ञातुं शक्यतां नाम तथाऽपि नायं विवेको मुक्तिसाधनमपरोक्षज्ञानद्वारा मुक्तिहेतोर्योगस्याभिधानादिति गूढोऽभिसंधिः ॥ ८० ॥

**अ० टीका**—नन्वेवं प्रियतमप्रियोपेक्ष्यद्वेष्यविचारे क्रियमाणे निरुपचरितप्रीतिविषयत्वात्परमानंदरूप आत्मैवेति विवेके सत्यप्यपरोक्षप्रमा विना योगाभ्यासं नैव सेत्स्यतीति गूढाभिसंधिः शंकते—**नन्विति** ॥ ८० ॥

**रा० टीका**—गूढाभिसंधिरेवोत्तरमाह—

**यद्योगेन तदेवेति वदामो ज्ञानसिद्धये ॥**
**योगः प्रोक्तो विवेकेन ज्ञानं किं नोपजायते ॥ ८१ ॥**

**यद्योगेनेति ।** यथा योगस्यापरोक्षज्ञानहेतुत्वमस्ति, एवं विवेकस्यापीत्यत्रापि गूढोऽभिसंधिः । इदानीं चोद्यपरिहारयोरुभयोरभिसंधिं प्रकटयति—**ज्ञानेति ।** यथा परोक्षज्ञानसाधनत्वेन योगोऽभिहितः पूर्वस्मिन्नध्याय एवमस्मिन्नध्यायेऽभिहितेन गौणाद्यात्मत्वविवेकद्वारा कोशपंचकविवेकेनापि ज्ञानमुत्पद्यत एवेत्यर्थः ॥ ८१ ॥

**अ० टीका**—यद्योगेनापरोक्षज्ञानं भवतीति त्वयोच्यते तदेव विचारेणापि भवेदिति गूढाभिसंधिरेव सिद्धांत्युत्तरयति—**यदिति ।** तत्रापि शंकते—**ज्ञानेत्यादिना ।** तत्र सिद्धांती साक्षेपं समाधत्ते—**विवेकेनेति**प्रभृतिशेषेण ॥ ८१ ॥

**रा० टीका**—तत्र किं प्रमाणमित्याशंक्याऽऽह—

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥**
**इति स्मृतं फलैकत्वं योगिनां च विवेकिनाम् ॥ ८२ ॥**

**यत्सांख्यैरिति ।** सांख्यैरात्मानात्मविवेकिभिर्यत्स्थानं मोक्षरूपं प्राप्यते गम्यते तद्योगैर्योगिभिरपि गम्यते प्राप्यत इत्यनेन योगिनां विवेकिनां च फलैकत्वं ज्ञानद्वारा मोक्षलक्षणफलस्यैकत्वमुक्तमित्यर्थः ॥ ८२ ॥

**अ० टीका**—विचारादिमार्गद्वयेऽपि तत्त्वसाक्षात्कारद्वारा मोक्षसाधकत्वे स्मृतिं प्रमाणयति—**यत्सांख्यैरिति ।** सम्यक्ख्यायंत्युपनिषदादितात्पर्यविषयत्वेन कथयंति ब्रह्मात्मैक्यं द्वैतमिथ्यात्वेनेति तथा ॥ ८२ ॥

**असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ॥**
**इत्थं विचार्य मार्गौ द्वौ जगाद परमेश्वरः ॥ ८३ ॥**

**रा० टीका**—ननु विवेकयोगयोरेकमेव चेत्फलं तर्ह्यनयोरन्यतरस्यैव युक्तं शास्त्रेषु प्रतिपादनं नोभयोरित्याशंक्याधिकारिवैचित्र्याद्युक्तमुभयोः प्रतिपादनमित्यभिप्रायेणाऽऽह—**असाध्य इति** ॥ ८३ ॥

**अ० टीका**—ननु विवेकयोगयोस्तुल्यफलत्वेऽन्यतरविधानमेव **शास्त्रे** कुतो नोक्तमित्याशंक्याधिकारिभेदेनोभयोरप्यावश्यकत्वादित्यभिप्रेत्य—"द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव । योगस्तद्वृत्तिरोधः स्याज्ज्ञानं सम्यगवेक्षणम् । असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः । प्रकारौ द्वौ ततो देवो जगाद परमः शिवः" इति **बृहद्योगवासिष्ठवाक्यांशेन** समाधत्ते—**असाध्य इति** ॥ ८३ ॥

**रा० टीका**—नन्वत्यंतायाससाध्यस्य योगस्य निरायाससुलभाद्विवेकादतिशयो वक्तव्य इत्याशंक्य सोऽतिशयः किमपरोक्षज्ञानजनकत्वादुच्यते, उत रागद्वेषादिनिवृत्तिहेतुत्वात्, अथ वा द्वैतानुपलब्धिकारणत्वादिति विकल्प्य प्रथमपक्षे फलसाम्यमित्याह—

**योगे कोऽतिशयस्तेऽत्र ज्ञानमुक्तं समं द्वयोः ॥**
**रागद्वेषाद्यभावश्च तुल्यो योगिविवेकिनोः ॥ ८४ ॥**

**योग इति** । द्वयोर्विवेकयोगयोरुभयोरपि ज्ञानलक्षणं फलं सममुक्तं यत्सांख्यैरित्यादिनाऽतस्तव योगे कोऽतिशयो न कोऽपीत्यर्थः । द्वितीयं प्रत्याह—**रागद्वेषेति** ॥ ८४ ॥

**अ० टीका**—ननु महाप्रयाससाध्येऽनायाससाध्याद्विवेकाद्योगे कोऽतिशय इत्याशंक्य किमपरोक्षज्ञानजनकत्वमुत रागादिराहित्यमाहोस्विद्वैतानुपलंभनमिति विकल्प्याऽऽद्यं प्रत्याह—**योग इति** । अपरोक्षज्ञानजनकत्वं योगविवेकयोर्द्वयोरपि निरुक्त**भगवद्वाक्ये** समानमेवोक्तमित्यर्थः । द्वितीयं प्रत्याह—**रागेति** ॥ ८४ ॥

**रा० टीका**—विवेकिनो रागाद्यभावमुपपादयति—

**न प्रीतिर्विषयेष्वस्ति प्रेयानात्मेति जानतः ॥**
**कुतो रागः कुतो द्वेषः प्रातिकूल्यमपश्यत ॥ ८५ ॥**

**न प्रीतिरिति** । आत्मा प्रेयानित्यात्मा प्रियतम इति जानतः पुरुषस्य न तावद्विषयेषु प्रीतिरस्त्यतो न तेषु रागो जायते रागहेतोरानुकूल्यज्ञानस्याभावात् । नापि द्वेषः, तद्धेतोः प्रातिकूल्यज्ञानस्याभावादित्यर्थः ॥ ८५ ॥

**अ० टीका**—तदुपपादयति—**नेति** । अतः कुतो राग इति पूर्वेणान्वयः । एवं सर्वत्राऽऽत्मानुसंधानेन प्रातिकूल्यमपश्यतो द्वेषोऽपि कुतः स्यादितियोजना ॥ ८५ ॥

**रा० टीका**—ननु विवेकिनो व्यवहारदशायां देहाद्युपद्रवकारिषु द्वेषो दृश्यत इत्याशंक्य तदा योगिविवेकिनोः स तुल्य इति परिहरति—

**देहादेः प्रतिकूलेषु द्वेषस्तुल्यो द्वयोरपि ॥**
**द्वेषं कुर्वन्न योगी चेदविवेक्यपि तादृशः ॥ ८६ ॥**

**देहादेरिति** । प्रतिकूलेषु वृश्चिकादिषु द्वेषकर्तुस्तदा योगित्वमेव नाभ्युपगम्यते चेद्भवता तर्हि तादृशस्य विवेकित्वमपि नाभ्युपगच्छाम इत्याह—**द्वेषमिति** । तादृशो द्वेषकर्ता चेदविवेक्यपि विवेकवानपि न भवतीत्यर्थः ॥ ८६ ॥

**अ० टीका**—ननु देहेंद्रियादिपीडकेषु द्वेषो विवेकिनोऽपि व्यवहारे दृश्यत **एवेति** चेद्योगिनोऽप्येतत्समानमेवेत्याह—**देहादेरिति** । ननु प्रतिकूलद्वेषिणि योगित्वमेव नास्तीति चेत्तादृशे विवेकित्वमपि न स्यादित्याह—**द्वेषमिति** ॥ ८६ ॥

**रा० टीका**—ननु विवेकिनो द्वैतदर्शनमस्ति योगिनस्तु तन्नास्तीति तृतीये विकल्पे योगिनोऽतिशयो भविष्यतीत्याशंक्य विवेकिनस्तद्द्वैतदर्शनं किं व्यवहारदशायामुच्यत उतान्यदेति विकल्प्याऽऽद्ये तद्योगिनोऽपि समानमित्याह—

**द्वैतस्य प्रतिभानं तु व्यवहारे द्वयोः समम् ॥**
**समाधौ नेति चेत्तद्वन्नाद्वैतत्वविवेकिनः ॥ ८७ ॥**

**द्वैतस्येति** । द्वितीयमाशंकते—**समाधाविति** । योगिनः समाधिकाले द्वैतदर्शनं नास्तीत्युच्यते चेदित्यध्याहारः । तर्हि विवेकिनोऽपि विवेकदशायां द्वैतादर्शनं तुल्यमिति परिहरति **तद्वदिति** । योगिनः समाधिदशायामिवाद्वैतत्वविवेकिनोऽद्वैतं तत्त्वमितिश्रुतियुक्तिभ्यां विवेचनं कुर्वतोऽपि तस्मिन्काले द्वैतदर्शनं नास्तीत्यर्थः ॥ ८७ ॥

**अ० टीका**—ननु द्वैतं योगिनो न भासत इत्ययमेव विवेकाद्योगेऽतिशय इति तृतीयपक्षश्चेत्किं तदभानं व्यवहारे समाधौ वेति विकल्प्याऽऽद्ये द्वयोरपि व्यवहारे द्वैतभानं समानमेवान्यथा व्यवहार एव न स्यादित्याह—**द्वैतस्येति** । अथ द्वितीयमाशंक्य निराकरोति—**समाधाविति** । तद्वद्योगिवदद्वैतत्वविवेकिनोऽपि वैचारिकसमाधौ द्वैतभानं नैवास्तीति संबंधः ॥ ८७ ॥

**रा० टीका**—कथं तदभाव इत्याशंक्योपरितनेऽध्याये तदुपपादयिष्यत इत्याह—

**विवक्ष्यते तदस्माभिरद्वैतानंदनामके ॥**
**अध्याये हि तृतीयेऽतः सर्वमप्यतिमंगलम् ॥ ८८ ॥**

विवक्ष्यत इति । उक्तमर्थं निगमयति—**सर्वमपीति** ॥ ८८ ॥

**अ० टीका**—ननु कथं तद्वैचारिकसमाधावद्वैतत्वविवेकिनो द्वैतभानं नास्तीत्युपपद्यत इत्यत्राऽऽह—**विवक्ष्यत इति** । उपसंहरति—**अत इत्यादिशेषेण** ॥ ८८ ॥

**रा० टीका**—ननु द्वैतादर्शनसहितात्मदर्शनवतो योगित्वमेव भविष्यतीति शंकते—

**सदा पश्यन्निजानंदमपश्यन्निखिलं जगत् ॥**
**अर्थाद्योगीति चेत्तर्हि संतुष्टो वर्धतां भवान् ॥ ८९ ॥**

**सदा पश्यन्निति** । इष्टापत्त्या परिहरति—**तर्हीति** ॥ ८९ ॥

**अ० टीका**—ननु नामरूपाद्यात्मकस्य द्वैतस्याद्वैतसच्चिदानंदात्मनि कल्पितत्वेन सन्मात्रस्वरूपात्ततः पृथक्कारे सद्य एव गगनकुसुमायमानत्वं संपाद्यत इति वास्तविक विवेक्येव वास्तविकयोगीति चेदिष्टापत्तिरेवेत्यभिनंदति—**सदेति** ॥ ८९ ॥

**ब्रह्मानंदाभिधे ग्रंथे मंदानुग्रहसिद्धये ॥**
**द्वितीयाध्याय एतस्मिन्नात्मानंदो विवेचितः ॥ ९० ॥**

**इति श्री० ब्रह्मानंद आत्मानंदाख्यो द्वितीयोऽध्यायः ॥ २ ॥**

**रा० टीका**—अध्यायतात्पर्यं संक्षिप्य दर्शयति—**ब्रह्मानंदेति** ॥ ९० ॥

इति श्रीमत्परमहंसप० भारतीतीर्थविद्यारण्यमुनिकिंकरेण रामकृष्णाख्यविदुषा विरचिताऽऽत्मानंदव्याख्या समाप्ता ॥ १२ ॥

**अ० टीका**—अथाध्यायार्थं संक्षिपति—**ब्रह्मानंदेति** । ननूपक्रमे भवता—" अ-

द्वैतिभिरैक्यार्थो यथामतं क्रियत एवमन्यैश्च । इत्यश्रद्धा येद्धा प्रतिबंधोऽयं द्वितीय ऐक्येऽपि" इत्यार्यया शुद्धजीवब्रह्मैक्यविषयकः प्रमाणासंभावनाख्यः प्रतिबंधो य उपन्यस्तस्तथा–" अद्वैतरूप ऐक्ये मैत्रेयीब्राह्मणादिवाक्यानाम् । सम्यक्समन्वयोक्तेस्तत्परता द्वादशेऽपि विज्ञेया " इत्यार्यांतरेणाऽऽत्मानंदाख्यद्वादशप्रकरणस्यास्य तद्बाधकत्वं यदुक्तं तत्कथमुपपद्यत इति चेदुच्यते । अत्र हि मैत्रेयीब्राह्मणादिवाक्यान्येव जीवत्वोपलक्षितचिन्मात्रस्य ब्रह्मत्वोपलक्षितचिन्मात्रेण सह निसर्गसिद्धैक्य एव स्वारसिकत्वेन पर्यवस्यंतीति शापांतनिग्रहस्थानावधिकभेदवादिजल्पकथापूर्वकं प्रतिपादनात्किमिति निरुक्तैक्यविषयका श्रद्धा समृद्धिमूलप्रमाणासंभावनात्मकोक्तप्रतिबंधबाधकत्वं न स्यात् । यद्यत्राऽऽचार्यैर्निरुक्तवाक्योपन्यासपूर्वकमुक्तैक्यप्रतिपादनं नैव कृतं स्यात्तर्हि घटेतापि त्वदुक्तशंकावकाशः । श्रुत्याऽपि—" न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति " इत्यादिरूपया । तथा " तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरं यदयमात्मा " इत्यादिरूपया च कंठत एव निरतिशयानंदरूपब्रह्मण एवाऽऽत्मत्वं बोधयंत्या तदनंगीकारे च भेदवादिभ्यः शापप्रदानमपि ब्रह्मविन्मुखेन कुर्वत्या सर्वलोकानुभवमपि ब्रुवंत्योक्तशंकात्मकप्रतिबंधः प्रबाध्यत इति बोध्यम् ॥ ९० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमणपष्ठ्युपनामकश्रीनारायणशास्त्रिचरणसरोजराजहंसायमानमानसमोडकोपनामकाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानंदेंदुकौमुद्याभिधायां पंचदशीटीकायामात्मानंदप्रकाशो द्वादशः संपूर्णः ॥ १२ ॥

**इति श्रीमद्विद्यारण्यविरचितायां पञ्चदश्यां द्वादशं प्रकरणम् ॥ १२ ॥**

श्रीमच्छंकरगुरुवरचरणराजीवपरागराजिमात्रविराजमानोऽस्तु संततमतितराम् ॥ श्रीरस्त्वनवरतमखिलगोब्राह्मणवृंदानामभीष्टपुष्टिकरी श्रौती ॥ एकोऽद्वैतस्त्रिपुटीक्षयाच्चतुर्थश्च पंचकोशज्ञः ॥ षट्शास्त्रसार आत्मा सप्तमभूमिस्थितोऽष्टमूर्तिरपि ॥ १ ॥

इत्यच्युतविरचिताद्वैतामृतमंजर्यामेवार्यो सर्वश्रुतितत्त्वसंसूचिका ॥

---

# अथ पञ्चदश्यां त्रयोदशं प्रकरणम् ।

## तत्र ब्रह्मानन्देऽद्वैतानन्दाख्यस्तृतीयोऽध्यायः ।

**रा० टीका**—नन्वानंदस्त्रिविधो ब्रह्मानंदो विद्यासुखं तथा विषयानंद इति **प्रथमाध्याय** आनंदत्रयमेव प्रतिज्ञाय **द्वितीयाध्याये** तदरिक्तात्मानंदनिरूपणात्तद्विरोधो जायत इत्याशंक्याऽऽह—

**योगानंदः पुरोक्तो यः स आत्मानंद इष्यताम् ॥**
**कथं ब्रह्मत्वमेतस्य सद्वयस्येति चेच्छृणु ॥ १ ॥**

**योगानंद इति** । यथा प्रतिज्ञातस्यैव ब्रह्मानंदस्य योगजन्यसाक्षात्कारविषयत्वेन योगानंदत्वं निरुपाधिकत्वेन निजानंदत्वं च व्यवहृतं तथा तस्यैव गौणमिथ्यामुख्यात्मविवेचनेनावगम्यत्वाविवक्षयाऽऽत्मानंदत्वमभिहितमिति भावः । ननु सजातीयाद्गौणात्मनः पुत्रभार्यादेर्मिथ्यात्मनो देहादेर्विजातीयादाकाशादेश्च विभिन्नस्य सद्वयस्याऽऽत्मानंदस्य **प्रथमाध्यायोक्ता** द्वितीययोगानंदरूपता न संभवतीति शंकते—**कथमिति** । सजातीयत्वेनाभिमतस्य गौणात्मनः पुत्रादेर्मिथ्यात्मनो देहादेश्च **तैत्तिरीय**श्रुत्यभिहितजगदंतःपातित्वादाकाशादेश्च जगत आत्मानंदातिरेकेणासत्त्वाच्चाद्वितीयब्रह्मरूपता तस्य घटत इति सबहुमानमुत्तरमाह—**शृण्विति** ॥१॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्द्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतिनाम् ॥
सर्वांश्चाऽऽचार्यवर्यान्निनुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ॥
अद्वैतानंद स्मर प्रकाशतो द्योतयामि कौमुद्याः ॥ २ ॥

अथ भगवान्भारतीतीर्थमुनिः पंचदश्याः पूर्वस्मिन्स्वकृते द्वादशे तदीयतृतीयांशत्वेनाध्यायपंचकरूपब्रह्मानंदीयात्मानंदाख्य**द्वितीयाध्यात्मके** प्रकरणेऽते यदुक्तं द्वितीयाध्याय एतस्मिन्नात्मानंदो विवेचित इति तेन सह संगतिं प्रारिप्सिताद्वैतानंदाख्यस्य तृतीयाध्यायाभिधत्रयोदशप्रकरणस्य सूचयन्प्रथितप्रमाणप्रयोजनं मंगलमप्यात्मानंदपदध्वनिततत्त्वानुसंधानलक्षणं कलयन्प्रकृतप्रकरणप्रतिपाद्यप्रयोजने अपि व्यंजयंस्तत्कामुकाधिकार्यापि द्योतयंश्चाऽऽक्षिप्य शिष्यं समाधातुं संमुखयति—**योगानंद इति** ॥ १ ॥

**आकाशादिस्वदेहांतं तैत्तिरीयश्रुतीरितम् ॥**
**जगन्नास्त्यन्यदानंदादद्वैतब्रह्मता ततः ॥ २ ॥**

**रा० टीका**—**आकाशादीति**। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिकया **तैत्तिरीय**श्रुत्याऽभिहितं जगत्स्वकारणभूतादात्मानंदाद्यतोऽन्यत्पृथङ्नास्त्यतः कारणात्तस्याऽऽत्मानंदस्याद्वितीयत्वमित्यभिप्रायः ॥ २ ॥

**अ० टीका**—तदाह–**आकाशादिती** । तथा च तत्र **ब्रह्मवल्यामाम्नायते**– " **तस्माद्वा** एतस्मादात्मन आकाशः संभूतः " इत्यारभ्य " **स वा एष** पुरुषोऽन्नरसमयः " इत्यंतम् ॥ २ ॥

**रा० टीका**—ननूदाहृतश्रुतिवाक्य आत्मनः कारणत्वं श्रूयते नाऽऽनंदस्येत्याशंक्य तत्प्रतिपादकं तदीयमेवाऽऽनंदाद्ध्येव खल्विमानि भूतानि जायंत इत्यादिवाक्यमर्थतः पठति–

**आनंदादेव तज्जातं तिष्ठत्यानंद एव तत् ॥**
**आनंद एव लीनं चेत्युक्तानंदात्कथं पृथक् ॥ ३ ॥**

**आनंदादेवेति** । व्याख्यातम् । फलितमाह—**इत्युक्तेति** । अत्रेदमनुमानं सूचितं विमतं जगदानंदान्न भिद्यते तत्कार्यत्वात् यद्यत्कार्यं तत्ततो न भिद्यते, यथा मृत्कार्यं घटादि मृदो न भिद्यत इति ॥ ३ ॥

**अ० टीका**—तत्र हेतुः–**आनंदादेवेति** । एतदपि तत्रैव श्रूयते–" **आनंदाद्ध्येव** खल्विमानि भूतानि जायंते । आनंदेन जातानि जीवंति । आनंदं प्रयंत्यभिसंविशंति " इति ॥ ३ ॥

**रा० टीका**—कुलालादुत्पन्नस्य घटस्य ततो भेददर्शनादनैकांतिकता हेतोरित्याशंक्य कुलालस्य निमित्तकारणत्वादिह चाऽऽनंदस्योपादानत्वसमर्थनान्मैवमित्याह—

**कुलालाद्धट उत्पन्नो भिन्नश्चेति न शंक्यताम् ॥**
**मृद्वदेष उपादानं निमित्तं न कुलालवत् ॥ ४ ॥**

**कुलालादिति** । एष आत्मानंदो मृद्वत् मृद्धटस्येवोपादानं कारणं कुलालवत् कुलाल इव निमित्तकारणं न भवति ॥ ४ ॥

**अ० टीका**—तत्र तार्किकाशंकामुक्त्वा दूषयंति–**कुलालादिति** । तत्र हेतुः–**मृद्वदिति** । " यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातꣳ स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् " इति हि सामश्रुतिः ॥ ४ ॥

**रा० टीका**—ननु कुतो नोपादानत्वं कुलालस्यापीत्याशंक्य स्थितिलयाधारत्वरूपोपादानत्वलक्षणाभावादित्याह—

**स्थितिर्लयश्च कुंभस्य कुलाले स्तो न हि क्वचित् ॥**
**दृष्टौ तौ मृदि तद्वत्स्यादुपादानं तयोः श्रुतेः ॥ ५ ॥**

**स्थितिरिति** । हि यस्मात्कारणाद्घटस्य स्थितिलयौ कुलालाधारौ न भवतोऽतो नोपादानत्वमिति शेषः । कुत्र तर्हि तावित्यत आह—**दृष्टाविति** । तौ घटस्य स्थितिलयौ तदुपादानभूतायां मृद्येव दृष्टौ प्रत्यक्षेणोपलब्धौ । भवत्वेवं तत्र प्रकृते किमायतमित्यत आह— **तद्वदिति** । यद्वद्घटस्य मृदुपादानं तद्वज्जगतोऽप्यानंद उपादनं स्यात् । तत्र हेतुः–**तयोरिति** । तयोर्जगत्स्थितिलययोः श्रुतेरानंदाद्ध्येवेत्यादिवाक्य आनंदहेतुकत्वश्रवणादित्यर्थः ॥ ५ ॥

**अ० टीका**—तत्रोपपत्तिमाह—**स्थितिरिति** ॥ ५ ॥

**रा० टीका**—आनंदस्य स्वाभिमतं जगदुपादानत्वं वक्तुं तदवांतरभेदमाह—

**उपादानं त्रिधा भिन्नं विवर्ति परिणामि च ॥**
**आरंभकं च तत्रांत्यौ न निरंशेऽवकाशिनौ ॥ ६ ॥**

**उपादानमिति ।** तत्र विवर्तं परिशेषयितुमितरौ पक्षौ दूषयति—**तत्रेति ।** अंत्यारंभ-परिणामपक्षौ निरंशे निरवयवे वस्तुनि नावकाशिनाववकाशवंतौ न भवतः ॥ ६ ॥

**अ० टीका**—नन्वेवमपि घटे मृत्प्रतीतिवद्वैतेऽप्यानंदप्रतीत्यापत्तिरित्याशंक्य तद्व्यवस्थां कथयितुमुपादाने त्रैविध्यमभिधाय प्रकृतेऽत्यपक्षद्वयं सांख्यतार्किकमतं निरंशत्वान्नैव संमतमित्याह—**उपादानमिति ।** अवकाशिनौ सावकाशौ । पक्षाविति शेषः ॥ ६ ॥

**रा० टीका**—तयोरनवकाशत्वमेव दर्शयितुं तावदारंभकवादिनो मतमनुवदति—

**आरंभवादिनोऽन्यस्मादन्यस्योत्पत्तिमूचिरे ॥**
**तंतोः पटस्य निष्पत्तेर्भिन्नौ तंतुपटौ खलु ॥ ७ ॥**

**आरंभेति ।** आरंभवादिनो वैशेषिकादयः । अन्यस्मात्कार्यापेक्षयाऽन्यस्मात्कारणादन्यस्य कारणापेक्षयाऽन्यस्य कार्यस्योत्पत्तिमूचिर उक्तवंतः । कुत एवं वदंतीत्यत आह—**तंतोरिति ।** निष्पत्तेरुत्पत्तेर्दर्शनादिति शेषः । एतावता कथं कार्यकारणभेदासिद्धिरित्यत आह—**भिन्नाविति ।** विरुद्धपरिणामत्वाद्विरुद्धार्थक्रियावत्त्वाच्चेति भावः ॥ ७ ॥

**अ० टीका**—तत्र तार्किकेष्टमारंभं सोदाहरणं संक्षिप्य लक्षयति—**आरंभेति ।** हेतुभिन्नसत्ताक एवाऽऽरंभ इति तल्लक्षणम् ॥ ७ ॥

**रा० टीका**—इदानीं परिणामस्वरूपमाह—

**अवस्थांतरतापत्तिरेकस्य परिणामिता ॥**
**स्यात्क्षीरं दधि मृत्कुंभः सुवर्णं कुंडलं यथा ॥ ८ ॥**

**अवस्थेति ।** एकस्यैव वस्तुनः पूर्वावस्थात्यागपुरःसरमवस्थांतरप्राप्तिः परिणाम इत्यर्थः। तमुदाहरति—**स्यादिति ।** यथा क्षीरमृत्सुवर्णादीनां क्षीरादिव्यवहारयोग्यतां परित्यज्य दध्यादिव्यवहारयोग्यतापत्तिः ॥ ८ ॥

**अ० टीका**—एवं परिणाममप्याह—**अवस्थेति ।** मृदाद्युदाहरणद्वयं तु तार्किकनिराकरणायैव । अवस्थांतरं तु पटेऽपि दधिसममेवेति नैवाऽऽरंभः ॥ ८ ॥

**रा० टीका**—इदानीं विवर्तलक्षणमाह—

**अवस्थांतरभानं तु विवर्तो रज्जुसर्पवत् ॥**
**निरंशेऽप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात् ॥ ९ ॥**

**अवस्थांतरेति ।** तुशब्दोऽस्य पूर्वास्मात्पक्षद्वयाद्वैलक्षण्यद्योतनार्थः । पूर्वावस्थामपरित्यज्यैवावस्थांतरभानं विवर्तः । तमुदाहरति—**रज्ज्विति ।** यथा रज्ज्वात्मनाऽवस्थितस्यैव द्रव्यस्य सर्पात्मनाऽवभासनं विवर्तः । ननु विवर्तमानस्य रज्ज्वादेः सांशत्वदर्शनान्निरंशे सोऽपि न घटत इत्याशंक्य निरवयवे गगनादावपि तद्दर्शनान्मैवमित्याह—**निरंशेऽपीति ।** असौ विवर्तो व्योम्नि तलत्वमधोमुखेंद्रनीलकटाहतुल्यत्वं मालिन्यं नीलवर्णता तयोः कल्पनादाकाशस्वरूपानभिज्ञैरारोप्यमाणत्वादित्यर्थः ॥ ९ ॥

**अ० टीका**—तद्वद्विवर्तमप्याह—**अवस्थांतरेति** । तमेव प्रकृते योजयति—**निरंशेऽपीति** । तलमधोमुखेंद्रनीलकटाह इति सांप्रदायिकः ॥ ९ ॥

**रा० टीका**—फलितमाह—

**ततो निरंश आनंदे विवर्तो जगदिष्यताम् ॥**
**मायाशक्तिः कल्पिका स्यादैंद्रजालिकशक्तिवत् ॥ १० ॥**

**तत इति** । ततो निरंशेऽपि विवर्तसंभवाज्जगन्निरंश आनंदे विवर्तः कल्पित इत्यंगीकार्यमित्यर्थः । नन्वद्वितीय आनंदे जगत्कल्पनमनुपपन्नं कल्पनाहेतोरभावादित्याशंक्याऽऽह—**मायेति** । शक्तेः कल्पकत्वं क्व दृष्टमित्यत आह—**ऐंद्रजालिकेति** । यथैंद्रजालिकनिष्ठाया मणिमंत्रादिरूपाया मायायाः शक्तेर्गंधर्वनगरादिकल्पकत्वं तथेत्यर्थः ॥ १० ॥

**अ० टीका**—ततः किं प्रकृते तदाह—**तत इति** ॥ १० ॥

**शक्तिः शक्तात्पृथङ्नास्ति तद्वद्दृष्टेर्न चाभिदा ॥**
**प्रतिबंधस्य दृष्टत्वाच्छक्त्यभावे तु कस्य सः ॥ ११ ॥**

**रा० टीका**—नन्वानंदात्मातिरिक्ताया मायाया अभ्युपगमे द्वैतापत्तिरित्याशंक्य तस्या अनिर्वचनीयत्वेनानृतत्वं वक्तुमुत्तरत्र वक्ष्यमाणाया लौकिक्या अग्न्यादिशक्तेस्तावद्भेदेनाभेदेन वा निर्वक्तुमशक्यत्वं दर्शयति—**शक्तिरिति** । शक्तिरग्न्यादिनिष्ठा स्फोटादिजनिका शक्तादग्न्यादिस्वरूपात्पृथग्भेदेन नास्ति । कुत इत्यत आह—**तद्वदिति** । तद्वत्तथात्वस्य भेदेनासत्त्वस्य दृष्टेर्दर्शनादग्न्यादिस्वरूपातिरेकेणानुपलभ्यमानत्वादित्यर्थः । नाप्यग्न्यादिस्वरूपमेव शक्तिरित्याह—**न चेति** । अभिदाऽभेदोऽपि न च नैव । तत्रापि हेतुमाह—**प्रतिबंधस्येति** । मणिमंत्रादिभिः शक्तिकार्यः स्फोटादेः प्रतिबंधदर्शनात्स्वरूपातिरिक्ता शक्तिर्द्रष्टव्येत्यभिप्रायः । भवतु प्रतिबंधदर्शनं शक्तेर्भेदोऽपि मा भूत्को दोषस्तत्राऽऽह—**शक्त्यभाव इति** । प्रत्यक्षसिद्धस्याग्न्यादिस्वरूपस्य प्रतिबंधासंभवात्तद्व्यतिरिक्तशक्त्यनभ्युपगमे सति प्रतिबंधोऽपि निर्विषयः स्यादित्यभिप्रायः ॥ ११ ॥

**अ० टीका**—ननूक्तशक्तिकल्पने किं प्रमाणमित्याशंक्य तस्याः शक्तात्पृथक्सत्त्वं चेद्भवेदपि प्रमाणप्रतिपित्सा तत्र तव तदेव तावल्लौकिकाग्न्यादिशक्तावपि न संभवतीत्याह—**शक्तिरिति । तद्वदिति** । तद्वदिति भाव प्रधानो निर्देशः । यथा घटोऽभिधेयः प्रमेयत्वात्पटवदिति केवलान्वयिन्यनुमाने घटपदस्य लाघवान्मीमांसकसंमता जातावेव शक्तिर्विशेषनिर्देशाभावामानयेत्यादौ गोपदशक्तिवदतो घटादिपदनिर्देशो भावप्रधानस्तथा प्रकृतेऽपि तद्वत्पदशक्यस्य तथात्वस्य दृष्टेरग्न्यादौ शक्तेर्दृष्टत्वादित्यर्थः । एवं शक्तेर्भेदाभावेऽभेदापत्तिरित्यत आह—**न चेति** । तत्र हेतुः—**प्रतिबंधस्येति** । मण्यादिजन्याग्निनिष्ठदाहशक्तिप्रतिबंधस्येत्यर्थः । तावता शक्त्यभेदाभावेऽर्थापत्तिं सिद्धां ध्वनयति—**शक्त्यभावे त्वित्यादिशेषेण** । शक्ताद्भिन्नत्वेनाभावे तु स प्रतिबंधो मण्यादिकृतदाहादिकार्यनिरोधः कस्य स्यादग्नेः सत्त्वेऽपि तत्कार्यस्य दाहस्य निरोधस्तु मण्यादिकृतः प्रत्यक्षेणोपलभ्यते स न स्यात्तस्मात्तदन्यथानुपपत्त्या शक्तिः शक्तादभिन्नेत्यपि वक्तुमयुक्तमेवेति भावः ॥ ११ ॥

**रा० टीका**—नन्वतींद्रियायाः शक्तेः कथं प्रतिबंधोऽवगंतुं शक्यत इत्याशंक्याऽऽह—

**शक्तेः कार्यानुमेयत्वादकार्ये प्रतिबंधनम् ॥**
**ज्वलतोऽग्नेरदाहे स्यान्मंत्रादिप्रतिबंधता ॥ १२ ॥**

**शक्तेरिति** । अतींद्रियाऽपि शक्तिर्यतः कार्यलिंगगम्याऽतोऽकार्ये सत्यपि कारणे कार्यानुत्पत्तौ सत्यां प्रतिबंधनं प्रतिबंधोऽवगम्यत इति शेषः । उक्तमर्थं दृष्टांतप्रदर्शनेन स्पष्टयति—**ज्वलत इति** । लोके स्वरूपेण ज्वलतोऽग्नेः सकाशाद्दाहादिलक्षणे कार्येऽनुत्पद्यमाने सति मंत्रादिप्रतिबंधता मंत्रादीनां शक्तिप्रतिबंधकत्वं स्यादित्यर्थः ॥ १२ ॥

**अ० टीका**—नन्वेवमनिर्वचनीयातींद्रियायाः शक्तेः प्रतिबंधोऽपि कथमवगम्यत इत्यत आह—**शक्तेरिति । मंत्रादीति** । मंत्रमण्यौषधादिना प्रतिबद्धता प्रतिबद्धशक्तिता ज्वलतोऽप्यग्नेरदाहे तत्कर्तृकदाहाभावे सति स्यादिति संबंधः ॥ १२ ॥

**रा० टीका**—इत्थं लौकिकशक्तिं स्वरूपतः प्रमाणतश्चोपन्यस्येदानीं मायाशक्तिसद्भावे " ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् " इति **श्वेताश्वतरोपनि**षद्वाक्यमर्थतः पठति—

**देवात्मशक्तिं स्वगुणैर्निगूढां मुनयोऽविदन् ॥**
**पराऽस्य शक्तिर्विविधा क्रिया ज्ञानबलात्मिका ॥ १३ ॥**

**देवात्मेति** । मुनयः कालस्वभावादिकारणवादेषु दोषदर्शनवंतः । जगत्कारणजिज्ञासया ध्यानयोगमास्थिता अधिकारिणो देवात्मशक्तिं देवस्य द्योतमानस्य स्वप्रकाशचिदात्मनः प्रत्यगभिन्नस्य ब्रह्मणः शक्तिं मायारूपां स्वगुणैः स्वकार्यभूतैः स्थूलसूक्ष्मशरीरैर्निगूढां नितरां गूढामावृतामविदन्साक्षात्कृतवंत इत्यर्थः । तस्यामेवोपनिषदि स्थितं " पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च " इतिवाक्यांतरमर्थतः पठति—**पराऽस्येति** । अस्य ब्रह्मणः परोत्कृष्टा जगत्कारणभूता शक्तिर्विविधा श्रूयत इति वाक्यशेषः । विविधत्वमेवाऽऽह—**क्रियेति** । क्रियाज्ञाने प्रसिद्धे बलमिच्छाशक्तिर्ज्ञानक्रियाशक्तिसाहचर्यात् । क्रियादिशक्तय आत्मा स्वरूपं यस्याः सा क्रिया ज्ञानबलात्मिका ॥ १३ ॥

**अ० टीका**—अथाऽऽत्मसत्तयैवोक्तशक्तिसत्त्वे " **ते ध्यानयोगा**नुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढां " इति " **पराऽस्य**शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च " इति श्रुतिं प्रमाणयति—**देवेति** । निगूढां व्याख्याताम् ॥ १३ ॥

**रा० टीका**—इदं वाक्यद्वयं कुत्रत्यमित्यत आह—

**इति वेदवचः प्राह वसिष्ठश्च तथाऽब्रवीत् ॥**
**सर्वशक्ति परं ब्रह्म नित्यमापूर्णमद्वयम् ॥ १४ ॥**

**इतीति** । न केवलं मायाशक्तिः श्रुतिप्रसिद्धा किं तु स्मृतिप्रसिद्धाऽपीत्याह—**वसिष्ठ इति** । यथा श्रुतिर्विचित्रां मायाशक्तिमुक्तवती वसिष्ठोऽपि तां तथोक्तवान्**वासिष्ठा**भिधे ग्रंथ इति शेषः । मायाप्रतिपादकान्वासिष्ठश्लोकानेव पठति—**सर्वेति** । नित्यमापूर्णमद्वयमिति ब्रह्मणः पारमार्थिकं रूपमुक्तं सर्वशक्तीति तस्यैव सोपाधिकं रूपम् ॥ १४ ॥

**अ० टीका**—एवं वेदवद्वसिष्ठवचोऽप्यत्रास्तीत्याह—**इतीति** । तद्वचनान्येव पठति—**सर्वेत्यादिना** ॥ १४ ॥

**ययोल्लसति शक्त्याऽसौ प्रकाशमधिगच्छति ॥**
**चिच्छक्तिर्ब्रह्मणो राम शरीरेषूपलभ्यते ॥ १५ ॥**

**रा० टीका**—तत्परं ब्रह्म यदा यया मायाशक्त्योल्लसति विकसति विवर्तत इत्यर्थः । तदा तदाऽसावसौ शक्तिः प्रकाशमधिगच्छत्यभिव्यक्तिं प्राप्नोति । इदानीं तामेवाभिव्यक्तिं प्रपंचयति—**चिच्छक्तिरि**ति द्वाभ्याम् । शरीरेषु देवतिर्यङ्मनुष्यादिलक्षणेषु चिच्छक्तिश्चेतनत्वव्यवहारहेतुभूतोपलभ्यते दृश्यते ॥ १५ ॥

**अ० टीका**—असौ शक्तिः । शरीरेषु देहावच्छेदेन ॥ १५ ॥

**स्पंदशक्तिश्च वातेषु दार्ढ्यशक्तिस्तथोपले ॥**
**द्रवशक्तिस्तथांऽभःसु दाहशक्तिस्तथाऽनले ॥ १६ ॥**

**रा० टीका**—स्पंदशक्तिश्चलनहेतुभूता प्रकाशमधिगच्छतीत्युक्त्याऽनभिव्यक्तदशायामपि ब्रह्मणि जगत्सत्ता दर्शिता ॥ १६ ॥

**अ० टीका**—॥ १६ ॥

**शून्यशक्तिस्तथाऽऽकाशे नाशशक्तिर्विनाशिनि ॥**
**यथांऽडेंऽतर्महासर्पो जगदस्ति तथाऽऽत्मनि ॥ १७ ॥**

**रा० टीका**—अनभिव्यक्तस्यापि सत्त्वे दृष्टांतमाह—**यथांऽड** इति ॥ १७ ॥

**अ० टीका**—॥ १७ ॥

**फलपत्रलतापुष्पशाखाविटपमूलवान् ॥**
**ननु बीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ १८ ॥**

**रा० टीका**—विचित्रस्यापि तस्य सत्त्वे दृष्टांतमाह—**फले**ति ॥ १८ ॥

**अ० टीका**—॥ १८ ॥

**रा० टीका**—ननु सर्वासामपि शक्तीनां युगपदेवाभिव्यक्तिः कुतो न स्यादित्याशंक्याऽऽह—

**क्वचित्काश्चित्कदाचिच्च तस्मादुद्यंति शक्तयः ॥**
**देशकालविचित्रत्वात्क्ष्मातलादिव शालयः ॥ १९ ॥**

**क्वचिदि**ति । क्वचिद्देशविशेषे कदाचित्कालविशेषे काश्चिच्छक्त्यादयः । तासामयुगपदभिव्यक्तौ दृष्टांतमाह—**क्ष्मातलादि**ति । यथा भूमिगतानां सर्वेषां बीजानां मध्ये देशविशेषे कालविशेषे च केषांचिदेव बीजानामंकुरोत्पत्तिर्न सर्वेषां तद्वदित्यर्थः ॥ १९ ॥

**अ० टीका**—॥ १९ ॥

**रा० टीका**—इदानीं जगतः कल्पनामात्ररूपतां दर्शयितुं तत्कल्पकस्य मनसो रूपं तावद्दर्शयति—

**स आत्मा सर्वगो राम नित्योदितमहावपुः ॥**
**यन्मनाङ्मननीं शक्तिं धत्ते तन्मन उच्यते ॥ २० ॥**

**स इ**ति । नित्योदितमहावपुः, नित्यं सदोदितं प्रकाशमानं महद्देशकालादिपरिच्छे-

देहरहितं वपुः स्वरूपं यस्य स तथा। यद्यस्मिन्काले मनागीषन्मननीं स्वपरावबोधनरूपां शक्तिं मायापरिणामरूपां धत्ते धारयति तत्तदा मन इत्युच्यते ॥ २० ॥

**अ टीका**—मनः समष्टि ॥ २० ॥

**रा० टीका**—इदानीं कल्पनाप्रकारमाह—

**आदौ मनस्तदनुबंधविमोक्षदृष्टी पश्चात्प्रपंचरचना भुवनाभिधाना॥ इत्यादिका स्थितिरियं हि गता प्रतिष्ठामाख्यायिका सुभगबालजनोदितेव ॥ २१ ॥**

**आदाविति ।** आदौ प्रथमं मननशक्त्युल्लासेन मनो भवति तदनु तदनंतरं बंधविमोक्षदृष्टी बंधविमोक्षकल्पने भवतः पश्चादनंतरं बंधदृष्टावेव । भुवनाभिधाना भुवनमित्यभिधानं यस्याः सा भुवनाभिधाना । प्रपंचरचना प्रपंचस्य गिरिनगरीसरित्समुद्रादेः रचनाकल्पनं भवतीत्यादिका । एवंप्रकारा, इयं जगतः स्थितिः । प्रतिष्ठां स्थैर्यं गता प्राप्ता । कल्पितस्यापि वास्तवत्वप्रतीतौ दृष्टांतमाह—**आख्यायिकेति** । बालजनायोदितोक्ताऽऽख्यायिका कथा यथा वास्तवत्वबुद्धिं गता तथेदं जगदित्यर्थः ॥ २१ ॥

**अ० टीका**—**सुभगेति ।** राजकुमारेत्यर्थः ॥ २१ ॥

**रा० टीका**—तामेव वासिष्ठस्थां कथां कथयति—

**बालस्य हि विनोदाय धात्री वक्ति शुभां कथाम् ॥**
**क्वचित्संति महाबाहो राजपुत्रास्त्रयः शुभाः ॥ २२ ॥**
**द्वौ न जातौ तथैकस्तु गर्भ एव न च स्थितः ॥**
**वसंति ते धर्मयुक्ता अत्यंतासति पत्तने ॥ २३ ॥**
**स्वकीयाच्छून्यनगरान्निर्गत्य विमलाशयाः ॥**
**गच्छंतो गगने वृक्षान् ददृशुः फलशालिनः ॥ २४ ॥**
**भविष्यन्नगरे तत्र राजपुत्रास्त्रयोऽपि ते ॥**
**सुखमद्य स्थिताः पुत्र मृगयाव्यवहारिणः ॥ २५ ॥**
**धात्र्येति कथिता राम बालकाख्यायिका शुभा ॥**
**निश्चयं स ययौ बालो निर्विचारणया धिया ॥ २६ ॥**

**बालस्येत्यादिना** ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

**अ० टीका**—उक्तदृष्टांतमेव स्पष्टयति—**बालस्येति** ॥ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥

**इयं संसाररचना विचारोज्झितचेतसाम् ॥**
**बालकाख्यायिकेवेत्थमवस्थितिमुपागता ॥ २७ ॥**

**रा० टीका**—दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति—**इयमिति** ॥ २७ ॥

**अ० टीका**—दार्ष्टांतिके योजयति—**इयमिति** ॥ २७ ॥

**रा० टीका**—वसिष्ठोक्तमुपसंहरति—

**इत्यादिभिरुपाख्यानैर्मायाशक्तेश्च विस्तरम् ॥**
**वसिष्ठः कथयामास सैव शक्तिर्निरूप्यते ॥ २८ ॥**

**इत्यादिभिरिति।** एवं मायासद्भावे प्रमाणमुपन्यस्य तस्या अनिर्वचनीयत्वं वक्तुं प्रतिजानीते–**सैव शक्तिरिति** ॥ २८ ॥

**अ० टीका**—वसिष्ठोक्तिमुपसंहृत्य प्रकृतं प्रातिजानीते—**इत्यादिभिरिति**॥२८॥

**कार्यादाश्रयतश्चैषा भवेच्छक्तिर्विलक्षणा ॥**
**स्फोटांगारौ दृश्यमानौ शक्तिस्तत्रानुमीयते ॥ २९ ॥**

**रा० टीका**—**कार्यादिति**। एषा मायाशक्तिः कार्यात्स्वकार्यभूताज्जगत आश्रयतः स्वाश्रयाद्ब्रह्मणश्च विलक्षणा विपरीतस्वभावा भवेत्। मायाशक्तेः कार्यादाश्रयतो वैलक्षण्यं दृष्टांतेन स्पष्टयति—**स्फोटांगाराविति**। वह्निगतशक्तेः कार्यरूपः स्फोट आश्रयरूपोऽगारश्च प्रत्यक्षगम्यौ। शक्तिस्तु कार्यानुमेया। अतस्ताभ्यां सा विलक्षणेत्यर्थः ॥ २९ ॥

**अ० टीका**—प्रतिज्ञातमेव प्रपंचयति—**कार्यादित्यादिना**। तत्रोदाहरणमाह–**स्फोटेति** ॥ २९ ॥

**रा० टीका**—उक्तन्यायं मृच्छक्तावपि योजयति—

**पृथुबुध्नोदराकारो घटः कार्योऽत्र मृत्तिका ॥**
**शब्दादिभिः पंचगुणैर्युक्ता शक्तिस्त्वतद्विधा ॥ ३० ॥**

**पृथुबुध्नेति**। यः पृथुबुध्नोदराकारः पृथु स्थूलं बुध्नं वर्तुलमुदरं यस्य स पृथुबुध्नोदरस्तथाविध आकारो यस्य स पृथुबुध्नोदराकारस्तादृग्घटः कार्यः, शब्दस्पर्शरूपरसगंधाख्यपंचगुणोपेता मृत्तिका आश्रयः, शक्तिस्त्वतद्विधोभयविलक्षणेत्यर्थः ॥ ३० ॥

**अ० टीका**—दार्ढ्यायोदाहरणांतरमप्याह—**पृथ्विति**। पृथु स्थूलं बुध्नं वर्तुलमुदरं यस्य तादृगाकारो यस्य स तथेत्यर्थः। एतादृशो घटः कार्यः कुलालेन दंडादिना निष्पाद्यो भवतीत्यर्थः। अत्र घटाख्ये कारणं शब्दादिभिः पंचगुणैर्युक्तास्तिशक्तिस्तु अतद्विधा कार्यादिविलक्षणा भवतीत्यन्वयः ॥ ३० ॥

**रा० टीका**—वैलक्षण्यमेवाऽऽह—

**न पृथ्वादिर्न शब्दादिः शक्तावस्तु यथा तथा ॥**
**अत एव ह्यचिंत्यैषा न निर्वचनमर्हति ॥ ३१ ॥**

**न पृथ्वादिरिति**। शक्तौ पृथुत्वादिकार्यधर्मो नास्ति शब्दादिक आश्रयधर्मोऽपि न विद्यतेऽतो विलक्षणेत्यर्थः। तर्हि सा कीदृशीत्यत आह—**अस्त्विति**। यथा तथेत्युक्तमेवार्थं स्पष्टयति—**अत एवेति**। यतः कार्यादाश्रयतश्च विलक्षणा, अत एवैषाऽचिंत्या चिंतितुमशक्या। ननु तर्हि अचिंत्यत्वमेव तस्याः स्वरूपं स्यादित्याशंक्याऽऽह—**न निर्वचनमिति**। भेदेनाभेदेनाचिंत्यत्वादिना वा येन केनापि रूपेण निर्वचनं नार्हतीत्यर्थः ॥ ३१ ॥

**अ० टीका**—तदेवाऽऽह—**नेत्यादिना**। फलितमाह–**अस्त्वित्यादिपूर्वार्धशेषेण**। ततः किं तदाह–**अत एवेति** ॥ ३१ ॥

**रा० टीका**—ननु कारणस्वरूपातिरिक्ता शक्तिर्यद्यस्ति तर्हि कारणस्वरूपमिव सा कुतो नावभासत इत्याशंक्याऽऽह—

**कार्योत्पत्तेः पुरा शक्तिर्निगूढा मृद्यवस्थिता ॥**
**कुलालादिसहायेन विकाराकारतां व्रजेत् ॥ ३२ ॥**

**कार्योत्पत्तेरिति ।** मृच्छक्तिर्घटादिकार्योत्पत्तेः पूर्वं मृदि निगूढाऽवतिष्ठतेऽतो नावभासत इत्यर्थः । निगूढत्व उपरिष्टादपि न तस्या अभिव्यक्तिः स्यादित्याशंक्यानभिव्यक्तस्यापि नवनीतादेर्मथनादिनेव कुलालादिव्यापारेण तस्या अभिव्यक्तिः स्यादित्याह—**कुलालादीति ।** आदिशब्देन दंडचक्रादयो गृह्यंते ॥ ३२ ॥

**अ० टीका**—तदुपपादयति—**कार्येत्यादिना** ॥ ३२ ॥

**रा० टीका**—ननु कारणातिरिक्तस्य शक्तिकार्यस्य सत्त्वे कार्यकारणयोर्भेदो न कुतोऽवभासत इत्याशंक्य भेदप्रतीतिहेतोर्विचारस्याभावादित्याह—

**पृथुत्वादिविकारांतं* स्पर्शादिं चापि मृत्तिकाम् ॥**
**एकीकृत्य घटं प्राहुर्विचारविकला जनाः ॥ ३३ ॥**

**पृथुत्वादीति ।** अविवेकिनो जनाः पृथुबुध्नत्वादिरूपं कार्यं शब्दस्पर्शादिगुणरूपां कारणभूतां मृत्तिकां चाविचारत एकीकृत्य घट इत्याचक्षते ॥ ३३ ॥

**अ० टीका**—एवं तर्हि घटस्य किं रूपं तत्राऽऽह—**पृथुत्वादीति ।** पृथुत्वादिलक्षणविकारं, तं प्रागुक्तम् । पृथुत्वादिविकारांतमित्यपपाठ एव ॥ ३३ ॥

**रा० टीका**—उक्तस्य घटव्यवहारस्याविचारमूलत्वं कुत इत्याशंक्याऽऽह—

**कुलालव्यापृतेः पूर्वो यावानंशः स नो घटः ॥**
**पश्चात्तु पृथुबुध्नादिमत्त्वे युक्ता हि कुंभता ॥ ३४ ॥**

**कुलालेति ।** कुलालव्यापारात्पूर्वभाविनो मृदंशस्याऽघटस्य घटत्वेन व्यवहारादविचारमूलत्वं तस्येति भावः । कस्य तर्हि घटत्वमित्यत आह—**पश्चात्त्विति ।** कुलालव्यापारानंतरं भाविनः पृथुबुध्नोदराकारस्यैव घटशब्दवाच्यत्वमुचितं तदुत्पत्त्यनंतरमेव घटशब्दप्रयोगदर्शनादिति भावः ॥ ३४ ॥

**अ० टीका**—तत्रोपपत्तिमाह—**कुलालेति** ॥ ३४ ॥

**रा० टीका**—ननु पारमार्थिकस्य घटस्यानिर्वचनीयशक्तिकार्यत्वमयुक्तमित्याशंक्य घटस्यापि पारमार्थिकत्वमसिद्धमित्याह—

**स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात् ॥**
**नाप्यभिन्नः पुरा पिंडदशायामनवेक्षणात् ॥ ३५ ॥**

**स घट इति ।** घटो मृदः पृथक्कृत्य द्रष्टुमशक्यत्वान्न मृदो भिद्यते नापि मृदेव पिंडावस्थायामनुपलभ्यमानत्वात् ॥ ३५ ॥

**अ० टीका**—ततः किं तदाह—**स इति ।** मृद इति पंचमीवियोग इत्यत्राप्यनुकृष्या । एवं च मृदः सकाशाद्घटस्य वियोगे सत्यनीक्षणाददर्शनादित्यर्थः ॥ ३५ ॥

---

* पृथुत्वादिविकारं तमित्यच्युतरायपाठः ।

**अतोऽनिर्वचनीयोऽयं शक्तिवत्तेन शक्तिजः ॥**
**अव्यक्तत्वे शक्तिरुक्ता व्यक्तत्वे घटनामभृत् ॥ ३६ ॥**

**रा० टीका**—अतः शक्तिवदनिर्वचनीय एव घटः । फलितमाह—**तेनेति** । ननु शक्तिकार्य योरुभयोरप्यनिर्वचनीयत्वे शक्तिः कार्यं चेतिभेदव्यवहारः । कुत इत्यत आह—**अव्यक्तत्व इति** ॥ ३६ ॥

**अ० टीका**—फलितमाह—**अत इति** । अनिर्वचनीयः कारणाद्भेदाभेदाभ्यां निर्वक्तुमशक्यः ॥ ३६ ॥

**रा० टीका**—पूर्वमनभिव्यक्ता मायाशक्तिः पश्चादभिव्यज्यत इत्यतन्न प्रसिद्धं मायास्वरूपं लभ्यत इत्याशंक्याऽऽह—

**ऐंद्रजालिकनिष्ठाऽपि माया न व्यज्यते पुरा ॥**
**पश्चाद्गंधर्वसेनादिरूपेण व्यक्तिमाप्नुयात् ॥ ३७ ॥**

**ऐंद्रजालिकेति** । पुरा मणिमंत्रादिप्रयोगात्पूर्वम् ॥ ३७ ॥

**अ० टीका**—ननु कार्यात्प्रागव्यक्तत्वे सति स्वाश्रयाद्भेदाभेदाभ्यामसत्त्वे च सति कार्यात्मना व्यक्तत्वमिति पर्यवसन्नं मायालक्षणं लोके क्व दृष्टमित्यतस्तत्स्पष्टयति—**ऐंद्रजालिकेति** ॥ ३७ ॥

**रा० टीका**—शक्तिकार्यस्य घटादेरनृतत्वं शक्त्याधारस्य मृदादेः सत्यत्वमित्येतच्छांदोग्यश्रुतावप्यभिहितमित्याह—

**एवं मायामयत्वेन विकारस्यानृतात्मताम् ॥**
**विकाराधारमृद्वस्तुसत्यत्वं चाब्रवीच्छ्रुतिः ॥ ३८ ॥**

**एवमिति** । मायामयत्वेन मायाकार्यत्वेन विकारस्य कार्यरूपस्य घटादेरनृतात्मतां मिथ्यात्वं विकाराणां घटादीनामाधारभूताया मृदः सत्यत्वं वाचारंभणं विकारो नामधेयं मृत्तिकेत्येवसत्यमित्यादिश्रुतिरुक्तवतीत्यर्थः ॥ ३८ ॥

**अ० टीका**—फलितं कथयंस्तत्र श्रुतिं प्रमाणयति—**एवमिति । अनृतेति** । मिथ्यारूपत्वमित्यर्थः ॥ ३८ ॥

**रा० टीका**—इदानीं वाचारंभणमित्याद्युदाहृतं वाक्यमर्थतः पठति—

**वाङ्निष्पाद्यं नाममात्रं विकारो नास्य सत्यता ॥**
**स्पर्शादिगुणयुक्ता तु सत्या केवलमृत्तिका ॥ ३९ ॥**

**वाङ्निष्पाद्यमिति** । वागिंद्रियेणोच्चार्यं नाममात्रं नामैवास्य घटादेर्न सत्यता न नामातिरेकेण पारमार्थिकं रूपमस्ति किं तु तदाधारभूता मृदेव सत्येत्यर्थः ॥ ३९ ॥

**अ० टीका**—तामेव **छांदोग्यगतां " वाचारंभणं** विकारो नामधेयं मृत्तिकेत्येव सत्यम् " इति श्रुतिमर्थतः पठति—**वागिति** ॥ ३९ ॥

**रा० टीका**—शक्तितत्कार्ययोरनृतत्वे तदाधारस्य सत्यत्वे च कारणमाह—

**व्यक्ताव्यक्ते तदाधार इति त्रिष्वाद्ययोर्द्वयोः ॥**
**पर्यायः कालभेदेन तृतीयस्त्वनुगच्छति ॥ ४० ॥**

**व्यक्तेति** । व्यक्तो घटादिलक्षणः कार्यः । अव्यक्ता तत्कारणभूता शक्तिः । ते व्यक्ताव्यक्ते तदाधारस्तयोराधारभूता मृत्तिकेत्येतेषु त्रिपु मध्य आद्ययोः प्रथमोद्दिष्टयोर्द्वयोः कार्यशक्त्योः संबंधिनौ यौ कालौ तयोर्भेदेन भेदस्य विद्यमानत्वात्पर्यायः क्रमेण भवनं तृतीयस्तदुभयाधारस्तु मृदादिरनुगच्छत्युभयत्रानुवर्तते । अयं भावः । शक्तिकार्ययोः कादाचित्कत्वादनृतत्वमाधारस्य तु कालत्रयानुगामित्वात्सत्यत्वमिति ॥ ४० ॥

**अ० टीका**—तदेवं शक्तितत्कार्ययोरुभयोरपि मिथ्यात्वं कथं स्यात्तत्राऽऽह—**व्यक्तेति** । अनु गच्छति व्यक्ताव्यक्तयोरुभयोरप्यनुवर्तत इत्यर्थः ॥ ४० ॥

**रा० टीका**—इदानीं विकारस्यैवासत्यत्वे हेतुत्रयमाह—

**निस्तत्त्वं भासमानं च व्यक्तमुत्पत्तिनाशभाक् ॥**
**तदुत्पत्तौ तस्य नाम वाचा निष्पाद्यते नृभिः ॥ ४१ ॥**

**निस्तत्त्वमिति** । व्यक्तं व्यक्तशब्दवाच्यं घटादिकार्यं स्वरूपेणासदेवावभासते तथोत्पत्तिविनाशवदुपलभ्यत उत्पत्त्यनंतरं वागिंद्रियजन्यनामात्मकत्वेन व्यवह्रियते च ॥४१॥

**अ० टीका**—एवं व्यावृत्तत्वाव्यक्ताव्यक्तयोरुभयोरपि मिथ्यात्वे समानेऽपि व्यक्ते को विशेष इत्याशंक्य जन्यत्वमेवेत्याह—**निस्तत्त्वमिति** ॥ ४१ ॥

**व्यक्ते नष्टेऽपि नामैतन्नृवक्त्रेष्वनुवर्तते ॥**
**तेन नाम्ना निरूप्यत्वाव्यक्तं तद्रूपमुच्यते ॥ ४२ ॥**

**रा० टीका**—किं च, **व्यक्त इति** । व्यक्ते कार्यस्वरूपे नष्टेऽपि एतत्कार्याद्भिन्नं नाम नृवक्त्रेषु नृणां शब्दप्रयोक्तृणां मनुष्याणां वदनेष्वनुवर्तते । ततः किं तत्राऽऽह—**तेनेति**। व्यक्तं कार्यं तेन वाचा व्यवह्रियमाणेन नाम्ना शब्देन निरूप्यत्वाव्यवह्रियमाणत्वात्तद्रूपं तस्य नाम्नो रूपमेव रूपं यस्य तत्तथा नामात्मकमुच्यत इत्यर्थः । अयं भावः । विमतो घटो घटशब्दात्मको भवितुमर्हति घटशब्देन व्यवह्रियमाणत्वाद्घटशब्दवदिति ॥ ४२ ॥

**अ० टीका**—अथ श्रुत्युक्तं वाचारंभणत्वमुपपादयति—**व्यक्त इति** । तद्रूपं वाचारंभणरूपम् ॥ ४२ ॥

**रा० टीका**—एवं हेतुत्रयं प्रसाध्येदानीमनुमानरचनाप्रकारं सूचयति—

**निस्तत्त्वत्वाद्विनाशित्वाद्वाचारंभणनामतः ॥**
**व्यक्तस्य न तु तद्रूपं सत्यं किंचिन्मृदादिवत् ॥ ४३ ॥**

**निस्तत्त्वत्वादिति** । व्यक्तस्य घटादिरूपस्य कार्यस्य यत्पृथुबुध्नोदराकारं रूपमस्ति तत्किंचित्किमपि सत्यं न भवति निस्तत्त्वत्वान्निर्गतं तत्त्वं वास्तवरूपं यस्मात्तन्निस्तत्त्वं तस्य भावो निस्तत्त्वत्वं तस्मात्तथा विनाशित्वान्मृदि सत्यामेव विनाशप्रतियोगित्वाद्वाचारंभणनामतो वागिंद्रियजन्यशब्दमात्रात्मकत्वात्त्रिष्वपि हेतुषु मृद्वदिति वैधर्म्यदृष्टांतः । अत्रैवं प्रयोगः । घटादिरूपः कार्योऽसत्यो भवितुमर्हति निस्तत्त्वत्वाद्यदसत्यं न भवति न तन्निस्तत्त्वं यथा घटाद्युपादानं मृदिति केवलव्यतिरेकी । एवमितरहेतुद्वयेऽपि योजनीयम् ॥ ४३ ॥

**अ० टीका**—अत एव । **निस्तत्त्वत्वादिति**। बाधितत्वादित्यर्थः । तत्र हेतुः—**वाचेति** । तत्रापि हेतु—**विनाशित्वादिति** ॥ ४३ ॥

**रा० टीका**—एवं विकारस्यासत्यत्वमुपपाद्येदानीं तदधिष्ठानरूपाया मृदः सत्यत्वमुपपादयति—

**व्यक्तकाले ततः पूर्वमूर्ध्वमप्येकरूपभाक् ॥**
**सतत्त्वमविनाशं च सत्यं मृद्वस्तु कथ्यते ॥ ४४ ॥**

**व्यक्तेति** । व्यक्तकाले स्थितिकाले ततः पूर्वं व्यक्तोत्पत्तेः पूर्वस्मिन्काल ऊर्ध्वमपि व्यक्तविनाशोत्तरकालेऽपि । एकरूपभागेकाकारं सतत्त्वं तत्त्वेन वास्तवरूपेण सह वर्तत इति सतत्त्वमविनाशं विकारेण सह नाशरहितं यन्मृद्वस्तु तत्सत्यमिति कथ्यते । अत्रेदमनुमानं विमतं मृद्वस्तु सत्यं भवितुमर्हति सतत्त्वत्वादात्मवदित्यादि योज्यम् ॥ ४४ ॥

**अ० टीका**—मृदि विशेषमाह—**व्यक्तेति** । सतत्त्वं व्यक्तादिकालेऽपि तत्त्वेन मृत्त्वेन सहितमित्यर्थः । एतेन मृत्तिकेत्येव सत्यमिति व्याख्यातम् ॥ ४४ ॥

**रा० टीका**—ननु घटादेः कार्यजातस्यासत्यत्वे तस्याऽऽरोपितरजतादेरिवाधिष्ठानज्ञानेन निवर्त्यता स्यादिति शंकते—

**व्यक्तं घटो विकारश्चेत्येतैर्नामभिरीरितः ॥**
**अर्थश्चेदनृतः कस्मान्न मृद्बोधे निवर्तते ॥ ४५ ॥**

**व्यक्तमिति** । व्यक्तमित्यादिभिस्त्रिभिः शब्दैरभिधीयमानो योऽर्थः कार्यरूपस्तस्य कारणातिरेकेणासत्त्वेऽङ्गीक्रियमाणे मृल्लक्षणकारणस्य ज्ञाने किं न तन्निवृत्तिः स्यादित्यर्थः ॥ ४५ ॥

**अ० टीका**—तत्र शंकते—**व्यक्तमिति** ॥ ४५ ॥

**निवृत्त एव यस्मात्ते तत्सत्यत्वमतिर्गता ॥**
**ईदृङ्निवृत्तिरेवात्र बोधजानत्वभासनम् ॥ ४६ ॥**

**रा० टीका**—इष्टापत्तिरिति परिहरति—**निवृत्त इति** । तत्रोपपत्तिमाह—**यस्मादिति** । यस्मात्कारणात्तव घटादिविषयसत्यत्वबुद्धिर्नष्टाऽतः स निवृत्त एवेत्यर्थः । नन्वारोपितरजतादिरूपस्यैवाप्रतीतिरुपलभ्यते न सत्यत्वबुद्ध्यपगम इत्याशंक्य तस्य निरुपाधिकभ्रमत्वादस्तु तथात्वमिह तु सोपाधिकभ्रमे सत्यत्वबुद्ध्यपगम एव निवृत्तिः स्यादित्यभिप्रायेणाऽऽह—**ईदृगिति** । अत्र सोपाधिकभ्रमस्थल ईदृगेव सत्यत्वबुध्यपगमरूपैव बोधजाऽधिष्ठानयाथात्म्यज्ञानजन्या निवृत्तिरभ्युपेया न त्वभासनं न स्वरूपाप्रतीतिरूपेत्यर्थः ॥ ४६ ॥

**अ० टीका**—समाधत्ते—**निवृत्त एवेति** ॥ ४६ ॥

**रा० टीका**—एवं क्व दृष्टमित्यत आह—

**पुमानधोमुखो नीरे भातोऽप्यस्ति न वस्तुतः ॥**
**तटस्थमर्त्यवत्तस्मिन्नैवास्था कस्यचित्क्वचित् ॥ ४७ ॥**

**पुमानिति** । जलेऽधोमुखत्वेन प्रतिभासमानोऽपि पुमान्परमार्थतो नास्ति । तत्रोपपत्तिमाह—**तटस्थेति** । कस्यचिद्विवेकिनोऽविवेकिनो वा तस्मिन्नधोमुखे पुरुषे तीरस्थपुरुष इव सत्यत्वाभिमानः क्वचिद्देशे काले वा नैवास्तीति ॥ ४७ ॥

**अ० टीका**—तदुपपादयति—**पुमानिति** । नीरे ह्यधोमुखत्वेन संचारिता नेत्रकि-

रणाः परावृत्त्याधःशिरस्त्वादिनैव ... गृह्णंतीत्याकूतम् । अन्यत्तु मे **सिद्धांतरत्नशुद्धांते** बोध्यम् ॥ ४७ ॥

**ईदृग्बोधे पुमर्थत्वं मतमद्वैतवादिनाम् ॥**
**मृद्रूपस्यापरित्यागाद्विवर्तत्वं घटे स्थितम् ॥ ४८ ॥**

**रा० टीका**—नन्वारोपितस्यासत्यत्वज्ञानमात्रान्न पुरुषार्थसिद्धिरित्याशंक्याऽऽह—**ईदृगिति ।** अद्वैतवादे आत्मानंदातिरिक्तस्य सर्वस्य मिथ्यात्वनिश्चये सत्यद्वितीयानंदाभिव्यक्तिलक्षणः पुरुषार्थः सिद्ध्यतीत्यभिप्रायः । ननु घटस्य मृद्विवर्तत्वे सिद्धे तज्ज्ञानाद्घटसत्यत्वबुद्धिर्निवर्तते न चैतदिदानीं सिद्धमित्याशंक्याऽऽह—**मृद्रूपस्येति** ॥ ४८ ॥

**अ० टीका**—फलितमाह—**ईदृगिति** । तत्र हेतुः—**मृदिति ।** यतो भेदवादीशस्तार्किकः खंडित इत्याशयः ॥ ४८ ॥

**रा० टीका**—घटे मृद्रूपपरित्यागाभावेऽपि मृत्परिणामता घटस्य किं न स्यादित्याशंक्याऽऽह—

**परिणामे पूर्वरूपं त्यजेत्तत्क्षीररूपवत् ॥**
**मृत्सुवर्णे निवर्तेते घटकुंडलयोर्न हि ॥ ४८ ॥**

**परिणाम इति** । यत्र क्षीरादौ परिणामोऽभ्युपगम्यते तत्र क्षीरादिभावस्य पूर्वरूपस्य त्याग उपलभ्यत इत्यर्थः । ननु विवर्ते पूर्वरूपापरित्यागः क्व दृष्ट इत्याशंक्य मृत्सुवर्णयोर्दृश्यत इत्याह—**मृत्सुवर्णेति ।** मृत्सुवर्णविवर्तयोर्घटकुंडलयोर्निष्पन्नयोरपि तत्कारणभूतमृत्सुवर्णरूपे न निवर्तेते, इति हि प्रसिद्धमित्यर्थः ॥ ४९ ॥

**अ० टीका**—परिणामे विशेषमाह—**परिणाम इति** । आरंभादौ तद्व्यतिरेकं व्यनक्ति—**मृदिति** ॥ ४९ ॥

**रा० टीका**—ननु घटस्य मृद्विवर्तत्वमनुपपन्नं घटनाशे पुनर्मृद्भावादर्शनादिति शंकते—

**घटे भग्ने न मृद्भावः कपालानामवेक्षणात् ॥**
**मैवं चूर्णेऽस्ति मृद्रूपं स्वर्णरूपं त्वतिस्फुटम् ॥ ५० ॥**

घट इति । मृद्भावाभावे कारणमाह—**कपालानामिति** । कपालानामपि नाशे मृद्भावोपलब्धिः स्यादिति परिहरति—**मैवमिति** । सुवर्णे त्वेतच्चोद्यमेवानवकाशमित्याह—**स्वर्णेति** ॥ ५० ॥

**अ० टीका**—तत्राप्याशंक्य समाधत्ते—**घट इति** । चूर्णे कपालानामपि परिपेषणतः कृते चूर्ण इत्यर्थः । विस्तरस्त्वाकर एवेति दिक् ॥ ५० ॥

**क्षीरादौ परिणामोऽस्तु पुनस्तद्भाववर्जनात् ॥**
**एतावता मृदादीनां दृष्टांतत्वं न हीयते ॥ ५१ ॥**

**रा० टीका**—ननु परिणामे दृष्टांतत्वेनाभिहितानां क्षीरमृत्सुवर्णादीनां मध्ये यदि मृत्सुवर्णयोर्विवर्तदृष्टांतत्वमंगीक्रियते, तर्हि तद्वदेव क्षीरस्यापि तथात्वं स्यादित्याशंक्याऽऽह—**क्षीरादाविति**। तर्हि क्षीरवदेवावस्थांतरमापद्यमानयोस्तयोर्विवर्तदृष्टांतता न भवेदित्याशंक्याऽऽ-

ह—**एतावतेति ।** एतावता क्षीरादेः परिणामित्वेन मृदादीनां सुवर्णादीनां दृष्टांतत्वं विवर्तदृष्टांतभावो न हीयते न नश्यति । अयमभिप्रायः । क्षीरस्य पूर्वरूपपरित्यागपुरःसरमवस्थांतरप्राप्तिसद्भावात्परिणामित्वमेव । मृत्सुवर्णयोस्तु, अवस्थांतरापत्तिसद्भावेऽपि पूर्वरूपपरित्यागाभावाद्विवर्तताऽपीति ॥ ५१ ॥

**अ० टीका**—ननु श्रुतिप्रसिद्धा मृदादयः । विवर्तदृष्टांतीभवितुमनर्हाः । परिणामित्वात् । क्षीरवदित्याशंक्य दृष्टांतमंगीकृत्य दार्ष्टांतिकं निराचष्टे—**क्षीरादाविति ।** विवर्तवाद इत्यध्याहृत्य दृष्टांतत्वं न हीयत इत्यन्वयः ॥ ५१ ॥

**रा० टीका**—ननु मृत्सुवर्णयोः परिणामविवर्ताविवाऽऽरंभकत्वमपि किं नांगीक्रियत इत्याशंक्याऽऽह—

**आरंभवादिनः कार्ये मृदो द्वैगुण्यमापतेत् ॥**
**रूपस्पर्शादयः प्रोक्ताः कार्यकारणयोः पृथक् ॥ ५२ ॥**

**आरंभवादिन इति ।** आरंभवादिनो मते च कार्ये घटादिरूपे मृदो मृत्तिकादेर्द्रव्यस्य द्वैगुण्यं कार्याकारेण कारणाकारेण च द्विगुणत्वमापद्येत । तथा च सति गुरुत्वादिद्वैगुण्यमप्यापद्येतेति भावः । कुत एतदित्याशंक्याऽऽह—**रूपेति ।** रूपादीनां गुणानां कार्यकारणयोर्भेदस्य तैरेवांगीकृतत्वादिति भावः ॥ ५२ ॥

**अ० टीका**—अथाऽऽरंभवादं विदलयति—**आरंभवादिन इति ।** मृद इत्युपलक्षणं सुवर्णादेरपि । तत्र हेतुः—**रूपेति ।** कारणगुणाः कार्यगुणानारभंत इति हि तार्किकसिद्धांतादिना परिणामस्यापि ग्रहेण कार्यीभूतकटकादौ हाटकलक्षणकारणस्य द्वैगुण्यं स्यात् । आरंभवादिभिरिति शेषः ॥ ५२ ॥

**रा० टीका**—ननु मृत्सुवर्णयोः किं द्वयोरेव विवर्ते दृष्टांतत्वं नेत्याह—

**मृत्सुवर्णमयश्चेति दृष्टांतत्रयमारुणिः ॥**
**प्राहातो वासयेत्कार्यानृतत्वं सर्ववस्तुषु ॥ ५३ ॥**

**मृदिति ।** अरुणस्य पुत्र **उद्दालकाख्यः** कश्चिदृषिर्यथा सोम्यैकेन मृत्पिंडेनेत्यारभ्य कार्ष्णायसमित्येव सत्यमित्यंतेन वाक्यसंदर्भेण कार्यस्यानृतत्वे मृत्सुवर्णायोरूपं दृष्टांतत्रयमुक्तवानित्यर्थः । किमर्थमेवं दृष्टांतत्रयमुक्तवानित्याशंक्याऽऽह—**अत इति ।** यत एवं बहुषु मृदादिषु कार्यानृतत्वमुपलब्धमतो भूतभौतिकरूपेषु वस्तुषु कार्यानृतत्वं वासितं कुर्यादित्यर्थः ॥ ५३ ॥

**अ० टीका**—ननु मृदादेर्विवर्तदृष्टांतत्वं क्वोक्तमित्यत आह—**मृदिति । छांदोग्ये** तावदरुणस्य पुत्र **उद्दालकः** षष्ठाध्याये यथा "**सोम्यैकेन** मृत्पिंडेन सर्वमित्यारभ्य कार्ष्णायसमित्येव सत्यम् " इत्यंतेन वाक्यसंदर्भेण मृत्सुवर्णमयश्च विवर्तवाद इत्यार्थिकम् । इति दृष्टांतत्रयं प्राहेति संबंधः । ततः किं तदाह—**अत इत्यादिशेषेण ।** अतो हेतोः सर्ववस्तुषु । **कार्येति ।** कार्यमिथ्यात्वम् । वासयेदभ्यसेद्यावद्वस्त्ववच्छेदेन कार्यमिथ्यात्वं स्वबुद्धिं प्रति मुमुक्षुः संस्कुर्वीतेति शेषं प्रपूर्य योजना ॥ ५३ ॥

**रा० टीका**—ननु कार्यानृतत्वानुसंधानमपि किमर्थमुक्तमित्याशंक्य कारणज्ञानात्कार्यज्ञानसिद्धय इत्यभिप्रायेणाऽऽह—

**कारणज्ञानतः कार्यविज्ञानं चापि सोऽवदत् ॥**
**सत्यज्ञानेऽनृतज्ञानं कथमत्रोपपद्यते ॥ ५४ ॥**

**कारणेति** । कारणस्य मृदादेर्ज्ञानात्कार्यजातस्य घटादेर्ज्ञानमपि यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिवाक्यजातेनोक्तवानित्यर्थः । ननु मृत्सुवर्णादिरूपस्य पारमार्थिकस्य कारणस्य विज्ञानात्तद्विलक्षणस्य घटरूपकार्यादेर्विज्ञानमनुपपन्नमिति शंकते—**सत्येति** ॥ ५४ ॥

**अ० टीका**—तत्र हेतुः—**कारणेति** । यदि निरुक्तकार्यमिथ्यात्वसंस्कारदार्ढ्यं न स्याच्चेत्तर्हि कारणज्ञानतः कार्यविज्ञानमपि नैवोपपद्येतेत्यभिप्रायः। तत्र शंकते—**सत्येति** ॥५४॥

**रा० टीका**—कार्यस्य सत्यानृतांशद्वयरूपत्वात्कारणज्ञानात्कार्यगतसत्यांशज्ञानं भवतीत्यभिप्रायेणाऽऽह—

**समृत्कस्य विकारस्य कार्यता लोकदृष्टितः ॥**
**वास्तवोऽत्र मृदंशोऽस्य बोधः कारणबोधतः ॥ ५५ ॥**

**समृत्कस्येति** । समृत्कस्याधिष्ठानभूतमृत्सहितस्य विकारस्याऽऽरोपितस्य घटादिरूपस्य कार्यता कार्यशब्दार्थत्वं लोकप्रसिद्धमित्यर्थः । भवत्वेवमेतावता कारणज्ञानात्कार्यज्ञानं न संभवतीति चोद्यस्य कः परिहारो जात इत्याशंक्य कार्यगतानृतांशज्ञानाभावेऽपि तद्गतसत्यांशज्ञानं भवत्येवेति परिहरति—**वास्तव इति** । अत्र कार्ये यो वास्तवमृदंशोऽस्त्यस्य वास्तवांशस्य बोधो ज्ञानं कारणज्ञानाद्भवतीत्यर्थः ॥ ५५ ॥

**अ० टीका**—समाधत्ते—**समृत्कस्येत्यादि** द्वाभ्याम् । विकारस्य घटादेः समृत्कस्य मृदविनाभावसिद्धस्येत्यर्थः ॥ ५५ ॥

**रा० टीका**—ननु कार्यगतसत्यांशवदनृतांशोऽपि बोद्धव्य इत्याशंक्य प्रयोजनाभावान्नैवमित्याह—

**अनृतांशो न बोद्धव्यस्तद्बोधानुपयोगतः ॥**
**तत्त्वज्ञानं पुमर्थं स्यान्नानृतांशावबोधनम् ॥ ५६ ॥**

**अनृतांश इति** । प्रयोजनाभावमेव दर्शयति—**तत्त्वज्ञानमिति** । तत्त्वस्याबाध्यस्य वस्तुनो ज्ञानं पुमर्थं पुंसो ज्ञातुः पुरुषस्यार्थः प्रयोजनं यस्मिंस्तत्पुमर्थमिति बहुव्रीहिः । अनृतांशस्य विकारस्यावबोधनं प्रयोजनवन्न भवतीत्यर्थः ॥ ५६ ॥

**अ० टीका**—**अनृतांश इति** । पुमर्थः पुमर्थमोक्षप्रदत्वादित्यर्थः ॥ ५६ ॥

**रा० टीका**—ननु कारणज्ञानात्कार्यज्ञानं भवतीत्येतच्छ्रोतृबुद्धौ चमत्कारहेतुर्भविष्यतीत्यभिप्रायेणोक्तं तदेतन्न संभवतीति शंकते—

**तर्हि कारणविज्ञानात्कार्यज्ञानमितीरिते ॥**
**मृद्बोधान्मृत्तिकाबुद्धेत्युक्तं स्यात्कोऽत्र विस्मयः ॥ ५७ ॥**

**तर्हीति** । कारणस्य मृदादेर्ज्ञानात्कार्यगतं मृदादिसत्यांशज्ञानं भवतीत्युक्ते मृज्ज्ञानान्मृदो ज्ञानमित्युक्तं भवति । एवं च सति शब्दत एव चमत्कारो नार्थत इत्यर्थः ॥ ५७ ॥

**अ० टीका**—तत्रापि शंकते—**तर्हीति** ॥ ५७ ॥

**रा० टीका**—ईदृग्विवेकवतां विस्मयाभावेऽपि तद्रहितानां विस्मयः स्यादेवेति परिहरति—

**सत्यं कार्येषु वस्त्वंशः कारणात्मेतिजानतः ॥**
**विस्मयो माऽस्त्विहाज्ञस्य विस्मयः केन वार्यते ॥ ५८ ॥**

**सत्यमिति** । कार्येषु घटादिषु विद्यमानो वास्तवोंऽशः कारणस्वरूपमेवेति ये जानंति तेषामाश्चर्यं मा भूदितरेषां तत्त्वज्ञानशून्यानां जायमानो विस्मयो न निवारयितुं शक्यत इत्यर्थः ॥ ५८ ॥

**अ० टीका**—अंगीकृत्याभिप्रायांतरेण समाधत्ते—**सत्यमिति** ॥ ५८ ॥

**रा० टीका**—अज्ञस्य विस्मयो भवेदित्युक्तमेवार्थं प्रपंचयति—

**आरंभी परिणामी च लौकिकश्चैककारणे ॥**
**ज्ञाते सर्वमतिं श्रुत्वा प्राप्नुवंत्येव विस्मयम् ॥ ५९ ॥**

**आरंभीति** । आरंभो नाम समवाय्यसमवायिनिमित्ताख्यकारणेभ्यो भिन्नस्य कार्यस्योत्पत्तिस्तां यो वक्ति सोऽयमारंभीत्युच्यते । पूर्वरूपपरित्यागेन रूपांतरप्राप्तिलक्षणं परिणामं यो वक्ति स परिणामीत्युच्यते । प्रक्रियाद्वयमजानानो लोकव्यवहारमात्रपरो लौकिक इत्युच्यते। एषां त्रयाणामपि कारणस्यैकस्य ज्ञानादनेकेषां कार्याणां विज्ञानं भवतीतिवाक्यश्रवणाद्विस्मयो भवेदेवेत्यर्थः ॥ ५९ ॥

**अ० टीका**—तमुदाहरति—**आरंभीति** ॥ ५९ ॥

ननु यथाश्रुतमर्थं परित्यज्येत्थं व्याख्याने किं कारणमित्याशंक्य श्रुतेस्तत्र तात्पर्याभावादित्याह—

**अद्वैतेऽभिमुखीकर्तुमेवात्रैकस्य बोधतः ॥**
**सर्वबोधः श्रुतौ नैव नानात्वस्य विवक्षया ॥ ६० ॥**

**अद्वैत इति** । अद्वैतविज्ञाने शिष्यमभिमुखीकर्तुमेव छांदोग्यश्रुतावेतस्य कारणस्य विज्ञानात्सर्वेषां कार्याणां विज्ञानमुक्तं न तु कार्याणामनेकेषां विज्ञानसिद्ध्यर्थमित्यभिप्रायः ॥६०

**अ० टीका**—तत्प्रयोजनमाह—**अद्वैत इति**।तस्मान्न काऽप्यनुपपत्तिरित्याशयः ॥६०

**रा० टीका**—इदानीमेकविज्ञानसर्वविज्ञानदृष्टांतप्रदर्शनपरस्य यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्यादितिवाक्यस्यार्थनिरूपणपुरःसरं दार्ष्टांतिकप्रदर्शनपरस्योत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमितिवाक्यस्यार्थं प्रदर्शयन्प्रकृते फलितमाह—

**एकमृत्पिंडविज्ञानात्सर्वमृन्मयधीर्यथा ॥**
**तथैकब्रह्मबोधेन जगद्बुद्धिर्विभाव्यताम् ॥ ६१ ॥**

**एकमृत्पिंडेति** । यथा घटशरावाद्युपादानस्यैकस्य मृत्पिंडस्यावबोधात्तद्विकाराणां सर्वेषां घटादीनां बोधो भवति, एवं सर्वोपादानस्यैकस्य ब्रह्मणो बोधात्तत्कार्यस्य कृत्स्नस्य जगतो बोधो भवतीत्यवगंतव्यमित्यर्थः ॥ ६१ ॥

**अ० टीका**—अथोक्ताद्वैताभिमुखीकरणपरां यथा " **सोम्यैकेन मृत्पिण्डेन सर्वं मृ-**

न्मयं विज्ञातः स्यात् ” इत्यादिश्रुतिमर्थतः पठति—**एकेति** । विभाव्यतामध्यस्तलक्षणस्य कार्यस्याधिष्ठानानतिरिक्तसत्ताकत्वेन ज्ञानीभूतसन्मात्रतत्त्वविषयतयैवानुसंधीयतामिति यावत् ॥ ६१ ॥

**रा० टीका**—ननु ब्रह्मजग स्वरूपापरिज्ञाने ब्रह्मज्ञानाज्जगतो ज्ञानं भवतीत्येवं नावगंतुं शक्यत इत्याशंक्य तदवगम तदुभयस्वरूपं दर्शयति--

**सच्चित्सुखात्मकं ब्रह्म नामरूपात्मकं जगत् ॥**
**तापनीये श्रुतं ब्रह्म सच्चिदानंदलक्षणम् ॥ ६२ ॥**

**सच्चिदिति** । ब्रह्मणः सच्चिदानंदरूपत्वे किं प्रमाणमित्याशंक्य तापनीयादिश्रुतयः प्रमाणमित्यभिप्रायेणाऽऽह—**तापनीय इति** । उत्तरस्मिंस्तापनीय आथर्वणिकैस्तावद्ब्रह्मैवेदं सर्वं सच्चिदानंदमात्रमित्यादिपदेषु ब्रह्मणः सच्चिदानंदरूपत्वमुक्तमित्यर्थः ॥ ६२ ॥

**अ० टीका**—तदुपपादयितुं ब्रह्मजगतोः स्वरूपे क्रमादाह—**सच्चिदिति** । तत्राऽऽद्ये प्रमाणमाह—**तापनीय इत्यादिना** । “ ब्रह्मैवेदं सर्वं सच्चिदानंदमात्रमिति **नृसिंहोत्तराख्ये** ॥ ६२ ॥

**रा० टीका**—आदिशब्देन विवक्षितानि श्रुत्यंतराणि दर्शयति--

**सद्रूपमारुणिः प्राह प्रज्ञानं ब्रह्म बह्वृचः ॥**
**सनत्कुमार आनंदमेवमन्यत्र गम्यताम् ॥ ६३ ॥**

**सद्रूपमिति** । अरुणपुत्रेणोद्दालकेन छांदोग्यश्रुतौ सदेव सोम्येदमग्र आसीदित्यादिना सद्रूपं ब्रह्म निरूपितं तथा बह्वृचो **ऋक्शाखाध्यायिन** ऐतरेयोपनिषदि प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मेति प्रज्ञानरूपत्वं ब्रह्मणो दर्शयंति । एवं पूर्वोदाहृतायां छांदोग्यश्रुतावेव सनत्कुमाराख्यो गुरुर्नारदाख्यशिष्याय भूमा त्वेव विजिज्ञासितव्य इत्युपक्रम्य यो वै भूमा तत्सुखमिति भूमशब्दाभिधेयस्य ब्रह्मण आनंदरूपत्वमुक्तवानित्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति** । अन्यत्र तैत्तिरीयकादिश्रुतिषु, आनंदो ब्रह्मेति व्यजानादित्यादिवाक्यैरानंदरूपत्वादिकमुक्तमिति द्रष्टव्यमिति भावः ॥ ६३ ॥

**अ० टीका**—तत्राप्यैकैकरूपत्वं **छांदोग्य**षष्ठादावुक्तमिति वक्ति—**सद्रूपमिति** । “ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ” इति श्रुत्या **आरुणि**रुद्दालकः सद्रूपं **बह्वृचै**-**तरेय**शाखिनः प्रज्ञानं ब्रह्मेत्यादि बोध्यम् ॥ ६३ ॥

**रा० टीका**—सच्चिदानंदेष्विव नामरूपयोरपि श्रुतिं दर्शयति—

**विचिंत्य सर्वरूपाणि कृत्वा नामानि तिष्ठति ॥**
**अहं व्याकरवाणीमे नामरूपे इति श्रुतेः ॥ ६४ ॥**

**विचिंत्येति** । “ सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदाऽऽस्ते ” इति “ अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति च स्पष्टव्ये जगन्निष्ठे नामरूपे श्रुत्या दर्शिते इत्यर्थः ॥ ॥ ६४ ॥

**अ० टीका**—एवं ब्रह्मणः सच्चिदानंदरूपत्वे प्रमाणान्यभिधाय जगतो नामरूपात्मकत्वे तान्याह—**विचिंत्येत्यादि** । तथा चाऽऽम्नायते—“ **सर्वाणि** रूपाणि विचित्य धीरः ।

नामानि कृत्वाऽभिवदन्यदास्ते " इति पुरुषसूक्ते । तथा—" अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति छांदोग्ये । एवं " तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामाऽयमिदꣳरूपम् " इति बृहदारण्यके च ॥ ६४ ॥

**रा० टीका**—तत्रैव श्रुत्यंतरमुदाहरति—

**अव्याकृतं पुरा सृष्टेरूर्ध्वं व्याक्रियते द्विधा ॥**
**अचिंत्यशक्तिर्मायैषा ब्रह्मण्यव्याकृताभिधा ॥ ६५ ॥**

**अव्याकृतमिति** । बृहदारण्यकश्रुतौ तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामाऽयमिदंरूप इति सृष्टस्य जगतो नामरूपात्मकत्वं दर्शितमित्यर्थः । सृष्टेः पूर्वमिदं जगदव्याकृतमव्यक्तनामरूपात्मकमभूदूर्ध्वं सृष्टयवसरे द्विधावाच्यवाचकभावेन व्याक्रियते व्यक्तीकृतमित्यर्थः । इदानीं तद्धेदं तर्ह्यव्याकृतमासीदित्यत्राव्याकृतशब्दस्यार्थमाह—**अचिंत्येति** । येयं ब्रह्मण्यचिंत्यशक्तिर्मायाऽस्त्येषाऽव्याकृताभिधाऽस्मिन्वाक्येऽव्याकृतशब्देनाभिधीयत इत्यर्थः ॥ ६५ ॥

**अ० टीका**—एवमव्याकृतपदार्थमाह—**अचिंत्येति** ॥ ६५ ॥

**रा० टीका**—तन्नामरूपाभ्यामेव व्याक्रियत इत्यस्यार्थमाह—

**अविक्रियब्रह्मनिष्ठा विकारं यात्यनेकधा ॥**
**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥ ६६ ॥**

**अविक्रियेति** । अविकारिणि ब्रह्मणि वर्तमाना साऽनेकधा भूतभौतिकप्रपंचरूपेण बहुधा विकारं परिणामं प्राप्नोति । माया ब्रह्मणि वर्तत इत्यत्र प्रमाणमाह—**मायां त्विति** । मायां पूर्वोक्तां प्रकृतिं प्रक्रियतेऽनयेति प्रकृतिरुपादानकारणं विद्याज्जानीयात् । मायिनं तस्या आश्रयत्वेन तद्वंतं महेश्वरं मायानियामकं विद्यादित्यनुवर्तते । उभयत्र तुशब्दः परस्परवैलक्षण्यद्योतनार्थः ॥ ६६ ॥

**अ० टीका**—तन्नामरूपाभ्यामेवेत्यादेरर्थमाह—**अविक्रियेति** । तत्र श्रुत्यंतरमपि संवादयति **मायां त्विति** ॥ ६६ ॥

**रा० टीका**—इदानीं मायोपहितस्य ब्रह्मणः प्रथमकार्यमाह—

**आद्यो विकार आकाशः सोऽस्ति भात्यपि च प्रियः ॥**
**अवकाशस्तस्य रूपं तन्मिथ्या न तु तत्त्रयम् ॥ ६७ ॥**

**आद्य इति** । तस्य कारणादागतं रूपत्रयमाह—**सोऽस्तीति** । सच्चिदानंदरूप इत्यर्थः । तस्य प्रातिस्विकं रूपमाह—**अवकाश इति** । तस्य पूर्वस्माद्रूपत्रयाद्वैलक्षण्यमाह—**तन्मिथ्येति** । सदादिरूपत्रयं वास्तवमित्यर्थः ॥ ६७ ॥

**अ० टीका**—अथैतेषां सदादीनामधिष्ठानत्वेनानुस्यूतत्वं विश्वस्य तु नामाद्यात्मकस्य कल्पितत्वेन प्रागभावादिप्रतियोगित्वं च प्रपंचयति—**आद्य इत्यादिना** ॥ ६७ ॥

**रा० टीका**—तस्य चतुर्थरूपस्य मिथ्यात्वे हेतुमाह—

**न व्यक्तेः पूर्वमस्त्येव न पश्चाच्चापि नाशतः ॥**
**आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ ६८ ॥**

**न व्यक्तेरिति** । ननूत्पत्तिविनाशयोर्मध्ये प्रतीयमानस्यावकाशस्य कथमसत्त्वमित्याशंक्याऽऽह—**आदाविति** ॥ ६८ ॥

**अ० टीका**—तत्र हेतुः- **न व्यक्तेरिति** । आविर्भावादित्यर्थः ॥ ६८ ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥**
**अव्यक्तनिधनान्येवेत्याह कृष्णोऽर्जुनं प्रति ॥ ६९ ॥**

**रा० टीका**—उक्तार्थे श्रीकृष्णवाक्यं प्रमाणयति—**अव्यक्तादीनीति** ॥ ६९ ॥

**अ० टीका**—तत्र स्मृतिमपि प्रमाणयति—**अव्यक्तादीनीति** ॥ ६९ ॥

**रा० टीका**—सदादिरूपत्रयस्यावकाशे सत्त्वे किं प्रमाणमित्याशंक्यानुभूतिरेव प्रमाणमित्याह—

**मृद्वत्ते सच्चिदानंदा अनुगच्छंति सर्वदा ॥**
**निराकाशे सदादीनामनुभूतिर्निजात्मनि ॥ ७० ॥**

**मृद्वदिति** । मृद्वदिति दृष्टांतः प्रदर्शनार्थः । घटादिषु यथा कालत्रयेऽपि मृदनुवर्तते तथा सदादिरूपत्रयं सर्वदाऽनुगतमित्यर्थः । नन्ववकाशं विहाय सदादिरूपत्रयं कथमनुभूतमित्याशंक्याऽऽह—**निराकाश इति** ॥ ७० ॥

**अ० टीका**—निगमयति—**मृद्वदिति** । अत्रायं प्रयोगः । सदादिरूप आत्मा । अधिष्ठानं, अनुगतत्वान्मृद्वदिति । तथाऽनुभावयति—**निराकाश इति** । आत्मविशेषणमिदम् ॥७०॥

**रा० टीका**—तदेवोपपादयति—

**अवकाशे विस्मृतेऽथ तत्र किं भाति ते वद ॥**
**शून्यमेवेति चेदस्तु नाम तादृग्विभाति हि ॥ ७१ ॥**

**अवकाश इति** । पूर्ववादिनश्चोद्यमनुवदति—**शून्यमिति** । अंगीकृत्य परिहारमाह—**अस्त्विति** । शब्दतः शून्यमस्त्वर्थतस्त्ववकाशाभावविशेषणस्य विशेष्यत्वेन प्रतीयमानं किंचिदस्तीत्यभ्युपगंतव्यमित्याह—**तादृगिति** । हिशब्दो लोकप्रसिद्धिद्योतनार्थः ॥ ७१ ॥

**अ० टीका**—ननु कदाऽऽत्मनो निराकाशत्वं प्रत्युत श्रुत्यैवोभयोरप्याकाशवत्सर्वगतश्च नित्य इत्यनया सर्वगतत्वाद्यभिधानादित्यत आह—**अवकाश इति** । तदुत्तरमाशंक्यांगीकृत्यापि तत्परिहरति—**शून्यमेवेतीति** । हिरवधारणे । शून्यमिति तस्यावकाशाभावविशिष्टस्य वस्तुनस्त्वकल्पितं नामास्तु तथाऽऽपि तादृग्वस्तु स्वतो विभात्येवेत्यन्वयः ॥ ७१ ॥

**रा० टीका**—भवत्वेवं प्रकृते किमायातमित्याशंक्य विशेष्यत्वेन प्रतीयमानस्य स्वरूपमभ्युपेयमित्याह—

**तादृक्त्वादेव तत्सत्त्वमौदासीन्येन तत्सुखम् ॥**
**आनुकूल्यप्रातिकूल्यहीनं यत्तन्निजं सुखम् ॥ ७२ ॥**

**तादृक्त्वादिति** । तस्य सुखस्वरूपत्वमाह—**औदासीन्येनेति** । औदासीन्यविषयत्वात्तस्य सुखस्वरूपत्वमित्यर्थः । नन्वनुकूलत्वरहितस्य कथं सुखस्वरूपत्वमित्याशंक्याऽऽह—**आनुकूल्येति** ॥ ७२ ॥

**अ० टीका**—ततः किं तदाह—**तादृक्त्वादेवेति** । एवं च विभात्येवेत्यनेन चित्त्वं तथा तादृक्त्वादेव तत्सत्त्वं द्वयौदासीन्येन तत्सुखमप्यस्तीति सच्चिदानंदरूपत्वमात्मन्यनुभवसिद्धमेवेति संबंधः ॥ ७२ ॥

**रा० टीका**—तदेवोपपादयति—

**आनुकूल्ये हर्षधीः स्यात्प्रातिकूल्ये तु दुःखधीः ॥**
**द्वयाभावे निजानंदो निजदुःखं न तु क्वचित् ॥ ७३ ॥**

**आनुकूल्य इति** । ननु निजानंदवन्निजदुःखमपि किं न स्यादित्याशंक्य दुःखे निजरूपसिद्ध्यभावान्नैवमित्याह—**निजदुःखमिति** ॥ ७३ ॥

**अ० टीका**—तदानुकूल्यादिहीने निजसुखत्वमुपपादयति—**आनुकूल्य इति** । ननु तथात्वे निजं दुःखमप्यस्त्वित्याशंक्याननुभवान्नैवमित्याह—निजं दुःखं त्वित्यादिशेषेण ॥ ७३ ॥

**निजानंदे स्थिरे हर्षशोकयोर्व्यत्ययः क्षणात् ॥**
**मनसः क्षणिकत्वेन तयोर्मानसतेष्यताम् ॥ ७४ ॥**

**रा० टीका**—ननु निजानंदस्य सदानंदत्वात्सर्वदा हर्ष एव स्यान्न तु शोक इत्याशंक्य तस्य नित्यत्वेऽपि तद्ग्राहिणो मनसः क्षणिकत्वेन मानसयोस्तयोरपि क्षणिकत्वमित्याह—**निजानंद इति** ॥ ७४ ॥

**अ० टी०**—फलितमाह—**निजेति** । आत्मैव निजपदवाच्य आनंद इत्याकारकचित्तवृत्तिविशेष इत्यर्थः । स्थिरेऽचले सतीति यावत् । व्यत्ययः सर्वांशेन शून्यत्वमिति यावत् । क्षणात्क्षणमात्रादेव स्यादिति योजना । ततः किं तदाह—**मनस इति** ॥ ७४ ॥

**रा० टीका**—दृष्टांते सिद्धमर्थं दार्ष्टांतिके योजयति—

**आकाशेऽप्येवमानंदः सत्ताभाने तु संमते ॥**
**वाय्वादिदेहपर्यंतं वस्तुष्वेवं विभाव्यताम् ॥ ७५ ॥**

**आकाशेऽपीति** । एवं निजात्मन्युक्तप्रकारेणेत्यर्थः । सत्ताभाने तु भवताऽप्यभ्युपगम्येते अतो नोपपादनीये इत्यर्थः । आकाशे प्रतिपादितोऽर्थो वाय्वादिशरीरांतेष्वभ्युपगंतव्य इत्याह—**वाय्वादीति** ॥ ७५ ॥

**अ० टीका**—उपसंहरति—**आकाशेऽप्येवमिति** । तत्र सदाद्यनुवृत्तौ तु वैमत्यमेव नास्त्यन्यथात्वाकाशस्यैव तत्कुसुमत्वापत्तेरित्याह—**सत्तेति** । निरुक्तविवेचनमन्यत्राप्यतिदिशति—**वाय्वादीति** ॥ ७५ ॥

**गतिस्पर्शौ वायुरूपं वह्नेर्दाहप्रकाशने ॥**
**जलस्य द्रवता भूमेः काठिन्यं चेति निर्णयः ॥ ७६ ॥**

**रा० टीका**—तत्र वाय्वादीनामसाधारणधर्मान्दर्शयति—**गतिस्पर्शाविति** द्वाभ्याम् ॥ ७६ ॥

**अ० टीका**—तद्विभावनं संक्षिपति—**गतीति** ॥ ७६ ॥

**असाधारण आकार ओषध्यन्नवपुःष्वपि ॥***
**एवं विभाव्यं मनसा तत्तद्रूपं यथोचितम् ॥ ७७ ॥**

**रा० टीका**—**असाधारण** इति ॥ ७७ ॥

**अ० टीका**—आकाशे विशेषमाह—**असाधारण** इति । उक्तविवेचनमुपसंहरति—**एवमिति** ॥ ७७ ॥

**अनेकधा विभिन्नेषु नामरूपेषु चैकधा ॥**
**तिष्ठंति सच्चिदानंदा विसंवादो न कस्यचित् ॥ ७८ ॥**

**रा० टीका**—फलितमाह—**अनेकधेति** ॥ ७८ ॥

**अ० टीका**—फलितमाह—**अनेकेति** ॥ ७८ ॥

**निस्तत्त्वे नामरूपे द्वे जन्मनाशयुते च ते ॥**
**बुद्ध्या ब्रह्मणि वीक्षस्व समुद्रे बुद्बुदादिवत् ॥ ७९ ॥**

**रा० टीका**—तर्हि प्रतीयमानयोर्नामरूपयोः का गतिरित्याशंक्य कल्पितत्वमेव गतिरित्याह—**निस्तत्त्वे** इति । कल्पितत्वे हेतुः—**जन्मेति** ॥ ७९ ॥

**अ० टीका**—तदनुभावयति—**निस्तत्त्वे** इति । तत्र निदर्शनमाह—**समुद्र** इति । इदमपि प्राग्घटे साधितविवर्तत्वाभिप्रायमेव ॥ ७९ ॥

**सच्चिदानंदरूपेऽस्मिन्पूर्णे ब्रह्मणि वीक्षिते ॥**
**स्वयमेवावजानाति नामरूपे शनैः शनैः ॥ ८० ॥**

**रा० टीका**—ततः किमित्यत आह—**सच्चिदानंदेति** ॥ ८० ॥

**अ० टीका**—फलितमाह—**सच्चिदिति** ॥ ८० ॥

**यावद्यावदवज्ञा स्यात्तावत्तावत्तदीक्षणम् ॥**
**यावद्यावद्वीक्ष्यते तत्तावत्तावदुभे त्यजेत् ॥ ८१ ॥**

**रा० टीका**—ब्रह्मज्ञानदार्ढ्यस्य द्वैतावज्ञापूर्वकत्वाच्छ्रवणादिवद्द्वैतावज्ञाऽपि कर्तव्येत्याह—**यावदिति** ॥ ८१ ॥

**अ० टीका**—तयोर्वीक्षणावज्ञयोः परस्परहेतुत्वमाह—**यावद्यावदिति** । उभे नामरूपे ॥ ८१ ॥

**तदभ्यासेन विद्यायां सुस्थितायामयं पुमान् ॥**
**जीवन्नेव भवेन्मुक्तो वपुरस्तु यथा तथा ॥ ८२ ॥**

**रा० टीका**—उभयाभ्यासस्य फलमाह—**तदभ्यासेनेति** ॥ ८२ ॥

**अ० टीका**—एवं नामरूपात्मकद्वैतानादरपूर्वकमनुस्यूताद्वैतसच्चिदानंदात्मतत्त्वानुचिंतनाभ्यासफलमाह—**तदभ्यासेनेति** । सुस्थितायां विपरीतभावनासंस्कारलक्षणप्रतिबंधबाधेन जीवन्मुक्तिदानदक्षायां सत्यामित्यर्थः ॥ ८२ ॥

---

* ओषध्यन्नवपुष्ष्वपीत्यपि पाठः ।

**तच्चिंतनं तत्कथनमन्योन्यं तत्प्रबोधनम् ॥**
**एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ ८३ ॥**

**रा० टीका**—इदानीं ब्रह्माभ्यासस्वरूपमाह—**तच्चिंतनमिति** ॥ ८३ ॥

**अ० टीका**—निरुक्ततदभ्यासं विशदयति—**तच्चिंतनमिति** । इदमधस्तादेवोक्तार्थम् ॥ ८३ ॥

**वासनाऽनेककालीना दीर्घकालं निरंतरम् ॥**
**सादरं चाभ्यस्यमाने सर्वथैव निवर्तते ॥ ८४ ॥**

**रा० टीका**—नन्वनादिकालमारभ्य प्रतिभासमानस्य द्वैतस्य कदाचित्केन ज्ञानाभ्यासेन कथं निवृत्तिरित्याशंक्य दीर्घकालनैरंतर्येण सत्कारसेवितेनाभ्यासेन निवर्तत एवेत्याह—**वासनेति** ॥ ८४ ॥

**अ० टीका**—तत्र हेतुः—**वासनेति । दीर्घेति** । प्रपंचस्यानादित्वादेव । कालस्य सर्वाधारत्वप्रयोजिकेयं शक्तिः काली सा इना " **इनः सूर्ये** प्रभौ राज्ञि " इति नानार्थान्नियामिका प्रभुवद्यस्याः सा तथा दीर्घा चासौ कालीना चेति तथेति साधुः । अत एव । **दीर्घेति । पतंजलिर्हि** दीर्घकालनैरंतर्यसत्काराणामेवावश्यकत्वमाह ॥ ८४ ॥

**रा० टीका**—ननु ब्रह्मण एकस्यानेकाकारजगद्धेतुत्वमनुपपन्नमित्याशंक्य मायासहितस्योपपद्यत इत्याह—

**मृच्छक्तिवद्ब्रह्मशक्तिरनेकाननृतान्सृजेत् ॥**
**यद्वा जीवगता निद्रा स्वप्नश्चात्र निदर्शनम् ॥ ८५ ॥**

**मृच्छक्तिवदिति** । अनृतान्कार्याणीत्यर्थः । ननु मृच्छक्तेः सत्यत्वादनेकहेतुत्वाद्विषमो दृष्टांत इत्याशंक्य पक्षांतरमाह—**यद्वेति** ॥ ८५ ॥

**अ० टी०**—ननु भवत्वेवं दीर्घकालं निरंतरं ससत्कारं च तच्चिंतनादिनाऽभ्यस्यमानं ब्रह्मैव विपरीतभावनासंस्कारध्वंसनाज्जीवन्मुक्तिसुखदमथाप्यद्वैतस्य तस्य कथं नामानेकविधजगत्कल्पकत्वमेवाऽऽदावात्मनीत्यत आह—**मृच्छक्तिवदिति** । ननु मृदादिदृष्टांत एवाऽऽदौ कारणीभूतसन्मात्रज्ञानेन सकलकार्यीभूतानंतानिर्वचनीयदृश्यज्ञानबोधनादद्वैताभिमुखीकरणेन श्रोतॄणां तत्त्वसाक्षात्कारद्वाराऽद्वैतसच्चिदानंदात्मामृतमात्रतात्पर्यकस्ततः क्व तच्छक्तिदृष्टांतेन जागती व्यवस्था घटेतेत्यस्वरसादाह—**यद्वेति** । निदर्शनं क्रमान्मायाख्ये ह्यविद्यापरनाम्नि कारणे जगल्लक्षणे कार्ये च दृष्टांतोऽस्तीत्यर्थः ॥ ८५ ॥

**रा० टीका**—दृष्टांतं विशदयति—

**निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ॥**
**ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यंतकारिणी ॥ ८६ ॥**

**निद्रेति** । दार्ष्टांतिकमाह—**ब्रह्मणीति** ॥ ८६ ॥

**अ० टीका**—दार्ष्टांतिके योजयति—**निद्रेति** ॥ ८६ ॥

**स्वप्ने वियद्गतिं पश्येत्स्वमूर्धच्छेदनं यथा ॥**
**मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः ॥ ८७ ॥**

**रा० टीका**—दुर्घटकारित्वमेव दर्शयति—**स्वप्न इति** ॥ ८७ ॥

**अ० टीका**—स्वप्ने दुर्घटत्वं स्पष्टयति—**स्वप्न इति** ॥ ८७ ॥

**इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा ॥**
**यथा यथेक्ष्यते यद्यत्तत्तद्युक्तं तथा तथा ॥ ८८ ॥**

**रा० टीका**—स्वप्नस्य दुर्घटत्वे हेतुमाह—**इदमिति** ॥ ८८ ॥

**अ० टीका**—ततः किं तदाह—**इदमिति** ॥ ८८ ॥

**ईदृशो महिमा दृष्टो निद्राशक्तेर्यदा तदा ॥**
**मायाशक्तेरचिंत्योऽयं महिमेति किमद्भुतम् ॥ ८९ ॥**

**रा० टीका**—उक्तमर्थं कैमुतिकन्यायेन स्पष्टयति—**ईदृश इति** ॥ ८९ ॥

**अ० टीका**—एवं निद्राशक्तेर्दुर्घटघटकत्व स्पष्टयित्वा प्रकृते तत्सिद्धिं कैमुत्यतो द्योतयति—**ईदृश इति** ॥ ८९ ॥

**शयाने पुरुषे निद्रा स्वप्नं बहुविधं सृजेत् ॥**
**ब्रह्मण्येवं निर्विकारे विकारान् कल्पयत्यसौ ॥ ९० ॥**

**रा० टीका**—अप्रयतमानब्रह्मनिष्ठाया मायाया जगद्धेतुत्वे दृष्टांतमाह—**शयान इति** ॥ ९० ॥

**अ० टीका**—तदेव दृष्टांतदार्ष्टांतिकयोः स्फुटयति—**शयान इति** । असौ माया ॥ ९० ॥

**रा० टीका**—मायया सृष्टान्पदार्थान्दर्शयति—

**खानिलाग्निजलोर्व्यंडलोकप्राणिशिलादिकाः ॥**
**विकाराः प्राणिधीष्वंतश्चिच्छायाप्रतिबिंबिताः ॥ ९१ ॥**

**खानिलेति** । ननु पांचभौतिकत्वेन साम्येऽपि केषांचिच्चेतनत्वं केषांचिज्जडत्वं कुत इत्याशंक्याऽऽह—**प्राणीति** । प्राणिशरीरेष्वंतःकरणेषु चैतन्यप्रतिबिंबनाच्चेतनत्वमितरत्र तदभावाज्जडत्वमित्यर्थः ॥ ९१ ॥

**अ० टीका**—तानेव विकारान्स्वसंमतं तत्स्वरूपं चाऽऽह—**खेति** । लोकाः सत्यादयः । आदिना वृक्षादयः । **प्राणीति** । जीवबुद्धिषु । **अंतरिति** । प्रमाणादिवृत्त्यवच्छिन्नचिदाभासव्युदासायांतरिति । एवं च कूटस्थाविविक्तसर्वजीवबुद्धिप्रतिबिंबितचिदाभासप्रतिबिंबिता इत्यर्थः । अत्र बिंबराहित्यमेव दुर्घटत्वम् । एतेन प्रतिजीवं प्रपंचभेदरूपं भामतीमतमत्र सूचितम् ॥ ९१ ॥

**चेतनाचेतनेष्वेषु सच्चिदानंदलक्षणम् ॥**
**समानं ब्रह्म भिद्येते नामरूपे पृथक् पृथक् ॥ ९२ ॥**

**रा० टीका**—ननु चेतनाचेतनविभागश्चिद्रूपब्रह्मकृत एव किं न स्यादित्याशंक्य ब्रह्मणः सर्वोपादानत्वेन सर्वत्र समत्वान्नैवमित्याह—**चेतनेति** ॥ ९२ ॥

**अ० टीका**—अथ प्रकृतं नामरूपात्मकद्वैतस्य कल्पितत्वेनोपेक्षणपूर्वकमधिष्ठानीभूताद्वैतसच्चिदानंदरूपब्रह्मात्माचिंतनमेव प्रपंचयति—**चेतनेत्यादिना** ॥ ९२ ॥

**रा० टीका**—ब्रह्मणश्चिज्जडसाधारणत्वे हेतुमाह—

**ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ॥**
**उपेक्ष्य नामरूपे द्वे सच्चिदानंदधीर्भवेत् ॥ ९३ ॥**

**ब्रह्मणीति**। ब्रह्मणः सर्वकल्पनाधारत्वात्सर्वगतत्वमित्यर्थः। तत्कथमवगम्यत इत्याशंकायां कल्पितनामरूपत्यागेऽधिष्ठानं ब्रह्मावगम्यत इत्याह—**उपेक्ष्येति** ॥ ९३ ॥

**अ० टीका**—नामरूपभेदे सच्चिदानंदसाम्ये च हेतुं कल्पितत्वादिलक्षणं द्योतयन्दृष्टांतेन तं साधयति—**ब्रह्मणीति**। ततः किं तदाह—**उपेक्ष्येति** ॥ ९३ ॥

**रा० टीका**—उक्तार्थे दृष्टांतमाह—

**जलस्थेऽधोमुखे स्वस्य देहे दृष्टेऽप्युपेक्ष्य तम् ॥**
**तीरस्थ एव देहे स्वे तात्पर्यं स्याद्यथा तथा ॥ ९४ ॥**

**जलस्थ इति**। नीरेऽधोमुखे देहे परिदृश्यमानेऽपि तत्राऽऽदरं परित्यज्य तीरस्थे स्वदेहे तद्विपरीते ममत्वबुद्धिर्यथा तथेत्यर्थः ॥ ९४ ॥

**अ० टीका**—उपेक्षायां चित्रदृष्टांतेन हेतुर्द्योतितोऽपि कदाचिद्रम्यतमचित्रेऽत्यादरोऽपि स्वानुभवसिद्ध इति दृष्टांतांतरं स्पष्टयति—**जलस्थ इति**। अत्राधोमुखप्रतिबिंबदर्शने कारणं त्वादर्शादौ संमुखे निर्मलद्रव्ये तद्भेदनाद्यसमर्थानां चक्षुःकिरणानां परावृत्यबिंबीमुखादिग्रहणे प्राप्ते सति पुरःस्थितव्यावहारिकदेवदत्तदर्शने द्रष्टुर्दक्षिणं चक्षुस्तद्वामावयवैः सहैव संबध्यते तदितरमितरैरतस्तेषां तत्संस्काराद्बिंबीभूतोऽपि तथैव भासत इति वामस्कंधस्थितं यज्ञोपवीतमप्यादर्शे दक्षिणस्कंधगत्वेन यथा भासते तथा जलस्थे प्रतिबिंबदर्शने द्रष्टा तावदधोमुखी भवतीति तदीयचक्षुःकिरणा अपि तमधोमुखमूर्ध्वपादमेव गृह्णंतीति सर्वमवदातम्। अत्र विस्तरस्तु मदीये सिद्धांतरत्नशुद्धांत एव द्रष्टव्य इति दिक् ॥ ९४ ॥

**सहस्रशो मनोराज्ये वर्तमाने सदैव तत् ॥**
**सर्वैरुपेक्ष्यते यद्वदुपेक्षा नामरूपयोः ॥ ९५ ॥**

**रा० टीका**—इदानीं सर्वजनप्रसिद्धं दृष्टांतांतरमाह—**सहस्रश इति**। उपेक्षा कर्तव्येति शेषः ॥ ९५ ॥

**अ० टीका**—अत्र नामरूपयोः क्षणिकत्वेनोपेक्ष्यत्वे सर्वलोकप्रसिद्धान्दृष्टांतानपि दार्ढ्यार्थमाह—**सहस्रश** इतिप्रभृतिभिः। उपेक्षा कर्तव्येति शेषः ॥ ९५ ॥

**क्षणे क्षणे मनोराज्यं भवत्येवान्यथाऽन्यथा ॥**
**गतं गतं पुनर्नास्ति व्यवहारो बहिस्तथा ॥ ९६ ॥**

**रा० टीका**—प्रपंचवैचित्र्ये दृष्टांतमाह—**क्षण इति**। दार्ष्टांतिकमाह—**व्यवहार इति** ॥ ९६ ॥

**अ० टीका**—**क्षणे क्षण इति**। पूर्वप्रपंचनमेवेदम् ॥ ९६ ॥

***न बाल्यं यौवने लभ्यं यौवनं स्थाविरे तथा ॥**
**मृतः पिता पुनर्नास्ति नाऽऽयात्येव गतं दिनम् ॥ ९७ ॥**

* न लभ्यं यौवने बाल्यमित्यच्युतरायपाठः।

**रा० टीका**—तदेव विवृणोति—**न बाल्यमिति** ॥ ९७ ॥

**अ० टीका**—**न लभ्यमिति** । स्थाविरे वृद्धत्वे ॥ ९७ ॥

**मनोराज्याद्विशेषः कः क्षणध्वंसिनि लौकिके ॥**
**अतोऽस्मिन्भासमानेऽपि तत्सत्यत्वधियं त्यजेत् ॥ ९८ ॥**

**रा० टीका**—द्वैतक्षणिकत्वमुपसंहरति—**मनोराज्यादिति** । क्षणिकत्वसाधने प्रयोजनमाह—**अत इति** ॥ ९८ ॥

**अ० टीका**—दार्ष्टांतिके योजयति—**मनोराज्यादिति** ॥ ९८ ॥

**उपेक्षिते लौकिके धीर्निर्विघ्ना ब्रह्मचिंतने ॥**
**नटवत्कृत्रिमास्थायां निर्वहत्येव लौकिकम् ॥ ९९ ॥**

**रा० टीका**—ननु लौकिकोपेक्षायां को लाभ इत्याशंक्य ब्रह्मणि धीः स्थिरा भवतीत्याह—**उपेक्षित इति** । तर्हि ज्ञानिनो व्यवहारः कथमित्याशंक्याऽऽह—**नटवदिति** ॥ ९९ ॥

**अ० टीका**—तत्फलमाह—**उपेक्षित इति** । ननु तर्हि लौकिकं कथं निर्वहेत् । तदावश्यकता तु **भगवताऽप्युक्ता**—" **लोकसंग्रहमेवापि** संपश्यन्कर्तुमर्हसि " इति । तत्राऽऽह—**नटवदिति** ॥ ९९ ॥

**प्रवहत्यपि नीरेऽधः स्थिरा प्रौढशिला यथा ॥**
**नामरूपान्यथात्वेऽपि कूटस्थं ब्रह्म नान्यथा ॥ १०० ॥**

**रा० टीका**—ननु ज्ञानिनो व्यवहाराभ्युपगमे विकारित्वं प्रसज्येतेत्याशंक्य बुद्धौ व्यवहारवत्यामपि तत्साक्ष्यात्मा निर्विकार इति सदृष्टांतमाह—**प्रवहतीति** । उदक उपरि प्रवहत्यप्यधःस्थिता प्रौढा शिला यथा न चलति तथैवं बुद्धौ संसरत्यामपि न ज्ञानी संसरतीत्यर्थः ॥ १०० ॥

**अ० टीका**—तत्र दृष्टांतमाह—**प्रवहत्यपीति** ॥ १०० ॥

**निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद्वियत् ॥**
**सच्चिद्घने तथा नाना जगद्गर्भमिदं वियत् ॥ १०१ ॥**

**रा० टीका**—नन्वखंडे ब्रह्मणि तद्विलक्षणस्य जगतः कथमवभासनमित्याशंक्य निश्छिद्रे दर्पणे सावकाशवस्तुनो यथा भानं तद्वदित्याह—**निश्छिद्र इति** ॥ १०१ ॥

**अ० टीका**—तत्र सदृष्टांतं द्वैतमिथ्यात्वसाधकमेव हेतुमाह—**निश्छिद्र इति** । विशेषस्तु दार्ष्टांतिके बिंबमंतरैव भानम् । तदुक्तं मदीयाद्वैतसुधायाम्—

" **मय्यद्वैत**चिदादर्शे द्रष्टाऽपि सहितं जगत् ।
**चित्रबिंबं** विनैवेदं प्रतिबिंबत्वमागतम् " इति ॥ १०१ ॥

**अदृष्ट्वा दर्पणं नैव तदंतस्थेक्षणं तथा ॥**
**अमत्वा सच्चिदानंदनामरूपमतिः कुतः ॥ १०२ ॥**

**रा० टीका**—नन्वदृश्ये ब्रह्मणि कथं जगत्प्रतीतिरित्याशंक्य सच्चिदानंदप्रतीतिपुरःसरमेव जगत्प्रतीतिरिति सदृष्टांतमाह—**अदृष्ट्वेति** ॥ १०२ ॥

**अ० टीका**—निरुक्तदृष्टांतेऽप्यधिष्ठानज्ञानपूर्वकमेवाध्यस्तज्ञानमाह—**अदृष्ट्वेति** । दार्ष्टांतिके योजयति—**अमत्वेति** ॥ १०२ ॥

**प्रथमं सच्चिदानंदे भासमानेऽथ तावता ॥**
**बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः ॥ १०३ ॥**

**रा० टीका**—ननु नामरूपयोरपि भासमानत्वात्कथं निर्विषयब्रह्मप्रतीतिरित्याशंक्य तद्बुद्ध्युपायमाह—**प्रथममिति** । सच्चिदानंदे ब्रह्मणि कल्पितनामरूपात्मके प्रपंचे सच्चिदानंदमात्रं बुद्ध्या गृहीत्वा नामरूपयोर्बुद्धिं न धारयेत् ॥ १०३ ॥

**अ० टीका**—तत्र हेतुं तेन वृत्तिनिरोधनं च राजयोगाभिधानमप्याऽऽह—**प्रथममिति** ॥ १०३ ॥

**रा० टीका**—फलितमाह—

**एवं च निर्जगद्ब्रह्म सच्चिदानंदलक्षणम् ॥**
**अद्वैतानंद एतस्मिन्विश्राम्यंतु जनाश्चिरम् ॥ १०४ ॥**

**एवमिति** । एवं च सति निर्जगद्ब्रह्म सच्चिदानंदलक्षणं भवतीत्यर्थः ॥ १०४ ॥

**अ० टीका**—फलितमाह—**एवं चेति** । एतदनुसंधाने मुक्तान्मुमुक्षूंश्च साधारण्येन प्रार्थयन्स्वामानित्वं व्यनक्ति—**अद्वैतेति** ॥ १०४ ॥

**ब्रह्मानंदाभिधे ग्रंथे तृतीयोऽध्याय ईरितः ॥**
**अद्वैतानंद एव स्याज्जगन्मिथ्यात्वचिंतया ॥ १०५ ॥**

**रा० टीका**—इदानीमध्यायार्थमुपसंहरति—**ब्रह्मानंदेति** ॥ १०५ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्विद्यारण्यमुनिविरचितो ब्रह्मानंदेऽद्वैतानंदो नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचिता ब्रह्मानंदेऽद्वैतानंदव्याख्या समाप्ता ॥ १३ ॥

**अ० टीका**—प्रकृतपंचाध्यायात्मकग्रंथेनास्य प्रकरणस्य सांगत्यं तदभ्यासफलं चाऽऽह—**ब्रह्मानंदेति** । ननूपक्रमे तावद्यदुक्तं भवता—

"**संभव इति** जीव ईशः सोऽयं वा कथमपीह कल्पांते ।
न च दृश्यतेऽत्र तर्कः प्रतिबंधोऽयं तृतीय ऐक्येऽपि"

इत्यार्यया प्रमेयासंभावनाख्यं शोधितजीवब्रह्मैक्ये प्रतिबंधमभिधाय ।

"उक्तं त्रयोदशेऽपि च नानाविधयुक्तितोऽद्वयैक्यस्य ।
संभावनमिति तस्य तु तत्प्राधान्यं समवसेयम्"

इत्यार्यांतरेणास्याद्वैतानंदाख्यस्य त्रयोदशप्रकरणस्य तद्बाधकत्वं तत्कथमुपपद्यत इति चेच्छृणु । अत्र हि मृद्घटोदाहरणेन कारणस्योपादानाख्यस्य सत्यत्वं सर्वावस्थानुगतत्वात्कार्यस्य विकाराख्यघटादेरतथात्वान्मिथ्यात्वं चोक्तमिति तु निर्विवादमेव । एवं च "**कार्योपाधिरयं** जीवः कारणोपाधिरीश्वरः" इति श्रुतेर्जीवस्य कार्योपाधित्वेन कार्यमिथ्यात्वसिद्धिनाऽऽतरीयकसिद्धमिथ्यात्वात्तदुपलक्षितचिन्मात्रस्य कारणोपाधिनेश्वरेण विशिष्टेन सहैक्यासंभवेऽपि कारणे कार-

णतायाः कार्यैकनिरूपितत्वात्तन्मिथ्यात्वेनैतस्याप्यविनाभावसिद्धमिथ्यात्वात्तदुपलक्षितचिन्मात्रेण सहैक्ये किं नाम बाधकम्। न हि घटोपाधिभंगे घटाकाशस्य महाकाशेन सहैक्ये निसर्गसिद्धे कश्चिदपि विप्रतिपद्यते विद्वान्। एवं निद्रास्वप्नदृष्टांतेनात्रत्येनैव कार्यकारणात्मकस्य निखिलद्वैतस्य मिथ्यात्वं तदुपलक्षितस्य तदधिष्ठानचिन्मात्रस्याद्वैतब्रह्मणः पारमार्थिकमैक्यमपि सुघटमेव। तस्मादुचितमेवास्य प्रकरणस्य निरुक्तप्रतिबंधबाधकत्वमिति ध्येयं धीरैः॥१०९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमणषष्ट्युपनामकश्रीनारायणशास्त्रिचरणसरोजराजहंसायमानमानसमोडकोपनामकाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानंदेंदुकौमुद्यभिधायां पंचदशीटीकायामद्वैतानंदप्रकाशस्त्रयोदशः संपूर्णः ॥ १३ ॥

इति पञ्चदश्यां त्रयोदशं प्रकरणं समाप्तम् ॥ १३ ॥

# अथ पञ्चदश्या चतुर्दशं प्रकरणम् ।

## तत्र ब्रह्मानन्दे विद्यानन्दाख्यश्चतुर्थोऽध्यायः ।

**योगेनाऽऽत्मविवेकेन द्वैतमिथ्यात्वचिंतया ॥**
**ब्रह्मानंदं पश्यतोऽथ विद्यानंदो निरूप्यते ॥ १ ॥**

**रा० टीका**—इदानीं वृत्तवर्तिष्यमाणयोर्ग्रंथयोः संबंधमाह—**योगेनेति** ॥ १ ॥

**अ० टीका**—अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वांश्चाऽऽचार्यवर्यांत्रप्रकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥
मत्वा जीवंजीवान्विद्यारण्यं च भारतीतीर्थम् ।
विद्यानंदं विद्याप्रकाशतो द्योतयामि कौमुद्याः ॥ २ ॥

अथ भगवान्भारतीतीर्थमुनिवरः स्वकृत एव ब्रह्मानंदाख्ये **पंचदश्यास्तृतीयां-**शत्वेन पंचाध्यायात्मके ग्रंथे **विद्यानंदाभिधं चतुर्थमध्यायं** चतुर्दशं प्रकरणमारभमाणः प्राच्यप्रकरणैः सहास्य संगतिं कथयन्प्रथि(?)प्रमाणप्रयोजनं मंगलमप्यद्वैतब्रह्मात्मैक्यानुसंधानलक्षणं ध्वनयंस्तावतैवास्य विषयादिचतुर्विधानुबंधानपि व्यनक्ति—**योगेनेति** ॥ १ ॥

**विषयानंदवद्विद्यानंदो धीवृत्तिरूपकः ॥**
**दुःखाभावादिरूपेण प्रोक्त एष चतुर्विधः ॥ २ ॥**

**रा० टीका**—विद्यानंदस्वरूपमाह—**विषयेति** । तस्यावांतरभेदमाह—**दुःखाभावेति** ॥ २ ॥

**अ० टीका**—तद्रूपमाह—**विषयेति** ॥ २ ॥

**दुःखाभावश्च कामाप्तिः कृतकृत्योऽहमित्यसौ ॥**
**प्राप्तप्राप्योऽहमित्येव चातुर्विध्यमुदाहृतम् ॥ ३ ॥**

**रा० टीका**—चातुर्विध्यमेव दर्शयति—**दुःखाभावश्चेति** ॥ ३ ॥

**अ० टीका**—तच्चातुर्विध्यं विस्पष्टयति—**दुःखेति** । अत्र पूर्वद्वयस्यैव विवरणरूपमुत्तरद्वयं हेतुसाध्यभावेनानुभवात्मत्वाद्धर्मितयैवाभिधत्ते—**कृतेत्यादिना** शेषेण ॥ ३ ॥

**रा० टीका**—निवर्तनीयं दुःखं विभजते—

**ऐहिकं चामुष्मिकंचेत्येवं दुःखं द्विधेरितम् ॥**
**निवृत्तिमैहिकस्याऽऽह बृहदारण्यकं वचः ॥ ४ ॥**

**ऐहिकमिति** । ऐहिकस्य निवृत्तिर्बृहदारण्यकवाक्येनोच्यत इत्याह—**निवृत्तिमिति** ॥ ४ ॥

**अ० टीका**—तत्र प्रथमप्रा योगिदुःखद्वैविध्यं विधत्ते—**ऐहिकं चेति** । ब्रह्मा-त्मैक्यप्रमयैव तस्य सर्वस्य समूलस्य ास्तौ प्रमाणं प्रतिजानीते—**निवृत्तिमिति** ॥ ४ ॥

**आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥**
**किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ ५ ॥**

**रा० टीका**—तच्छ्रुतिवाक्यं पठति—**आत्मानमिति** ॥ ५ ॥

**अ० टीका**—तदेव पठति **आत्मानं चेदिति** ॥ ५ ॥

**रा० टीका**—आत्मनि शोकसंबंधं दर्शयितुं तद्भेदमाह—

**जीवात्मा परमात्मा चेत्यात्मा द्विविध ईरितः ॥**
**चित्तादात्म्यात्त्रिभिर्देहैर्जीवः सन् भोक्तृतां व्रजेत् ॥ ६ ॥**

**जीवात्मेति** । आत्मनो जीवत्वे निमित्तमाह—**चित्तादात्म्यादिति** । चैतन्यस्य स्थूलसूक्ष्मकारणरूपैस्त्रिभिः शरीरैस्तादात्म्यभ्रमे सति चितो भोक्तृत्वं भवति स भोक्ता जीव इत्युच्यते ॥ ६ ॥

**अ० टीका**—एतद्विस्तरतस्तृप्तिदीपे विवृतमपि संक्षेपतः प्रकृतेऽपि व्याकुरुते—**जीवेत्यादिषड्भिः**। तत्र जीवस्वरूपं निरूपयति—**चिदिति** । शुद्धाद्वैतचितिरेवाविद्यया त्रिभिः स्थूलादिभिः प्रसिद्धैर्देहैः साकं तादात्म्याद्भेदसहिष्ण्वभेदाध्यासाज्जीवः सन्भोक्तृतां व्रजेदिति योजना ॥ ६ ॥

**रा० टीका**—इदानीं परमात्मनः स्वरूपमाह—

**परात्मा सच्चिदानंदस्तादात्म्यं नामरूपयोः ॥**
**गत्वा भोग्यत्वमापन्नस्तद्विवेके तु नोभयम् ॥ ७ ॥**

**परात्मेति** । तस्य भोग्यरूपत्वापत्तिप्रकारमाह—**तादात्म्यमिति** । नामरूपकल्पना-धिष्ठानत्वेन तत्तादात्म्यं प्राप्य भोग्यत्वमश्नुत इत्यर्थः । भोक्तृत्वाद्यभावे कारणमाह—**तद्विवेक इति** । ताभ्यां शरीरत्रयजगद्भ्यां विवेके भेदज्ञाने जाते सति नोभयं भोक्तृभोग्यरूपं नास्तीत्यर्थः ॥ ७ ॥

**अ० टीका**—**परात्मेति** । नन्वथापि कथं भोक्त्रादिद्वैतोपशांतिरित्यत आह—**तदित्यादिशेषेण** ॥ ७ ॥

**भोग्यमिच्छन् भोक्तुरर्थे शरीरमनुसंज्वरेत् ॥**
**ज्वरास्त्रिषु शरीरेषु स्थिता न त्वात्मनो ज्वराः ॥ ८ ॥**

**रा० टीका**—उक्तमर्थं विवृणोति—**भोग्यमिति** ॥ ८ ॥

**अ० टीका**—**भोग्यमिति** । ननु ज्वराः किमात्मनि नेत्याह—**ज्वरा इति**॥८॥

**व्याधयो धातुवैषम्ये स्थूलदेहे स्थिता ज्वराः ॥**
**कामक्रोधादयः सूक्ष्मे द्वयोर्बीजं तु कारणे ॥ ९ ॥**

**रा० टीका**—कस्मिञ्शरीरे को ज्वर इत्याशंक्य स्थूलदेहे विद्यमानाञ्ज्वरान्दर्शय-ति **व्याधय इति** । लिंगदेहकारणदेहगताञ्ज्वरानाह—**कामेति** ॥ ९ ॥

**अ० टीका**—व्याधय इति। तत्प्रपंचनमेवेदम्। बीजं संस्कारादि ॥ ९ ॥

**रा० टीका**—इदानीमुदाहृतश्रुतितात्पर्यकथनव्याजेन पूर्वोक्तमेवार्थं विशदयति—

**अद्वैतानंदमार्गेण परात्मनि विवेचिते ॥**
**अपश्यन्वास्तवं भोग्यं किं नामेच्छेत्परात्मवित् ॥ १० ॥**

अद्वैतेति। तृतीयाध्यायोक्तप्रकारेण मायाकार्यनामरूपाभ्यां सच्चिदानंदे परमात्मनि विवेचिते भेदेन ज्ञाते सति सर्वं प्रपंचं मिथ्येति जानन् किं नाम भोग्यमिच्छति ॥ १० ॥

**अ० टीका**—अद्वैतेति। भोग्यं नामरूपात्मकं संयोगवियोगाभ्यां क्रमादिष्टत्वाद्यवच्छेदेन सुखादिप्रदमखिलदृश्यमित्यर्थः ॥ १० ॥

**आत्मानंदोक्तरीत्याऽस्मिञ्जीवात्मन्यवधारिते ॥**
**भोक्ता नैवास्ति कोऽप्यत्र शरीरे तु ज्वरः कुतः ॥ ११ ॥**

**रा० टीका**—ततः पूर्वाध्यायोक्तरीत्या जीवात्मस्वरूपेऽसंगकूटस्थचैतन्यरूपे निश्चिते सति कामयितुरभावाज्ज्वरादिसंबंधो नास्तीत्याह—**आत्मानंदेति** ॥ ११ ॥

**अ० टीका**—आत्मेति। इदमप्युक्तभोग्यमिथ्यात्ववद्भोक्तृमिथ्यात्वावधारकमेव ११

**रा० टीका**—इदानीमामुष्मिकं ज्वरं दर्शयति—

**पुण्यपापद्वये चिंता दुःखमामुष्मिकं भवेत् ॥**
**प्रथमाध्याय एवोक्तं चिंता नैनं तपेदिति ॥ १२ ॥**

**पुण्येति**। तस्याभावः **प्रथमाध्याये** निरूपित इत्याह—**प्रथमेति** ॥ १२ ॥

**अ० टीका**—एवमैहिकदुःखाभावमभिधाय पारत्रिकं तं वक्तुमादौ तत्प्रतियोग्येव संक्षिपति—**पुण्येति**। तदभावं प्रागुक्तमेव स्मारयति—**प्रथमेति**। " एतमेव तपेन्नैषा चिंता कर्माग्निसंभृता " इति **पंचमश्लोक** एव तदीये ॥ १२ ॥

**यथा पुष्करपर्णेऽस्मिन्नपामश्लेषणं तथा ॥**
**वेदनादूर्ध्वमागामिकर्मणोऽश्लेषणं बुधे ॥ १३ ॥**

**रा० टीका**—ननु ज्ञानिन आरब्धकर्मविषया चिंता मा भूदागामिकर्मविषया चिंता भवत्येवेत्याशंक्य " तद्यथा पुष्करपर्णे " इत्यादिश्रुत्या ज्ञानिन आगामिकर्मसंबंधनिराकरणात्तद्विषयाऽपि चिंता नास्तीत्याह—**यथेति** ॥ १३ ॥

**अ० टीका**—ननु तद्वचनं संचितपरमेवास्तु क्रियमाणं तु बाधकं स्यादेवेत्यत आह—**यथेति**। तद्यथा पुष्करपर्ण इत्यादिश्रुतिः प्रसिद्धैव ॥ १३ ॥

**इषीकातृणतूलस्य वह्निदाहः क्षणाद्यथा ॥**
**तथा संचितकर्मास्य दग्धं भवति वेदनात् ॥ १४ ॥**

**रा० टीका**—"तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंते" इतिश्रुत्यवष्टंभेन संचितकर्मविषयाऽपि चिंता ज्ञानिनो नास्तीत्याह—**इषीकेति** ॥ १४ ॥

**अ० टीका**—एवं " तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंते " इतिश्रुतिमप्यर्थतः पठति—**इषीकेति** ॥ १४ ॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ १५ ॥**

**रा० टीका**—उक्तार्थे भगवद्वाक्यमपि प्रमाणयति—**यथैधांसीति** ॥ १५ ॥

**अ० टीका**—तत्र स्मृतिमपि संवादयति—**यथेति**प्रभृतिना ॥ १५ ॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥**
**हत्वाऽपि स इमाँल्लोकान्न हंति न निबध्यते ॥ १६ ॥**

**रा० टीका**—**यस्य नाहमिति** ॥ १६ ॥

**अ० टीका**—**यस्येति** । भावः सन्मात्ररूप आत्मा । अहंकृतोऽहंकारतादात्म्यसाधित इत्यर्थः । एतादृशो यस्य न भवति । अत एव । **बुद्धिरित्यादि** । स इमान्प्रत्यक्षविषयाँल्लोकान्प्राणिनः । हत्वाऽपि विनिहत्य स्थितोऽपीति यावत् । शिष्टं तु स्पष्टमेव ॥ १६ ॥

**मातापित्रोर्वधस्तेयं भ्रूणहत्यान्यदीदृशम् ॥**
**न मुक्तिं नाशयेत्पापं मुखकांतिर्न नश्यति ॥ १७ ॥**

**रा० टीका**—अस्मिन्नेवार्थे न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं चन चक्रुषो मुखान्नीलं वेतीति**कौषीतकी**श्रुतिवाक्यमर्थतः पठति—**मातापित्रोरिति** । चनेत्येकं पदं नीलमिति कांतिरित्यर्थः ॥ १७ ॥

**अ० टीका**—एतन्मूलीभूतां " न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं चन चक्रुषो मुखान्नीलं वा" इति**कौषीतकी**श्रुतिमर्थतः पठति—**मातेति** । एतदर्थस्तूक्तोऽनुभूतिप्रकाशे—" वाचा वा मनसा मातृवधादीन्कुरुते यदि । तथाऽपि ज्ञानिनो मोक्षो न ह्येतैर्विनिवार्यते । पापं कृतवतोऽप्यस्य मुखे हर्षक्षयो न हि । न मुक्तिर्नश्यतीत्येव शास्त्रैरस्य विनिश्चयात् " इत्यादिना ॥ १७ ॥

**दुःखाभाववदेवास्य सर्वकामाप्तिरीरिता ॥**
**सर्वान् कामानसावाप्त्वा ह्यमृतोऽभवदित्यतः ॥ १८ ॥**

**रा० टीका**—उक्तचातुर्विध्यमध्ये द्वितीयप्रकारमाह—**दुःखेति** । ईरिता श्रुत्येति शेषः । अस्मिन्नर्थे **ऐतरेयश्रुति**वाक्यमर्थतः पठति—**सर्वानिति** ॥ १८ ॥

**अ० टीका**—अथ क्रमागतां सुखावाप्तिमपि कथयति—**दुःखेति** । ईरिता **एतरेयश्रुत्येति** शेषः । तामेव श्रुतिमर्थतः संग्रथयति—**सर्वानिति** । सर्वान्कामानाप्त्वाऽमृतः समभवदिति ह्यैतरेयोपनिषद्वचनम् ॥ १८ ॥

**जक्षन्क्रीडन्रतिं प्राप्तः स्त्रीभिर्यानैस्तथेतरैः ॥**
**शरीरं न स्मरेत्प्राणः कर्मणा जीवयेदमुम् ॥ १९ ॥**

**रा० टीका**—जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरमिति **छांदोग्यश्रुति**वाक्यमर्थतः पठति—**जक्षन्निति** ॥ १९ ॥

**अ० टीका**—एवमत्रैव जक्षत्क्रीडन्रममाणः स्त्रीभिर्वायानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरन्निदं शरीरमिति **छांदोग्यश्रुति**मप्यर्थतः संग्रथयति—**जक्षन्निति** । विवृतमिदं

वचोऽनुभूतिप्रकाशे —" इंद्रराजादिदेहेषु नानाखाद्यादि भक्षयन् । बालैः साकं हसन्स्त्रीभिः कदाचिद्रमते सह । यानैः क्वापि ज्ञातिभिश्च सहितो मोदते खलु । न कदाचित्स्मरत्येतद्वपुर्जनसमीपगम् । एतद्देहेन तादात्म्यभ्रांत्या दुःखमभूत्पुरा । विवेकेन भ्रमेऽपेते तद्दुःखं नाद्य वीक्ष्यते । इंद्रराजादिदेहेषु न तादात्म्यं पुराऽपि च। अतो न तद्देहदुःखशंकाऽप्यस्य तु विद्यते। सुखानि तद्देहगानि साक्षी सर्वाण्यवेक्षते । साक्ष्यात्मत्वाभिमानी सञ्ज्ञानी तान्यभिमन्यते । दुःखान्यपीक्षते साक्षी तथाऽप्येतेषु तत्त्ववित् । नाभिमानमुपादत्ते दुःखानां मायिकत्वतः । ब्रह्मानंदस्य लेशाः स्युरानंदा विषयोत्थिताः । अतस्तत्त्वविदः पक्षपातो ह्येतेषु विद्यते । पुण्यमेवामुमाप्नोतिं न देवान्पापमान्पुयात् । इति श्रुत्यंतरं ब्रूते सुखं सर्वात्मदर्शिनः " इति ॥ १९ ॥

**रा० टीका**—तत्रैव तैत्तिरीयश्रुतिवाक्यमर्थतः पठति—

**सर्वान्कामान्सहाऽऽप्नोति नान्यवज्जन्मकर्मभिः ॥**
**वर्तते श्रोत्रिये भोगा युगपत् क्रमवर्जिताः ॥ २० ॥**

**सर्वानिति** । ननु कर्मफलभोगांगीकारे जन्मापि प्रसज्येतेत्याशंक्याऽऽह—**नान्यवदिति** । ज्ञानेन संचितकर्मणां दग्धत्वादज्ञवज्जन्म नास्तीत्यर्थः ॥ २० ॥

**अ० टीका**—तद्वत्सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेत्यादि**तैत्तिरीय**श्रुत्यर्थमपि संक्षिप्याऽऽह—**सर्वानिति** प्रमुखैः सार्धचतुर्भिः ॥ २० ॥

**युवा रूपी च विद्यावान्नीरोगी दृढचित्तवान् ॥**
**सैन्योपेतः सर्वपृथ्वीं वित्तपूर्णां प्रपालयन् ॥ २१ ॥**

**रा० टीका**—इदानीं **तैत्तिरीयकबृहदारण्यक**वाक्यं संक्षिप्यार्थतः पठति—**युवेति** ॥ २१ ॥

**अ० टीका**—**युवेति** । **दृढेति** । एतेन चित्तपारवश्यविरहो व्यज्यते ॥ २१ ॥

**सर्वैर्मानुष्यकैर्भोगैः संपन्नस्तृप्तभूमिपः ॥**
**यमानंदमवाप्नोति ब्रह्मविच्च तमश्नुते ॥ २२ ॥**

**रा० टीका**—ननु सार्वभौमादिहिरण्यगर्भांतानां जीवनिष्ठानामानंदानां कथं ज्ञानिनि संभव इत्याशंक्य सर्वेषामानंदानां ज्ञानिनाऽगवतब्रह्मांशत्वात्संभव इत्याह—**सर्वैरिति** २२

**अ० टीका**—**सर्वैरिति** । तृप्तेत्यत्र कर्मधारयः ॥ २२ ॥

**मर्त्यभोगे द्वयोर्नास्ति कामस्तृप्तिरतः समा ॥**
**भोगान्निष्कामतैकस्य परस्यापि विवेकतः ॥ २३ ॥**

**रा० टीका**—ननु सार्वभौमश्रोत्रिययोर्विषयप्राप्तिसाम्याभावात्कथमानंदसाम्यमित्याशंक्य नैरपेक्ष्यसाम्यात्तृप्तिसाम्यमित्याह **मर्त्येति** । तृप्तिसाम्ये हेतुमाह—**भोगादिति** २३

**अ० टीका**—**मर्त्येति** । द्वयोः सार्वभौमश्रोत्रिययोः । मर्त्यभोगे मनुष्यलोकभोग इत्यर्थः ॥ २३ ॥

**रा० टीका**—विवेकत इत्युक्तमर्थं विवृणोति—

**श्रोत्रियत्वाद्वेदशास्त्रैर्भोगदोषानवेक्षते ॥**

**राजा बृहद्रथो दोषांस्तान् गाथाभिरुदाहरत् ॥ २४ ॥**

श्रोत्रियत्वादिति । विषयदोषाः कस्यां शाखायां केन निरूपिता इत्याशंक्य **बृहद्रथेन मैत्रायणीयाख्यशाखायां** गाथाभिरुक्ता इत्याह—**राजेति** ॥ २४ ॥

**अ० टीका—श्रोत्रियत्वादिति** । क्व वेदे विषयभोगदोषा इत्यत आह—**राजेत्यर्धेनैव** । बृहद्रथो वै नाम राजेत्यादिमैत्रायणीयश्रुतिः ॥ २४ ॥

**देहदोषांश्चित्तदोषान् भोग्यदोषाननेकशः ॥**

**शुना वांते पायसे नो कामस्तद्वद्विवेकिनः ॥ २५ ॥**

**रा० टीका**—विवेकिनः कामानुदये दृष्टांतमाह—**शुनेति** ॥ २५ ॥

**अ० टीका**—तानेव संक्षिपति—**देहेति** ॥ २५ ॥

**निष्कामत्वे समेऽप्यत्र राज्ञः साधनसंचये ॥**

**दुःखमासीद्भाविनाशादतिभीरनुवर्तने ॥ २६ ॥**

**रा० टीका**—सार्वभौमाच्छ्रोत्रियस्याऽऽधिक्यमाह—**निष्कामत्व इति** ॥२६॥

**अ० टीका**—अथ सिंहावलोकनन्यायेन प्रागुक्तसार्वभौमश्रोत्रिययोः समत्वे विशेषांतरमप्याह—**निष्कामत्व** इत्यादिना । दुःखमासीदिति पूर्वान्वयि ॥ २६ ॥

**नोभयं श्रोत्रियस्यातस्तदानंदोऽधिकोऽन्यतः ॥**

**गंधर्वानंद आशास्ति राज्ञो नास्ति विवेकिनः ॥ २७ ॥**

**रा० टीका**—सार्वभौमत्वं साधनसाध्यं पश्चाच्च तन्नाशभीतिश्चेति दोषद्वयत्वाच्छ्रोत्रिये तु तदुभयाभावादाधिक्यमित्यर्थः । श्रोत्रियस्याऽऽधिक्यांतरमाह—**गंधर्वेति** ॥२७॥

**अ० टीका—नोभयमिति** । उभयं दुःखभयद्वयम् ॥ २७ ॥

**अस्मिन्कल्पे मनुष्यः सन्पुण्यपाकविशेषतः ॥**

**गंधर्वत्वं समापन्नो मर्त्यगंधर्व उच्यते ॥ २८ ॥**

**रा टीका**—इदानीं गंधर्वानंदे द्वैविध्यं दर्शयितुं श्लोकद्वयेन गंधर्वभेदमाह—**अस्मिन्निति** ॥ २८ ॥

**अ० टीका—अस्मिन्निति** । कल्पांतर इत्यार्थिकम् ॥ २८ ॥

**पूर्वकल्पे कृतात्पुण्यात्कल्पादावेव चेद्भवेत् ॥**

**गंधर्वत्वं तादृशोऽत्र देवगंधर्व उच्यते ॥ २९ ॥**

**रा० टीका—पूर्वेति** ॥ २९ ॥

**अ० टीका—पूर्वेति** । अत्र कल्पादावेव गंधर्वत्वमिति पूर्वस्माद्विशेषः । तत्र त्वस्मिन्नेव कल्पे मनुष्यशरीरावच्छेदेन कृतपुण्यस्य पाकविशेषात्तद्देहपातोत्तरमेव गंधर्वत्वप्राप्तिरिति विशेषः ॥ २९ ॥

**अग्निष्वात्तादयो लोके पितरश्चिरवासिनः ॥**

**कल्पादावेव देवत्वं गता आजानदेवताः ॥ ३० ॥**

**रा० टीका**—चिरलोकपित्रानंदप्रदर्शनाय चिरलोकपितॄनाह—**अग्निष्वात्तादय इति** । देवानंदत्रैविध्यज्ञानाय देवभेदमाह—**कल्पादाविति** ॥ ३० ॥

**अ० टीका**—अग्नीति । लोके पितृलोके ॥ ३० ॥

**अस्मिन्कल्पेऽश्वमेधादि कर्म कृत्वा महत्पदम् ॥**
**अवाप्याऽऽजानदेवैर्याः पूज्यास्ताः कर्मदेवताः ॥ ३१ ॥**

**रा० टीका**—अस्मिन्कल्प इति ॥ ३१ ॥

**अ० टीका**—अस्मिन्कल्प इति । आजानदेवैः । कल्पादावेव देवत्वं गतैरित्यर्थः ॥ ३१ ॥

**यमाग्निमुख्या देवाः स्युर्ज्ञाताविंद्रबृहस्पती ॥**
**प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः ॥ ३२ ॥**

**रा० टीका**—यमाग्नीति । इंद्रबृहस्पती प्रसिद्धावित्यर्थः ॥ ३२ ॥

**अ० टीका**—यमेति । मुख्यपदेन वरुणवायुकुबेरादयः । ज्ञातौ प्रख्यातौ ॥३२॥

**रा० टीका**—सार्वभौमादिसूत्रांतानां श्रोत्रियान्न्यूनत्वद्योतनायाऽऽह—

**सार्वभौमादिसूत्रांता उत्तरोत्तरकामिनः ॥**
**अवाङ्मनसगम्योयमात्मानंदस्ततः परः ॥ ३३ ॥**

**सार्वभौमादीति** । एभ्यः सर्वेभ्योऽधिकमानंदमाह—**अवाङ्मनसेति** । यतोऽयमात्मानंदोऽवाङ्मनसगम्योऽत एभ्यः सर्वेभ्योऽधिक इत्यर्थः ॥ ३३ ॥

**अ० टीका**—अथ सार्वभौमादिसूत्रांतानंदेभ्योऽपि श्रोत्रियेण शमादिमता ब्रह्मविदा लब्धेऽद्वैतब्रह्मानंदे विशेषमभिधत्ते—**सार्वभौमादीति** । उत्तरोत्तरेति तेषामपरत्वे हेतुगर्भं विशेषणम् । एवमवागित्याद्यात्मानंदेऽपि तत्तस्य परत्व इति स्पष्टमेव ॥ ३३ ॥

**तैस्तैः काम्येषु सर्वेषु सुखेषु श्रोत्रियो यतः ॥**
**निस्पृहस्तेन सर्वेषामानंदाः संति तस्य ते ॥ ३४ ॥**

**रा० टीका**—इदानीं सर्वेपामानंदाः श्रोत्रिये विद्यंते तस्य तेषु निस्पृहत्वादित्याह—**तैस्तैरिति** ॥ ३४ ॥

**अ० टीका**—एवं श्रोत्रिये निरुक्तानंदसत्त्वे निःस्पृहतैव हेतुरित्याह—**तैस्तैरिति** ॥ ३४ ॥

**रा० टीका**—उपपादितमर्थमुपसंहरति—

**सर्वकामाप्तिरेषोक्ता यद्वा साक्षिचिदात्मना ॥**
**स्वदेहवत्सर्वदेहेष्वपि भोगानवेक्षते ॥ ३५ ॥**

**सर्वेति** । इदानीं पक्षांतरमाह—**यद्वेति** । यथा स्वदेह आनंदाकारबुद्धिसाक्षित्वेनाऽऽनंदित्वमितरेष्वपि देहेपु तद्वदित्यर्थः ॥ ३५ ॥

**अ० टीका**—एवमुक्तां सर्वकामाप्तिमुपसंहृत्यान्यां तामाह—**सर्वेति** । अवेक्षते ज्ञातत्वाज्ञातत्वाभ्यां सर्वं साक्षिभास्यमिति सिद्धांतादज्ञातत्वेनानुसंधत्त इत्यर्थः ॥ ३५ ॥

**रा० टीका**—ननूक्तप्रकारेणाज्ञस्यापि सर्वानंदप्राप्तिरस्तीत्याशंक्य सर्वेषु सर्वबुद्धिसाक्ष्यहमितिज्ञानाभावान्नैवमित्याह —

**अज्ञस्याप्येतदस्त्येव न तु तृप्तिरबोधतः ॥**
**यो वेद सोऽश्नुते सर्वान्कामानित्यब्रवीच्छ्रुतिः ॥ ३६ ॥**

**अज्ञस्येति** । उक्तार्थे तैत्तिरीयश्रुतिं प्रमाणयति—**यो वेदेति** । गुहायां निहितं ब्रह्म यो वेद सोऽश्नुत इति योजना ॥ ३६ ॥

**अ० टीका**—तत्राप्याशंक्य समाधत्ते—**अज्ञस्यापीति** । तत्र श्रुतिं प्रमाणयति—**यो वेदेति** ॥ ३६ ॥

**रा० टीका**—इदानीं तृतीयप्रकारमाह—

**यद्वा सर्वात्मतां स्वस्य साम्ना गायति सर्वदा ॥**
**अहमन्नं तथाऽन्नादश्चेति साम ह्यधीयते ॥ ३७ ॥**

**यद्वेति** । इमाँल्लोकान्कामान्निष्कामरूप्यनुचरन्नित्यादिनेत्यर्थः ॥ ३७ ॥

**अ० टीका**—ननूक्तश्रुत्या तु "एतस्यैवाऽऽनंदस्यान्यानि भूतानि मात्रामुपजीवंति" इति श्रुतेर्ब्रह्मात्मरूपतयैव सर्वकामाप्तिरुक्तेत्यस्वरसात्प्रकारांतरेण तामाह—**यद्वेति** ॥३७॥

**दुःखाभावश्च कामाप्तिरुभे ह्येवं निरूपिते**
**कृतकृत्यत्वमन्यच्च प्राप्तप्राप्यत्वमीक्षताम् ॥ ३८ ॥**

**रा० टीका**—अतीतग्रंथेन सिद्धमर्थं संक्षिप्याऽऽह—**दुःखेति** ॥ ३८ ॥

**अ० टीका**—उक्तदुःखाभावाद्युपसंहृत्य कृतकृत्यत्वाद्यपि **तृप्तिदीपोक्तमेवेक्ष्यमि**त्याह—**दुःखेति** ॥ ३८ ॥

**उभयं तृप्तिदीपे हि सम्यगस्माभिरीरितम् ॥**
**त एवात्रानुसंधेयाः श्लोका बुद्धिविशुद्धये ॥ ३९ ॥**

**रा० टीका**—अवशिष्टं कृतकृत्यत्वं प्राप्तप्राप्यत्वमित्युभयं **तृप्तिदीपे** द्रष्टव्यमित्याह—**त एवेति** ॥ ३९ ॥

**अ० टीका**—कृतकृत्यत्वादिकं त्वस्माभिस्तृप्तिदीपे प्रपंचितमेवातस्तदनुसंधानमेवात्रापि कार्यमित्याह—**उभयमिति** ॥ ३९ ॥

**ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ॥**
**बहुकृत्यं पुराऽस्याभूत्तत्सर्वमधुना कृतम् ॥ ४० ॥**
**तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ॥**
**अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥ ४१ ॥**
**दुःखिनोऽज्ञाः संसरंतु कामं पुत्राद्यपेक्षया ॥**
**परमानंदपूर्णोऽहं संसरामि किमिच्छया ॥ ४२ ॥**

**रा० टीका**—॥ ४० ॥ ४१ ॥ ४२ ॥

**अ० टीका**—॥ ४० ॥ ४१ ॥ ४२ ॥

अनुतिष्ठंतु कर्माणि परलोकयियासवः ॥
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ ४३ ॥
व्याचक्षतां ते शास्त्राणि वेदानध्यापयंतु वा ॥
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ ४४ ॥
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ॥
द्रष्टारश्चेत्कल्पयंति किं मे स्यादन्यकल्पनात् ॥ ४५ ॥
गुंजापुंजादि दह्येत नान्यारोपितवह्निना ॥
नान्यारोपितसंसारधर्मानेवमहं भजे ॥ ४६ ॥
शृण्वंत्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम् ॥
मन्यंतां संशयापन्ना न मन्येऽहमसंशयः ॥ ४७ ॥
विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये ॥
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥४८॥
अहं मनुष्य इत्यादिव्यवहारो विनाऽप्यमुम् ॥
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ ४९ ॥
आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ॥
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ ५० ॥
विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ॥
अबाधिकां व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥ ५१ ॥
विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ॥
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ ५२ ॥
नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ॥
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥ ५३ ॥
व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथाऽपि वा ॥
ममाकर्तुरलेपस्य यथाऽऽरब्धं प्रवर्तताम् ॥ ५४ ॥
अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ॥
शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः ॥ ५५ ॥
देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ॥
तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥ ५६ ॥

रा० टीका—॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥
॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

अ० टीका—॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥
॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानंदे विलीयताम् ॥
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ ५७ ॥
कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ॥
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरंतरम् ॥ ५८ ॥
धन्योऽहं धन्योऽहं नित्यं स्वात्मानमंजसा वेद्मि ॥
धन्योऽहं धन्योऽहं ब्रह्मानंदो विभाति मे स्पष्टम् ॥५९॥
धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ॥
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥६०॥
धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् ॥
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥ ६१ ॥
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ॥
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ॥ ६२ ॥
अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ॥
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ६३ ॥
अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥ ६४ ॥

**रा० टीका**—॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

**अ० टीका**—॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

ब्रह्मानंदाभिधे ग्रंथे चतुर्थोऽध्याय ईरितः ॥
विद्यानंदस्तदुत्पत्तिपर्यंतोऽभ्यास इष्यताम् ॥ ६५ ॥

इति पञ्चदश्यां ब्रह्मानन्दे विद्यानन्दो नाम चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

**रा० टीका**—इममध्यायार्थमुपसंहरति—ब्रह्मानन्दाभिध इति ॥ ६५ ॥

इति श्रीपञ्चदशीव्याख्यायां ब्रह्मानन्दे विद्यानंदो नाम चतुर्थोऽध्यायः ॥ १४ ॥

**अ० टीका**—ग्रंथप्रकरणयोः संगतिमाह—**ब्रह्मानंदेति** । अथैतदाविर्भावावधिमुमुक्षोः शमादीनां श्रवणादीनां च दीर्घकालनैरंतर्यसत्कारपूर्वकानुष्ठानावश्यकतां विधत्ते—**तदुत्पत्तीत्यादिशेषेण** । ननूपक्रमे तावद्भवता यदुक्तं—" ज्ञानेऽपि देहपातानंतरमेवास्ति मुक्तिरद्वैतात् । सप्तमभूम्या वेति प्रतिबंधोऽयं चतुर्थ ऐक्येऽपि " इत्यार्यया शोधिततत्त्वंपदार्थयोरैक्यविषयकचतुर्थप्रतिबंधप्रथनम् । एवं चतुर्दशेऽपि "ज्ञानादेवाद्वयात्मतनुमुक्तेः । उक्तत्वात्स्पष्टतरं तत्परता तस्य किं नस्यात् " इत्यार्यांतरेण विद्यानंदाभिधस्यास्य चतुर्दशप्रकरणस्य तद्बाधकत्वं च तत्कथमिति चेदाकलय । ब्रह्मानंदे ह्यत्र ब्रह्मात्मैक्यविषयकापरोक्षप्रमया नि-

खिलाविद्यातद्व्याप्यतत्कार्यात्मकदृश्यबाधेनाद्वैतसच्चिदानंदात्ममात्रस्थितिलक्षणा मुक्तिः स्पष्टतरैव प्रतिपादितेति नैवात्र वैमत्यगंधोऽपीत्यलं पल्लवितेन ॥ ६९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमणषष्ट्युपनामकश्रीमन्नारायणशास्त्रिचरणसरोजराजहंसायमानमानसेन मोडकोपनामकेनाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानंदेंदुकौमुदीसमाख्यायां पंचदशीव्याख्यायां तत्तृतीयांशात्मकब्रह्मानंदाख्याध्यायपंचकरूपग्रंथस्य विद्यानंदाभिधस्य चतुर्थाध्यायस्य चतुर्दशप्रकरणस्य चतुर्दशः प्रकाशः संपूर्णः ॥ १४ ॥

॥ इति चतुर्दशं प्रकरणं समाप्तम् ॥ १४ ॥

# अथ पञ्चदश्यां पञ्चदशं प्रकरणम् ।

## तत्र ब्रह्मानन्दे विषयानन्दाख्यः पञ्चमोऽध्यायः ।

**रा० टीका**—पंचमाध्यायस्य प्रतिपाद्यमर्थमाह—

**अथात्रविषयानन्दो ब्रह्मानंदांशरूपभाक् ॥**
**निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥ १ ॥**

**अथेति** । ननु विषयानंदस्य लौकिकत्वान्मोक्षशास्त्रे निरूपणमनुपपन्नमित्याशंक्य तस्य लौकिकप्रसिद्धत्वेऽपि ब्रह्मानंदैकदेशत्वेन ब्रह्मज्ञानोपयोगित्वाद्युक्तमित्याह—**द्वारेति** । ब्रह्मानंदैकदेशत्वे किं प्रमाणमित्याशंक्याऽऽह—**तदंशत्वमिति** ॥ १ ॥

अद्वैतानंदसच्चिद्विभुविमलपरब्रह्मकूटस्थरूपं
मोहाद्वैतेंद्रजालालयमपि तिलकं स्वप्रकाशं श्रुतीनाम् ।
सर्वांश्चाऽऽचार्यवर्यान्रघुकुलतिलकं सद्गुरुं ब्रह्मनिष्ठं
श्रीमन्नारायणाख्यं स्वगुरुमपि महादेवसंज्ञं प्रणौमि ॥ १ ॥

मत्वा जीवंजवान्विद्यारण्यं च भारतीतीर्थम् ।
विषयानंदं तु तिथिप्रकाशतो द्योतयामि कौमुद्याः ॥ २ ॥

**अ० टीका**—अथ भगवान्भारतीतीर्थमुनिवरः **पंचदश्यास्तृतीयांशत्वेन** पंचाध्यायात्मके ब्रह्मानंदाभिधग्रंथे विषयानंदाह्वये **पंचमाध्याये** पंचदशप्रकरणं प्रारिप्सया प्रथितप्रमाणप्रयोजनं ब्रह्मानुसंधानलक्षणं मंगलं कलयन्प्रकृतप्रकरणेऽभिधेयं कथयंस्तेन तद्विषयप्रयोजनाद्यनुबंधचतुष्टयमपि द्योतयति—**अथेत्यादित्रिपाद्या** । **द्वारेति** । ब्रह्मानंदप्राप्तेरित्यार्थिकम् । निरुक्तांशत्वे मानं प्रतिजानीते—**तदित्यादि**चरमचरणेन ॥ १ ॥

**एषोऽस्य परमानंदो योऽखंडैकरसात्मकः ॥**
**अन्यानि भूतान्येतस्य मात्रामेवोपभुंजते ॥ २ ॥**

**रा० टीका**—तामेव श्रुतिमर्थतः पठति—**एष इति** ॥ २ ॥

**अ० टीका**—ते एव " एषोऽस्य परमानंदः " इति " एतस्यैवाऽऽनंदस्यान्यानि भूतानि मात्रामुपजीवंति " इति च श्रुती क्रमादर्थतः संग्रथयति—**एष इति** ॥ २ ॥

**रा० टीका**—इदानीं विषयानंदस्य ब्रह्मानंदलेशत्वप्रदर्शनाय तदुपाधिभूतांतःकरणवृत्तीर्विभजते—

**शांता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ॥**
**वैराग्यं क्षांतिरौदार्यमित्याद्याः शांतवृत्तयः ॥ ३ ॥**
**तृष्णा स्नेहो रागलोभावित्याद्याः घोरवृत्तयः ॥**
**संमोहो भयमित्याद्याः कथिता मूढवृत्तयः ॥ ४ ॥**

**शांता इति** । शांताः सात्त्विक्यो वृत्तयः । घोरा राजस्यः । मूढास्तामस्यः । ता एव शांतादिवृत्तीर्दर्शयति—**वैराग्यमित्यादिना** ॥ ३ ॥ ४ ॥

**अ० टीका**—एवं विषयानंदस्य ब्रह्मानंदांशरूपत्वं सप्रमाणं प्रतिज्ञातमुपपादयितुं तदुपयोगित्वेन विषयानंदस्य चित्तवृत्तिविशेषरूपत्वात्सामान्यतः प्रथमं ता एव त्रिविधत्वेन विभिनत्ति—**शांता इति** । ननु सत्त्वादिगुणभेदेन भवत्वेवमथापि तन्निर्णय एवाऽऽदौ कथं कार्य इत्यत आह—**वैराग्यमित्यादि**सार्धेन । क्षांतिर्विवेकेन दुःखसहिष्णुता । आद्यपदेनाद्वेष्टृत्वामानित्वाभयादयः॥ **तृष्णेति** । विषयाभिलाषस्तृष्णा । चेतनविषयः प्रेमा स्नेहः । स एव दीर्घकालनैरंतर्यसत्कारघटितो रागः । एवं वित्तलालस्यं लोभ इति तद्भेदः । अत्राप्याद्यपदेन दंभादयः । संमोहभये प्रसिद्धे एव । आद्यपदेनाऽऽलस्याद्याः ॥ ३ ॥ ४ ॥

**रा० टीका**—उदाहृतासु विविधास्वपि वृत्तिषु ब्रह्मणश्चिद्रूपत्वं भातीत्याह—

**वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ॥**
**प्रतिबिंबति शांतासु सुखं च प्रतिबिंबति ॥ ५ ॥**

**वृत्तिष्विति** । शांतासु विशेषमाह—**शांतास्विति** । चशब्दोऽनुक्तद्वयसमुच्चयार्थः ॥ ५ ॥

**अ० टीका**—ततः किं तदाह—**वृत्तिष्विति** । शांतवृत्तिषु विशेषमाह—**शांतास्विति** । चोऽप्यर्थे । तत्र नियामकं तु सर्वनिर्मलद्रव्ये सूर्यप्रकाशप्रतिबिंबनेऽपि सूर्यकांते तावदौष्ण्यमपि प्रतिलभ्यत इति नैर्मल्यवैपुल्यमेव ॥ ५ ॥

**रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ॥**
**उपमा सूर्यकेत्यादि सूत्रयामास सूत्रकृत् ॥ ६ ॥**

**रा० टीका**—उक्तार्थे श्रुतिवाक्यमर्थतः पठति—**रूपमिति** । तत्रैव **व्याससूत्रै**कदेशं पठति—**उपमेति** । अत एव चेति सूत्रस्य पूर्वभागः ॥ ६ ॥

**अ० टीका**—निर्गुणस्यापि प्रतिबिंबने प्रमाणमाह—**रूपं रूपमिति** । " रूपं रूपं प्रतिरूपो बभूव " इत्यादिः **श्रुतिः** । एवं सूत्रमपि प्रमाणयति—**उपमेति** । अत एव चोपमा सूर्यकादिवदिति हि **सूत्रम्** । यथा हि " अयं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भिन्नरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा " इति हि तद्विषयवाक्यम् ॥ ६ ॥

**अ० टीका**—अत्र श्रुतिमेवाऽऽह—**एक एवेति** ॥ ७ ॥

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः ॥**
**एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥ ७ ॥**

**रा० टीका**—स्वरूपेणैकस्योपाधिसंपर्कान्नानात्वे श्रुतिं पठति—**एक एवेति** ॥७॥

**अ० टीका**—अत्र श्रुतिमेवाऽऽह—**एक एवेति** ॥ ७ ॥

**रा० टीका**—ननु निरवयवस्य ब्रह्मणः क्वचिच्चिन्मात्रभानमितरत्र चिदानंदभानमित्येवं विभागकरणमनुपपन्नमित्याशंक्य चंद्रदृष्टांतेन परिहरति—

**जले प्रविष्टश्चंद्रोऽयमस्पष्टः कलुषे जले ॥**
**विस्पष्टो निर्मले तद्वद्द्वेधा ब्रह्मापि वृत्तिषु ॥ ८ ॥**

**जले प्रविष्ट इति** । उक्तमर्थं दार्ष्टांतिके योजयति—**तद्वदिति** ॥ ८ ॥

**अ० टीका**—श्रुत्युक्तं चंद्रदृष्टांतमेव विस्पष्टयन्वृत्तिषु चित्प्रतिबिंबस्य चित्सुखोभयप्रतिबिंबस्य च व्यवस्थां कथयति—**जल इति** । एवं च कलुषजलावच्छेदेन चंद्रस्यास्पष्टत्वाद्यथा प्रकाशांशमात्रप्रतिबिंबः शुद्धजलावच्छेदेन तु विस्पष्टत्वात्प्रकाशचंद्रशक्त्यानंदजनकत्वोभयोरपि प्रतिबिंबनं तथोक्तवृत्तिषु ब्रह्मणोऽपि प्रतिबोधितचिदादिप्रतिबिंबव्यवस्था द्रष्टव्येति भावः ॥ ८ ॥

**घोरमूढासु मालिन्यात्सुखांशश्च तिरोहितः ॥**
**ईषन्नैर्मल्यतस्तत्र चिदंशप्रतिबिंबनम् ॥ ९ ॥**

**रा० टीका**—तदेवोपपादयति—**घोरेति** ॥ ९ ॥

**अ० टीका**—दार्ष्टांतिके योजयति—**घोरेति** ॥ ९ ॥

**यद्वाऽपि निर्मले नीरे वह्नेरौष्ण्यस्य संक्रमः ॥**
**न प्रकाशस्य तद्वत्स्याच्चिन्मात्रोद्भूतिरेव च ॥ १० ॥**

**रा० टीका**—ननु चंद्रोपाधेरुदकस्य द्वैविध्यादंशभानमुपपन्नं प्रकृते तूपाधिभूतस्यांतःकरणस्यैकत्वादेकांशभानमनुपपन्नमित्याशंक्य दृष्टांतांतरमाह—**यद्वाऽपीति** ॥ १० ॥

**अ० टी०**—नन्वंतःकरणस्यापंचीकृतपंचमहाभूतसत्त्वमात्रकार्यत्वेन पंकिलादिजलदृष्टांतानुपपत्तिरित्यस्वारस्याद्दृष्टांतांतरमाह—**यद्वाऽपीति** । वह्नेः पात्रमात्रव्यवहितहसंत्यादिगताग्नेरित्यर्थः । एवं च सत्त्वैककार्येऽतःकरणे सात्त्विकशांतवृत्तिषु ब्रह्मसंनिकर्षे व्यवधायकाभावात्तत्र चिदानंदावुभावपि प्रतिबिंबितस्तादितरघोरादिवृत्तिषु तु रजोगुणादिव्यवधानेनेषन्मालिन्याच्चिन्मात्रप्रतिफलनमग्न्यौष्ण्यवदुपपन्नमेवेत्यभिप्रायः ॥ १० ॥

**काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ॥**
**शांतासु सुखचैतन्ये तथैवोद्भूतिमाप्नुतः ॥ ११ ॥**

**रा० टीका**—इदानीं शांतासु वृत्तिषु चिदानंदयोः प्रतीतौ दृष्टांतांतरमाह—**काष्ठे त्विति** ॥ ११ ॥

**अ० टी०**—तदेव दृष्टांतेन—स्पष्टयति—**काष्ठे त्विति** ॥ ११ ॥

**वस्तुस्वभावमाश्रित्य व्यवस्था तूभयोः समा ॥**
**अनुभूत्यनुसारेण कल्प्यते हि नियामकम् ॥ १२ ॥**

**रा० टीका**—नन्वेवं व्यवस्था कुतः कृतेत्याशंक्याऽऽह—**वस्त्विति** । तत्र किं नियामकमित्याशंक्याऽऽह—**अनुभूतीति** ॥ १२ ॥

**अ० टी०**—ननूक्तव्यवस्थायां किं मानमित्यत आह—**वस्तुस्वभावमिति** । एवं तर्हि किं स्वभाववादः प्रकृते नेत्याह—**अनुभूतीति** । तथा चानुभूत्यन्यथानुपपत्तिरेवात्र मानं स्वभाववादे त्वन्यथोपपत्तेर्नेह स इत्याशयः ॥ १२ ॥

**रा० टीका**—अनुभूतिमेव दर्शयति—

**न घोरासु न मूढासु सुखानुभव ईक्ष्यते ॥**
**शांतास्वपि क्वचित्कश्चित्सुखातिशय ईक्ष्यताम् ॥ १३ ॥**

**न घोरास्विति** । शांतास्वप्यानंदप्रकाशोऽस्ति सोऽपि क्वचित्कश्चित्सुखातिशयो भवतीत्याह—**शांतास्विति** ॥ १३ ॥

**अ० टीका**—अनुभूतिमेवाऽऽह—**न घोरास्विति** । नन्वेवं चेत्तर्हि किं शांतास्वपि सुखप्रतिबिंबैकरूप्यमस्ति न वेत्यत्राऽऽह—**शांतास्वपीति** ॥ १३ ॥

**गृहक्षेत्रादिविषये यदा कामो भवेत्तदा ॥**
**राजसस्यास्य कामस्य घोरत्वात्तत्र नो सुखम् ॥ १४ ॥**

**रा० टीका**—पूर्वोक्तघोरमूढवृत्तिषु सुखाभावमेवाभिनीय दर्शयति—**गृहक्षेत्रेति** १४

**अ० टीका**—तदेवोपपादयति—**गृहेत्यादिना** ॥ १४ ॥

**सिध्येन्न वेत्यस्ति दुःखमसिद्धौ तद्विवर्धते ॥**
**प्रतिबंधे भवेत्क्रोधो द्वेषो वा प्रतिकूलतः ॥ १५ ॥**

**रा० टीका**—सुखासिद्धौ दुःखं वर्धते सुखस्य प्रतिबंधे तु क्रोधो भवति । सुखाभावे कारणांतरमाह—**द्वेषो वेति** । तत्र प्रतिकूलदुःखस्य सत्त्वादित्यर्थः ॥ १५ ॥

**अ० टीका**—**सिध्येन्न वेतीति** । इत्याकारकसंदेह इत्यर्थः । **तद्दुःखम्** । **प्रतिबंधे** सतीत्यर्थः ॥ १५ ॥

**अशक्यश्चेत्प्रतीकारो विषादः स्यात्स तामसः ॥**
**क्रोधादिषु महद्दुःखं सुखशंकाऽपि दूरतः ॥ १६ ॥**
**काम्यलाभे हर्षवृत्तिः शांता तत्र महत्सुखम् ॥**
**भोगे महत्तरं लाभप्रसक्तावीषदेव हि ॥ १७ ॥**
**महत्तमं विरक्तौ तु विद्यानंदे तदीरितम् ॥**
**एवं क्षांतौ तथौदार्ये क्रोधलोभनिवारणात् ॥ १८ ॥**

**रा० टीका**—परिहारस्याशक्यत्वे विषादो भवति । तस्यापि तामसत्वान्न तत्र सुखमित्याह—**अशक्य इति** । क्रोधादिष्वित्यादयः स्पष्टार्थाः ॥ १६ ॥ १७ ॥ १८ ॥

**अ० टीका**—**अशक्य इति** । प्रतीकारः प्रतिबंधादिनिरास इत्यर्थः । विषादोऽतिखेदः ॥ एवं घोरादिवृत्तिषु दुःखादिफलासु चिदंशमात्रानुवृत्तिमुपपाद्येदानीं सात्त्विकासु **शांतवृत्तिषु** चिदानंदोभयप्रतिबिंबनं प्रपंचयति—**काम्येत्यादिना** । ननु काम्यलाभप्रसक्तौ च पुत्रकामस्य स्वपत्नीगर्भधारणदर्शनतः सुखोपलब्धेस्तत्कीदृगित्यत आह—**लाभेति** ॥ नन्वेवमपि महत्तमं सुखं क्वेत्यत्राऽऽह—**महत्तममिति** । तत्कीदृशमित्यपेक्षायां तत्स्मारयति—**विद्येति** । एतदन्यत्राप्य तिदिशति—**एवमिति** ॥ १६ ॥ १७ ॥ १८ ॥

**यद्यत्सुखं भवेत्तत्तद्ब्रह्मैव प्रतिबिंबनात् ॥**
**वृत्तिष्वंतर्मुखास्वस्य निर्विघ्नं प्रतिबिंबनम् ॥ १९ ॥**

**रा० टीका**—एवं क्षांत्यादीनां सिद्धमित्याह—**वृत्तिष्विति** ॥ १९ ॥

**अ० टीका**—फलितमाह—**यद्यदिति** । अस्य ब्रह्मणः ॥ १९ ॥

**सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः ॥**
**मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयम् ॥ २० ॥**

**रा० टीका**—इदानीं सर्वत्र ब्रह्मस्वरूपानुभूतिप्रदर्शनाय तत्स्वरूपं स्मारयति—**सत्तेति** । मृच्छिलादिषु सन्मात्रमित्यर्थः ॥ २० ॥

**अ० टीका**—ननु भवत्वेवं चिदानंदयोः प्रतिबिंबव्यवस्था तथाऽपि सत्तायाः क्व प्रतिबिंब इत्यत आह—**सत्तेत्यादिना** ॥ २० ॥

**सत्ता चितिर्द्वयं व्यक्तं धीवृत्त्योर्घोरमूढयोः ॥**
**शांतवृत्तौ त्रयं व्यक्तं मिश्रं ब्रह्मेत्थमीरितम् ॥ २१ ॥**

**रा० टीका**—घोरमूढयोर्द्वयोः सत्ताचिती द्वौ शांतवृत्तौ सच्चिदानंदास्त्रयोऽपि व्यक्ताः। एवं सप्रपंचं ब्रह्माभिहितमित्याह—**मिश्रमिति** ॥ २१ ॥

**अ० टीका**—एवमपि सत्तादिद्वयोस्त्रयाणां च क्वाभिव्यक्तिरित्यत आह—**सत्ते-ति** । उपसंहरति—**मिश्रमित्यादिशेषेण** ॥ २१ ॥

**रा० टीका**—अमिश्रं कुतो ज्ञायत इत्याशंक्याऽऽह—

**अमिश्रं ज्ञानयोगाभ्यां तौ च पूर्वमुदीरितौ ॥**
**आद्येऽध्याये योगचिंता ज्ञानमध्याययोर्द्वयोः ॥ २२ ॥**

**अमिश्रमिति** । तौ च ज्ञानयोगौ पूर्वमेवोक्तावित्यर्थः । कुत्रोक्तावित्याशंक्य योगः **प्रथमाध्याय** उक्त इत्याह—**आद्य इति** । समनंतराध्याययोर्ज्ञानमुक्तमित्याह—**ज्ञानमिति**२२

**अ० टीका**—नन्वमिश्रं ब्रह्म तर्हि कथं ज्ञायते तत्राऽऽह—**अमिश्रमिति** । तद्विभागमाह—**आद्य इति** ॥ २२ ॥

**रा० टीका**—ननु सच्चिदानंदानां ब्रह्मरूपत्वे मायायाः किं रूपमित्याशंक्याऽऽह—

**असत्ता जाड्यदुःखे द्वे मायारूपत्रयं त्विदम् ॥**
**असत्ता नरशृंगादौ जाड्यं काष्ठशिलादिषु ॥ २३ ॥**

**असत्तेति** । नृशृंगादावसत्त्वं मृच्छिलादिषु जाड्यमिति विवेकः ॥ २३ ॥

**अ० टीका**—नन्वेवमपि मायायाः सर्वानुस्यूतं तर्हि किं रूपमित्यत आह—**अ-सत्तेति** । असत्ता तथा द्वे जाड्यदुःखे जाड्यं चिद्विरोधित्वं दुःखं सुखविरोधित्वं चेति मिलित्वा तु त्रयमिदं मायारूपं भवतीत्यन्वयः । तान्युदाहरति—**असत्तेति** ॥ २३ ॥

**रा० टीका**—दुःखं कुत्रेत्याशंक्याऽऽह—

**घोरमूढधियोर्दुःखमेवं माया विजृंभिता ॥**
**शांतादिबुद्धिवृत्त्यैक्यान्मिश्रं ब्रह्मेति कीर्तितम् ॥ २४ ॥**

घोरमूढेति । एवं सर्वत्र माया प्रतिभास त इत्याह—**एवमिति** । शांतादिषु वृत्तिषु ब्रह्मणो मिश्रत्वे किं कारणमित्यत आह—**शांतादीति** ॥ २४ ॥

**अ० टीका**—**घोरेति**। ननु यच्छांतवृत्तिषु सच्चिदानंदरूपं पूर्णमेव ब्रह्म प्रतिभाति चेत्कथं तत्र शांतवृत्तावित्यादिना मिश्रं ब्रह्मेत्थमीरितमित्युच्यत इति चेन्न। बुद्धिवृत्तादात्म्यादेवेत्याह—**शांतास्विति** ॥ २४ ॥

**रा० टीका**—एतदभिधानं किमर्थमित्याशंक्य ब्रह्मध्यानार्थमित्याह—

**एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत्पुमानसौ ॥**
**नृशृंगादिमुपेक्षेत शिष्टं ध्यायेद्यथायथम् ॥ २५ ॥**

**एवमिति**। नृशृंगादिमुपेक्ष्यान्यत्र ब्रह्मध्यानं कर्तव्यमित्याह—नृशृंगादिमिति ॥ २५ ॥

**अ० टीका**—उपसंहृत्य ब्रह्मध्यानोपायं विधत्ते—**एवमिति**। आदिना जाग्रद्दुःखे ॥ २५ ॥

**रा० टीका**—अन्यत्रेत्युक्तं कुत्र कथं ध्येयमित्यत आह—

**शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिंतनम् ॥**
**त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद्विचिंतनम् ॥ २६ ॥**

**शिलादाविति**। घोरमूढबुद्धिषु दुःखं परित्यज्य सच्चिद्रूपयोश्चितनं कर्तव्यमित्याह—**यक्त्वेति** ॥ २६ ॥

**अ० टीका**—उक्तध्यानप्रकारमेवावबोधयति—**शिलादाविति** । **घोरेति** । [य]ुक्तराजसतामसमानसवृत्त्योरित्यर्थः ॥ २६ ॥

**रा० टीका**—सात्त्विकवृत्तिषु सच्चिदानंदास्त्रयोऽपि ध्येया इत्याह—

**शांतासु सच्चिदानंदांस्त्रीनप्येवं विचिंतयेत् ॥**
**कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिंताः क्रमादिमाः ॥ २७ ॥**

**शांतास्विति**। एषां ध्यानानां किं साम्यं नेत्याह—**कनिष्ठेति** ॥ २७ ॥

**अ० टीका**—अथ क्रमप्राप्तशांताख्यसात्त्विकवृत्तिषु सच्चिदानंदरूपस्य पूर्णस्यैव ब्रह्मणः प्रतिफलनात्तच्चिंतनमात्रेणैव वृत्तिनिष्ठनामरूपजाड्यानां स्वयमेव विलयनात्तत्त्यागमनुक्त्वैव तच्चिंतनं विधत्ते—**शांतास्विति**। अथोक्तानां चिंतानां तारतम्यमाह—**कनिष्ठेति**॥२७॥

**मंदस्य व्यवहारेऽपि मिश्रब्रह्मणि चिंतनम् ॥**
**उत्कृष्टं वक्तुमेवात्र विषयानंद ईरितः ॥ २८ ॥**

**रा० टीका**—इदानीं निर्गुणब्रह्मध्यानेऽनधिकारिणोऽनुग्रहाय मिश्रब्रह्मध्यानेऽधिकार इत्यभिप्रायेणाऽऽह—**मंदस्येति** ॥ २८ ॥

**अ० टीका**—एतत्प्रयोजनमाह—**मंदस्येति**। अधिकारिण इत्यार्थिकम्। **मिश्रेति**। दृश्योपहितब्रह्मविषय इत्यर्थः ॥ २८ ॥

**औदासीन्ये तु धीवृत्तेः शैथिल्यादुत्तमोत्तमम् ॥**
**चिंतनं वासनानंदे ध्यानमुक्तं चतुर्विधम् ॥ २९ ॥**

**रा० टीका**—एवं सवृत्तिकं ध्यानत्रयमुक्त्वाऽवृत्तिकं ध्यानमाह—**औदासीन्ये** ... [illegible]र्थः। उक्तं निगमयति—**ध्यानमिति** ॥ २९ ॥

**अ० टीका**—एवं शांतादिवृत्तित्रयावच्छेदेन ब्रह्मचिंतनलक्षणं सवृत्तिकं ध्यानत्रयरूपं विषयानंदमभिधायाधुना वासनानंदाभिधं निर्वृत्तिकमुत्तमोत्तमं तादृगधिकारिणस्तुरीयं ध्यानमभिधत्ते—**औदासीन्ये** त्वित्यादित्रिपाद्या । निगमयति—**ध्यानमिति** ॥ २९ ॥

**न ध्यानं ज्ञानयोगाभ्यां ब्रह्मविद्यैव सा खलु ॥**
**ध्यानेनैकाग्र्यमापन्ने चित्ते विद्या स्थिरीभवेत् ॥ ३० ॥**

**रा० टीका**—अयं ध्यानावांतरभेदः किं नेत्याह—**न ध्यानमिति** । तर्हि किमेतदित्याशंक्याऽऽह—**ब्रह्मविद्येति** । इयं ब्रह्मविद्या कथमुत्पन्नेत्याशंक्याऽऽह—**ध्यानेनेति** ३०

**अ० टीका**—नन्विदं यदि ध्यानं तत्पातंजलमतापत्तिरित्यत आह—**नेति** । **ज्ञानेति** । आत्मानंदाद्वैतानंदोक्तज्ञानेन योगानंदोक्तयोगेन चेत्यर्थः । एवं तर्ह्यत्र ध्यानं किमयुक्तमित्यत आह—**ध्यानेनेति** । स्थिरा संशयविपर्ययविरहादज्ञानादिबाधदक्षेति यावत् ३०

**विद्यायां सच्चिदानंदा अखंडैकरसात्मताम् ॥**
**प्राप्य भांति न भेदेन भेदकोपाधिवर्जनात् ॥ ३१ ॥**

**रा० टीका**—अस्या विद्यात्वे हेतुमाह—**विद्यायामिति** ॥ ३१ ॥

**अ० टीका**—ततः किं तदाह—**विद्यायामिति** ॥ ३१ ॥

**शांता घोराः शिलाद्याश्च भेदकोपाधयो मताः ॥**
**योगाद्विवेकतो वैषामुपाधीनामपाकृतिः ॥ ३२ ॥**

**रा० टीका**—भेदकोपाधिवर्जनादित्युक्तं तानेव भेदकोपाधीनाह—**शांता इति** एतेषां परिहारः केनोपायेनेत्याशंक्याऽऽह—**योगादिति** ॥ ३२ ॥

**अ० टीका**—के वा भेदकोपाधयः कथं वा तद्वर्जनमित्यत आह—**शांता इति** । **शिलेति** । उपलक्षणमिदं मूढवृत्तीनामपि । यद्वा घोरपदमेव तदुपलक्षकमिति संक्षेपः ॥ ३२ ॥

**निरुपाधिब्रह्मतत्त्वे भासमाने स्वयंप्रभे ॥**
**अद्वैते त्रिपुटी नास्ति भूमानंदोऽत उच्यते ॥ ३३ ॥**

**रा० टीका**—फलितमाह—**निरुपाधीति** । त्रिपुटीभानाभावाद्भूमानंद इत्युच्यत इत्यर्थः ॥ ३३ ॥

**अ० टीका**—फलितमाह—**निरुपाधीति** । स्वयमिति वृत्तिव्युदासः । **भूमेति** । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति भूमैव सुखं "नाल्पे सुखमस्ति" इति च **छांदोग्ये** श्रूयते ॥ ३३ ॥

**ब्रह्मानंदाभिधे ग्रंथे पंचमोऽध्याय ईरितः ॥**
**विषयानंद एतेन द्वारेणांतः प्रविश्यताम् ॥ ३४ ॥**

**रा० टीका**—ग्रंथमुपसंहरति—**ब्रह्मानन्देति** । स्पष्टत्वान्न व्याख्यायते ॥ ३४ ॥

**अ० टीका**—एवमखिलाद्वैतशास्त्रतत्प्रकरणतात्पर्यभूमिभूतयावद्द्वैतध्वस्त्युपलक्षिताद्वैतसच्चिदानंदब्रह्मात्म्यैक्यरूपमुक्तिललितभूमानंदमुपपाद्येदानीं पंचदशप्रकरणीचरम[illegible]
[illegible]

द्वारद्वारीभावरूपामाह—ब्रह्मानंदेति । विषयप्रतिभासकालेऽपि मिथ्यात्वेन तत्तिरस्कारपूर्वकाद्वैतस्वप्रकाशप्रत्यगानंदचिंतनोपपादनादस्य विषयानंद इत्यन्वर्थाभिधानत्वं बोध्यम् ॥३४॥

**प्रीयाद्धरिहरोऽनेन ब्रह्मानंदेन सर्वदा ॥**
**पायाच्च प्राणिनः सर्वान्स्वाश्रिताञ्शुद्धमानसान् ॥ ३५ ॥**

**इति श्रीविद्यारण्यमुनिविरचितायां पञ्चदश्यां ब्रह्मानंदे विषयानंदो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

**इति पञ्चदश्यां पञ्चदशं प्रकरणं समाप्तम् ॥ १५ ॥**

**रा० टीका—प्रीयादिति** ॥ ३५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण श्रीरामकृष्णाख्यविदुषा विरचिता ब्रह्मानन्दान्तर्गतविषयानन्दव्याख्या समाप्ता ॥ १५ ॥

**अ० टीका**—अथाऽऽचार्यः स्वग्रंथांतेऽपि मंगलमाशीर्वादलक्षणं सफलं कलयन्नद्वैतात्मानमेव भक्तानुग्रहार्थं वामभागे प्रकटितहरिरूपं दक्षिणभागे प्रकटितहररूपं मायामयलीलाविग्रहविशेषावच्छिन्नं परमेश्वरं प्रार्थयन्नुक्तग्रंथमिमं तदेकचरणार्पणीकरोति—**प्रीयादिति** । अत्र सर्वदेति हारमध्यमणिन्यायेन प्रीयात्पायाच्चेत्याख्यातद्वयेनापि संबध्यते । एवं ब्रह्मानंदेनेत्यपि । तेन सर्वप्राणिनां तत्करणकं रक्षणमेतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेरिष्टशब्दाद्यवच्छेदेनैव । स्वाश्रितशब्दितभक्तानां तु सार्वदिकपरानुरक्तिरूपभक्तिदानेनैव । एवं शुद्धमानसमुमुक्षूणां तु निरुक्तमुक्त्यैवेति तत्त्वम् । ननूपक्रमे तावद्भवता यदुक्तम्—"एकरसेऽपि मिथुनसुखममृतेऽस्त्येकत्वमनुपलक्षितया । स्वप्रभरवितत्करवत्प्रतिबंधः पंचमोऽयमैक्येऽपि" इति **गीत्या** शोधितजीवब्रह्मैक्यविषयकं फलविपरीतभावनाभिधं पंचमं प्रतिबंधमुपन्यस्य । "पंचदशेऽप्युक्तिः खल्वद्वैतस्वप्रकाशसुखभूम्नः । सर्वांशभास्यभासकराहित्यस्येति तस्य तत्परता" **इत्यार्यांत**रेणास्य पंचदशप्रकरणस्य तद्बाधकत्वं तत्कथमुपपद्यत इति चेत्सत्यम् । यद्यद्वैतात्मनि स्वप्रकाशेऽपि व्यावहारिकसावयवस्वप्रकाशरविवत्स्वभास्यभासकभावेन स्वरूपसाक्षित्वं निरवयवे निर्गुणे ब्रह्मणि स्याच्चेद्घटेतापीयं शंका तदेव तु कालत्रयेऽपि नैव संभवतीति विषयानंदेऽत्र दृश्योपलक्षितब्रह्मध्यानबोधनेनैवोक्तम् । तथाहि । अत्र प्रकरणे तावच्छांतादिपदवाच्यसात्त्विकादिवृत्त्युपलक्षितसच्चिदानंदाद्वैतब्रह्मानुसंधानबोधनमुपक्रम्यांते "अद्वैते त्रिपुटी नास्ति भूमानंदोऽत उच्यते" इति कंठत एवोपसंहारव्याजेन निर्गुणनिरवयवाद्वैतभूमानंदस्वप्रकाशब्रह्मात्मवस्तुनिखिलदृश्यबाधध्वननपूर्वकमेव बोधितमिति तु निर्विवादमेवेति सर्वमनवद्यमेवेति शिवम् ॥ ३५ ॥

श्रीनारायणदेशिकेश्वरपदांभोजद्वयं पातु नः
श्रीसच्चित्सुखसद्गुरूत्तमपदद्वंद्वेऽस्तु निर्द्वंद्वता ।
तद्वन्मे शिवभक्तिदाद्यतिवरादाचार्यतः श्रीश्चिरं
ग्रंथस्यास्य सुरक्षणक्षमतमा प्रख्यातिकर्यप्यलम् ॥ १ ॥

(?) साक्षीशाऽनादिभावाविदुपधिरवतात्सच्चिदानंद आत्माऽ-
प्येतत्कार्यात्मबुद्धिप्रतिफलितचिदाभासरूपांस्तु जीवान् ।

तच्छुद्ध्या यत्न तद्वित्सं तु भवति तदज्ञानहानाद्विमुक्तोऽ-
प्या प्रारब्धं विपश्यन्निजमतिकलितं द्वैतमेतन्मृगांभः ॥ २ ॥
श्रीमत्कपालेश्वररामलक्ष्मीप्राणेशगोदाः प्रणिपत्य भूयः ।
अद्वैतविद्याऽतुलसंप्रदायसिद्ध्यर्थमेतत्सुखमर्थयामि ॥ ३ ॥
द्विजवर इह राजा शीघ्रमस्तु स्वधर्मैः स्वजनुष इव लोकान्रक्षयञ्शिक्षयंश्च ।
सुरपतिरपि वृष्टेः पुष्टिमिष्टां तनोतु प्रभवतु सुखमुच्चैर्ब्राह्मणानां गवां च ॥४॥
वेदांतैर्निजसुखमेव शोधयं तु श्रीशैकार्पितनिजधर्मशुद्धचित्ताः ।
शांत्यादिस्थितिललिताद्विजा विरक्ताः स्वाद्वैतामितसुखचिद्विमुक्तिसक्ताः ॥ ५ ॥
भवतु सततं भुक्त्या मुक्त्या कृतार्थतरो जनो
गुरुवरपरब्रह्मप्रीत्या स्वधर्मरतः सदा ।
अपनयतु हृत्तापं लब्ध्वा गुरोः करुणाबला-
दुरुसुतमुखः पूर्णानंदेंदुजामिति कौमुदीम् ॥ ६ ॥
पूर्णानंदेंदुकौमुद्याः प्रकाशास्तन्मिता इमे ।
श्रीपंचदश्यामभवन्गुरुपादप्रसादतः ॥ ७ ॥
क्व विद्यार्थ्यच्युताह्वोऽहं पंचदश्याः क्व भासनम् ।
तथाऽपि श्रीगुरूणां तत्पन्नखेंदुभिरर्जितम् ॥ ८ ॥
श्रीशालिवाहनशकीय(१७९१)शशीषुवाजिक्ष्मासंख्यवर्षललिताश्वनभार्गवाह्नि ।
गोदावरीतटविराजितपंचवट्यां श्रीपंचदश्यनुगता खलु कौमुदीयम् ॥ ९ ॥
नारायणपुत्रोऽहं नारायणचरणकमलशिष्योऽहम् ।
नारायणाश्रितोऽहं नारायण एव भूयासम् ॥ १० ॥
श्रीपांडुरंगशास्त्री गुरुपुत्रः सततमस्तु दीर्घायुः ।
धनपुत्रपौत्रविद्याऽतुलधर्मैरद्वयात्मदो भगवन् ॥ ११ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानंदेंद्रसरस्वतीशिष्यश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येंदिरारमणश्रीमत्षष्ठ्युपनामकश्रीनारायणशास्त्रिचरणसरोजराजहंसायमानमानसेन मोडकोपाह्वयेनाच्युतशर्मणा विद्यार्थिना विरचितायां पूर्णानंदेंदुकौमुद्याख्यायां पंचदशीव्याख्यायां पंचदशोऽयं प्रकाशः संपूर्णः ॥ १५ ॥

श्रीशंकरगुरुवरचरणकमलार्पणोऽस्तु ग्रंथश्चायं सर्वेष्टदोऽस्तु श्रीरस्तु ॥

## ॥ समाप्ता चेयं टीकाद्वयसमेता पञ्चदशी ॥